द्वितीयार्थशक्तिकस्य वा पुंसः सर्वथैव व्यञ्जनया द्वितीयार्थबोधानुदयात्तत्र तया तदापत्तिस्तव दुर्वारा। न च येन शब्देन योऽर्थो व्यज्यते तस्य शब्दस्य तदर्थगतशक्तिज्ञानं तदर्थव्यक्तेरुल्लासे हेतुरिति वाच्यम्। 'निःशेषच्युत-' इत्यादौ रमणव्यत्क्यनापत्तेः। नह्यधमपदस्य कस्यचिद्रमणे शक्तिग्रहोऽस्ति। सति वा तस्मिंस्तेनैवोपपत्तौ व्यक्तिकल्पनवैयर्थ्यापत्तेश्च। न च नानार्थव्य-

## मर्मप्रकाशः

सर्वप्रकारेणैव। सिद्धान्ते इत्यादिः। तयेति। व्यञ्जनयेत्यर्थः। तदापत्तिर्द्वितीयार्थबोधापत्तिः। एतद्दोषोद्धाराय शङ्कते—न चेति। रमणेति। नायककर्तृकरतीत्यर्थः। सति-

## मधुसूदनी

स्थले उल्लास्येति काव्ये। न गृहीता ज्ञाता द्वितीयार्थविषयिणी शक्तिर्येन। अथवा पूर्वं गृहीता पश्चाद्विस्मृता द्वितीयार्थविषयिणी शक्तिर्येन तस्य पुंसः। एवञ्च दृष्टशक्तिकेनैव पुंसा द्वितीयार्थो बोद्धुं सुशक इति स्वीकृतेऽपि व्यञ्जने नार्थप्रतीतिः। तत्र काव्ये। तया व्यक्त्या। तस्य द्वितीयार्थबोधस्यापत्तिः प्रसक्तिः। दुर्वारापत्तिं नियमयितुमाह—न चेति। कस्यचित्पुंसः। तस्मिन् रमणविषयकशक्तिग्रहे सति। तेनैव शक्तिज्ञानेन रमणरूपार्थबोधस्योपपत्तौ व्यक्तिकल्पनस्य व्यञ्जनसमर्थनस्य वैयर्थ्यापत्तेः मिथ्यात्वप्राप्तेश्च।

ननु आर्थीव्यञ्जनायां तदनावश्यकं परं शाब्दीव्यञ्जनायां तादृशनियमं विना गतिरेव नास्तीति वादिनं प्रत्याह—न चेति। नानार्थव्यञ्जनस्थले शाब्दी-

## बालक्रीड़ा

महाम्बुवाहम्" यह पद्य है। इसके दो अर्थ हैं एक वाच्य प्राकरणिक राजा, और दूसरा अप्राकरणिक इन्द्र। प्रथम पक्ष में काल भीषण (वैरियों के संहार कारक) करवाल तलवार में महाम्बु अतिशयित धाराजल को प्रवाहित करके, द्वितीय पक्ष में—काल वर्षाकाल को करने वाले वाल नवीन अम्बुवाह मेघ को उठाकर। यह अर्थ है। अब इस नानार्थ पद से बने हुए काव्य में जिसको इन अर्थों में शक्तिग्रह नहीं हुआ है या शक्तिग्रह हुआ था किन्तु जो भूलगया है उस पुरुष को किसी भी प्रकार व्यंजना से द्वितीय इन्द्र रूप अर्थ नहीं मालूम पडता है। किन्तु व्यंजना मानने वाले के लिए इस आपत्ति का निराकरण करना मुश्किल है। क्योंकि जिसको द्वितीय अर्थ की शक्ति का ग्रह है वही पुरुष द्वितीय अर्थ को जान सकता है इसलिए जब व्यंजना को मानने पर भी द्वितीय अर्थ की प्रतीति नहीं हुई तब व्यंजना मानना व्यर्थ है।

अगर इस आपत्ति को नियन्त्रित करने के लिए यह नियम बनायें कि जिस शब्द से जो अर्थ व्यक्त हो उस शब्द की द्वितीय अर्थ सम्बन्धी शक्ति का ज्ञान उस व्यज्यमान अर्थ सम्बन्धी व्यंजना के उल्लास का कारण है। तब भी ठीक नहीं है। क्योंकि ऐसा नियम बनाने पर "निःशेषच्युत" इस तरह के काव्यों में रमण रूप अर्थ की व्यक्ति नहीं हो सकेगी। क्योंकि किसी को भी अधम पद की शक्ति का ज्ञान रमण रूप अर्थ में नहीं है। अथवा यदि

ज्ञनस्थल एवैवंजातीयकः कार्यकारणभावः कल्प्यते । तत्र च शक्तेर्नियन्त्रितत्वेन तद्ग्रहस्याप्रयोजकतया व्यक्तिकल्पनौचित्यादिति वाच्यम् । नवीनकार्यकारणभावकल्पने गौरवप्रसङ्गात् । नियन्त्रणस्य पूर्वमेव दूषितत्वेन तद्धेतोरेवेति न्यायावताराच्च ।

### मर्मप्रकाशः

वेति । नायके तच्छक्तिग्रहसत्त्वादिति भावः । तेनैवेति । शक्तिग्रहेणैव बोधोपपत्तावित्यर्थः । एवंजातीयको येन शब्देनेत्याद्युक्तः । तथा च निःशेषेत्यादौ न दोष इति भावः । नन्वन्यथानुपपत्त्या गौरवं सुसहमत आह—नियन्त्रणेति । तद्धेतोरिति । व्यक्त्युल्लासहेतो-

### मधुसूदनी

व्यञ्जनाविषये एव न नु आर्थीव्यञ्जनायाः स्थले एवं जातीयकः "यः शब्दः यमर्थं व्यनक्ति स शब्दः स्वसम्बन्धिव्यञ्जनीयार्थविषयकशक्तिज्ञानेन तदर्थं व्यक्तिमुल्लासयति" इत्येवंरूपः कार्यकारणभावः कल्प्यते। तत्र च नानार्थव्यञ्जनस्थले च। तद्ग्रहस्य तदर्थगतशक्तिज्ञानस्य अप्रयोजकतया द्वितीयार्थं बोधयितुमक्षमतया व्यक्तिकल्पनस्य औचित्यात् योग्यत्वात् इत्येवं "निःशेषच्युत" इत्यादौ अधमपदस्य नानार्थकत्वाभावान्न शक्तिग्रह आवश्यकः। इति न वाच्यम्। स्थलविशेषमपेक्ष्य नवीनकार्यकारणभावकल्पनायां पृथक् पृथक् नियमाकलने गौरवप्रसंगात्।

ननु नियन्त्रणेन गतिरोधे पथङ् नियमाकलनमेव शरणमित्याकांक्षायामाह—नियन्त्रणस्येति। पूर्वमेव अन्ये त्वत्र प्रत्यवतिष्ठन्त इति मतनिरूपणारंभे नियन्त्रणस्य प्रतिबन्धनस्य दूषितत्वेन अहृदयंगम एवायमप्राकरणिकार्थोपस्थापनप्रतिबन्धकभावः प्रकरणादिज्ञानस्येत्येवं दोषोद्भावनेन। अथच तद्धेतोरेवेति न्यायावताराच्च।

### बालक्रीड़ा

अधम पद में रमणरूप अर्थ का शक्तिग्रह हो तो उसी से रमण रूप अर्थ की प्रतीति हो जायगी तब व्यंजना मानने की क्या आवश्यकता है। "यद्यपि आर्थी व्यंजना में यह नियम अनावश्यक है किन्तु शाब्दी व्यंजना में तो इस नियम के बिना गति ही नही है" ऐसा कहने वाले वादी को उत्तर देते हैं इनका आशय यह है कि नानार्थ स्थल में शाब्दीव्यंजना के विषय में ही न कि आर्थी व्यंजना के विषय में इस तरह के कार्य कारण भाव को मानना आवश्यक है। क्योंकि नानार्थ स्थल में शक्ति का नियन्त्रण हो जाता है। इसलिए द्वितीय अर्थ के विषय का शक्तिज्ञान अप्रयोजक हो जाता है अर्थात् अन्य अर्थ को बोधन करने में वह शक्ति ज्ञान अक्षम हो जाता है अतः व्यक्ति की कल्पना करना औचित्य प्राप्त है। फलतः "निःशेषच्युत" इत्यादि काव्यों में अधम पद नानार्थक नहीं है अतः शक्तिग्रह आवश्यक नहीं है।

इस तरह स्थल विशेष को मान्यता देकर नवीन कार्य कारण भावों की कल्पना करने में गौरव की आपत्ति लग जायगी।

तब कहते हैं कि क्या किया जाय। नियन्त्रण से जब गति का रोध हो गया तब

अथास्त्वप्राकरणिकोऽप्यर्थ शक्तिवेद्य एवान्वयधीगोचरः, परंतु यत्र न बाधितः स्यात् । यत्र तु बाधितस्तत्र 'जैमिनीयमलं धत्ते रसनायामयं द्विजः' इत्यादौ जुगुप्सितोऽर्थः, वह्निना सिञ्चतीत्यौ वह्निकरणकसेक इवाबोधोपहत एव स्यात् । बाधनिश्चयस्य तद्वत्ताज्ञानं प्रति प्रतिबन्धकतायाः सर्वजनसिद्ध-

## मर्मप्रकाश

स्तदर्थगतशक्तिज्ञानस्यैव तदर्थबोधजनकत्वमस्तु, किं व्यक्त्युल्लासजनकत्वेनेत्यर्थः । अपिः प्राकरणिकार्थसमुच्चायकः । तत्रेत्यस्येत्यादावित्यनेनान्वयः । जैमीति । जैमिनिप्रोक्तं पूर्व-

## मधुसूदनी

तस्य हेतोरेव तस्य कारणादेव तत् कर्त्तव्यं स्यात् तदा किन्तेन । अयं भावः । व्यक्तेः प्रादुर्भावको यो हेतुः तदर्थगतशक्तिज्ञानं तस्मादेव तदर्थगतशक्तिज्ञानादेव व्यञ्जनीयार्थ बोधस्तदा किं तेन व्यक्तिप्रादुर्भावनेनेति ।

नानार्थस्थले शक्त्यैव द्वितीयार्थबोध इत्यभ्युपगच्छताऽपि व्यञ्जनायाः पराहति-र्दूरेति शंकते—अथेति । अयं द्विजो ब्राह्मणपुंगवः जैमिनीयं जैमिनिप्रोक्तं पूर्वमीमांसा-शास्त्रं रसनायां जिह्वायामलं पर्याप्तं धत्ते कण्ठाग्रीकृतं सत् धारयति इतिप्रथमार्थबोधोत्तरं द्विजो भूत्वापि अयं जैमिनीयानां जैमिनिप्रोक्तशास्त्राध्येतॄणां पुसां मलं विष्ठां रसनायां धत्ते जिह्वया लेढीति द्वितीयो जुगुप्सितो निन्दितोऽर्थः, वह्निना सिञ्चतीत्यत्र यथा द्रवद्रव्यकरणकः सेको वह्निना कर्त्तुमशक्य इति वह्नेः करणता सिञ्चतिक्रियानिरू-पिता असम्भविनी तथा, अबोधेन अज्ञानेन उपहतः ज्ञानाविषयीकृतः स्यात् अर्थात् अज्ञात एव स्यात् । बाधनिश्चयस्यात्र भूतले घटो नास्तीति ज्ञानस्य तद्वत्ताज्ञानं प्रति इदं घटवद्भूतलमिति ज्ञानं प्रति प्रतिबन्धकतायाः सर्वजनस्वीकृतत्वात् ।

## बालक्रीड़ा

अलग नियम का निर्माण जरूरी हो गया । इसपर कहते हैं कि अप्राकरणिक अर्थ के उप-स्थापन में प्रकरणादि ज्ञान को प्रतिबन्धक स्वीकार करना अहृदयंगम ही है इत्यादि रूप से निय-न्त्रण को पहले ही दूषित कर दिया गया है । ओर भी एक बात है । यहाँ "उसके हेतु से ही वह कार्य हो जाता है तब उससे क्या इस न्याय की भी प्राप्ति हो जाती है । इसका आशय यह है व्यक्ति का प्रादुर्भाव करने वाला जो हेतु है तदर्थगतशक्तिज्ञान, उसी हेतुभूत तदर्थगतशक्तिज्ञान से ही व्यंजनीय अर्थ का बोध हो सकता है तब व्यक्ति के प्रादुर्भावन की फिर क्या आवश्यकता है ।

नानार्थ स्थल में शक्ति से ही द्वितीय अर्थ का बोध मान लेने पर भी व्यञ्जना का निराकरण करना अशक्य है ऐसा कहने वाले शंका करते हैं कि हाँ ठीक है अप्राकरणिक अर्थ शक्ति के द्वारा वेद्य होकर शाब्दबोध का विषय बन सकता है. अतः व्यंजना की आवश्यकता नहीं है किन्तु यह स्थिति सब जगह नहीं है। जहाँ वह द्वितीय अर्थ बाधित नहीं है वहां पर ही शक्ति वेद्य है अन्यत्र नहीं । जहां तो बाधित है जैसे वह्नि से पौधों को

## त्वात् । व्यक्तेस्तु बाधितार्थबोधकत्वं धर्मिग्राहकमानसिद्धमिति व्यक्तिवादिनामदोष इति । मैवम् । 'गामवतीर्णा सत्यं सरस्वतीयं पतञ्जलिव्याजात् ।', 'सौधानां नगरस्यास्य मिलन्त्यर्केण मौलयः । इत्यादौ वाच्यार्थान्वयबोधोप-

### मर्मप्रकाशः

मीमांसाशास्त्रं अलं परिपूर्णं धत्ते इत्येकोऽर्थः । जैमिनिप्रोक्तशास्त्राध्येतॄणां मलं विष्ठां धत्ते इत्यपरोऽर्थो निन्दितः । गामिति, सौधानामिति, च भिन्नपद्यार्धे । गामित्यस्य यत इत्यादि ।

### मधुसूदनी

तर्हि व्यक्त्यापि कथं बोध इत्याह—व्यक्तेरिति । तु किन्तु व्यक्तेः बाधितार्थबोधकत्वमुपहतार्थज्ञापकत्वं धर्मिणो द्वितीयार्थस्य बाधां प्राप्तस्याऽपि अर्थस्य ग्राहकं यन्मानं प्रमाणं सहृदयानामनुभवरूपं तेन सिद्धमित्यतो व्यक्तिवादिनामदोषो भूषणमेवेति भावः ।

उत्तरति—मैवमिति । "पतञ्जलिव्याजात् गोनर्दीयमिषात् सत्यमियं सरस्वती गां पृथिव्यामवतीर्णा, अत्रार्थी अपह्नुतिः । अस्य नगरस्य सौधानां प्रासादानां मौलयः शिखराणि अर्केण मिलन्ति सूर्येण सङ्गच्छन्ते अत्र सम्बन्धातिशयोक्तिः । इत्यादौ पद्ये वाच्यार्थानामन्वयबोधस्य संसर्गज्ञानस्य उपपादनाय संगतये अनुसरणीयेन सम्पादनीयेन यत्नेन आहार्यज्ञानमिव शाब्दज्ञानं बाधनिश्चयेन न प्रतिबध्यम्; योग्यताज्ञानं शाब्दबोधे न कारणम्, आहार्यो वाऽभेदबोध इत्येवंरूपेण ।

### बालक्रीड़ा

सींचता है यहाँ सेचन क्रिया में अग्नि करण नहीं बन सकता है क्योंकि सेचन द्रव पदार्थ से ही होता है अतः वह्नि से सेचन अज्ञान से उपहत है वैसे ही यह ब्राह्मणपुंगव जैमिनिमुनिप्रोक्त मीमांसा शास्त्र को जिह्वा में पर्याप्त रूप से धारण किये हुए है । अर्थात् मीमांसा इसको कण्ठाग्र है इस प्रथम अर्थ के समझने के बाद; यह ब्राह्मण होकर भी जैमिनिप्रोक्त शास्त्र का अध्ययन करने वाले पुरुषों के मल को जिह्वा से लेहन करता है । इत्यादि जुगुप्सित अर्थ बाधित हैं वहाँ द्वितीय अर्थ शक्तिवेद्य नहीं होगा । वहाँ तो बिना समझा हुआ ही रह जायगा । क्योंकि बाधनिश्चय तद्वत्ता ज्ञान का प्रतिबन्धक होता है इस सिद्धान्त को सभी लोगों ने माना है । व्यंजना के विषय में यह रुकावट लागू नहीं होती । क्योंकि व्यंजना तो बाधित अर्थ का बोध कराने के लिए ही धर्मिग्राहक प्रमाण से सिद्ध हैं अतः व्यक्तिवादी के लिए यह दोष नहीं है ।

यहाँ प्रकरणादि ज्ञान रूप प्रतिबन्धकों के रहते हुए भी विषम परिस्थितियों में भी और वक्ता कहता भी है कि मेरा यह भाव यहाँ नहीं है तब भी सहृदयों को द्वितीय अर्थ का अनुभव होता है यह अनुभव ही धर्मिग्राहक मान है । यह पहले भी हम कह चुके हैं ।

उत्तर । यह नहीं कह सकते हैं । क्योंकि यह सरस्वती ही पतञ्जलि के बहाने पृथिवी पर अवतीर्ण हुई है । इस नगर के महलों की चोटियाँ सूर्य को स्पर्श करती हैं ।

पादनायानुसरणीयेन यत्नेन नानार्थस्थलेपि बाधितार्थबोधस्योपपत्तिः स्यात्। अन्यथा प्रायशः सर्वेष्वप्यलंकारेषु वाच्यार्थबोधोपपत्तये व्यञ्जनाङ्गीकरणीया स्यात्। तस्मान्नानार्थस्याप्राकरणिकेऽर्थे व्यञ्जनेति प्राचां सिद्धान्तः शिथिल एव। प्राकरणिकाप्रकरणिकयोरर्थयोरुपमायां तु सा कदाचित्स्यादपीत्यस्माकं

## मर्मप्रकाशः

यत्नेनेति। बाधज्ञानं शाब्दज्ञाने न प्रतिबन्धकम्। अयोग्यतानिश्चयश्च। एवं योग्यताज्ञानमपि न कारणम्। आहार्यो वा बोध इत्यादि यत्नोऽग्रे मूल एव स्फुटः। अन्यथा तत्रैव यत्नानुसरणाभावे। सर्वेष्विति। गामित्यत्र व्याजोक्तिः। सौधानामित्यत्र संबन्धातिशयोक्तिः। एवमन्यत्रापि बोध्यम्। नानार्थस्य शब्दस्य। सा व्यञ्जना। तथा चोपमा व्यङ्ग्येति भावः। स्यादपीत्यसंदिग्धे संदिग्धवचनम्। वेदाः प्रमाणं यदीतिवत्। तादृशद्वितीयार्थमादाय वाक्यार्थस्यासंबद्धार्थकत्वं मा भूदिति कल्प्यमानोपमाया अर्थापत्तिवेद्यत्वस्यापि संभव इत्यत उक्तं कदाचिदिति।

## मधुसूदनी

अन्यथा एतादृशयत्नानुसरणाभावे। तस्मात् उक्तनिर्णयानुरोधात्। नानार्थस्य शब्दस्य। सा व्यंजना। कदाचित्स्यादित्यनेन स्वयं पण्डितराजः संशेत एवेति भावः।

अस्माकमिति स्वस्मिन् बहुमानो दर्शितः। एतावता प्रघट्टकेन मया महामहद्भिः समर्थिताया व्यञ्जनायाः क्षोदः कृतः। इति भावः।

## बालक्रीड़ा

इत्यादि स्थलों में वाच्यार्थ के अन्वयबोध का उपपादन जिस यत्न से अनुसरणीय है उसी यत्न से नानार्थ स्थल में भी बाधित अर्थ का बोध उपपन्न हो जायगा। यह यत्न है। आहार्यज्ञान की तरह शाब्दबोध भी बाधनिश्चय से प्रतिबध्य नहीं है कटता नहीं है। योग्यता ज्ञान शाब्दबोध का कारण नहीं है। या आहार्य ही अभेद यहाँ है। इत्यादि आगे बतायेंगे। यदि इस तरह के यत्न का अनुसरण नहीं करेंगे तो क्रमशः सभी अलंकारों में वाच्यार्थ बोध की उपपत्ति के लिए व्यंजना मानना आवश्यक हो जायगा इस वास्ते नानार्थस्थल में अप्राकरणिक अर्थ के बोध के लिए व्यंजना वाला प्राचीनों का सिद्धान्त शिथिल ही है। हाँ प्राकरणिक एवं अप्राकरणिक अर्थों की तुलना करने के लिए कदाचित् शायद व्यंजना की आवश्यकता हो सकती है ऐसा हमको मालूम होता है। यहाँ कदाचित् पद से मालूम पड़ता है पण्डितराज को इसके मानने में भी सन्देह है।

यहाँ हमको मालूम पडता है ऐसा अपने में बहुमान दिखाते हैं उसका भाव यह है कि बड़ों के बड़ों ने भी जिस व्यञ्जना का समर्थन किया था उसका भी विचूर्णन हमने कर दिया। और इसके बाद यह भी दिखाते हैं अगर व्यंजना को अवश्य मानना है तो हमारे बतलाये हुए मार्ग से बतलाई जा सकती है और मानी भी जा सकती है। वह मार्ग यह है।

प्रतिभाति ।

## एवमपि योगरूढिस्थले रूढिज्ञानेन योगापहरणस्य सकलतन्त्रसिद्धतया

### मधुसूदनी

प्रतिभातीति । अत्र अस्माकमितिबहुवचनेन स्वीयो बहुमानः कुतः प्रत्यपादि पण्डितराजविरुदभूषतेनापि महामहिम्ना अनेन । यतो हि श्लेषनिरूपणप्रसंगे कुवलयानन्दे, वृत्तिवार्तिके च अप्पयदीक्षितैरुक्तस्य="यदत्र प्रकृताप्रकृतश्लेषोदाहरणे शब्दशक्तिमूलध्वनिमिच्छन्ति प्राञ्चस्तत् प्रकृताप्रकृताभिधानमूलकस्योपमादेरलंकारस्य व्यङ्ग्यत्वाभिप्रायं न तु अप्रकृतार्थस्यैव व्यङ्ग्यत्वाभिप्रायम् । अप्रकृतार्थस्याऽपि शक्त्या प्रतिपाद्यस्य अभिधेयत्वावश्यंभावेन व्यक्त्यनपेक्षणादिति="तद्रीत्या न कथंचिदपि प्रकरणादिना अभिधानियमनं शक्यशंकम् । तस्मात् प्रस्तुताप्रस्तुतोभयपरेऽपि काव्येऽभिधैव वृत्तिः । तदुपस्थितेषु च पदार्थेषु आकांक्षादिसहकारिवशादुभयविधवाक्यार्थप्रत्यय इति अप्रस्तुतविषये न पदार्थप्रतीतये नापि वाक्यार्थप्रतीतये व्यक्तिरुपगन्तव्या । यत्तु प्राचामप्रस्तुते शब्दशक्तिमूलव्यञ्जनावृत्यभिधानम्, तदप्रस्तुतार्थप्रतीतिमूलके प्रतीयमाने उपमाद्यर्थालंकारे तदवश्यंभावदृढीकरणाभिप्रयेण नतु वस्तुतोऽप्रस्तुतार्थविषयेऽपि व्यञ्जनाव्यापाराभिप्रायेणेति" आदेश्चानुवादकत्वमेव पण्डितराजस्य । वस्तुतस्तु अन्ये त्वत्र प्रत्यवतिष्ठन्ते इत्यादिना यो हि सिद्धान्तो महता संरंभेण न्यरूपि पण्डितराजेन, सः सर्वोऽपि वृत्तिवार्तिके समस्ति । अथ च योगरूढिस्थलीयं वृत्तमपि तत्रैवास्ति ।

### बालक्रीड़ा

अस्माकं में बहुवचनके द्वारा पण्डितराजने जो अपने से अपने बहुमान का उल्लेख किया वह बहुत ही असंगत मालूम पड़ता है क्योंकि "अन्ये त्वत्र प्रत्यवतिष्ठन्ते" में जो भी कुछ लिखा है और "योगरूढिस्थले' कह कर भी जो लिखा है उसको वृत्तिवार्तिक एवं कुवलयानन्द में अप्पय्य दीक्षित महानुभाव कह चुके हैं। अतः उसी का शब्दान्तर से अनुवाद हमने किया है ऐसा कहना युक्ति संगत होगा ।

अप्पय्य दीक्षितास्तु–नानार्थस्थलेऽपि न सर्वत्र व्यंजनोल्लासः । किन्तु चमत्कारिणि विषये एव । तस्य च यत्कारणं श्रोतृगतप्रतिभाविशेषादि अङ्गीकार्यं तस्य नियन्त्रितशक्त्युल्लासकत्वमेवास्तु इति न क्वापि शक्तिविषये व्यञ्जनाङ्गीकारो युक्तः किन्तु प्रकृताप्रकृताभिधानमूलके उपमादावेवेति । प्रभायाम् ।

नानार्थस्थल में सर्वत्र व्यंजना का उल्लास नहीं होता है किन्तु जहां चमत्कारी अर्थ होता है वहीं व्यंजना का उल्लास होता है । और उसका कारण जो श्रोता का प्रतिभाविशेष माना जाता है उसको नियन्त्रित शक्ति का ही उल्लासक ही मानना चाहिए अतः कहीं भी शक्ति के विषय में व्यंजना का अंगीकार करना युक्तिसंगत नहीं है किन्तु यदि व्यंजना मानी जाती है तो प्रकृत और अप्रकृत अर्थों की तुलना के कारण मालूम पड़ने वाले उपमा आदि अलंकारों के विषय में मानी जाती है । यहां का अन्य अंश मधुसूदनी में सहृदय लोग देखें ।

रूढ्यनधिकरणस्य योगालिङ्गतस्यार्थान्तरस्य व्यक्तिं विना प्रतीतिर्दुरुपपादा। यथा—

'अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम्।
तिष्ठन्ति चपला यत्र स कालः समुपस्थितः॥'

अत्राशक्तानां द्रव्यमपहृत्य जलवाहकैः पुरुषैः सह पुंश्चल्यो रमन्त इत्यर्थान्तरं न तावदबलावारिवाहचपलाशब्दैर्योगरूढ्या शक्यते बोधयितुम्। मेघ-

मर्मप्रकाशः

बाधः। योगेति। योगशक्तीत्यर्थ। अबलेति। विद्युतो मेघैः सह नायिकानां

मधुसूदनी

यद्यपि उक्तपथा व्यञ्जनाया आवश्यकता नास्ति तथापि यदि स्याद् व्यञ्जना, तदा अस्मद्दर्शितपद्धत्या तस्याः सिद्धिरिति स्फोरयति—एवमपीति। योगरूढ़िस्थले समुदायावयवशक्तिसंकरस्थले रूढिज्ञानेन समुदायशक्तिज्ञानद्वारा योगापहरणस्य केवलावयवशक्तिबाधस्य "रूढिर्योगापहारिणी" इति सिद्धान्तस्य सकलेषु तन्त्रेषु शास्त्रेषु सिद्धतया निश्चिततया। अर्थान्तरस्य अप्रकृतस्य अर्थस्य। व्यक्तिं विना व्यञ्जनाया अभावे प्रतीतिर्ज्ञानं दुरुपपादम् दुःशकम्।

अबलानामिति। यत्र काले चपला विद्युतः अबलानां नायिकानां श्रियं शोभां हृत्वा अर्थात् स्वसमक्षं तासां तां शोभां मन्दां विधाय। वारिवाहैर्मेघैः सह अनिशं निरन्तरं तिष्ठन्ति वसन्ति स कालः वर्षर्त्तुरूपः समुपस्थितः प्राप्तः। इति प्रकृतोऽर्थः। अत्राशक्तानामिति मूल एवोट्टंकितो द्वितीयोऽर्थः। योगरूढ्या शक्त्येति शेषः।

बालक्रीड़ा

योगरूढि स्थल में जहाँ समुदाय शक्ति और अवयव शक्तियों का सांकर्य है उस जगह में रूढिज्ञान से योग का अपहरण अर्थात् केवल अवयव शक्ति का बाधन "रूढिर्योगापहारिणी" यह सिद्धान्त सकल तन्त्रों में सिद्ध है। इसलिए एक अर्थ जो रूढ़ि का अनधिकरण है अविषय है किन्तु योग से आलिङ्गित है उस अर्थ की प्रतीति व्यक्ति व्यञ्जना के विना दुरुपपाद है। जैसे—

जिस काल में चपलाएँ विजलियाँ अवलाओं की नायिकाओं की शोभा का अपहरण करके वारिवाह मेघों के साथ अनिश निरन्तर रहती हैं वह वर्षर्तु रूप काल उपस्थित हो गया।

यहाँ "अशक्तों के द्रव्य का अपहरण करके जल भरने वाले कहारों के साथ पुंश्चलियाँ रमण करती हैं" इस अर्थान्तर को अबला वारिवाह एवं चपला शब्द, योगरूढ़ि उभयात्मिका शक्ति के द्वारा बोधन करने में समर्थ नहीं हैं। क्योंकि मेघत्व एवं विद्युत्त्वादि से अघटित असंयुक्त होकर ही उस अर्थ की प्रतीति यहाँ होती है। अन्यथा माने मेघत्व विद्युत्त्व से असंयुक्त हुए विना अर्थात् मेघत्व एवं विद्युत्त्व से संयुक्त होकर प्रतीत होने में चमत्कार नहीं

त्वविघुत्त्वाद्यघटितस्यैव तस्यार्थस्य प्रतीतेः। अन्यथा चमत्कारो न स्यात्। अत एव न योगशक्त्यापि केवलया। रूढ्यर्थासंवलितार्थबोधकत्वस्य तस्या

### मर्मप्रकाशः

शोभामपहृत्य यत्र तिष्ठन्ति स कालः समागत इति वाच्यार्थः। तस्यार्थान्तरस्य। अन्यथा तदप्रतीतौ। तदघटितस्यैव प्रतीतार्विति यावत्। अत एवेत्यस्यार्थमाह—रूढ्यर्थेति।

### मधुसूदनी

आलोचनम्। योगरूढिस्थले रूढिज्ञानेन योगापहरणस्य सकलतन्त्रसिद्धतयेतीदं यस्मिन् प्रसंगे उद्‌ध्रे तत् "अवलानां श्रियम्" इति पद्यं योगरूढिस्थलमेव नास्ति, श्लेषस्थलं वा व्यंग्यस्थलं वा स्यात्।

समुदायशक्ती रूढिः अवयवशक्तिर्योगः। यः शब्द उभयशक्त्या एकार्थं बोधयति स योगरूढः। पंकजमुदाहरणम्। अत्र हि उभयशक्त्या पंकजनिकर्तृत्वरूपावयवार्थविशिष्टस्य पद्मत्वविशिष्टस्य बोधः। उभयशक्त्या एकार्थबोधनात् केवलयोगलभ्ये पंकजाते कुमुदादौ, केवलरूढिलभ्ये स्थलजाते पद्मे च न पंकजपदप्रयोगप्रसंगः। तदेतदुक्तमपि स्वीयं भवता स्मरणीयम्—अत एव न केवलया योगशक्त्या (अर्थः समुपस्थापयितुं शक्यते) रूढिसमानाधिकरणायाः योगशक्तेः रूढयर्थासंवलितार्थबोधकत्वस्य असंगतेरिति। अत एव पंकजादिपदेभ्यः पंकजनिकर्तृत्वेन कुमुदाद्युपस्थितिर्लक्षणयैवेति नैयायिका मन्यन्ते इति च। तस्मात् अल्पबलविशिष्टस्त्रीरूपोऽर्थः योगरूढस्य टाबन्तस्त्रीलिंगस्य अवलापदस्य भवति। स्त्रीतरलिंगकस्य योगरूढाद्भिन्नस्य अवलपदस्य तु बलाभावयुक्तरूपोर्थः। तथा चात्र स्त्रीलिंगावलाशब्दस्य स्त्री-

### बालक्रीड़ा

होगा। इसीलिए केवल योगशक्ति भी उस अर्थ को नहीं बतला सकती। क्योंकि रूढ़ि के समान अधिकरण वारिवाहादि शब्दों में रहने वाली योगशक्ति यदि रूढ़ि से प्राप्त अर्थ से असंवलित असंक्युत अर्थ को बतलावे तो असंगति ही उसकी होगी। और पुंश्चलीत्वादि रूप अर्थतो सर्वथा ही उसके विषय नहीं हैं।

आलोचन "योगरूढ़ि स्थल में रूढ़िज्ञान से योग का अपहरण सकलतंत्रों में सिद्ध है" यह उद्धरण जिस प्रसंग में आपने लिखा है वह "अबलानां श्रियं" पद्य योग रूढ़ि स्थल नहीं है यह तो नानार्थक श्लेषस्थल है। इस बात को अभी हम स्पष्ट करेंगे। पहले इस विषय में सिद्धान्तियों के सिद्धान्त को दिखलाते हैं।

शास्त्रकारों ने लिखा है कि वह शब्द योगरूढ होता है जो उभय शक्ति से एक ही अर्थ का बोधक हो अर्थात् अवयव शक्ति जिस अर्थ को बतलाती है उसी अर्थ को रूढ़ि शक्ति भी बतलावे और रूढ़िशक्ति जिस अर्थ को बतलाती है उसी अर्थ को योग शक्ति भी बतलावे तभी योगरूढ़ शब्द कहलाता है। जैसे पंकज शब्द पंकजनिकर्तृत्वरूप अवयवार्थ से विशिष्ट पद्म रूप अर्थ का बोधक होता है। यहाँ उभय शक्तियों के द्वारा मिल कर एक ही

रूढिसमानाधिकरणाया असंगतेः। पुंश्चलीत्वादेः सर्वथैव तदविषयत्वात्। एवं यौगिकरूढिस्थलेऽपि बोध्यम्।

### मर्मप्रकाशः

तस्या इति। योगशक्तेरित्यर्थः। ननु फलबलात्तथा कल्प्यतेऽत आह—पुंश्चलीति।

### मधुसूदनी

लिंगेतरलिंगकस्य अबलशब्दस्य च षष्ठीबहुवचने अबलानामिति एकरूपप्रयोगात् प्रकृतिश्लेषः। यथा नारीणामनुकूलमाचरसीति श्लेषवक्रोक्तेरुदाहरणे काव्यप्रकाशे "हितकृन्नैवाबलानां भवान्" अत्र वामानामित्यस्य नारीणामित्यर्थपरतया योजयित्वा प्रथमः कथयति "भवान् अबलानां स्त्रीणां हितकृन्नैव। अथापरः अबलानामिति दुर्बलार्थतया हितकृदिति हितकर्तनार्थकतया च योजयित्वाह—बलाभावेन शक्त्यभावेन प्रसिद्ध आत्मा स्वरूपं यस्य तस्य हितकर्त्तनं किं युक्तमित्येवं तद् व्याख्यानाच्च। प्रकृतिश्लेष एव। श्रियमिति चपलेति पदयोस्तु योगरूढत्वगन्धोऽपि नास्ति। श्रीर्लक्ष्मीः-शोभेति। चपला कमला विद्युत्पुंश्चलीपिप्पलीषु चेति विश्वमेदिनीकारोक्तेः।

### बालक्रीड़ा

अर्थ का बोध कराने के कारण रूढ़िशक्ति से वही पद्म उपस्थित होता है जो पंक से ही पैदा हुआ हो ( पङ्कजनिकर्तृत्व विशिष्ट ) स्थल से पैदा हुआ पद्म उपस्थित नहीं हो सकता है क्यों कि योग शक्ति बाधक हो जाती है। योग शक्ति से भी पङ्क से उत्पन्न पद्म ही उपस्थित होता है कुमुद नहीं क्यों कि रूढ़िशक्ति बाधक हो जाती है। अन्यथा होने पर वह शब्द योगरूढ़ नहीं। जैसा कि आपका लेख है रूढ़िसमानाधिकरणाया योगशक्तेः रूढचर्थासंवलितार्थबोधकत्वस्यासंगतेः; सारांश योग, रूढ़ि का और रूढ़ि, योग का अपहरण करती है याने दोनों समान बलवाली हैं यह नही कि रूढ़ि ही योग का अपहरण करे।

यही सिद्धान्त प्रोक्षण्यधिकरण में मीमांसित है—

लब्धात्मिका सती रूढ़िर्भवेद् योगापहारिणी।
कल्प्यमाना तु लभते नात्मानं योगबाधतः॥

जहाँ अन्य प्रमाणों से अवयवों के द्वारा मिले हुए अर्थ में शब्द का प्रयोग नहीं होता है वहाँ रूढ़ि लब्धात्मिका अर्थात् क्लृप्ता होती है। वह क्लृप्ता रूढ़ि योग का अपहरण बाध करती है। और जहाँ तो वह रूढ़ि कल्पनीया होगी वहां योग उसका बाध कर देगा क्यों कि वहाँ रूढ़ि अपने स्वरूप को प्राप्त नहीं करती है। अर्थात् रूढ़ि योग का अपहरण नहीं करती है। यह आचार्य सिद्धान्त हुआ।

अब युक्ति भी सुनिए। यदि योगरूढ़ि स्थल में रूढ़िज्ञान, योग का अपहरण करता होता तब पङ्कज पद से रूढ़िशक्ति के द्वारा पद्मरूप अर्थ के बोधन के समय पङ्कजनिकर्तृ रूप योगलभ्य अर्थ का बोध नही होना चाहिए। किन्तु इसके विपरीत योगरूढ़ पंकज पद पंकज-निकर्तृत्वप्रकारक पद्म विशेष्यक अर्थ का ही बोधक होता है। अतः योगरूढ़ि स्थल में रूढ़िज्ञान

व्यंजना

मधुसू विवक्षित इति

एवमेव वारिवहनकर्त्तृत्वप्रकारकः विवक्षितश्चेत्तर्हि एवायं वारिवाहशब्दो योगरूढः स्यात्। एतद्भिन्ना मुद्रयापरात् तु नैव योगरूढः। यथा प्रकृते गृहेषु जलप्रापकः कहारजातीयः शूद्ररूपोऽर्थोऽपि विवक्षितः। तथा चात्र मेघकहारजातीयशूद्रयोः, अबलादुर्वलयोः, धनशोभयोः, विद्युत्पुंश्चल्योश्च श्लेषः स्यात्, एकार्थस्य नियामकाभावे। सति वा नियामके व्यंग्यतैकस्यापरस्य वाच्यता स्यादिति।

## वालक्रीड़ा

योग का अपहरण करता है लेख ठीक नहीं है। जब कि पद्म रूप अर्थ में अनादि तात्पर्यरूप रूढ़ि है और परस्पर में होने वाले अन्वय की जनक सामग्री योगलभ्य अर्थ की उपस्थिति है अतः रूढ्यर्थ पद्म में ही योगार्थ पंकजनिकर्त्तृत्व का अन्वय होगा, कुमुद में नहीं; तब रूढ़ि ज्ञान योगबुद्धि का अपहरण क्यों करेगा।

प्रकृत "अबलानां श्रियं" पद्य में "अबलानां"[१] 'श्रियं'[२] 'वारिवाहैः'[३] और 'चपला'[४] ये चारों शब्द नानार्थक हैं श्लिष्ट हैं। जिनमें अबलानां और वारिवाहैः पद सभंग हैं और श्रियं और चपला पद अभंग हैं। जैसे अबला शब्द स्त्रीलिंग है और अबल शब्द पुंल्लिग है इन दोनों शब्दों का षष्ठी विभक्ति के बहुवचन में 'अबलानां' यह रूप बनता है अतः यहां प्रकृति श्लेष ही है। इसीलिए नायिकाओं की (शोभा) तथा दुर्बलों के (धन) ऐसे दो प्रकार के अर्थ आपने माने हैं। यदि यहाँ बलरहित नायिका रूप अर्थ ही विवक्षित होता अर्थात् दोनों शक्तियों के द्वारा बोधित एक ही अर्थ जो बलरहित है वह नायिका ही है, लौर जो नायिका है वही बल रहित है ऐसा अर्थ कहना यदि अभीष्ट होता तब यह 'अबलानां' पद योग रूढ़ होता किन्तु ऐसी बात नहीं है यहां तो इसके सिवाय भी अर्थ आपने लिया है क्योंकि रूढ़ि लभ्य नायिका अर्थ को छोड़ दिया है। केवल योग लभ्य ही अर्थ दुर्बल पुरुष लिया है। तब कैसे यह पद योग रूढ़ हो सकता है। नैवाबलानां भवान्। इस पद्य मे अबलानां स्त्रियों का और अबलानां दुर्बलों का इस तरह श्लेषवक्रोक्ति काव्य प्रकाश में दिखलाई है। इसी तरह वारिवाहैः पद में भी उभय शक्तियों से प्राप्त वारिवहनकर्त्तृत्व प्रकारक मेघ विशेष्यक अर्थ ही विवक्षित होता तब वारिवाहैः पद योग रूढ़ होता किन्तु वही अर्थ विवक्षित नहीं है। यहाँ तो जल भरने वाला कहार रूप अर्थ भी विवक्षित है अतः योग रूढ़ि स्थल इसको कहना सिद्धान्त और युक्ति के विरूद्ध है।

श्री शब्द के "श्रीर्वेश रचना शोभा भारतीसरलद्रुमे।
लक्ष्म्यां त्रिवर्गसंपत्तौ वेषोपकरणे मतौ॥

इस विश्व एवं मेदिनी कोष के अनुसार आठ ८ अर्थ हैं। उनमें ऊपर निर्दिष्ट शोभा और धन दो अर्थ अपने लिये हैं। तथा

चपला शब्द के "चपला कमला विद्युत्पुंश्चलीपिप्पलीषु च" इस मेदिनी के अनुसार ४ अर्थ है। उन में से विद्युत् एवं पुंश्चली अर्थ आपने लिखे हैं। इस तरह ये चारों शब्द नानार्थक हैं। इनमें श्री एवं चपला शब्दों में तो योग रूढ़ि स्थल की संभावना ही नहीं गन्ध भी नहीं है इसीलिए आपने भी यही लिखा है कि रूढि समानाधिकरण योग शक्ति का

यथा वा— । असंगतेः ।

'चाञ्चल ...व जलजानां श्रियं हरतु ।
...पि बोध्यम् ।
विपिनेऽति ......मपि च मृगाणां कथं हरति ॥'

अत्र नैवाश्चर्यकारी चाञ्चल्यगुणरहितानां कमलानां चाञ्चल्यगुणाधिकेन तव लोचनेन शोभायास्तिरस्कारः, आश्चर्यकृत्तु हरिणानां तद्गुणयुक्तानां

### मर्मप्रकाशः

पुरुषत्वरतित्वपरिग्रह । योगरूढस्योदाहरणान्तरमाह—यथा वेति । तद्गुणेति । चाञ्चल्य-

### मधुसूदनी

चाञ्चल्येति । चाञ्चल्यस्य योगोऽस्तीति तन्मतुबर्थे इनिः । नयति देशाद्देशान्तरं प्रापयति स्वाधिष्ठानभूतं प्राणिनं यत्तत् नयनं नेत्रम् । तवेत्यनेन हे नायिके इति हे प्रिये इति वा सम्बोधनोपलब्धिः । संबोध्यं प्रत्येव तवेति कथनं भवति । सम्बोधनसारो हि युष्मदर्थ इति व्युत्पत्तेः जलजानां जलजनिकर्तृणां पद्मानां श्रियं शोभां हरतु । जलसम्बन्धान्नित्यं सरसानामत एव शोभासम्पन्नेभ्यः प्रभूतत्वात् शोभायाः हरणं सुशकम् । वेपन्ते यत्र तस्मिन् विपिने । यत्र स्थितानां कम्पनं स्थानधर्मः स्वतः प्राप्तं भवन्ति । अत एव अतिचञ्चलानाम् । मृगयन्ति अन्वेषयन्तीति । मृगास्तेषां शोभां कथं हरति अर्थात्ते केवलं बुद्धिमन्त एव शोभायास्तु तत्र सम्बन्ध एव नास्ति तदा कथं तेन तस्या हरणं स्यादिति । यद्वस्तु यस्य पार्श्वे स्यात्तस्यैव वस्तुनस्ततो ग्रहणं सम्भवि नान्यस्य तथापि तत्कथमित्याश्चर्यकृत् ।

### बालक्रीड़ा

पुंश्चलीत्वादि सर्वथा विषय नहीं होती है । और अबलानां और बारिबाहैः इन पदों में योगरूढि की मिथ्या गन्ध थी शुद्ध भ्रान्ति थी जिसका स्पष्टी करण ऊपर कर दिया गया है । यही बात यौगिकरूढ स्थल में भी समझना चाहिए । इसके उदाहरण हैं एकान्त, शुद्धान्त उद्भिद् आदि हैं । एकान्त शब्द में "ए कान्त" ऐसा सभंग कर देते हैं तब हे प्रिय ! यह संबोधन होता है । एकान्त ऐसा अभंग कर देते हैं तब "निर्जन" अर्थ होता है । शुद्धान्त शब्द में अन्त शब्द को "अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवेऽपि । इस हेमचन्द्र कोश के अनुसार स्वरूप या निश्चय अर्थ लेते हैं तब निर्मल ज्ञान वाला व्यक्ति अर्थ होता है । दूसरा अर्थ शुद्धान्त शब्द का अन्तः पुर है । उद्भिद् पद का उद्भेदन कर्त्ता तरु गुल्म आदि अर्थ हैं । 'उद्भिदा यजते" के अनुसार उद्भिद याग अर्थ है । इस तरह एक दूसरे से कुछ भी सम्बन्ध नहीं रखते हुए स्वतन्त्र रूप से योगशक्ति और रूढिशक्ति जहां अर्थ बतलावें वह यौगिकरूढि स्थल होता है । इन शब्दों से बने हुए काव्यों में भी रूढ्यर्थ वाच्य होता है और योगार्थ व्यंग्य होता है ।

चाञ्चल्ययोगीति । यह पद्य अपनी प्रिया को या साधारण किसी नायिका को सम्बोधन करके कहा है अयि प्रिये ! या हे नायिके ! तुम्हारे चंचल नयन कमलों की शोभा को

तस्याः स इति वाच्यार्थे पर्यवसन्नेऽपि... विवक्षित इति योगमर्यादया मूर्ख-पुत्राणामत एव प्रमत्तानां नेतृभिश्चोरादिभिः अव्याप... तस्य हरणं सुशकम्, न

### मर्मप्रकाशः

गुणाधिक्येत्यर्थः। तस्याः स इति। शोभायास्तिरस्कार इत्यर्थः।

### मधुसूदनी

इदन्तु बोध्यम्। अत्र मूर्खपुत्राणामित्यर्थो ग्राह्यः। स च जलजानामित्यस्य जडजानामिति बुध्वा सम्भाव्यते। श्लेषयमकादीनां निर्वाहार्थं स्वीकृतमप्यैक्यं डलयोः शसयोः नणयोः बवयोस्तदपि क्लेषाभावात् कथं स्यात् प्रकृते व्यंग्यं स्वीकर्तुमते।

### बालक्रीड़ा

हरण करें तो कर सकते हैं क्यों कि वे कमल चंचल नहीं हैं। अर्थात् नियन्त्रित हैं और नयन चंचल है किसी का नियन्त्रण नहीं मानते हैं। इसीलिए कहा भी है कि घुंघट की ओट में भी ये चंचल नयन छिपे न छिपाये। ऐसी अवस्था में हरण कर लेना चोरी कर लेना हो सकता है। किन्तु विपिन में रहनें वाले क्योंकि नगर में रहने वाले को तो बहुत से व्यवहारों का पालन करना होता है जंगल में उन सब के करने की अवश्यकता नहीं है अत एव स्वच्छन्द विहारी अत एव अतिचञ्चल मृगों की शोभा को कैसे हर लेते हैं। क्योंकि नयन चंचल हैं और मृग तो अतिचंचल है अतः हरण करना जरा कठिन है।

यहां चांचल्य गुण रहित कमलों की शोभा का चाञ्चल्य गुण से अधिक तुम्हारे लोचन से तिरस्कार होना कोई आश्चर्यकारी बात नहीं है। आश्चर्यकारी तो यह है कि उस गुण से युक्त हरिणों की शोभा का तिरस्कार। ऐसे वाच्य अर्थ के पर्यवसन्न होनें पर अर्थात् समझने के बाद रूढि से निर्मुक्त अत एव केवल योगशक्ति की मर्यादा से मूर्खों की सन्तान अत एव प्रमादी व्यक्तियों की श्री घन का हरण नेता चोरों के द्वारा सुशक है। न कि गवेषकों अत एव सावधानों की। यह जलज नयन मृग शब्दों से प्रतीयमान अर्थ कैसे व्यञ्जना व्यापर के विना उपपन्न हो सकता है। क्योंकि रूढि ज्ञान के द्वारा योग का अपहरण हो जाने से योग शक्ति उसको बतलाने में असमर्थ है।

अत एव योग शक्ति के असमर्थ होने के कारण ही पंकजादि पदों से पंकजनिकर्तृत्वेन कुमुदादि की उपस्थिति लक्षणासे ही होती है ऐसा नैयायिक मानते हैं।

भगवन् पण्डितराज ! आपने प्राचीनों के द्वारा व्यवस्थापित व्यञ्जनां का एक माग से उन्मूलन करके अपने नये मार्ग से उसका पुनर्व्यवस्थापन करते हैं। समर्थ हैं कर सकते हैं। किन्तु जलज शब्द का मूर्ख पुत्र यह अर्थ क्या रूढि लभ्य है या योग लभ्य है। और क्या जलज शब्द नानार्थक है जिससे उसका दूसरा अर्थ मूर्ख पुत्र प्राप्त हो सके। अगर कहें कि (डलयोरैक्यम्) ड और ल में एकता है अतएव जलज को जडज समझा है अतः जडज से ऐसा अर्थ मिलति है। तब प्रार्थना है कि जल लाओ इस अर्थ में जड लाओ इसका प्रयोग

तु गवेषकाणामत ा असंगतेः । ते जलज-नयन-मृगशब्देभ्यः प्रतीयमानोऽर्थः कथं नाम ऽपि बोध्यम् । विनोपपादयितुं शक्यते ।

## मर्मप्रकाशः

जलजनयनमृगेति । डलयोरैक्याज्जडजत्वेन मूर्खपुत्राणामित्यस्य, नयतीति नयनमित्यनेन नेतृत्वेन चौराद्यैरित्यस्य, मृगयन्तीति मृगा इत्यनेन गवेषकाणमित्यस्य लाभः । मृग अन्वेषणे' इत्यदन्ताच्चुरादेः पचाद्यच् ।

## मधुसूदनी

अथाऽपि प्रसभात्कश्चिद् ब्रूयात्तर्हि यथा चलण्डामरवेष्टितः रुचिङ्कुरु इत्यादिस्थले कवितात्पर्याऽभावेऽपि सहृदयानां प्रतिभासतेऽश्लीलोऽर्थस्तथैवात्राऽपि पद्ये वक्तव्यं यत्तवेतिपदं काकाक्षिगोलकन्यायेन नयनजलजयोरुभयत्रान्वयि स्यात्तर्हि तवैव चौरा तवैव मूर्खप्रत्राणां धनं हरंति इति सम्बोध्यां प्रति वक्तुश्चाटुकारिता वा निन्दा वा प्रस्तुतेति चिन्तनीयं गाढतरशब्दार्थव्युत्पत्तिमसृणीकृतान्तःकारणैरिति । ततश्चास्मदीयं व्याख्यानमेव साधु अपरं केवलं चाञ्चल्यमेव । अधिकमुपरिष्टाद्वक्ष्ये ।

## बालक्रीड़ा

कोई भी व्यक्ति करता है क्या । कहना पड़ेगा कि नहीं । तब कैसे यह अर्थ आपने लिया । यदि कहें कि श्लेष मार्ग में ड और ल, ब और व, श और स, ण और न को एक माना जाता है । अस्तु । क्या यह श्लेष है ? यदि श्लेष है तब आप ही के कथनानुसार "सोऽव्यादिष्टभुजंगहारवलयस्त्वां सर्वदो माधवः" इस श्लेष काव्य के अनुसार प्रकृत पद्य में भी दोनों अर्थ वाच्य ही होगें उस अवस्था में व्यञ्जना को कहां अवसर हैं जो आपने लिखा कि कैसे व्यञ्जना व्यापार के विना यह अर्थ उपपपन्न हो सकता है ।

नयन शब्द का चोर अर्थ किस व्याकरण के अनुसार किस प्रकृति एवं प्रत्यय के योग से लभ्य है या अनादि तात्पर्य रूप रूढि से लभ्य है । यदि कहें कि आर्थीव्यञ्जना से लभ्य है । भगवन् ! तब योगरूढि का विषय यह कैसा जो आपने लिखा कि नयन शब्द से यह अर्थ लभ्य है ।

मृग शब्द भी योगरूढ नहीं है। परस्परान्वय बोध जनक सामग्री के सद्भाव में ही योगरूढ शब्द होता है यहां तो मृग शब्द के हरिण और गवेषक दो भिन्न भिन्न ही अर्थ गृहीत है । अतः यौगिकरूढि का उदाहरण यह हो सकता है अगर कहे कि यौगिक रूढ़ि स्थल ही यह है तब "यथा वा" में वा पद क्यों ।

एक बात और भी है । यहां तव पद नयन और जलजानां के बीच में रक्खा है अतः चलण्डामरवेष्टितः "रुचिङ्कुरु" पदों में जैसे नहीं चाहने पर भी परस्पर के सहयोग से अश्लील अर्थ भी सहृदयों को भासित होता है उसी तरह प्रकृत में भी काकाक्षिगोलक न्याय से "तव" पद का अन्वय नयन से और जडजानां दोनों से होगा तब तुम्हारे चोर तुम्हारे मूर्ख पुत्रों के धन का हरण करते हैं यह निन्द्य अर्थ भी उपस्थित होगा जो कि लो ार विरुद्ध है ।

अत एव पङ्कजादिपदेभ्यः पङ्कजनिकर्तृत्वेन विवक्षित इति कुमुदाद्युपस्थितिर्लक्षणयैवेति नैयायिका मन्यन्ते । व्यापारान्तराभावाद्व्यापरात् ।

अत एव च 'ईशानो भूतभव्यस्य स एवाद्यः स उ श्वः' इति वेदान्तवाक्ये किमैश्वर्यविशिष्टः कश्चिज्जीवोऽत्र प्रतिपाद्यत उतेश्वर इति संशये जीव

## मर्मप्रकाशः

अत एव योगशक्त्या अलाभादेव । एवमग्रेऽपि ईशान इत्यस्य 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः' इत्यादिः । कठवल्लीस्थमिदम् । (२ अ २ वल्ली १३मं०) अद्य वर्तमानकाले

## मधुसूदनी

अत एव व्यञ्जनाव्यापरं विना रूढिनिमुक्तयोगमर्यादया लभ्यार्थस्योपपादयितुमशक्यत्वादेव । नैयायिका इति व्यञ्जनामस्वीकर्तृणां सूचानार्थमत एव अस्मिन् प्रसंगे लक्षणयैवेति निर्देशः । उपपादयितुं शक्यते इति शेषः ।

अत एव चेत्यस्य वादरायणचरणैरिति वेदान्तिनामयमर्थः । ईशानो भूतभव्यस्येत्यत्र व्यंजनाया लक्षणाया अप्रसंगात् रूढिनिर्मुक्तयोगलभ्यार्थस्य विज्ञातुमशक्यत्वादिति ।

## बालक्रीड़ा

अपनी ही चीजों की अपने चोरी न करके बाहरी लोगों के यहां चोरी की जाती है । तव कथं पद की क्या संगति होगी । क्योंकि मृग तो बाहरी है उनके यहां चोरी हो सकती है । अतः "अवलानां" और "चाञ्ल्ययोगि" नयन इन दोनों में प्रथम पद्य श्लेष ही का उदाहरण है । और दूसरा न श्लेष का है न व्यञ्जना का है यदि कहें कि अपहर्तृव्यवहार भी विवक्षित है तब आपको यह भी मानना होगा कि 'तव' पद उभयान्वयि है और निन्द्य अर्थ भी उपस्थित होता है । यदि कहें कि "तव" उभयान्वयि नहीं है तव हमारी वतलाई हुई व्याख्या ठीक है ।

अत एव योगशक्ति के असमर्थ होने के कारण ही पंकजादि पदों से पंकजनिकर्तृत्वेन कुमुदादि की उपस्थिति लक्षणा से ही नैंयायिक लोग मानते हैं ।

ईशान इति । अनुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्यः स उ श्वः । एतद्वै तत् । कठ २ अ० २ वल्ली १३ मंत्र । यहाँ "अङ्गुष्ठमात्रः" पद में परिमाण अर्थ में मात्रच् प्रत्यय है । अधूमकः यह ज्योतिः पद का विशेषण है अतः "अधूमकम्" होना चाहिए था किन्तु वैदिक पद है । उ श्वः में उ पद का अर्थ अपि है ।

यहाँ धूम रहित ज्योति की तरह देदीप्यमान अंगुष्ठमात्र पुरुष है । अंगुष्ठमात्र कहने का यह आशय है कि जैसे आकाश सर्वव्यापक है तथापि अंगुष्ठपरिमित पर्व (पोरी) में रहने के कारण उसको अंगुष्ठपरिमाण कह देते हैं इसी तरह प्रकृत में यह ज्योति विभु है किन्तु अंगुष्ठपरिमित हृदय पुण्डरीक में निवास करने के कारण इसको अंगुष्ठपरिमित कहा । भूत जो प्राणी पैदा हो चुके और भव्य जो प्राणी उत्पन्न होंगे उन सब का मालिक यह है । वही

असंगतेः ...क्रीड़ा

आज है वही कल भी रहेपि बोध्यम् । ...ह्य है। अर्थात् जो सदा रहेगा वह ईश्वर यहां प्रतिपाद्य हैं। इस वेदान्त व... ...या ऐश्वर्यसम्पन्न कोई जीव यहां प्रतिपाद्य है या ईश्वर? यह संशय होता है। जब जीव ही प्रतिपाद्य है यह पूर्वपक्ष होता है तब उत्तरमीमांसा वेदान्त शास्त्र के प्रवर्त्तक आचार्य वादरायण व्यास जी ने उपर्युक्त मंत्रगत "ईशान" शब्द अर्थात् निरपेक्ष श्रुति से ईश्वर ही यहाँ प्रतिपाद्य है इस आशय के अनुसार सूत्र (शब्दादेव प्रमितः) बनाया।

लिंग और श्रुति के विरोध में लिंग से श्रुति बलवती होती है। प्रकृत में अंगुष्ठमात्र जीव का लिंग है और ईशान शब्द श्रुति है अतः श्रुति की प्रबलता से परमेश्वर यहाँ प्रतिपाद्य है। ऐसी व्याख्या की योगरूढि स्थल में व्यञ्जना के सिद्धान्त का निरूपण करते समय क्या संगति है।

अतः इसकी यों व्याख्या होनी चहिए, यहां वेदान्त वाक्य में ईशान शब्द योगरूढ़ है। इस का स्वरूप हम ऊपर बतला चुके हैं कि जो शब्द उभयशक्ति के द्वारा परस्परालिंगित अर्थ का बोधक होता है वह योगरूढ़ है। अतः केवल योगशक्ति के सहारे ईशनकर्त्ता जीव यहाँ प्रतिपाद्य नहीं है अपितु उभयशक्ति के सहारे ईशनकर्त्तृत्वविशिष्ट परमेश्वर ही यहां प्रतिपाद्य है यही सिद्धान्त है। फलतः प्रकृत में इस वेदान्त वाक्य के उल्लेख का इतना ही प्रयोजन है कि ऐसे स्थलों में यौगिक अर्थ को स्वतन्त्र रूप से केवल योग शक्ति नहीं बतला सकती है। वस! व्यंजना या लक्षणा उसे वतलावे या बतलाती है इससे इसका कोई भी सम्बन्ध नहीं है। और लिंग श्रुति वाली व्याख्या का जहाँ उपयोग है वहां वह व्याख्या की ही गई है।

अथवा उपर्युक्त व्याख्या का समन्वय इस प्रकार हो सकता है। योगरुढ स्थल में एक नियम है कि जहाँ यौगिक अर्थ के किसी भी सम्बन्धी का निर्देश किया गया हो तो वहाँ रूढि शक्ति दुर्बल हो जाती है। जैसे "पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः" यहाँ सरोरूह शब्द योगरूढ है किन्तु "सरोवर में पैदा होने" इस योगलभ्य अर्थ के सम्बन्धी "अग्रभाग में स्थित" रूप अर्थ का निर्देश होने से रूढिशक्ति दुर्बल हो गई अतः अपने पद्मरूप अर्थ को नहीं बतला सकती है इसीलिए पद्मानि पद का पृथक् उपादान किया। इसी तरह प्रकृत वेदान्तवाक्य के ईशान शब्द योगरूढ में योगलभ्य ईशनकर्तृत्त्व रूप अर्थ के सम्बन्धी भूत और भव्य प्राणीरूप पदार्थ का निर्देश है। किनका ईशन (शासन) करता है इस आकांक्षा की पूर्ति इस अर्थ से होती है। अतः रूढि दुर्बल हो गई है। फलतः योगशक्ति से जीव ही प्रतिपाद्य है। इस पूर्वपक्ष में सिद्धान्त है कि जैसे अंगुष्ठमात्र शब्द अल्पपरिमाणरूप जीव लिंग में श्रुत है वैसे ही भूतभव्यसमभिव्याहृत ईशान शब्द की ब्रह्मलिंग में श्रुति है। अतः लिंगत्व दोनों जगह समान है। तथापि योग के द्वारा लिंग होता हुआ भी ईशान शब्द श्रुति रूप ही है और "श्रुतिलिंग वाक्य प्रकरण स्थान समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इस जैमिनिमहर्षीय सूत्रोक्त सिद्धान्त के अनुसार श्रुति सब से बलवती है अतः परमेश्वर के अभिधायक ईशान शब्द के योगलभ्य अर्थ से रूढि का वारण संभव नहीं है फलतः रूढि से परमेश्वर प्रतिपाद्य है। इसकी प्रकृत से क्या संगति है वह ऊपर बतला दी गई है।

इसके सिवाय स एवाद्य स उ श्वः में यह अंश पूर्व पद्योक्त प...कि ...लों ...रह ...स्योद्गलक

एवेति पूर्वपक्षे च 'शब्दादेव प्रमितः' इत्रो विवक्षित इति ।ांसाकारैर्बादरायण-चरणैः । (ब्रह्मसूत्रे १।३।२४) तस्मादथन्म्याद्व्यापरात् ।।क्तवेद्यम् । अपि तु व्यक्तिवेद्यमेव ।

### मर्मप्रकाशः

स एवास्ति । श्वो भविष्यत्काले स एव भवितेत्यर्थः । जीव एवेति । 'अङ्गुष्ठपरिमाणस्य लिङ्गस्य ब्रह्मण्यसंभवादिति भावः । सूत्रितमिति । सिद्धान्तार्थमिति शेषः । स चेत्थम्— परमात्मात्र प्रतिपाद्यः प्रमितः । कुतः । शब्दादेव । ईशानो भूतभव्यस्येत्यत्रेशानशब्दात् । नहि जीवे ईशानशब्द आञ्जसः । लिङ्गश्रुत्योर्विरोधे श्रुतेः प्राबल्यात् एतत्सूचनार्थमेवैवकारः । अङ्गुष्ठमात्रत्वं तु अङ्गुष्ठमात्रजीवानुवादेन ब्रह्माभेदप्रतिपादनान्नानुपपन्नमिति । ननु शक्त्य-

### मधुसूदनी

अत्रायमाशयः । अत्र श्रुतौ कः प्रतिपाद्यः इति संशये ईशानशब्दो योगरूढः। स हि उभयशक्त्या परस्परान्वितमर्थमेवाभिधत्ते न केवलया योगशक्त्या न च तादृश्या रुढया वा। ततश्च रूढितिनिर्मुक्तयोगेन लभ्यमर्थं गृहीतुमशक्यत्वादुभयशक्त्या ईशन-कर्तृत्वविशिष्टः परमेश्वर एव ग्राह्यः इति।

तस्मादुक्तनिदर्शनात् "अबलानां" "चाञ्चल्ययोगि" इति पद्ययोः अर्थान्तरं योगलभ्योऽर्थः। अत्र अर्थान्तरमित्यस्य स्थाने योगलभ्योऽर्थ इति वक्तव्यं तस्य प्रकृतत्वात् अर्थान्तरमित्यस्य कथने नानार्थक एवायाति।

ननु पंकजपदाद्यथा केवलरूढिलभ्यस्य पद्मरूपार्थस्य बाधे सति केवल योगार्थस्य कुमुदरूपस्यार्थस्योपस्थितिर्लक्षणया भवति तथैव "अबलानामिति पद्येऽपि अशक्तानां धनमपहृत्य पुंश्चल्यो जलवाहकैः कहारजातीयशूद्रैः सह रमन्ते" इति केवल

### बालक्रीड़ा

है। वही आज है वह कल भी रहेगा। ऐसी किसी जीव की स्थिति नहीं हो सकती है। यह स्थिति तो ईश्वर की ही है; अतः वही प्रतिपाद्य है।

तस्मात् "अबलानां" "चाञ्चल्ययोगि" इन पद्यों में योग लभ्य अर्थ शक्तिवेद्य नहीं है अपितु व्यक्ति वेद्य ही है। यहाँ अर्थान्तरं पद की जगह योगलभ्य अर्थ यह पाठ उचित है। क्योंकि इसी अर्थ के लिए व्यक्ति की स्वीकृति प्रकृत में सिद्धान्तित की है। यदि अर्थान्तरं पद का विन्यास करेंगे तब तो नानार्थक ही होगा।

अगर कहें कि पंकज पद से जैसे केवल रूढि लभ्य पद्मरूप अर्थ के बाध होने पर कुमुदरूप केवल योगलभ्य अर्थ की उपस्थिति लक्षणा वेद्य है उसी तरह यहाँ भी अशक्तों के धन का अपहरण करके पुंश्चलियाँ जलवाहक कहारों के साथ रमण करती हैं "यह केवल योगलभ्य अर्थ भी लक्ष्य ही जाय। यह भी ठीक नहीं। क्योंकि लक्षणा का बीज है बाध, वह; नायिका स्थिति में नानाअपहरण करके विजलियाँ मेघों के साथ जब रहती हैं वह समय

यथाश्रुतार्थस्[illegible] असंगतेः [illegible]न लक्ष्यमित्यपि न शक्यं वक्तुम्। तात्पर्यार्थबाधस्तु त[illegible] बोध्यम्। [illegible]व्यः। स एव तु कथं स्यादित्युपायोऽयं

### मर्मप्रकाशः

वेद्यत्वेऽप्यन्यत्र लक्षणावेद्यत्वमेवास्तामत आह—यथेति। तथा च मुख्यार्थबाधरूपलक्षणाबीजाभावान्न सेति भावः। नन्वेवं तथापि कथं निर्वाहोऽत आह—तात्पर्यार्थेति। ननु यत्र तद्वाक्येन तदर्थान्वयबोधात्प्राक्प्रकारान्तरेण तदर्थे वक्तुस्तात्पर्यग्रहस्तत्रास्तु नाम 'काकेभ्यो दधि रक्ष्यताम्'

### मधुसूदनी

योगलभ्योऽर्थोऽपि लक्ष्यो भवतु इति प्राह-यथाश्रुतस्येति। नायिकानां शोभामपहृत्य विद्युतो मेघैः सह तिष्ठन्तीत्यर्थस्य यथाश्रुतस्य उपपत्तौ लक्षणाया बीजस्य बाधस्याभावात् लक्षणावेद्यमित्यपि वक्तुं न शक्यते।

ननु बाधस्य प्रतियोगी न केवलं मुख्यार्थ एव तात्पर्यार्थोऽपि ततश्च तात्पर्यबाधाधारेण अर्थान्तरं लक्ष्यमित्यपि वक्तुं शक्यमिति प्राह—तात्पर्यार्थेति। किन्तु तात्पर्यार्थस्य बोधोत्तरं तात्पर्यार्थबाध इति ज्ञातुं सुशकं परं तु स तात्पर्यार्थबोध एव। तत्र कश्चिदुपायो नहि अस्ति इत्यन्वयः। अस्माद् व्यञ्जनाव्यापारात्। ऋते विना। अन्यत्रापि चांचल्योगीति पद्यादावपि।

### बालक्रीड़ा

आ गया है इस यथाश्रुत अर्थ की उपपत्ति हो जाने से यहां होता नहीं है अतः इसे लक्ष्य भी नहीं कह सकते।

प्रश्न—यदि कहें कि बाध शब्द का प्रतियोगी केवल मुख्यार्थ ही नहीं है तात्पर्यार्थ भी है अतः तात्पर्यार्थबाध के आधार पर इसे लक्ष्य कहते हैं, ठीक है; किन्तु तात्पर्यार्थ के समझने के बाद असंगत होने पर तात्पर्यार्थबाध जाना जा सकता है। "तात्पर्यार्थ का बोध ही कैसे हो" यही उपाय यहां विशेष रूप से चिन्तनीय है।

जैसे अध्ययन के लिए गुरु में (गुरू के पास) छात्र रहता है। (अध्ययनाय गुरौ वसति) कूप में (कूप के पास) गर्ग का कुल है (कूपे गर्गकुलम्) गंगा में (गंगा के पास) गायें चरती हैं (गंगायां गावश्चरन्ति) इत्यादि सकल उदाहरणों में समीपार्थक सप्तमी सिद्धान्त में मानी जाती है तदनुसार अर्थ भी ऊपर लिखा है। वैसे ही (गंगायां घोषः) गंगा में घोष है यहाँ पर भी समीपार्थक सप्तमी से गंगा के पास घोष है यह अर्थ समन्वित हो जा सकता है तब लक्षणा की क्या आवश्यकता है। तब पढ़ाया जाता है गोष्ठी में किसी गरिष्ठ व्यक्ति ने कहा कि भाई यहाँ तो बड़ी गरमी है यहाँ रहना इस हालत में मुश्किल है। इस पर किसी सज्जन ने कहा कि हमारे गाँव में चलिये वहाँ आप को बड़ी तरी ठंढक मिलेगी। तब उसने पूछा ऐसी क्या बात है। उत्तर में कहा कि हमारा गाँ[illegible] [illegible] में [illegible]इतना कहने पर पूर्व कथित तात्पर्यार्थ नहीं मिला तब लक्षणा की गई फलतः लक्षण[illegible] प[illegible] कि [illegible]मलों [illegible] रह[illegible] बाध भी है।

विचिन्त्यते। नह्यपहर्तृव्यवहारो वक्त्रा विवक्षित इति श्रोतुर्बोधे कश्चिदुपायोऽस्ति ऋते सहृदयहृदयोन्मिषितादस्माद्व्यापरात्। एवमन्यत्राप्यूह्यम्। तादृशार्थप्रतिपत्तिरेव नास्तीति तु गाढतरशब्दार्थव्युत्पत्तिमसृणीकृतान्तःकरणैर्न शक्यते वक्तुम्।

तथा चेत्थं संग्रहः—

'योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते।
धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा॥

एवं स्थिते नानार्थस्थलेऽप्युपमायाः प्राकरणिकाप्राकरणिकार्थगतायाः

**मर्मप्रकाशः**

इत्यादौ तात्पर्यानुपपत्त्या लक्षणा, प्रकृते तु न तथेत्याह—नह्यपहर्तृव्यवहार इति। अस्माद्व्यञ्जनरूपात्। तादृशेति। अन्येत्यर्थः। अवश्यं वाच्ययेति। अर्थापत्तेः प्रमाणान्तरत्वे माना-

**मधुसूदनी**

गाढेति। गाढतरा दृढा या शब्दार्थयोर्विषये व्युत्पत्तिः विशिष्टं ज्ञानं तया मसृणीकृतं ज्ञातुं योग्यीकृतमन्तः करणं येषां तैः सहृदयैरित्यर्थः।

योगेति। योगरूढस्य शब्दस्य योगे (योगशक्तौ) रूढया नियन्त्रिते योगार्थं बोधयितुमसमर्थे कृते योगस्पृशः योगमर्यादया लभ्यस्यार्थस्य धियं बुद्धिं या सूते करोति सा व्यञ्जनैव नान्या लक्षणादिकेति एवकारार्थः।

गताया निष्ठाया उपमायाः प्रतिपत्तये ज्ञानाय। प्रतिपत्तौ सत्यामिति शेषः।

**बालक्रीड़ा**

अपहर्त्ता का व्यवहार वक्ता को विवक्षित है अर्थात् अपहर्त्ता के व्यवहार को बताने में वक्ता का तात्पर्य है किन्तु श्रोता के पास उस व्यवहार को समझने के लिए कोई उपाय नहीं है सिवाय सहृदयों के हृदय में उन्मिषित होने वाले व्यंजना व्यापार के; यही सिद्धान्त और उदाहरणों में भी समझना।

अपहर्त्ता के व्यवहार की प्रतिपत्ति ही यहां नहीं होती है; यह तो शब्द एवं अर्थ के विषय में गाढतर व्युत्पत्ति से जिनका अन्तः मसृण हो गया है वे लोग नही कह सकते हैं। यहाँ मसृणित कहने का यह भाव है कि जैसे चिक्कन जगह में पैर रखते ही पैर रखने वाले का शरीर तुरन्त धराशायी हो जाता है वैसे ही उस तरह के शब्द सुनने वाले के अन्तःकरण में उस शब्द का अर्थ सत्त्वर बोध गम्य हो जाता है।

इस वास्ते इस विषय में ऐसा संग्रह हम करते हैं—योगरूढ़ शब्द की योग शक्ति का रूढ़ि के द्वारा नियन्त्रित हो जाने पर जो योगस्पृष्ट योगलभ्य अर्थ की बुद्धि को पैदा करदे वह व्यंजना ही है।

इसी स्थिति में नानार्थ स्थल में भी जब प्राकरणिक एवं अप्राकरणिक अर्थ गत

प्रतिपत्तयेऽवश्यं वाच्यया व्यञ्जनयैवाप्राकरणिकस्याप्यर्थस्य प्रतिपत्तावलं क्लिष्टकल्पनयेत्याशयेन प्राचीनैरुक्तं नानार्थव्यञ्जकत्वमपि न दुष्यति। तत्र नानार्थशक्तिनियमनाय तैः संयोगादयो निरूपिताः—

'संयोगो, विप्रयोगश्च, साहचर्यं, विरोधिता।
अर्थः, प्रकरणं, लिङ्गं, शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्य, मौचिती, देशः, कालो, व्यक्तिः, स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥' इति।

तत्र

## मर्मप्रकाशः

भावादिति भावः। क्लिष्टेति। पूर्वोक्तेत्यर्थः। तत्र निरूपितायां व्यञ्जनायाम्। तैः प्राचीनैः। तत्र संयोगादीनां मध्ये।

## मधुसूदनी

क्लिष्टकल्पनया अन्ये त्वत्र प्रत्यवतिष्ठन्त इति मतोक्तरीतिविचारणया "पयो रमणीय" मित्यतः सत्यपि प्रकरणज्ञाने द्वितीयार्थ उपतिष्ठत एवेत्यादि वाचोयुक्तेरमणीयत्वादित्यन्तरूपया अलं व्यर्थम्। इत्याशयेन अभिप्रायेण न दुष्यति उचितमेव प्रतिभातीत्यर्थः।

तत्र नानार्थस्थले। तैः हरिप्रभृतिभिः। आनन्दाभिनवगुप्तादिभिर्वा। शब्दार्थस्य नानार्थशब्दसम्बन्धिनः अर्थस्य नानारूपस्येत्यर्थात्। अनवच्छेदे नानात्वेन प्रतिपत्त्यनियमे अर्थात् सन्देहे सति विशेषस्य एकतरस्य स्मृतौ पदार्थोपस्थितौ हेतवः। सर्वेषामर्थानामुपस्थितावपि नियन्त्रणवशादेकस्यैव अर्थस्य शाब्दबोध इति सारम्। इमे संयोगादयो नियामकाः चतुर्दश।

तत्र तेषां मध्ये। संयोग इति। नानार्थस्य शब्दस्य यत् शक्यान्तरं

## बालक्रीड़ा

उपमा की प्रतिपत्तिके लिए व्यंजना अवश्य ही वाच्य है तव अप्राकरणिक अर्थ की जानकारी भी उसी से करनी चाहिए अतः (अन्ये तु अत्र प्रत्यवतिष्ठन्ते) और लोग तो इस विषय के विरुद्ध उत्थान करते हैं। इस मत के निरूपण के समय कल्पनाओं का क्लेश करना व्यर्थ है। इस आशय से नानार्थव्यञ्जकत्व भी प्राचीनों का कहा हुआ दुष्ट नहीं है। उचित ही है।

उस निरूपित शाब्दी व्यञ्जना के प्रसंग में नानार्थशब्द की शक्ति का नियमन करने के लिए भर्तृहरि प्रभृति प्राचीन आचार्यों ने संयोग वगैरह १४ नियामकों को वतलाया है।

इस नानार्थक शब्द का प्रकृत प्रसंग में कौन सा अर्थ विवक्षित है ऐसा सन्देह होने पर विशेष अर्थात् प्रकृतोपयोगी अर्थ के स्मृति हेतु निर्णायक संयोग आदि १४ कारण हैं।

उनमें संयोग उस सम्वन्ध को कहते हैं जिसकी नानार्थकशब्द के दूसरे २ अर्थों में

संयोगो नानार्थशब्दशक्यान्तरवृत्तितया अप्रसिद्धत्वे सति तच्छक्यवृत्तितया प्रसिद्धः संबन्धः ॥

यथा—'सशङ्खचक्रो हरिः' इत्यत्र शङ्खचक्रयोः संयोगो भगवन्मात्रनिष्ठतया प्रसिद्धो भगवति हरिशब्दस्याभिधाया नियमेनावस्थापकः। न त्वायुधसामान्यसंयोगः, पाशाङ्कुशादिसंयोगो वा दलद्वयाभावात्। न चासौ

### मर्मप्रकाशः

मात्रपदेन विशेषणदलसत्ता सूचिता। भगवति विष्णौ। क्रमेण दलद्वयकृत्यमाह—न त्वायुधेति। असौ संयोगः। लिङ्गत्वात्तत्वेन ग्रहणात्। तथा च विशेषणदले नियमेनेति

### मधुसूदनी

द्वितीयोऽर्थः तद्वृत्तितया तन्निष्ठतया। तस्यैव शब्दस्य यः शक्यः तद्वृत्तितया। सम्बन्धः संयोगः गुणविशेषरूपः। भगवन्मात्रेत्युक्तौ तच्छक्यवृत्तितयेत्यस्य तदर्थमात्रनिष्ठतयेति बोध्यम्।

आयुधसामान्येति। आयुधसामान्यस्य आयुधत्वेन अर्थात् आयुधोऽस्तीति यस्य कस्यापि आयुधस्य संयोगः। पाशांकुशत्वादिना आयुधविशेषस्य संयोगो वा नात्र ग्राह्यः। तच्छक्यान्तरवृत्तितया अप्रसिद्धत्वे सति तच्छक्यवृत्तितया प्रसिद्धः इत्यनयोः द्वयोः दलयोः लक्षणखण्डयोरभावात् असमन्वयात्। अयं भावः।

सायुधो हरिरित्यत्र आयुधत्वेन आयुधसामान्यसंयोगः नानार्थकस्य हरि शब्दस्य शक्यान्तरे इन्द्रादौ अप्रसिद्धो नास्ति वज्रहस्तः पुरन्दर इत्यादिना आयुधसंयोगस्य तत्र प्रसिद्धत्वात्। इति प्रथमदलकार्यम्। सपाशांकुशो हरिरित्यत्र आयुधविशेषपाशांकुशयोः संयोगो हरौ विष्णौ प्रसिद्धो नास्ति। अन्येष्वपि वीरेषु तेषां सद्भावात्। इति द्वितीयदलकार्यम्।

न चासाविति। असौ संयोगः। शक्यान्तरे अर्थान्तरे। प्रकृते संयोगादौ। नियमेन अवृत्तेः फलमाह-शंखेति। कदाचिद् धारणं संभवतीत्यस्य नियमेन शक्यान्तरे

### बालक्रीड़ा

रहने की प्रसिद्धि न होने पर भी किसी एक अर्थ में रहने की प्रसिद्धि हो। जैसे "सशंखचक्रो हरिः" यहां पर शंख और चक्र का संयोग केवल भगवान् में प्रसिद्ध है और इन्द्रादि अर्थों में प्रसिद्ध नहीं है अतः वह भगवान् में हरि शब्द की अभिधा का नियमन करता है।

आयुधत्व धर्म जिनमें रहता है उन सभी आयुधों का संयोग और पाश तथा अंकुश आदि विशेष आयुधों का संयोग अभिधा का नियामक नहीं हो सकता है क्यों कि इस प्रकार के संयोग में लक्षण के दोनों खण्डों का अभाव है।

शंका—इस संयोग को लिंग के अन्तर्गत क्यों नहीं मान लेते।

उत्तर—दूसरे २ अर्थों में नियम से नहीं रहना ही प्रकृत में लिंग माना है। शंख

लिङ्गान्तर्गत इति मन्तव्यम्। शक्यान्तरे नियमेनावृत्तेरेव प्रकृते लिङ्गत्वात् शङ्खचक्रयोस्त्विन्द्रादिनापि कदाचिद्धारणसंभवात्।

विप्रयोगो विश्लेषः ॥

यथा—'अशङ्खचक्रो हरिः' इत्यत्र तयोरेव विश्लेषस्तथा। अत्र हि स्वनियतपूर्ववर्तिसंश्लेषवद् विश्लेषस्य प्रागुक्तदलद्वयाक्रान्तत्वमपेक्ष्यते। तेनायुधसामान्यविभागः, पाशाङ्कुशादिविभागो वा न तथा। यद्यप्यत्र गुणतया

### मर्मप्रकाशः

पूरणीयमिति भावः। तयोरेव शङ्खचक्रयोरेव। तथा अभिधानियामकः। एवमग्रेऽपि। अतिप्रसङ्गवारणायाह—अत्रेति। तेन संश्लेषपूर्वकस्यैव तस्य ग्रहणमिति नातिप्रसङ्गः। प्रागवत्तत्कृत्यमाह—तेनेति। गुणतया प्रकारतया।

### मधुसूदनी

वृत्तिताया अप्रसिद्धिरिति फलम्। इन्द्रः शंखचक्रौ धारयतीति प्रसिद्धिर्नास्ति अत एव अप्रसिद्धत्वे सति प्रसिद्ध इति संयोगलक्षणे उपात्तम्। लिंगे तु तादृशो नियमः अर्थात् सर्वथा व्यावृत्तिरिति तस्माद्भिन्नः संयोगः।

तयोरिति। शंखचक्रयोरेवेति। विश्लेषो विभागः। तथा नियमेन अभिधाया व्यवस्थापकः। प्राग् संयोगलक्षणे उक्तस्य दलद्वयस्य आक्रान्तत्वं युक्तत्वं विश्लेषेऽपि अपेक्ष्यते इति भावः। तेन संश्लेषवद्विभागेऽपि दलद्वयापेक्षणेन। पाशेति। आयुधविशेषविभाग इति बोध्यम्।

"संश्लेषस्य दलद्वयाक्रान्तत्वमपेक्ष्यते" इति विसंष्ठुलः पाठः। अत्र प्रागुक्तपदेन संश्लेषस्यैव ग्रहणं नान्यस्य, संयोगस्यैव प्रागुक्तत्वाद्। तत्र तु तत्त्वं वर्त्तत

### बालक्रीड़ा

और चक्र को इन्द्रादिक भी कदाचित् धारण कर सकते हैं ऐसा शंख और चक्र में सम्भव है किन्तु वैसी प्रसिद्धि नहीं है। अतः नियम नहीं होने से लिंग नहीं है।

विश्लेष का नाम विप्रयोग है। जैसे 'अशंखचक्रो हरिः' यहां पर उन्हीं दोनों का विश्लेष अभिधा का नियामक है। यहां पर नियम पूर्वक अपने से अर्थात् विश्लेष से पहले रहने वाले संश्लेप याने संयोग की तरह विश्लेप में भी पहले कहे हुए संयोग के लक्षण के दोनों दलों की सत्ता की अपेक्षा है आवश्यकता है अतः लक्षण के दोनों खंडों की संगति के अभाव में आयुध सामान्य का विभाग या पाश और अंकुश रूप आयुध विशेष का विभाग अभिधा का नियमन नहीं कर सकता है। यद्यपि संयुक्तों का ही विश्लेष होता है इसलिए विश्लेष में पूर्वोक्त लक्षण वाला संयोग भी अंगत्वेन वर्तमान है अतः वही अभिधा के नियमन के लिए पर्याप्त है। तब भी गुण और प्रधान दोनों के एक साथ आने पर प्रधान का ही अनुरोध न्याय्य है उचित है इस आशय से विप्रयोग को पृथक् अभिधा का नियामक कहा। अथवा केवल संयोग और विश्लेष का गुणीभूत संयोग, इस प्रकार संयोग को द्विविध दिखाने के लिए अलग २ कहा।

वर्तमानस्तादृशसंयोग एवाभिधानियमनायालम्, तथापि गुणप्रधानयोः संनिपाते प्रधानानुरोध एव न्याय्य इत्याशयेन विप्रयोगस्य नियामकत्वमुक्तम्। यद्वा संयोगस्यैव केवलत्वेन, विश्लेषगुणीभूत्वेन च द्वैविध्यप्रदर्शनाय तथोक्तम्।

साहचर्यमेकस्मिन्कार्ये परस्परापेक्षित्वम्॥

यथा—'रामलक्ष्मणौ' इत्यत्र रामे लक्ष्मणसाहचर्यं रामशब्दस्य। अथ किमिदं परस्परापेक्षित्वं यत्किंचित्कार्ये, सर्वेषु कार्येषु वा। नाद्यः। घटाद्यन्यावर्तनाद्घटसाहचर्यस्यापि रामपदशक्तिनियामकतापत्तेः। न द्वतीयः। लक्ष्मणसा-

### मर्मप्रकाशः

तादृशेति। दलद्वयाक्रान्तेत्यर्थः। अलं समर्थः। विश्लेषस्य नियामकत्वकल्पनजगौरवादाह—यद्वेति। केवलत्वेन शुद्धसंयोगत्वेन। रामशब्दस्य राघवेऽभिधानियामकमिति

### मधुसूदनी

एव तर्हि किमुच्यते संश्लेषस्य अपेक्ष्यते इति। एकत्र वर्तमानस्य धर्मस्य अन्यत्राभावे आवश्यकतायां सत्यामपेक्ष्यते इति पदं प्रयुंक्ते लोकः। तस्माद् स्वनियतपूर्ववर्त्तिसंश्लेषवद् विश्लेषस्यापीति पाठः सुसंष्ठुलः। स्वपदार्थो विश्लेषः।

ननु संयोगपूर्वको विभाग इति सिद्धान्ताद् विभागे संयोगस्यापि अनुस्यूततया तेनैव कार्यनिर्वाहे किमिति द्वयोः पृथक् पृथङ् नियामकत्वमुच्यते, प्रत्युत तथाकरणे गौरवञ्चेति शंकामभ्युपगम्य क्रमश उत्तरं ब्रूते-यद्यपीति। अत्र विश्लेषे अंगतया गुणतया। किमिति द्वयोरिति शंकां समाधाय गौरवं परिहर्त्तुमाह—यद् वेति।

परस्परेति। परस्परापेक्षित्वम् अन्योन्यगतमन्योन्यस्यावश्यकतानुभवकर्त्तृत्वम्। एकस्मिन् कार्ये इत्यस्यार्थं स्फोरयितुमाह-अथ किमिदमिति। घटसाहचर्यस्यापि जलादिग्रहणे रामपदशक्तेर्नियामकताया आपत्तेः। घटसाहचर्यमपि रामपदशक्तिं नियमयिष्यतीति भावः।

### बालक्रीड़ा

किसी एक कार्य में परस्पर की अपेक्षा का नाम साहचर्य है। जैसे 'रामलक्ष्मणौ' यहां पर लक्ष्मण का साहचर्य राम रूप अर्थ में राम शब्द की अभिधा का नियामक है।

प्रश्न—यह परस्पर की अपेक्षा क्या है। क्या जिस किसी कार्य में परस्परापेक्षा है या सभी कार्यों में। अगर कहें कि जिस किसी कार्य में परस्परापेक्षा होनी चाहिये, तब तो घटादि की व्यावृत्ति नहीं होगी। क्योंकि घट की भी किसी न किसी कार्य में राम को अपेक्षा हो सकती है। अतः घट साहचर्य भी रामपद की शक्ति का नियामक हो सकता है। यदि कहें कि सभी कार्यों में परस्परापेक्षा होनी चाहिए। तब तो लक्ष्मण साहचर्य के भी निवारण करने की आपत्ति आ जायगी। अर्थात् सभी कार्यों में लक्ष्मण का साहचर्य नहीं हो सकता

हचर्यस्यापि निवारणापत्तेः। पक्षद्वयेऽपि रामायोध्ये रघुरामावित्यत्रानियमापत्तेश्च।

न च नानार्थपदसमभिव्याहृतपदान्तरार्थस्य प्रसिद्धः संबन्धस्तत्। स चैकजन्यत्वदांपत्यजन्यजनकभावस्वामिभृत्यभावस्वस्वामिभावादिरनेक-

## मर्मप्रकाशः

शेषः। निवारणेति। सर्वत्र तदभावादिति भावः। पक्षद्वयेऽपीति। कार्यमात्रे तयोस्तदभावात्। आद्येऽसंभवात्, अन्त्ये तदा रघोरसत्त्वादिति भावः। प्रसिद्ध इति।

## मधुसूदनी

निवारणेति। रामलक्ष्मणयोः सर्वेषु कार्येषु साहचर्यस्याभावात् लक्ष्मण साहचर्यस्यापि निवारणविषये नियमनविषये आपत्तेः। कार्यमात्रे तयोस्तदभावात् लक्ष्मणसाहचर्यमपि रामपदशक्ति निवारयिष्यति न वेति संदेह एव।

पक्षद्वयेपि यत्किंचित्कार्ये, सर्वेषु कार्येषु चेति परिग्रहद्वयेऽपि। पक्ष परिग्रहे इति धातुपाठः। रामश्चायोध्या चेति सहभावविवक्षायां वृत्तिर्द्वन्द्वैकशेषयोरिति नयात् रामायोध्ययोः सहभावः सहावस्थानं साहचर्यं बाल्ये आसीत् तथा राज्याभिषेकादुत्तरमान्तमपि। एवं यत्किंचित्कार्ये एव नतु सर्वेषु कार्येषु। लक्ष्मणस्यापि सर्वेषु कार्येषु सहभावो नासीदिति। रघुरामावित्यत्र सहभावोऽसंभवी इति युक्तं, रामसमये रघोरसत्वात्। अनियमापत्तेः नियामकताया अभावस्य आपत्तेः।

साहचर्यस्य लक्षणान्तरकरणेऽपि न संगतिरिति दर्शयितुमुपक्रमते-न चेति। नानार्थपदस्य समभिव्याहृतं समीपोच्चारितं यत्पदान्तरं तदर्थस्य नानार्थपदबोध्यार्थेन सह प्रसिद्धः सम्बन्धस्तत् साहचर्यम्। स च सम्बन्धः एकजन्यत्वादिरनेकविधो बहुविधः। एकजन्यत्वं सहोदरत्वम्। अविशिष्टतया समानतया। अयं भावः। निर्दिष्टेषु सम्बन्धेषु एकजन्यत्वस्वरूपः सम्बन्धः "रामलक्ष्मणौ" इत्यत्र यथा अस्ति

## बालक्रीड़ा

है अतः यही कहना पड़ेगा कि लक्ष्मण साहचर्य भी राम पद की शक्ति का नियामक नही हो सकता है। इस तरह राम पद की शक्ति के नियमन के विषय में लक्ष्मण साहचर्य को निवारण करना पड़ेगा। और भी एक आपत्ति हो जायगी कि दोनों पक्षों में भी "रामायोध्ये" और रघुरामौ इत्यादि स्थलों में नियमन नहीं होने की आपत्ति आ जायगी क्योंकि प्रथम उदाहरण में राम और अयोध्या का सभी कार्यों में परस्परापेक्षा होना असम्भव है और रघु और राम इस द्वितीय उदाहरण में राम के समय में रघु थे ही नही तब साहचर्य कैसा।

प्रश्न—नानार्थ पद के समीप में उच्चारित जो पदान्तर उसके अर्थ के साथ जिसका सम्बन्ध प्रसिद्ध हो उस प्रसिद्ध सम्बन्ध का नाम ही साहचर्य है। और वह सम्बन्ध एक व्यक्ति के यहां पैदा होना, अर्थात् सहोदरत्व, पतिपत्नीभाव (दाम्पत्य) जन्य जनक भाव,

विधः । तेन रामलक्ष्मणौ, सीतारामौ, रामहनूमन्तौ, रामायोध्ये, इत्यादौ साहचर्यं नियामकमिति वाच्यम् । लक्ष्मणादिसंबन्धापेक्षया चक्रादिसंबन्धस्याविशिष्टतया सशङ्खचक्र इत्यत्रापि साहचर्यस्यैव नियामकतापत्तेः ।

न च सशङ्खचक्र इत्यादौ यत्र संबन्धः संयोगरूपस्तत्राद्यस्य, यत्र च संबन्धान्तरं तत्र तृतीयस्यावकाश इति वाच्यम् । संयोगस्यैव पृथक्कारे बीजाभावात् ।

न च यत्र संयोगः शब्दोपात्तस्तत्र स एव नियामकः, यत्र तु संबन्धि-

## मर्मप्रकाश

नानार्थपदार्थे इति शेषः । तत्साहचर्यम् । उक्तसंबन्धानां क्रमेणोदाहरणान्याह—तेनेति । यत्र सशङ्खचक्र इत्यादावित्यन्वयः । आद्यस्य संयोगस्य । यत्र च रामलक्ष्मणावित्यादौ । संबन्धान्तरमेकजन्यत्वादिरूपम् । तृतीयस्य साहचर्यस्य । संबन्धिमात्रं शब्दोपात्तमित्यनुषज्यते ।

## मधुसूदनी

तथा सशंखचक्रो हरिरित्यत्रापि स्वस्वामिभावरूपस्य चक्रादिगतस्य सम्बन्धस्य समानतेति ।

संयोगस्यैवेति । त्वदुक्तरीत्या आद्यतृतीययोरवकाशः स्यात् किन्तु संयोगस्य पृथक्कारे एव बीजं नास्ति । तस्य तु अविशिष्टतयेति निर्देशानुसारं साहचर्येणैव गतार्थत्वं वर्तते ।

न च यत्र सशंखचक्र इत्यादौ । स एव संयोग एव । यत्र तु "रामलक्ष्मणौ" इत्यत्र तु । तदुदाहरणतायाः साहचर्योदाहरणतायाः । द्वन्द्वादिगत इति सहभाव-

## बालक्रीड़ा

स्वामिभृत्य भाव और स्वस्वामिभाव आदि अनेक प्रकार का है । इसका फल होगा कि "राम और लक्ष्मण, सीता और राम, राम और दशरथ, राम और हनुमान्, तथा राम और अयोध्या इत्यादि स्थलों में क्रमशः पूर्वोक्त सम्बन्धों के रहने से साहचर्य ही नियामक होगा ।

उत्तर—ऐसा नहीं कह सकते हैं क्योंकि जैसे राम के साथ लक्ष्मण का सहोदरत्व (एक जन्यत्व) सम्बन्ध प्रसिद्ध है वैसे शंख और चक्र का सम्बन्ध भी विष्णु के साथ प्रसिद्ध है अतः अविशिष्ट है समान है । इसका फल होगा कि सशंखचक्रो हरिः यहां पर भी साहचर्य ही अभिधा का नियामक होगा ।

यह भी नहीं कह सकते कि जहां सशंखचक्रो हरिः में संयोग रूप सम्बन्ध है वह संयोग का उदाहरण है । जहां और २ सम्बन्ध है वह साहचर्य का उदाहरण है, ठीक है; किन्तु संयोग को साहचर्य से पृथक् करने में कोई कारण नहीं है ।

यदि कहें कि जहां संयोग शब्द से संयोग कहा गया हो वहां संयोग ही नियामक है । जहां तो सम्बन्धियों को ही शब्द से कहा है और सम्बन्ध को कहने वाला कोई शब्द नहीं है

मात्रं न तु संबन्धस्तत्र साहचर्यम्, अत एव सशङ्खचक्र इति संयोगस्य, रामलक्ष्मणाविति च साहचर्यस्योदाहरणमिति वाच्यम्। सलक्ष्मणो रामो विलक्ष्मणो राम इत्यत्र संयोगविभागयोर्गुणयोरप्रतीत्या साहचर्योदाहरणतायां प्रसक्तायां सशङ्खचक्र इत्यादेरपि तदुदाहरणताया एवौचित्यादिति चेत्।

### मर्मप्रकाशः

मात्रपदव्यवच्छेद्यमाह—न त्विति। गुणयोरप्रतीत्येति। असंभवादिति भावः। किं तु

### मधुसूदनी

विवक्षायां वृत्तिद्वंद्वैकशेषयोरिति स्मृतेः। सम्बन्धिनोः सहभावः न तु सम्बन्धः शब्देन समासे द्वन्द्वाख्ये कथ्यते इति साहचर्यस्योदाहरणत्वमुचितमेव।

सलक्ष्मणो राम इत्यत्र लक्ष्मणसहितो राम इति साहित्यस्य लक्ष्मणविरहितो राम इति राहित्यस्य प्रतीतेः। तथा लक्ष्मणसंयुक्तो राम इत्येवं संयोगस्य, लक्ष्मण-वियुक्तो राम इत्येवं वियोगस्य च गुणस्याप्रतीत्या इत्याशयेनाह-गुणयोरप्रतीत्येति। तत्र विरोधितायाम्। आद्यस्य प्रसिद्धस्य वैरस्य। "रामार्जुनौ" इति प्राञ्चो वदन्ति काव्यप्रकाशकाराः कथयन्ति। इति पण्डितराजलेखः किमाधारः। तत्र रामार्जुन गतिस्तयोरिति लेखः। तयोः प्रस्तुततया अनुभवविषयीभूतयोः युध्यमानयोः का गतिरिति प्रश्ने तदुत्तरं रामार्जुनसदृशी गतिर्दशा। सा च दशा इतिहास प्रसिद्धा रामः परशुरामो घातकः अर्जुनः सहस्रबाहुः कार्त्तवीर्यो वध्यः। ज्ञातयोर्विषये प्रश्नोत्तरं रामार्जुनगतिस्तयोरिति कथनेन प्रश्नशान्तिः। अज्ञातविषयेतु प्रश्ने केन को हत इत्येवं पुनः प्रश्नः स्यादिति च बोध्यम्।

सति च "रामार्जुनौ" इत्येवंरूपेण उदाहरणनिर्देशे अप्पय्यदीक्षितमहाशयस्य तन्निराकरणमुचितमेव स्यात्।

### बालक्रीड़ा

वहां पर साहचर्य नियामक है। इसीलिए सशंखचक्र यह संयोग का उदाहरण है और रामलक्ष्मणौ यह साहचर्य का उदाहरण है। यह भी नहीं कह सकते हैं क्योंकि सलक्ष्मणो रामः विलक्ष्मणो रामः इन उदाहरणों में संयोग और विभाग रूप गुणों की प्रतीति नहीं होने से ये साहचर्य के उदाहरण हैं यही प्राप्त होता है।

यहां पर "गुण की प्रतीति नहीं होने से" कहने का भाव है कि जैसे दण्डी पुरुषः में दण्ड संयुक्त पुरुष इस रीति से संयोग गुण प्रतीत होता है और जैसे विभक्ता भ्रातरः में जिनके हिस्सों का विभाग हो गया है वे भाई; इस रीति से जैसे विभाग गुण प्रतीत होता है। उस रीति से उनमें संयोग एवं विभाग रूपी गुण प्रतीत नही होते हैं किन्तु सलक्ष्मणो रामः में लक्ष्मण के सहित राम, विलक्ष्मणो रामः में लक्ष्मण से पृथक् राम यह साहचर्य और साहचर्या भाव प्रतीत होता है। (पृथक्त्व गुण विभाग से अलग माना गया है)

इसलिए सशंखचक्रः इत्यादि की भी साहचर्योदाहरणता ही उचित है। इस आशंका

उच्यते—संयोगशब्दस्य संबन्धसामान्यपरतया यत्र शब्दोपात्तं प्रसिद्धं संबन्धसामान्यं शक्तिनियामकं तदाद्यस्य, यत्र तु द्वन्द्वादिगतः संबन्ध्येव केवलस्तथा तत्साहचर्यस्योदाहरणमिति प्राचामाशयात् । इत्थं च सगाण्डिवोऽर्जुनः इति संयोगस्य, गाण्डिवार्जुनाविति साहचर्यस्योदाहरणम्

विरोधिता प्रसिद्धं वैरम् , सहानवस्थानं च ॥

तत्राद्यस्य 'रामार्जुनौ' इत्युदाहरणं प्राञ्चो वदन्ति । यत्त्वप्पय्यदीक्षितो वृत्तिवार्तिके प्राचामुदाहरणं निराकुर्वन्नाह—'रामार्जुनपदयोर्वध्यघातकभाव-

**मर्मप्रकाशः**

साहित्यतदभावयोः प्रतीत्येति शेषः । आद्यस्य संयोगस्य । संबन्ध्येवेति । द्वन्द्वादिघटकः केवलः संबन्ध्येव तथा प्रसिद्धः शब्दोपात्त इत्यर्थः । भावेति । भावरूपविरोधादित्यर्थः । तत्परशुरामेत्यर्थः । तस्मिश्च सति कार्त्तवीर्येऽभिधानियमने सति । तत्कार्तवीर्येत्यर्थः । रामपदस्य

**बालक्रीड़ा**

पर कहते हैं कि संयोग शब्द सम्बन्ध सामान्य का वाचक है अतः संयोग शब्द से कथित सम्वन्ध जहां शक्ति का नियामक हो वह आद्य का संयोग का उदाहरण है और जहां तो द्वन्द्वादिगत केवल सम्बन्धी ही प्रतिपादित हो वह साहचर्य का उदाहरण है यह प्राचीनों का आशय है । यहां द्वन्द्वादि में आदि पद का अर्थ है एकशेष । इस प्रकार गाण्डीव के सहित अर्जुन यह संयोग का उदाहरण है क्योंकि सहित कहने से उन दोनों का सम्वन्ध ही प्रतीत होता है सम्बन्धी की प्रतीति नहीं होती है । और "गाण्डीवार्जुनौ" यह साहचर्य का उदाहरण है । क्योंकि यहां गाण्डीवश्च अर्जुनश्च इस तरह द्वन्द्व समास के द्वारा सम्बन्धी प्रतीत होते हैं ।

विरोधिता प्रसिद्ध वैर और साथ में नहीं रहना है । उनमें रामार्जुनौ को प्राचीन लोग प्रसिद्ध वैर का उदाहरण कहते हैं । प्राचीन प्रकाशकार ने "रामार्जुनगतिस्तयोः" यह उदाहरण लिखा है । "रामार्जुनौ" यह तो नहीं लिखा । अन्य किसी प्राचीन ने लिखा हो तो शायद लिखा हो । या उसी लेख का संकुचित रूप यह हो सकता है ।

जो तो अप्पय्य दीक्षित ने प्राचीनों के उदाहरण का निराकरण करते हुए कहा है कि वध्य घातक भाव रूप विरोध के बदौलत भार्गव और कार्तवीर्य अर्थों में राम और अर्जुन पद की अभिधा का नियमन होता है वह ठीक ही है । राम पद की अभिधा का नियमन होने पर अर्थात् प्रकृत में राम पद का अर्थ परशुराम है यह मालूम हो जाय और परशुराम के साथ किसका विरोध है इसका प्रतिसंधान हो तब उसके द्वारा अर्जुन पद की अभिधा का कार्त्तवीर्य अर्थ में नियमन हो सकता है । इसी तरह पहले कार्त्तवीर्य की अभिधा का नियमन हो जाय तब कार्त्तवीर्य के साथ किसका विरोध है इसके निश्चय (प्रतिसंधान) से राम पद की अभिधा का नियमन होय इस तरह एक दूसरे की अभिधा के नियमन के लिए एक दूसरे का आश्रय लेने वाली आपत्ति आ जायगी । इसलिए किसी एक पद के अर्थ की व्यवस्था होने पर ही स्मृतिपथारूढ़ हुए उस व्यक्ति के विरोध के प्रतिसन्धान (निश्चय)

विरोधाद्भार्गवकार्तवीर्ययोरभिधा नियम्यत इत्येतदयुक्तम् । रामपदस्याभिधानियमने सति तद्विरोधप्रतिसंधानेनार्जुनपदस्य कार्तवीर्येऽभिधानियमनम्, तस्मिंश्च सति तद्विरोधप्रतिसंधानेन रामपदस्येत्यन्योन्याश्रयापत्तेः । तस्मादन्यतरपदस्य व्यवस्थितार्थत्व एव स्मृततद्विरोधप्रतिसंधानान्नानार्थपदस्याभिधानियमनमिति रामरावणयोरित्युदाहरणं भवितुमर्हति' इति ।

तत्र तावद्रामरावणयोरिति व्यवस्थितार्थान्यतरपदकमुदाहरणं विरोधिताया नियामकत्वस्य न युक्तम् । रामलक्ष्मणयोरित्यत्रेवात्रापि साहचर्यस्यैव नियामकत्वात् । न च लक्ष्मणसाहचर्यं रामस्य प्रसिद्धम्, न तु रावणसाहचर्यमिति वाच्यम् । प्रसिद्धतत्संबन्धकस्यैव तत्साहचर्यपदार्थत्वात् । पितृभ्रातृजायापत्यभृत्यनगरीणां संबन्धस्येव रिपोः संबन्धस्यापि लोकप्रसिद्धत्वात् । एवं स्थितेऽपि विरोधितायाः पृथग्गणने मित्रत्वादेरपि तथागणनापत्तेः । तस्मात्प्राचीनोदाहरणमिव त्वदुक्तमुदाहरणमप्यशुद्धमेव ।

मर्मप्रकाशः

परशुरामेऽभिधानियमनमिति शषः । व्यवस्थितेति । निश्चितेत्यर्थः । नियामकत्वस्येत्यस्योदाहरणमित्यत्रान्वयः । एवं स्थितेपि साहचर्यस्य नियामकत्वसंभवेऽपि । तथा पृथक् । त्वदुक्त मप्यय्यदीक्षितोक्तम् । तत्सिद्धान्तं खण्डयति—

मधुसूदनी

अन्यतरपदस्य रामार्जुनपदयोर्मध्ये एकस्य कस्यापि पदस्य । तत्सम्बन्धकस्येति । प्रसिद्धः तेन नानार्थपदबोध्येनार्थेन सह सम्बन्धो यस्य नानार्थपदसमभिव्याहृतपदान्तरार्थस्य तस्य भावस्तत्वं तस्यैव । तादृशपदान्तरार्थसहचरत्वस्यैव तत्साहचर्यपदार्थत्वात् । एवं स्थितेऽपि अन्यसम्बन्धस्येव रिपुसम्बन्धस्यापि लोक-

बालक्रीड़ा

से नानार्थक पद की अभिधा का नियमन होता है फलतः "रामरावणयोः" यह उदाहरण हो सकता है ।

यहां पर किसी एक पद के अर्थ की व्यवस्था वाले "रामरावणयोः" इस उदाहरण में विरोधिता को नियामक कहना युक्त नहीं है । "रामलक्ष्मणयोः" की तरह "रामरावणयोः" में भी साहचर्य को ही नियामक कहना युक्त है । अगर कहें कि लक्ष्मण का साहचर्य तो राम के साथ प्रसिद्ध है रावण का साहचर्य तो प्रसिद्ध नहीं है तब भी ठीक नहीं है । क्योंकि उन व्यक्तियों के प्रसिद्ध संवन्ध का ही नाम उन व्यक्तियों का साहचर्य है । और भाई, लुगाई, अपत्य, भृत्य एवं नगरियों के सम्बन्ध की तरह दुश्मन का सम्बन्ध भी लोक प्रसिद्ध है । इस प्रकार "रामरावणयोः" साहचर्य का उदाहरण है यह व्यवस्थित होने पर भी विरोधिता

'अन्यतरपदस्य व्यवस्थितार्थत्व एव' इत्याद्यप्यसंगतमेव । हरिनागस्येत्यादावुभयोरव्यवस्थितार्थत्वेऽप्येकवद्भावाभिव्यक्तेन विरोधेन धर्मिविशेषाविशेषितेनापि युगपद्धर्मिविशेषद्वयेऽभिधाया नियन्तुं शक्यत्वात् ।

यदपि रामार्जुनगतिस्तयोरिति शब्दान्तरसंनिधेरुदाहरणम्' इति स

### मर्मप्रकाशः

अन्यतरेति । हरीति । येषां च विरोधः शाश्वतिकः' इति समाहारैकद्भावः । अत एवाह—एकवद्भावाभीति । स एवाप्पयदीक्षित एव ।

### मधुसूदनी

प्रसिद्धत्वात् साहचर्यपदार्थत्वेन संग्रहेऽपि । एकवद्भावेन अहिनकुलमित्यादिष्विव अभिव्यक्तेन । धर्मिविशेषस्य न संजातो विशेषो वैलक्षण्यं यत्र तेन । अर्थात् येन विरोधेन धर्मिविशेषकृतं वैलक्षण्यं न संजायते तादृशेनापि तेन । अयमाशयः । हरिनागस्य इत्यत्र हरिशब्दस्य १५ पञ्चदश, एवमेव नागशब्दस्य चतुर्दश अर्थाः ।

यमानिलार्कचन्द्रेन्द्रयमोपेन्द्र-मरीचिषु
सिंहाश्वकपिभेकाऽहिशुकलोकान्तरेषु च
हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः । इति विश्वात्
नागो मतङ्गजे सर्पे पुंनागे नागकेशरे
क्रूराचारे नागदन्ते मुस्तके. वारिदेऽपि च
देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः
नागं रंगे सीसपत्रे स्त्रीबन्धे करणान्तरे । इति हैमात् ।

एवं चेमौ हरिनागशब्दौ अव्यवस्थितार्थकौ । तत्र हरिश्च नागश्चेति सिंहमतंगजयोः शाश्वतिकविरोधात्, येषां च विरोधः शाश्वतिक इति सूत्रेण समाहारद्वन्द्वैकवद्भावात् हरिनागस्येति पदं साधु । परमत्र धर्मिविशेषयोः सिंहमतंगजयोः कोऽपि विशेषो व्यावर्त्तको धर्मो नहि निर्दिष्टः । एवमव्यवस्थितार्थकत्वेऽपीह अभिधाया नियमनादन्यतरपदस्य व्यवस्थितार्थत्व एव स्मृततद्विरोधप्रतिसंधानात् नानार्थकपदस्याभिधानियमनकथनमनुचितमेव ।

### बालक्रीड़ा

की पृथक् गणना करने की तरह मित्रता वगैरह की भी पृथक् गणना करने की आपत्ति लग जायगी इसलिए प्राचीन उदाहरण की तरह तुम्हारा कहा हुआ उदाहण भी अशुद्ध ही है ।

"अन्यतर पद के व्यवस्थितार्थता में ही" इत्यादि लेख भी असंगत है । क्योंकि "हरिनागस्य" उदाहरण में हरि पद एवं नागपद दोनों अव्यवस्थितार्थक ही हैं और दोनों धर्मियों में कोई विशेषता भी निर्दिष्ट नहीं है किन्तु येषां च विरोधः शाश्वतिकः इस सूत्र से विहित समाहारद्वन्द्वसमासीय एकवद्भाव से अभिव्यक्त विरोध से ही युगपत् दोनों धर्मियों में अभिधा का नियमन किया जा सकता है ।

और भी जो रामार्जुनगतिस्तयोः यह शब्दान्तर सन्निधिका उदारण है ऐसा उसी ने

एवाह । तदप्यसत् । त्वया निरूपिते शब्दान्तरसंनिधेरुदाहरणे 'निषधं पश्य भूभृतम्' 'नागो दानेन राजते,' इत्यत्र चाभिधाया नियतविषयतां विनान्वयस्यैवानुपपत्त्या, प्रकृते च रामार्जुनगतिस्तयोरित्यत्रार्थान्तरविषयत्वेऽप्यन्वयानुपपत्तेरभावान्महति वैलक्षण्ये शब्दान्तरसंनिध्युदाहरणत्वायोगात् ।

एवमपि काव्यप्रकाशगतस्य रामार्जुनगतिस्तयोरिति विरोधितोदाहरणस्यासंगतिः स्थितैवेति चेत् । न । तयोः कयोश्चित्प्रसिद्धविरोधयो रामार्जुनगती रामार्जुनसदृशी गतिराचरणमिति तदर्थवर्णने विरोधेन प्रस्तावविशा-

### मर्मप्रकाशः

भूभृतमित्यत्रेति । निषधपदसांन्निध्याद्भूभृत्पदस्य राज्ञि, दानपदसांनिध्यान्नागपदस्य गजेऽभिधानियमनम् । अर्थान्तरविषयत्वेऽपीति । रामार्जुनवत्पराक्रमशालित्वमित्याद्यर्थान्तरम् : एवमपि दीक्षितोक्तसांगत्येऽपि । स्थितैवेति । दीक्षितोद्भावितान्योन्याश्रयस्यानुद्धारादिति भावः । तदर्थेति ।

### मधुसूदनी

निषधं पश्य भूभृतमित्यत्र "निषधं कठिने देशे तद्राजे पर्वतान्तरे" इति विश्वमेदिनीभ्यां निषधपदस्य चत्वारोऽर्थाः । तथा भूभृद्भूमिधरे नृपे इत्यमरात् भूभृत्पदस्य द्वावर्थौ । अतो यावदभिधाया नियतविषयता न हि भवति तावत्कस्य पदस्य कोऽर्थो ग्राह्य इत्यन्वयानुपपत्तिर्जागर्त्ति । एवमेव नागपदस्याऽपि १४ पूर्वोक्ताः अर्थाः । ततश्च शब्दान्तरसंनिधेरुदाहरणताऽनयोः ।

असंगतिरिति । अन्योन्याश्रयरूपदोषादन्वयासंगतिः । शक्तिनियमेति ।

### बालक्रीड़ा

कहा है । वह भी ठीक नहीं है । तुम्हारे कहे हुए शब्दान्तर सन्निधि के उदाहरणों "निषधं पश्य भूभृतम्" "नागो दानेन राजते" में अभिधा की हस्ती और मदजल अर्थ की नियत विषयता के विना अर्थात् पर्वत एवं त्याग रूप अन्य अन्य अर्थों की उपस्थिति से अन्वय की ही अनुपपत्ति होती है अन्वय संगति नहीं होती है । किन्तु प्रकृत रामार्जुनगतिस्तयोः इसमें अन्य अर्थों की उपस्थिति होने पर भी अर्थात् अभिधा की नियत विषयता के विना भी अन्वय की अनुपपत्ति नहीं होती है इस तरह महान् वैलक्षण्य के रहते हुए इसमें शब्दान्तर सन्निद्धि के उदाहरण होने का कोई योग नहीं है । राम बलराम और अर्जुन पाण्डव की जैसी उनकी गति (दशा) हुई राम अपने भाई कृष्ण के और अर्जुन अपने भाई भीम के अनुरोध से अलग २ हो गये । भीम और दुर्योधन के युद्ध के समय दोनों नहीं रहे ।

प्रश्न—अपप्यदीक्षित का कथन असंगत होने पर भी काव्य प्रकाश के "रामार्जुनगतिस्तयोः" इस विरोधिता के उदाहरण की असंगति तो नहीं हटी वह तो स्थित ही है ।

उत्तर । नहीं, असंगति नहीं है । उन किसी प्रसिद्ध विरोध वाले व्यक्तियों की रामा-

त्प्रतीतेन युगपद्भार्गवकार्तवीर्ययो रामार्जुनशब्दाभिधाया नियमनस्योपपत्तेः। न च प्रकरणादविशेषः। विरोधस्य प्रक्रान्तत्वेऽपि भार्गवकार्तवीर्ययोः शक्तिनियमाधिकरणयोरप्रकान्तत्वात्। सहानवस्थानलक्षणा विरोधिता तु छायातपावित्यादौ बोध्या।

अर्थः प्रयोजनं चतुर्थ्याद्यभिधेयम् ॥

यथा—'स्थाणुं भज भवच्छिदे' इत्यादौ भवच्छेदनादि स्थाणुपदस्य भवे। नन्वर्थस्य लिङ्गात्को भेदः। न च लिङ्गमनन्यसाधारणस्तद्धर्मः, अर्थस्तु

### मर्मप्रकाशः

उदाहरणार्थेत्यर्थः। प्रस्तावः प्रकरणम्। युगपदिति। तथा च नान्योन्याश्रयः इति भावः। नियमाधीति। तन्नियमाश्रयस्य प्रक्रान्तत्वे एव प्रकरणस्य नियामकत्वमिति भावः। द्वितीयविरोधितोदाहरणमाह—सहेति। आदिना तुमनादिपरिग्रहः। प्रयोजनमिति शेषः। भवे अभिधानियामकमिति शेषः। अत्र तच्छब्दाः शिवपराः।

### मधुसूदनी

शक्तिनियमस्य अधिकरणयो आधारभूतयोर्भार्गवकार्त्तवीर्ययोरित्यन्वयः। चतुर्थ्यादीति। अत्र आदिपदेन तुमुन् सन् प्रत्ययौ, इच्छार्थकः शब्दश्च। तद्धर्मः इति, तद्ध-

### बालक्रीड़ा

र्जुनं गति अर्थात् राम और अर्जुन के सदृश गति आचरण है ऐसे अर्थ के वर्णन करने पर और प्रसंग वश से प्रतीत विरोध के द्वारा युगपत् भार्गव और कार्त्तवीर्य अर्थ में राम और अर्जुन शब्द की अविधा के नियमन की संगति हो सकती है।

शंका। ऐसा होने पर तो यह प्रकरण से भिन्न नहीं है अर्थात् यह प्रकरण का ही उदाहरण है। उत्तर। विरोध के प्रक्रान्त होने पर भी अभिधा शक्ति के नियमन के आधार भूत भार्गव और कार्त्तवीर्य तो प्रक्रान्त नहीं थे। सहानवस्था लक्षण विरोधिता को "छायातपौ" इत्यादि में जानना चाहिए।

अर्थ माने प्रयोजन जो चतुर्थी विभक्ति और आदि पद से संगृहीत तुमुन् और सन् प्रत्यय का अमिधेय वाच्य अर्थ। जैसे संसार के छेदन के लिए शिव का भजन करो इत्यादि उदाहरणों में संसार छेदन रूप प्रयोजन, स्थाणु पद की अमिधा का शिव रूप अर्थ में नियमन करता है।

शंका—अर्थ का लिंग से क्या भेद है। यह भी नहीं कह सकते कि अनन्य साधारण धर्म का नाम लिंग है और नियामक भूत अर्थ शिव भजन का कार्य है फल है। शिव का धर्म नहीं है अतः स्फुट ही भेद है। क्योंकि भवच्छेद ही प्रयोजन है जिसका ऐसे भजन के लिए अत्यन्त ईप्सित शिव ही हो सकते हैं काष्ठ तो स्वप्न में भी संभव नहीं है फलतः

तद्भजनादेः कार्यम्, न तु तद्गतो धर्म इति स्फुट एव भेद इति वाच्यम्। भवच्छेदप्रयोजनकभजनकर्मत्वस्य काष्ठावृत्तिभवधर्मत्वादिति चेत्। अत्राहुः— उक्तस्य विशिष्टधर्मस्य शाब्दबोधोत्तरभाविमानसबोधविषयत्वेन प्रकृतशाब्द-बोधाविषयत्वाल्लिङ्गतो वैलक्षण्योपपत्तिरिति।

लिङ्गं त्वेकपदार्थः कोपादिः, अनन्वित एव यः पदार्थान्तरेण प्रकृत-शक्यधर्मतां शक्यान्तरव्यावृत्ततां च भजते। उक्तधर्मस्तु न तथेत्यपि केचित्।

### मर्मप्रकाशः

काष्ठावृत्तीत्यनेनानन्यसाधारणत्वं सूचितम्। उक्तस्य भवच्छेदप्रयोजनकभजनकर्मत्वस्य। शाब्देति। भवच्छेदफलकचैत्राभिन्नकर्तृकस्थाणुकर्मकभजनमित्यस्यैव शाब्दबोधत्वादिति भावः। प्राचीनाशयसूचकं मतान्तरमाह—लिङ्गं त्विति। एकपदार्थ इत्यस्य विवरणं पदार्थान्तरेणा-नन्वित एवेति। एवं चासमस्ताखण्डैकपदार्थो लिङ्गमिति फलितम्। भवच्छेदनादिकं च भजनादि-रूपभिन्नपदार्थान्वितमेव भवधर्म इति भावः। कोपादिरिति। कुपितो मकरध्वज इत्यादौ। उक्तेति। भवच्छेदजनकभजनकर्मत्वरूपस्तु भजनादिरूपभिन्नपदार्थान्वित एव भवधर्मो नान-

### मधुसूदनी

जनादेरिति, तद्गत इत्यत्र च तच्छब्दाः शिवरूपार्थपराः। भवस्य संसारस्य च्छेद एव प्रयोजनमस्य, तद्भजनं व्यापारस्तस्य कर्मत्वं कर्तृवृत्तिव्यापारजन्यफलाश्रयः कर्मेति रीत्या भजनजन्यफलाश्रयत्वं काष्ठे इन्धने अवृत्तिः, किन्तु शिवे वृत्तिर्धर्मः। तत्वात् अनन्यसाधारणता। तथा च लिंगोदाहरणता प्रसक्तेति। उक्तस्य विशिष्टधर्मस्य भवच्छेदप्रयोजनकभजनकर्मत्वस्य। शाब्दबोधादुत्तरं भावी यो मानसो बोधः शिव-भजनेन संसारोच्छेदो भावीति रूपस्तस्य विषयत्वेन प्रकृतस्य शाब्दबोधस्य भवच्छेदो-द्देश्यकं स्थाणुकर्मकं भजनमित्याकारस्य अविषयत्वात्। उक्तधर्मस्तु भवच्छेदनादिकं तु भजनादिरूपपदार्थान्तरेण संगतं सदेव शिवधर्म इति तथा न, एकपदार्थरूपं लिङ्गं भावः।

### बालक्रीड़ा

ईप्सिततमत्व रूप कर्मत्व काष्ठ का धर्म नहीं होकर शिव का ही धर्म है अतः स्थाणुं भज भवच्छिदे यह अनन्य साधारण धर्म रूप लिंग का उदाहरण हो गया।

उत्तर—यहां पर कहते हैं कि भवच्छेद प्रयोजनकभजन कर्मत्व रूप उक्त विशिष्ट धर्म मानस बोध का विषय होता है वह भी शाब्दबोध के बाद। अतः प्रकृत शाब्दबोध के विषय नहीं होने से लिंग से विलक्षणता की उपपत्ति हो गई। कोई कहते हैं कि लिंग एक पद का अर्थ है जैसे—कोप; जो कि दूसरे पद से अन्वय नहीं करता हुआ ही प्रकृत शक्य अर्थ का धर्म बन जाता है और दूसरे शक्य का धर्म नहीं होता है। किन्तु उक्त धर्म का ऐसा समन्वय नहीं

प्रकरणं वक्तृश्रोतृबुद्धिस्थता ॥

यथा—राजानं संबोध्य केनचिद् भृत्येनोक्ते 'सर्व जानाति देव-' इति वाक्ये देवपदस्य युष्मदर्थे ।

लिङ्गं नानार्थपदशक्यान्तरावृत्तिरेकशक्यगतः साक्षाच्छब्दवेद्यो धर्मः ॥

यथा—'कुपितो मकरध्वजः' इत्यत्र कोपो मकरध्वजपदस्य ।

शब्दस्यान्यस्य संनिधिर्नानार्थपदैकार्थमात्रसंसर्ग्यर्थान्तरवाचकपदसमभिव्याहारः ॥

### मर्मप्रकाशः

न्वित इत्यर्थः । अत्रारुचिः स्फुटीभविष्यत्यनुपदमेव । युष्मदर्थे । शक्तिनियमनमितिः शेषः

### मधुसूदनी

प्रकरणमिति । वक्ता ज्ञात्वा ब्रूते, श्रोताऽपि तज् जानाति यद् एवमयं मां व्यवहरतीति वक्तृश्रोतृज्ञानविषयत्वं प्रकरणम् । नानार्थपदस्य शक्यान्तरेषु अन्येषु अर्थेषु अवृत्तिः, अथ च एकस्मिन् नियते शक्येऽर्थे गतः शब्देन साक्षाद् वेद्यो धर्मो लिङ्गम् । मकराकारो ध्वजो यस्य स कामः । मकर एव धर्मो यस्य स समुद्रः । एवं कामसमुद्ररूपनानार्थकपदस्य शक्यान्तरे समुद्रे अवृत्तिः । एकस्मिन् शक्ये कामे वृत्तिः कुपितशब्देन साक्षाद् वेद्यो धर्मः कोपो मकरध्वजपदस्य कामरूपेऽर्थेऽभिधां नियमयति ।

शब्दस्येति । नानार्थपदस्य एकेन अर्थेन संसर्गं कुरुते यदर्थान्तरं, तद्वाचकपदस्य समभिव्याहारः समीपोच्चारणं स अन्यस्य शब्दस्य सन्निधिः ।

### बालक्रीड़ा

है क्योंकि वह भजन रूप भिन्न पदार्थ से अन्वित होकर ही शिव धर्म है फलतः अर्थ से लिंग भिन्न ही है ।

प्रकरण उसे कहते हैं जो वक्ता एवं श्रोता की बुद्धि का विषय हो। जैसे राजा को सम्बोधन करके किसी भृत्य ने कहा कि देव सब जानते हैं। इस वाक्य में प्रकरण के द्वारा देव पद की अमिधा युष्मदर्थ में नियन्त्रित हो गई।

नानार्थक पद के अन्य अर्थ में जो नहीं रहता हो और प्रकृत शक्य में रहता हो ऐसे साक्षात् शब्द से वेद्य धर्म का नाम लिंग है। जैसे कुपितो मकरध्वजः यहां पर कोप, मकरध्वज की अभिधा का काम अर्थ में नियमन करता है।

नानार्थक पद के एकही अर्थ से केवल संसर्ग रखने वाले अर्थान्तर के वाचक पद का समभिव्याहार का नाम अन्य शब्द की सन्निधि है। जैसे—कर से नाग सुशोभित हो रहा है। यहां नाग पद की सन्निधि कर पद की अभिधा को सूंड अर्थ में नियन्त्रित कर देता है और कर पद की सन्निधि नाग पद की अभिधा को हाथी अर्थ में नियन्त्रित कर देता है। यहां एक पद की शक्ति का नियमन अपर शब्द की शक्ति के नियमन की अपेक्षा नहीं कर

यथा—'करेण राजते नागः' इत्यत्र करपदस्य नागपदमादाय, नागपदस्य च करपदमादाय शुण्डायां गजे च। न चात्रैकशब्दशक्तिनियमनमपरशब्दशक्तिनियमोऽपेक्षते, येनान्योन्याश्रयः स्यात्। किं तु करनागशब्दयोरर्थान्तरग्रहणेऽन्वयानुपपत्त्या युगपदेव शक्तिर्नियम्यते।

देवस्य पुरारातेरिति प्राचामुदाहरणे सुरत्वभूपत्वाभ्यां देवपदान्नगरारित्वासुरविशेषारित्वाभ्यां पुरारातिपदाच्चोपस्थितेरुभयोरपि नानार्थत्वादर्थान्तरस्वीकारेऽप्यन्वयोपपत्तेश्च कथं शक्तेर्नियमः स्यात्। न च पुरारातिपदं योगरूढम्। तथा च रूढेर्योगापहारितया शिवत्वेनैव तस्य बोधकत्वाद्देवपदशक्तिनियामकतेति वाच्यम्। पुरारातिपदस्य रूढौ मानाभावात्।

अथ 'देवस्य त्रिपुरारातेः' इति पाठस्तथापि पदान्तरोपस्थापितस्य

### मर्मप्रकाशः

एवमग्रे सर्वत्र। न चेति। नहीत्यर्थः। अर्थान्तरेति। हस्तसर्पेत्यर्थः। प्राचोक्तं खण्डयति—देवस्येत्यादि। वदन्तीत्यन्तेन। अर्थान्तरेति। भूपनगरारिरूपेत्यर्थः। तस्य पुरारातिपदस्य। देवेति। पुरेत्यादिः। पदान्तरेति। त्रिपुरारातेरित्यर्थः। तस्य

### मधुसूदनी

करपदस्य अभिधाया नियमनं नागपदमादाय भवति इत्यन्वयः एवमग्रेऽपि। अपरशब्दशक्तिनियम एकशब्दशक्तिनियमनमपेक्षत इत्यन्वयः। अर्थान्तरग्रहणे प्रकृतापेक्षया भिन्नार्थग्रणे अर्थात् नियतविषयतां विना। अर्थान्तरस्वीकारेऽपि सुररूपात् असुराररिूपात् प्रकृतादपेक्षया भिन्नस्यार्थस्य भूपनगरारिरूपस्य ग्रहणेऽपि।

पदान्तरेण पुरारातिपदापेक्षया भिन्नेन त्रिपुरारातिपदेन उपस्थापितस्य।

### बालक्रीड़ा

सकता है जिससे अन्योन्याश्रय दोष की सम्भावना की जा सके। किन्तु कर एवं नाग पद के अन्य अर्थों के ग्रहण करने पर अन्वय की संगति नहीं होगी अतः युगपत् ही शक्ति का नियमन हो जाता है।

"पुराराति देव की" इस प्राचीनों के उदाहरण में देव पद से सुरत्व और भूपत्व की और पुराराति पद से नगरशत्रुत्व और असुरविशेषत्व की उपस्थिति होती है। दोनों पद नानार्थक हैं और उनमें अर्थान्तर की स्वीकृति मानने पर भी अन्वय की उपपत्ति हो जाती है तब कैसे शक्ति का नियमन होगा।

प्रश्न—पुराराति पद योग रूढ़ है और योग रूढ़ में रूढ़ि योग का अपहरण करती है अतः शिव बोधक पुराराति पद अपनी सन्निधि में देव पद की शक्ति का नियामक हो सकता है। उत्तर। पुराराति पद के योग रूढ़ होने में प्रमाण नहीं हैं।

अगर कहें कि यहां "देव त्रिपुराराति की" यह पाठ है। तब भी पदान्तर से

त्रिपुरासुरवैरित्वस्य लिङ्गतया लिङ्गोदाहरणत्वमेवास्य स्यात्। न तु शब्दान्तरसंनिध्युदाहरणत्वमिति वदन्ति। तत्रैकपदार्थः कोपादिः पदार्थान्तरेणानन्वित एव यः प्रकृतशक्यधर्मताम्, शक्यान्तरव्यावृत्ततां च भजते स लिङ्गपदेनात्रोक्त इति प्राचामाशये तु नोक्त दोषः।

यत्तु 'शब्दस्याव्यभिचरितस्य संनिधिः सामानाधिकरण्यम्' इति काव्यप्रकाशटीकाकारैरुक्तम्। 'तत्तु करेण राजते नागः' इत्यादावव्यापना-

### मर्मप्रकाशः

देवस्य त्रिपुराराते रित्यस्य। वदन्तीति सूचितामरुचिमाह—तत्रेति। 'देवस्य त्रिपुरारातेः इति पाठे इत्यर्थः। प्रकृते च वैरित्वं त्रिपुरासुरान्वितमेव शक्यान्तरव्यावृत्तमतो न दोष इति भावः। वस्तुतस्तु त्रिपुराराातिपदस्य योगरूढत्वेन रूढ्यर्थान्वितत्रिपुरासुरवैरित्वस्य तत्पीड्यमानभूभृत्स्वपि सत्त्वेन शक्यान्तरव्यावृत्तत्वाभावाच्च। एवं चैकपदार्थ इत्यस्य यथाश्रुतत्वमेवास्त्विति बोध्यम्। नोक्तदोष इति। शब्दान्तरसंनिध्युदाहरणत्वाभावरूपदोषो नेत्यर्थः।

### मधुसूदनी

लिंगतयेति। अयमाशयः। नानार्थपदं देवपदं तस्य शक्यान्तरे राजरूपेऽर्थे अवृत्तित्वात्, एकस्मिन् शक्ये शिवे वृत्तित्वात् त्रिपुरासुरवैरित्वं लिङ्गम्। प्राचामाशयेत्विति। अयं भावः। लिङ्गत्वेन तस्यैव ग्रहणं यः एकस्य पदस्य अर्थः सन् पदार्थान्तरेणानन्वित एवेत्यादिलक्षणको भवेत्। एवं च त्रिपुरासुरवैरित्वं न एकस्य पदस्यार्थः किन्तु त्रिशब्दपुरशब्दारातिशब्दानामनेकेषामर्थोऽतो न लिङ्गम्। तथा च उक्तदोषो "देवस्य त्रिपुरारातेः" इति वाक्ये शब्दान्तरसन्निध्युदाहरणत्वाभावरूपो नास्तीति।

अव्यभिचरितस्य नियतार्थकस्य। अव्यापनात् करनागशब्दयोः व्यभिचरितत्वात् अनेकार्थकतया लक्ष्ये एव शब्दान्तरसन्निध्युदाहरणे एवागमनात्। ननु

### बालक्रीड़ा

उपस्थापित त्रिपुरासुरवैरित्व लिंग हो गया; इसलिए लिंग का यह उदाहरण हुआ, न कि शब्दान्तर सन्निधि का उदाहरण। जहां यह कहा जाता है वहां प्राचीनों का आशय यह है कि जैसे एक पद का अर्थ जो पदार्थान्तर से अनन्वित हुआ ही प्रकृत शक्य का धर्म हो और शब्दान्तर से व्यावृत्त भी हो वही यहां लिंग पद से कहा गया है। तब उक्त दोष नहीं है अर्थात् शब्दान्तर सन्निधि का उदाहरण न होने का दोष नहीं है। क्योंकि वैरित्व रूप अर्थ, त्रिपुरासुर से अन्वित होकर ही प्रकृत शक्य शिव रूप सुर का धर्म है शक्यान्तर भूप से व्यावृत्त भी है अतः लिंग का उदाहरण नहीं है। शब्दान्तर सन्निधि का ही उदाहरण है।

जो तो "अव्यभिचरित (अर्थात् अर्थान्तर के अप्रत्यायक) शब्द की सन्निधि माने सामानाधिकरण्य" ऐसी व्याख्या काव्य प्रकाश के टीकाकारों ने की है। वह व्याख्या ठीक नहीं

त्तन्नियामकान्तरस्य गवेषणे गौरवात्, 'कुपितो मकरध्वजः इति तन्मूलोक्ते लिङ्गोदाहरणेऽतिव्यापनाच्चोपेक्ष्यम् ।

सामर्थ्यं कारणता ॥

यथा—'मधुना मत्तः कोकिलः' इत्यत्र कोकिलमदजनकता मधुशब्दस्य वसन्ते । अत्र कोकिलमादने मधोरेव शक्तिर्न तु मधुनः । मादकत्वं मधुन्यपीति न लिङ्गमिति वदन्ति । तत्र सामर्थ्यं लिङ्गान्तर्गतमेव कुतो न

## मर्मप्रकाश

अव्यभिचरितस्यार्थान्तराप्रत्यायकस्य । गवेषणेऽन्वेषणे । तन्मूलोक्ते प्रकाशकारोक्ते । मधुनो मद्यस्य । वदन्तीतिसूचितामरुचिमाह—तत्रेति । मधुनेत्युदाहरणविषयभूतमित्यर्थः । मादने करणे ल्युट् । वाचकतेति । शक्तीत्यर्थः । असाधारणत्वाभावादिति भावः । इष्टापत्तावाह

## मधुसूदनी

प्रकरणादिना नियमेन अव्यभिचारात् लक्षणस्य व्यापनमेव नाव्याप्तिरिति चेदाह—गवेषण इति । अन्येषां नियामकानां गवेषणमन्तरा नानायासेन लाभः । गवेषणे च गौरवं स्यादित्यर्थः ।

कामस्य देवविशेषरूपतया चेतनत्वात् कोपोऽव्यभिचरितः । एवं हि तन्मूलोक्ते काव्यप्रकाशटीकाकारादर्शभूताश्रयोक्ते उदाहरण अतिव्याप्तेः अलक्ष्ये वर्तमानत्वात् ।

सामर्थ्यं कारणता करणता वा । वदन्तीति वदतामिदं हृदयम् । मदस्य करणं मदिरा, आसवादिकं, यौवनम्, (अनासवाख्यं करणं मदस्येति प्रसिद्धेः ।) विद्या,

## बालक्रीड़ा

है । क्योंकि कर से नाग शोभित होता है इस उदाहरण में उस व्याख्या की अव्याप्ति है । यहां कर शब्द (बलिहस्तांशवः कराः इस कोश के अनुसार) अर्थान्तर का भी प्रत्यायक है । इसी तरह नाग शब्द भी १४ अर्थों का प्रत्यायक है । यदि कहें कि कर माने सूंड से शोभा हाथी की ही होती है और किसी की नहीं तब अव्याप्ति नहीं है । किन्तु ऐसे नियामकान्तर की गवेषणा करने में गौरव हो जायगा ।

और मकरध्वज कुपित है इस मूलकार के कहे हुए लिंग के उदाहरण में उक्त व्याख्या की अतिव्याप्ति हो जायगी । क्योंकि यहां कोप पदार्थ किसी दूसरे अर्थ का प्रत्यायक नहीं है । अतः अव्यभिचरित शब्द की सन्निधि हो गई इसलिए इस व्याख्या की उपेक्षा करनी चाहिए ।

सामार्थ्य कारणता है । कारणता को यहां करणता रूप ही समझना चाहिए । मधु से कोकिल मत्त है यहां पर कोकिल के मद की जनकता वसन्त में ही है अतः वह मदजनकता मधु शब्द के अभिधा की नियामिका है । यहां कोकिल को मत्त करने में मधु वसन्त की ही शक्ति है न कि मधु माने मदिरा की । साधारणतया मादकत्व मदिरा में है इसलिए

स्यात्, इति शङ्कायाः कथमेतदुत्तरं संगच्छते। न च मादनसामर्थ्यस्य सुरावृत्तितया नासाधारणधर्मतारूपं लिङ्गत्वमिति वाच्यम्। मादनसामर्थ्यस्य सुरावृत्तित्वेऽपि कोकिलमादनसामर्थ्यस्य वसन्तासाधारणतया लिङ्गस्य दुर्वार-

## मधुसूदनी

अभिजनः (जन्भूमिः कुलञ्च) रूपं, सौन्दर्यम्, इत्यादि बहु वस्तु। परं कस्य किं मदकरणमिति विचारे वीतरागाणां साधूनां किमपि तथा नास्ति। असाधूनां खलानां तु सर्वं तथा। परं तिरश्चां पशुपक्षिणामपि किमपि मदकरणं भवति। तत्र मधुर्वसन्तः कोकिलस्य भ्रमरस्य च कृते तथा भवति। अत एव केनचित्कविना व्याहृतमपि।

काकः कृष्णः पिकः कृष्णः को भेदो पिककाकयोः।
प्राप्ते वसन्तसमये काकः काकः पिकः पिकः। इति।

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः। रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः। अत्र अलीनामपि मदजनकत्वं वसन्तेऽस्ति। इति च प्रत्यपादि। तस्मिन् समये क्रमशः स उद्रिक्तः सन् बहु रौति गुञ्जति च तत्सर्वसाक्षिकमिति कृत्वा सर्वैराचार्यैः मधुना मत्तः कोकिल इति सामर्थ्ये उदाहृतम्। किं वसन्तः यूनां युवतीनां वा मदकरणं नहि भवति। परं तथा प्रसिद्धिः कोकिलविषय एव। अत उक्तं कोकिलमादने मधोरेव; न तु मधुनः मद्यस्य मदिरेति प्रसिद्धस्य। नन्वेवं मधु पुष्परसे क्षौद्रे मद्ये, ना तु मधुद्रुमे। वसन्ते दैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति। इति मेदिनीकोषात् नानार्थपदं मधु, तस्य शक्यान्तरे मदिरायामवृत्तिः एकस्मिन् शक्ये वसन्ते वृत्तिः धर्मः कोकिलमादकत्वमित्येवं लिंगलक्षणस्य प्रकृते उदाहरणे समन्वयाल्लिंगोदाहरणता आयातेति चेदाह—मादकत्वं मधुन्यपीति। मादकत्वधर्मस्य नानार्थकमधुपदस्य शक्यान्तरे मद्ये अवृत्तिर्न, तत्रापि तद् वर्त्तते, वसन्तेऽपि वर्त्तेऽतो लिंगं न लिंगोदाहणं नास्ति; अर्थान्तरे नियमेन अवृत्तेः अर्थात् सर्वथा अवृत्तेरेव लिंगत्वं भवतीति भवताऽपि अवादि संयोगनिरूपणावसरे "शक्यान्तरे नियमेनावृत्तेरेव प्रकृते लिंगत्वादिति"। एवं हि सामर्थ्यं लिंगान्तर्गतं कुतो नेत्यारभ्य प्रसिद्धयाश्रये लिंगत्वमप्रच्युतमित्यन्तोक्तिः समाहिता।

## बालक्रीड़ा

लिंग नहीं है ऐसा कहते हैं। वहां प्रष्टव्य है कि सामर्थ्य को लिंग के अन्तर्गत क्यों नहीं मान लिया जाय इस शंका का यह उत्तर कैसे संगत होता है।

यदि कहें कि मादन सामर्थ्य मदिरा में है किन्तु मदिरा में असाधारण धर्म रूपता नहीं है अतः लिंग नहीं है। तब भी ठीक नहीं है क्योंकि मदिरा में मादन सामर्थ्य है किन्तु कोकिल मादन सामर्थ्य तो वसन्त में ही है अतः यह असाधारणता लिंग की दुर्वार है सारांश कि असाधारणता रूप लिंगत्व धर्म वसन्त में हैं इसलिए सामर्थ्य लिंगान्तर्गत ही है।

त्वात् । न च प्राणिमात्रमादनसामर्थ्यस्य मधुनः कोकिलमादनसामर्थ्यमप्यस्तीति वाच्यम् । एवं सति सामर्थ्यस्य वाचकतानियामकत्वमसंगतं स्यात् । न तु मधुन इति स्वोक्तिविरोधश्च भवेत् । प्रसिद्ध्याश्रये पुनर्लिङ्गत्वमप्रच्युतम् । शाब्दत्वाशाब्दत्वाभ्यामेकानेकपदार्थत्वाभ्यां वा विशेषस्तु स्यात् ।

औचिती योग्यता ।।

मर्मप्रकाशः

नन्विति । अप्रच्युतमिति । कोकिलमादनसामर्थ्यस्य वसन्त एव प्रसिद्धेरिति भावः । शाब्दत्वाशाब्दत्वाभ्यामिति । मधुकरणकमदाश्रयः कोकिल इति हि तत्र बोधः शाब्दः । कुपितो मकरध्वज इत्यत्र तु कोपाश्रयाभिन्नः इत्येव तथेति भावः । एवं भेदस्य प्रागनुक्तत्वात्तत्रापि कोपसाधनोल्लेखस्य सुवचत्वाच्चाह—एकानेकेति । आक्षिप्तेति ।

मधुसूदनी

शाब्दत्वेति । सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते इत्युक्तेः शब्दनिष्ठसामर्थ्यस्य लिंगत्वान्नोदाहरणता ।

अशाब्दत्वेति । अर्थनिष्ठं तद् यथा मधुना मत्तः कोकिल इति । अत्र वसन्तरूपार्थसामर्थ्यात् कोकिलमदजनकता प्रतीयते ।

बालक्रीड़ा

यदि कहें कि प्राणिमात्र को मत्त करने में समर्थ मदिरा में कोकिल को मत्त करने की भी सामर्थ्य है ही । तब भी ठीक नहीं क्योंकि ऐसा होने पर अर्थात् साधारणता मान लेने पर सामर्थ्य में वाचकता माने शक्ति का नियामकत्व ही असंगत हो जायगा । और जब मदिरा में भी कोकिल मादन सामर्थ्य मान लिया तब मदिरा में कोकिल मादन सामर्थ्य नहीं है ऐसी अपनी उक्ति का भी विरोध होगा । यदि प्रसिद्धि का आश्रय करते हैं तब तो लिंगत्व अप्रच्युत ही है सिद्ध ही है । हां सामर्थ्य शाब्द है क्योंकि मधु करणक मद का आश्रय कोकिल है । इस तरह का बोध यहां है । और लिंग अशाब्द है अर्थात् आर्थ है । क्योंकि कोपाश्रयाभिन्न मकरध्वज है इस तरह का बोध यहां होता है । यहां का भाव यह है कि मद धर्म है कोकिल धर्मी है । धर्मधर्मी में आश्रयत्व सम्बन्ध से अन्वय हुआ है । "कुपित" पद का अर्थ है कोपाश्रय । फिर उसका अभेद सम्बन्ध से अन्वय हुआ है । सारांश कोप का आर्थ अन्वय हुआ है । दूसरा हेतु है कि सामर्थ्य अनेक पदार्थ है जैसे मद करणता और लिंग एक पदार्थ है जैसे कोप । ऐसी विलक्षणता दोनों में हो सकती है ।

योग्यता पदार्थ ही औचिती है । उच् समवाये धातु से क्त करने पर उचित बना । उचितस्य भावः कर्म वा इस अर्थ में ष्यञ् प्रत्यय, षिद्गौरादिभ्य से ङीष् और हलस्तद्धितस्य से य का लोप तब औचिती बना । सामञ्जस्य, औचित्य, योग्यता इसके पर्याय है । उदाहरण दयिता का मुख तुम लोगों की रक्षा करे । यहां रक्षण क्रिया का कर्त्ता मुख है अतः दयिता मुख कर्तृक रक्षण कहा । और रक्षण क्रिया जन्य फलाश्रयत्व रूप कर्मत्व के आश्रित कामार्त

यथा—'पातु वो दयितामुखम्' इत्यत्र दयितामुखकर्तृकरक्षणकर्मत्वाक्षिप्तकामार्तानां संबोध्यपुरुषाणां त्राणं हि तस्याः सांमुख्येनैव भवति। न तु मुखमात्रेण। वैमुख्ये तेन त्राणायोगात्। अतस्त्राणार्हत्वं वदनसांमुख्योभयप्रत्यायकस्य मुखशब्दस्य।

देशो नगरादिः॥

यथा—'भात्यत्र परमेश्वरः' इत्यादौ परमेश्वरादिशब्दस्य राजादौ। तस्य नगरादिसंबन्धतदभावयोः संभवेनाभावव्यावृत्त्यर्थमधिकरणकीर्तनस्य सार्थक्यात्। परमात्मनस्तु सर्वगस्य व्यावर्त्याभावात्तदुक्तिवैयर्थ्यापत्तेः। एवं 'वैकुण्ठे हरिर्वसति' इत्यत्रापि बोध्यम्। एकत्रार्थान्तरोपग्रहेऽधिकर-

### मर्मप्रकाशः

विशेषरूपेण क्षिप्तेत्यर्थः। सांमुख्येन संमुखत्वेन। तेन मुखेन। तदुक्तीति। अधिकरणोक्तीत्यर्थः। एकत्र आद्ये। अर्थान्तरेति। परमात्मवानरादीत्यर्थः। आदिभ्यां रात्रिवह्न्यादिपरिग्रहः।

### मधुसूदनी

तस्याः नायिकायाः। सांमुख्येन आनुकूल्येन। वैमुख्ये नायिकाया प्रतिकूलत्वे तेन मुखेन त्राणायोगात् रक्षणासंभवात्। तदर्हत्वमुभयार्थस्य मुखपदस्याभिधानियामकत्वयोग्यत्वम्।

परमेश्वरादिशब्दस्य राजादावभिधानियामकः अत्रपदस्यार्थो नगररूपो देशः। तदभावयोः नगरसम्बन्धाभावयोः। अभावस्य व्यावृत्यर्थं निश्चयेन सम्बन्धबोधार्थम्। व्यावर्त्याभावात् व्यावर्त्तनीयस्य नगरादिसम्बन्धाभावस्य अभावात् अर्थात् सर्वगतस्य सर्वैः सह सम्बन्धस्य सद्भावात्। एकत्र भात्यत्र परमेश्वर इत्यत्र

### बालक्रीड़ा

सम्बोध्य पुरुषों का रक्षण दयिता के सांमुख्य माने सामञ्जस्य से ही होता है, केवल मुख से नहीं क्योंकि मुख तो सर्वदा रहता ही है नायिका यदि विमुख है अनुकूल नहीं है तो कामार्त का रक्षण नहीं हो सकता है। इसलिए त्राण का अर्हत्व औचित्य, वदन एवं सांमुख्य दोनों अर्थों के प्रत्यायक मुख शब्द की अभिधा का नियामक है।

देश मानें नगर, ग्राम, मन्दिर, क्षेत्र आदि सभी स्थान। जैसे यहां परमेश्वर शोभायमान है। इत्यादि स्थलों में देश विशेष परमेश्वर शब्द की अभिधा को राजादि रूप अर्थों में नियमन करता है। परमेश्वर का नगरादि के साथ सम्बन्ध हो भी सकता है और नहीं भी हो सकता है। इसलिए अभाव की व्यावृत्ति के लिए अधिकरण देश विशेष का कीर्त्तन सार्थक है। परमात्मा तो सर्वगत है सर्वान्तिर्यामी है अतः उसका व्यावर्त्तन हो नहीं सकता है अतः उसके विषय में स्थान विशेष का कीर्त्तन व्यर्थ ही होगा। इसी तरह वैकुण्ठ में हरि वसते हैं यहां भी समझना चाहिए। वैकुण्ठ विष्णु का ही निवास स्थान है। इन्द्रादि

णोक्तिवैयर्थ्यम्, अपरत्र तु तदधिकरणत्वाप्रसिद्धिरिति विशेषः ।

कालो दिवसादिः ॥

'चित्रभानुर्दिने भाति' इत्यादौ चित्रभान्वादिपदानां सूर्यादिषु । एवं 'चातुर्मास्ये हरिः शेते' ।

व्यक्तिः स्त्रीपुंनपुंसकलिङ्गानि ॥

यथा—'मित्रो भाति', 'मित्रं भाति' इत्यत्र मित्रशब्दस्य पुंनपुंसके सुहृत्सूर्ययोः । एवं 'नभो भाति', 'नभा भाति' इत्यत्रापि ।

स्वर उदात्तादिः ॥

### मर्मप्रकाशः

शेते इत्यस्येत्यत्रापि बोध्यमिति शेषः । पुंनपुंसके पुंनपुंसकत्वे । सुहृत्सूर्ययोरिति । सूर्यसुहृ-

### मधुसूदनी

अर्थान्तरस्य परमात्मरूपस्य उपग्रहे स्वीकारे अत्रेति अधिकरणस्य सप्तमीविभक्ति-बोध्याधारस्य उक्तिः कथनं वृथैवेति भावः । अपरत्र वैकुण्ठे हरिर्वसतीत्यत्र अर्थान्त-रस्य नानार्थकहरिपदबोध्यस्य द्वितीयार्थस्य वानरादेः स्वीकारे तदधिकरणत्वाप्रसिद्धिः वैकुण्ठरूपाधारस्य वानरादावप्रसिद्धिरिति द्वयोरुदाहरणयोः विशेषो भेदः ।

चित्रभानुरिति । दिने चित्रभानुपदस्यार्थः सूर्यः । रात्रौ चित्रभानुपदस्यार्थः अग्निः । नभः इति नपुंसकं पदमाकाशवाचकम् । नभाः इति पुंलिंगं पदं श्रावणमास वाचकं "नभः खं श्रावणो नभाः" इति कोशात् ।

### बालक्रीड़ा

का नहीं है । भात्यत्र परमेश्वरः "इसमें परमेश्वर शब्द का दूसरा अर्थ परमात्मा लेने में अधिकरण का निर्देश व्यर्थ हो जाता है । वैकुण्ठे हरिर्वसति" इसमें दूसरा अर्थ इन्द्रादि लेने में वैकुण्ठ की उनके निवास स्थान के लिए प्रसिद्धि नहीं है । यही दोनों उदाहरणों में वैलक्षण्य है ।

काल दिवस, रात्रि, मास, सम्वत्सर आदि । जैसे चित्रभानु शोभायमान है । यहाँ दिन में चित्रभानु शब्द का अर्थ सूर्य है और रात्रि में उसका अर्थ अग्नि है । इसी तरह चातु-र्मास्य में हरि सोते हैं । इसमें हरि की अभिधा के नियमन का हेतु चातुर्मास्य रूप समय है ।

व्यक्ति शब्द का अर्थ है स्त्रीलिंग, पुंल्लिग और नपुसंकलिंग । मित्रो भाति में पुंल्लिग मित्र शब्द का सूर्य अर्थ है । मित्रं भाति में नपुसंक मित्र शब्द का सुहृत् अर्थ है । इसी तरह नभो भाति में नपुसंक नभ शब्द का आकाश अर्थ है । नभा भाति में पुंल्लिग नभ शब्द का श्रावण मास अर्थ है । "नभः खं श्रावणो नभाः" यह कोश इसमें प्रमाण है ।

स्वर शब्द से उदात्त, अनुदात्त, एवं स्वरित का ग्रहण होता है । जैसे—इन्द्रशत्रुः ।

यथा—'इन्द्रशत्रुः' इत्यत्र समासान्तोदात्तत्वमिन्द्रशत्रुशब्दस्येन्द्रस्य शत्रौ। पूर्वपदप्रकृतिस्वरप्राप्तमाद्युदात्तत्वं त्विन्द्रशत्रुके। आदिनाभिनयादि-परिग्रहः। यथा—'एद्दहमेत्तत्थणिआ' इत्यादौ।

इहार्थसामर्थ्यौचितीनामुदाहरणेषु चतुर्थ्याद्यैस्तृतीयाद्यैरर्थसामर्थ्येन च बोध्यमानकार्यकारणभाव एव नियामकः। न तु वस्त्वन्तरम्। बोधक-

## मर्मप्रकाशः

दोरिति क्रमो बोध्यः। पाठ एव वेत्यम्। नभाः श्रावणः। एद्दहेति। 'एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिं। एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिं॥' 'एतावन्मात्रस्तनिका एतावन्मात्रैरक्षिपत्रैः। एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः॥' [इति च्छाया।] अर्थसा-

## मधुसूदनी

इन्द्रशत्रुरित्यत्र षष्ठीसमासपक्षे अन्तोदात्तत्वमन्त्यपदोदात्तत्वं तेन इन्द्रस्य शातनक्रियायां कर्मतयाऽवगमः। त्वष्ट्रा उत्पाद्यस्य वृत्रासुरस्य तु शातनक्रियायां कर्तृतयाऽवगमः। इन्द्रः शत्रुः शातयिता समुच्छेदको यस्येति बहुव्रीहौ आद्युदात्तत्वमादिपदस्योदात्तत्वं तेन च इन्द्रस्य शातनक्रियायां कर्तृत्वं वृत्रासुरस्य तत्क्रियायां कर्मत्वं बोध्यते।

इहेति। अर्थोदाहरणे चतुर्थी तुमन् सन् प्रत्ययादिभिः। सामर्थ्योदाहरणे तृतीयाविभक्त्या हेतुबोधकपदैश्च। औचित्या उदाहरणे अर्थसामर्थ्येन पदार्थ-योग्यतया बोध्यमानः कार्यकारणभाव एव अभिधाया नियामकः; न वस्त्वन्तरम् न पदार्थः कश्चित्।

ननु कार्यकारणभाव एव एको नियामको भवति वस्त्वन्तरं न हि भवति तर्हि किमिति पृथक् २ नियामका उक्ता इत्याकांक्षायां बोध्यमानेत्यस्य पदस्य सामञ्जस्यं स्फोरयति—बोधकेति। बोधकभेदान्नियामकभेद इति सामञ्जस्यं वर्त्तते।

## बालक्रीड़ा

यहां इन्द्र का शत्रुः ऐसा षष्ठी समास जब करते हैं तब समास में अन्तोदात्त होता है अन्तोदात्त स्वरानुसार इन्द्रशत्रु शब्द का इन्द्र को मारने वाला यह अर्थ होता है। और जब इन्द्रः शत्रुर्यस्य। इन्द्र है शत्रु मारने वाला जिसका, ऐसा बहुव्रीहि समास करते हैं तब पूर्व पद रूप प्रकृति को स्वर प्राप्त होता है अतः आद्युदात्त होता है उसके अनुसार इन्द्र ही मारने वाला है यह अर्थ मिलता है जो षष्ठी समास से मिले हुए अर्थ के बिलकुल विपरीत है।

"स्वरादयः" इस कारिका के स्वरादयः पद के आदि पद से अभिनय आदि का परिग्रह है। अभिनय पद का अर्थ है कि परोक्ष वस्तु का हस्त संचालन एवं अक्षि संकोचन तथा स्पन्दनादि के द्वारा साक्षादिव कर देना। जैसा—"एद्दह मेत्तत्थणिआ" इत्यादि पद्यों में बतलाया हुआ अर्थ अभिनय के द्वारा स्पष्ट किया जाता है।

यहां अर्थ, सामर्थ्य, एवं औचिती के उदाहरणों में क्रमशः चतुर्थी विभक्ति, तुमन् एवं

वैचित्र्याच्च नियामकस्य वैचित्र्येणोक्तिः प्राचाम् । वस्तुतस्तु संयोगादीनामर्थान्तरसाधारणत्वे नानार्थशब्दस्यार्थविशेषे शक्तेः संकोच एव न संभवति । नियामकानामसंकुचितत्वात् । अथ प्रसिद्धत्वादिना तेषामसाधारणताबुद्धिर्यथाकथंचिदुपपाद्यते, तदा प्रायशो लिङ्गभेद एव । एते न तु सर्वथैव ततः स्वतन्त्रा इति बोध्यम् ।

## मर्मप्रकाशः

मर्थ्येन अर्थयोग्यतया । यथासंख्यमन्वयः । बोधकवैचित्र्येऽपि पदार्थयोर्यः कार्यकारणभावस्तद्बोधकेत्यर्थः । नियामकस्य अर्थादेः । वैचित्र्येण भेदेन । प्राचामिति सूचितामरुचिमाह—वस्तुतस्त्विति । साधारणत्वे सतीति शेषः । स्वारसिकत्वाभावादाह—यथाकथंचिदिति । प्रागुक्तरीत्यार्थादीनामसंग्रहादाह—प्रायश इति । तेषामप्यन्तर्भावसंभवादाह —सर्वथैवेति । ततो लिङ्गात् ।

## मधुसूदनी

प्राचां मतमननुमतं कुर्वन्नाह–वस्तुतस्तु । अर्थान्तरसाधारणत्व इति । यथा सशंखचक्रो हरिरित्यत्र हरिशब्दस्य विभिन्ना इन्द्रवानरसिंहादयोऽर्थाः विष्णुरपि अर्थः । तत्र यदि शंखचक्रसंयोगस्य इन्द्रादिषु अर्थान्तरेषु अपि साधारणत्वं समानत्वं तर्हि विष्णुरूपे अर्थविशेषे नानार्थशब्दस्य शक्तेरभिधायाः संकोच एव न संभवति । कुतो न संभवतीत्यत्र हेतुमाह–नियामकेति । स्वं नियतं सदेव अन्यान् नियन्तुं प्रभवति स्वस्मिन् अनियते असंकुचिते तु नियामकत्वमेव न जागर्ति इति भावः । तेषां संयोगादीनामसाधारणताबुद्धिर्नियतताबुद्धिः प्रसिद्धत्वादिहेतुना यथाकथंचिदुपपाद्यते । एते संयोगादयः । ततो लिंगात् ।

## बालक्रीड़ा

सन् प्रत्ययों से, तृतीया विभक्ति एवं हेतु बोधक पदों से तथा अर्थ सामर्थ्य से बोध्यमान कार्य कारण भाव ही नियामक है अन्य कोई वस्तु नियामक नहीं है ।

शंका—जब कार्य कारण भाव ही नियामक है तब इस एक कार्यकारण भाव ही को नियामक माना जाय अर्थ वगैरह तीनों को अलग २ नियामक क्यों माना जाय ।

उत्तर । ठीक है । किन्तु उस कार्य कारण भाव को बतलाया किसने । इन अर्थ, सामर्थ्य एवं औचिती ने ही उसको बतलाया है अतः इन अर्थ वगैरह बोधकों के भेद से नियामकों को भी भिन्न ही प्राचीनों ने कहा है ।

इस विषय में पण्डित राज अपना मत लिखते हैं कि वस्तुतस्तु संयोगादि अन्य २ अर्थों में साधारण है जैसे—संयोग अपने उदाहरण "सशंखचक्र हरि" में नियामक होता है उसी तरह संयोग पूर्वक विभाग होता है इस सिद्धान्त के अनुसार विभाग के उदाहरण में भी गुण भूत होकर वह नियामक होता है । इसी तरह साहचर्य में भी वह स्पष्ट सन्निविष्ट है । फलतः नानार्थक शब्द की अर्थ विशेष के विषय में शक्ति का संकोच ही असम्भव हो जायगा ।

तत्र शब्दशक्तिमूलालंकारस्य ध्वनिर्यथा—

'करतलनिर्गलदविरलदानजलोल्लासितावनीवलयः ।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥'

**मर्मप्रकाशः**

तत्र त्रयोदशभेदानां मध्ये । अलंकारस्येत्यस्योपमेत्यादिः । अविरलेति । संततेत्यर्थः ।

**मधुसूदनी**

तत्र शब्दशक्तीति । अत्र नागेशमहाशयेन तत्रेति पदस्य व्याख्या तत्र त्रयोदशभेदानां मध्ये इत्युदलेखि । तत्र विचार्यते विवक्षितान्यपरवाच्यध्वनेरेकस्य भेदस्य संलक्ष्यक्रमध्वनेर्निरूपणप्रस्तावः; यथा अथ संलक्ष्यक्रमध्वनिर्निरूप्यते इति । अथ च तस्यैव भेदान् निरूपयितुमुपक्रमतेऽपि, यथा तत्र शब्दशक्तिमूलालंकारस्य ध्वनिर्यथेति । स च संलक्ष्यक्रमध्वनिः पण्डितराजेन "एवं साकल्येन दशभेदोऽय मि"ति रीत्या पूर्वं दशभेदो निर्दिष्टः, उपसंहारे च एकभेदो उभयशक्तयुत्थो निर्दिष्टः; तथा-च मिलित्वा एकादशभेदाऽयम् । ततः तत्र एकादशभेदानां मध्ये इत्युचितम् । यदि पर्यन्ते निर्दिष्टयोरविवक्षितवाच्यध्वनिभेदयोरपि सम्मेलनं क्रियते तदा त्रयोदश भेदानामिति व्याख्या समुन्नेया स्यात्परं संलक्ष्यक्रमध्वनिभेदनिरूपणे तयोः गणनायाः कः प्रसंगः ।

करतलेति । करतलादविरलं निरन्तरं यथा स्यात्तथा निर्गलद् निःसरदिति भावः स्वयं परापतति, परमक्षराण्येवं न सन्ति । तानि तु करतलान् निर्गलत् निःसरत् यदविरलं बहुलम् इति । दानजलमुत्सर्गवारि । तेन उल्लासितः सरसीकृतोऽवनि वलयो भूमण्डलं येन सः । धनदानां वदान्यानाग्रे प्रथमतया निरूपणीयस्थाने

**बालक्रीड़ा**

क्योंकि नियामक स्वयं असंकुचित हैं । यदि प्रसिद्धि के आधार पर उनकी असाधारणता बुद्धि का किसी प्रकार उपपादन करते हैं तब प्रायः ये संयोगादि लिंग के ही भेद हैं न कि सर्वथा उससे स्वतन्त्र हैं ऐसा समझना चाहिए ।

उन एकादश भेदों में से शब्दशक्तिमूल अलंकार की ध्वनि जैसे ।—यहाँ पं०नागेश महोदय ने तत्र की व्याख्या (तत्र त्रयोदशभेदानां मध्ये) तेरह भेदों के बीच में लिखा है । किन्तु पण्डितराज ने "साकल्येन दशभेदोऽयम्" । और यदि उभयशक्तिमूल एक भेद को और मिला देते हैं जैसा कि पण्डितराज ने इस भेद को आगे लिखा भी है तब एकादश भेद हो जाते हैं अतः यहां तत्र की व्याख्या "एकादशभेदानां मध्ये" करना उचित है । क्योंकि विवक्षितान्य-परवाच्य ध्वनि के भेदों का निरूपण करना प्रस्तुत है उन्हीं की आरम्भ में प्रतिज्ञा की है और उन्हीं को दिखाने का उपक्रम करते है अतः अविवक्षितवाच्य के भेदों का प्रसङ्ग नही है ।

दान करते समय करतल से अविरल निरन्तर गिरने वाले दान जल से जिसने अवनि-वलय भूमण्डल को उल्लासित माने सरस कर दिया है, और धन देने वालों में जिसकी अग्र

अत्र राजप्रकरणे कर-दान-धनद-सार्वभौमशब्दानां शक्तौ संकोचितायामपि तन्मूलकेन ध्वननेन प्रतीयमानस्यार्थान्तरस्याप्रस्तुतस्याभिधानं मा भूदिति प्रकृताप्रकृतयोरुपमानोपमेयभावः प्रधानवाक्यार्थतया कल्प्यत इत्युपमालंकारध्वनिः।

### मर्मप्रकाश

अवनीवलयः भूमण्डलः। धनदानामग्रे आदौ महिता पूजिता मूर्तिर्यस्य सः। अत्रेति। हस्तवितरणदातृजनभूपेष्विति भावः। तन्मूलकेन शब्दशक्तिमूलकेन। अर्थान्तरेति।

### मधुसूदनी

महिता पूजिता मूर्तिः स्वरूपं यस्य सः। अयं सार्वभौमः सम्पूर्णभूमण्डलाधीश्वरो राजा जयतितराम्। अयं प्रकृतोऽर्थः राजरूपः।

करतलात् शुण्डादण्डात्। दानजलं मदवारि। धनदः कुबेरः। सार्वभौमः अष्टदिशागजेषु सप्तमः उदक्दिशाया गजः। तद्यथा—

ऐरावतः १ पुण्डरीको २ वामनः ३ कुमुदो ४ ऽञ्जनः ५। पुष्पदन्तः ६ सार्वभौमः ७ सुप्रतीकश्च ८ दिग्गजाः। इत्यमरकोषकारः। एवमेव-इन्द्रो १ वह्निः २ पितृपतिः ३ नैर्ऋति ४ वरुणो ५ मरुत् ६। कुबेरः ७ ईशः ८ पतयः पूर्वादीनां दिशां क्रमात् इत्यमरकोषानुरूपं कुबेरः सप्तमो दिगधिपतिः। स एवात्र अप्रकृतार्थे धनदपदेन गृह्यते। अयं उदग्दिग्गजवृत्तान्तोऽप्रकृतो व्यंग्यश्च।

शक्तौ अभिधायां संकोचितायां राज्ञः प्रस्तावात् राजरूपार्थे नियन्त्रितायाम्। तन्मूलकेन शब्दशक्तिमूलकेन ध्वननेन। अत्रेदं बोध्यम्—अत्र उपमाध्वनिः स च उपमेयस्य उपमानस्य च उपस्थितिं विना न सम्भवति। अनयोर्द्वयोरुपस्थितौ च मूलं शब्द एव, अतः शब्दशक्तिमूल इति व्यपदिश्यते।

अर्थान्तरस्य सार्वभौमाख्यसप्तमदिग्गजस्य उदीचीदिग्भवस्य। वक्तुः कवेः तात्पर्यविषयतया प्रधानतामवगाहमानार्थतया। कल्प्यते समर्थ्यते।

### बालक्रीड़ा

सर्वप्रथम महिमा की जाती है वह यह सार्वभौम सम्पूर्ण भूमण्डल प्रसिद्ध राजा सबसे उत्कृष्ट है।

यहाँ राजा का प्रकरण है। इसलिए प्रकरण से कर, दान, धनद एवं सार्वभौम शब्दों की हाथ, दान, दानी एवं राजरूप अर्थ में शक्ति का संकोच हो गया। यह संकुचित अर्थात् प्रकरण से मिला हुआ अर्थ ऊपर दिखाया गया है।

किन्तु शक्ति के संकुचित होने पर भी शब्दशक्ति मूलक ध्वनन से अर्थात् इन्हीं शब्दों से यह अर्थ मिल सकता है अन्य से नहीं ऐसे शब्दों के सामर्थ्य से उत्थान करने वाली व्यंजना से प्रतीयमान (करतल) शुण्डादण्ड, मदजल, कुबेर एवं उत्तरदिशा का सार्वभौम नामक

अथ श्लिष्टविशेषणायां समासोक्तौ व्यङ्ग्यस्याप्यप्रकृतव्यवहारस्य प्रकृतधर्मिण्यारोप्यमाणस्य प्रकृतोपस्कारकतया यथा गुणीभूतव्यङ्ग्यत्वमेवमिहाप्युचितम्। न चोपमा प्रकृतार्थोपस्कारिका न भवतीति शक्यं

### मर्मप्रकाशः

इन्द्रवृत्तान्तेत्यर्थः। षष्ठ्यर्थे बहुव्रीहिद्वयम्। करतलमैरावतशुण्डागण्डस्थलम्। धनदः कुबेरः। अप्रस्तुतस्यासंबद्धस्य। श्लिष्टेति। 'अयमैन्द्रीमुखं पश्य' इत्यादौ। व्यवहारस्य मुखचुम्बनादिरूपस्य। आरोप्येति। अन्यथा असंबद्धाभिधानं स्यादिति भावः। इहापि करतले-

### मधुसूदनी

"एवमिहापि" इति एवं समासोक्तिवत्। इहापि प्रकृतपद्ये उपमायामपि। अप्रस्तुतस्य अभिधानम् अप्रासंगिकी चर्चा माभूदिति हेतोः।

### बालक्रीड़ा

गज रूप अर्थान्तर अत एव अप्रस्तुत याने अप्रासंगिक जिसका प्रकृत वर्णन से कोई सम्बन्ध नहीं है उस अर्थ का अभिधान अनवसर कथन नहीं हो जाय इसलिए प्रकृत राजा और अप्रकृत दिग्गज में सादृश्य की कल्पना करते हैं। प्रकृत राजा उपमेय है और अप्रकृत दिग्गज उपमान है। यहां इस पद्य का यह उपमानोपमेयभाव सादृश्य ही प्रधानवाक्यार्थ है। इन दोनों के सादृश्य ही को दिखलाने के लिए यह कवि का निर्माण है। और यह सादृश्य शब्दशक्ति मूल व्यंजना से ही मालूम होता है अतः यहां उपमालंकार ध्वनि है। द्वितीय अर्थ की उपस्थिति हुए विना उपमा नहीं हो सकती है और उस उपस्थिति में शब्दशक्ति मूल कारण है अतः शब्दशक्तिमूल ध्वनि कहा है।

ऐरावतः १ पुण्डरीको २ वामनः ३ कुमुदो ४ ऽञ्जनः ५।
पुष्पदन्तः ६ सार्वभौमः ७ सुप्रतीकश्च ८ दिग्गजाः।

इस कोष के अनुसार सार्वभौम ७वां दिग्गज है और—

इन्द्रो १ वह्नि : २ पितृपति ३ नैर्ऋतो ४ वरुणो ५
मरुत् ६। कुबेर ७ ईशः ८ पतयः पूर्वादीनां दिशां क्रमात्।

इस कोष के अनुसार ७वां दिक्पति कुबेर है अतः अर्थान्तर शब्द की प्रकृत में इन्द्र वृत्तान्त व्याख्या न करके "सातवें दिग्गज सार्वभौमवृत्तान्त" व्याख्या करना उचित है।

काव्यप्रकाश के टीकाकार श्रीवत्सलाञ्छनभट्टाचार्य की उक्ति पर अपना दृष्टिकोण उपस्थित करते हैं—श्लिष्ट शब्दोपत्त विशेषण स्थल वाली समासोक्ति में प्रकृतधर्मी में आरोप्यमाण व्यंग्य अप्रकृत व्यवहार जैसे प्रकृत का उपस्कारक होने से गुणीभूत व्यंग्य माना जाता है वैसे ही यहां प्रकृत पद्य में भी उपमा को ध्वनि न मानकर गुणीभूतव्यंग्य ही मानना उचित है। अतः यह मध्यम काव्य है न कि उत्तम काव्य है।

यह आप कह नहीं सकते कि यहाँ उपमालंकार प्रकृत राजरूप अर्थ का उपस्कारक नहीं है। क्योंकि "उल्लास्य कालकरवालमहाम्बुवाहम्" "भद्रात्मनो दुरधिरोहतनोः"

वदितुम् । 'उल्लास्य कालकरवालमहाम्बुवाहम्', 'भद्रात्मनो दुरधिरोहतनोः' इत्यादौ प्राचीनानां पद्ये 'करतल–' इत्यादि प्रागुदाहृतपद्ये च व्यङ्ग्योपमया प्रकृतस्य राज्ञः प्रकर्षस्य सकलानुभवसिद्धत्वात् । अनुभवापलापे तु समासोक्तावप्यप्रकृतव्यवहारस्य प्रकृतोपस्कारकत्वं नेति सुवचत्वात् । ननु समासोक्तावत्र चास्ति विशेषः—यत्तत्र व्यवहारिणो नानार्थशब्दानुपस्थाप्यत्वम्, इह तु तदुपस्थाप्यत्वम्, इति चेत्, किं चातो, न हि व्यव-

### मर्मप्रकाशः

त्यादावपि । तथा च मध्यमकाव्यत्वम्, नोत्तमकाव्यत्वमिति भावः । व्यङ्ग्योपमयेति । व्यङ्ग्यरूपोपमयेत्यर्थः । समासोक्तावपि उक्तरूपायाम् । अत्र च करतलेत्यादौ । एवमग्रेऽपि । व्यवहारिणो जारादेः । तदुपेति । सार्वभौमेति । नानार्थपदोपेत्यर्थः । स्वभावसुन्दरस्यापि

### मधुसूदनी

व्यवहारिणोऽप्रकृतधर्मिणः । नानार्थशब्दानुपस्थाप्यत्वमश्लिष्टत्वमित्यर्थः । तदुपस्थाप्यत्वं नानार्थशब्दोपस्थाप्यत्वं श्लिष्टत्वमिति यावत् ।

किंच अत इति । अतश्च श्लेषाश्लेषयोरभावाच्च किम् । स्वभावो हि अलंकाराणां यत्ते स्वाश्रयमुपस्कुर्वन्ति । स स्वभावः सुन्दरताधानरूपः । काव्येति । काव्यप्रवृत्तौ इदं काव्यम्, काव्यमिदम्, इति प्रवृत्तौ व्यवहारे काव्यवृत्तेस्तदाश्रयादित्युक्तेः । अथवा काव्यस्य प्रवृत्तौ ग्राह्यतायां काव्यं ग्राह्यमलंकारादित्युक्तेः । उद्देश्यता लक्ष्यता । यथा वस्तुमात्रेण अभिव्यलेष्वलंकारेषु स्वभावतः सौन्दर्यं, काव्यप्रवृत्त्युद्देश्यता च तथैव शब्दशक्तिमूलेष्वपि तेषु तच्च सा च अस्त्येव, अदो हि न्यायस्य तुल्यत्वम् । तस्माच्च अलंकाराणां वस्तुमात्रे गुणीभावो न सम्भवतीत्युक्तं तुल्यन्यायत्वादिति ।

### बालक्रीड़ा

इन प्राचीनों के पद्यों में तथा प्रागुदाहृत "करतल" इस पद्य में भी व्यंग्य उपमा से प्रकृत राजा का उत्कर्ष सकल सहृदयों के अनुभव से सिद्ध है । यदि अनुभव का अपलाप करेंगे तो समासोक्ति में भी व्यंग्य अप्रकृत व्यवहार प्रकृत का उपस्कारक नहीं है ऐसा कहना भी अच्छा होगा ।

यदि यह कहें कि समासोक्ति और प्रकृत उपमा में एक विलक्षणता है कि समासोक्ति में विशेषण ही केवल श्लिष्ट होते हैं अतः व्यवहारी अर्थात् विशेष्य नानार्थक शब्द से उपस्थाप्य नहीं है अतः श्लिष्ट नहीं हो सकता है और यहाँ तो विशेष्य सार्वभौम नानार्थक शब्द से उपस्थाप्य है अतः श्लिष्ट है ।

इससे क्या हुआ । क्या इस व्यवहारी की नानार्थक शब्द से उपस्थाप्यता होने मात्र से अप्रकृतधर्मी निरूपित उपमा का प्रकृतधर्मी को उपस्कृत करना निवारित कर दिया जायगा । जिस से उपमा में गुणीभूतव्यंग्यत्व ही नहीं होगा ।

हारिणो नानार्थशब्दोपस्थाप्यतामात्रेणाप्रकृतधर्मिनिरूपिताया उपमायाः प्रकृतधर्म्युपस्कारकत्वं वार्यते, येन गुणीभूतव्यंग्यत्वं न स्यात्। न चात्रोपमादीनामलंकाराणां स्वभावतः सुन्दरत्वात्काव्यप्रवृत्त्युद्देश्यतया च वस्तुमात्रे गुणीभावो न संभवति, यथा वस्तुमात्रेणाभिव्यक्तानामलंकाराणाम्, तुल्यन्यायत्वात्। अप्रकृतव्यवहारस्य तु समासोक्त्यवयवस्य निरलंकारतया वस्तुन्युपस्कारकत्वं समासोक्तावविरुद्धमिति वाच्यम्। एवमपि "बाधेऽ-

## मर्मप्रकाशः

शृंगारादेः क्वचिद्गुणभावदर्शनादाह---काव्यप्रवृत्त्युद्देश्यतया चेति। अन्यथा नानार्थशब्दघटितकाव्यकरणरूपकविप्रयासानर्थक्यापत्तिरिति भावः। वस्तुमात्रे प्रकृतार्थे। यथा वस्तुमात्रेति—

"वीररुद्रभटान् दृष्ट्वा जयलक्ष्मीसमावृतान्।
रणे कर्षन्त्यरिवधूकेशांस्ते कण्टकिद्रुमाः"॥

इत्यादाविति भावः। तुल्येति। उक्तहेतोस्तुल्यत्वादित्यर्थः। अनलंकारत्वेऽवयव-

## मधुसूदनी

अवयविनः अवयवैः परिपूर्णस्यालंकारतया; अवयवस्य निरलंकारता सुतरां प्राप्तेति भावः। वस्तुनि प्रकृतव्यवहारे उपस्कारकत्वं शोभाधायकत्वम्। एवमपि समासोक्तौ निरलंकारस्यैव उपस्कारकत्वेऽपि।

## बालक्रीड़ा

यदि कहें कि—जैसे वस्तुमात्र से अभिव्यक्त होने वाले अलंकारों में (ध्वनित्व ही है) गुणीभूत व्यंग्यत्व नहीं हैं उसी तरह यहाँ इन पद्यों में भी शब्द शक्ति मूल व्यंजना से प्राप्त होने वाले अलङ्कारों का भी वस्तुमात्र में गुणीभाव संभव नहीं है। क्योंकि अलङ्कारों की स्वाभाविक सुन्दरता और यह काव्य है इस प्रवृत्ति की इस व्यवहार की उद्देश्यता लक्ष्यता दोनों जगह तुल्य है। और इसके विपरीत अप्रकृत व्यवहार समासोक्ति का अवयव है अतएव अलंकार स्वरूप नहीं है अतः समासोक्ति में व्यंग्य अप्रकृत व्यवहार वस्तु का उपस्कारक होने से गुणीभूत हो सकता है कोई विरोध नहीं है अतः गुणीभूत व्यंग्य कहना संभव है।

तब भी ठीक नहीं है क्योंकि बाध=माने व्यंग्य के गुणीभूतत्व का विनिगमक उपस्कारकत्व दृढ़ है या अदृढ़ है। यदि वह बाध अदृढ़ है अर्थात् यदि सिद्धान्त शिथिल है तब अन्य की समानता से क्या है कुछ नहीं हो सकता है। प्रत्युत सिद्धान्त गत अदृढ़त्व के मूल शिथिलत्व का ही निराकरण करना चाहिए। अन्य के साथ तुलना करना व्यर्थ है। क्योंकि तुलना तो शिथिलता के कारण ही उठायी जाती है जैसे आपने उठाई कि जैसे वस्तु मात्र अर्थात् अलंकार रहित वस्तु से अभिव्यक्त अलंकारों का गुणीभाव नहीं होता है उसी तरह शब्द शक्ति से अभिव्यक्त अलंकारों का भी गुणीभाव उचित नहीं है। क्योंकि जो

दृढेऽन्यसाम्यात् किं दृढेऽन्यदपि बाध्यताम्" इति न्यायेन उक्तयुक्तेः शिथिलत्वात्, अपराङ्गताया दुरपह्नवत्वात् ।

## मर्मप्रकाशः

त्वं हेतुः ? अदृढे इतिच्छेदः ।

## मधुसूदनी

उक्तयुक्तेः अलंकाराणां स्वभावतः सुन्दरत्वात् काव्यप्रवृत्त्युद्देश्यत्वाच्च गुणीभावो न संभवति निरलंकारस्य तु स सम्भवति इत्येवमुक्ताया युक्तेः ।

शिथिलत्वादिति । प्रकृतोपस्कारकत्वं गुणीभावे बीजम्, तादृशबीजत्वं निरलंकारे वा अलंकारे वा भवतु तत्र अलंकारानलंकारयोश्चर्चा नास्ति । एवं चात्र तादृशबीजरूपे बाधे दृढे सबले अन्यदपि बाध्यताम् अलंकारस्य भवतु गुणीभावः इत्यर्थः। अबलेऽदृढे बाधे अन्यसाम्यात् किं न किमपि फलम् । यथा भूयसां यवनानां निवासत्वात् भारतात् पृथक् पाकिस्तानं जातं तथैव हैदराबादराज्यमपि यवनानां भूयस्त्वात् भारतात् पृथक् भवतु इत्येवं साम्योपस्थापनात् किमपि फलं नास्ति । इदं भारतस्याङ्गं भारतमेव इति । अदो हृदयम्—गुणीभूततायाः हेतुरुपस्कारकत्वाख्यो बाधोऽदृढो वा दृढो वा । यदि गुणीभूतताया हेतुः उपस्कारकत्वं शिथिलस्तर्हि अन्यसाम्यात् किं, किमपि फलं नास्तीत्यर्थः । प्रत्युत साम्योद्भावनाऽपेक्षया सिद्धान्ताऽदृढत्वस्य मूलं शिथिलत्वं निराक्रियताम् । एवमन्यसाम्योद्भावना—यथा वस्तुमात्रेण अलंकाररहितवस्तुना अभिव्यक्ता अलंकाराः गुणीभावं नार्हन्ति तथैव शब्दशक्त्या अभिव्यक्तास्तेऽपि तद्भावं नार्हन्ति यतः अलंकाराः स्वभावतः सुन्दराः तथा काव्यवहारे इदं काव्यं, काव्यमिदमित्यादि प्रवृत्तौ उद्देश्याश्च इति तुल्यो न्यायः इत्यादिकाऽन्यथा ।

यदि गुणीभूतताया हेतुः उपस्कारकत्वरूपो दृढः अर्थात् अशिथिलतया अपरिहार्यस्तर्हि अन्यदपि तुलनासम्पादकं बाध्यताम् निराक्रियताम् ।

अपराङ्गताया इति । उल्लासस्य कालकरवालमित्यादौ उपमायाम्, अपराङ्गताया गुणीभावस्य दुरपह्नवत्वात् अपह्नवः कर्तुं दुःशकः ।

## बालक्रीड़ा

न्याय कि "अलंकार स्वभावतः सुन्दर है और काव्य की प्रवृत्ति के लक्ष्य हैं" वह दोनों जगह तुल्य है ।

और यदि वह बाध याने गुणीभूत का विनिगमक उपस्कारकत्व दृढ है अर्थात् शिथिल नहीं होने के कारण अपरिहार्य है तब अन्य का भी जिसकी तुलना आप उठाते हैं उसका भी बाध करिये इसलिए शिथिल होने के कारण तुम्हारा साम्यीकरण व्यर्थ है । फलतः [illegible]राङ्गता का अपह्नव करना मुश्किल है ।

अथोच्येत—उपमानमुपमेयं साधारणो धर्मः उपमावाचकमिति हि उपमाशरीरघटकम्। न तु ततः पृथग्भूतम्। तैर्विना तस्या अनिष्पत्तेः। इत्थं चोपमेयस्य सादृश्यांशेनोपस्कारेऽप्युपमाया नापराङ्गत्वम्। उपमेयस्यापरत्वाभावात्। यथा समासोक्तावप्रकृतव्यवहारेण प्रकृतस्योपस्करणेऽपि न समासोक्तेरपराङ्गत्वम्, प्रकृताप्रकृतघटितत्वात्, एवमिहापि स्यादिति।

## मर्मप्रकाशः

सादृश्यांशेन तद्रूपोपमाङ्गेनोपमानेन। उक्तमेवार्थं विशदयति—यथेति। गुणीभूतव्यंग्यत्वापत्तेरिति। अयं भावः—विशिष्टस्योपमाशरीरत्वेऽपि उपमेयांशस्य न व्यंग्यत्वम्। शक्त्यैव तल्लाभात्। एवं च तद्घटकव्यंग्यांशस्य तद्घटकवाच्यादनतिशायित्वेन गुणीभूतव्यंग्यत्वं दुर्वारमिति। अत्र वदन्ति—अलंकाराणामुद्दीपनविधया रसाद्युपयोगित्वेन आलम्बनापेक्षयोद्दीपनेऽधिकचमत्कारित्वस्य सर्वानुभवसिद्धतया करतलेतिपदवाच्यालम्बनविभावापेक्षयातिशायित्वाद् ध्वनित्वमव्याहतमेव। रसाद्यपेक्षया गुणीभूतव्यंग्यत्वं त्विष्टमेव। समासोक्तौ तु "आगत्य संप्रति वियोगविसंष्ठुलाङ्गीम्" इति सखीशिक्षावाक्येऽप्रकृतनायकवृत्तान्ताध्यारोपं विना तदनुपपत्तेर्गुणीभूतव्यंग्यत्वं स्पष्टमेव। यत्र तु तस्यापि रसाद्युपस्कारकतया वाच्यादतिशयितत्वं

## मधुसूदनी

पक्षान्तरेण दूषयितुं भूमिकामाबध्नाति—अथोच्येतेति। ततः उपमाशरीरात् न पृथग्भूतमंशचतुष्कम्। तैः चतुर्भिरंशैर्विना तस्या उपमाया अनिष्पत्तेरभावात्। सादृश्यरूपेण अंशेन एकदेशेन उपमेयस्य उपस्कारेऽपि उपमेयस्य अपरत्वाभावात् उपमाया अपराङ्गत्वं नास्तीत्यन्वयः। अप्रकृतस्य अपराङ्गत्वं प्रकृतांगत्वं नास्ति। नासमासोक्तरेपराङ्गत्वमित्युक्तिरसमीचीना। यतो हि समासोक्तिरपराङ्गमेव। आगत्य संप्रति वियोगेति पद्यं मम्मटभट्टैरपराङ्गताया उदाहरणमित्यन्वमोदि। अपरांगत्वं कुतो नास्तीति हेतुमाह-समासोक्तेरिति। समासोक्तेः समासोक्तिस्वरूपस्य प्रकृतेन अप्रकृतेन

## बालक्रीड़ा

अगर कहें कि—उपमान, उपमेय, साधारण धर्म, और उपमा वाचक यथेवादि ये चार उपमा के शरीर के सम्पादक है। अतः ये उपमा से पृथक् नहीं है। क्योंकि उनके विना उपमा की निष्पत्ति ही नहीं होगी। इस प्रकार सादृश्य रूप अंश के द्वारा उपमेय के उपस्कृत होने पर भी उपमा अपर का अंग नहीं हुई क्योंकि उपमेय; उपमा के शरीर के अन्तर्गत ही आ गया अपर नहीं हुआ।

फलतः जैसे समासोक्ति में अप्रकृत व्यवहार से प्रकृत के उपस्कृत होने पर भी अप्रकृत अपरका अंग नहीं है (यह तो वदतो व्याघात है। क्योंकि उपस्कारक जो हो वही तो अपरांग होता है। दूसरा अपरांग होने का दृढ़ विनिगमक ही क्या है। इसलिए यहां का पाठ विसंष्ठुल है) क्योंकि समासोक्ति का स्वरूप प्रकृत एवं अप्रकृत से सम्पन्न होता है उसी तरह उपमेय के उपमास्वरूप के अन्तर्गत होने से उपमा भी अपरांग नहीं होगी।

तथापि समासोक्तेरिवास्यापि प्रभेदस्य गुणीभूतव्यंग्यत्वापत्तेः, अस्यैव वा समासोक्तेरपि ध्वनिव्यपदेश्यत्वापत्तेः ।

अन्यच्च—श्लेषे हि श्लेषभित्तिकमभेदाध्यवसानं द्वयोरर्थयोरिति सकलालं-

### मर्मप्रकाशः

प्रागुक्तरीत्या तत्रास्तु नाम ध्वनित्वं तस्याः । न चैवमप्युपमाकृतोत्कर्षमादायास्तु ध्वनित्वम्, अलंकारध्वनिरिति तु कथमिति वाच्यम् । अलंकारकृतोत्कर्षध्वनाव एव अलंकारध्वनिरिति व्यवहारादिति । विनिगमनाविरहात् । अस्यैव वेति । प्रभेदस्यैवेत्यर्थः ।

प्राचोक्तमुपमालंकारध्वन्युदाहरणं खण्डयति—अन्यच्चेति । किं चेत्यर्थः । श्लेषभित्तिकं तन्मूलकम् । विधीयमान इति । क्रियमाण इत्यर्थः । एकपदोपात्तत्वादन्यदित्यन्वयः ।

### मधुसूदनी

च घटितत्वात् निष्पन्नत्वात् । एवं समासोक्तिवत् इहापि उपमायामपि स्यात् । तथापि इत्यस्य तर्हि इत्यर्थो बोध्यः । अन्यथा यद्यपीत्यस्याभावादसंगतिः स्पष्टा एव स्यात् । समोसोक्तेरिव अस्या अपि इति वक्तव्ये प्रभेदस्येत्यस्यानुरोधेन अस्यापि इति पुंस्त्वं प्रयुक्तम् । अत एव अस्यैव अस्य प्रभेदस्य इव इत्युक्तम् ।

एवं समासोक्तिसाम्येन उपमाया गुणीभूतत्वं प्रसाधयन् ध्वनिव्यपदेश्यतां निरकरोत् । इदानीमुपमाव्यदेश्यतामपि खण्डयितुमुपक्रमते श्लेषे-हीति । अत्र श्लेषे इत्यस्य श्लेषमूलकालंकारे इत्यर्थो बोध्यः । तादृशार्थज्ञानाभावे हि श्लेषे सभंगाभंगभेदाद् द्विविधे शब्दश्लेषे तथा अर्थश्लेषे च सर्वदो माधवः पायात् योऽगं गां समदीधरत् । इत्यादिषु कुत्रापि श्लेषभित्तिकाध्यवसानं नास्ति । ततश्च श्लेषे हि श्लेषभित्तिकाध्यवसानं द्वयोरर्थयोरिति कथनमसंगतमेव स्यात् ।

### बालक्रीड़ा

अस्तु । आपका कहना ही सही यदि दोनों की स्थिति समान है तब समासोक्ति की तरह उपमा को भी गुणीभूत व्यंग्य मानिये या प्रतीयमानोपमा की तरह समासोक्ति को भी ध्वनि कहना चाहिए ।

इस तरह समासोक्ति की समता में प्रतीयमानोपमा को लाकर उसकी ध्वनिव्यपदेश्यता का खण्डन कर दिया अब उसकी उपमाव्यपदेश्यता का भी खण्डन करने के लिए कहते हैं कि और भी एक बात है—श्लेष मूलक अलंकारों के दोनों अर्थों में श्लेष के कारण अभेदाध्यवसान होता है इस बात को सकल अलङ्कारिकों ने लिखा है । और अनुभव से भी यह अभेद ज्ञान ही सिद्ध होता है । इस अभेद ज्ञान का मूल क्या है यदि खोजते हैं तब दोनों अर्थों का एक ही पद से उपादान करने के सिवाय और कोई मूल नहीं मालूम पड़ता है । और एक पद से कहे हुए अनेक अर्थों में अभेद ही भासित होता है । इसलिए उल्लास्य कालकरवाल इत्यादि पद्यों में दोनों अर्थों में एक पद से कहने के कारण अभेदाध्यवसान जब युक्ति संगत है तब अभेद को ही व्यंग्य मानना उचित होगा, उपमा को नहीं ।

कारिकनिबद्धम्, अनुभवसिद्धश्च। तत्र मूलान्वेषणे विधीयमाने एकपदोपात्तत्वान्न शक्यते मूलमन्यन्निर्वक्तुम्। एकपदोपात्तो ह्यनेकोऽप्यर्थोऽभिन्नतयैव भासते। इत्थं च "उल्लास्य कालकरवाल—" इत्यादावप्येकपदोपात्ततया द्वयोरर्थयोरभेदाध्यवसानस्य युक्तत्वेनाभेदस्यैव व्यंग्यत्वमुचितं नोपमायाः। श्लेषे द्वयोरर्थयोर्वाच्यत्वम्, एककालत्वञ्च। इह तु एकस्य वाच्यत्वम्, अपरस्य व्यंग्यत्वम्, भिन्नकालत्वं चेति। एतावन्मात्रेणैव एकपदोपात्तत्वप्रयुक्तमभेदाध्यवसानं न शक्यं त्यक्तुम्, व्यंग्यताया भिन्नकालत्वस्य चाभेदप्रतिपत्तावबाधकत्वात्। एतेन "रूपकस्य उपमाज्ञानाधीनज्ञानत्वेन प्रथमोपस्थिततया तस्या एव सम्बन्धत्वं कल्प्यम्" इति काव्य-

मर्मप्रकाशः

इह तु "उल्लास्य"—इत्यादौ तु। इतिः पूर्वग्रन्थसमाप्तौ।

मधुसूदनी

तत्र श्लेषभित्तिकाध्यवसानविषये मूलस्य हेतोरन्वेषणे तत्त्वतो ज्ञाने। द्वयोर्रथयोरेकपदोपात्तत्वादन्यत् भिन्नं मूलं कारणं निर्वक्तुं न शक्यते इत्यन्वयः।

मूलस्य तत्वतो ज्ञानार्थं तत्त्वमाह-एकपदेति। अनेकोप्यर्थो यदि एकेन पदेन उपात्तः उक्तस्तर्हि एक एव भासते तदेतदुक्तम्—अभिन्नतयेति। एकत्वेनेति-तदर्थः। युक्तत्वेनेत्यस्य कारणमाह-एकपदोपात्ततयेति। अभेदस्यैवेति। यदि अभेदस्य अध्यवसानं ज्ञानं जातं तर्हि अभेदस्य एव न तु सादृश्यस्य। तदेतदुक्तं नोपमाया इति।

श्लेषे शिलष्टपरम्परितरूपके श्लेषमूलकालंकारे विद्वन्मानसहंसेत्यत्र विदुषां मानसं हृदयमेव सरः इत्येवं हृदयसरसोर्द्वयोरर्थयोः वाच्यत्वं तथा एकस्मिन् काले वेद्यत्वं च। इह तु "उल्लास्य काल" "भद्रात्मन" इत्यादौ प्राचीनानां पद्ये तु। एतावान्मात्रेण द्वयोरर्थयोर्वाच्यत्वादिनिदर्शनेन केवलम्। तस्या एवेति। रूपकादयो हि सादृश्यमूलकास्ततश्च तेषां ज्ञानं सादृश्यज्ञानाधीनम्, प्रथमोपस्थितिरपि तस्य सादृश्यस्य एवं च प्रथमोपस्थितं सादृश्यमुपमानोपमेयभावाख्यं व्यंग्यमिह कल्पनीयम्।

बालक्रीड़ा

हाँ यह ठीक है कि श्लेष में दोनों अर्थ वाच्य होते हैं और उनकी प्रतीति एक ही काल में होती है। यहाँ एक वाच्य होता है और दूसरा व्यंग्य होता है तथा दोनों की प्रतीति भिन्न २ कालों में होती है; किन्तु इतने से ही एकपदोपात्तत्व प्रयुक्त आभेदाध्यवसान को छोड़ नहीं सकते क्योंकि व्यंग्यता और भिन्नकालत्व अभेद की प्रतिपत्ति में बाधक नहीं है।

फलतः काव्यप्रकाश के टीकाकार का रूपक का ज्ञान उपमा के ज्ञान के अधीन है

प्रकाशटीकाकारैरुक्तं नातीव श्रद्धेयमिति । प्रकृतमनुसरामः ।

मधुसूदनी

आलोच्यते । उल्लास्येत्यादौ नानार्थकशब्दघटितपद्ये प्राचीनैः ग्रन्थकारैष्टीकाकारैश्च समर्थितमुपमालाकारं तद्ध्वनिं च महता प्रघट्टकेन निराकृत्याभेदरूपकं स्यादिति तथोपमा गुणीभूतव्यंग्या चेति प्रसाधयांचकार तत्र भवान् पण्डितराजः । तत्रेदं निवेदनं यद् हृदयं निर्णयमेव धावति । तथाहि—

यत्र प्रस्तुतधर्मिको व्यवहारः साधारणविशेषणमात्रोपस्थापिताप्रस्तुतधार्मिकव्यवहाराभेदेन भासते (व्यंजनया प्रतीयते) सा समासोक्तिरिति समासोक्तिलक्षणं वदता भवतैव समसाधि यदप्रस्तुतव्यवहाराभिन्नः प्रस्तुतस्य व्यवहार इति । यतो हि प्रस्तुताप्रस्तुतौ द्वौ पदार्थौ । विभिन्नत्वाद्द्वयोरेकत्वं कारणमन्तरा नहि संभवति । यदि तयोरङ्गाङ्गिभावः स्वीक्रियेत तदा संजाघटीत्यपि । अंगत्वं गुणत्वं नाम उपस्कारकत्वादन्यन्नहि किमपि वस्तु; एवं हि समासोक्तौ अप्रकृतव्यवहारः प्रकृतस्य उपस्कारकतया समासोक्तेरपराङ्गत्वं सुतरां सिद्धं भवति । भवतापि समासोक्तिप्रकरणे समुदलेखि=अप्रकृतार्थ उपस्कारकतया गुण इति रमणीयः पन्थाः=इति । किन्तु उपमायां तथा नास्ति । यतो हि-सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालंकृतिः । सादृश्यं च साधारणधर्मप्रयोज्यमुपमानोपमयमोः साम्यं नाम । एवं साम्यस्य सादृश्यस्यैव उपस्कारकत्वमायातं; सादृश्यांशेन उपमानेन अप्रकृतेन उपमेयस्य प्रकृतस्य उपस्कारकत्वं

बालक्रीड़ा

अतः प्रथम उपस्थिति के कारण उपमा के सम्वन्ध की ही कल्पना करना उचित है । यह कहना श्राद्धेय नहीं है ।

टीकाकार महाशय का यह भाव है कि "उल्लास्य कालकरवाल" जैसे स्थलों में रूपक नहीं मानकर उपमा ही मानना युक्त है क्योंकि रूपक के मूल में सादृश्य है । सादृश्य के ज्ञान के ऊपर ही रूपक की प्रतीति निर्भर है अतः जब सादृश्य की प्रतीति के विना रूपक की सत्ता नहीं है तब प्रथमोपस्थित सादृश्य ही को यहाँ व्यंग्य मानकर व्यवहार करना उचित है ।

आलोचन । भगवन् ! पण्डितराज ! आपने उल्लास्य जैसे नानार्थक शब्द घटित पद्यों में प्राचीन ग्रंथकार एवं टीकाकारों के द्वारा समर्थित उपमालंकार को रूपक एवं उसकी ध्वनि को गुणीभूत व्यंग्य सिद्ध करने का प्रयास किया है उस पर हमारा निवेदन है कि (हृदयं निर्णयमेव धावति) हृदय निर्णय करना चाहता है—समासोक्ति का लक्षण आप ने लिखा है कि जहाँ केवल विशेषणों से उपस्थापित अप्रस्तुत धार्मिक व्यवहार का अभेद, प्रस्तुत धार्मिक व्यवहार में (भासते) व्यञ्जना से प्रतीत होता है वह समासोक्ति है । इससे सुतरां सिद्ध है कि अप्रस्तुत व्यवहार प्रस्तुत का अंग है । क्योंकि प्रस्तुत एवं अप्रस्तुत दो पदार्थ हैं उनमें किसी हेतु के विना अभेद एकता कैसी, हाँ एक अंगी और दूसरा उसका अंग वन जाय तव एकता आ सकती है । और अंग का अर्थ है उपस्कारक; फ़लतः समासोक्ति में अपक्रत व्यवहार प्रकृत का उपस्कारक हो जाने से समासोक्ति को अपराङ्ग

### मधुसूदनी

स्वप्रायितमेव हि । उदाहरणैरपि भवता अन्यैरालंकारिकैश्च तथैव निरणायि । तथाहि—अथेदमुदाह्रियत इत्युक्त्वा—

गुरुजनभयमद्विलोकनान्तः समुदयदाकुलभावमावहन्त्याः ।
दरदलदरविन्दसुन्दरं हा हरिणदृशो नयनं न विस्मरामि ॥

अत्र दलदरविन्दशब्दस्य उपमानवाचकस्य सुन्दरशब्देन सामान्यवचनेन (उपमानानि सामान्यवचनैरिति सूत्रेण) समासे प्रतीयमाना (व्यज्यमानेत्यर्थो न, किंतु ज्ञायमानेत्यर्थः) उपमा सकलवाक्यार्थस्य विप्रलम्भश्रृंगारस्य स्मृत्युपस्करण द्वारा उपस्कारकतया अलंकार इत्यवोचि । अथ च ।

स्वप्नेषु समरेषु त्वां विजयश्रीर्न मुञ्चति । प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा । इत्यत्र स्वाधीनपतिकोमानिका विजयश्रीरूपोपमेयिका उपमा त्वामितिपदबोध्यं तादृशं राजानमुपस्करोति । एवं हि अलंकारसिद्धान्तपथा वाक्यार्थः सादृश्येन एव उपस्क्रियते नतु अप्रकृतेन सादृश्यांशेन प्रकृतः सादृश्यांश उपस्क्रियते । तर्हि उपमालंकारेण सह समासोक्तेः का तुलना ।

किं च श्लेषे हि श्लेषभित्तिकाध्यवसानं द्वयोरर्थयोरिति सकलालंकारिकनिबद्धम्, अनुभवसिद्धञ्चेति समुदटंकि; तत्रेयं प्रार्थना भगवन् ? श्लेषस्य बहूनि उदाहरणानि भवता प्राचीनैश्च स्वग्रन्थेषु न्यरूपिषत । परं कापि अभेदाध्यवसानं न अवलोक्यते । तथाहि—एकया श्रुत्या अनेकार्थप्रतिपादनं श्लेष इति सुलक्ष्य संभूत्यर्थं सकलजगतामिति सभंगोदाहरणे "पद्मारब्यं तत्किमपि ललितं वस्तु वस्तुष्टयेऽस्तु इत्यत्र पद्मकमलयोः द्वयोरर्थयोः पृथक् पृथगेव बोधः न तु अभेदाध्यवसानम् ।

### बालक्रीड़ा

गुणीभूतव्यंग्य माना जाता है : आपने भी समोसोक्ति प्रकरण में लिखा है कि "अप्रकृतार्थं उपस्कारकतया गुण:" इति प्रकार एव रमणीय : किन्तु उपमा में यह स्थिति नहीं है क्योंकि आपने लिखा है कि वाक्यार्थोपस्कारक सुन्दर सादृश्य का नाम उपमा है—सादृश्य का निर्वचन आप लोगों ने किया है कि साधारण धर्म के द्वारा प्रस्तुत एवं अप्रस्तुत में तुलना । तब बतलाइये कि कहाँ अप्रस्तुत उपमान प्रस्तुत उपमेय का उपस्कारक होता है । हाँ सादृश्य उपस्कारक होता है ।

जैसा कि उदाहरणों से भी स्पष्ट होता है ।

**स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुंचति**
**प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा**

यहाँ स्वाधीनपतिका एवं विजयश्री में तुलना है सादृश्य है उससे तादृश राजा उपस्कृत है अलंकृत है । जो कि राजा उपमेय नहीं है । प्रावृषेण्य इव वारिवरो मे वेदनां हरतु वृष्णिवरेण्य:" इस आप के द्वारा उल्लिखित उपमा के उदाहरण में भी यही परिस्थिति है । यहाँ मत्सम्बन्धिवेदनाकर्मकहरणकर्त्तृत्वरूप साधारणधर्मप्रयोज्या मेघ के साथ कृष्ण की उपमा है सादृश्य है । यह सादृश्य ही सकलवाक्यार्थ (श्लोकवक्तृनिष्ठ भगवद्विषयक) रति भाव का उप-

## मधुसूदनी

करकलितचक्रघटन इति अभंगोदाहरणे "हरिरस्तु भूतये भवताम्" इत्यत्र विष्णुसूर्ययोः तथैव बोधो नतु तत्। तथा—सर्वदो माधवः पायात् योऽगं गां समदीधरत्। इत्यर्थश्लेषे च उमाधवमाधवयोरपि सैव कथा। एवं क्वापि श्लेषे द्वयोरर्थयोरभेदाध्यवसानं नास्ति। अथ च श्लेषे श्लेषभित्तिकेत्युच्यमाने भित्तिकपदार्थः मूलं कारणमित्येव तर्हि श्लेषे द्वयोरर्थयोरभेदाध्यसानस्य भित्तिः मूलं श्लेषान्तरं गवेषणीयं स्यात्। अहो महानेव भ्रमः।

शृणु भोः। अत्र श्लेषपदेन श्लेषमूलकालंकारे श्लिष्टपरम्परितरूपकादावित्यर्थो बोध्यः। अस्तु भगवन्? स्वीकरोमि।

यच्च श्रीमद्भिः प्रत्यपादि-इत्थं च उल्लास्य कालकरवाल इत्यादावपि एकपदोपात्ततया द्वयोरर्थयोरभेदाध्यवसानस्यैव युक्तत्वेन अभेदस्यैव व्यंग्यत्वमुचितं नोपमायाः। तत्र निवेद्यते। तत्र तत्र अलंकारनिरूपणे श्रीमद्भिः सामान्यालंकारलक्षणे च यथा परिकरनिरूपणावसरे सुन्दरत्वे सति उपस्कारकत्वमलंकारत्वमिति, विशेषलक्षणेषु च सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमेति रीत्या सुन्दरत्वस्य निवेशो व्यधायि। अथ च यत्र योऽलंकारः सहृदयान् चमत्कुरुते तत्र स एवालंकारः इत्यपि भवद्भिरेव प्रत्यपादि तत्र तत्र। एवं हि "करतलनिर्गलदविरलेति पद्ये उदग्दिशागजसदृशो

## बालक्रीड़ा

स्कारक है न कि सादृश्य का अंश अप्रस्तुत उपमान प्रकृत उपमेय का उपस्कारक है। अतः प्रकृत में उपमा समासोक्ति की तुलना में गुणीभूत व्यंग्य कोटि में नहीं आ सकती है।

दूसरे आपने जो लिखा है कि श्लेष में श्लेष भित्तिक अभेदाध्यवसान होता है। भगवन्? श्लेष के जो उदाहरण प्राचीनों ने तथा आपने लिखे हैं उनमें कहाँ भी अभेदाध्यवसान नहीं देखा जाता है।

जैसे सभंग एवं अभंग रूप शब्द श्लेष अथवा अर्थ श्लेष के उदाहरणों में दोनों अर्थ अपनी-अपनी जगह अपने रूप में ही ज्ञान के विषय होते हैं अभेद तो उनमें कहीं भी किसी भी आलंकारिक ने नहीं लिखा है। सर्वदो माधवः, पायाद् यो गंगां समदीधरत्। यहाँ उमाधव एवं माधव दोनों अर्थ लिये हैं किन्तु दोनों में अभेद नहीं है। अतः श्लेषे हि यह पाठ न होकर श्लेषमूलकालंकारे यह पाठ होना चाहिए। अस्तु।

आपने लिखा है कि श्लेष मूलक अलंकारों में श्लेष के कारण दोनों अर्थों में अभेद का ज्ञान होता है अतः प्रकृत "उल्लास्य" इत्यादि पद्यों में उपमा को व्यंग्य न मानकर अभेद को व्यंग्य मानना चाहिए। फलतः उपमालंकार न कहकर रूपकालंकार कहना चाहिए। इस विषय में हमारा निवेदन है कि यहाँ अलंकार स्थल में जहाँ जो अलंकार सहृदयों को चमत्कृति जनक मालूम पड़े वहाँ वही अलंकार माना जाता है। इसीलिए अलंकारों के विशेष लक्षणों में या अलंकार के सामान्य लक्षण में हृद्यत्व का निवेश आपने भी किया है। तब प्रकृत में उदग्दिग्गज के सदृश राजा सबसे उत्कृष्ट है इसी अर्थ में चमत्कार है क्योंकि राजा का वर्णन कवि करता है जिससे उसको धनादि लाभ संभावित है और यदि

एवमलंकारान्तरमपि शब्दशक्तिमूलानुरणनस्य विषयः। यथा यमुनावर्णने—'रविकुलप्रीतिमावहन्ती नरविकुलप्रीतिमावहति। अवारितप्रवाहा सुवारितप्रवाहा'' । इह नराणां वीनां च कुलस्य प्रीतिमावहतीति प्रकृते-

### मर्मप्रकाशः

अलंकारान्तरमिति। उपमातिरिक्तमपीत्यर्थः । रवीति। सूर्यवंशप्रीतिं मनुष्यपक्ष्युभयसमूहप्रीतिं च। अवारीति। अप्रतिबद्धप्रवाहा। शोभनं वार्जलं तत्संजातं यस्य

### मधुसूदनी

राजा सर्वोत्कृष्ट इत्युपमाकरणे राजा स्वात्मनि सर्वोत्कृष्टत्वं सम्भाव्य कविं सत्कुरुते धनादिभिः। अभेदकरणे गजाभिन्नो राजेति बोधे। गजः सर्वोत्कृष्ट इति प्रतीतिः स्यात् यतो हि राजा गजः संवृत्तः। ततश्च गजस्य सर्वोत्कृष्टत्वे राज्ञः कस्तोषः कथं च कवेरिष्टधनादिलाभः। एवं च उपमायामेव चमत्कारादुपमयैव व्यपदेशो ज्यायान्।

अन्यच्च—अध्यवसानं लक्षणैव। यतो हि सारोपासाध्यवसानाभ्यां लक्षणाया निरूपयिष्यमाणत्वात् भवता। परमत्र लक्षणाया गन्धोऽपि नास्ति। तथा च कारतलेत्यादि पद्येषु आचार्याणामुपकालंकारध्वनिव्यपदेश एव सुस्थः इति।

### बालक्रीड़ा

यहाँ अभेद करेंगे तो राजा हाथी बन जायगा। तब हाथी सबसे उत्कृष्ट है यह अर्थ प्रतीत होगा। इससे राजा को क्या लाभ हुआ। फलतः कवि का इष्ट उपमा से ही सिद्ध होने से यहाँ उपमा में चमत्कार है।

एक बात और भी है कि अध्यवसान के माने लक्षणा है। क्योंकि सारोपा साध्यवसाना इस प्रकार से लक्षणा का निरूपण आप आगे करेंगे। किन्तु यहाँ तो लक्षणा की गन्ध भी नहीं है तब अभेदाध्यवसान कैसा फलतः आचार्यों का उपमालंकारध्वनि मानना उचित ही है।

इस प्रकार और अलंकार भी शब्दशक्तिमूल अनुरणन के विषय होते हैं। जैसे यमुना के वर्णन में रविकुल सूर्यवंश में प्रेम करती हुई रविकुल में प्रेम नहीं करती है। जिसके प्रवाह को रोकना कठिन है तथापि जिसका प्रवाह सुख से रोका जा सकता है। यहाँ मनुष्य एवं पक्षियों के कुल में प्रेम करती है। इस प्रकृत अर्थ के सिद्ध होने पर सूर्य वंश में प्रेम नहीं करती है तथा सुन्दर जल से सम्पन्न प्रवाह वाली इस प्रकृत अर्थ के सिद्ध होने पर जिसका प्रवाह रोका जा सकता है ऐसे द्वितीय अर्थ एवं विरोध भी व्यक्त होते हैं। और जगहों में भी ऐसे ही समझना।

यहाँ यदि रविकुल में प्रेम करती हुई भी रविकुल में प्रेम नहीं करती है अवारित प्रवाह होते हुए भी सुवारित प्रवाह है इस तरीके से अपि का अन्तर्भाव करते हैं तब विरोध

ऽर्थे सिद्धे रविकुलप्रीतिं नावहतीति द्वितीयोऽप्रकृतोऽर्थः विरोधश्च। एव-मन्यत्राऽपि। यदि तु रविकुलप्रीतिमावहन्त्यपि न रविकुलप्रीतिमावहति। अवारितप्रवाहापि सुवारितप्रवाहा इत्यपिरन्तर्भाव्यते तदा विरोधांशस्यापि-नोक्तत्वाद् द्वितीयार्थस्य च तदाक्षिप्तत्वान्न ध्वनित्वम्। निपातानां द्योत-कतानयेऽपि स्फुटद्योतितस्य तदाक्षिप्तस्य च वाच्यकल्पत्वान्न तथात्वम्।

ननु "मृणालवलयादि दवदहनराशिः" इत्यत्र विरोधाभासस्य कथं वाच्यालंकारत्वम्। विरोधांशस्य शब्दवाच्यताविरहेण व्यंग्यताया एवा-

### मर्मप्रकाशः

तादृशः प्रवाहो यस्याः सा। विरोधश्चेति। अलंकारो ध्वन्यत इति शेषः। द्वितीयार्थस्य चाप्रकृतार्थस्य च। तदेति। अपिबोध्यविरोधेत्यर्थः। ननु निपातानां द्योतकत्वेन उक्तत्वा-भावाद् ध्वनित्वमेवात आह—निपातानामिति। तथा च द्योतकत्वं विलक्षणमिति भावः। न तथात्वं न ध्वनित्वम्। प्राचीनोदाहरणे शंकते—नन्विति।

### मधुसूदनी

अन्यत्रापीति। न वारितः अप्रतिबद्धः प्रवाहः स्रोतो यस्याः सा तथाभूता। सुखेन वारितः प्रतिबद्धः प्रवाहो यस्याः सा। इति प्रकृतेऽर्थे सिद्धे। इति द्वितीयोऽप्रकृतोऽर्थः, विरोधश्चालंकारः शब्दशक्तिमूलानुरणनविषयो भवति।

तदेति। अपिशब्दस्यान्तर्भावनसमये। द्वितीयार्थस्य च तदाक्षिप्तेति। अपिनोक्तविरोधद्वारा प्राप्तत्वात्। ननु निपाता द्योतका इत्यपि पक्षः, तथा च न ध्वनित्वमिति कथं कथनमित्याह—निपातानामिति। स्फुटद्योतितस्य विरोधस्य तदाक्षिप्तस्य च निपाताक्षिप्तस्य द्वितीयार्थस्य न तथात्वं न ध्वनित्वम्।

नन्विति। नन्विति शंकायाम्। अपेरन्तर्भावने विरोधस्य वाच्यत्वम्, अपेर नन्तर्भावने तस्य व्यंग्यत्वं, तर्हि कथम्—

अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिरिति काव्यप्रकाशोक्ते जात्या जातेर्विरोधोदाहरण अपेरभावे विरोधाभासस्य कथं वाच्यालंकारत्वं

### बालक्रीड़ा

अपि से वाच्य हो जाता है और द्वितीय अर्थ भी उससे प्राप्त हो जाता है। अतः प्रकृत में अपि के अभाव में विरोध ध्वनि ही होगी।

यद्यपि निपात द्योतक होते हैं यह भी एक पक्ष है तथापि स्फुट द्योतित विरोध तथा उससे आक्षिप्त द्वितीय अर्थ वाच्य कल्प ही हैं अतः ध्वनित्व उनमें नहीं है।

अब प्रश्न होता है कि मृणाल कंकण (वलय) दावाग्नि समूह है। यहाँ विरोध को किसी भी शब्द से वाच्य नहीं होने से व्यंग्य ही मानना उचित है। तब विरोधाभास वाच्यालंकार कैसे।

भ्युपगन्तव्यत्वात्। न च विरोधविशिष्टाभेदस्य संसर्गत्वाद् वाच्यार्थबोधविषयतया विरोधस्य वाच्यत्वमिति वाच्यम्। विरोधाभेदयोः परस्परविरुद्धत्वेन एककालावच्छेदेनैकसंसर्गत्वस्यानुपपत्तेः। नामार्थयोरभेदस्यैव संसर्गतया विरोधस्यापि संसर्गत्वे मानाभावाच्च। पर्यन्ते दवदहनराशिप-

### मर्मप्रकाशः

ननु तादात्म्यवदुपपत्तिः स्यादत आह—नामार्थयोरिति। ससंर्गत्वे तद्घटकत्वे। तादात्म्यस्य संसर्गत्वं तु तन्त्रान्तरे प्रसिद्धमिति भावः। ननु प्रतीत्यन्यथानुपपत्तिरेव मानमत

### मधुसूदनी

संगच्छते। तर्हि किं स्वीकार्यमित्याह—विरोधांशस्येति। अवान्तरशंकां तत्परिहारं च स्पष्टयितुमुपक्रमते-नचेति। अयं भावः। अत्र मृणालत्वजातेः दहनत्वजात्या विरोधः। तादृशविरोधविशिष्टयोः मृणालदहनयोरभेदो हि प्रकृते संसर्गः। ततश्च विरोधविशिष्टाभेदस्य वाच्यार्थरूपेण बोधविषयतायां विरोधस्यापि वाच्यत्वमिति नाशंकनीयम्। ननु कुतो नाशंकनीयमित्याह-विरोधेति। विरोधो ययोः, तयोरभेदोऽपि दहनाभिन्नो मृणाल इत्येवंरूपेण। इति चर्चैव परस्परविरुद्धत्वादसंगता। ततश्च एकस्मिन् काले विरोधाभेदयोरचर्चनीयतया विरोधविशिष्टाभेदरूपेणैकसंसर्गत्वमेवानुपपन्नम्। विरोधस्य संसर्गतानुपपत्तौ हेत्वन्तरमाह-नामार्थयोरिति। यथा नामार्थयोरभेदः संसर्गः तथा तयोः विरोधोऽपि संसर्ग इत्यत्र प्रमाणं नास्ति।

ननु चेद् विरोधस्याऽसंसर्गत्वं तर्हि दहनाभिन्नो मृणाल इति एवं विरोधविशिष्टयोस्तयोरभेदबोधः कथं स्यादित्यत आह-पर्यन्ते ईति। पर्यन्ते विरोधपरिहारार्थं क्रियमाणे पार्ष्ठिके बोधे। तथात्वस्येति। तथात्वस्य विरोधोदाहरणाताया अनपायात् वर्त्तमानत्वात्।

### बालक्रीड़ा

अवान्तर शंका एवं उत्तर। नामार्थयोरभेदान्वयः इस साधारण नियम के अनुसार यहाँ विरुद्ध दो पदार्थों में अभेद संसर्ग है। और जब अभेद वाच्यार्थबोध का विषय होता है तब वह अभेद सम्बन्ध जिन पदार्थों में है उनका विरोध भी वाच्य ही होगा।

ऐसा नहीं कह सकते हैं। क्योंकि विरोध तथा अभेद दोनों परस्पर विरुद्ध हैं अतः उनमें एक काल में एक संसर्गता नहीं रह सकती है। और नामार्थों में अभेद ही संसर्ग होता है विरोध संसर्ग नहीं होता है। क्योंकि विरोध भी नामार्थों में संसर्ग होता है इसका कोई प्रमाण नहीं है।

पर्यन्त म विरोध के परिहार के समय अर्थात् अत्यन्त कोमल एवं सरस मृणाल; वन की अग्नि कैसे हो सकता है ऐसा जब विचार उपस्थित होता है तब कहा जाता है कि विरही को वियोग दशा में कोमल पदार्थ भी अग्नि के समान प्रतीत होता है। इस तरह दवदहनराशि पद की सदृश में लक्षणा की जाती है फलतः विरोध का तिरोधान भी हो जाता है।

दस्य सदृशलाक्षणिकतया विरोधांशस्य तिरोधानाच्च । मैवम् । उक्तपद्यस्य विरोधोदाहरणतामात्रे तात्पर्यात्, व्यंग्यत्वेऽपि तथात्वस्यानपायात् । वाच्यविरोधोदाहरणतायां त्वपिरन्तर्भाव्यः ।

केचित्तु—'विरोधांशस्य व्यंग्यत्वेऽपि विरोधिद्वयस्य वाच्यतामात्रेण विरोधाभासस्य वाच्यालंकारव्यपदेशोपपत्तिः । इत्थमेव चांशान्तरस्य व्यंग्यत्वेऽपि एकांशमादाय समासोक्त्यादीनामपि वाच्यालंकारव्यपदेशः' इत्याहुः ।

यथा वा

कृष्णपक्षाधिकरुचिः सदासम्पूर्णमण्डलः ।
(भूपो ?) राजाऽयं निष्कलङ्कात्मा मोदते वसुधातले ॥

### मर्मप्रकाशः

आह—पर्यन्त इति । पर्यवसान इत्यर्थः । मात्रपदेन वाच्यत्वनिरासः । अन्तर्भाव्यः मृणाले-त्यादौ । शब्दशक्तिमूलालंकारान्तरध्वनिमुदाहरति—यथा वेति । भगवत्पक्षेऽधिका प्रीति-

### मधुसूदनी

केचित्त्विति । निपातानां द्योतकत्वाद् विरोधांशस्य व्यंग्यत्वेऽपि विरोधिनोर्मृणालदहनयोर्द्वयस्य । अशांन्तरस्येति । अप्रकृतधर्मिणो व्यंग्यत्वेऽपि एकांशप्रकृतधर्मिणो वाच्यत्वमादाय ।

कृष्णेति । कृष्णपक्षे भगवद्विषये अधिका रुचिः प्रेमा यस्य सः । अत एव निष्कलंको दोषरहित आत्मा चित्तं यस्य स अर्थात् शुद्धचित्तः । अत एव सदा सर्वस्मिन् काले । सम्पूर्णं मण्डलं "स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि" इत्युक्तं सप्ताङ्गम् यस्य सोयं राजा नृपः वसुधातले मोदते । अत्र भूपोऽयमित्य इत्यपपाठः ।

### बालक्रीड़ा

सिद्धान्ती कहता ह कि उक्त पद्य का विरोध की उदाहरणता मात्र में तात्पर्य है । और वह उदाहरणता विरोध के व्यंग्य होने पर भी हो सकती है । कोई रुकावट नहीं है । वाच्य विरोध की उदाहणता के लिए दोनों पदों के बीच में अपिशब्द रखना उचित है ।

कोई तो कहते हैं कि निपातों की द्योतकता से विरोध के व्यंग्य होने पर भी विरोधिद्वय के वाच्य होने से विरोधाभास अलंकार भी वाच्य ह ऐसा कहा जा सकता है । इसी तरह अंशान्तर अर्थात् अप्रकृत धर्मी के व्यंग्य होने पर भी प्रकृत के वाच्य होने से समासोक्ति वगैरह को भी वाच्यालंकार कह सकते हैं ।

यथा वा से दूसरा उदाहरण कहते हैं । भगवान् कृष्ण में जिसकी अधिक रुचि याने प्रेम है । अत एव कलंकरहित तथा सदा अपने प्रकृतिमण्डल से परिपूर्ण हुआ यह राजा

अत्र भगवत्पक्षाधिकप्रीत्यादिलक्षणे प्रकृतभूपोपयोगित्वात् प्रकृतेऽर्थे

## मर्मप्रकाशः

यस्य। सद्भिरा समन्तात् परिपूर्णं मण्डलं यस्य। निष्कलंकः पवित्र आत्मा यस्य सोऽयं भूपो भुवि मोदत इति प्रकृतोऽर्थः। कृष्णपक्षेऽसितपक्षेऽधिकरुचिः। सदा सर्वकाले सम्पूर्णमण्डलः। निष्कलंकः कलंकशून्य आत्मा यस्य सोऽयं भुवि मोदत इति चन्द्रवैधर्म्यात्मा प्रकृतोऽर्थः। यद्वा कृष्णपक्षे पापकर्मण्यधिकरुचिः। सदासं यथा तथा पूर्णं मण्डलं यस्य। निष्कलंकोऽत्यन्तकलंक आत्मा यस्य सोऽयमित्यप्रकृतोर्थः। तत्प्रेति। अप्रकृतार्थप्रयुक्तव्यतिरेकालंकार इत्यर्थः। व्यज्यत इति शेषः।

## मधुसूदनी

तस्य स्थाने "राजा" इति सुपाठः। विशेषणमात्रस्य श्लिष्टत्वे समासोक्तिः। विशेष्यविशेषणयोरुभयोः श्लिष्टत्वे, प्रकृतत्वे, वाच्यत्वे च श्लेषः। तयोरुभयोः श्लिष्टत्वे अप्रकृतस्य व्यंग्यत्वे शब्दशक्तिमूलध्वनिरिति सिद्धान्तात् विशेष्यं राजपदमपि श्लिष्टमपेक्षितम्। राजा मृगांके क्षत्रिये नृपे इति कोषानुसारं राजशब्दोऽनेकार्थकः इदं शब्दशक्तिमूलध्वनेरुदाहरणं ततोऽत्र तादृशानामर्थानामुपन्यासः करणीयः येऽर्थाः शब्दशक्तिं सहेयुः किन्तु भूपशब्दो न तथा। ततश्च राजेति सुपाठ इति सुष्ठु। इति प्रकृतोऽर्थः।

कृष्णपक्षे बहुलपक्षे प्रतिदिनं कलानां ह्रसमानत्वात्, सदा कृष्णपक्षं यावत् असम्पूर्णमण्डलः, अत एव असम्पूर्णमण्डलत्वादेव कृष्णपक्षे अधिका रुचिः कान्तिर्नास्ति। अत्र अकारं प्रतिषेधार्थकं प्रश्लिष्य विग्रहः कार्यः। अ अधिका रुचिः। आधिकारुचिः। कृष्णपक्षे आधिका रुचिर्यस्य सः। अः शब्दः स्यादभावेऽपि

## बालक्रीड़ा

वसुधा पर आनन्द से राज्य करता है। यह प्रकृत अर्थ वाच्य है। राजा का प्रकृतिमण्डल निम्नलिखित है—

स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च॥

कृष्णपक्ष में कलाओं के प्रतिदिन ह्रास होने से जो सदा याने कृष्णपक्ष भर पूर्णमण्डल नहीं है अतएव कृष्णपक्ष अर्थात् वदि में जिसकी रुचि कान्ति अधिक नहीं है ऐसा कात्मा जलस्वरूप (कं शिरोम्बुसुखेषु च इस कोष के अनुसार क माने जल वह है आत्मा स्वरूप जिसका) यह (राजा मृगांके क्षत्रिये नृपे इस कोष के, अनुसार) चन्द्रमा निष्कल होने से अर्थात् कलाओं से शून्य होने के कारण वसुधातल पर मुदित नहीं हो रहा है। यह अप्रकृत चन्द्रमा यहाँ द्वितीय अर्थ है। जो कि वैधर्म्यात्मा है अर्थात् गुणविशेषवत्वस्वरूप है। अत एव तत्प्रयुक्त अर्थात् वैधर्म्य के कारण यहां व्यतिरेक अलंकार है।

(उपमानादुपमेयस्य गुणविशेषवत्वेन उत्कर्षो व्यतिरेकः गुणविशषत्वत्वेनेति तृतीयान्तं वैधर्म्यपरम्। यह पण्डितराज का किया हुआ लक्षण और पदकृत्य है।) जहां उपमये का

शक्त्या प्रतीतिपथमवतीर्णे द्वितीयोऽर्थोऽप्रकृतो वैधर्म्यात्मा तत्प्रयुक्तो व्यति-

## मधुसूदनी

स्वल्पार्थप्रतिषेधयोः। अनुकम्पायां च तथा वासुदेवे त्वनव्ययमिति मेदिनी। कात्मा 'कं शिरोम्बुसुखेषु च' इति अमरकोषानुसारं कं जलम् तदेव आत्मा स्वरूपं यस्य स कात्मा जलस्वरूपः। राजा चन्द्रः। वसुधातले निष्कलं कला-रहितं यथा स्यात्तथा अ मोदते। स्वच्छो नास्ति। वसुधातलेऽमोदते इत्यनयो-र्मध्ये "अ," इत्यव्ययं निषेधार्थकं प्रश्लिष्यते। तेन उपरिनिर्दिष्टार्थः।

वैधर्म्यात्मा गुणविशेषवत्वस्वरूपः। तत्प्रयुक्तः वैधर्म्यप्रसयुक्तः व्यतिरेकालंकारो ध्वन्यते। अयं भावः। उपमानादुपमेयस्य गुणविशेषवत्वेन उत्कर्षो व्यतिरेक इति पण्डितराजकृतं व्यतिरेककलक्षणं गुणविशेषवत्वपदघटितं वर्तते। तत्र गुणविशेष-वत्वं च वैधर्म्यार्थकमिति तत्कृतपदकृत्येन "प्रतीपादिवारणाय गुणविशेषवत्वेनेति तृतीयान्तं पदं वैधर्म्यपरम्"। इत्यनेन स्पष्टम्।

तच्चेदमेव इह यत् प्रकृतो राजा कृष्णपक्षे भगवत्पक्षेऽधिकरुचिः। अप्रकृतश्चंद्रः कृष्णपक्षे बहुलपक्षे अनधिकरुचिः (कान्तिः)। राज्ञो मण्डलं सदा सम्पूर्णम्। चन्द्रस्य

## बालक्रीड़ा

उपमान की अपेक्षा गुणविशेषशालिता अर्थात् वैधर्म्य के कारण उत्कर्ष हो वहां व्यतिरेक अलंकार होता है। इसलिए इस लक्षण के अनुसार वैधर्म्य प्रयुक्त व्यतिरेक अलंकार प्रकृत पद्य में है।

यहां वैधर्म्य यह है। प्रकृत राजा की कृष्णपक्ष में अधिक रुचि है अप्रकृत चन्द्रमा की कृष्णपक्ष में अधिक रुचि नहीं है। राजा का मण्डल सदा संपूर्ण है। चन्द्रमा का मण्डल सदा कृष्णपक्ष भर में सम्पूर्ण नहीं है। राजा निष्कलङ्क है अतः वसुधातल पर मुदित है। कात्मा चन्द्रमा निष्कल कला शून्य होने से वसुधा पर मुदित नहीं है।

(अ, मा, नो, ना प्रतिषेधे) इस कोष के अनुसार प्रतिषेधार्थक अ अव्यय है। उस अ का अधिकरुचि शब्द के साथ समास किया जैसा अ अर्थात् नास्ति अधिका रुचिर्यस्य स आधिक-रुचिः। कृष्णपक्ष आधिकरुचिः (अकः सवर्णे दीर्घः) सवर्ण दीर्घ हो जाने से कृष्णपक्षा-धिकरुचिः बन गया। "कात्माऽमोदते" इसके बीच में भी उसी प्रतिषेधार्थक अकार का प्रश्लेष चन्द्र पक्ष में है। इसीलिए अ मोदते न मोदते यह अर्थ होता है।

यह शब्दशक्तिमूल अलंकार ध्वनिका उदाहरण है अतः इसमें ऐसे ही अर्थों का उपन्यास करना चाहिए जो शब्दशक्ति को सहन कर सके। फलतः "भूपोऽयं" इसमें भूप शब्द नानार्थक नहीं है इसके स्थान में पण्डितराज का पाठ "राजाऽयं" यही होगा।

अन्यथा यदि अप्रकृत धर्मी भी शब्द शक्ति को सहन नहीं करेगा तो समासोक्ति अलंकार वाच्य होगा। शब्दशक्ति मूल व्यतिरेकालंकारध्वनि नहीं होगी अतः "भूपोऽयं" यह मुद्रित पाठ ठीक नहीं है उसके स्थान पर राजाऽयं यह पाठ शुद्ध है।

रेकश्च। न चात्र व्यतिरेकस्य कविगतराजविषयकरतिभावोत्कर्षकतया गुणीभूतस्य कथं ध्वनिव्यपदेशहेतुत्वम्, प्रधानस्यैव ध्वनिव्यपदेशहेतुत्वादिति वाच्यम्। उदासीने वक्तरि तत्त्वार्थकथनपरस्यास्य पद्यस्य वक्तृगतरतिव्यंजकत्वासंगतेः, गुणीभूतस्याप्यर्थस्य वाच्यार्थापेक्षया प्रधानतया ध्वनिव्यपदेशहेतुतायाः प्राचीनैः स्वीकाराच्च। अन्यथा—

"निरुपादानसंभारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाध्याय शूलिने॥"

### मर्मप्रकाशः

उदासीने। रतिरोषोभयानाविष्टे सतीति शेषः। अन्यथा तथानङ्गीकारे। निरुपेति। उपादानसंभार उपकरणसमूहस्तूलिकादिकं तद्रहितं यथा स्यात्तथा। अभित्तावेव शून्य एव चित्रं नानाकारं जगत्तन्वते तस्मै अनिर्वचनीयस्वरूपाय, कला चन्द्रस्य षोडशो भागस्तेन श्लाध्याय शूलिने महादेवाय नमः। पक्षे चित्रमालेख्यम्। कला आलेख्यक्रिया कौशलं च। तैः प्राचीनैः।

### मधुसूदनी

मण्डलं सदा कृष्णपक्षं यावत् असम्पूर्णम्। राजा निष्कलंकस्वरूपः सन् वसुधातले मोदते। कात्मा चन्द्रः निष्कलः कलाभिः शून्यः सन् वसुधायां मोदते न।

उदासीने वक्तरीति। अयं भावः। कवेर्वक्तुः, राजनि कोऽपि प्रेमा नास्ति तथा चन्द्रमसि कश्चिद्रोषो नास्ति। ततश्च वक्ता उदासीनः।

### बालक्रीड़ा

यहां प्रकृत राजा के उपयोगी होने के कारण भगवान् पक्ष में अधिक प्रीति रूप प्रकृत अर्थ शक्ति के द्वारा प्रतीत हुआ। उसके बाद द्वितीय अर्थ और व्यतिरेक व्यक्त हुआ।

शंका=यहां इस पद्य में व्यतिरेक गुणीभूत है क्योंकि वह; कवि के हृदय में जो राजा के विषय में प्रेम है उसका उत्कर्षक है तब कैसे ध्वनि व्यपदेश का हेतु हो सकता है। सिद्धान्त है कि प्रधान ही का नाम ध्वनि है।

उत्तर=ऐसा नहीं कहना चाहिए। क्योंकि यहां वक्ता उदासीन है उसका राजा पर न कोई प्रेम है और न चन्द्रमा पर कोई रोष है। और पद्य का तात्पर्य तत्त्वार्थ कथन में है अतः पद्य वक्तृगत रतिका व्यञ्जक है यह कहना असंगत है। और भी एक बात है कि पार्यन्तिक बोध के विषयीभूत अर्थ के प्रति गुणीभूत हुआ भी अर्थ यदि वाच्य अर्थ की अपेक्षा प्रधान है तब उसको प्राचीनों ने ध्वनि ही माना है।

यदि प्राचीन आचार्य ऐसा नहीं मानतें तो "विना कारण सामाग्री के और विना आधार के जगत् रूपी चित्र का निर्माण करनेवाले श्लाघनीय कलावान् भगवान् त्रिशूलधारी को नमस्कार है"।

इत्यत्र व्यतिरेकध्वनित्वं तैरुक्तमसंगतं स्यात् । व्यतिरेकस्य भगवद्विषयकरतिभावाङ्गताया अनुभवसिद्धत्वात् ।

शब्दशक्तिमूलवस्तुध्वनिर्यथा—

"राज्ञो मत्प्रतिकूलान्मे महद्भयमुपस्थितम् ।
बाले! वारय पान्थस्य वासदानविधानतः ॥"

अत्रोपभोगं देहीति वस्तु राजपदशक्तिमूलानुरणनविषयः । राजपदाच्चन्द्रोपस्थितावेव चन्द्रजनितभयवारणकारणत्वेनोपभोगस्याभिव्यक्तेः । न चात्र नृपचन्द्रयोरुपमानोपमेयभावः, भेदापोहरूपं रूपकं वा तथास्तु इति वाच्यम् । इह नृपरूपस्यार्थस्य चन्द्ररूपार्थगोपनमात्रार्थमुपात्तत्वेन युगप-

## मर्मप्रकाशः

राज्ञ इति । हे बाले ? त्वं मत्प्रतिकूलाद्राज्ञः सकाशादुपस्थितं महत्पान्थस्य मम भयं वासदानविधानतो वारयेत्यन्वयः । वासश्च दानं चेत्यर्थः । भेदापोहेति । अभेदेत्यर्थः ।

## मधुसूदनी

राज्ञ इति । मम विरहिणः प्रतिकूलात् वैरिणः राज्ञश्चन्द्रात् । आवासरूपदानस्य विधानतः । आवासदानयोर्विधानतः इत्यर्थकरणे दानपदार्थ उपभोग एव स्यात्तदा च गुणीभूतव्यंग्यता स्यात् । उपभोगपदार्थज्ञानं विना दानपदार्थाऽप्रतीतेः ।

राजपदाच्चन्द्रस्योपस्थित्यामेव उपभोगस्य अभिव्यक्तिरित्यन्वयः । चन्द्राज्जनितस्य भयस्य वारणे कारणं गृहे निवासविधानम् । ततश्च सति रहसि उपभोगोपलब्धिरिति भाव ः

## बालक्रीड़ा

इस पद्य में व्यतिरेकालंकार की ध्वनि है ऐसा उनका कहना असंगत हो जाता । क्योंकि प्रकृत पद्य में भी व्यतिरेक, भगवद्विषयक रतिभाव का अंग है यह अनुभवसिद्ध है ।

शब्दशक्तिमूल वस्तुध्वनि जैसे—यह राजा याने चन्द्रमा मेरे प्रतिकूल है अतः मुझे इससे बड़ा भय है अतः हे बाले ! अपने यहां आवास देकर मुझ पान्थ का भय निवृत्त करो ।

यहां "उपभोग मेरे साथ करो" यह वस्तु राजपद की शक्ति के कारण अनुरणनध्वनि का विषय है । यहाँ जब राजपद से चन्द्र की उपस्थिति होगी तभी उपभोग की अभिव्यक्ति होगी क्योंकि उसका कारण है चन्द्रजनित भय की निवृत्ति के लिये घर में आवास देना । उसका फल होगा कि एकान्त मिलते ही उपभोग हो जायगा ।

अवान्तर शंका—यहां उपभोगरूप वस्तु ध्वनि को न मान कर राजा एवं चन्द्र में उपमानोपमेयभाव या भेदापोहरूप रूपक को व्यंग्य मानना चाहिए । उत्तर—यहाँ केवल चन्द्र रूप अर्थ के छिपाने के उद्देश्य से राजरूप अर्थ का उपादान किया गया है इसलिए जहाँ एक साथ उपमानो

दुल्लसितोपमानोपमेयकयोरुपमारूपकयोस्तात्पर्यविषयताया अयोगात्। न चासंसृष्टार्थद्वयबोधने वाक्यभेद इति वाच्यम्। तुल्यकक्षतया द्वयोरसंसृष्टयोरर्थयोः प्रतिपिपादयिषितत्व एव तस्याभ्युपगमात्। इह तु आच्छादकप्रतीतिसमये आच्छाद्याप्रतीतिः, आच्छाद्यप्रतीतौ चाच्छादकन्यग्भाव एवेति नास्ति तुल्यकक्षता।

काव्यप्रकाशे तु—'शनिरशनिश्च तमुच्चैः' इत्यादिकमुदाहृत्य 'अत्र विरुद्धौ द्वावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यत' इत्युक्तम्। तच्च 'द्वौ शन्यशनी उदारानुदारौ चैकं कार्यं हननं भानं च' इति व्याख्यात-

### मर्मप्रकाशः

तथास्तु अनुरणनविषयोऽस्तु। तथा च तादृशालंकारध्वनेरेवोदाहरणम्, न वस्तुध्वनेरिति भावः। युगपदुल्लसिते उपमानोपमेये ययोस्तयोरित्यर्थः। तस्य वाक्यभेदस्य। आच्छादकेति। नृपरूपार्थेत्यर्थः। आच्छाद्येति। चन्द्ररूपार्थेत्यर्थः। शक्तिनियमेनेति भावः। अत्र बाले इति पदेन व्यंग्यस्य वाच्यायमानताकरणादयोग्यमेतत्।

शनिरिति। शनिर्ग्रहः, अशनिर्वज्रं च। पुनस्त्वर्थे। उदार उद्भटः। अनुदार अनुगतदारः। नृपदत्तैश्वर्येणाप्रवासात्। न उदारो यस्मादिति वा। पक्षेऽशनिः शनिविरोधी। नञ् असुरादाविव विरोध्यर्थकत्वात्। अनुदार उदारादन्यः। शबलितमेव।

### बालक्रीड़ा

पमेयभाव उल्लसित हो रहा है ऐसे उपमा या रूपक के विषय में कवि के तात्पर्य होने की कोई गुञ्जाइश ही नहीं है। यहां का भाव यह है कि उपभोग की प्रतीति संनिहित व्यक्तियों को नहीं हो जाय इसलिए चन्द्र को छिपाने के लिए राजरूप अर्थ का उपादान किया है। औंर यदि राजा और चन्द्र में उपमा या अभेद कर देते है तब तो उपभोग व्यंग्य नहीं होगा अतः कवि का तात्पर्य रूपक या उपमा में नहीं है।

पुनः शंका—यदि इन उपस्थित होने वाले दोनों अर्थों में कोई भी संसर्ग नहीं माना जायगा तो इनके उपस्थापक वाक्यों में (अर्थ भेद से शब्द भेद होता है इस न्याय के अनुसार) भेद माना जायगा। जो वाक्यभेद मीमांसक के यहाँ दोष माना गया है।

उत्तर। यह वाक्यभेद वहीं दोष होता है जहाँ परस्पर में सम्बन्ध नहीं रखने वाले अर्थों को समान कक्षा में प्रतिपादन करने की इच्छा हो। अन्यथा नहीं। जैसे प्रकृत पद्य में आच्छादक गोपक राजरूप अर्थ की प्रतीति के समय आच्छाद्य गोप्य चन्द्र रूप अर्थ की प्रतीति नहीं होती। वैसे ही आच्छाद्य की प्रतीति के समय आच्छादक का अभाव हो जाता है अतः तुल्य कक्षा नहीं है।

काव्यप्रकाश में तो शब्दशक्तिमूल वस्तु ध्वनि के प्रसंग में "शनि ओर अशनि उसको बड़े जोर से" इत्यादिक उदाहरण देकर कहा है कि इस पद्य में परस्पर में

भिर्व्याख्यातम् । तत्र शन्यशन्योर्हननक्रियाकर्तृत्वान्वयेऽप्युदारानुदार-योर्भानकर्तृतत्पदार्थविशेषणयोस्तत्प्रकारविशेषणयोर्वा साक्षाद्भानकर्तृत्वान्व-याभावात्कथमेककार्यकारित्वं संगतं स्यात् । अतो विरुद्धौ द्वावित्यादि प्रथमार्धविषयम् । द्वितीयार्धे तु विरोधाभास एव । कर्तर्यभेदेनान्वयमात्रेण

## मधुसूदनी

उदारानुदारयोरिति । अत्रायं भावः । यत्र यस्मिन् पुरुषे त्वं प्रसीदसि स प्रसादाश्रयः उदारो दाता भाति । अनुदारः अनुगतदारो वा, नास्ति उदारो यस्मात् महान् सर्वाधिकोदारो भाति । उदारो दातृमहतोरिति कोषात् ।

अत्र 'स भाति' इत्यत्र बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने तदादीनां शक्तिरिति दार्शनिकाः । बुद्धिस्थत्वावच्छिन्ते तदादीनां शक्तिरित्यालंकारिका इत्येवं तत्पदार्थस्य बुद्धिस्थत्वावच्छिन्नस्य प्रसादाश्रयस्य भानक्रियायां साक्षात् कर्तृविधया अन्वयः । किन्तु उदारानुदारयोस्तु उदाराभिन्नः अनुदाराभिन्नः प्रसादाश्रयो भाति इत्येवं रीत्याऽन्वयात्, भानक्रियायां साक्षात् कर्तृत्वेन अन्वयस्य अभाव एव । यतः प्रसादाश्रयः पुरुषस्तत्पदार्थः, तत्र तत्पदार्थे अभेदसम्बन्धेन उदारानुदारयोर्विशेषणत्वम् । विशेषणत्वाच्च प्रसादाश्रयपुरुषद्वार तयोरन्वयः न तु साक्षात् ।

ननु प्रसादाश्रयः पुरुष इति तत्पदार्थे आश्रये पुरुषे प्रसादपदार्थो विशेषणम् न तु उदारोऽनुदारो वा विशेषणमित्यत आह–तत्प्रकारेति । तत्पदार्थे आश्रयभूते पुरुषे प्रसादः प्रकारो विशेषणम् , तत्र च तत्पदार्थस्य प्रकारे प्रसादे उदारनिष्ठो यः प्रसादस्तस्याश्रयः, अनुदारनिष्ठो यः प्रसादस्तस्याश्रयः इत्येवं रीत्या निष्ठत्वसम्बन्धेन उदारानुदारयोर्विशेषणत्वम् । तत उक्तं तत्प्रकारविशेषणयोर्वेति ।

एवं हि टीकाकारोक्तं उदारानुदारौ एकं कार्यं भानं ( कुरुत ) इत्येककार्य-कारित्वं कथं संगतं स्यात्, न स्यादित्यर्थः । अतः असंगतत्वाद्धेतोः । कर्त्तरि प्रसादा-श्रये पुरुषे अभेदेन अभेदसम्बन्धेन उदाराभिन्नः, एवमनुदाराभिन्नः प्रसादाश्रय

## बालक्रीड़ा

विरोध रखने वाले दो पदार्थ केवल तुम्हारा अनुवर्त्तन करने के लिए एक कार्य करते हैं। और उसकी व्याख्या करने वालों ने व्याख्या की है कि दो विरोधी शनि तथा अशनि हनन रूप एक कार्य और उदार तथा अनुदार भान रूप एक कार्य को करते हैं।

किन्तु यहाँ इनकी एक कार्य को करने वाली बात संगत नहीं होती है क्योंकि शनि और शनि विरोधी अशनि हनन क्रिया में साक्षात कर्ता बन सकते हैं अतः अन्वय भी हो जाता है किन्तु उदार और अनुदार पदार्थ, भान क्रिया में साक्षात् कर्त्ता नहीं हो सकते हैं क्योंकि वे दोनों भान के कर्त्ता तत्पदार्थ के विशेषण हैं अथवा तत्पदार्थ में जो प्रकार है उसके विशेषण हैं अर्थात् एक देश हैं।

यहा का भाव यह है। कि (पदार्थः पदार्थेन अन्वेति नतु पदार्थैकदेशेन) पदार्थ का पदार्थ के साथ अन्वय होता है पदार्थ के एकदेश के साथ अन्वय नहीं होता है। और

कुरुत इत्यस्योपपत्तिश्चेत्, अस्तु द्वितीयार्धेऽपि विरुद्धौ द्वावित्यादि वस्तु व्यङ्ग्यम्। परं त्वर्धद्वयेऽपि विरोधाभासालंकारशबलितमेव। शत्रु-विरुद्धस्य शत्रुत्वासंभवादेकस्य शन्यशनिकर्तृकहननकर्मत्वायोगेनाद्यार्धे,

### मर्मप्रकाशः

उक्तवस्तु व्यङ्ग्यमित्यनुषङ्गः। तदलंकारसत्त्वे हेतुमाह—शत्रुविरुद्धस्येति। विरोधिशत्रो-र्विरोध्यन्तरमित्रत्वादेकस्य विरोधिद्वयकर्तृकहननकर्मत्वायोगेन तादृशहननकर्मत्वयोरपि विरोधा-

### मधुसूदनी

इत्येवंरीत्या अन्वयमात्रेण अर्थात् विरुद्धौ उदारानुदारौ किं कुरुत इति प्रश्ने सति उत्तरति—एकं भानाख्यं कार्यं कुरुतः, साक्षात्कुरुतस्तत्, परम्परया वा तत्कुरुत इत्यन्यदेतत् भानरूपमेकं कार्यं कुरुत इत्यन्वयस्तु जात एव। तथा च कुरुत इत्यस्य उपपत्तिः संगतिर्जाता इति चेत्—आह "अस्तु" इति।

शत्रुविरुद्धेति। शत्रुः शनिः तद्विरुद्धः अशनिः। तस्य अशनेः हननीयपुरुष-विषयकशत्रुत्वस्य असंभवः। अतः एकस्य पुरुषस्य। यस्मिन्नेकस्मिन् पुरुषे

### बालक्रीड़ा

(ज्यात्याकृतिव्यक्तयः पदार्थः) जाति व्यक्ति और उनका सम्बन्ध ये तीनों मिलकर एक पदार्थ हैं और अलग २ ये एक देश हैं। इन नियमों के अनुसार "यत्र प्रसीदति पुनः स भात्युदारोऽनुदारश्च। जिस पर आप प्रसन्न होते हैं वह प्रसादाश्रय पुरुष उदार एवं अनुदार जाना जाता है। यहां तत्पदका अर्थ प्रसादाश्रय है और उस भानक्रिया के कर्त्ता तत्पदार्थ प्रसादाश्रय का भान क्रिया में साक्षात् अन्वय है किंतु जब प्रश्न होता है कि प्रसादाश्रय कैसा है तब कहा जाता है कि वह उदार और अनुदार है। इस तरह उदार एवं अनुदार विशेषण है अतः एक देश होने के कारण उनका साक्षात् अन्वय नहीं होगा।

उसी को पण्डितराजने लिखा है कि "तत्पदार्थविशेषणयोः" इत्यादि। यहां ऐसा अन्वय होता है कि उदाराभिन्न और अनुदाराभिन्न प्रसादाश्रय पूरुष भान क्रिया का कर्त्ता है। अतः तत्पदार्थ प्रसादाश्रय में उदार और अनुदार विशेषण है अतः विशेषणविधया अन्वय होता है न कि क्षासात्। इस पर शंका करते है कि "वह प्रसाद का आश्रय है" यहाँ आश्रयी भूत पुरुष में प्रसाद विशेषण हुआ न कि उदार। तब तत्पदार्थ के विशेषण उदार एवं अनुदार कैसे हुए। उत्तर देते हैं कि अथवा तत्पदार्थ में जो प्रकार अर्थात् विशेषण प्रसाद है उसमें निष्ठत्व सम्बन्ध से उदार एवं अनुदार विशेषण हैं क्योंकि उदारनिष्ठ एवं अनुदार-निष्ठ जो प्रसाद उसका आश्रय वह पुरुष इस तरह अन्वय होता है। अत एव तत्प्रकार-विशेषणयोर्वा ऐसा कहा। इसलिए "विरुद्धौ द्वौ" इत्यादि वस्तु ध्वनि पूर्वार्ध में है। उत्तरार्ध में तो विरोसाभास है।

यदि शनि ग्रह और शनिविरोधी, अशनि(वज्र)तथा उदार और अनुदार(उदारातिरिक्त) जो दो विरोधी हैं वे (शन्यशनिरूप दो विरोधी तथा उदारानुदाररूप दो विरोधी) एक कार्य करते है—इस तरह कर्ता के साथ अभेद संसर्ग से अन्वय हो जाने मात्र से कुरुतः की उपपत्ति

उदारत्वानुदारत्वयोरेकाधिकरणवृत्तित्वायोगाद् द्वितीयार्धे च विरोधस्य स्फुटत्वात् ।

अर्थशक्तिमूलानुरणनं यथा—

'गुञ्जन्ति मञ्जु परितो गत्वा धावन्ति संमुखम् ।
आवर्तन्ते विवर्तन्ते सरसीषु मधुव्रताः ॥'

अत्र मधुव्रतकर्तृकमञ्जुगुञ्जनाद्यैर्वस्तुभिः कविकल्पितत्वविरहेण स्वतः संभविभिरासन्नसरसिजोत्पत्तिध्वननद्वारा शरदागमनैकट्यरूपं वस्तु व्यज्यते ।

## मर्मप्रकाशः

दिति भावः । राज्ञोऽविहताज्ञत्वमादाय कोपस्यातिशयितत्वमादाय वा तत्परिहारः । अश-निरित्यत्र नञ् विरुद्धार्थक इत्युक्तम् । न चैवं विरोधेऽस्य कथं व्यङ्ग्यता । तन्मूलकहन-नकर्मत्वयोर्विरोधस्य व्यङ्ग्यत्वेनाक्षतेः । तमादायैव च विरोधाभासः । तस्यैव समाधानात् । न त्वनयोर्विरोधस्यास्य समाधानमस्ति । एतेनैकधर्मिगतत्वे एव विरोधस्यालंकारत्वान्नात्र विरोधालंकार इति परास्तम् । तादृशकर्मत्वयोरेकधर्मिगतत्वस्य स्पष्टत्वात् । अन्ये तु विरोधिनोरप्येकशत्रुसंभवान्न तादृशहननकर्मत्वयोर्विरोध इत्याहुः । द्वितीयार्धे चानुगतदार इत्यर्थेन तत्परिहार उक्त एवेति दिक् ।

रणनं यथेति । स्वतः संभविवस्तुना वस्तुध्वनिर्यथेत्यर्थः । संमुखमिति ।

## मधुसूदनी

अधिकरणे उदारता तत्रौवनुदारता कथं स्यादिति उदारताया अनुदारतायाः वृत्तिः स्थितिर्न स्यादित्यर्थः ।

## बालक्रीड़ा

हो जाती है तव तो द्वितीयार्द्ध में भी विरुद्धौ द्वौ इत्यादि वस्तु ही व्यंग्य है । परन्तु अर्धद्वय में वह वस्तु, विरोधाभासालंकार से शवलित ही है क्योंकि शत्रु का विरोधी शत्रु नहीं हो सकता है अतः जो एक व्यक्ति शनि कर्तृक हनन क्रिया का कर्म बनेगा वही व्यक्ति शनि विरोधी अशनि के द्वारा हनन क्रिया का कर्म नहीं बनाया जा सकता है । इस तरह पूर्वार्ध में विरोधाभास अलंकार स्पष्ट है । इसी तरह–जिस व्यक्ति में उदारता कहते हैं उसी व्यक्ति में अनुदारता का कहना नहीं बन सकता है । उदारता एवं अनुदारता के अधिकरण एक व्यक्ति के नही हो सकने के कारण उतरार्ध में भी विरोधाभासालंकार स्पष्ट ही है ।

अर्थ शक्ति मूल अनुरणन वस्तु ध्वनि जैसे—भौंरे मधुर गुञ्जन करते हैं । और इधर उधर घूमकर सामने दौड़ते हैं । तथा तालाओं में आते है और जाते हैं ।

यहा भौंरों का मञ्जु गुञ्जन रूप वस्तु, जो कवि की कल्पना से रहित है अतएव स्वतः संभवी है, उससे सरसिज की उत्पत्ति ध्वनित होती है और उसके द्वारा निकट भविष्य में शरद् ऋतु का आगमन रूप वस्तु व्यक्त होती है ।

काव्यप्रकाशे तु—'अरससिरोमणि धुत्ताणं अग्गिम–' इत्याद्युदाहृत्य 'ममैवोपभोग्य इति वस्तु व्यज्यते' इत्युक्तम्। तत्र केन वस्तुनेदं वस्तु व्यज्यते? न तावदलसशिरोमणित्वादिकान्तविशेषणैः, तेषां धात्र्यादिवृद्धस्त्रीनिरूपितत्वेन तवैवोपभोग्य इत्यादिरूपेणैव व्यङ्ग्यस्य वक्तव्यतापत्तेः। विशेषणानां कामिनीनिरूपितत्वे तु ममैवेत्यादि व्यङ्ग्याकारः स्यात्। नापि प्रफुल्लविलो-

## मर्मप्रकाशः

सरस्या इति भावः। आसन्नेति। शीघ्रभाविनी या कमलानामुत्पत्तिस्तद्व्यञ्जनेत्यर्थः। अरसेति। 'अलसशिरोमणिधूर्तानामग्रणीः पुत्री धनसमृद्धिमयः। इति जल्पितेन नताङ्गी प्रफुल्लविलोचना जाता॥' पतिंवरां प्रति धात्र्याः प्ररोचनोक्तिः पूर्वार्धम्। उत्तरार्धं तु कविवाक्यम्। हे पुत्रि, अयं वरः निरुद्योगश्रेष्ठो धूर्तश्रेष्ठः प्रचुरधनसमृद्धिः, इति भाषितेन लज्जया नताङ्गी काचित्कन्या हर्षविकसितलोचना जातेत्यर्थः। अत्रालसत्वेन नायिकान्तरागमनं सूच्यते। धूर्तत्वेन रतेष्वनादृतगुणत्वम्, धनिकत्वेन कृपणतयादातृत्वं च सूचितं सत् अन्यासामनाकर्षणीयत्वं मदुपभोग्यत्वं च व्यनक्ति। तद्विषयकं च कुमार्या ज्ञानं प्रफुल्लनयनत्ववत्त्वेन वस्तुना स्वहेतुहर्षव्यञ्जनद्वारेण तत्कारणीभूतं सामाजिकेषु व्यज्यते। केचित्तु—'अलसत्वेन धनिकत्वेन चाप्रवासित्वम्, धूर्तत्वेन संभोगेष्वतृप्तत्वम्, धनिकत्वेन नानाधनदातृत्वमपि, नताङ्गित्वेन नमस्कारः तेन स्वस्याप्यमानिनीत्वम्, प्रफुल्लनयनत्वेन

## मधुसूदनी

विशेषणानामिति। अलसशिरोमणिरित्यादिविशेषणानां कामिनीनिरूपितत्वे कामिनीकर्तृके तथाकथने सति। कामिनी तस्य पद्यस्य वक्त्री नास्तीत्यर्थः। तस्येति तस्य प्रफुल्लविलोचनत्वस्य हर्षभावानुभावत्वम्। अतः प्रफुल्लविलोचनत्वरूपोऽनुभावः हर्षस्य व्यञ्जको न तु मदुपभोग्यत्वस्य। कुत एतदित्याह-मदुपेति। मदुपभोग्यत्वं विभावो हर्षस्य। इति हेतोः तस्य हर्षभावस्य यो विभावः मदुपभोग्य-

## बालक्रीड़ा

काव्य प्रकाश में तो अर्थशक्तिमूल वस्तु से वस्तु की ध्वनि के अलसशिरोमणि धुत्ताणं अग्गिमो पुत्ति "इस उदाहरण को लिखकर" यह नायक मेरा ही उपभोग्य है ऐसा कहा है।

वहां प्रश्न होता है कि किस वस्तु से यह वस्तु व्यक्त होती हैं। यदि कहें की अलस शिरोमणित्वादि कान्त के विशेषणों से यह व्यक्त होती है तब ठीक नहीं है। क्योंकि वे विशेषण धात्री वगैरह वृद्ध स्त्री के कहे हुए हैं। अतः उससे यही व्यक्त होगा कि यह व्यक्ति तुम्हारा ही उपभोग्य है। हां यदि कामिनी इन विशेषणों को कहती तब "मेरा ही उपभोग्य यह है" ऐसा व्यंग्य का आकार हो सकता है।

यदि कहें कि धात्री वृद्ध स्त्री की बात को सुनकर कामिनी हर्ष से प्रफुल्लविलोचना हो गई अर्थात् हर्ष से उसकी आंखें खिल गई अतः प्रफुल्लविलोचनत्व विशेषण से यह व्यक्त

चनत्वेन, तस्य हर्षभावानुभावत्वेन हर्षव्यञ्जकताया एव क्लृप्तत्वात्। मदुपभोग्यत्वं हि हर्षभावस्य विभावः। नह्यनुभावैर्भावो व्यज्यत इति तद्विभावव्यञ्जनं शक्यं वक्तुम्। केवलस्य प्रफुल्लविलोचनत्वस्य ममैवेत्यादिव्यङ्ग्यव्यञ्जने सामर्थ्याभावात्। पुत्रागमनधनप्राप्त्यादिविभावकेऽपि हर्षभावे प्रफुल्लविलोचनताया अनैकान्तिकत्वादिति। सत्यम्।

## मर्मप्रकाशः

हर्षः तेन ममैवोपभोग्यो नाविदग्धाया इति वस्तुव्यञ्जनम्' इत्याहुः। तेषां विशेषणानां निरूपितत्वेन कथितत्वेन। एवमग्रेऽपि। परीति। अस्य कामिनीनिष्ठत्वादिति भावः। तस्येति। परिफुल्लविलोचनात्वस्य हर्षाख्यव्यभिचारिभावकार्यत्वेनेत्यर्थः। कार्येण कारणानुमानस्य प्रसिद्धत्वादिति भावः। विभावः कारणम्। तत्सत्त्व एव हर्षोदयात्। नहीत्यस्य वक्तुं शक्यमित्यत्रान्वयः। तद्विभावेति। भावविभावेत्यर्थः। हिसूचितमशक्यत्वे हेतुमाह—केवलस्येति। विशिष्टस्य तत्त्वस्य सिद्धान्ते वक्ष्यमाणत्वादिदं विशेषणम्। विलोचनताया इति।

## मधुसूदनी

त्वं तस्य व्यंजनं भवतु इति वक्तुं नहि शक्यम्। कुतो न वक्तुं शक्यमित्यत आह—केवलस्येति। ननु कुतः सामर्थ्यं नास्तीत्यत आह-पुत्रेति।

अनैकान्तिकत्वादिति। एकं साध्यमेव (वह्निरेव) अन्तः नियामकः (नियमस्य निरूपक इति यावत्, अत्र प्रकरणे व्याप्तिरेव नियमस्तस्य निरूपकः) यस्य स एकान्तः साध्य (वह्नि) निरूपितव्याप्तिमानित्यर्थः। एकान्त एव ऐकान्तिकः स्वार्थे ठक्। न ऐकान्तिकः अनैकान्तिकः। तत्र प्रकृते साधारणोऽनैकान्तिकः साध्याभाववद्वृत्तिस्वरूपो विद्यते। तथाहि—

## बालक्रीड़ा

होता है तब भी ठीक नहीं है क्योंकि प्रफुल्लविलोचनत्व हर्ष का अनुभाव है अतः उससे हर्ष की ही व्यक्ति क्लृप्त है। और मदुपभोग्यत्व, हर्षभाव का विभाव है कारण है अर्थात् कामिनी जब यह समझेगी कि यह मेरा उपभोग्य है तभी उसके हृदय में हर्ष होगा तभी उसकी आंखें खिलेगी इसलिए जब अनुभावों से हर्षभाव की व्यक्ति होती है तब उसी से मदुपभोग्यत्व रूप विभाव की भी व्यक्ति हो जायगी।

तब कहते है कि ऐसा भी नहीं कह सकते क्योंकि केवल प्रफुल्लविलोचनत्व विशेषण की "मेरा ही उपभोग्य यह है" इस व्यंग्य के व्यंजन में सामर्थ्य नहीं है इसका कारण है कि मदुपभोग्यत्व जैसे हर्ष का विभाव है कारण है इसी तरह परदेश से प्रिय का आगमन, पुत्रकी उत्पत्ति, एवं धनप्राप्ति आदि भी हर्ष के विभाव हैं अतः उनसे भी प्रफुल्लविलोचनत्व हो सकता है अतः प्रफुल्लविलोचनत्व साधारण अनैकान्तिक है व्यभिचारी है।

यहाँ का भाव यह है कि नायिका (पक्ष) नायकविषयकमदुपभोग्यत्वज्ञानेन हर्षवती,

'इअ भणिम्मि' इत्याद्यर्थवशप्रापितालसशिरोमणित्वादिविशेषणश्रवणविशिष्टप्रफुल्लविलोचनत्वेन मदुपभोग्यत्वलक्षणविभावाभिव्यक्तिद्वारा हर्षभावोऽभिव्यज्यते। तत्र द्वारीभूतविभावाभिव्यक्तिमादाय काव्यप्रकाशग्रन्थसंगतिः। न च भावध्वनेः संलक्ष्यक्रमत्वापत्तिः, द्वारस्य संलक्ष्यक्रमत्वादिति वाच्यम्। इष्टापत्तेः। न चापसिद्धान्तः। तस्य प्रागेवोद्धारात्।

### मर्मप्रकाशः

सत्त्वेन तस्या इति शेषः। अनैकान्तिकत्वाद्व्यभिचरितत्वात्। इय भणीति। इति भणितेनेत्याद्युत्तरार्धस्य योऽर्थस्तदुद्देशेन प्रापितो यस्तादृशपरिफुल्लविलोचनत्वरूपो धर्मस्तेनेत्यर्थः। तस्यैकपदाबोध्यत्वादर्थवशप्रापितेत्युक्तम्। विभावेति। हर्षभावविभावेत्यर्थः। भावध्वनेर्हर्षभावध्वनेः। द्वारस्य तद्विभावाभिव्यक्तिरूपस्य। तस्येति। अपसिद्धान्तत्वस्येत्यर्थः। तथा

### मधुसूदनी

नायिका ( पक्षः ) अलसशिरोमणीत्यादिधात्रीवृद्धस्त्रीवाक्यश्रुतेः नायके मदुपभोग्यत्वज्ञानाद् हृष्टा ( साध्यं हर्षः ) प्रफुल्लविलोचनत्वात् ( हेतुः ) तादृशान्यस्त्रीवत्। अत्र प्रफुल्लविलोचनत्वरूपहेतोः तादृशमदुपभोग्यत्वज्ञानजन्यत्वाभाववति पुत्रागमन-धनप्राप्ति-प्रोषितप्रियागमनजन्ये हर्षे भावे विद्यमानत्वात्।

इय भणिम्मि। इत्यादयो येऽर्थाः। तेषां वशेन बलेन प्रापितं उद्भावितं यन्नायिकाया अलसशिरोमणित्वादिविशेषणश्रवणविशिष्टं प्रफुल्लविलोचनत्वं तेन मदुपभोग्यत्वरूपो विभावोऽनुभूयते। तादृशविभावद्वारा हर्षभावोऽभिव्यज्यते ध्वन्यते।

### बालक्रीड़ा

(साध्यहर्ष) प्रफुल्लविलोचनत्वात् हेतु ह जो हेतु साध्य के अभाव में भी रहे वह साध्याभाव वद्वत्ति हेतु साधारण अनैकान्तिक होता है। प्रकृत में साध्य नायक को अपना उपभोग्य समझकर हृष्ट होना है, उसका अभाव नायक को परदेश से आया सुनकर हृष्ट होना है (यहाँ विशेषणाभाव प्रयुक्त विशिष्टाभाव है) उस साध्याभाव हर्ष में भी प्रफुल्लविलोचनत्व हेतु है इस तरह केवल प्रफुल्लविलोचनत्व हेतु अनैकान्तिक होने से मदुपभोग्यत्व के व्यजन में समर्थ नही है ऐंसा कहा है।

उत्तर। सत्य है धात्री वृद्धा स्त्री के "यह नायक वड़ा आलसी है धूर्तो का शिरोमणि है और प्रचुर धन समृद्धि शाली है" इतना कहते ही नायिका की आखें खिल गई। तव यह आलसी आदि विशेषणों को सुनकर आंख खिलना ही मदुपभोग्यत्व रूप विभाव की अभिव्यक्ति करता हुआ हर्ष भाव को अभिव्यक्त करता है। इस तरह यहाँ द्वारीभूत विभावाभिव्यक्ति के सहारे काव्यप्रकाश ग्रन्थ की संगति हो जाती है।

अगर कहें कि इस तरह तो भावध्वनि संलक्ष्यक्रम हो गई क्योकि द्वार होने पर क्रम संलक्ष्य हो जाता है। उत्तर—वह तो इष्ट ही है। सिद्धान्त विरोध नहीं होगा क्योंकि उसका उद्धार प्रथम आनन के अन्त में कर चके हैं।

'मृद्वीका रसिता, सिता समशिता, स्फीतं निपीतं पयः
स्वर्यातेन सुधाप्यधायि, कतिधा रम्भाधरः खण्डितः ।
तत्त्वं ब्रूहि मदीय ! जीव ! भवता भूयो भवे भ्राम्यता
कृष्णेत्यक्षरयोरयं मधुरिमोद्‌गारः क्वचिल्लक्षितः ॥'

अत्र निकृष्टजीवसंबोध्यकचेतन (प्रभावित) परिदृश्यमानस्थूलदेहेन्द्रियादिचेतनसंघातात्मकास्मत्पदबोध्यकर्तृकप्रश्नविषयेणार्थेन वस्तुना तथाभूतेन भगवन्नाम्नोऽनेकजन्मवृत्तान्ताध्यक्षीकरणकारणयोगसिद्धिविशेषतादात्म्याध्यवसायरूपातिशयोक्तिर्व्यज्यते ।

### मर्मप्रकाशः

च सिद्धान्त एवायमिति भावः । मृद्वीकेति । स्वतः संभविवस्तुनालंकारध्वनिर्यथेत्यादिः । मृद्वीका द्राक्षा । सिता खण्डशर्करा । स्वर्यातेन स्वर्गं प्रति गतेन । अपेः समुच्चेयमाह—रम्भेति । भूयः पुनः । अयं सांप्रतमनुभूयमानः । निष्कृष्टेति । परिदृश्यमानैतच्छरीरादि पृथक्कृतेत्यर्थः । तत्त्वं च तस्य भवता मदीयेत्याभ्यामाविष्कृतम् । अर्थेन मधुरिमोद्‌गारलक्षणरूपेण तथाभूतेन स्वतः संभविना । नाम्न इत्यस्य तादात्म्याध्यवसायेत्यत्रान्वयः । अनेकजन्म-

### मधुसूदनी

प्रश्नेति । अयं भावः । हे मदीय ! जीव ! मधुरिमोद्‌गारः क्वचिल्लक्षित इत्येवंरूपो यः प्रश्नस्तत्र । निष्कृष्टः अनुभूयमानशरीरादिपृथक्कृतो जीवः सम्बोध्यः । चेतनप्रभावितो परिदृश्यमानो यः स्थूलदेहेन्द्रियाद्यचेतनसंघातस्तदात्मकः तत्स्वरूपः अस्मत्पदबोध्यः पदार्थः कर्त्ता । अत्र स्थूलदेहेन्द्रियाद्यचेतनसंघातात्मकेति पाठः साधुः, यतः स्थूलत्वादि अचेतनेन साकं संबध्नाति न तु चेतनेन । चेतनेन प्रभावितं त्वचेतनं भवतीत्यतस्तथाऽस्माभिर्विश्लिष्टम् । प्रश्नविषयेण तादृशप्रश्नरूपेण अर्थेन । अनेकजन्मनो वृत्तान्तानामध्यक्षीकरणे प्रत्यक्षीकरणे कारणं योगसिद्धिविशेषः । योगमाहात्म्यादेव जन्मजन्मान्तरवृत्तज्ञानं भाव्यम् । योगजनितविलक्षणसिद्ध्या सह भगवन्नाम्नस्तादात्म्याध्यवसायः । स एवात्रातिशयोक्त्यलंकारः ।

### बालक्रीड़ा

हे मेरे जीवः ! पुनः पुनः संसार में घूमते हुए आपने कितनी बार किसमिस खाई हैं, कितनी बार मिश्री का आस्वाद लिया है, कितनी बार स्वच्छ दूध पीया है तथा स्वर्ग पहुँच कर कितनी बार अमृत भी पीया है और रम्भादि अप्सराओं के अधर ओष्ठ का भी कितनी बार चुम्बन किया है । अतः सच कहिए । कहीं पर भी कृष्ण इन दो अक्षरों में जो माधुर्य है उसका उद्‌गार खाये हुए पदार्थ की मिठी डकार का अनुभव किया ।

यहाँ पर निष्कृष्ट परिदृश्यमान स्थूल देहादि से पृथग्भूत जीव संबोध्य है । अर्थात् जीव से पूछा जाता है । और चेतन संवलित परिदृश्यमान स्थूल देह एवं इन्द्रियादि अचेतन

अथ प्रश्नविषयस्यात्र नानाजन्मगतवृत्तान्तरूपतया तज्ज्ञं प्रत्येव प्रष्टुमौचित्येनानभिज्ञं स्वजीवं प्रति प्रष्टुमयोग्यत्वात्प्रश्नान्यथानुपपत्त्या आक्षिप्ता, वाच्यसिद्ध्यङ्गत्वेन गुणीभूतव्यङ्ग्यरूपा वा, प्रागुक्तातिशयोक्तिरिह कथं ध्वनिव्यपदेशहेतुः स्यात् ? इत्थमेव च 'तदप्राप्तिमहादुःख—' इत्यत्राप्यतिशयोक्तेरर्थापत्तिविषयत्वं गुणीभूतव्यङ्ग्यत्वं वा

### मर्मप्रकाशः

स्ववृत्तान्तप्रत्यक्षीकरणे कारणभूतो यो योगाभ्यासजन्यसिद्धिविशेष इत्यर्थः। अर्थापत्तेर्मानान्तरत्वाभावादाह—वाच्येति। तदिति। '[1]तदप्राप्तिमहादुःखविलीनाशेषपातका। तच्चिन्ताविपु-

### मधुसूदनी

अन्यथा तादृशतादात्म्याध्यवसायं विना प्रकारान्तरेण प्रश्नस्यानुपपत्तिरेव अतः तादृशप्रश्नेनाक्षिप्ता। ननु येन व्यङ्ग्येन विना वाच्यमेव न सिद्ध्यति तद्धि व्यंग्यं वाच्यसिद्ध्यङ्गं भवति, एवं च प्रकृतेऽपि तथैव स्थितिरित्यतः पक्षान्तरमाह—वाच्येति वा। अनिगरणे तादात्म्यानध्यवसाये अतिशयोक्तिं विना। निगरणे

### बालक्रीड़ा

संघात स्वरूप अस्मत्पद बोध्य पदार्थ प्रश्न कर्ता है। इस स्वतः संभवी वस्तु से अतिशयोक्ति अलंकार व्यक्त होता है। यहां स्थूल देहेन्द्रियादि चेतनाचेतन संघात यह पाठ ठीक नहीं है। क्योंकि स्थूलदेहेन्द्रियादि का संघात अचेतन है वह चेतन नहीं है।

जिससे अनेक जन्मों के वृत्तान्त प्रत्यक्ष दिखाई देते हैं। प्रत्यक्ष के कारण उस योग सिद्धि के साथ भगवान् के नाम का तादात्म्याध्यवसान किया है। यही अतिशयोक्ति का स्वरूप है।

अब शंका होती है कि यहाँ पद्य में नाना जन्मों के वृत्तान्तों कें बारे में प्रश्न किया गया है। किन्तु जो इन वृत्तान्तों का ज्ञाता है उसी के प्रति प्रश्न करना उचित है अतः वृत्तान्तों के अनभिज्ञ अपने जीव से कुछ भी पूछना अनुचित है। जब यदि जीव नहीं जानता है तब उससे क्यों पूछा गया अनजान से प्रश्न करना बन नहीं सकता है इस प्रकार की अन्यथानुपपत्ति रूप अर्थापत्ति से आक्षिप्त अतिशयोक्ति, अथवा अनेक जन्मों के वृत्तान्तों के प्रत्यक्षीकरण में कारण योगसिद्धि के साथ जब तक भगवन्नाम का तादात्म्याध्यवसान नहीं करेंगे तब तक प्रश्न रूप वाच्यार्थ सिद्ध नहीं होगा। इस तरह वाच्य की सिद्धि की अंग होने से गुणीभूत व्यंग्यरूपा अतिशयोक्ति; ध्वनि व्यपदेश की हेतु कैसे ?

यही दशा काव्य प्रकाश के चतुर्थ उल्लास में "तदप्राप्तिमहादुःख" इन पद्यों में दिखलाई गई अतिशयोक्ति की भी है। वह भी अर्थापत्ति का विषय है या गुणीभूतव्यंग्य

(१.) श्लोकद्वयं विष्णुपुराणे पञ्चमांशे त्रयोदशेऽध्याये (२१।२२) वर्तते, उदाहृतं च काव्यप्रकाशे चतुर्थोल्लासे।

युक्तम् । अनेकजन्मोपभोग्यदुःखसुखराशिभ्यां तदप्राप्तिमहादुःखतच्चिन्ता-विपुलाह्लादयोरनिगरणेऽशेषपापपुण्यपुञ्जनाशकताया अनुपपत्तेः । तत्तद्दुःख-सुखानां स्वस्वफलोपहितपापपुण्यनाशकताया एवान्यत्र क्लृप्तत्वात् । निगरणे तु तयोस्तन्नाशकताबुद्ध्युपपत्तिः । न च वस्तुमात्राभिव्यक्तस्यालंकारस्य न गुणीभूतव्यङ्ग्यत्वम् ।

'व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ।।'

### मर्मप्रकाशः

लाह्लादक्षीणपुण्यचया तथा ।। चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् । निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ।।' इति ।। जगत्सूतिं श्रीकृष्णम् । तत्संभोगाप्राप्त्या महादुःखम् । तच्चिन्तया विपुलाह्लादः । 'नास्य प्राणाः समुत्क्रामन्ति । अत्रैव समवलीयन्ते' इति श्रुतेर्मोक्ष-काले निरुच्छ्वासता । चयशब्दार्थमाह—पुञ्जेति । स्वस्वेति । तत्तद्दुःखसुखरूपफलजनके-त्यर्थः । तासामलंकृतीनाम् । अत्र प्रकृतलक्ष्ये । तथा च सिद्धान्तोऽन्यविषयक इति भावः ।

### मधुसूदनी

तु तादात्म्याध्यवसाये तु तयोः तदप्राप्तिमहादुःखतच्चिन्ताविपुलाह्लादयोः । तस्य अशेष पापस्य पुण्यपुञ्जस्य च नाशकतायाः बुद्धेर्ज्ञानस्य उपपत्तिः संगतिः ।

### बालक्रीड़ा

है क्योंकि जब तक भगवान् के नहीं मिलने से होने वाले महादुःख का, अनेक जन्म भोग्य दुःखराशि के द्वारा निगरण, तथा भगवच्चिन्तन से उत्पन्न विपुल आह्लाद का, अनेक जन्म भोग्य सुख राशि के द्वारा निगरण नहीं किया जायगा तब तक तदप्राप्ति महादुःखों में अशेष पापों की नाशकता, तच्चिन्ता विपुलाह्लाद में पुण्यपुञ्ज की नाशकता अनुपपन्न हो जायगी । जिस फल का जो उपादान कारण है वह कारण उस फल के भोग से ही नष्ट होता है अतः अनेक जन्मभोग्य दुःखों में ही अपने उपादान कारण पापों की नाशकता तथा अनेक जन्म भोग्य सुखों में ही अपने उपादान कारण पुण्यों की नाशकता क्लृप्त है। क्योंकि पापों का ही फल दुःख है अतः दुःखों को भोग लिया तो पाप कटे । और पुण्यों का ही फल सुख है अतः सुखों को भोग लिया तो पुण्य कटे । फ़लतः निगरण करने पर ही दुःख और आह्लाद में पाप एवं पुण्य के नाशकता की बुद्धि उपपन्न हो सकती है ।

यह तो सत्य है किन्तु वस्तुमात्र से अभिव्यक्त अलंकार गुणीभूत व्यंग्य नहीं होता है । क्योंकि

जब वस्तु मात्र से अलंकृतियाँ व्यक्त होती हैं तब निश्चय ही वे ध्वनि व्यवहार की प्रयोजक होती हैं । क्योंकि यह काव्य है इस काव्यवृत्ति की वे अलंकृतियाँ ही आश्रय हैं ।

इति सिद्धान्तादिति वाच्यम् । बाधे दृढे सिद्धान्तमात्रेणात्र ध्वनित्वस्य स्थापयितुमशक्यत्वादिति चेत् । सत्यम् । यादृशव्यङ्ग्यप्रतिपत्तिं विना यत्र वाच्यस्य सर्वथाप्यनुपपत्तिस्तत्र तद्वाच्यसिद्ध्यङ्गम् । यत्र च प्रकारान्तरेणापि तस्योपपत्तिः शक्या कर्तुं न तत्र तथा । अन्यथा हि 'निःशेषच्युतचन्दनं स्तनतटम्' इत्यत्राधमत्वसिद्ध्यङ्गत्वाद्दूतीरमणस्य वाच्यसिद्ध्यङ्गगुणीभूतव्यङ्ग्यत्वापत्तेः । प्रकृते च भगवन्नाम्नि योगसिद्धितादात्म्याध्यवसायरूपामतिशयोक्तिं विनापि भगवन्नामोच्चारणमाहात्म्यप्राप्तसार्व-

### मर्मप्रकाशः

तथा वाच्यसिद्धचङ्गम् । वाच्येति । वाच्यसिद्धचङ्गरूपं यद्गुणीभूतव्यङ्ग्यं तत्त्वापत्तेरित्यर्थः यथा चात्र प्रकारान्तरेणाधमत्वसिद्धिस्तथा स्पष्टमधस्तात् । सार्वज्ञ्येति । सर्वज्ञतेत्यर्थः ।

### मधुसूदनी

बाधे दृढ इति । ताभ्यां तयोः निगरणं विना तन्नाशकताया अनुपपत्तिरूपे बाधे सति । यत्र काव्ये तत्र काव्ये । प्रकारान्तरेणापि हेत्वन्तरेणापि । तस्य वाच्यस्य । न तथा वाच्यसिद्ध्यङ्गं नास्ति ।

अन्यथा=प्रकारान्तरेणापि वाच्यार्थोपपत्तेः कर्तुं शक्यत्वाभावे हि वाच्यसिद्ध्यङ्गं भवतीत्यस्यास्वीकारे । कस्तर्हि प्रकारः प्रकृते पद्ये इति समाधत्ते-प्रकृते चेति । भगवन्नाम्नः उच्चारणे यन्माहात्म्यं तेन प्राप्ता या सार्वज्ञ्यरूपा बुद्धिः जगतीतलवर्त्तिसर्वपदार्थविषयिणी बुद्धिरिति यावत् ।

### बालक्रीड़ा

यही सिद्धान्त है । ऐसा नहीं कह सकते—क्योंकि जब बाधक युक्तियां दृढ हैं तब सिद्धान्त मात्र से ध्वनित्व का स्थापन करना अशक्य है ।

सिद्धान्ती उत्तर देता है कि सत्य है । किन्तु वाच्यसिद्ध्यंङ्ग गुणीभूत वहीं होता है जहाँ व्यंग्य की प्रतीति के विना वाच्य की सर्वथा अनुपपत्ति होती हो और जहाँ तो प्रकारान्तर से भी वाच्य की उपपत्ति की जा सकती है वहाँ गुणीभूत व्यंग्य वाच्यसिद्धचङ्ग नहीं होता है ।

यदि उपर्युक्त सिद्धान्त वाच्यसिद्ध्यंग के विषय में नहीं माना जायगा तो "निःशेषच्युतचन्दनं स्तनतटम्" इस काव्य में भी दूतीरमण के बिना अधमत्व की सिद्धि ही नहीं होगी फलतः सकल आलंकारिक सम्मत ध्वनि न होकर गूणीभूतव्यंग्य ही मानना होगा ।

प्रकृत में तो भगवान् के नाम में योगसिद्धि तादात्म्याध्यवसाय के विना भी भगवान् के नाम के उच्चारणमाहात्म्य से प्राप्त हुई सर्वज्ञता बुद्धि से भी की उपपत्ति हो सकती है तब गुणीभूतव्यंग्य नहीं है ।

इयबुद्धयापि प्रश्नोपपत्तेर्न गुणीभूतव्यङ्ग्यत्वम् । एतेनासंबन्धे संबन्धरूपातिशयोक्तिर्नामोच्चारणमाहात्म्यप्रभवसार्वज्ञ्याध्यवसायेऽपि स्थितेति स दोषस्तदवस्थ इति परास्तम् । भगवन्नामोच्चारणस्याचिन्त्यमाहात्म्यतायाः पुराणप्रसिद्धत्वात् ।

अथ वा मास्तु प्रागुक्तमुदाहरणं वस्तुनोऽलंकारव्यञ्जकतायाः, इदं तु भविष्यति—

'न मनागपि राहुरोधशङ्का न कलङ्कानुगमो न पाण्डुभावः ।
उपचीयत एव कापि शोभा परितो भामिनि! ते मुखस्य नित्यम् ॥'

अत्र राहुरोधशङ्काऽभावादिभिर्निरपेक्षैर्वस्तुभिर्व्यतिरेकालंकारो व्यज्यते ।

### मर्मप्रकाशः

स्थितेति । सर्वज्ञत्वासंबन्धे तत्कल्पनादिति भावः । स दोषो गुणीभूतव्यङ्ग्यत्वापत्तिरूपदोषः । पुराणेत्युपलक्षणं श्रुत्यादेरपि । तथा च वस्तुतस्तत्सत्त्वैव, न कल्पनमिति । न संबन्धातिशयोक्तिरिति भावः । अभ्युपेत्याप्याह—अथवेति । अनुगमः संबन्धः । पाण्डुभावः पाण्डुत्वम् । उपचीयते वर्धते ।

### मधुसूदनी

माहात्म्यतायाः । अचिन्त्यम् तर्कविषयकबुद्धेरगम्यं माहात्म्यं प्रभावो यस्य उच्चारणस्य । तस्य अचिन्त्यमाहात्म्यस्य भावस्तत्ता तस्याः ।

राहुरोधेति । राहुणा कृतो रोधः अपवारणं ग्रासः तस्य शंका । कलंकस्य अनुगमः सम्बन्धः । व्यतिरेकालंकारः चन्द्रापेक्षया मुखे व्यतिरेकस्य सत्वात् ।

### बालक्रीड़ा

इस व्याख्यान से किसी का यह कहना कि असम्बन्ध में सम्बन्धरूपा अतिशयोक्ति, नामोच्चारण के माहात्म्य से उत्पन्न सर्वज्ञता के अध्यवसाय होने पर भी स्थित है अतः पहले कहा हुआ वाच्यसिद्धयंग दोष तदवस्थ हैं" वह सब परास्त हुआ । क्योंकि भगवन्नामोच्चारण का अचिन्त्यमाहात्म्य पुराणों में प्रसिद्ध ही है ।

अथवा प्रागुक्त "मृद्विका रसिता" यह वस्तु से अलंकार व्यंजकता का उदाहरण नहीं है तो मत हो । यह तो होगा ।

हे भामिनि ? तुम्हारे मुख की कोई अनिर्वचनीय शोभा नित्य ही चारों तरफ से बढ़ती ही है । क्योंकि जिस मुख में न राहु के रोध ग्रास की शंका है, न कलंक का सम्बन्ध है और न पीलापन है ।

यहाँ व्यंग्य निरपेक्ष 'राहु के द्वारा ग्रास करने की शंका वगैरह के अभाव रूप' वस्तुओं से व्यतिरेकालंकार व्यक्त होता है ।

'नदन्ति मददन्तिनः, परिलसन्ति वाजिव्रजाः
पठन्ति बिरुदावलीमहितमन्दिरे वन्दिनः ।
इदं तदवधि प्रभो! यदवधि प्रवृद्धा न ते
युगान्तदहनोपमा नयनकोणशोणद्युतिः ॥'

अत्र युगान्तदहनोपमया यदैव तव कोपोदयस्तदैव रिपूणां संपदो भस्मसाद्भविष्यन्तीति वस्तु व्यज्यमानं राजविषयकरतिभावेऽङ्गमपि वाच्यापेक्षया सुन्दरत्वाद् ध्वनिव्यपदेशहेतुः । न च भस्मीकरणपटुत्वरूपस्य साधारणधर्मस्योपमानिष्पादकत्वाद् व्यङ्ग्यस्य वाच्यसिद्ध्यङ्गत्वं शङ्क्यम् ।

### मर्मप्रकाशः

नदन्तीनि । स्वतः संभव्यलंकारेण वस्तुनो यथेत्यादिः । मदशब्दे अर्शआ द्यच् । बिरुदावलीं स्तुतिपरम्पराम् । अहितमन्दिरे शत्रुगृहे । तदवधि तावत्पर्यन्तम् । एवमग्रेऽपि । उपमयेति । वाच्ययेति शेषः । व्यङ्ग्यस्येति । तच्छरीरनिविष्टत्वादिति भावः ।

### मधुसूदनी

मदेति । मदशब्दे अर्शाद्यच्वा, मदेन युक्ता दन्तिन इति मध्यमपदलोपिसमासो वा । युगान्तं प्रलयस्तत्काले यो दहनस्तदुपमया सादृश्येन । तन्निष्पत्तेः वाच्याया उपमायाः सिद्धेः । व्यंग्यस्य यदैव तव कोपोदयस्तदैव रिपूणां सम्पदो भस्मसाद् भविष्यन्तीतिरूपव्यंग्यैकदेशस्य । उपात्तेति । नयनकोणशोणद्युतिरित्येवं शब्देन उपात्तस्य उपस्थापितस्य । उपमेयेन नयनकोणशोणद्युत्या व्यंग्ये प्रतीयमाने कोपे । अतथात्वात् वाच्यसिद्ध्यंगत्वाभावात् ।

### बालक्रीड़ा

हे प्रभो; तभी तक दुश्मनों के घर में मत्त साथी चिंघाड़ते हैं, घोड़े हिन हिनाते हैं और वन्दी लोग विरुदावलिका पाठ करते हैं जब तक प्रलय कालीन अग्नि के सदृश तुम्हारे नयन कोण की लाल २ कान्ति उत्पन्न नहीं होती है ।

यहाँ नयनों की लाल कान्ति के साथ युगान्त दहन की उपमा से—"जिस समय तुम्हारे कोप का उदय होगा उसी समय शत्रुओं की सम्पत्तियाँ भस्मीभूत हो जायँगी" यह वस्तु व्यक्त होती है । यद्यपि यह वस्तु राजविषयक रतिभाव में अंग है तथापि वाच्य की अपेक्षा से सुन्दर है अतः ध्वनि है ।

यह शंका नहीं करना कि भस्मीकरण पटुत्व रूप साधारण धर्म उपमा का निष्पादक है अतः व्यंग्य वाच्यसिद्धि का अंग होने से गुणीभूत हो गया है । क्योंकि शब्द से कहे हुए शोणत्व रूप साधारण धर्म से भी उपमा की निष्पत्ति संभव है ।

उपात्तशोणत्वरूपसाधारणधर्मेणापि तन्निष्पत्तेः संभवात् । उपमेयीभूतशोणद्युतिगतस्य भस्मीकरणपटुत्वरूपसाधारणधर्मस्योपमानिष्पादकत्वेऽप्युपमेयव्यङ्ग्यकोपगतभस्मीकरणपटुत्वस्यातथात्वाच्च ।

यथा वा—

'निर्भिद्य क्ष्मारुहाणामतिघनमुदरं येषु गोत्रां गतेषु
द्राघिष्ठस्वर्णदण्डभ्रमभृतमनसो हन्त धित्सन्ति पादान् ।
यैः संभिन्ने दलाग्रप्रचलहिमकणे दाडिमीबीजबुद्ध्या
चञ्चूचाञ्चल्यमञ्चन्ति च शुकशिशवस्तेंऽशवः पान्तु भानोः ।।'

## मर्मप्रकाशः

तन्निष्पत्तेरुपमानिष्पत्तेः । विनिगमनाविरहेऽप्याह—उपमेयीभूतेति । उपमाया वाच्यत्वेन तदवस्थायां यदुपमेयं तद्गतधर्मस्यैव तन्निष्पादकत्वम्, न तूपमेयभूतोपमाव्यङ्ग्यरूपकोपगतस्य तद्धर्मस्य । तदा तस्यानुपस्थितेः । तथा च यस्य तन्निष्पादकत्वं न तस्य व्यङ्ग्यत्वम्, यस्य तत्त्वं न तस्य तत्त्वम् । सोऽनुपात्त इत्यन्यत् अस्योदाहरणान्तरमाह—यथा वेति । ते रविकिरणा युष्मान्पान्तु । ते के । येषु तरुणामतिनिबिडमन्तःप्रदेशं विदार्य भूमिं गतेष्वतिदीर्घसुवर्णदण्डसंबन्धिभ्रमेण भृतं पोषितं मनो येषां ते जनाः । हन्तेत्याश्चर्यम् । पादान्किरणा-

## मधुसूदनी

निर्भिद्येति । क्ष्मारुहाणां वृक्षाणां सघनं निबिडं मध्यभागमुदरं निर्भिद्य गोत्रां भूमिं गतेषु प्रयातेषु येषु अंशुषु । द्राघिष्ठा अतिशयेन दीर्घा ये स्वर्णदण्डास्तेषां भ्रमः लम्बायमानेषु किरणेषु लम्बायमानस्वर्णदण्डभ्रान्तिः । तेन भृतं व्याप्तं मनो येषां ते शुकशिशवः । पादान् चरणान् । पादा रश्मि, अंघ्रि तुर्यांशा इत्यमरः । धित्सन्ति धर्तुमिच्छन्ति । यैरंशुभिः सम्भिन्ने मिश्रिते दलनामग्रभागे प्रचले हिमकणे तुहिनबिन्दौ दाडिमीबीजमिदमिति बुध्वा चञ्चूचाञ्चल्यमञ्चन्ति कुर्वन्ति शुकशिशवः । ते भानोः अंशवः किरणाः अस्मान् पान्तु रक्षन्तु ।

## बालक्रीड़ा

हाँ मान भी लिया जाय कि उपमेय नयन के कोण की शोण द्युति में रहने वाला भस्मीकरणपटुत्व रूप साधारण धर्म उपमा निष्पादक होने से वाच्यसिद्धयंग गुणीभूत है, किन्तु उसी उपमेय शोणद्युति से व्यंग्य कोप में रहने वाला भस्मीकरणपटुत्व रूप साधारण धर्म उपमा निष्पादक नहीं होने से वाच्यसिद्धयङ्ग गुणीभूत नहीं है ।

अथवा दूसरा शुद्ध उदाहरण देते हैं—वे भानु के किरण हमारी रक्षा करें । जो वृक्षों के सघन मध्यभाग को भेदन करके पृथ्वी पर पहुँचने के बाद लम्बे २ सुवर्ण के दण्डे की भ्रान्ति पैदा कर देते हैं । अत एव लम्बायमानसुवर्ण दण्ड समझ कर उनके ऊपर शुकशिशु

अत्र भ्रान्तिभृतां तिरश्चामप्येवमानन्दं जनयतीति जगदानन्दहेतुर्भगवानिति व्यज्यते । एवंरूपाया भ्रान्तेर्लोकेऽपि संभवात्स्वतः संभवित्वम् ।

'उदितं मण्डलमिन्दो रुदितं सद्यो वियोगिवर्गेण ।
मुदितं च सकलललनाचूडामणिशासनेन मदनेन ॥'

अत्र समुच्चयेन क्रियायौगपद्यात्मना कार्यकारणपौर्वापर्यविपर्ययात्मिकातिशयोक्तिः । एषु स्वतः संभवी व्यञ्जकः ।

'तदवधि कुशली पुराणशास्त्रस्मृतिशतचारुविचारजो विवेकः ।
यदवधि न पदं दधाति चित्ते हरिणकिशोरदृशो दृशोर्विलासः ॥'

### मर्मप्रकाशः

न्धित्सन्ति धर्तुमिच्छन्ति । किं च शुकबालका यैः संभिन्ने मिश्रिते तरुपत्राग्रनिष्ठचञ्चलहिमकणे या दाडिमीबीजस्य बुद्धिस्तया चञ्चवा चाञ्चल्यं ग्रहणार्थं व्यापारमञ्चन्ति । कुर्वन्तीत्यर्थः । अत्र भ्रान्तिमानलंकारः । तद् व्यङ्ग्यमाह—अत्रेति । अपिना अतिरश्चाम् । उदितमिति । तादृशालंकारेणालंकारस्य यथेत्यादिः । तदवधीति । कविप्रौढोक्तिनिष्पन्नवस्तुना वस्तुनो यथेत्यादिः । तदवधि तावत्पर्यन्तम् । एवमग्रेऽपि । निष्पन्नेन वस्तुनेत्यन्वयः ।

### मधुसूदनी

क्रियेति । क्रियाणामुदयनरोदनमोदनानां यौगपद्यम् एककालभावित्वं तेन ।

### बालक्रीड़ा

पैर रखना चाहते हैं। और जिनसे मिश्रण होंने के कारण लाल हुई पत्तियों के अग्रभाग में चञ्चल ओस की बूंदों पर दाडिमी बीज की बुद्धि से शुक शिशु अपनी चोंच को संचालित करते हैं।

यहाँ भ्रान्त शुक शिशुओं को भी इस तरह आनन्द देते हैं ऐसे जगत् को आनन्द देने वाले भगवान् हैं यह व्यक्त होता है। इस प्रकार की भ्रान्ति लोक में भी संभव है अतः यह भ्रान्ति स्वतः संभवी है।

इधर इन्दु का मण्डल उदित हुआ कि वियोगी वर्ग रो पड़ा और सकल ललनाओं के लिए चूडामणिभूत है शासन जिसका वह मदन मुदित हो गया।

यहाँ उदयन, रोदन एवं मोदन क्रियाओं के यौगपद्य एक कालभावित्व स्वरूप समुच्चय से कार्य और कारण में पौर्वापर्यविपर्यय रूप अतिशयोक्ति व्यक्त होती है। इनमें स्वतः संभवी व्यञ्जक है।

पुराण, शास्त्र माने वेदशास्त्र एवं स्मृतियों के विषय में किये गये सैकड़ों सुन्दर विचारों से पैदा हुआ विवेक तभी तक कुशली है। जब तक मृग शावक लोचना के दृग्विलास चित्त में पैर नहीं रखते।

अत्र कामिनीदृग्विलासे चेतसि पदमर्पितवति विवेकस्य नास्ति कुशलमिति वस्तुना दृग्विलासकर्तृकपदार्पणस्य लोकसिद्धत्वाभावात्कविप्रौढोक्तिनिष्पन्नत्वेन सुनिषण्णे तस्मिन्का कुशलचर्चा विवेकस्येति वस्तु व्यज्यते ।

'कस्मै हन्त फलाय सज्जन ! गुणग्रामार्जने सज्जसि
स्वात्मोपस्करणाय चेन्मम वचः पथ्यं समाकर्णय ।
ये भावा हृदयं हरन्ति नितरां शोभाभरैः संभृता-
स्तैरेवास्य कलेः कलेवरपुषो दैनंदिनं वर्तनम् ॥'

इह यद्यपि रमणीयाः पदार्थाः कलेर्नित्यमदनीया इति वस्तुना प्रौढोक्तिसिद्धेन मर्तुं कामयसे चेद् गुणप्राप्तौ यतस्वेति वस्तु व्यज्यते, तथा-

### मर्मप्रकाशः

व्यङ्ग्यमाह—सुनीति । दृग्विलासे सुस्थित इत्यर्थः । अस्योदाहरणाभासं खण्डयति—कस्मा इति । उपस्करणाय भूषणाय । भावाः पदार्थाः । वर्तनं वृत्तिः । जीवनमिति यावत् । उत्तरार्धार्थमाह—रमेति । अदनीया भक्षणीयाः । अस्य नियमेन लोकसिद्धत्वाभावादाह—

### मधुसूदनी

दृग्विलासेति । दृशोर्विलासः चित्ते पदं दधातीत्येवंरूपेण पदार्पणक्रियायां दृग्विलासः कर्त्ता ।

कलेवरपुषः स्थूलशरीरपोषणनिरतस्य कलेः दैनदिनं प्रतिदिनभवं वर्त्तनं भोजनम् ।

### बालक्रीड़ा

यहाँ कामिनी के दृग्विलास के चित्त में पैर रखते ही विवेक का कुशल नहीं है इस वस्तु से (साधारण तौर से) पैर रखते ही जब विवेक की यह दशा है तब उसके दृढ जम जाने पर तो विवेक की कुशल चर्चा करना ही व्यर्थ है यह वस्तु व्यक्त होती है । यहाँ जड़ दृग्विलास का चित्त में पदार्पण करना अस्वाभाविक है अत एव लोक सिद्ध नहीं है फलतः व्यञ्जक वस्तु कवि की प्रौढोक्ति से निष्पन्न है ।

हे सज्जन ! किस फल के लिए गुण ग्रामों के अर्जन में लगे हो । यदि अपने आपको सुशोभित करने के लिए, तब तो मेरा हितकर वचन सुनो जो भाव (पदार्थ) अपनी शोभाओं से परिपूर्ण हैं अत एव हृदय को अत्यन्त हरण कर लेते हैं । उन्हीं भावों से केवल अपने कलेवर की पुष्टि करने में लगे हुए इस कलि का प्रतिदिन का भोजन होता है ।

यहाँ यद्यपि "रमणीय पदार्थ कलि के नित्य अदनीय हैं इस कवि प्रौढोक्तिसिद्ध वस्तु से "यदि मरना चाहते हो तो गुणों की प्राप्ति के लिए यत्न करो" यह वस्तु व्यक्त होती है तथापि पर्यायोक्त स्वरूप यह व्यंग्य वाच्य की अपेक्षा सुन्दर नहीं होने से गुणीभूत है ।

पि तस्य पर्यायोक्तात्मनो वाच्यापेक्षया सुन्दरताविरहाद् गुणीभूतत्वमेव । अलंकारा हि वाच्यसौन्दर्यसाराः प्रायशः स्वान्तर्गतं प्रतीयमानं पृष्ठतः कुर्वन्ति ।

'देवाः के पूर्वदेवाः समिति मम नरः सन्ति के वा पुरस्ता-
देवं जल्पन्ति तावत्प्रतिभटपृतनावर्तिनः क्षत्रवीराः ।
यावन्नायाति राजन्नयनविषयतामन्तकत्रासिमूर्ते !
मुग्धारिप्राणदुग्धाशनमसृणरुचिस्त्वत्कृपाणो भुजंगः ॥'

अत्र कविप्रौढोक्तिसिद्धेन रूपकेण त्वय्युद्यतकरवाले सति का परेषां जीवनस्याशेति वस्तु व्यज्यते ।

### मर्मप्रकाशः

प्रौढोक्तीति । कवीत्यादिः । गुणेति । सज्जनेत्यादिः । तस्य व्यङ्ग्भूतवस्तुनः । पर्यायोक्तेति । 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम् ।' इत्युक्तेति भावः । हि यतः । देवा इति । कविप्रौढोक्तिनिष्पन्नालंकारेण वस्तुनो यथेत्यादिः । के इति मध्यमणिन्यायेनान्वेति । पूर्वदेवा असुराः । समिति सङ्ग्रामे । मम पुरस्तादित्यन्वयः । नर इति जसन्तम् । मुग्धेति । मुग्धरूपशत्रुसंबन्धिप्राणरूपदुग्धभोजनकृतस्निग्धकान्तिरित्यर्थः । रूपकेण खड्गसर्प.

### मधुसूदनी

वृत्तौ अदनीया इत्युक्तेः वर्त्तनपदार्थो भोजनमेव । पर्यायोक्तात्मन इति । यदेवोच्यते तदेव व्यंग्यम्, यथा तु व्यंग्यं न तथोच्यते । इत्युक्तदिशा ये रमणीयाः भावास्तान् कलिर्भुंक्ते त्वमपि यदि गुणग्रामार्जनेन रमणीयो भविष्यसि तर्हि कलिस्त्वां भोक्ष्यते । इति यदेव उच्यते तदेव चेन्मत्तुं कामयसे तर्हि गुणाग्रामार्जने यतस्वेति व्यंग्यम् । ततश्च "पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः" इति लक्षणात् पर्यायोक्तात्मत्वमुक्तम् ।

मुग्धेति । मुग्धा मूढा स्वपरयोः बलाबले अविचार्यैव वैरमाचरन्तो येऽरयः । तेषां प्राणरूपस्य दुग्धस्य अशने पाने मसृणा स्निग्धाः रुचिः प्रेम यस्य सः कृपाणरूपो भुजंगः सर्पः ।

### बालक्रीड़ा

अर्थ में सौन्दर्य का आधान करना ही सर्वस्व समझने वाले अलंकार अपने से निवेदनीय प्रतीयमान को प्रायः अपकृष्ट कर देते हैं ।

"अपने आपको समलंकृत करने के लिए" जो वाच्य है वही "अपने यशः शरीर की सुरक्षा के लिए" इस रूप में व्यंग्य है । यहां यही पर्यायोक्त का स्वरूप है कि यशः शरीर में जरा एवं मरण का भय नहीं है अन्य सब कलि के अदनीय ही है ।

युद्ध में मेरे समक्ष देव, दानव एवं मानव कौन होते हैं इस प्रकार दुश्मनों की सेना के सैनिक वीर तभी तक जल्पन करते हैं जब तक यम को भी त्रस्त कर देने वाले हे राजन् ! आपका कृपाण रूपी भुजंग नयन विषय नहीं होता है । जिस कृपाण भुजंग की

'साहंकारसुरासुरावलिकराकृष्टभ्रमन्मन्दर-
क्षुभ्यत्क्षीरधिवल्गुवीचिवलयश्रीगर्वसर्वंकषाः ।
तृष्णाताम्यदमन्दतापसकुलैः सानन्दमालोकिता
भूमीभूषण ! भूषयन्ति भुवनाभोगं भवत्कीर्तयः ॥'

अत्र कीर्तेः सानन्दालोकनेन वस्तुना कविकल्पितेन दुग्धभ्रान्तिस्तापसगता व्यज्यते । न च सानन्दालोकनस्यैव चाक्षुषभ्रान्तिरूपतया व्य-

### मर्मप्रकाशः

रूपकेण । साहंकारेति । कविप्रौढोक्तिनिष्पन्नवस्तुना अलंकारस्य यथेत्यादिः । व्याख्यातमिद-

### मधुसूदनी

साहंकारेति । व्याख्यातमिदमोजोगुणोदाहरणतया २४१ एकचत्वारिंशदधिकद्विशततमे पृष्ठे । सानन्दालोकनस्यैवेति । अत्र एवकारोऽप्यर्थकः । शंकते-कीर्त्तेरमूर्त्तायाः सानन्दालोकनं भ्रान्तिः वाच्या । वाच्यस्य व्यञ्जकत्वात् सा भ्रान्तिः व्यंजिका । अथ च कीर्तौ अवृत्तियद् दुग्धत्वं तत्प्रकारकं ज्ञानमपि भ्रान्तिर्व्यंग्या एवं भ्रान्तेः व्यञ्जकत्वात् व्यंग्यात्वाच्च व्यंग्यव्यंजकयोरविवेकः भेदाग्रहः । अपि च यदा सा भ्रान्तिर्व्यंजिका वाच्या तदा व्यंग्या कथमित्येवं व्यंग्यत्वं च भ्रान्तेरनुपपन्नम् ।

### बालक्रीड़ा

आप से व्यर्थ कलह करने के कारण मुग्ध मूर्ख दुश्मनों के प्राणरूपी दूध के अशन करने में अत्यन्त रुचि है इच्छा है ।

यहाँ कृपाण में भुजंगत्व का आरोप किया गया है । इस कवि प्रौढोक्तिसिद्ध रूपक से तुम जब तलवार उठा लोगे तब दुश्मनों के जीने की क्या आशा है यह वस्तु व्यक्त होती है ।

हे भूमिभूषण ! आपकी कीर्तियां संसार को अलंकृत कर रही है । व्रत एवं उपवासादि से क्षीण होने के कारण प्यास से आकुल तपस्वियों का गिरोह जिस कीर्ति को बड़ आनन्द से देखता है । और जो कीर्तियां अहंकारी सुर एवं असुरों के समूह के करों से आकर्षण करने से घूमते हुए मन्दराचल से क्षुब्ध क्षीरसागर की सुन्दर तरंगों की शोभा के गर्व को विचूर्णन करती है ।

यहां कवि की कल्पना से प्रस्तुत कीर्ति के सानन्द आलोकन रूप वस्तु से यह व्यक्त होता है कि तपस्वियों को कीर्ति में दुग्ध की भ्रान्ति हो रही है ।

प्रश्न="सानन्दालोकनस्यैव" इस पद में एवकार अप्यर्थक है । यहाँ तापसों का रूप रहित कीर्ति को सानन्द देखना भी भ्रान्ति है । क्योंकि आखों से रूप वाली वस्तु का ही दर्शन हो सकता है रूपरहित वस्तु का नही अतः भ्रान्ति है । यह भ्रान्ति वाच्य है वाच्य व्यञ्जक होता है । और इस सानन्दालोकन रूप भ्रान्ति से दुग्ध भ्रान्ति व्यंग्य है ।

ङ्ग्यव्यञ्जकयोरविवेको व्यङ्ग्यत्वानुपपत्तिश्चेति वाच्यम् । वस्तुन एकत्वेऽपि कीर्तिरूपविशेष्यावृत्तिदुग्धत्वप्रकारकत्वात्मकभ्रान्तित्वेन सानन्दालोकनत्वेन च व्यङ्ग्यव्यञ्जकविवेकस्य व्यङ्ग्यतावच्छेदकरूपेण वाच्यताया अभावाद्व्यङ्ग्यत्वस्य चोपपत्तेः । तथा चाहुः—'यदेवोच्यते तदेव व्यङ्ग्यम् । यथा तु व्यङ्ग्यं न तथोच्यते' इति ।

'दयिते ! रदनत्विषा मिषादयि ! तेऽमी विलसन्ति केसराः ।
अपि चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः ॥'

### मर्मप्रकाशः

मधस्तात् । अविवेकोऽभेदः । इदं च व्यङ्ग्यत्वमभ्युपेत्य वस्तुनस्तदेव नेत्याह—व्यङ्ग्यत्वेति । वाच्यत्वात्तथेति भावः । कीर्तीति । यथासंख्यमन्वयः । उपपत्तेरिति । 'शयिता सविधे—' इत्यत्र । 'व्यङ्ग्यतावच्छेदकेच्छात्वरूपजातिरूप' इति पाठः । तेन रूपेणैव मनोरथपदेन बोधनान्न पूर्वग्रन्थविरोधः । मनोरथत्वेच्छात्वयोर्घटत्वकलशत्ववदेकत्वात् । इह तु भ्रान्तित्वसानन्दावलोकनत्वयोर्व्याप्यव्यापकभावेन भेदादिति बोध्यम् । यथा तु येन रुपेण । एवमग्रेऽपि । दयितेति । कविप्रौढोक्तिनिष्पन्नालंकारेणालंकारस्य यथेत्यादिः । पूर्वोक्तेरेति ।

### मधुसूदनी

उत्तरति । वस्तुनो भ्रान्तेः एकत्वेऽपि भ्रान्तित्वेन समानेऽपि । कीर्तिरूपे विशेष्ये अवृत्ति अतिष्ठद् यद् दुग्धत्वं तत्प्रकारिका भ्रान्तिर्व्यंग्या । कीर्त्तेः सानन्दावलोकनत्वप्रकारिका भ्रान्तिर्वाच्या व्यञ्जिका सैव । एवं व्यंग्यव्यञ्जकयोः विवेकस्य उपपत्तिः । व्यंग्यतावच्छेदकदुग्धत्वरूपेण वाच्यताया अभावाद् व्यंग्यत्वस्यापि संगतिः ।

### बालक्रीड़ा

इस तरह भ्रान्ति ही व्यंग्य है और भ्रान्ति ही व्यंजक है तव व्यंग्य एवं व्यञ्जक में अविवेक हो गया अभेद एकता हो गई तथा जव भ्रान्ति वाच्य है तब व्यंग्य कैसे अतः भ्रान्ति की व्यंग्यता में अनुपपत्ति है ।

उत्तर :– भ्रान्ति रूप वस्तु के एक होने पर भी सानन्दावलोकनक्रियाकर्मीभूतकीर्तिरूप विशेष्य में नहीं रहने वाला जो दुग्धत्व है तत्प्रकारक भ्रान्ति व्यंग्य है । यहां व्यंग्यतावच्छेदक दुग्धत्व है । और कीर्ति को सावन्दावलोकनत्वप्रकारक भ्रान्ति व्यञ्जक है यहां व्यञ्जकतावच्छेदक सानन्दालोकवत्व है अतः व्यंग्य एवं व्यञ्जक का भेद बन गया । और व्यंग्यतावच्छेदक दुग्धत्व की वाच्यता नहीं होने से भ्रान्ति में व्यंग्यत्व की उपपत्ति हो जाती है । इसी वास्ते आचार्यों ने पर्यायोक्त के स्वरूप में कहा है कि जो कहा जाता है वही व्यंग्य है किन्तु जैसे व्यंग्य है वैसे वाच्य नहीं है ।

अयि दयिते ! दान्तों की कान्ति के बहाने ये केशरही चमकते हैं । यह दान्तों की

अत्र पूर्वोत्तरार्धवर्तिनीभ्यामपह्नुतिभ्यां न त्वं नारी किं तु नलिनीति तृतीयापह्नुतिर्व्यज्यते। एषु प्रौढोक्तिनिष्पन्नो व्यञ्जकः।

यद्यपि शब्दशक्तिमूलकत्वमर्थशक्तिमूलकत्वं चेत्युभयमपि सकलव्यङ्ग्यसाधारणम्, शब्दार्थयोरनुसंधानं विना व्यङ्ग्यस्यैवानुल्लासात्, तथापि परिवृत्त्यसहिष्णूनां शब्दानां प्राचुर्ये तत्प्रयुक्तात्प्राधान्यात्सत्या अप्यर्थशक्तेरप्राधान्याच्च व्यङ्ग्यस्य शब्दशक्तिमूलकत्वेनैव व्यपदेशः। परिवृत्तिसहिष्णूनां तु प्राचुर्येऽर्थशक्तेरेव प्राधान्यात्सत्या अपि शब्दशक्तेः प्रधानानुगु-

मर्मप्रकाशः

लोकसिद्धत्वाभावेन कविप्रौढोक्तिनिष्पन्नाभ्यामित्यादिः। अनुसंधानं ज्ञानम्। तत्प्रयुक्तात्तदसहिष्णुशब्दप्राचुर्यप्रयुक्तात्। प्रधानेति। तदुपकारकतयेत्यर्थः। चशब्दानामिति। निर्धारण

मधुसूदनी

पूर्वार्धे अपह्नुतिः नेमे रदनाः किन्तु केसराः। उत्तरार्धे अपह्नुतिः नेमे अलकाः किन्तु अलयः। ताभ्यां च तृतीया अपह्नुतिर्व्यज्यते।

सकलव्यंग्यसाधारणं शब्दार्थौ काव्यमिति, अर्थप्रतिपादकः शब्दः काव्यमिति वदतां मतेऽपि उभयोः स्थितिरस्त्येव।

अत एवोच्यते शब्दार्थयोरनुसन्धानं भावनमिति। प्राचुर्यं बाहुल्यम्। तत्प्रयुक्तात् परिवर्तनासहिष्णुशब्दबाहुल्यनिमित्ताद्धेतोः।

प्रधानेति। प्रधानस्य आनुगुण्यमेव प्रधानत्वसाधनमेव अर्थः प्रयोजनं यस्य तस्य भावस्तत्ता तया।

बालक्रीड़ा

कान्ति नहीं है किन्तु केशर हैं। कमल के पुष्प और उस कमल के मकरन्द की स्पृहा करने वाले ये अलकवेषधारी भ्रमर हैं। अर्थात् ये जुल्फियां नहीं है किन्तु भौंरें हैं।

यहां पूर्वार्धगत अपह्नुति और उत्तरार्धगत अपह्नुतियों से यह तीसरी अपह्नुति व्यक्त होती है कि तुम नारी नहीं हो किन्तु कमलिनी हो। इनमें कवि प्रौढोक्ति सिद्ध व्यञ्जक है।

यद्यपि शब्द शक्ति मूलकत्व और अर्थ शक्तिमूलकत्व सभी व्यंग्यों में समान है क्योंकि शब्द एवं अर्थ के अनुसंधान के विना व्यंग्य का ही उल्लास नहीं होता है। तथापि परिवर्त्तन को नहीं सहन करने वाले शब्दों की प्रचुरता में शब्दों की प्रधानता के कारण रहती हुई भी अर्थ शक्ति के अप्रधान होने से व्यंग्य का शब्द शक्ति मूलक ही नाम करण किया है। तथा परिवर्त्तन को सहन करने वाले शब्दों की प्रचुरता में अर्थ शक्ति के प्राधान्य होने से रहती

ण्यार्थतया मल्लग्रामादिवत्प्रधानेनैव व्यपदेशः। यत्र तु काव्ये परिवृत्तिं सहमानानामसहमानानां च शब्दानां नैकजातीयप्राचुर्यम्, अपि तु साम्यमेव, तत्र शब्दार्थोभयशक्तिमूलकस्य व्यङ्ग्यस्य स्थितिरिति द्व्युत्थो ध्वनिः। न चायं शब्दशक्तिमूलकतयैवार्थशक्तिमूलकतयैव वा व्यपदेष्टुं शक्यः, विनिगमकाभावात्। नापि शब्दशक्तिमूलकार्थशक्तिमूलकयोः संकरेण गतार्थयितुम्, व्यङ्ग्यभेद एव संकरस्येष्टेः। इह तु व्यङ्ग्यस्यैक्येन तस्यानुत्थानात्।

उदाहरणम्—

'रम्यहासा रसोल्लासा रसिकालिनिषेविता।
सर्वाङ्गशोभासंभारा पद्मिनी कस्य न प्रिया॥'

### मर्मप्रकाशः

षष्ठी। अयं द्व्युत्थो ध्वनिः। एवमग्रेऽपि। विनिगमनाविरहादाह—अर्थेति। गतार्थयितुमिति शक्योऽयमित्यस्यानुषङ्गः। उदेति। द्व्युत्थध्वनेरित्यादिः। अत्र हासरसालिपद्मिनी

### मधुसूदनी

विनिगमकेति। विनिगमकस्य शब्दशक्तिमूलकत्वेनैव व्यपदेशे हेतोरभावात्। तथैवान्यदपि बोध्यम्।

इष्टेः स्वीकारात्। इह तु शब्दार्थोभयशक्त्युत्थे ध्वनौ तु। तस्य व्यंग्यभेदस्य अनुत्थानात् उद्भवाभावात्।

### बालक्रीड़ा

हुई भी शब्दशक्ति, प्रधान अर्थशक्ति के आनुगुण्य के लिए ही है। अतः मल्लग्रामादि की तरह प्रधान के नाम से व्यवहार होता है।

जिस काव्य में तो परिवर्त्तन को सहन करने वाले एवं नहीं सहन करने वाले शब्दों में से किसी एक जातीय शब्दों का प्राचुर्य नहीं है किन्तु समानता ही है, वहां शब्दार्थोभयशक्ति मूलक व्यंग्य की स्थिति है अतः वही ध्वनि द्व्युत्थ है।

न तो इसको शब्द शक्तिमूलक ही कह सकते हैं और न तो अर्थशक्तिमूलक ही कह सकते हैं। क्योंकि किसी एक के कहनें में कोई विनिगमक नहीं है और यह भी नहीं कह सकते कि इन दोनों का सांकर्य है। क्योंकि सांकर्य वहां ही होता है जहां दो वस्तुओं का मिलान होता है। अतः व्यंग्य भेद होना सांकर्य के लिए आवश्यक है इष्ट है यहां तो दोनों शक्तियों से प्राप्त व्यंग्य एक हीं है भिन्न नहीं है

जैसे—जिसका हँसना अत्यन्त रमणीय है, जिसमें रसमय उल्लास हैं, रसिकरूपी भौंरे जिस पर मँडराते रहते हैं और जो सम्पूर्ण अगों की शोभा से भरी हुई है, वह पद्मिनी किस को प्रिय नहीं है अर्थात् सभी को प्रिय है।

यहां हास, रस, अलि एवं पद्मिनी शब्द परिवर्तनासह हैं अन्य शब्द परिवर्तनसह हैं।

अयं च वाक्यमात्रे। पदसमूहश्च वाक्यम्। तेनास्य नानार्थानानार्थघटितसमासविषयत्वेऽपि न विरोधः। न तु शुद्धैकपदे तस्मिन्नानार्थानानार्थयोरसमावेशात्। अन्ये तु—'अर्थशक्तिमूलकत्वव्यपदेशे नानार्थप्रकाशकशब्दशक्त्युल्लास्यत्वसामान्यशून्यत्वं तन्त्रम् विषयप्राचुर्यात्। शब्दशक्तिमूलकत्वव्यपदेशे तु नार्थशक्त्युल्लास्यत्वसामान्यशून्यत्वं तथा, विषयदौर्ल-

## मर्मप्रकाशः

शब्दास्तदसहाः, अन्ये तत्सहा इति साम्यम्। तेन पदसमूहरूपवाक्यनिष्ठत्वेन। अस्य द्वयुत्थध्वनेः। न विरोध इति। तस्याप्यवान्तरपदत्वमादाय पदसमूहत्वादिति भावः। मात्रपदव्यावर्त्यमाह—न त्विति। सामान्यशून्यत्वमिति। सामान्याभाव इत्यर्थः। तथा तन्त्रम्।

## मधुसूदनी

अयं च द्व्युत्थो ध्वनिः वाक्यमात्रे केवले वाक्ये। न तु शुद्धे नानार्थके अनानार्थके वा एकस्मिन् पदे इत्यन्वयः। मात्रपदेन व्यावर्त्यमाह—नत्विति।

अन्ये त्विति। अयं ध्वनिरर्थशक्तिमूल इति व्यवहारे नानार्थानां प्रकाशका ये शब्दास्तेषां शक्तिभिरुल्लास्यत्वस्य सामान्येन शून्यता अभावस्तंत्रं कारणम्। अर्थशक्तिमूलकतायां नानार्थप्रकाशकशब्दानां सामान्येन शून्यता कारणमिति वक्तुं न शक्यते। यतो हि "आगत्य संप्रतीति" मम्मटभट्टैरुदाहृते पादपतनेनेत्यत्र पादस्य श्लिष्टत्वान्नानार्थप्रकाशकशब्दत्वमर्थशक्तिमूलध्वनावपि वर्त्तते। अतः नानार्थकशब्दाघटितत्वेऽपि अयं ध्वनिर्भवतीति व्यपदेष्टुं शक्यम्। परं नानार्थकशब्दानां सामान्याभावः वक्तुं दुःशकः। शब्दशक्तिमूलकत्वव्ययदेशे अर्थशक्तिसमुल्लास्यत्वस्य सामान्येन अभावः अर्थात् निरर्थकशब्दघटनायां विषयदौर्लभ्यापत्तेः कुत्रापि काव्यत्वं न स्याद्यतः। केवलनानार्थशब्दैर्घटितं पद्यमपि प्रचुरविषयं नहि भवतीत्यतोऽयं द्व्युत्थो ध्वनिः शब्दशक्तिमूलकत्वेनैव व्यपदेष्टुं शक्यः।

## बालक्रीड़ा

यह ध्वनि केवल वाक्य में होती है और पद समूह का नाम वाक्य है। फलतः पद समूह में रहने के कारण इस उभयशक्ति से उत्थ ध्वनि का नानार्थक एवं तद्भिन्न एकार्थक शब्दों से बने हुए समास (की विषयता) में भी कोई विरोध नहीं है। अर्थात् नानार्थक एवं एकार्थक शब्दों के समास से बने हुए समस्त पद में भी यह ध्वनि रह सकता है। क्योंकि वहां समास घटक शब्दों को पदसमूह कह सकते हैं।

किन्तु शुद्ध अर्थात् केवल नानार्थक या केवल अनानार्थक शब्दों से-समास करने पर बने हुए एक पद में यह उभयशक्त्युत्थ ध्वनि नहीं रह सकता है। क्योंकि उस एक पद में नानार्थक एवं एकार्थक पदों का समावेश नहीं हो सका है।

अन्य आचार्य तो कहते हैं कि नाना अर्थों को प्रकाशित करने वाले शब्दों की शक्ति से व्यंग्य के उल्लास्य का बिलकुल नहीं रहना ही अर्थशक्तिमूलध्वनि के व्यपदेश में तन्त्र है कारण

भ्यापत्तेः। नहि नानार्थशब्दमात्रघटितपद्यं प्रचुरविषयम्। अतः शब्दशक्तिमूलकत्वेनैवायं शक्यव्यपदेशो ध्वनिः' इत्यप्याहुः। इत्थमभिधामूलस्त्रिविधोऽपि संक्षेपेण निरूपितो ध्वनिः। निरूपयिष्यते चांशतो यथावसरम्।

लक्षणामूलस्तु निरूप्यते—

तत्र वक्ष्यमाणलक्षणायां लक्षणायां प्रयोजनवत्याः षड्विधायाः सारोपसाध्यवसानाभ्यां गौणीशुद्धाभ्यां च विभक्तानां भेदानां चतुर्णामलंकारात्मना परिणतत्वाद् द्वौ भेदौ ध्वन्याश्रयतया स्थितौ, जहत्स्वार्था अजहत्स्वार्था चेति। तन्मूलौ च द्वौ ध्वनेः प्रभेदौ।

### मर्मप्रकाशः

कारणमिति तदर्थः। अत इति। तथा वक्तुमशक्यत्वेन। तद्भिन्नत्व एव तत्त्वस्यावश्यवक्तव्यत्वादित्यर्थः। अयं व्युत्थो ध्वनिः। उक्तरीत्या भेदसंभव एवात्रारुचिः। उपसंहरति--इत्थमिति। तत्र निरूपणीये तस्मिन्। वक्ष्यमाणेति। वक्ष्यमाणं लक्षणं यस्यास्तस्यामित्यर्थः। सत्यामिति शेषः। अलंकारात्मनेति। रूपकातिशयोक्तिहेत्वलंकारात्मनेत्यर्थः।

### बालक्रीड़ा

है। क्योंकि बिलकुल नानार्थक शब्द नही रहें ऐसे विषय (स्थल) अर्थात् अर्थशक्तिमूलध्वनि के उदाहरण प्रचुर मात्रा में मिल सकते हैं। किन्तु शब्दशक्तिमूलक ध्वनि के व्यपदेश में अर्थशक्तिसमुत्थत्व का सामान्यतः रहितत्व तन्त्र नहीं है। यदि रहितत्व तंत्र हैं ऐसा मानेंगे तो शब्दशक्तिमूल ध्वनि के उदाहरण ही दुर्लभ हो जायेंगे। और केवल नानार्थक शब्दों से बने हुए पद्य भी अधिक नहीं हैं। अतः शब्दशक्तिमूलकत्व से ही इस उभय शक्त्युत्थ ध्वनि का व्यपदेश कर सकते हैं।

इस तरह तीनों प्रकार की अभिधामूलध्वनियों का संक्षेप में निरूपण कर दिया। आगे भी जैसे-जैसे अवसर आयेगा तब तब आंशिक निरूपण करेंगे।

अब लक्षणा मूल ध्वनि का निरूपण करते हैं। लक्षणा का लक्षण आगे कहेंगे। उस में प्रयोजनवती लक्षणा के छः भेद हैं। उनमें गौणी सारोपा (१) एवं साध्यवासना (२) तथा शुद्ध साध्यवासना (३) एवं सारोपा (४) नाम से पृथक्-पृथक् व्यवहार्य चार भेद रूपक (१) उत्प्रेक्षा (२) अतिशयोक्ति (३) एवं हेतु (४) इन चार अलंकारों के रूप में परिणत हो गये हैं। अवशिष्ट दो भेद लक्षणामूलध्वनि के कारण हैं। उन भेदों के नाम हैं जहत्स्वार्था जिसमें पद अपने अर्थों को छोड़ रहे हैं उसी को लक्षणलक्षणा भी कहते हैं। अजहत्स्वार्था जिसमें पद अपने अर्थों को नहीं छोड़ रहे हैं उसीका दूसरा नाम उपादानलक्षणा है। इस प्रकार जहत्स्वार्थालक्षणामूल एवं अजहत्स्वार्थालक्षणामूल ध्वनि के दो प्रभेद कहे जाते हैं।

तयोर्जहत्स्वार्थामूलो यथा—

'कृतं त्वयोन्नतं कृत्यमर्जितं चामलं यशः ।
यावज्जीवं सखे ! तुभ्यं दास्यामो विपुलाशिषः ॥'

इयं कस्यचिदपकारिणं प्रत्युक्तिः । त्वया कृतेऽप्यपकारे परमखेदहेतौ मधुरमेव यो भाषेय न परुषं, तस्मिन्नेवंजातीयके मयि पापमाचरतस्तव पापिष्ठत्वं कथं शक्यते वक्तुमिति व्यङ्ग्यम् ।

अपरामूलो यथा—

बधान द्रागेव द्रढिमरमणीयं परिकरं
किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः ।
न कुर्यास्त्वं हेलामितरजनसाधारणधिया
जगन्नाथस्यायं सुरधुनि ! समुद्धारसमयः ॥'

अत्र जगन्नाथस्येत्यनेन शक्य एवानेकपापविशिष्टत्वेन लक्ष्यते। पापानां पदान्तरेणानिर्वाच्यत्वं व्यङ्ग्यम्। कुन्ताः प्रविशन्तीत्यादौ तु वाच्यगत

मर्मप्रकाशः

जहत्स्वार्था अजहत्स्वार्था चेति । अनयोरेवोपादानलक्षणलक्षणेति व्यवहारः । कथं कीदृशम् । अत्रोन्नतादिपदानां स्वार्थत्यागेनाधमादौ लक्षणा । अपरेति । अजहत्स्वार्थेत्यर्थः । द्रढिमेति तृतीयातत्पुरुषः । नियमय बधान । शक्य एवेति । जगन्नाथत्वेनेति शेषः । अनेनाजहत्स्वार्थत्वं प्रकटितम् । पदान्तरेण जगन्नाथपदातिरिक्तेन । तैक्ष्ण्यादि लक्ष्ये इति । वाच्यार्थगतं

बालक्रीड़ा

उनमें जहत्स्वार्थामूल ध्वनि जैसे—तुमने उन्नत कृत्य किया । और निर्मल यश भी कमाया । हे सखे ! यावज्जीवन तुम्हें विपुल आशीर्वाद दूंगा ।

यह अपकारी के प्रति किसी की उक्ति है । परम दुःखदायक अपकार करने पर भी जो तुमको मधुर ही कहता है कभी परुष नहीं कहता । इस तरह के मेरे ऊपर पाप करने वाले तुम्हारे पापिष्ठत्व का कथन करना अशक्य है यह व्यंग्य यहाँ है ।

अजहत्स्वार्थामूल ध्वनि जैसे—"हे सुरधुनि ! हे गंगे ! शीघ्र ही दृढ़ता से रमणीय परिकर को बाँध लीजिए । किरीट माने मुकुट में बालचन्द्र को सर्पों से नियमित कीजिए । बहुतों को इस घाट पार उतारा है इस तरह की जैसे इतर जनमें साधारण बुद्धि की जाती है उस बुद्धि से अवज्ञा आप मत करिये । क्योंकि जगन्नाथ के उद्धार का समय है ।

यहाँ "जगन्नाथस्य" इस पद के शक्य जगन्नाथ की अनेक पापों को करने वाले जगन्नाथ में लक्षणा है । यह जगन्नाथ ऐसा पापी है कि जिसके "पापों को किसी अन्य पद से कहना अशक्य है" यह यहाँ व्यंग्य है । यहाँ जगन्नाथ पद ने अपना शक्य अर्थ छोड़ा नहीं अतः

तैक्ष्ण्यादि लक्ष्यम् । तदेवमेते प्रागुक्ता द्वयुत्थातिरिक्ताः सर्वेऽपि ध्वनय एकस्मिन्वाक्ये यद्येकपदमात्रगतास्तदा पदध्वनितया व्यपदिश्यन्ते । नानापदगततायां तु वाक्यध्वनितयेति ।

अथ केयमभिधा नाम यन्मूलः प्रथमं निरूपितोऽयं ध्वनिप्रपञ्चः । उच्यते—

### मर्मप्रकाशः

यत्तैक्ष्ण्यादि तल्लक्ष्यवृत्तितया व्यङ्ग्यमित्यर्थः । उपसंहरति—तदेवमिति । विनिगमनाविरहादाह—शब्दस्येति ।

### मधुसूदनी

अथ ध्वनिभेदनिरूपणानन्तरं प्रश्नो जागर्त्ति, यदियमभिधा का ? यन्मूलः अभिधाहेतुकः अयं समनन्तरितः ध्वनिप्रपञ्चः ध्वनिभेदप्रभेदः प्रथमं प्राङ् निरूपितः ।

उत्तरति=उच्यते । इति । शक्तिनाम्ना आख्यायते कथ्यते इति शक्त्याख्यो यः सम्बन्धः सा अभिधा इत्यन्वयः । स च अर्थस्य शब्दगतः । (अर्थप्रतियोगिकः शब्दानुयोगिकः) शब्दस्य अर्थगतो (शब्दप्रतियोगिकः अर्थानुयोगिकः) वर्त्तते । सम्बन्धे हि अपरः (यस्य सम्बन्धोऽन्यत्र नीयते) प्रतियोगी, एकः (यत्र सम्बन्धः कथ्यते) अनुयोगी भवति । प्रकृते च विनिगमनाविरहादुभयानुयोगिकः उभयप्रतियोगिकोऽस्ति ।

ननु सम्बन्धो हि सम्बन्धिद्वयभिन्नः सम्बन्धिद्वयगतः एकश्च भवति । तथा च शब्दार्थरूपसंबन्धिद्वयभिन्नः शब्दार्थरूपसम्बन्धिद्वयगतः एकश्च शक्त्याख्यः

### बालक्रीड़ा

अजहत्स्वार्था मूल है । कुन्ताः प्रविशन्ति इत्यादि उदाहरणों में वाच्य कुन्त में रहने वाली तीक्ष्णता आदि लक्ष्य में व्यंग्य है ।

इस प्रकार, ये पहले बतलाई हुई (उभयशक्त्युत्थ को छोड़कर) सभी ध्वनियाँ एक काव्य में यदि किसी एक पद में रहती है तब तो पदध्वनियां कहलाऐंगी । और यदि नाना पदों में रहेंगी तब वाक्य ध्वनियाँ कहलायेंगी ।

अब यह पूछते हैं कि यह अभिधा क्या है । जिसके आधार पर पहले वाले अभिधामूल ध्वनिप्रपञ्च का निरूपण किया है । उत्तर देते हैं कि अर्थ का शब्द में रहने वाला और शब्द का अर्थ में रहने वाला जो सम्बन्ध विशेष है उसका नाम अभिधा है जिसका शवित यह आख्या नाम है ।

अर्थ का प्रतिपादक शब्द काव्य है । वहाँ पहले शब्द का श्रावण प्रत्यक्ष होता है । उस शब्द ज्ञान से अर्थ की उपस्थिति होती है । इसके बाद शाब्दबोध होता है । इस प्रकार शब्द से होने वाले बोध के लिए अर्थोपस्थिति का कारण शब्द और अर्थ का परस्पर सम्बन्ध है । इसी का नाम अभिधा है जिसको शब्दों की शक्ति कहते हैं ।

शक्त्याख्योऽर्थस्य शब्दगतः, शब्दस्यार्थगतो वा सम्बन्धविशेषोऽभिधा ॥

सा च पदार्थान्तरमिति केचित्। 'अस्माच्छब्दादयमर्थोऽवगन्तव्य इत्या-

## मर्मप्रकाशः

केचित्, वैयाकरणमीमांसकादयः।

## मधुसूदनी

सम्बन्धोऽस्ति। एवम्भूतो हि सम्बन्धो (दण्डपुरुषयोः) संयोगोऽपि, (श्वेतघटयोः) समवायोऽपि वर्त्तते। तर्हि किमयं शक्त्याख्यः सम्बन्धः संयोगरूपो वा समवायरूपो वेति चेदाह—विशेष इति। सम्बन्धसामान्यो न, अपितु सम्बन्धविशेषः। ततश्च अयं शब्दार्थयोः शक्तिरूपः सम्बन्धः विशेषः संयोगसमवायाभ्यां विलक्षण इत्यर्थः। स च वाच्यवाचकभावापरपर्यायतया प्रसिद्ध इति यावत्।

सा च शक्तिः पदार्थान्तरम्, इति केचित्। अयं भावः। शाब्दे हि व्यवहारे शक्तिपदप्रयोगः न्यायपूर्वोत्तरमीमांसाव्याकरणसाहित्यसौगतशास्त्रेषु। तत्र साहित्यमतं निरूप्य उभयमीमांसकवैयाकरणसौगतानां मतमाह-केचिदिति। न्यायमतस्य च स्वतन्त्रतया निरूपयिष्यमाणत्वात्।

अत्रत्यः सर्वोऽपि विषयः अस्मदुपज्ञायां रसगंगाधरभूमिकायां षडुत्तरे सप्तोत्तरे च शततमे १०६–१०७ पृष्ठे द्रष्टव्यः। तथापि—सौगतां वैयाकरणानां च मते शब्दार्थयोस्तादात्म्यसम्बन्धः शक्तिः। स च अभेदसमानाधिकरणभेदः। अत एव वह्निशब्दोच्चारणेन न दाहोत्पत्तिः। संक्षेपः।

नैयायिकमतेन कथयति—अस्मादिति। एषां मते इच्छायाः द्विविधः आकारः। "अस्मात्पदादयमर्थोऽवगन्तव्यः" इति प्रथमः। "इदं पदममुमर्थं बोधयतु" इति द्वितीयः। सर्वथा ईश्वरेच्छा शक्तिः। अत एव "एकादशेऽहनि पिता नाम कुर्यात्"

## बालक्रीड़ा

शब्द सभी को सुनाई पड़ते हैं किन्तु सबको सर्वदा उन शब्दों से अर्थ का बोध नहीं होता हैं। जिनको बोध होता है उनको भी वह बोध तत्काल नहीं होता है किन्तु थोड़ी देर के बाद होता है और किसी किसी को ही वह बोध होता है। इसलिए कल्पना करते हैं कि इस बोध का कारण है शब्द और अर्थ के परस्पर सम्बन्ध विशेष के ज्ञान से पदार्थ की उपस्थिति। दूसरे किसी कारण की कल्पना नही हो सकती है।

अब जिज्ञासा होती है कि इस उपस्थिति का हेतु जो शब्द और अर्थ का सम्बन्ध है उसका स्वरूप क्या है। इसके उत्तर में पूर्व एवं उत्तर मीमांसक कहते हैं कि कारण में कार्य जन्म के अनुकूल शक्ति रहती है। प्रकृत में घटादि पदों में घटत्वादि विषयक शाब्दबोध के अनुकूल शक्ति है यह शक्ति पदार्थान्तिर है याने नैयायिकों के माने हुए सात पदार्थों से भिन्न पदार्थ है।

कारा "इदं पदममुमर्थं बोधयतु" इत्याकारा वेश्वरेच्छैवाभिधा। तस्याश्च

## मधुसूदनी

इत्यत्रापि ईश्वरेच्छायाः सत्वादाधुनिके संकेतेऽपि अभिधाऽस्त्येव। ईश्वरानंगीकर्तॄणां नास्तिकानामपि शाब्दबोधो भवतीत्यत इच्छैव अभिधेति अर्वाचीनाः।

द्वितीयान्तादिसप्तम्यन्तपदप्रतिपाद्यानां सर्वेषामर्थानां प्रथमान्तपदप्रतिपाद्येऽन्वयात् प्रथमान्तमुख्यविशेष्यकः शाब्दबोधो नैयायिकानामभिमतः। ततश्च प्रथमस्मिन् आकारे अर्थस्य प्रथमान्तत्वात् अर्थविशेष्यको बोधः। द्वितीयस्मिन् पदस्य प्रथमान्तत्वात् पदविशेष्यको बोधः। पूर्वत्र इदं-पदोत्तरपंचम्या अभेदोऽर्थः। पद शब्दोत्तरपञ्चम्या जन्यत्वमर्थः। जन्यता हि जनकतानिरूपिता भवति अतो जन्यत्वे पदस्य स्वनिष्ठजनकतानिरूपितत्वसम्बन्धेनान्वयः। जन्यश्च बोधः अवपूर्वक गम्धात्वर्थः। अतो जन्यत्वस्य स्वरूपसम्बन्धेन बोधेऽन्वयः। कर्मणि विहितस्य तव्यप्रत्ययस्य विषयत्वमर्थः। तत्र बोधस्य स्वनिष्ठविषयितानिरूपितत्वसम्बन्धेन अन्वयः विषयत्वस्य प्रकारतासम्बन्धेन, अर्थस्य च विशेष्यतासम्बन्धेन इच्छायामन्वयः। यतो हि इच्छा विशेष्यतासम्बन्धेन अर्थे तथा प्रकारतासम्बन्धेन विषयत्वे। विषयताश्रयत्वं विषयत्वमेवेति तथा लिखितम्। एवं हि अस्मात् पदादयमर्थोऽवगन्तव्य इति मते इदंपदनिष्ठजनकतानिरूपितजन्यतावद्बोधनिष्ठविषयितानिरूपितविषयत्वप्रकारकार्थविशेष्यकेच्छात्वमभिधात्वमिति निष्कर्षः। तत्र द्वितीये अर्थपदोत्तरद्वितीयाया विषयत्वमर्थः। तत्रार्थस्य निष्ठत्वसम्बन्धेनान्वयः। विषयत्वस्य च बुधधात्वर्थे बोधे निरूपकत्वसम्बन्धेनान्वयः। बोधस्य च णिजर्थजनकत्वे स्व (बोध) निष्ठजन्यतानिरूपितत्वसम्बन्धेन। णिजर्थजनकत्वस्य च प्रकारतासम्बन्धेन लोडर्थेच्छायाम्। तत्रैव लोडर्थे प्रथमान्तं पदमपि विशेष्यतासम्बंधेन। एवञ्च इदमर्थनिष्ठविषयतानिरूपकबोधनिष्ठजन्यतानिरूपितजनकत्वप्रकारकार्थविशेष्यकेच्छात्वमभिधात्वम्, इदम्पदममुमर्थं बोधयतु इति मते।

ननु ईश्वरेच्छा ईश्वरे न तु पदे तर्हि कथं पदार्थबोध इत्यत आह तस्याश्चेति। ईश्वरेच्छायाश्च विषयतया विषयत्वरूपसम्बन्धेन सर्वत्र पदे अर्थे बोधे वा पदार्थमात्रे वा सत्त्वात्। ईश्वरः सर्वव्यापी तदिच्छापि सर्वव्यापिनीति भावः। पदादीनामिति। पटपदादपि घटरूपार्थस्य, घटपदादपि पटरूपार्थस्य बोधः स्यादिति भावात्। अतः

## बालक्रीड़ा

नैयायिक कहता है कि इस संबंध का स्वरूप संकेत है "इस पद से इस अर्थ को समझो" या "यह पद इस अर्थ को समझावे" ऐसी ईश्वर की इच्छा का नाम संकेत है।

इस में शंका होती है कि इस इच्छा के विषय पद (शब्द) अर्थ और उनसे होने वाले बोध तीनों हैं अतः निर्णय नहीं हो सका कि किसको वाचक, वाच्य एवं फल कहा जाय। उत्तर=बोधजनकतया जो इच्छा का विषय है वह वाचक है और बोधविषयतया जो इच्छा का विषय है वह वाच्य है तथा विषयतया एवं जन्यतया जो इच्छा का विषय हो वह बोध फल है।

विषयतया सर्वत्र सत्त्वात्पटादीनामपि घटादिपदवाच्यता स्यात्। अतो व्यक्तिविशेषोपधानेन घटादिपदाभिधात्वं वाच्यम्' इत्यपरे। 'एवमपीश्वरज्ञानादिना विनिगमनाविरहः स्यात्, अतः प्रथममतमेव ज्यायः' इत्यपि वदन्ति।

## मर्मप्रकाशः

अपरे, नैयायिकाः। एवमपि उक्तरीत्यातिप्रसङ्गवारणेऽपि। विवक्षितेति। शक्त्येति। तृतीयाश्रुतेरिति भावः। स्वज्ञाने स्वज्ञानापेक्षत्वेनात्माश्रयस्य स्पष्टत्वादसंगतिमुपपादयति—

## मधुसूदनी

पटादीनां घटादिपदेभ्यो वाच्यता मा भवतु इत्यस्माद् व्यक्तिविशेषस्य तत्तद्व्यक्तेरुपधानेन सम्बन्धेन घटादिपदाश्रिता अभिधा। पदं हि शक्तेराश्रयत्वेन विवक्षितमिति भावः। तथा च पटपदजन्यबोधविषयत्वप्रकारकपटविशेष्यकेश्वरेच्छात्वमभिधात्वमिति अस्मात्पदादिति मते लक्षणं फलितम्। पटविषयकबोधजनकत्वप्रकारकपटपदविशेष्यकेश्वरेच्छात्वमभिधात्वमिति इदं पदमिति मते लक्षणं फलितम्।

एवमपीति। एवमपि ईश्वरेच्छाया अभिधात्वस्वीकारेऽपि ईश्वरज्ञानम्, आदिपदाद् ईश्वरकृतिरभिधा इत्यपि कुतो न, किं विनिगमकम्। नास्ति चेत्तर्हि तज्ज्ञानकृत्योरपि अभिधात्वमस्तु अतः विनिगमनाविरहात् प्रथममतमेव सा च पदार्थान्तरमिति वदतां केषाञ्चिन्मतमेव ज्यायः श्रेयः।

## बालक्रीड़ा

इस पर पुनः शंका होती है कि इस तरह ईश्वर की इच्छा के विषय सभी हैं तब जैसे घट में इश्वरेच्छीयविषयता है वैसे ही पट में भी हैं फलतः पट पद से घट का बोध और घट पद से पट का बोध होगा तब पटपदवाच्यता घट में रहेगी एवं घटपदवाच्यता पट में रहेगी।

उत्तर—यह दोष तभी होता है जब सामान्यतः पद व्यक्ति का उपधान उपन्यास अर्थात् सन्निवेश होता है। किन्तु व्यक्ति विशेषघट का उपधान करके लक्षण करने से दोष नहीं होगा। अतः "इस पद से इस अर्थ को समझो" इसके अनुसार अभिधा का लक्षण ऐसा हुआ—घटपदजन्य बोध विषयत्व प्रकारक घटविशेष्यक ईश्वर की इच्छा का नाम अभिधा है। और "यह पद इस अर्थ को समझावे" इसके अनुसार घटविषयकबोधजनकत्व प्रकारक घटपदविशेष्यक ईश्वर की इच्छा का नाम अभिधा हैं ऐसा लक्षण हुआ।

इस पर प्रश्न है कि ईश्वर के ज्ञान, या ईश्वर की कृति को क्यों न संकेत मान लिया जाय। कौन विनिगमक है जो वे न मान लिये जायें। अतः प्रथम मत ही श्रेयान् हैं यह भी कहते हैं। यहाँ का भाव यह है। एक सिद्धांत है कि (जानाति, इच्छति, यतते) पहिले व्यक्ति ज्ञान करता है, पीछे इच्छा करता है फिर यत्न करता है। यही सृष्टि के प्राणियों का क्रम है अतः ईश्वर की इच्छा ही क्यों संकेत मानी जाय प्रत्युत ज्ञान को अभिधा मानना चाहिए। क्यों कि वह प्रथम प्राप्त है। ईश्वर की इच्छा को अभिधा मानने में और भी

यत्तु वृत्तिवार्तिके—'शक्त्या प्रतिपादकत्वमभिधा' इत्यप्पयदीक्षितैरुक्तं तत्तुच्छम्, उपपत्तिविरोधात्। तथाहि—इह शब्दाज्जायमानायामर्थोपस्थितौ

## मधुसूदनी

शक्त्येति। प्रकृत्या चारु, धान्येन धनवान् इतिवदभेदे तृतीया चेन्न कोऽपि दोषः। करणतृतीयां स्वीकृत्य दोषोद्भावनं भवति। पण्डितराजेनाऽपि स्वयं शक्त्याख्याभिधेति उदटंकि। अत्रापि शक्त्यभिन्नाऽभिधेति तत्त्वम्।

इहेति। इह शाब्दे व्यवहारे शब्दादर्थोपस्थितिर्जायते। तत्र शब्दादर्थोपस्थितौ वृत्तिधीः सहकारिणी ततः उक्तं यदीयज्ञानं कारणीभूतम्। अत्र प्रतिपादकत्वं लक्षणं अभिधा लक्ष्या। अत एव सा लक्ष्यतया प्रस्तुतेति। शब्द प्रतिपादकत्वं नाम प्रतिपत्तिहेतुत्वम् परमेतज्ज्ञानं प्रतिपत्तौ उपस्थितौ कारणं नास्ति।

## बालक्रीड़ा

बाधक है। यदि ईश्वर की इच्छा संकेत मानी जायगी तब ("दशमेऽह्नि पिता नाम कुर्यात्") दशम दिन में पिता पुत्र का नाम करण करे, इस श्रुति के अनुसार नाम करण के उपयोगी आधुनिक इच्छायें संकेत नहीं हो सकेंगी।

उत्तर=श्रुति भगवान् का वाक्य है। कोई भी वक्ता किसी को कुछ समझाने की इच्छा से वाक्य का प्रयोग करता है अतः ईश्वर के वाक्य में विषयतया ईश्वर की इच्छा रहने से आधुनिक इच्छाओं में भी ईश्वर की इच्छा मूल है। अतः उपर्युक्त दोनों शंकाएँ निर्मूल है क्योंकि जगत् व्यवहार प्रधान है। व्यवहार है प्रवृत्ति या निवृत्ति। यह व्यवहार या तो चेष्टा से या शब्द से हो सकता है। चेष्टा से व्यवहार अधूरा ही होता है उसमें पूर्णता नहीं आती। क्योंकि उसमें समझाने की क्षमता नहीं है अतः शब्द ही व्यवहार का प्रधान कारण है। उस शब्द का प्रयोग दूसरे को समझाने के लिए ही होता है। ईश्वर के ज्ञान को संकेत इसीलिए नहीं कह सकते हैं कि ईश्वर अपने आप जो समझता है वही ईश्वर का ज्ञान हुआ। मेरे ज्ञान को मेरी सृष्टि मेरे अनुयायी समझें यह ईश्वर की इच्छा होती है। तब सृष्टि के आरम्भ में ईश्वर शब्द प्रयोग करता है फलतः ज्ञान को समझाने की इच्छा से शब्द प्रयोग करता है अतः शब्द के मूल में इच्छा के ही होने से इच्छा ही संकेत है। ज्ञान एवं कृति संकेत नही है।

किन्तु ईश्वर की इच्छा को संकेत मानने में बड़ी आपत्तियाँ है। क्योंकि यदि ईश्वर की इच्छा ही संकेत है तब अनुमान को पृथक् प्रमाण मानने तथा लक्षणा को पृथक् शक्ति मानने की क्यों गुरुता की जाय। क्योंकि धूम से वह्नि का ज्ञान हो जाय, गंगापद से तीर का बोध होजाय ऐसी इच्छा रूप संकेत से काम चल जायगा। इसके सिवाय प्रबल बाधक यह है कि अनीश्वर वादी को भी शाब्द बोध होता है तब ईश्वरेच्छा को संकेत मानना कठिन है।

जो तो वृत्तिवार्तिक में अप्पय्य दीक्षित ने कहा है कि "शक्ति से प्रतिपादकत्व का नाम अभिधा है।" वह तुच्छ है, क्योंकि उपपत्ति विरोध है। जैसे—यहां शब्द से होने वाली

कारणीभूतं यदीयज्ञानं सा शब्दवृत्तिरभिधाख्या लक्ष्यतया प्रस्तुता। प्रतिपादकत्वस्य च प्रतिपत्तिहेतुत्वरूपस्य शब्दगतस्य न ज्ञानं प्रतिपत्तौ कारणम्। अतः कथं नाम प्रतिपादकत्वमभिधेत्युच्यते ?

अथ प्रतिपादकत्वं प्रतिपत्त्यनुकूलव्यापाररूपं ज्ञातं सदेवोपयुज्यते प्रतिपत्तावित्युच्येत, एवमपि शक्त्येत्यनेन शब्दगतार्थगता वा काचिच्छक्तिः प्रतिपत्तिहेतुतया विवक्षिता, सैवाभिधेति 'अभिधया प्रतिपादकत्वमभिधा' इति लक्षणं पर्यवसन्नम्। तथा च स्फुटैवासंगतिरात्माश्रयश्च। न चाभिधातः शक्तिरतिरिक्ता शब्दजन्यप्रतिपत्तिप्रयोजिका काचिदस्तीत्यत्र प्रमाणमस्ति।

## मर्मप्रकाशः

न चेति। नहीत्यर्थः। प्रमाणमस्तीति। प्रकृत्यादित्वाद्धान्येन धनवानित्यादिवत्तृतीयाया अभेदार्थकत्वेन न कश्चिद् दोष इति चिन्त्यमेतत्सर्वम्।

## मधुसूदनी

अतः तज्ज्ञानस्य प्रतिपत्तौ कारणत्वाभावात्।

अथ पक्षान्तरे। प्रतिपत्तेरुपस्थितेरनुकूलो जनको व्यापारः प्रतिपादकत्वरूपः। सच ज्ञातः सन्नमेव प्रतिपत्तौ उपयुक्तो भवति इति उच्यते। एवमपि तथा कथनेऽपि।

ननु का असंगतिरित्याह-न चेति। अभिधात अतिरिक्तं किंचित् शक्तिनामकं वस्तु भवेत्तर्हि अतिरिक्तभूतया शक्त्या प्रतिपादकत्वमभिधेति संगतिः स्यात् परं; तदतिरिक्तं शब्देन जन्ये ज्ञाने (प्रतिपत्तौ) प्रयोजकं सहायभूतं किंचिदस्ति इत्यत्र

## बालक्रीड़ा

उपस्थिति में जिसका ज्ञान कारण है वह शब्द की वृत्ति अभिधा है वही प्रस्तुत में लक्ष्य है। किन्तु शब्द प्रतिपादक है अर्थात् प्रतिपत्ति (पदार्थोपस्थिति) में शब्द हेतु है इस हेतुत्व का ज्ञान प्रतिपत्ति (पदार्थोपस्थिति) में कारण नहीं है किन्तु इस शब्द का इस अर्थ में संकेत है यह ज्ञान कारण है। तब आप कैसे कहते हैं कि प्रतिपादकत्व अभिधा है।

प्रश्न=यदि कहें कि "अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते" इत्यादि स्थलों में संयोगादि के द्वारा नियम्य अभिधा ही को आचार्यों ने बतलाया है उस अभिधा का पर्याय शब्द वाचकत्व ही है। और काव्यप्रदीपकार ने स्पष्ट रूप से विवरण किया है कि "वाचकत्वमभिधा"। वाचकत्व कहें या प्रतिपादकत्व कहें एक ही बात है। इसलिए प्रतिपादकत्व अर्थात् प्रतिपति के अनुकूल (पदार्थोपस्थिति का जनक) व्यापार अभिधा ज्ञात होकर ही प्रतिपत्ति में उपयुक्त होता है तब क्या दोष है।—

उत्तर=इस तरह भी "शक्त्या" इससे शब्द में या अर्थ में रहने वाली जो कोई शक्ति प्रतिपत्ति के हेतु रूप से विवक्षित है वही अभिधा है तब अभिधा से प्रतिपादकत्व का नाम अभिधा है यह लक्षण सम्पन्न हुआ। इस तरह स्पष्ट ही लक्षण की असंगति है और

सेयमभिधा त्रिविधा—केवलसमुदायशक्तिः, केवलावयवशक्तिः, समुदायावयवशक्तिसंकरश्चेति । आद्याया डित्थादिरुदाहरणम् , तत्रावयवशक्तेरभावात् । द्वितीयायास्तु पाचकपाठकादिः, तत्र धातुप्रत्ययशक्तिबोध्ययोरर्थयोरन्वयेनोल्लसितात्पाककर्तृरूपादर्थादृतेऽर्थान्तरस्यानवभासेन समुदायशक्तेरभावात् । तृतीयायाः पङ्कजादिः । इह धातूपपदप्रत्ययरूपावयवशक्तिवेद्यानां पङ्कजननकर्तृणामाकाङ्क्षादिवशादन्वये प्रकाशमानात्पङ्कजनिकर्तृ-

मर्मप्रकाशः

निरूपिताभिधां विभजते—सेयमिति । धातुप्रेति पङ्कादिभिर्यथासंख्येनान्वयः । उभयोः समुदायावयवशक्त्योः । विधाः प्रकारः । दूषणानां प्रतिपादकत्वनिष्ठतत्त्वा ? (रूपाभिधात्वा)

मधुसूदनी

कथने प्रमाणं नास्ति । प्रत्युत आत्माश्रयो दोषोऽधिकः, स्वस्य ज्ञाने स्वज्ञानस्य अपेक्षितत्वात् ।

धातुप्रत्ययेति । प्रत्ययस्य प्रकृत्यन्वितस्वार्थबोधकत्वस्यैव व्युत्पन्नत्वात् धातुप्रत्यययोः शक्तिभ्यां बोध्ययोरर्थयोरन्वयेनेति कथितम् । धातुश्च ( जन् ) प्रत्ययश्च ( ड ) उपपदं ( पंक ) चेति धातूपपदप्रत्ययास्तद्रूपा ये अवयवास्तेषां शक्तिभिर्वेद्यानाम् । आकांक्षा आदिपदात् योग्यतासत्त्योर्ग्रहणम् । अन्वये सति सम्बन्धे सति । अतिरिक्तस्य अवयवशक्तिसमुपस्थाप्यार्थाद् भिन्नस्य । प्रत्ययेन ज्ञानेन । पद्मत्वविशिष्टस्य पद्मरूपार्थस्य । तदर्थं समुदायशक्तिसमुपस्थाप्यार्थम् । अयं भावः । स योगरूढो यत्र अवयवशक्तिवेद्येऽर्थे समुदायशक्तिरपि प्रवर्त्तते । एवमत्र उभयशक्त्या पंकजपदात् पंकजनिकर्त्तृत्वरूपावयवार्थविशिष्टस्य पद्मत्वविशिष्टस्य एकस्य अर्थस्य

बालक्रीड़ा

अभिधा के निरूपण में अभिधा का आश्रय लेने से आत्माश्रय भी दोष है । क्योंकि अभिधा से अतिरिक्त कोई शक्ति, शब्द में रहने वाली पदार्थोपस्थिति में प्रयोजिका है कारण है इसमें कई प्रमाण नहीं है ।

वह अभिधा तीन प्रकार की है । केवल समुदाय शक्ति, अर्थात् जहाँ अवयव शक्ति न रहे । केवलावयवशक्ति अर्थात् जहाँ समुदायशक्ति न रहे । और समुदायावयवशक्ति संकर अर्थात् जहाँ समुदाय और अवयव दोनों शक्तियाँ मिलकर रहें । पहिलीका डित्थादि उदाहरण हैं । यहाँ अवयव शक्ति का अभाव है । दूसरी का पाचक पाठक आदि उदाहरण हैं । यहाँ पच् धातु एवं पठ् धातु एवं ण्वुल् प्रत्यय की शक्ति से बोध्य अर्थों के अन्वय से उल्लसित पाककर्तृरूप अर्थ के अतिरिक्त अर्थ का अवभास नहीं होने से समुदाय शक्ति नही है । तीसरी का पङ्कज आदि उदाहरण है । यहाँ उपपद पङ्क, धातु जन एवं प्रत्यय ड रूप अवयव की शक्ति यों से वेद्य पङ्क, जनन, एवं कर्तृत्व का आकाङ्क्षा आसत्ति और योग्यता के वश से प्रकाशमान पंकजनिकर्तृरूप अर्थ के अतिरिक्त पद्मत्व विशिष्ट पद्म रूप

रूपादर्थादतिरिक्तस्य पद्मत्वविशिष्टस्य प्रत्ययेन तदर्थं समुदायशक्तेरपि कल्पनादुभयोः संकरः। एता एव विधा रूढि-योग-योगरूढ़िशब्दैर्व्यपदिश्यन्ते।

यत्तु 'अखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वं रूढ़िः। अवयवशक्तिमात्रसापेक्षं पदस्यैकार्थप्रतिपादकत्वं योगः। उभयशक्तिसापेक्षमेकार्थप्रतिपादकत्वं योगरूढ़िः।' इति वृत्तिवार्तिकेऽप्पयदीक्षितैरुक्तम्, तन्न। अभिधा लक्षणोक्तदूषणानामिहापि दुर्वारत्वात्।

अथ अश्वगन्धा-अश्वकर्ण-मण्डप-निशान्त-कुवलयादि-शब्देषु का शक्तिरिति। अत्र केचित् 'अश्वगन्धारसं पिबेत्' इत्यादिषु विषयविशेषे केवलसमुदायशक्तिः। अश्वगन्धा वाजिशाला, इत्यादिषु तु केवलयोगशक्तिः।

### मधुसूदनी

पद्मस्य बोधो भवति। अत एव उभयशक्त्या एकार्थबोधनादेव पंकजाते कुमुदे, स्थलजाते पद्मे च पंकजपदप्रयोगो न हि भवति, लक्षणयैव कुमुदादौ तत्पदप्रयोगो भवतीति।

उक्तदूषणानामिति। प्रतिपत्तिहेतुत्वरूपप्रतिपादकत्वज्ञानस्य प्रतिपत्तौ कारणत्वाभावस्य, अभिधातोऽतिरिक्तशक्तौ प्रमाणाभावरूपासंगतेरात्माश्रयस्येति त्रयाणां दूषणानाम्। इहापि रूढ्यादावपि।

अथेति प्रश्ने। इत्यादिषु विषयविशेषे तथा इत्यादिषु चेत्यत्र मुद्रिपाठे बहुवचनान्तैकवचनान्तयोरसंगत्या इत्यादावित्येकवचनं साधु। केवलत्वविशेषितयोस्तयोर्भेदयोः कथं प्रसक्तिरिति प्रश्नस्यायमाशयः—एके मुख्यान्यकेवला इति कोषानुसारं

### बालक्रीड़ा

अर्थ की प्रतीति होती है अतः उस अतिरिक्त अर्थ के लिए समुदाय शक्ति की भी कल्पना की जाती है इस लिए समुदाय और अवयव दोनों शक्तियों का सांकर्य है। इन्ही तीनों प्रकारों को रूढ़ि, योग, योगरूढ़ि शब्दों से कहते हैं।

जो तो वृत्तिवार्तिक में अप्पय्य दीक्षित ने कहा कि केवल अखण्डशक्ति से एकार्थ-प्रतिपादकत्व रूढ़ि है। केवल अवयव शक्ति की अपेक्षा से पद में एकार्थप्रतिपादकत्व है उसका नाम योग है। और उभयशक्ति सापेक्ष एकार्थप्रतिपादकत्व योगरूढ़ि है; वह ठीक नहीं है। क्योंकि अभिधा लक्षण में कहे हुए असंगति एवं आत्माश्रय रूप दूषणों का यहाँ भी वारण करना कठिन हो जायगा।

अब प्रश्न उठता है कि अभिधा को तीन ही प्रकार की माना जायगा तब अश्वगन्धा अश्वकर्ण, मण्डप, निशान्त, कुवलय प्रभृति शब्दों में कौन शक्ति है। इस पर कोई कहते हैं अश्वगन्धा (असगन्ध) नामक औषधि के रस को पीवे। इत्यादि विषय विशेष में, स्थल

समुदायावयवशक्त्योरुभयोरेकशब्दाश्रयत्वे कथं केवलत्वविशेषितयोराद्यद्वितीयभेदयोः प्रसक्तिरिति तु न शङ्क्यम् । समुदायावयवशक्तिवेद्ययोरर्थयोरनन्वयेन तादृशशक्त्योः कैवल्यस्य साम्राज्यात् । इदमेव हि केवलत्वमिह विवक्षितम्, यदन्वयायोग्यार्थबोधकत्वम् । संकरस्त्वन्वययोग्यार्थबोधिकयोरेवेति न तस्यात्र प्रसक्तिः' इत्याहुः ।

### मर्मप्रकाशः

संभवासंगत्यात्माश्रयाणाम् । विषयविशेष इति । ओषधिरूपेत्यर्थः । शङ्कते—समुदेति । अनन्वयेन मिथ इत्यादि । यदन्वयायोग्येति । एवं च योगबोध्यार्थान्वयायोग्यार्थप्रतिपादकत्वं रूढेः केवलत्वम् । रूढिबोध्यार्थान्वयायोग्यार्थप्रतिपादकवं योगस्य केवलत्वम् । उभयप्रतिपाद्य-

### मधुसूदनी

केवलं नाम एकत्वं तर्हि केवलसमुदायशक्तिरित्यस्य समुदायशक्तिरेव एका प्रकृते न तु अवयवशक्तिरपि । एवमेव अवयवशक्तिरेव एका प्रकृते न तु समुदायशक्तिरपि ।

किन्तु प्रकृते अश्वगन्धेति एकस्मिन् शब्दे यर्हि समुदायशक्तिरपि तथा अवयवशक्तिरपि उभे शक्ती स्तः, तर्हि कथमिह तयोः कैवल्यमिति । उत्तरस्यायमाशयः । अश्वगन्धापदे औषधरूपार्थे प्रतिपाद्ये केवला समुदायशक्तिः, तस्मिन् अवयवशक्तिर्न प्रवर्त्तते । सम्बन्धार्थो गन्ध शब्दः, तथा च वाजिसम्बन्धिशालारूपार्थे बोधे केवला अवयवशक्तिर्न तु तस्मिन् समुदायशक्तिः प्रवर्त्तते । एवं एकशक्तिवेद्येन अर्थेन साकमपरशक्तिवेद्यस्यार्थस्य अन्वयो नास्ति ( यथा योगरूढपंकजपदप्रतिपाद्ययोरर्थयोः परस्परमन्वयो भवति तथा नास्तीत्यर्थः) इदमेव तयो; शक्त्योः कैवल्यस्य साम्राज्यम् । तदेतदुक्तम्—इदमेवेत्यादि । अन्वयस्य अयोग्यौ यौ अर्थौ तयोर्बोधकत्वं शक्त्योः । संकरस्तु अन्वययोग्यार्थबोधिकयोः शक्त्योरिति हेतोः तस्य संकरस्य अत्र अश्वगन्धापदे न प्रसक्तिः न प्राप्तिः ।

### बालक्रीड़ा

विशेष में केवल समुदाय शक्ति है । जहाँ घोड़े की गन्ध अर्थात् घोड़े के साथ सम्बन्ध होने के कारण वाजिशाला को अश्वगन्धा कहा जाता है । यहाँ गन्ध शब्द का "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः" इस कोष के अनुसार सम्बन्ध अर्थ है । ऐसे स्थलों में केवल योग शक्ति है ।

यहाँ ऐसीं शंका नहीं करना कि जब समुदाय शक्ति तथा अवयव शक्ति दोनों एक ही शब्द में रहती हैं तब केवलत्व है विशेषण जिनमें ऐसे केवल समुदायशक्ति और केवल अवयव शक्ति रूप प्रथम और द्वितीय भेदों की अश्वगन्धारसं पिवेत् (यहाँ प्रथम भेद) अश्वगन्धा वाजिशाला (यहाँ द्वितीय भेद) की प्राप्ति कैसे ।

उत्तर=समुदाय और अवयव शक्ति से वेद्य अर्थों में परस्पर अन्वय नहीं होने से उन शक्तियों में कैवल्य का ही साम्राज्य है । यहाँ केवलत्व का यही अर्थ विवक्षित है कि

अन्ये तु—'अश्वकर्णादिशब्देषु नाभिधायाः प्रथमद्वितीययोर्विधयोः प्रसक्तिः, कैवल्यविरहात्। परन्तु संकरस्य द्वौ भेदौ—योगरूढियौगिकरूढिश्चेतिः। तत्राद्यस्योदाहरणं पङ्कजादिशब्दाः। द्वितीयस्य त्वश्वकर्णादयः' इत्याहुः। 'चतुर्थ एवायमभिधाया भेदः' इत्यप्यन्ये। 'अखण्डा एव हि शब्दाः। तत्र समासेषु पदानाम्, कृत्तद्धिततिङन्तेषु च प्रकृतिप्रत्ययानां विभागः काल्पनिक एवेति कुत्रास्ति योगशक्तिः? विशिष्टस्य विशिष्टार्थे रूढेरेवाभ्युपगमात्' इत्यपि वदन्ति।

## मर्मप्रकाशः

योरर्थयो परस्परान्वययोग्यत्वे संकर इति फलितम्। बोधिकयोरेवेतीति। भेदयोरित्यर्थः(?)। तादृशकैवल्यविवक्षायां मानाभावादाह—अन्ये त्विति। संकरस्य योगरूढिशब्देनैव प्रसिद्धेर्मतान्तरमाह—चतुर्थ एवेति। एवेनाभिधापदसंबंद्धेन संकरभदनिरासः तथा चाभिधा चतुर्विधेति भावः। सिद्धान्तमाह—अखण्डा इति। हिस्त्वर्थे। तत्र अखण्डानां मध्ये।

## मधुसूदनी

अन्ये त्विति। उक्तरूपे कैवल्ये प्रमाणं नास्ति। केवलपदार्थोऽत्र एकत्वमेव। ततश्च उभयोः शक्त्योरेकाश्वगन्धाशब्दाश्रयत्वे कैवल्यस्य विरह एवेति तत्त्वम्।

## बालक्रीड़ा

जहाँ अन्वय के योग्य अर्थ को नहीं बतलावें। परस्पर में संकरता तो उन्हीं शक्तियों में होती है जहाँ दोनों शक्तियाँ परस्पर में अन्वय के योग्य अर्थ को बतलावें।

दूसरे तो कहते हैं कि अश्वकर्ण आदि शब्दों में अभिधा के प्रथम और द्वितीय भेदों की प्राप्ति नहीं है। क्योंकि उनमें केवलत्व नहीं है। परन्तु संकर के ही ये दो भेद हैं, १ योगरूढ़ि और २ यौगिकरूढ़ि। उनमें प्रथम का उदाहरण पंकजादि शब्द हैं। द्वितीय के अश्वकर्णादि शब्द हैं।

अन्य आचार्य कहते हैं यह यौगिकरूढ अभिधा का चतुर्थ ही भेद है।

अखण्ड ही शब्द हैं। वहां समासों में पदों का और कृदन्त, तिङन्त एवं तद्धितान्तों में प्रकृति तथा प्रत्ययों का विभाग काल्पनिक है अतः कहीं भी योगशक्ति नहीं है। विशिष्ट की विशिष्ट अर्थ में रूढ़ि ही मानी गई है। यह भी कहते हैं।

यहां कैवल्य का साम्राज्य है कहने का भाव यह है कि जिस अर्थ को समुदाय शक्ति बतलाती है उसमें अवयव शक्ति बोध्य अर्थ का अन्वय नहीं होता है। इसी तरह जिस अर्थ को अवयव शक्ति बतलाती है उस अर्थ में समुदाय शक्ति बोध्य अर्थ का अन्वय नहीं होता है। किन्तु एक ही शक्ति उन शब्दों का अर्थ बतलाने में सहायिका होती है। यही केवल विशेषण की सार्थकता है। अतः तीन भेदों के अतिरिक्त चतुर्थ भेद मानने की आवश्यकता नहीं है।

अथ

गीष्पतिरप्याङ्गिरसो गदितुं ते गुणगणान्सगर्वो न ।
इन्द्रः सहस्रनयनोऽप्यद्भुतरूपं परिच्छेत्तुम् ॥'

इत्यादौ रूढ्यर्थमादाय पुनरुक्त्यापत्तिः। न चैवंविधपदद्वयसमभिव्या-

मर्मप्रकाशः

तथा चाभिधाया रूढ्याख्य एक एव भेद इति भावः। अत्र शङ्कते—अथेति।

मधुसूदनी

अथेति योगरूढशब्दविषये कंचन नियमविशेषं वक्तुं प्रारभते पण्डितराजः=गीष्पतिरिति। हे राजन्। गीष्पतिरपि वाणीनां स्वामी अपि आंगिरसः ते गुणगणान् गदितुं सगर्वो न। पूर्वं भवद्गुणगणानामज्ञानात् बृहस्पतेरयं गर्व आसीत् यदहं वाचामधिपतिः मदधीना इमाः वाचोऽतो यत्थेच्छं प्रयोक्तुमलं स्युः। परन्तु भवतो गुणगणा इयत्ता रहिता अतस्तेषां कथने वाचो न्यूनाः संजाता इति अवनतमुखो गर्वरहितः संजात इति भावः।

एवमेव सहस्रनयनोऽपि नयनानां साहस्रीं संख्यां स्वीकृत्यापि इन्द्रः ते अद्भुतरूपं परिच्छेत्तुमवधारयितुं सगर्वो न ईदृक्तया इयत्तया च रूपं परिच्छेत्तुमसमर्थत्वादऽवनतमुखो भवतीति भावः।

इत्यादौ काव्ये एकेन गीष्पतिपदेन ( पूर्वार्द्धे ) सहस्रनयनपदेन च ( उत्तरार्द्धे ) अवयवार्थरूढ्यर्थयोर्बोधनात् पुनः आंगिरस इति इन्द्र इति पदोपादाने रूढ्यर्थमादाय पुनरुक्तिदोषस्य आपत्तिः प्रसक्तिः।

नचेति। एवंविधं यत्पदद्वयं (एकं योगरूढमपरं रूढम्) तस्य समभिव्याहारस्थले तयोः सहोच्चारणे इत्यर्थः। तावन्मात्रस्यैव अवयवार्थमात्रस्यैव। अतिशय-

बालक्रीड़ा

अथ यह एक विषय है कि—

हे राजन्! वाणी का प्रभु होता हुआ भी आंगिरस तुम्हारे गुणों के कहने में सगर्व नहीं हैं। अर्थात् तुम्हारे गुण इतने अधिक हैं कि उनके कहने के लिए शब्दों की कमी हो जाती है अतः वाणी के प्रभुत्व का उसका गर्व फीका पड़ जाता है। और हजार नेत्रों वाला भी इन्द्र तुम्हारे अद्भुत रूप का परिच्छेद करने में इयत्ता का निर्धारण करने में सगर्व नहीं है। अर्थात् तुम्हारा रूप इतना अद्भुत है कि हजार नेत्रों से भी उसकी ईदृक्ता के निर्धारण करने में असमर्थ हो जाता है अतः सहस्रनयनधारित्व सब व्यर्थ हो जाता है।

ऐसे योगरूढ़ि के उदाहरणों में केवल योग लभ्य अर्थ की ही प्रतीति मानी जायगी तब रूढ्यर्थ को लेकर पुनरुक्ति दोष हो जायगा।

यदि आप कहें कि जहाँ इस तरह के दो (गीष्पति=आंगिरस तथा सहस्रनयन=इन्द्र जैसे योगरूढ़ एवं रूढ़) पदों का समभिव्यवहार हो वहाँ योगरूढ़ पद केवल अवयवार्थ का ही

हारस्थले योगरूढपदस्यावयवार्थमात्रबोधकत्वम्, तावन्मात्रस्यैव प्रकृतोपयोग्यतिशयविशेषसमर्पकत्वात्, इति वाच्यम्। एवमपि योगरूढपदस्य रूढिशक्तेरनियन्त्रणेन योगार्थमात्रप्रतिपादकताया अनुपपादनादुक्तदोषस्यानुवृत्तेः। एकेनैव पदेन योगार्थरूढ्यर्थयोरुभयोरप्यावश्यकयोरुपस्थितिसंभवेन द्वितीयपदप्रयोगस्य नैरर्थक्यापत्तेश्च, इति चेत्, अत्राहुः—'एकपदोपात्तत्वादन्तरङ्गाकाङ्क्षावशेन प्रथमं योगार्थरूढ्यर्थयोरन्वये सति समुल्लसितस्य

## मर्मप्रकाशः

गीष्पतिरिति राजवर्णनमिदम्। अतिशयेति। राजनिष्ठगुणाद्यतिशयेत्यर्थः। अनियन्त्रणेन असंकोचेन। प्रकरणादिसंकोचकाभावादिति भावः। प्रकरणादिसत्त्वे आह—एकेनैवेति। आवश्यकयोरिति। पदद्वयोल्लेखेनोक्तातिशयव्यञ्जनार्थमिति भावः। एकपदोपेति। अन्त-

## मधुसूदनी

विशेषस्य व्यंग्यरूपवैलक्षण्यत्तस्य समर्पकत्वात् उपस्थापकत्वात्। एवमपि अतिशयविशेषसमर्पकत्वेऽपि। अनुपपादनादिति=रूढिर्योगापहारिणीति स्वीकरणात् योगशक्तेः संकोचेन रूढ्यर्थमात्रप्रतिपादकताया उपपत्तिर्भवति यथा। तथा रूढिशक्तेर्नियन्त्रणं विना केवलयोगार्थप्रतिपादनस्य उपपत्तिर्न जागर्त्ति। इति।

एकेन योगरूढपदेन द्वयोरर्थयोरुपात्तत्वादन्तरंगता। विशिष्टार्थस्य योगार्थसम्वलितस्यैव रूढ्यर्थस्य केवलरूढ्यर्थकपदान्तरप्रतिपाद्येन अर्थेन अन्वयः। तु किन्तु विशकलितयोः पृथक् २ पदाभ्यामुपस्थितयोः। तयोः योगार्थरूढ्यर्थयोः

## बालक्रीड़ा

बोधक है। क्योंकि केवल उतना ही अर्थ प्रकृत के उपयोगी अतिशय विशेष का समर्पण कर देता है। वह भी ठीक नहीं है।

इसका कारण यह है कि ऐसा मान लेने पर भी योगरूढ़ पद की रूढ़िशक्ति का प्रकरणादि के द्वारा नियन्त्रण हुए बिना केवल योगार्थ प्रतिपादकता अनुपपन्न है अतः उक्त पुनरुक्ति की अनुवृत्ति रह ही गई। इसके सिवाय एक दोष और भी है कि जब एक ही पद से आवश्यक योगार्थ एवं रूढ़चर्थ दोनों अर्थों की उपस्थिति हो जाना सम्भव है तब द्वितीय पद का प्रयोग भी निरर्थक है।

इस पर कहते हैं कि यदि ऐसी बात है तब सुनिए। जहां पर आवश्यक योगार्थ ओर रूढ़चर्थ को कहने के लिए एक ही पद का उपादान किया गया है। वहाँ इस एकपदोपात्तत्वरूप अन्तरंग आकांक्षा के बल से पहिले ही अर्थात् अन्य किसी पद के अर्थ के साथ अन्वय होने के पहिले ही उन योगलभ्य एवं रूढ़िलभ्य दोनों अर्थों का अन्वय परस्पर में हो जायगा। इस तरह परस्पर में अन्वय हो जाने पर प्राप्त विशिष्ट अर्थ का अन्य रूढ़ पद के अर्थ के साथ अन्वय होता है न कि केवल योगार्थ का या रूढचर्थ का अन्य पद के अर्थ के

विशिष्टार्थस्यैव पदान्तरार्थेनान्वयः, न तु तयोरेव विशकलितयोरिति यद्यपि न्यायसिद्धोऽर्थः, तथापि शक्त्याऽर्थस्य प्रतिपादने स्यादेवम्। लक्षणया तु योगरूढेन योगार्थमात्रप्रतिपादने न किंचिद्बाधकमस्ति। नापि द्वितीयपदप्रयोगस्य नैरर्थक्यम्। तथा सति रूढ्यर्थबोधनेन गतार्थेन योगरूढशब्देन प्रतिपाद्यमानस्य योगार्थस्य पङ्कजाक्षीत्यादाविव नान्तरीय-

मर्मप्रकाशः

रङ्गत्वादौ हेतुरयम्। तयोः योगार्थरूढ्यर्थयोः। विशेकलितेति। पदान्तरार्थेनान्वय इत्यस्यानुषङ्गः। एवं योगार्थमात्रबोधकत्वानुपपादनमाद्यदोषमुद्धृत्य द्वितीयदोषमुद्धरति—नापीति। तथा सति द्वितीयपदानुपादाने सति। नान्तरीयकत्वेति। मुख्यतात्पर्याविषयत्वेत्यर्थः।

मधुसूदनी

पदान्तरार्थेन अन्वयो न भवति। शक्त्याऽर्थस्येति=योगरूढपदेन शक्त्या अभिधया अर्थस्य प्रतिबोधने प्रतिपादने। एवमन्वयाभावः स्यात्। लक्षणया तु योगरूढपदेन केवलयोगार्थस्य प्रतिपादने किंचिद् बाधकं नास्ति। अर्थात् अन्वयाभावप्रसंगो नास्ति।

एवं योगार्थमात्रप्रतिपादनविषयिणीमनुपपत्तिं निराकृत्य द्वितीयपदप्रयोगविषयिणीं नैरर्थक्यापत्तिं प्रतिहन्ति=नापीति। यर्हि योगरूढं पदं लक्षणया केवलं योगार्थं प्रतिपादयति तर्हि रूढ्यर्थप्रतिपादनार्थं केवलरूढ्यर्थकस्य द्वितीयपदस्य प्रयोगो निरर्थको न, किन्तु आवश्यक एव; अन्यथा तमर्थं कः प्रतिपादयतु इति जिज्ञासा जागरिष्यत्येवेति तत्वम्।

तथा असति द्वितीयस्मिन् पदे अविद्यमाने अर्थात् एकस्मिन्नेव पदे वर्त्तमाने रूढ्यर्थं बोधयित्वा गतार्थः कृतकृत्यः योगरूढशब्दः। पश्चात्स एव योगरूढः, चेद् योगार्थं प्रतिपादयेत्तर्हि अयं योगमर्यादया लभ्योऽर्थ आवश्यको न वेति तत्रार्थे

बालक्रीड़ा

साथ अन्वय होता है यद्यपि वह न्यायसिद्ध अर्थ है। तथापि शक्ति के द्वारा अर्थ के प्रतिपादन में ऐसी स्थिति हो सकती है किन्तु यहाँ तो लक्षणा के द्वारा योगरूढ़ पद केवल योगार्थ का प्रतिपादन करता है अतः कोई बाधक नहीं है अर्थात् पुनरुक्ति दोष नहीं होगा और न द्वितीय पद का प्रयोग निरर्थक ही होगा। क्योंकि एक योगार्थ ही का उपयोग यहीं किया गया है अतः द्वितीय पद के प्रयोग की निरर्थकता का प्रश्न ही नहीं हो सकता है। एक बात यह भी है कि यहाँ एकपदोपादानस्थल में योगरूढ़ शब्द ने लक्षणा की सहायता से केवल योगार्थ का प्रतिपादन किया है और लक्षणा तभी यहां आई है जब उल्लसित विशिष्टार्थ का पदान्तर के अर्थ के साथ अन्वय होने में बाधा पहुँची है।

यह सब स्थिति एक योगरूढ़ ही पद के उपादान के कारण हुई है अतः कहते हैं कि वैसा होने पर अर्थात् जहाँ एक ही पद का उपादान किया है वहाँ जब योगरूढ़ शब्द रूढ़ि

कत्वशङ्कया कुर्वद्रूपताया अपहतौ प्रकृतोपयोग्यतिशयविशेषव्यञ्जनस्य पाक्षिकत्वापत्तेः। द्वितीयपदयोगे तु तेनैव रूढ्यर्थप्रतिपादने सिद्धे योगरूढपदप्रतिपाद्यस्य योगार्थस्य नान्तरीयकत्वशङ्काया अयोगात्कुर्वद्रूपत्वेन व्यंग्यविशेषव्यञ्जकत्वं नियमेन सिध्यति। एषा पदद्वयोपादानस्थले गतिरुक्ता।

## मर्मप्रकाशः

शङ्काया अभावे त्विष्टार्थसिद्धिरत आह—पाक्षिकेति। अत एवाग्रे नियमेनेति वक्ष्यति। जगत्

## मधुसूदनी

शंकया कुर्वद्रूपताया फलोपधायकताया अपहृतिः विनाशो भवति। तस्यां सत्यां प्रकृतोपयोगिनः वर्णनीयसन्बन्धिनः अतिशयविशेषस्य व्यंग्यविशेषस्य व्यंजनस्य पाक्षिकत्वापत्तेः वैकल्पिकत्वप्रसंगात् अवश्यग्राह्यत्वाभावस्य संशयितसाध्यवत्त्वस्य प्राप्तिः स्यादित्यर्थः। यथा पंकजाक्षी इत्यादौ वर्त्तते। अयं भावः। यथा कमलाक्षी इत्यनुक्त्वा पंकजाक्षी इत्युच्यते तदा कमलवन्नयनवती नायिकेति गृह्यते प्रशंसनीयार्थः, अथ कर्दमोत्पन्नवस्तुसदृशनेत्रवती अर्थात् कुत्सिताक्षी इत्यपि कुत्सनीयोर्थः प्रतिभाति परं तस्यार्थस्य हेत्वभावात् अवश्यग्राह्यता नास्ति, तद्वदेव अन्यत्रापि सर्वत्र व्यंग्यविशेषस्य पाक्षिकत्वं नियमेन ग्राह्यत्वाभावः स्यादिति।

द्वितीयेति। द्वितीयस्य पदस्य प्रयोगे तु तेनैव द्वितीयेन पदेनैव। अयोगात् तादृशशंकाया अभावात्। व्यंग्यविशेषव्यंजकत्वस्य नियमेन सिद्धौ द्वितीयपदप्रयोग एव हेतुरिति भावः।

## बालक्रीड़ा

शक्ति के द्वारा प्रथमप्रतीतत्व रूप प्राधान्य के कारण रूढ़ अर्थ का प्रतिपादन करके गतार्थ हो जाता है तब भी जो योगरूढ़ शब्द योगार्थ का प्रतिपादन करता है उस अवस्था में योगार्थ के नान्तरीयकत्व याने आवश्यकता के विषय में "अब इस योगार्थ की आवश्यकता है क्या" ऐसी शंका यदि हो जायगी तब उस अर्थ की कुर्वद्रूपता फलोपधायकता याने व्यञ्जना के द्वारा प्रतीत होने की आवश्यकता ही नष्ट हो जायगी और उसके नष्ट हो जाने पर प्रकृत के उपयोगी अतिशय विशेष के व्यञ्जन में पाक्षिकता (विकल्प) हो जाने की आपत्ति लग जायगी जैसे पंकजाक्षी आदि स्थलों में पाक्षिकता (विकल्प) की आपत्ति लग जाती है याने योगार्थ की व्यंग्यता में नियम नहीं रहेगा कि अवश्य ही उसकी व्यंजना से प्रतीति होनी चाहिए। जैसे पंकजाक्षी में कमल के समान आँखों वाली इस रूढ अर्थ के प्रतीत होने से गतार्थ होने पर कीचड़ में पैदा हुई वस्तु के समान आंखों वाली अर्थात् गंदी आंखोंवाली इस निन्दित अर्थ की प्रतीति के लिए कोई गुंजाइश नहीं रहती है उसी तरह प्रकृत में भी नहीं होगी। यही पाक्षिक पद का आशय यहाँ है।

जहाँ तो द्वितीय पद का प्रयोग हुआ है वहाँ उसी द्वितीय पद से रूढ़िलभ्य अर्थ के प्रतिपादित होने पर योग शक्ति से लभ्य योगार्थ के विषय में नान्तरीयत्व की शंका नहीं

यत्र तु 'पुष्पधन्वा विजयते जगत्त्वत्करुणावशात्' इत्यादावेकेनैव पदेन रूढ्यर्थोपस्थितिर्योगार्थद्वारा निःसारत्वाद्यवगमश्च भवति, तत्र कविकृतमन्मथरूढपदान्तरानुपादानपूर्वकपुष्पधन्वपदोपादानप्रतिसंधानेन तदीययोगार्थे कुर्वद्रूपताधानं बोध्यम् । तदित्थं द्वितीयपदस्योपादानेऽनुपादाने वा न क्षतिः । एवं जात्यन्तरविशिष्टवाचकपदसमभिव्याहारेऽपि । 'दिशि दिशि जलजानि

मर्मप्रकाशः

कर्म । कविकृतत्वमुपादानेऽन्वेति । प्रतिसंधानेन श्रोतुरिति शेषः ।

मधुसूदनी

यत्र त्विति । एकेनैव पुष्पधन्वपदेन । रूढ्यर्थस्य कामस्य उपस्थितिः । योगार्थस्य पुष्पमेव अत्यन्तं कोमलं दृढतारहितं धनुर्यस्येति योगेन लभ्यस्यार्थस्य द्वारा । कविकृतं यत् मन्मथरूढपदान्तरस्यानुपादानं मदनादिरूपस्य भिन्नस्य पदस्य अग्रहणम् । तस्य प्रतिसन्धानेन कामवाचिनामनेकेषां पदानां सद्भावेऽपि कुत एतदेव पदमुपात्तमिति गवेषणेन । तदीये योगरूढपदीये योगार्थे कुर्वद्रूपतायाः फलोपधायकताया आधानं स्थापनं नियमेन असंशयं सिद्ध्यति ।

जातीति । अन्या जातिः जात्यन्तरम् । कमलत्वापेक्षया भिन्ना जातिः कुमुदत्वं तेन विशिष्टो योऽर्थस्तस्य वाचकं यत्पदं कुमुदपदम् । तस्य समभिव्याहारे उच्चारणे । यथा=दिशि दिशि जलजानि सन्ति कुमुदानि=इत्यत्र कुमुदपदसमभिव्याहारे । तादृशार्थस्य जलजातत्वरूपावयवार्थस्य रूढ्यर्थेन पद्मत्वेन उपश्लिष्टतया अन्विततया स्वातन्त्र्येण रूढ्यर्थं विहायेत्यर्थः ।

बालक्रीड़ा

होगी अतएव कुर्वद्रूपता भी नष्ट नहीं होगी फलतः उस अर्थ में कुर्वद्रूपता के होने से व्यंग्य विशेष का व्यंजकत्व याने व्यञ्जन नियम से सिद्ध होगा प्राप्त होगा। यह गति यह दशा दो पदों के उपादान में कही है ।

जहाँ तो "पुष्पधन्वा जगत् को जीत लेता है इसका हेतु है तुम्हारी करुणा" इस तरह के स्थलों में एक ही पद से रूढ्यर्थ की उपस्थिति और योगार्थ के द्वारा निःसारत्व याने तुच्छत्व की प्रतीति भी होती है । वहाँ कवि ने मन्मथ के वाचक अनेक पदों के रहते हुए भी मन्मथ में रूढ़ प्रसिद्ध अन्य पद का उपादान न करके पुष्पधन्वा पद का उपादान क्यों किया इसका जब प्रतिसंधान विमर्श करेंगे तब उस प्रतिसंधान के सहारे उस योगरूढ़ पद के योगलभ्य अर्थ में कुर्वद्रूपता को समझना चाहिए ।

इस तरह द्वितीयपद के उपादान या अनुपादान करने पर भी कोई क्षति नहीं है ।

इस प्रकार जात्यन्तर से विशिष्ट अर्थ को कहने वाले द्वितीय पद के समभिव्यावहार में भी योगरूढ़ पद लक्षणा से केवल योगार्थ का बोधक होता है जैसे—हर दिशा में जल से पैदा होने वाले कुमुद हैं । यहां कमल की अपेक्षा अन्य जाति कुमुदत्व से विशिष्ट अर्थ के

सन्ति कुमुदानि' इत्यत्रापि जलजादिपदानां लक्षणया योगार्थमात्रबोधकत्वम्, योगशक्त्युल्लासितस्य तु तादृशार्थस्य रूढ्यर्थोपश्लिष्टत्वेन स्वातन्त्र्येण कुमुदादावन्वयायोगात् । इत्थमभिधा निरूपिता ।

### मर्मप्रकाशः

इत्यत्रापि इत्यादावपि । शक्त्या न निर्वाह इत्याह—योगेति ।

### मधुसूदनी

अत्रेदमालोचनम् । यथा रूढिर्योगापहारिणीति नियमः सहेतुकस्तथा योगो रूढेर्निवर्त्तक इति नियमोऽपि सहेतुकः । तथाहि=शब्दश्रवणमात्रेण अर्थोपलंभकतया लब्धात्मिका रूढिशक्तिः लिङ्गस्थानीया । अवयवार्थानुसन्धानाद्विप्रकर्षेण अर्थोपलंभकतया विप्रकृष्टा योगशक्तिः समाख्यास्थानीया । विप्रकर्षेण अर्थोपस्थापकत्वाद् योगो दुर्बलः । रूढिर्बलवतीति पूर्वनियमः सहेतुक इत्युक्तम्—अतएव—

उल्लासयत्युदरबन्धनिबद्धदिव्य शोणाश्मरश्मिकलिकावलिरच्युतैषा ।
आगाम्यनेकशतकल्पविधातृगर्भ नाभ्युद्गताम्बुरुहकुड्मलपंक्तिशोभाम् ॥

इत्यत्र अम्बुरुहपदे अप्सुरोहणकर्त्तृत्वरूपं योगार्थं पश्चात्कृत्वा भगवन्नाभिपद्मरूपोर्थो रूढ्या गृह्यते ।

यत्र पुनरवयवशक्त्या एव प्रयोगो दृश्यते यथा—

कह्लारकैरवमुखेष्वपि पंकजेषु
लोकेश ! यत्कमलमेव तथा प्रसिद्धम् ।
मन्येऽभिजात ! भवदास्यतुलास्य नेति
मर्मप्रकाशनमिदं विधिनैव क्लृप्तम् ॥

इत्यत्र कह्लारकैरवप्रभृतिष्वर्थेषु पंकजपदस्य । तत्र रूढिशक्तौ प्रमाणाभावेन रूढ्यर्थस्य पद्मरूपस्य अनन्वयाद् योग एव प्रभुः ।

तथा पद्मानि यस्याग्रसरोरुहाणि इति ( महाकविकालिदासीये ) पद्ये यौगिकार्थस्य सरसि रोहणरूपस्य सम्बन्धिनोऽग्ररूपस्य निर्देशस्तत्राऽपि योग एव बलवान् रूढिर्दुर्बला । अत एव रूढ्यर्थबोधनाय पद्मपदं प्रयुक्तम् । एवं योगो रूढिनिवर्त्तक इत्यपि नियमः सहेतुकः । ततश्च योगरूढपदस्य रूढिशक्तेरनियन्त्रणेन योगार्थमात्रप्रतिपादकताया अनुपपादनादित्युक्तिरसमीचीनैव । यतो हि उक्तनिदर्शनेन रूढेर्नियन्त्रणस्य योगार्थमात्रप्रतिपादकताया उपपत्तेश्च सिद्धेः ।

गीष्पतिरप्यांगिरस इत्यत्र योगरूढगीष्पतिशब्दात् गिरां पतिरपि आंगिरस

### बालक्रीड़ा

वाचक कुमुद पद के समभिव्याहार में योगरूढ़ जलज पद लक्षणा के द्वारा केवल योगार्थ का बोधक होता है । क्योंकि योगशक्ति से उल्लासित योगार्थ का रूढ़िलभ्य अर्थ से उपश्लिष्ट होने के कारण स्वतन्त्ररूप से कुमुदादि के साथ अन्वय नहीं होगा । इस प्रकार अभिधा का निरूपण कर दिया ।

मधुसूदनी

इत्येवमांगिरसपदार्थो लब्धः, पुनश्च आंगिरसपदादपि आंगिरसरूपार्थो लभ्यते इति योगरूढशब्दोपलब्धार्थमादाय पुनरुक्तिरिति यदुक्तं तदपि सुन्दरतां नावगाहते। यतो हि ध्वनिर्नामोत्तमोतमं काव्यम्। तच्च चमत्कारिणो व्यंग्यार्थस्य प्राधान्ये सत्येव भवति। एवञ्च तमेवार्थं प्रधानीभूतं हृदि निधाय योगरूढः शब्दो महाकविभिः प्रयुज्यते। तत्र यौगिकोऽर्थो व्यञ्जनाव्यापारानुकूलः। तथा शब्दबुद्धिकर्मणां विरम्य विशेषेण लगित्वा व्यापाराभाव इति नियमात् व्यंजनानुकूलयौगिकार्थबोधने योगरूढः शब्दो विरत अर्थात् विशेषेण रतः सँलग्नः इति तदीयरूढ्यर्थसमर्पणार्थं क्वचित् रूढं पदं पृथगुपाददते कवयः।

यथा भवदीये पद्ये गीष्पतिरप्यांगिरस इत्यत्रांगिरस इति।

यथा वा=उद्यन्मृगांकरुचिकन्दलकोमलाना
मुन्निद्रशोणनलिनोदरसोदराणाम्।
प्राप्तुं तवाधररुचामवलोकनेन
नालं सहस्रनयनः स वृषापि तृप्तिम्।

अत्र सहस्रनयन शब्दस्य, स वृषा सहस्त्रं दर्शनसाधनानि समाधिगत्यापि तृप्तिं नाध्यगच्छत्, एवम्भूता तवाधारुक् इति चमत्कारियोगार्थबोधने संलग्नतया; तदीयरूढ्यर्थ बोधनार्थं वृषेतिपदं उपात्तम्।

यथावा=कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये।

अत्र पिनाकपाणिशब्दस्य, संहारशक्तेः प्रतीकं पिनाकमपि पाणौ धृत्वा यदि हरोऽपि समागच्छेत्, तमपि विक्षिप्तचित्तं कर्त्तुं प्रभवेयम् तर्हि अन्ये धन्विनो वराकामम समक्षं के अर्थात्तुच्छाः इति चमत्कारियोगार्थबोधने संलग्नतया; तदीयरूढ्यर्थसमर्पणार्थं हरशब्द उपात्तः।

क्वचित्पुना रूढ्यर्थसमपर्कं पदं नोपाददते कवयो, यत्र योगरूढः शब्दो व्यंजनाकूलचमत्कारियोगार्थबोधने संलग्नोऽपि स्वीयरूढ्यर्थमपि बोधयति=यथा भवदीये पद्ये।

पुष्पधन्वा विजयते जगत्त्वत्करुणावशादिति।

यथा वा 'तव प्रसादात्कुसुमायुधोऽपि'। इति कालिदासीये पद्ये।

अत्र पुष्पधन्वेति कुसुमायुध इति चैकस्यैव पदस्य उभयोरपि आवश्यकयोः योगार्थरूढ्यर्थयोः समुपस्थापकत्वम्। कामवाचकानन्तपदसमवधानेऽपि कुत एवदेवपदमुपस्तमस्ति कश्चिद्विशेषः।

यथावा=

मन्ये निजस्खलनदोषमवर्जनीय
(साधारणकवेः) मन्यस्य मूर्ध्नि विनिवेश्य बहिर्बुभूषुः (दोषाद्)
आविश्य देव! रसनानि महाकवीनां
देवी गिरामपि तव स्तवमातनोति।

मधुसूदनी

अत्र यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः।
अतिदुर्जन इति वक्तव्यमिति भवभूतेः

सम्यगुक्तेराशयमनुरुन्धाना गिरामपि देवी सरस्वती अत एव निजस्वलन-दोषस्यावर्जनीयतां संधाय महाकविरसनाश्रयेणैव त्वां स्तोतुं प्रभवति न स्वातन्त्र्येणे-त्येवंभूतोऽनन्तगुणगणार्णवो भवानिति चमत्कारियोगार्थबोधने संलग्नमपि गिरां देवीति पदं स्वीयरूढ्यर्थमपि बोधयति। ततः सरस्वतीत्यादि पदं पृथङ् नोपात्तम्।

अयं भावः। काव्येषु एकादशविध एव चमत्कारः नान्या विधा चमत्कारस्य। तथाहि—कुत्रचिद् विचार्यरमणीयः १ अविचार्यरमणीयः २ क्वचित् समस्तसूक्तव्यापी ३ सूक्तैकदेशव्यापि ४ कुहचिच् शब्दगतः ५ अर्थगतः ६ शब्दार्थोभयगतः ७ केषुचन अलंकारदृश्यः ८ रसानुभवगम्यः ९ प्रख्यातवृत्तप्रत्येयः १० उत्पाद्यवृत्तप्रत्येयः ११। तत्र सूक्तैकदेशव्यापिनश्चमत्कारस्य सद्भावे इयं स्थितिः।

यत्र पुनरेतादृशचमत्कारस्य संभवो नास्ति तत्रैव पुनरुक्तिदोषापत्तिर्भवति। यथा—

भद्राय भवतु भवतां भगवान् भजमानदैन्यतिमिररविः
दिवसारम्भविकस्वरनीरजनलिनाभिरामतरनयनः।

इत्यत्र नीरजनिकर्तृरूपस्य योगार्थस्य पद्मरूपरूढ्यर्थस्य बोधके नीरजपदे सति पुनः नलिनेति रूढ्यर्थसमपर्कपदस्य प्रयोगे पुनरुक्तिदोषसमुल्लासः।

यथा वा=

पक्षद्वयक्रशिमपोषविभाव्यमानचान्द्रायणव्रतनिषेण एव नित्यम्।
मेरुं प्रदक्षिणमयन् हि सुरालयं ते लिप्सुर्मुखाब्जरुचिमेष तपस्यतीन्द्रः॥

अत्र सुरालय शब्दः "सुराणामालय" इति योगेन, रूढ्या च सुमेरौ योगरूढः। न चात्र कश्चिच्चमत्कारो योगार्थमवलम्ब्य उदयति ततोऽपि मेरुशब्दः पुनरुक्तः।

एवं स्थितौ योगरूढशब्दस्थले चमत्कारिणो योगार्थस्य व्यंजनानुकूलतायै रूढ्यर्थसमर्कपदस्य पृथक् प्रयोगाप्रयोगाभ्यां द्विधा स्थितिरेव। तर्हि प्रकृते "गीष्पतिः रप्यांगिरस" इत्यत्र पुनरुक्तेः कः प्रसंग इति रूढ्यर्थमादाय पुनरुक्त्यापत्तिरित्युक्तिः-सुन्दरतां नावगाहते। यतः शब्दः प्रथमार्थप्रतिपादनावस्थायां वाचकः। द्वितीयार्थ-प्रतिपादनावस्थायां व्यञ्जकः। एवं वाचकत्वस्य कालिकाव्याप्यवृत्तित्वं ध्वन्यते।

अस्मिन् योगरूढप्रसंगे "लक्षणया तु योगरूढेन योगार्थमात्रप्रतिपादने न किंचिद्बाधकमस्ति।" इति कोक्तिः। अन्वयानुपपत्तिर्वा तात्पर्यानुपपत्तिर्वा लक्षणा-बीजम्, प्रकृते तूभयं नास्ति। नानार्थस्थले यथा व्यंजना प्रभुस्तथाऽत्रापि अति-शयितेऽर्थे तस्याः साम्राज्यं ततो बीजाभावाल्लक्षणा स्वप्नायिता।

अन्यच्च योगरूढशब्दः नित्यं विशेष्यसाकांक्षः। ततश्च यथा पंकजनिकर्तृत्व-प्रकारकः पद्मत्वविशेष्यक एव बोधः पंकजपदाद् भवति। न हि पंकजपदे पद्मत्वमपि प्रकारीभूय भासते। एवं यदि कदाचित् पद्मत्वमपि प्रकारीभूय भासिष्यते तदा लक्षणयैवेति सिद्धान्तानुसारं प्रकृते गीष्पतिपदादपि गिरांपतित्वप्रकारकः आंगिरसत्व-

अनया यः शब्दो यमर्थं बोधयति स तस्य वाचकः। इयं च यस्य शब्दस्य यस्मिन्नर्थेऽस्ति तस्य सोऽर्थोऽभिधेयः। स च जातिगुणक्रियायादृच्छिकात्मकः। तत्र जातिर्गोत्वादिः संस्थानविशेषमाभिव्यङ्ग्या प्रत्यक्षसिद्धा गवादिपदानामभिधेया, अनुमानसिद्धा च घ्राणरसनत्वादिर्घ्राणरसनादिपदानाम्।

### मर्मप्रकाशः

प्रत्यक्षेति। गवादीनां प्रत्यक्षत्वादिति भावः। अनुमानेति।

### मधुसूदनी

विशेष्यक एव बोधो न तु आंगिरसत्वप्रकारकस्तर्हि कथं लक्षणा स्यादिति च बोध्यम्। अथवा यत्र रूढ्यर्थस्य बाधः परं विशेषणविशेष्ययोरन्यतरस्योपस्थितौ तात्पर्यं यथा पंकजपदात् कुमुदत्वविशिष्टपंकजनिकर्त्तृत्वोपस्थितौ वा पंकजनिकर्त्तृत्वविशिष्ट कुमुदत्वोपस्थितौ; तदा लक्षणायाः प्रसंगः। तथैव रूढ्यर्थस्य आंरिसस्य बाधो भवेदथ च ब्रह्मणोऽपि सरस्वतीपतित्वेन प्रसिद्धतया गिरांपतित्वविशिष्टब्रह्मत्वेन अथवा ब्रह्मत्वविशिष्टगिरां पतित्वे बोधे तात्पर्यं भवेत्तदा प्रकृते लक्षणा स्यात् परमत्र सा स्थितिर्नास्ति ततः कथं लक्षणा। इति।

वाचक इति। यदर्थविशेष्यक-यत्पदनिरूपित-संकेत-प्रकारकं ज्ञानं यदर्थ-विषयकशाब्दबुद्धौ कारणं तत्पदं तदर्थवाचकम्।

अनुमानसिद्धेति। घ्राणरसनादिपदानामभिधेया घ्राणत्वरसनत्वादिर्जातिः। सा च अनुमानसिद्धेति संगतिः। अनुमानस्वरूपञ्च=समवायेन सत्कार्यं प्रति तादात्म्येन द्रव्यं कारणमिति नियमात् समवायेन अनुद्भूतगन्धं प्रति तादात्म्येन घ्राणमिन्द्रयं कारणम्। ततश्च समवायसम्बन्धावच्छिन्ना अनुद्भूतगंधत्वावच्छिन्ना अनुद्भूत-गन्धनिष्ठा या कार्यता, तादृशकार्यतानिरूपिता या घ्राण (इन्द्रिय)निष्ठा कारणता सा किंचिद्धर्मावच्छिन्ना कारणतात्वात् दण्डनिष्ठकारणतावत्। एवं यो हि घ्राणत्वरूपो धर्मः कारणताया अवच्छेदकः स धर्मो जातिरिति सिद्धम्।

### बालक्रीड़ा

इस शक्ति के सहारे जो शब्द जिस अर्थ को कहे वह शब्द उस अर्थ का वाचक होता है। और यह शक्ति जिस शब्द के जिस अर्थ में रहती है वह अर्थ उस शब्द का अभिधेय होता है। वह अभिधेय जाति, गुण, क्रिया और यदृच्छिक रूप से चार प्रकार का है।

उनमें जाति गोत्वादि, गवादि पदों की अभिधेय है जो कि अवयवों के संस्थान विशेष से मालूम होती है अतः प्रत्यक्ष सिद्ध है। और घ्राण एवं रसनादि पदों की अभिधेय घ्राणत्व एवं रसनत्व आदि जातियाँ अनुमान से सिद्ध हैं।

यहां का भाव यह है कि घ्राणेन्द्रिय एवं रसनेन्द्रियां वगैरह परमाणु रूप नहीं हैं क्योंकि परमाणुरूप मानने में उन इन्द्रियों को नित्य मानना पड़ेगा अतः वे इन्द्रियां द्व्यणुकस्वरूप हैं

आनन्त्यात्, व्यभिचाराच्च व्यक्तीनामभिधेयताया अकल्पनात् । न च

## मर्मप्रकाशः

घ्राणेन्द्रियादीनामतीन्द्रियत्वादिति भावः । आनन्त्यादिति । अनन्तशक्तिकल्पज-

## मधुसूदनी

आनन्त्यादिति । तर्हि शक्तिग्रहपदार्थोपस्थितिशाब्दबोधेषु कार्यकारणभावस्य आनन्त्यं स्यात्, चेत् प्रतिव्यक्ति संकेतः कल्प्यते व्यक्तीनामानन्त्यात् । यस्यां कस्याञ्चित् एकस्यां व्यक्तौ संकेतस्तर्हि अगृहीतसंकेतानां गोव्यक्तीनां गोशब्दाद्-प्रतीतिरेवास्तु परं साजात्यात् तादृशव्यक्तेः प्रतीतिर्भवति इति व्यभिचारेण शक्तिग्रह-पदार्थोपस्थितिशाब्दबोधनिष्ठस्य कार्यकारणभावस्यैव उच्छेदः स्यात् । तथा अगृहीतसंकेतत्वस्य साधारण्यात् गोशब्दात् असंकेतितगोव्यक्तेरिव तादृशाश्वादेरपि प्रतीतिप्रसंगरूपव्यभिचाराच्चेति ।

## बालक्रीड़ा

तथा उन इन्द्रियों में अनुद्भूत गन्ध अनुद्भुत रस आदि हैं । अब यहाँ अनुमान का प्रकार बतलाते हैं । (समवायेन सत्कार्यं प्रति तादात्म्येन विषयः कारणम्) समवाय सम्बन्ध से उत्पन्न होने वाले सत्कार्य के प्रति तादात्म्य सम्बन्धसे विषय कारण है । इसके अनुसार (समवायेन अनुद्भूतगन्धं प्रति, तादात्म्येन घ्राणेन्द्रियं कारणम्, अनुद्भूतरसं प्रति तादात्म्येन रसनेन्द्रियं कारणम्) समवाय सम्बन्ध से उत्पन्न होने वाले अनुद्भूत गन्ध के प्रति अभेद सम्बन्ध से घ्राणेन्द्रिय कारण है समवाय सम्बन्ध से उत्पन्न होनेवाले अनुद्भूत रसके प्रति अभेद रूप से रसनेन्द्रिय कारण है । तब इसका पूरा आकार ऐसा हुआ । समवायसम्बन्धावच्छिन्ना अनुद्भूतगन्धत्वावच्छिन्ना अनुद्भूतगन्धनिष्ठा या कार्यता तादृशकार्यतानिरूपिता या घ्राणेन्द्रिय-निष्ठा कारणता सा किंचिद्धर्मावच्छिन्ना, या या कारणता सा सा किंचिद्धर्मावच्छिना भवति कारणतात्वात् दण्डनिष्ठकारणतावत् । प्रकृत में जो धर्म घ्राणनिष्ठकारणता का अवक्छेद होगा वही घ्राणत्व धर्म जाति कहलायेगा । इसी तरह रसनत्व, त्वक्त्व, चक्षुष्ट्व, श्रोत्रत्व जातियों का अनुमान करना चाहिए । एक बात यह जरूर जान लेना आवश्यक है ये सब इन्द्रियां द्व्यणुक रूप हैं किन्तु मन रूप इन्द्रिय अणुरूप है । जैसा कि

अयौगपद्याज् ज्ञानानां तस्याणुत्वमिहेष्यते । कहा है । अतएव मन नैयायिकों के मत में नित्य है ।

आनन्त्य एवं व्यभिचार रूप दोषों के कारण व्यक्ति अभिधेय है ऐसी कल्पना नहीं की जाती है ।

यहां का भाव यह है कि प्रथम संकेत ग्रह, व्यवहार के अधीन है और व्यवहार है प्रवृत्ति एवं निवृत्ति रूप । अतः बैल एवं धर्मसांड बनाने के लिए बछड़े को तथा गौ बनाने के लिए बछिया को पैदा करना, उत्तम खाद के लिए गोमय देना, घी एवं मक्खन के उपयोगी दूध को देना आदि इष्टसाधनत्वरूप प्रवृत्तियोग्यता गोव्यक्ति में हैं, तथा लात मारना सींग

ज्ञातगोत्वादिरूपया गोत्वादिज्ञानरूपया वा प्रत्यासत्त्या प्रत्यक्षेण परिकलितासु

### मर्मप्रकाशः

गौरवादित्यर्थः। ज्ञायमानं सामान्यं प्रत्यासत्तिरितिमतेनाह—ज्ञातगोत्वादीति। सामान्यज्ञानं प्रत्यासत्तिरिति मतेनाह—गोत्वादिज्ञानेति। प्रत्यक्षेण अलौकिकेन। गौरवदोषस्येति

### मधुसूदनी

प्रत्यासत्त्येति। अयं भावः। इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। एवं च इन्द्रियेण साकं गोरूपार्थस्य संन्निकर्षोऽवश्यमपेक्षितोऽन्यथा प्रत्यक्षज्ञानं न स्यात्। किन्तु स सन्निकर्षः चक्षुर्गोचरीभूतैरेव कैश्चिद् गोभिः स्यान्न तु अतीतैरनागतैर्दूरस्थैः विप्रकृष्टैश्च गोभिः। "एकस्मिन् गवि विज्ञाते सर्वं गोजातं विज्ञातं भवति" यथा अकारान्तस्य एकस्य रामशब्दस्य साधनिकायां विज्ञातायां तादृशानां सर्वेषामकारान्तानां साधनिका विज्ञाता भवतीति तथा लाघवार्थं कश्चिदुपाय आश्रयणीयः। येन लौकिकं सन्निकर्षं विना अपि अर्थज्ञानं जायेत। तदर्थं नैयायिकैरलौकिकः सन्निकर्षः सामान्यलक्षणः स्वीकृतः। ततश्च यदा इन्द्रियेण साकं गोः सन्निकर्षो जातस्तदा गोविशेष्यकं गौरिति ज्ञानं जातं, तत्र ज्ञाने गोत्वं

### बालक्रीड़ा

मार देना आदि अनिष्ठसाधनत्व रूप निवृत्तियोग्यता भी उसी में है अतः व्यक्ति में ही संकेत करना औचित्य प्राप्त है।

किन्तु आनन्त्य एवं व्यभिचार दोषों के कारण व्यक्ति के अभिधेयता की कल्पना नहीं की अर्थात् व्यक्ति में संकेत करना अयुक्त है। ये दोष कैसे होते हैं इसके लिए कहते हैं क्या सभी व्यक्तियों में किया जाने वाला संकेत व्यवहार का साधक है या किसी एक व्यक्ति में संकेत व्यवहार का अंग है। प्रथम पक्ष असंभव दोष ग्रस्त है क्यों कि भूत, भविष्य एवं वर्त्तमान काल की अनन्त गौओं की एक काल में उपस्थिति होना असंभव है। अतः व्यक्तियों की अनन्तता ही प्रथम पक्ष के स्वीकार करने में बाधक है। द्वितीय पक्ष में भी जिस व्यक्ति में वह संकेत करेंगे उसी का ज्ञान होगा उससे अतिरिक्तव्यक्ति का ज्ञान नहीं होगा क्योंकि अतिरिक्त व्यक्ति में संकेत ही नहीं है। यदि जिसमें संकेत नहीं हुआ है उसकी भी प्रतीति हो सकती है ऐसा मानेंगे तब जैसे सजातीय असंकेतित गो व्यक्ति का गोपद से ज्ञान होगा उसी तरह विजातीय अश्वादि व्यक्ति का भी गोपद से भान होने लगेगा क्यों कि "संकेतित व्यक्ति का ही भान होता है अन्य का नहीं" यह नियम तो कट गया। अतः नियमबाधा होना ही द्वितीय पक्ष की स्वीकृति में बाधक है।

यदि कहें कि ज्ञात (ज्ञान विषय) गोत्वादि रूप या गोत्वादिज्ञान रूप प्रत्यासत्ति के द्वारा प्रत्यक्ष से परिकल्पन की गई उन सकल व्यक्तियों में अभिधा के कल्पना करने पर कोई दोष नहीं है।

यहां का भाव यह है कि जिस किसी वस्तु का प्रत्यक्ष ज्ञान होता है उस ज्ञान में वस्तु के साथ इन्द्रिय का सन्निकर्ष सन्वन्ध आवश्यक है। जैसे किसी गौ का प्रत्यक्ष ज्ञान करना है

सकलतदीयव्यक्तिष्वभिधायाः कल्पने नास्ति दोष इति वाच्यम् । सामान्य-

## मधुसूदनी

यत्प्रकारीभूतं तदेव सामान्यं सन्निकर्षः। (संनिकर्षः प्रत्यासत्तिरिति पर्यायौ) तेन गोत्वेन सन्निकर्षेण गाव इत्येवंरूपं सकलगोविषयकं ज्ञानं जायते। तत्र तच्च सामान्यं वर्तमानकालिकज्ञानविषयीभूतं ज्ञातं कार्यकरमिति धिया ज्ञातगोत्वादि (सामान्य) रूपया प्रत्यासत्त्येत्युक्तम्। भूतानां भविष्यतां दूरविप्रकृष्टानां गवां ज्ञातसामान्येन ज्ञानं न भवतीति सामान्यज्ञानं कार्यकरमिति धिया गोत्वादि (सामान्य) ज्ञानरूपया प्रत्यासत्त्येति कथितं पण्डितराजेनेति बोध्यम्। नास्ति दोष इति अत्र दोषपदार्थो व्यभिचारः।

## बालक्रीड़ा

उस अवस्था में उस गौ के साथ चक्षुरिन्द्रिय का सन्निकर्ष होगा तभी उस गौ का प्रत्यक्ष होगा अन्यथा नहीं। इस नियम के अनुसार भूत एवं भविष्य की गौओं के साथ चक्षु का सम्वन्ध योगी या ईश्वर के सिवाय किसी मानव का होगा यह कल्पना तो दूर है किन्तु वर्त्तमान की गौओं के साथ भी चक्षुरिन्द्रिय का सम्वन्ध होना असंभव है अतः भूत, भविष्य एवं वर्त्तमान काल की सभी गौओं के प्रत्यक्ष ज्ञान के लिए एक सम्वन्ध की कल्पना की। उस संवन्ध का नाम सामान्य है यह अलौकिक सम्वन्ध है (सन्निकर्ष है)

इसका फल होता है कि एक गौ को आखों से देखा तब "यह गौ है" यह प्रत्यक्ष ज्ञान हुआ उस ज्ञान में गौ विशेष्य है। और गोवृत्ति गोत्व प्रकार है। यह गोत्व ही अलौकिक सम्वन्ध है। यह गोत्व सकल गो व्यक्तियों में अनुगत है समवाय सम्वन्ध से रहता है अतः सामान्य है जाति है। इस गोत्व रूप सामान्य के सहारे भूत, भविष्य एवं वर्त्तमान काल की जिनका इन्द्रिय के साथ सम्वन्ध नहीं भी है (गोत्व की आश्रयभूत) उन सब गौओं का प्रत्यक्षज्ञान हो जाता है।

इस सामान्य रूप सन्निकर्ष के बारे में दो मत हैं एक आचार्य का मत है कि ज्ञायमान सामान्य अर्थात् वर्त्तमानकालीन ज्ञान विषय सामान्य (गोत्व) ही प्रत्यासत्ति है सम्वन्ध है। प्रत्यसत्ति और सम्वन्ध दोनों पर्याय हैं। इसी को पण्डितराज ने ज्ञातगोत्वरूपा प्रत्यासत्ति लिखा है। दूसरे आचार्य कहते हैं कि इस तरह की प्रत्यासत्ति से वर्तमान की गौओं का ही ज्ञान होगा किन्तु दूर या विप्रकृष्ट भूत ओर भविष्य काल की गौओं का ज्ञान नही होगा अतः सामान्य ज्ञान रूप प्रत्यासत्ति को ही कारण मानना चाहिए। इसी को पण्डितराज ने गोत्वादिज्ञानरूप प्रत्यासत्ति कहा। ये दोनों दो प्रकार भी ठीक नहीं है। क्योंकि सामान्य प्रत्यासत्ति का निराकरण कर दिया गया है।

यहां का भाव यह है कि एक गौ को देखकर सम्पूर्ण गौओं का ज्ञान हो जाता है वहां गोत्व विषयक सामान्यज्ञान सन्निकर्ष कारण है। वह सन्निकर्ष ही गोत्व रूप सामान्य के आश्रय अतीत, अनागत, विप्रकृष्ट और व्यवहित यावद् गो व्यक्तियों के अलौकिक प्रत्यक्ष का जनक है अतः उसके माने विना सम्पूर्ण गौओं का ज्ञान कैसे होगा। यदि सम्पूर्ण गौओं का ज्ञान

प्रत्यासत्तेर्निराकरणात् । गौरवदोषस्यानुद्धाराच्च । एतेन शक्तिग्रहपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकतयैव हेतुहेतुमद्भावादगृहीतसंकेतानामपि

### मर्मप्रकाशः

द्वितीयदोषोद्धारेऽप्याद्यदोषस्येत्यर्थः । एतेन गौरवदोषानुद्धारेण । एवकारेण समानविशेष्यकत्वा-

### मधुसूदनी

निराकारणादिति । अयमाशयः । एकस्मिन् गवि विज्ञाते सर्वेषां गवां यदि बोधो भवेत्तदा एकस्मिन् पदार्थे ज्ञाते सर्वे पदार्था विज्ञाता भवेयुः, परं नैतादृशी सर्वज्ञता लोके दरीदृश्यते। अतः सामान्यप्रत्यासत्तिर्निराक्रियते। ततश्च व्यक्तौ अभिधायाः कल्पने व्यभिचाराख्यो दोषस्तदवस्थ एव । च पुनः गौरवदोषस्यान न्यदोषस्य अनुद्धारात् अनिराकरणात् वर्त्तमानत्वादित्यर्थः।

एतेनेति=गौरवदोषानुद्धरणेन । अयमाशयः । महानसचत्वरगोष्ठनिष्ठे चक्षुःसन्निकृष्टे धूमे "यत्र धूमस्तत्र वह्निः" इत्याकारको व्याप्तिरूपो वह्निसम्बन्धः चक्षुषा साक्षात्कृतः। किन्तु कालान्तरदेशान्तरगतधूमस्य चक्षुषा अगृहीततया धूमो वह्निव्याप्यो न वेति" एवंरूपः संशयः सन्देहः (सन्दिग्धसाध्यवान् पक्षः इतिलक्षणात्) पक्षतापादकः न स्यात्तर्हि अनुमितिरेव नोदियात्। किन्तु अनुमितिर्भवत्येव संशयोऽपि जागर्त्यैव, अतः सामान्यप्रत्यासत्तिः स्वीकार्यैव ।

### बालक्रीड़ा

नहीं होगा तव "इयं, गौः, गोत्वात्" (यहाँ दृष्टांत नहीं होता है) इस अनुमान का उपयोगी संशय कैसे होगा। क्यों कि किसी एक गोत्वाश्रित गौ का ही प्रत्यक्ष है अन्य का नहीं। संशय होने पर ही अनुमान होता है यह वस्तु स्थिति है। यहाँ तादात्म्येन गौ साध्य है समवायेन गोत्व हेतु है। जहाँ-जहाँ तादात्म्येन गौ है वहाँ-वहाँ गोत्व है। और जहाँ-जहाँ गोत्व है वहाँ-वहाँ तादात्म्येन गौ है। यह समव्याप्ति हैं। जैसे घटोऽभिधेयः प्रमेयत्वात् में अधिधेयत्व का व्याप्य प्रमेयत्व है प्रमेयत्व का व्याप्य अभिधेयत्व है अतः समव्याप्ति है। वह्निमान् धूमात् में विषम व्याप्ति है।

इस पर कहते हैं कि रसोई घर में आप विशेष धूम को और विशेष वह्नि को देखते हैं अतः विशेष व्यक्तियों में ही व्याप्ति ग्रह होगा। और इस विशेष स्थल गृहीत व्याप्ति के अनुसार पर्वत में भी विशेष धूम को देखकर विशेष वह्नि का अनुमान हो ही जायगा तव सामान्यज्ञान को सन्निकर्ष मानने की क्या आवश्यकता है? अस्तु।

फिर कहते हैं कि सामान्यज्ञान संनिकर्ष को मान भी लिया जाय तब भी अनन्त व्यक्तियों में संकेत करने से होने वाले गौरव दोष का उद्धार तो नहीं हुआ।

इस गौरव दोष के उद्धार हुए विना शक्ति ग्रह, पदार्थोपस्थिति एवं शाब्दबोधों में समान प्रकारक कार्य कारण भाव होने के कारण अगृहीत संकेत वाले व्यक्ति विशेषों की अन्वयबोधविषयता का उपपादन करने पर भी निस्तार नहीं है।

व्यक्तिविशेषाणामन्वयबोधविषताया उपपादनेऽपि न निस्तारः। व्यक्तीनां प्रत्ययस्त्वाक्षेपाल्लक्षणया वेत्यन्यदेतत्।

अयं च जातिरूपः शब्दार्थः प्राणप्रद इत्युच्यते। प्राणं व्यवहारयोग्यतां

### मधुसूदनी

अत एवोच्यते पक्षधरमिश्रेण
वक्षोजपानकृत् काण ? ( श्रीरघुनाथशिरोमणे ?)
संशये जाग्रति स्फुटे
सामान्यलक्षणां कस्मादकस्मादलप्यते। इति।

अतश्च गोत्वरूपसामान्येन प्रत्यासत्त्या अगृहीतसंकेतानामन्वयबोधविषयताया उपपादनेऽपि गौरवदोषस्य अनुद्धरणात् व्यक्तिविशेषाणामभिधेयताया कल्पने न निस्तारः न उद्धारः। इति।

### बालक्रीड़ा

यहाँ का आशय यह है कि यत्प्रकारक यद्विशेष्यक शक्तिग्रह होगा, तत्प्रकारक तद्विशेष्यक ही उपस्थिति पदार्थ की होगी और यत्प्रकारक यद्विशेष्यक उपस्थिति होगी तत्प्रकारक तद्विशेष्यक ही शाब्दबोध होगा। फलतः इस समानप्रकारकता के वदौलत शक्तिग्रह, पदार्थोंपस्थिति एवं शाब्दबोधों में पूर्व पूर्व हेतु है और उत्तरोत्तर कार्य है हेतुमान् है। इस हेतु हेतुमद्भाव के रहते हुए भी अनन्त व्यक्तियों में से जिन व्यक्ति विशेषों में शक्तिग्रह नहीं हुआ है उन व्यक्तियों का भी शाब्द ज्ञान (गोत्वादिरूप) सामान्य प्रत्यासत्ति से हो जायगा। इस तरह समर्थन करने पर व्यभिचार दोष तो हट गया किन्तु अनन्त शक्ति कल्पन जनित अनन्त कार्यकारण मानने रूप गौरव दोष का उद्धार नहीं हुआ। इसलिए व्यक्ति में शक्ति नहीं मानी जा सकती किन्तु जाति में ही शक्ति माननी उचित है।

प्रश्न—यदि जाति में ही शक्ति मानेंगे तब व्यक्ति की प्रतीति कैसे होगी ?

उत्तर—व्यक्ति की प्रतीति आक्षेप या लक्षणा से हो जायगी। इसकी कोई चिन्ता नहीं है। यह विषय अन्य है। क्योंकि जाति, धर्मविशेष है और धर्म, धर्मी के विना रह नहीं सकता है अतः व्यक्ति के विना जाति की सत्ता नहीं हो सकती है इस व्यक्त्य विना भावित्व रूप व्याप्ति (ज्ञान) से जाति से व्यक्ति का आक्षेप कर लेंगे। प्रकृत में आक्षेप पद का अर्थ अनुमान हैं। जाति, व्यक्ति के आश्रित है क्योंकि वह जाति है धर्मविशेष है।

यहाँ यह शंका नहीं करना कि शब्द के वारे की आकांक्षा शब्द से पूरी होती है किंतु प्रकृत में व्यक्ति अनुमान से जानी है, अतः अशाब्द व्यक्ति में शाब्द लिंग संख्या एवं कर्मत्व का अन्वय कैसे होगा। क्योंकि अनुमान शब्द का सहकारी कारण है इसलिए अनुमान सहकृत शब्द से जातिविशिष्ट व्यक्ति का ज्ञान हो जायगा। यद्यपि वृत्ति सहकृत शब्द से होनेवाली पदार्थोपस्थिति शाब्दबोध में कारण है तथापि फलवल से स्थलविशेष म अनुमान भी सहकारी है वृत्ति तो सर्वत्र सहकारी है ही। अतः कोई दोष नहीं है।

यह जातिरूप शब्द का अर्थ प्राणप्रद कहलाता है प्राण याने व्यवहार योग्यता को देता

प्रददाति संपादयतीति व्युत्पत्तेः। तदुक्तम्—'गौः स्वरूपेण न गौर्नाप्यगौः, गोत्वाभिसंबन्धाद्गौः', इति। अस्यार्थः—गौः सास्नादिमान्धर्मी स्वरूपेण अज्ञातगोत्वकेन धर्मिस्वरूपमात्रेण न गौः न गोव्यवहारनिर्वाहकः। नाप्यगौः नापि गोभिन्न इति व्यवहारस्य निर्वाहकः। तथा सति दूरादनभिव्यक्तसंस्थानतया गोत्वाग्रहदशायां गवि गौरिति गोभिन्न इति वा व्यवहारः स्यात्। स्वरूपस्याविशेषाद्घटे गौरिति गवि चागौरिति वा व्यवहारः स्यादिति भावः। गोत्वाभिसंबन्धाद्गोत्ववत्तया ज्ञानाद्गौर्गोशब्दव्यवहार्य इति।

### मर्मप्रकाशः

दिव्यवच्छेदः। तदुक्तमिति। प्रकाशकृतेति शेषः। एवमग्रेऽपि। तथा सति धर्मिस्वरूपमात्रेण व्यवहारनिर्वाहकत्वाङ्गीकारे सति। गौरिति व्यवहारे इष्टापत्त्या आह—गोभिन्न इतीति। अविशेषादिति। व्यक्तिस्वरूपाणां स्वतोऽव्यावृत्तत्वादिति भावः। गौरित्यत्र विशेषणज्ञानविधया

### मधुसूदनी

स्वरूपेणेति। इत्यस्यैव व्याख्या अज्ञातेति धर्मिस्वरूपेति च। तथा सतीति। स्वरूपेण गौः, गौर्न भवति, तथा गोभिन्न इति व्यवहारविषयोऽपि न भवति। यदि तथापि स्वरूपेणैव गौः गोव्यवहारविषय इत्यागृह्येत तर्हि दूराद्धेतोः अनभिव्यक्तसंस्थानतया अस्पष्टावयवकतया गोत्वविषयकज्ञानाभावदशायाम्।

स्वरूपस्येति। अदो हृदयम्। सावयववस्तूनामवयवभेदाद् भेदः समर्थयितुं शक्यः, परमत्र तु दूराद्धेतोरनभिव्यक्त संस्थानत्वमतः ज्ञातुमशक्यतया कोऽयं वस्तुविशेष इति स्वरूपस्य अविशेष एव तस्यापि किंचित्सन्निकृष्टतया अतिसन्निकर्षेण च

### बालक्रीड़ा

है सम्पादन करता है इस व्युत्पत्ति के अनुसार। जैसा कि कहा है—स्वरूप से गौ, गौ नहीं है, और न अगौ ही है अर्थात् गोभिन्न भी नहीं है। हाँ गोत्व के साथ अभिसंबन्ध अन्वय होने पर वह गौ है। इसका अर्थ है कि सास्ना माने गलकम्वल वाला धर्मी गौ, स्वरूप से विना गोत्व के अन्वय के जाने केवल अपने स्वरूप से गौ नहीं है "यह गौ है" इस व्यवहार का निर्वाह नहीं करा सकता है। और न अगौ याने गोभिन्न यह व्यक्ति हैं इस व्यवहार का भी निर्वाह नहीं करा सकता है। वैसा होंने पर अर्थात् स्वरूप से ही व्यवहार होने पर जहाँ दूरी के कारण संस्थान अवयवों के अनभिव्यक्त माने स्पष्ट प्रतीत नहीं होने से गोत्व का ज्ञान नहीं हुआ है उस अवस्था में एक ही गौ में गौ है या गौ नहीं है ऐसा व्यवहार होने लगेगा। इसके सिवाय घट या गौ के स्वरूप में विशेष याने वैलक्षण्य नहीं होने से घट में गौ है यह व्यवहार और गौ में गौ नहीं है यह व्यवहार होने लगेगा। अतः गोत्व के अभिसंबंध से गोत्ववाली यह गौ है इस ज्ञान में गौ गो शब्द से व्यवहार्य है।

गुणः शुक्लादिपदानामभिधेयः। क्रिया चलनादिशब्दानाम्। शुक्लादीनां चलनादीनां च प्रतिव्यक्तिभेददर्शनादानन्त्यव्यभिचाराभ्यां व्यक्तिशक्तिवाददोषाभ्यामिहापि कलुषीकरणमिति चेत्; तेषां लाघवात्प्रत्यभिज्ञाबलाच्चैकताया अभ्युपगमात्। तदुक्तम्—गुणक्रियायदृच्छानां वस्तुत एकरू-

## मर्मप्रकाशः

तस्योपयोगेऽपि नाप्यगौरित्यनेन व्यवहारमात्रं धर्मज्ञानसाध्यमित्युच्यते। अभावज्ञानेऽपि प्रतियोगितावच्छेदकविशिष्टज्ञानस्य प्रतियोगितावच्छेदज्ञानस्य वा हेतुत्वादित्याहुः। शङ्कते—शुक्लादीनामिति। इहापि गुणक्रिययोरभिधेयत्वेऽपि। चेदित्यस्य तत्रेति शेषः। एकताया इति।

## मधुसूदनी

अवयवानां स्पष्टतया अयमिह वस्तुविशेष इति ज्ञातुं शक्योऽपि, अयमश्वो गोर्भिन्नः इति गोप्रतियोगिकभेदः कथं ज्ञातुं शक्यस्तदर्थं तु धर्मज्ञानमेवापेक्षितम् यतोऽभावज्ञानं प्रतियोगिज्ञानाधीननिरूपणीयं वा प्रतियोगिवृत्तिधर्मज्ञानाधीननिरूपणीयमिति।

हिमसुधादधिपयश्चन्द्रिकादिवृत्तीनां शुक्लादीनां, वृन्ताकपाक द्राक्षापाक सहकारपाकानां खरमध्यमृदुपाकानां, क्रियाणां चलनादीनां प्रतिव्यक्ति भेदो दृश्यते। अतः शुक्लादिगुणः शुक्लादिपदानाममिधेयश्चेत्तर्हि आनन्त्यव्यभिचारदोषौ सिद्धान्तमिमं कलुषीकरिष्यतः। इति सारः। पूर्वमाश्रयभेदात् शुक्लादिषु भेदग्रहेऽपि पश्चात् एतद्गतः शुक्लो गुणः भिन्नो नेत्युत्तरकाले बाधाद् भेदप्रतीतिर्भ्रम एव।

## बालक्रीड़ा

गुण शुक्लादि हैं जो शुक्ल आदि पदों के अभिधेय हैं। क्रिया, चलन आदि शब्दों की अभिधेय है। शुक्ल आदि गुण, चलन आदि क्रियाओं का प्रतिव्यक्ति में भेद देखा जाता है इसलिए "व्यक्ति में शक्ति है" ऐसा कहने वालों के मत में प्राप्त आनन्त्य एवं व्यभिचार दोषों से यहाँ भी गुण एवं क्रिया में शक्ति मानने वालों के मत में भी कलुषी करण हो गया" ऐसा हो तो सुनिये। उन गुणों एवं क्रियाओं में एकता का अभ्युपगम किया है। उसका हेतु है लाघव। क्योंकि अनन्त गुणियों में अनन्त गुण एवं अनन्त कर्मठों में अनन्त क्रियाओं के मानने में महान् गौरव होगा अतः उन सब गुणों एवं क्रियाओं को एक मानने में सरलता है।

प्रश्न—उनको एक मानने में बल क्या?

उत्तर—उसका बल प्रत्यभिज्ञा है।

अर्थात् बर्फ में जो शुक्ल गुण देखा है वही गुण दूध में है। जो दूध में देखा है वही शंख में भी है। इसी प्रत्यभिज्ञा के बल से एकता को स्वीकार किया गया है जैसा कि काव्यप्रकाशकार ने कहा है कि गुण-गुण क्रिया-क्रिया एवं यदृच्छा-यदृच्छा वस्तुत एक रूप ही है किन्तु आश्रय के भेद से उनमें भेद जैसा मालूम पड़ता है। इस लिए उनमें भेद की प्रतीति भ्रम ही है। यह भाव है। जैसा कि वाक्य पदीय में कहा है—

पाणामाश्रयभेदाद्भेद इव लक्ष्यते' इति। तथा च भेदप्रतीतिर्भ्रम एवेति भावः। इदमुपलक्षणम्। उत्पत्तिविनाशप्रतीतिरपि तथैव, वर्णनित्यतावादे गकाराद्युत्पत्तिविनाशप्रतीतेर्भ्रमत्वस्य स्वीकारात्। यादृच्छिकस्तु वक्त्रा स्वेच्छया डित्थादिशब्दानां (स्वरूपभूतः) प्रवृत्तिनिमित्तत्वेन डित्थाद्यर्थेषु संनिवे-

### मर्मप्रकाश

तथा च नित्यत्वमपि सिद्धमिति भावः। तथैव भ्रम एव। व्यक्तिगतोऽर्थव्यक्तिगतः। अति-

### मधुसूदनी

यादृच्छिकस्तु अभिधेयः वक्ता स्वेच्छया यदृच्छया डित्थाद्यर्थेषु प्रवृत्तिनिमित्तत्वेन संनिवेशितः डित्थादिशब्दानां स्वरूपभूतो धर्मः नाम इति यावत्। संज्ञेति तत्त्वम्। व्यक्तिगत इति। यथा गोपदस्यार्थः गोत्वं (जातिः) गोव्यक्तिगतम्। शुक्लपदाभिधेयः शुक्लो गुणः शुक्लगुणविशिष्टगोव्यक्तिगतः। पचतिक्रियावाच्यः (खरमदुमध्य) पाकः सहकारादिव्यक्तिगतः। तथैव यादृच्छिक अभिधेयः वक्त्रा स्वेच्छया न तु ईश्वरेच्छया (अन्य उपाधिस्तु गोत्वादिः ईश्वरेच्छया) सन्निवेशितः संकेतितः डित्थदेवदत्तादिशब्दः तत्तद् व्यक्तिगतः। जातिमति जातिः, गुणिनि गुणः, पचनाश्रयेषु सहकारादिषु पाकः समवायसम्बन्धेन वर्त्तते परं डित्थदेवदत्तादि शब्दस्तु समवायेन आकाशे, बोधकत्वसम्बन्धेन व्यक्तिगत इति परम्परयेति कथनम्।

### बालक्रीड़ा

यथा मणिकृपाणादौ मुखमेकमनेकधा।
(तथैव ध्वनिषु स्फोट एक एव हि विद्यते)

भेद प्रतीति को भ्रम कथन उपलक्षण है चिह्न है। इस लिए इस भ्रमात्मक भेद प्रतीति की तरह शब्दों में उत्पत्ति एवं विनाश की प्रतीति भी भ्रम ही है। क्योंकि वर्ण को नित्य कहने वालों के मत में गकारादि में उत्पत्ति एवं विनाश की प्रतीति को भ्रम ही माना है।

यादृच्छिक तो डित्थादि शब्दों का स्वरूपभूत वह धर्म है वह उपाधि है जिसको वक्ताने अपनी यदृच्छा इच्छा से डित्थादि अर्थों मे प्रवृत्ति निमित्त बनाकर संन्निवेशित किया है स्थापित किया है। यादृच्छिक माने वक्तृ यदृच्छा सन्निवेशित उपाधि। इसी का स्पष्टी-करण यादृच्छिकस्तु से धर्मः तक किया है।

वह धर्म डित्थ, डवित्थ, चैत्र, मैत्र, देवदत्त, यज्ञदत्त आदि नाम रूप है संज्ञा शब्द है।

वह यादृच्छिक शब्द परम्परा से व्यक्ति में रहने वाला (व्यक्ति में स्थापित किया हुआ) और चरम अन्तिम वर्ण से अभिव्यङ्ग्य जैसे थोड़े थोड़े अवयवों से चक्षुरिन्द्रिय के साथ सन्निकर्ष होने पर क्रमशः वस्तु की प्रतीति होती है उसी तरह प्रथमादि वर्णों की प्रतीति में कुछ कुछ प्रतीत होकर अन्तिम वर्ण की प्रतीति से स्पष्ट प्रतीत हुआ अखण्ड स्फोट रूप है;

**शितो धर्मः। स च 'परंपरा व्यक्तिगतश्चरमवर्णाभिव्यङ्ग्योऽखण्डः स्फोटः'**

### मर्मप्रकाशः

रिक्तस्फोटाङ्गीकारे फलाभावादाह—आनुपूर्व्येति। वर्णानां जन्यत्वेन समुदायासंभवादाह—

### मधुसूदनी

ननु स्फोटस्तु वैदाकरणानां प्रक्रियानिर्वाहक अलौकिकः कश्चित्पदार्थः। अयं संज्ञात्मकः शब्दस्तु लौकिकः अत आह—आनुपूर्वीति। द्, ए, व् अ, द् अ, त् त् अ इत्याकारानुपूर्वीविशेषेण अवच्छिनो विशिष्टः वर्णसमुदायः संज्ञा। ननु आशुविनाशिनां वर्णानामुत्पद्यमानोऽभिव्यज्यमानो वा समुदायो भवितुं नार्हति तर्हि कथं वर्णसमुदाय इत्युच्यतेऽत आह—केवलेति। यथा निर्मितिक्रियाविषयेषु तन्तुषु केवलः पट इति व्यवहारः न तु तन्तव इति तथैव संहृतक्रमत्वात् वर्णेषु केवलं पदमिति व्यवहारो न तु वर्णसमुदाय इति। तदेतदुक्तम् वर्णातिरिक्तं पदं नेत्यर्थः। केवला व्यक्तिरिति एकवर्णव्यक्तिरित्यर्थः। वर्णमेव पदमित्युक्तेः।

### बालक्रीड़ा

ऐसा एक आचार्य का मत है इसी लिए परम्परया व्यक्ति में रहने वाला कहा, क्योंकि वर्ण ही स्फोट को अभिव्यक्त करके शाब्दबोध में उपयुक्त होते हैं साक्षात् नहीं।

आनुपूर्वी से अवच्छिन्न विशिष्ट वर्ण समुदाय यादृच्छिक है; ऐसा अपर आचार्यों का मत है। इनके कहने का आशय है "घटेन" इस आनुपूर्वी के समझने पर ही घटत्वावच्छिन्न प्रकारता से निरूपित करणतात्वावच्छिन्न विशेष्यताक अन्वय बोध होता है। किन्तु घट+टा शब्द को सुनकर कलश निरूपित करणता की स्मृति होने पर भी उपस्थिति होने पर भी टा+घट एवं न+घटे इस विपरीत आनुपूर्वी से वैसा ऊपर बतलाया जैसा शाब्द बोध नहीं होता है किन्तु चरम वर्णाभिव्यङ्ग्य पक्ष में पूर्व पूर्व वर्णानुभवजनित संस्कार सहकृत अन्तिम वर्ण की अनुभूति के समय क्रम नहीं होने से व्यस्त या विपरीत आनूपूर्वी से भी अन्वय बोध होने लगेगा अतः आनुपूर्वी विशेष से अवच्छिन्न कहा। यह कह नहीं सकते कि किसी किसी को विपरीत या व्यस्त आनुपूर्वी से ही बोध होता है क्योंकि तत्तदानुपूर्वी के स्वरूप में आकांक्षा ज्ञांन को भी कारण माना है। अतः हमारा पक्ष ठीक है। यही व्युत्पत्ति है। घट पदोत्तार टा पद की आकांक्षा है।

केवल व्यक्ति ही याहच्छिक है, ऐसा इतर आचार्यों का मत है।

अखण्डस्फोट कहने वालों का अभिप्राय हैं कि कत्व एवं गत्व आदि के रूप में जिनके अवयव उपलब्ध होते हैं वे ध्वनियां अर्थवाचक नहीं हैं किन्तु उनसे अभिव्यक्त होने वाला अखण्ड स्फोट ही वाचक है। इस तरह इन अवयवों से अभिव्यक्त संज्ञा रूप शब्द विशेष में यह एक पद है, यह एक वाक्य है यह अनुभव ही साक्षी है।

दूसरे मत का आशय है कि जैसे तन्तु समूह के अतिरिक्त पट नहीं है और तत् तत् रूपों में स्थित मृत्तिका के सिवाय घटादि नहीं है उसी तरह वर्ण समुदाय ही पद है।

इत्येके। आनुपूर्व्यवच्छिन्नो वर्णसमुदायः' इत्यपरे। 'केवला व्यक्तिरेव' इतीतरे। तत्राद्यमतद्वये विशेषणज्ञानाद्विशिष्टप्रत्ययः। तृतीयमते च निर्विकल्पकात्मकः प्रत्ययः। तदित्थं चतुष्टयी शब्दानां प्रवृत्तिरिति दर्शनं व्यवस्थितम्। सर्वेषां शब्दानां जातिरेवार्थः। गुणक्रियाशब्दानां गुणक्रियागतायाः, यदृच्छाशब्दानां च बालवृद्धशुकाद्युदीरिततत्तच्छब्दवृत्तेस्तत्तत्समयभिन्नार्थवृत्तेर्वा जातेरेवाभिधेयतासंभवात्। इति जातिशक्तिदर्शनम्।

### मर्मप्रकाशः

केवलेति। दर्शनं मतम्। मतान्तरमाह-सर्वेषामिति। जातिगुणक्रियायदृच्छाशब्दानामित्यर्थः। शब्दवृत्तेः परम्परया तन्निष्ठत्वकल्पने गौरवादाह—तत्तत्समयेति। बालत्वयुवत्ववृद्धत्वरूपे-

### मधुसूदनी

विशेषणज्ञानात् नाम (संज्ञा) रूपोपाधिज्ञानात् विशिष्टस्य नामिनः संज्ञिनः प्रत्ययो ज्ञानम्। निर्विकल्पः इमे वर्णाः इदम्पदमिति विकल्पो भेदो नास्तीति।

### बालक्रीड़ा

तीसरे मत का भाव है कि लोक में 'राजा' शब्द की "पहले र, उसके बाद आ, उसके बाद ज और उसके बाद आने वाला आ" इस आनुपूर्वी का कोई उपयोग नहीं है वहां तो राजा शब्द के श्वेतादिपटावृत परिदृश्यमान पिण्ड रूप अर्थ का उपयोग है। इसी तरह अग्नि स्थल में भी अंगारों का उपयोग है अ, ग, न, इ का कोई उपयोग नहीं है। किन्तु शास्त्र में (राजाहःसखिभ्यष्टच् "अग्नेर्ढक्" यहां) उक्त पिण्डादि का टच् प्रत्यय के लिए और अंगौरों का ढक् प्रत्यय के लिए कोई उपयोग नहीं है किन्तु र, आ, ज, अ इस आनुपूर्वी वाले राज शब्द का तथा अ, ग् न्, इ इस आनुपूर्वी वाले अग्नि शब्द का उपयोग है। इस तरह कहीं पर वर्ण व्यक्ति का उपयोग है और कहीं पर अर्थभूत व्यक्ति का उपयोग है अतः डित्थादि शब्दों के भी डित्थादि शब्द व्यक्ति और उनके प्रतिपाद्य अर्थभूत व्यक्ति दोनों ही संज्ञा है। फलतः व्यक्ति ही यदृच्छा शब्द है उस शब्द का अर्थ भी व्यक्ति ही है इस लिए केवल व्यक्ति ही यादृच्छिक है।

उनमें पहले दो मतों में अखंड स्फोट एवं वर्णसमुदाय को मानने वालों के मत में विशेषण ज्ञान से विशिष्ट याने व्यक्ति का ज्ञान होता है। और तृतीय मत में प्रकारता, विशेष्यता एवं संसर्गता रहित निर्विकल्पक ज्ञान होता है जहां केवल धर्म और धर्मी का भाव होता है।

इस तरह चतुष्टयी शब्दों की प्रवृत्ति है इस दर्शन मत की व्यवस्था हुई।

सभी शब्दों का अभिधेय अर्थ जाति ही है यह मीमांसकों का मत है। गुण एवं क्रिया शब्दों की अभिधेय गुणों एवं क्रियाओं में रहने वाली जाति ही हो सकती है। तथा डित्थादि शब्दों की भी बालक, वृद्ध, शुक आदि से उच्चारित भिन्न-भिन्न शब्दों में रहने वाली अथवा

**अथ केयं लक्षणा, यन्मूलश्चरमं निरूपितो ध्वनिः। उच्यते—शक्य संबन्धो लक्षणा ॥**

## मधुसूदनी

शक्येति। शक्यस्य शक्त्या अभिधया उपस्थितस्य अर्थस्य सम्बन्धः वाच्य-वाचकभावाख्यं सम्बन्धं विहाय सम्बन्धत्वावच्छिन्नः सर्वोऽपि सम्बन्धः लक्षणा। यतो हि वाच्यवाचकभावाख्यस्तु स अभिधा एव अतस्तद्विहापनम्। तदेतदुच्यते=सामीप्यम्, सादृश्यम्, व्यतिरेकलक्षणायां विरोधः, जन्यजनकभावः, स्वस्वामि-भावादयश्च सम्बन्धा लक्षणाशरीराणि यथायोगम्।

ननु सम्बन्धस्य द्विष्ठत्वात् शक्यार्थस्य सम्बन्धः शक्येऽपि, अन्यच्च स व्यञ्जनाऽपि "अत्ता एत्थ निमज्जति"१ "उअ निच्चलणिप्पंदा"२ "विपरीअ रए लच्छी"३ "माए घरोवअरणं"४ इत्यादिषुसर्वत्र क्रमशः प्रथमे शक्यार्थस्य सम्बन्धी एव व्यंग्यार्थः गृहे श्वश्रूरहंच द्वे एव नान्यो जनः। श्वश्रूश्च; यथा जले निमज्जनोत्तरं विश्वस्मिन् किमप्य स्तीति नहि जानाति कश्चित् तथैव; शाय्यायां निमज्जति अर्थात् स्वापोत्तरं किमपि नहि ज्ञातुं समर्था। अतो यथेष्टं मम शय्यायां स्वपिहीति। द्वितीये निष्पन्दरूपस्य शक्यार्थस्य सम्बन्धी व्यंग्यार्थः आश्वस्तत्वादिः। तृतीये हरेर्दक्षिणनयनस्थगनरूप-शक्यार्थस्य सम्बन्धी व्यंग्यार्थः तन्निमीलनेन सूर्यास्तमयत्वादिः। चतुर्थे गृहोपकरणं नास्तीतिशक्यार्थस्य सम्बन्धी व्यंग्यार्थः उपकरणानानेतुं बहिर्गमनमावश्यकमित्यादिः। निरूपितत्वञ्चात्र सम्बन्धस्ततोऽतिव्याप्तिर्लक्षणस्येति चेन्न; तात्पर्यविषयीभूतार्थबाधः शक्यार्थसम्बन्धः, रूढिप्रयोजनयोरन्यतरच्च लक्षणालक्षणम्। तत्र तदर्थबाधः तदर्थ-सम्बन्धो रूढिश्चेति त्रयो वा, तदर्थबाधः, तदर्थसम्बन्धः, प्रयोजनञ्चेति त्रयो वा समुदिता हेतुः नतु हेतवः। अत्र फलोपधायकार्थकं हेतुपदं तस्यार्थैकदेशे फले एकत्ववि-वक्षया हेतुरित्येकवचनम्। ततश्च दण्डचक्रादिन्यायेन तदर्थबाधादिषु परस्परसहकारि-ताया लाभः। हेतुपदस्य एकधर्मावच्छिन्नकारणतापरत्वे एकवचनं, कारणतामात्रपरत्वे बहुवचनमिति विवेकः। ततश्च त्रितयनिष्ठं समुदायत्वं कार्योत्पादप्रयोजकतावच्छेद-कम्। प्रयोजकता त्रितयनिष्ठेत्यर्थः। कारणता प्रतिव्यक्तिनिष्ठा।

इदन्तु बोध्यम्। सम्बन्धो लक्षणा ततश्च सम्बन्धी लक्ष्यते। तद्यथा=गंगायां घोष इत्यत्र गंगाशक्यार्थः प्रवाहस्तस्य सम्बन्धी तीररूपार्थः लक्ष्यः, सम्बन्धः सामीप्यं लक्षणा। यष्टीः प्रवेशय इत्यत्र भोजनसमये भोक्तॄणां पर्यायेण प्रवेशः। तत्र दण्डिसंन्या-

## बालक्रीड़ा

बाल्य, यौवन एवं वार्द्धक अवस्थारूप समय भेद से भिन्न प्रतीत होने वाले व्यक्तियों में रहने वाली जाति ही अभिधेय है। यह जाति में शक्ति है कहने वालों का मत है।

अथ प्रश्न करते हैं कि यह लक्षणा कौन है जिसको मूल आधार बनाकर चरम अन्तिम अविवक्षित वाच्य ध्वनि का निरूपण किया है। उत्तर—कहते हैं कि

शक्य के सम्बन्ध का नाम लक्षणा है। जैसे गंगायाँ घोषः में सामीप्य सम्बन्ध'

**तस्याश्चार्थोपस्थापकत्वे मुख्यार्थतावच्छेदके तात्पर्यविषयान्वयितावच्छेदकताया अभावो न तन्त्रम् ।**

### मर्मप्रकाशः

त्यर्थः । तन्त्रं कारणम् ।

### मधुसूदनी

सिनां भोजनपर्याये त्वरया यष्टीः प्रवेशय इत्युक्तौ यष्टिपदशक्यार्थो यष्टिस्तस्य सम्बन्धी यष्टिधरो लक्ष्यः धार्यधारकभावसम्बन्धो लक्षणा। काकेभ्यो दधि रक्ष्यतामित्यत्र प्रयोज्यत्वं पंचम्यर्थः। उपद्यात्योपघातकभावः ( उपघातकत्वं ) सम्बन्धो लक्षणा उपघातकः काकाकाकसमुदायः सम्बन्धी लक्ष्यः। छत्रिणो यान्तीत्यत्र लक्ष्यः छत्र्यछत्रिसमुदायः एकसार्थवाही छत्रिपदशक्यार्थस्य सम्बन्धी। एकसार्थवाहित्वं सम्बन्धो लक्षणा। एवमेव सर्वत्र यथायोगं बोध्यम्।

तस्याश्चेति। अर्थात् लक्षणा यदा अर्थमुपस्थायपति तदा तस्या लक्षणाया अर्थोपस्थापकत्वे च मुख्यार्थतावच्छेदके यथा गंगायां घोष इत्यत्र गंगात्वे। तात्पर्यविषयीभूतो योऽन्वयः तीरप्रतियोगिकः घोषानुयोगिकः सम्बन्धः आधेयत्वरूपः वृत्तित्वं यावत्। स आधेयत्वरूपः सम्बन्धो यत्र तीरे वर्त्तते तत्तीरमन्वयि प्रकारः। अन्वयिता प्रकारता विशेषणतारूपा सा गंगात्वावच्छिन्ना अतोऽन्वयितावच्छेदकं गंगात्वम्। एवं हि आधेयत्वसम्बन्धावच्छिन्न गंगात्वावच्छिन्न तीरप्रकारकः घोषत्वावच्छिन्नघोषविशेष्यताको बोधः। यतो हि जात्यखण्डोपाध्यतिरिक्त पदार्थानां किञ्चिद्धर्मपुरस्कारेण भाननियमात् पदार्थान्तर ( तीर ) निष्ठ प्रकारतानिरूपित ( घोषनिष्ठ ) विशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति अन्वयितावच्छेदक ( गंगात्व ) रूपेण अन्वयिनः ( तीरस्य ) उपस्थितिः कारणम्, तथा च घोषनिष्ठविशेष्यतानिरूपिता या आधेयत्वसम्बन्धावच्छिन्ना तीरनिष्ठा ( प्रकारतारूपा ) अन्वयिता सा गंगात्वेनैव अवच्छिन्ना, अतो गंगात्वे तात्पर्यविषयान्वयितावच्छेकता एव वर्त्तते तस्या अभावस्तत्र नास्ति ततो न तदभावः लक्षणाद्वारकार्थोपस्थापने तन्त्रं प्रधानं कारणम्।

### बालक्रीड़ा

"मुखं चन्द्रः' में सादृश्य सम्बन्ध, कृतं त्वयोन्नतं कृत्यम्" उपकृतं वहु तत्र किमुच्यते" में अपकारी के प्रति इस प्रकारकी उक्ति में व्यतिरेक लक्षणा स्थल में विरोध, "आयुर्घृतम्" में कार्यकारण भाव सम्बन्ध लक्षणा है। इस के अर्थोपस्थापकत्व में (इसके द्वारा अर्थ के उपस्थापन करने में) मुख्यार्थतावच्छेदक (गंगापद का मुख्य अर्थ है गंगा, उस अर्थ में रही मुख्यार्थता उसके अवच्छेदक) गंगात्व में तात्पर्यविषयान्वयिताऽवच्छेदकता का अभाव (नही रहना) तंत्र कारण नही है। तात्पर्य का विषय (वक्ता की इच्छा का स्थल) जो तीरप्रतियोगिक घोषानुयोगिक अन्वय सम्बन्ध (वृत्तित्वरूप अर्थात् गंगा में घोष है इससे वक्ता कहना चाहता है कि घोष तीरवृत्ति है ऐसा अन्वय तीर में रहा) उसका अन्वयी तीर हुआ। उसमें

शक्यतावच्छेदकरूपेण लक्ष्यभानस्य स्वीकारात्। किं तु तात्पर्य-विषयान्वये मुख्यार्थतावच्छेदकरूपेण मुख्यार्थप्रतियोगिकताया अभावो रूढिप्रयोजनयोरन्यतरच्च तन्त्रम्।

मुख्यार्थान्वयानुपपत्तेः तन्त्रत्वे तु 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र

## मधुसूदनी

कुत एतदित्यत आह=शक्यतेति। शक्यतावच्छेदकरूपेण (गंगात्वेन) लक्ष्य (तीर) भानस्य स्वीकारात्। ननु तदभावो न तन्त्रं तर्हि किं तंत्रमित्याह=किन्तु तात्पर्येति। तात्पर्यविषयीभूतोऽन्वयः गंगात्वेन तीरप्रतियोगिकः घोषानुयोगिंकस्त-स्मिन् गंगात्वेन मुख्यार्थतावच्छेदकरूपेण मुख्यार्थप्रतियोगिकताया गंगारूपार्थ-प्रतियोगिकतायाः अभावः तन्त्रमित्यन्वयः। तथा च फलितार्थः=मुख्यार्थतावच्छेद-कावच्छिन्नमुख्यार्थनिष्ठप्रतियोगितानिरूपकत्वाभावस्तन्त्रम्। तदवच्छिन्नान्तविशे-षणादाने काकेभ्यो दधि रक्ष्यतामित्यत्र लक्षणा न स्यात्। दध्युपघातकत्वेन रूपेण काकप्रतियोगिकत्वस्य तात्पर्यविषयान्वये सद्भावात्।

## बालक्रीड़ा

रही अन्वयिता। इस अन्वयिता का अवच्छेदक हुआ तीरत्व, अतः तीरत्व में अवच्छेदकता रही गंगात्व में उसका अभाव है। यह अभाव कारण नहीं है क्योंकि शक्यतावच्छेदक (मुख्यार्थ-तावच्छेदक) गंगात्व के द्वारा लक्ष्य तीर के भान को स्वीकार किया है। अर्थात् लाक्षणिक शब्द से होने वाले बोध में शक्यताबच्छेबक प्रकारक लक्ष्य विशेष्यक उपस्थिति कारण है।

इस पर प्रश्न होता है फिर किस अभाव को तंत्र मानते हैं। उत्तर देते हैं कि गंगात्व में जो उक्त अवच्छेदकता का अभाव है उसको तंत्र नहीं माना है किन्तु तात्पर्य के विषय अन्वय में; (मुख्यार्थतावच्छेदक गंगात्व रूप से उपस्थित गंगारूप) मुख्यार्थ का अभाव तंत्र है। अर्थात् तीरप्रतियोगिक घोषानुयोगिक अन्वय इष्ट है जिसमें गंगात्वेन तीरकी उपस्थिति होती है। किन्तु गंगाप्रतियोगिक घोषानुयोगिक अन्वय तात्पर्य का विषय नहीं है। उसीको लिखते हैं कि (मुख्यार्थप्रतियोगिकताया अभावः) मुख्यार्थ का अभाव लेते हैं अतः मुख्यार्थ प्रतियोगी हुआ। वह मुख्यार्थ है प्रतियोगी जिसका, उसका भाव मुख्यार्थप्रतियोगि-कता है।

एक कारण को बतलाते समय दूसरे कारणों को बतलाते हैं कि रूढ़ि और प्रयोजन इन दोनों में से अन्यतर (अर्थात् एक) कारण है।

इसका स्पष्टीकरण हुआ कि मुख्यार्थतावच्छेदक से अवच्छिन्न विशिष्ट जो मुख्यार्थ, उसमें रहनेवाली जो अभावीय प्रतियोगिता, उस प्रतियोगिता का निरूपक अभाव तंत्र है। इसमें यदि अवच्छिन्नान्त विशेषण नहीं देते हैं तो "कौओं से दही की रक्षा करो' इस वाक्य के काकपद में लक्षणा नहीं होगी। क्योंकि (कौओं से दही की इस में कौओं से इस पंचमी का प्रयोज्यत्व अर्थ है इसलिए) तात्पर्य के विषय अन्वय काकप्रयोज्य दधिकर्मक रक्षा में

लक्षणोत्थानं न स्यात् । 'गङ्गायां घोषः' इत्यत्र सामीप्यम्, 'मुखचन्द्रः' इत्यादौ सादृश्यम्, व्यतिरेकलक्षणायां विरोधः, 'आयुर्घृतम्' इत्यादौ कारणत्वादयश्च संबन्धा यथायोगं लक्षणाशरीराणि ।

इयं तावद्द्विविधा, निरूढा प्रयोजनवती च । तत्र उभे अपि द्विविधे,

**मर्मप्रकाशः**

व्यतिरेकलक्षणेति । 'उपकृतं बहु नाम—' इत्यादौ । यथायोगं यथासंभवम् । लक्षणाशरीराणीति-लक्षणाज्ञानकार्यतावच्छेदकं च तादृशशक्यसंबन्धप्रकारकलक्ष्यविशेष्यकशाब्दबुद्धि-

**मधुसूदनी**

अत्रेदमालोच्यते—शक्यतावच्छेदकरूपेण लक्ष्यभानस्यं स्वीकारात् शक्यतावच्छेदकरूपेण शक्त्यार्थप्रतियोगिकताया अभावस्तन्त्रमिति पूर्वं प्रतिपादिततया प्रकृते काकेभ्यो दधि रक्ष्यतामित्यत्र काकत्वेन रूपेण दध्युपघातकेषु प्रविष्टकाकप्रतियोगिकत्वस्य तत्र सत्त्वे भक्षितेऽपि लशुने न शान्तो व्याधिन्यायप्रसंगः ।

**बालक्रीड़ा**

दध्युपघातकत्व रूप से काकप्रतियोगिकत्व का भी सद्भाव है अभाव नहीं है आपको अपेक्षित है मुख्यार्थ (काक) प्रतियोगिता का अभाव अतः उक्त विशेषण सफल है ।

इसी को पण्डितराज ने इन शब्दों में लिखा है कि मुख्यार्थप्रतियोगिक अन्वय के अभाव अर्थात् अनुपपत्ति को तंत्र मानते है तो व कौओं से दही की रक्षा करो' इसमें लक्षणा का उत्थान नहीं होगा ।

**आलोचन** । पहले आपने शक्यतावच्छेदक रूप से लक्ष्यार्थ भान को स्वीकार किया है अतः प्रकृत (काकेभ्यो दधि रक्ष्यताम्) में काकत्वरूप से दध्युपघातकत्वरूप लक्ष्यार्थ के भान को स्वीकार करना है तव तो काकत्व रूप से दधिके उपघातकों में प्रविष्ट जो काक है तादृश काकप्रतियोगिकत्व का तात्पर्य विषयान्वय में सद्भाव ही है अभाव नहीं है अतः "भक्षितेऽपि लशुने न शान्तोव्याधिः" इस न्याय का प्रसंग यह हो गया अर्थात् उक्त अवच्छिन्नान्त विशेषण के देने पर भी दोष रह गया । यदि आप कहें कि यहां मुख्यार्थप्रतियोगिकत्व पद से मुख्यार्थमात्रप्रतियोगिकत्व विवक्षित है किन्तु प्रकृत में काकेतर विडालादि भी दधि के उपघातक है न कि केवल काक हैं, अतः उक्त दोष नहीं है । तव भी ठीक नहीं है—क्योंकि इस तरह की विवक्षा में अर्थात् तात्पर्य विषयान्वय में केवल मुख्यार्थप्रतियोगिकत्व का अभाव लक्षणा के द्वारा अर्थोपस्थापन में तंत्र है ऐसा मानने में मुख्यार्थतावच्छेदक (काकत्व) रूपेण इस पद का फल क्या होगा । उक्त विशेषण के नहीं देने पर भी काकेभ्यो दधि रक्ष्यताम् में कोई दोष नहीं होगा । क्योंकि प्रकृत में उपादान लक्षणा है अतः काक पद का काकाकाकसमुदाय दध्युपघातक लक्ष्य है ।

यह लक्षणा दो प्रकार की है एक निरूढा दूसरी प्रयोजनवती । उनमें दोनो ही दो प्रकार की है गौणी और शुद्धा । उनमें पहली गौणी, सारोपा और साध्यवसाना इस तरह

गौणी शुद्धा च। तत्राद्या सारोपा साध्यवसाना चेति द्विविधा। अन्त्या चतुर्विधा—जहत्स्वार्था, अजहत्स्वार्था, सारोपा, साध्यवसाना चेति प्रयोजनवती षड्विधा संपद्यते।

तत्र निरूढलक्षणाया अनुकूलप्रतिकूलानुलोमप्रतिलोमलावण्यादय नीलादयश्च उदाहरणानि। 'धर्मस्यायमनुकूलः' इत्यादौ मुख्यार्थस्य कूलानुगतत्वादेर्बाधात् अनादिप्रयोगप्रवाहवशादेकवस्तुप्रवणत्वात्मना कूलानुगतादिरूपशक्यस्य सादृश्येन संबन्धेनानुकूलादिशब्दैरनुगुणादयो लक्ष्यन्ते। एवं नीलादिपदानां लाघवाद् गुणगतजातेरेव शक्यतावच्छेदकतया गुण-

### मर्मप्रकाशः

त्वमिति प्राचीनालंकारिकमतम्। तदनन्तरं व्यञ्जनया तादृशशक्यतावच्छेदकप्रकारकलक्ष्यबोध इति च। एकप्रवणत्वं तदेकसक्तत्वम्।

### मधुसूदनी

अत्रेदं समाधानम्—मुख्यार्थप्रतियोगिकत्वपदेन मुख्यार्थमात्रप्रतियोगिकत्वविवक्षायां नोक्तः दोषः; काकेतरस्यापि दध्युपघातकत्वात्। एवमपि मुख्यार्थतावच्छेदकरूपेणेति पदस्य फलं मृग्यं काकेभ्यो दधिरक्ष्यतामित्यत्र दोषानवतारात्।

गौणी सादृश्यसम्बन्धेन जायमाना। शुद्धा तदतिरिक्तसम्बधेन जायमाना। अजहत्स्वार्था उपादानलक्षणा ( उपादानेन लक्षणा ) स्वार्थसंवलितपरार्थाभिधायिकेत्यर्थः। जहत्स्वार्था लक्षणलक्षणा (लक्षणेन लक्षणेत्यर्थः)। स्वार्थपरित्यागेनेतरार्थाभिधायिकेति यावत्। तृतीया जहदजहल्लक्षणा यत्रानयोर्द्वयोः समावेशः। विशिष्टार्थबोधक शब्दस्य पदार्थैकदेशे लक्षणेयं प्रवर्त्तते। यथा ग्रामैकदेशे दग्धेऽपि ग्रामो दग्ध इति पटैकदेशे दग्धेऽपि पटो दग्ध इति च व्यवहारस्तथा पदार्थैकदेशे लक्षणा। यथा "सोऽयं देवदत्तः" परोक्षत्वापरोक्षत्वयोरत्यागः देवदत्तयोरभेदः। "तत्त्वमसि" इत्यत्र सर्वज्ञत्वाल्पज्ञत्वयोर्मध्ये सर्वाल्पत्वयोस्त्यागात् ज्ञयोः परिग्रहात् शुद्धचैतन्ययोर भेदान्वयः।

### बालक्रीड़ा

दो प्रकार की है। शुद्धा चार प्रकार की है १ जहत्स्वार्था २ अजहत्स्थार्थां ३ सारोपा ४ साध्यवसाना। इस तरह प्रयोजनवती लक्षणा ६ प्रकार की है।

उसमें निरूढा लक्षणा के अनुकूल, प्रतिकूल, अनुलोम, प्रतिलोम, लावण्य और नीलादि उदाहरण हैं। "यह धर्म के अनुकूल है" इत्यादि स्थलों म कूलानुगतत्वरूप मुख्यार्थ के बाध होने पर (क्योंकि कूल याने तीर जलाशय में होता है धर्म में नहीं होता है अतः बाध होगा ही) अनादि प्रयोग प्रवाह याने निरूढि के वश से कूलानुगतत्वरूप शक्य का एक वस्तु में प्रवणत्वरूप सादृश्य सम्बन्ध से अनुकूलादि शब्दों से अनुगुणादि अर्थ लक्षणा से जाने जाते हैं।

इसी तरह नीलादिपदों की नीलादि गुणगत जाति को ही यदि लाघव के अनुरोध से

द्रव्ययोः 'नीलो घटः' इत्यादौ सामानाधिकरण्येनान्वयस्यानुपपत्तेः समवायात्मना गुणरूपशक्यस्य संबन्धेन नीलादिशब्दैर्गुणिनो लक्ष्यन्ते। तत्राद्यवर्गे सादृश्यसंबन्धेन द्वितीयवर्गे च तदितरसंबन्धेन लक्षणायाः प्रवृत्तेर्निरूढायामपि गौणीत्वशुद्धत्वाभ्यां द्वैविध्यमामनन्ति। किन्तु सारोपादयो भेदा अत्र न भवन्ति।

विषयविषयिणोः पृथङ्निर्दिष्टयोरभेद आरोपः। अपृथङ्निर्दिष्टे विषये विषय्यभेदोऽध्यवसानम्। तत्राद्येन सहिता सारोपा। द्वितीयेन तु साध्यवसाना। उदहरणानि च 'मुखं चन्द्रः' इत्यादीनि गौण्याः सारोपायाः। 'पुरेऽस्मिन्सौधशिखरे चन्द्रराजी विराजते' इत्यादीनि च तस्याः साध्यवसानायाः। अद्यायां विषयिप्रतिपादकैश्चन्द्रादिशब्दैर्लक्षणयोपस्थापितानां चंद्रा-

मर्मप्रकाशः

विषयविषयिणोरिति। उपमेयोपमानयोरित्यर्थः। आद्येनारोपेण। द्वितीयेन त्विति। अध्यवसानेनेत्यर्थः सहितेत्यस्यानुषङ्गः। तस्या इति। गौण्या इत्यर्थः।

मधुसूदनी

आद्यवर्गे अनुलोमप्रतिलोमादौ। द्वितीयवर्गे नीलादौ च। आद्यायां गौणसारोपायाम्।

ननु चन्द्रपदस्य चन्द्रसदृशे लक्षणायां सादृश्यविशिष्टाऽर्थग्रहे गौरवं स्यात्, सादृश्यं तद्विशिष्टश्च इति द्वयोर्ग्रहणात्। ततश्च गौरवपरिजिहीर्षया

बालक्रीड़ा

शक्यतावच्छेदक मानेंगे तब नीलो घट इत्यादि स्थलों में गुण एवं द्रव्य का सामानाधिकरण्य से अन्वय अनुपपन्न है अतः गुणरूप शक्य का द्रव्य के साथ समवाय जो सम्बन्ध है उसके वदौलत नीलादि गुणों से गुणी लक्षणा से जाने जाते हैं। उनमें भी आद्य वर्ग अनुकूल प्रतिकूलादि में सादृश्य सम्बन्ध से, द्वितीयवर्ग नीलादि में सादृश्य से इतर समवाय सम्बन्ध से लक्षणा की प्रवृत्ति होती है अतः निरूढा लक्षणा के भी गौणी एवं शुद्धा दो भेद कहते हैं किन्तु सारोपादि भेद निरूढा में नहीं होते हैं।

पृथक् २ स्व स्व वाचक शब्दों से कहे गये विषय एवं विषयी में अभेद का नाम आरोप है। पृथक् स्ववाचक शब्द से नहीं कहे हुए विषय में विषयी के अभेद का नाम साध्यवसाना है। उसमें आद्य आरोप के सहित जो हो वह सारोपा है और द्वितीय अध्यवसान के सहित जो हो वह साध्यवसाना है। "मुखं चन्द्र' इत्यादि गौणी सारोपा के उदाहरण हैं। इस शहर में महलों की शिखर पर चन्द्रश्रेणी सुशोभित हो रही हैं इत्यादि गौणी साध्यवसाना के उदाहरण हैं।

यहां आद्य गौणी सारोपा में विषयी वाचक चन्द्रादि पदों से लक्षणा के द्वारा चन्द्रादि

दिसदृशानामभेदसंसर्गेण मुखादिशब्दोपस्थापितैर्मुखत्वादिविशिष्टैर्मुखादिभिरन्वयः। सादृश्यरूपधर्मलक्षणायां तु तेन सह मुखादीनामन्वयो न स्यात्, नामार्थयोरभेदातिरिक्तसंसर्गेण विशेष्यविशेषणभावस्यानुपपत्तेः।

नन्वेवं सति बोधावैलक्षण्याच्चन्द्रसदृशं मुखमित्युपमातो मुखं चन्द्र इति रूपकस्य कथं भेदः। न च-सदृशविशेषणाविशेषणचन्द्रसम्बन्धासंबन्धाभ्या-

## मर्मप्रकाशः

ननु गौरवात्सदृशरूपधर्मिलक्षणा न युक्ता अत आह—सादृश्येति। तेन सादृश्येन। न स्यात्कथमपि न स्यात्। अतिरिक्तेति। अभेदेन तु बोधान्नेति भावः। एवं सति धर्मिलक्षणयांऽभेदेनान्वयाङ्गीकारे सति। धर्म लक्षणया व्युत्पत्तिसंकोचमङ्गीकृत्य भेदान्वये तु स्याद्वैलक्षण्यमिति भावः। बोधावैलेति। उपमायामप्यभेदेनैव बोधादिति भावः। सदृशविशेषणचन्द्रसंबन्धासंबन्धाभ्यामिति। सदृशे विशेषणभूतो यश्चन्द्रस्तत्संबन्धतदसंबन्धाभ्यां संसर्गतया भासमानाभ्यामित्यर्थः। बोधवैलक्षण्यमिति शेषः।

## मधुसूदनी

सादृश्य एव चन्द्रपदस्य लक्षणा अस्तु इत्यत आह—"सादृश्यरूपधर्मलक्षणायां तु" इति। तेन चन्द्रेण सह अन्वयो न स्यात् मुखचन्द्रयोरभेदान्वयो न स्यादित्यर्थः। भेदान्वये च विशेषणविशेष्यभावोऽनुपपन्नः। शंकते—विशेषण-विशेष्यभावोपपादनार्थं सादृश्यरूपधर्मलक्षणां विहाय सादृश्यविशिष्टे धर्मिणि लक्षणां स्वीकृत्य अभेदान्वयांगीकारे सति। सदृशेति। चन्दपदस्य चन्द्रसदृशे लक्षणायां चन्द्रसदृशस्य चद्ररूपैकपदप्रतिपाद्यतया एकपदार्थत्वात् चन्द्रेत्यत्र सदृशेत्यत्र मिथः कोऽपि सम्बन्धो न

## बालक्रीड़ा

सदृश की उपस्थिति होती है उन चन्द्रादिसदृश अर्थों का मुखादि शब्दों से उपस्थापित मुखत्वादि विशिष्ट मुखादि के साथ अभेद सम्बन्ध से अन्वय होता है। यदि यहां चन्द्रादि पद की चन्द्रादि सादृश्य रूप धर्म में लक्षणा करते है तो उस सादृश्य रूप धर्म के साथ मुखादि का अन्वय नहीं होगा क्योंकि नामार्थों का अभेदातिरिक्त सम्बन्ध से विशेष्य विशेषण भाव अनुपपन्न है।

इस पर प्रश्न होता है कि इस प्रकार चन्द्र पद की चन्द्र सदृश में लक्षणा करने पर "मुखं चन्द्रः" इस रूपक में जो "चन्द्रसदृशाभिन्नं मुखम्" यह अभेद बोध होता है। वही अभेद बोध "चन्द्रसदृशं मुखम्" इस आर्थी उपमा में भी है तब बोधों में वैलक्षण्य माने भेद नहीं होगा। फलतः उपमा से रूपक की भिन्नता का आधार क्या है। क्योंकि रूपक में जैसे चन्द्रसदृशाभिन्न मुख है यह बोध होता है उसी तरह उपमा में भी चन्द्रसदृशाभिन्न मुख है इस तरह अभेद ही का ज्ञान होगा।

अगर कहें कि सदृश में विशेषण और अविशेषण जो चन्द्र है उसके सम्बन्ध एवं असम्बन्ध का आश्रयण ही बोध में वैलक्षण्य का कारण हो जायगा। (यहां "संबन्धासम्ब-

### मर्मप्रकाशः

मुखं चन्द्र इत्यत्र चन्द्रपदस्य तत्सदृशे लाक्षणिकत्वेन तस्यैकपदार्थत्वात्संसर्गस्यापि लक्ष्यघटकतया चन्द्रसदृशयोः संबन्धस्य संसर्गविधयाऽभानम्। चन्द्रसदृशमित्यत्र तु तयोर्भिन्नपदार्थत्वेन संसर्गस्य

### मधुसूदनी

भासते सम्बन्धस्य द्विष्ठत्वात्। इति रूपके सम्बन्धस्य भानं नास्ति। चन्द्रसदृशं मुखमित्यत्र तु चन्द्रपदार्थ एकः, सदृशपदार्थो द्वितीयः इति द्वौ पदार्थौ। तयोः सम्बन्ध संसर्गमर्यादया आकांक्षादिना भासते। इत्युपमायां सम्बन्धस्य भानं भवति। चन्द्रसदृशं मुखमित्यत्र सदृशे विशेणीभूतस्य चन्द्रस्य सम्बन्धः। मुखं चन्द्र इत्यत्र सदृशे अविशेषणीभूतस्य चन्द्रस्य असम्बन्धः ताभ्याम्। अत्र सदृशविशेषणाविशेषणचन्द्रसम्बन्धासम्बन्धाभ्यामिति पाठः। मुद्रितस्त्वशुद्धः। मुखं चन्द्र इवेत्यत्र श्रौत्यामुपमायां चन्द्रसदृशं मुखमित्येतद्गतादार्थ्युपमातः। पृथगिति। उभयत्र इदानीमेक उपमालंकारः। बोधवैलक्षण्यमात्रेण पृथगलंकारतायाः स्वीकृतौ तु शाब्द्युपमातः पृथगार्थः कश्चिदलंकारः स्यादित्यर्थः।

### बालक्रीड़ा

न्धाभ्याम्" में ल्यप् लोपा पंचमी है अतः सम्बन्धासम्बन्धौ आश्रित्य बोधवैलक्षण्यम् यह अन्वय यहाँ विवक्षित है) और बोध वैलक्षण्य से अलंकार वैलक्षण्य सुतरां सिद्ध है।

यहां का भाव यह है कि "मुखं चन्द्रः" यहां पर रूपक में चन्द्र पद चन्द्रसदृश में लाक्षणिक है अतः उस लक्ष्य "चन्द्रसदृश" में चन्द्र और सदृश दोनों चन्द्र रूप एक पद से प्रतिपाद्य होने से एक पदार्थ हो गये।

इसलिए चन्द्र और सदृश के सम्बन्ध का भान संसर्ग मर्यादा माने आकांक्षादि से नहीं हुआ। क्योंकि नियम है कि भिन्न पदों से उपस्थाप्य अर्थों के ही सम्बन्ध का भान संसर्ग मर्यादा से होतां है। और चन्द्रसदृशं मुखम् इस उपमा में तो वे चन्द्र और सदृश दो भिन्न पदार्थ हैं अतः इनके संसर्ग का भान संसर्ग मर्यादा से होना नियम से प्राप्त है। अतः संसर्ग मर्यादा से संसर्ग का बोध होना और न होना ही रूपक और उपमा के भेद का आधार है। यह भी ठीक नहीं है क्योंकि केवल बोध के वैलक्षण्य से पृथग् अलंकार की सिद्धि नहीं हो सकती। अन्यथा यदि केवल बोध के वैलक्षण्य से पृथक् अलंकारों की सिद्धि को स्वीकार करेंगे तो – चन्द्र सदृशं मुखं इस आर्थी उपमा अलंकार की अपेक्षा मुखं चन्द्र इव इस शाब्दी उपमा में पृथक् अलंकार मानने की आपत्ति लग जायगी। क्योंकि इवादि निपातों को द्योतक माना गया है। अतः मुखं चन्द्र इव में चन्द्र पद का ही चन्द्रसदृश अर्थ है इव तो केवल दीपक का काम करता है। दीपक जैसे पूर्व सिद्ध ही वस्तु का प्रकाशक होता है नूतन निर्मापक नहीं है वही स्वरूप इव का है। अतः रूपक में जैसे लक्ष्य चन्द्रसदृश के एक पदार्थ होने से चन्द्र और सदृश के संसर्ग का भान संसर्ग मर्यादा से नहीं होता है अर्थात् आकांक्षादि भास्य नहीं है वही स्थिति मुखं चन्द्र इव में भी है। यदि कहें कि इवादि की द्योतकेता का पक्ष नैयायिक सम्मत है। अलंकारिकों के यहां तो इवादि को वाचक माना है। अतएव इवादि के अभाव में वाचक लुप्ता उपमा कही

मिति वाच्यम्। बोध्यस्य वैलक्षण्यमात्रेण पृथगलंकारताया असिद्धेः। अन्यथा मुखं चन्द्र इवेत्यत्र चन्द्रसदृशमित्येतद्गतात् पृथगलंकारतापत्तिरिति चेत्।

अत्र केचित्—"रूपकस्योपमातः स्वरूपसंवेदनांशमादायावैलक्षण्येऽपि

### मर्मप्रकाशः

तत्त्वेन भानमावश्यकमेवेति भावः। अन्यथा बोधवैलक्षण्यमात्रेणालंकारभेदाङ्गीकारे। मुखं चन्द्र इवेत्यत्रेति। इत्यस्यामुपमायामित्यर्थः। इवस्य द्योतकत्वेन रूपकरीत्या संसर्गस्य तत्त्वेनाभानात्। सादृश्यवाचकत्वेऽपि तेन सह प्रतियोगित्वं संबन्धः। चन्द्रसदृशमित्यत्र तु तत्प्रतियोगिकाश्रये लाक्षणिकतया अभेदस्य संबन्धत्वमिति स्पष्टं वैलक्षण्यम्। सदृशवाचकत्वेऽपि स्वप्रतियोगिकाश्रयत्वम् चन्द्र इवेत्यत्र संबन्धः, तत्र तु स एवेति स्पष्टो भेद इति भावः। एतद्गतादिति। उपमालंकारादिति शेषः।

### मधुसूदनी

अत्र केचिदिति। रूपके अंशद्वयम्। एकः सरूपसंवेदनांशः। अपरस्ताद्रूप्यसंवेदनांशः। उपमायां स्वरूपसंवेदनांश एक एव, लक्षणाया अभावादपरोंऽशो नास्ति। एवं स्वरूपसंवेदनमुभयत्र अविलक्षणम्।

### बालक्रीड़ा

जाती है। अस्तु ! इव सादृश्य का वाचक है इस अवस्था में "मुखं चन्द्र इव" यहाँ इवार्थ सादृश्य का आश्रयता सम्बन्ध से मुख में अन्वय होगा अतः चन्द्र प्रतियोगिक सादृश्याश्रय मुख है ऐसा बोध है। और "चन्द्रसदृशं मुखम्" यहाँ समास स्थल में लक्षणा के द्वारा चन्द्र प्रतियोगिक सादृश्याश्रय की उपस्थिति होती है उसके बाद चन्द्रसदृश का मुख में अभेद सम्बन्ध से अन्वय होगा। अतः चन्द्रसदृशाभिन्न मुख है यह स्पष्ट भेद है। किन्तु उपर्युक्त दो वाक्यों में सिद्धान्ततः एक ही उपमा अलंकार माना है। यदि बोधों की विलक्षणता के आधार पर अलंकारों के पार्थक्य को निर्भर करेंगे तो प्रकृत वाक्यों में दो पृथक् अलंकार मानने पड़ेंगे। और यदि इव को सदृश वाचक भी मानलें तब भी "चन्द्र इव" यहाँ पर चन्द्रप्रतियोगिक सादृश्याश्रयत्व सम्बन्ध मानना पड़ेगा जो सम्बन्ध तादृश सादृश्य के आश्रय चन्द्रसदृश में रहेगा और चन्द्र सदृश में तो वह अभेद ही सम्बन्ध रहेगा इससे भी दोनों वाक्यों का भेद स्पष्ट है।

इस विषय पर पण्डितराज ने ५ मतों का उपन्यास किया है जिसमें पहला मत है "केचित्"

इसका सारांश है कि उपमा में लक्षणा की उपासना नहीं करते हैं और रूपक में प्रयोजनवती गौणी सारोपा लक्षणा का आश्रय लेते हैं अतः दोनों के स्वरूप ज्ञान में एकता होने पर प्रयोजनरूप फल के वैलक्षण्य से दोनों में भेद है।

द्वितीय मत है "अन्ये तु" इसका तत्त्व यह है कि उपमा एवं रूपक दोनों में स्वरूपज्ञान एवं फलज्ञान भिन्न-भिन्न है अतः सुतरां दोनों में भेद सिद्ध है।

लक्षणाफलीभूतद्रूताप्यसंवेदनमादाय वैलक्षण्यं निर्बाधम् । ताद्रूप्यसंवेदनं च विषये मुखादौ विषयितावच्छेदकस्य चन्द्रत्वादेः संप्रत्ययः । ननु लक्षणा-प्रयोज्यादपि तत्सदृशबोधात् कथं नाम ताद्रूप्यप्रत्ययः स्यात् । उपायस्याभा-

**मर्मप्रकाशः**

ताद्रूप्यसंवेदनमिति । ताद्रूप्यमात्रसंवेदनमित्यर्थः । एतेन भेदाभेदोभयप्रधानोपमा असाधारणरूपेणोपमानोपमेययोर्भेदः, साधारणरूपेण त्वभेद इत्यलंकारसर्वस्वकृद्ग्रन्थविरोध इत्यपास्तम् । उपायस्येति । शक्तिलक्षणान्यतरस्येत्यर्थः ।

**मधुसूदनी**

कथं नामेति । यर्हि चन्द्रसदृशबोधात् चन्द्रसदृशत्वप्रत्ययो भवितुमर्हस्तर्हि कथं नाम चन्द्रत्व (ताद्रूप्य) प्रत्ययः; ननु कुतो न तथाप्रत्यय इत्याह—उपेति । यद्यपि

**बालक्रीड़ा**

तृतीय मत है "अपरे तु" इनका कहना है कि उपमा एवं रूपक का मूल सादृश्य है । किन्तु उपमा में वह भेदकरम्बित है और रूपक में वह भेदाकरम्बित है । अतः कारणभेद नियत कार्यभेद स्वतः प्राप्त है ।

चतुर्थ मत है "नव्यास्तु" । यह मत आचार्य अप्पय्य दीक्षित जी का है इन्होंने चित्र-मीमांसा में लिखा है कि (रूपके विषयविषयिणोः स्वस्ववाचकाभिहितयोरभेदप्रतिपत्तिः संस-र्गमर्यादया एव संभवति इति किमर्थं तत्र लक्षणा, अशक्या च तत्र लक्षणाभ्युपगन्तुम्) रूपक में अपने २ वाचकों से अभिहित विषय एवं विषयी में अभेद का भान संसर्गमर्यादा आकांक्षादि से ही हो सकता है इसलिए रूपक में लक्षणा क्यों मानी जाय । इसके सिवाय रूपक में लक्षणा को मानना अशक्य भी है ।

इस मत के उपसंहार में इतना तो लिखा कि प्राचीनसम्मत सदृश लक्षणा का फल ताद्रूप्य प्रत्यय है यह हृदयंगम नहीं है किन्तु संसर्ग विषयक बोध वैलक्षण्य के सहारे अलंकारों की पृथक्ता स्वीकृत नहीं हो सकती है इस आपत्ति के निवारण के विषय में मौनावलम्बन ही कर लिया है ।

पंचमत है "अत्रेदं विचार्यते" । यह पण्डितराज का अपना विवेचन है । इसमें आप अप्पय्य दीक्षित के उलझन में फँस गये हैं । रूपक में लक्षणा न मानने से प्राचीनों के माने हुए सिद्धान्तों का आकुली भाव हो जायगा । बस इतना लिखकर प्रथम प्रश्न के उत्तर की तरफ कुछ भी ध्यान नहीं दिया ।

यहाँ कोई आचार्य कहते हैं कि उपमा से रूपक का स्वरूप संवेदन रूप अंश को लेकर वैलक्षण्य न भी हो किन्तु लक्षणा के फली भूत ताद्रूप्यसंवेदन अंश को लेकर तो वैलक्षण्य निर्बाध है । ताद्रूप्यसंवेदन पद का अर्थ है कि विषय मुखादि में विषयितावच्छेदक चन्द्र-त्वादिका संप्रत्यय (ज्ञान) ।

अब प्रश्न होता है कि "मुखं चन्द्रः" में चन्द्र की चन्द्रसदृश में लक्षणा करते हैं । किन्तु इस लक्षणा प्रयोज्य चन्द्रसदृश के ज्ञान से ताद्रूप्य का प्रत्यय कैसे होगा । क्योंकि

वाद्भेदज्ञानेन प्रतिबन्धाच्च । अन्यथा चन्द्रसदृशं मुखमित्यत्रापि ताद्रूप्यप्रत्यय. प्रसङ्ग इति चेन् मैवम् । श्लेषस्थल इवात्राप्येकशब्दोपादानोत्थस्य व्यञ्जनस्योपायत्वाद्वैयञ्जनिकबोधस्य बाधबुध्द्यप्रतिबध्यत्वाच्च ।

अथ चन्द्रतत्सदृशयोरेकपदोपात्तत्वाच्चन्द्रसदृशे चन्द्रताद्रूप्यप्रत्ययो यथा-

### मर्मप्रकाशः

तत्रापि लक्षणास्तु अत आह—भेदेति । अन्यथा तस्याप्रतिबन्धकत्वे । इत्यत्रापीति । उपमायामपि । ताद्रूप्येति । ताद्रूप्यमात्रेत्यर्थः । एवमुपायमुक्त्वा द्वितीयहेतुं खण्डयति—वैयञ्जनीति । एतेन मुखत्वविशिष्टमुखव्यवच्छेदः । तदेवाह—न त्विति । रूपान्तरेण मुखोपस्थितेः

### मधुसूदनी

नामार्थयोरभेदान्वय इति व्युत्पत्तिरेवोपायः । तथापि मुखं यावच्चन्द्रो न स्यात्तावत्तदभेदो न स्यात् । चन्द्रभवनार्थं च चन्द्रत्वप्रत्यय आवश्यक इति हृदयम् । अभेदो न स्यादित्यत्र हेत्वन्तरमाह—भेदेति । भेदो विरोधः । यावच्चन्द्रत्वविरोधिनो मुखत्वस्य प्रत्ययस्तावच्चन्द्रत्वप्रत्ययो न स्यात् । भेदस्य चन्द्रत्वविरोधिनो मुखत्वस्य ज्ञानेन । अन्यथा भेदज्ञानस्य प्रतिबन्धकत्वास्वीकारे । इत्यत्रापि उपमायामपि ।

एकेति । एकः शब्दः चन्द्रशब्दस्तेन चन्द्रत्वस्य चन्द्रसदृशस्य च उपादानमुपस्थितिः । तेन उत्थस्य उद्गतस्य । बाधबुद्धिः "मुखत्वविशिष्टं मुखं चन्द्रो नास्ति

### बालक्रीड़ा

ताद्रूप्य के जानने के लिए कोई उपाय नहीं है । उपाय के सद्भाव के विषय में क्या कहा जाय प्रत्युत मुखत्व एवं चन्द्रत्व रूप परस्पर विरोधी धर्मों के ज्ञान से उस ताद्रूप्य का प्रतिबन्ध अवरोध भी हो जाता है । अन्यथा यदि भेदज्ञान को प्रतिबन्धक नहीं मानेंगे तब "चन्द्रसदृशं मुखम्" इस उपमा में भी ताद्रूप्य प्रत्यय का प्रसंग उपस्थित हो जायगा ।

उत्तर । नहीं; ऐसा नहीं कह सकते हैं कि ताद्रूप्य प्रत्यय का कोई उपाय नहीं है । क्योंकि श्लेष स्थल की तरह यहां प्रकृत में भी चन्द्र एवं चन्द्रसदृश दोनों का एक चन्द्र पदसे उपस्थापन करने के कारण उत्थित व्यञ्जना ताद्रूप्य प्रत्यय के लिए उपाय है । और यह व्यञ्जनारूप उपाय इतना प्रबल है कि इससे होने वाला वैयञ्जनिक बोध बाधबुद्धि अर्थात् भेद ज्ञान से कभी कट नहीं सकता है अप्रतिवध्य है ।

अवान्तर प्रश्न होता है कि जिन दो वस्तुओं के एक पद से उपादान करने के कारण जो व्यञ्जना उठी है वह व्यञ्जना उन्हीं दो वस्तुओं में ताद्रूप्य प्रत्यय करायेगी अन्य में नहीं अतः प्रकृत में (मुखं चन्द्रः) में चन्द्र रूप एक पदसे चन्द्र एवं चन्द्रसदृश का उपादान हुआ है फलतः चन्द्रसदृश में चन्द्र के ताद्रूप्य का प्रत्यय यथाकथञ्चित् हो सकता है तो होवे किन्तु मुखत्व विशिण्ट मुख में उस प्रत्यय के होने का कौन तुक है ।

[यहाँ यथाकथंचित् कहने का भाव यह है कि सिद्धान्त है मुख में चन्द्रताद्रूप्य होता है । नियमप्राप्त है वह चन्द्रसदृश म किन्तु अपेक्षितनहीं है । इसलिए कहा कि जो भी हो वस ही क्या है]

कथंचिदस्तु, न तु मुखत्वविशिष्टे मुखे। अनुभवसिद्धश्च सर्वेषाम् 'वक्त्रे चद्रमसि स्थिते किमपरः शीतांशुरुज्जृम्भते' इत्यादौ विषये विषयितादूप्यस्य प्रत्यय इति। सत्यम्। स्वताद्रूप्यवदभेदबुध्या स्वताद्रूप्यस्य सुबोधतया तस्मिन्नपि तस्य सिद्धेः" इत्याहुः।

### मर्मप्रकाशः

सत्त्वादाह—मुखत्वेति। इष्टापत्तिं खण्डयति—अनुभवेति। स्वताद्रूप्यवदिति। चन्द्रताद्रूप्यवत्सदृशाभेदेत्यर्थः। तस्मिन्विषये। तस्य ताद्रूप्यप्रत्ययस्य। केचिदित्यनेनारुचिः सूचिता। तद्बीजं तु स्वरूपसंवेदनकृतवैलक्षण्यस्यापि संभवेन तावत्पर्यन्तगमनं व्यर्थमिति।

### मधुसूदनी

इत्याकारकं ज्ञानम्। ततोऽप्रतिवध्यत्वात् निवार्यत्वाभावात्। स्वेति। अत्र स्वं पदार्थः चन्द्रः। चन्द्रसदृशे चन्द्रताद्रूप्यस्य प्रत्ययः पूर्वंप्रतिपादितः।

अयमाशयः। मुखं चन्द्र इत्यत्र चन्द्रपदस्य चन्द्रसदृशे लक्षण। ततश्च चन्द्रपदस्य अर्थः (लक्षणया) चन्द्रसदृशम्। तच्च मुखमेव उपस्थितत्वात्। एवं चन्द्रसदृशं मुखं चाभिन्नम्। यदा चन्द्रसदृशं चन्द्रताद्रूप्यवदितिबुद्धिः। तदा चन्द्रसदृशाभिन्नं मुखमपि चन्द्रताद्रूप्यवदिति सुबोधम्। तेन च मुखेऽपि चन्द्रत्वस्य सिद्धिः तदेतदुक्तं=स्वताद्रूप्येति। स्वं चन्द्रः तत्ताद्रूप्यवत् चन्द्रसदृशं तस्य अभेदो मुखे वर्त्तते। तस्य मुखनिष्ठस्य चन्द्रताद्रूप्यवच्चन्द्रसदृशाभेदस्य बुद्धया चन्द्रताद्रूप्यस्य सुबोधतया तस्मिन् मुखेऽपि तस्य चंद्रताद्रूप्यस्य सिद्धिः। अस्मिन् मते चन्द्रसदृशे लक्षणा। चन्द्रताद्रूप्यज्ञानं फलम्। इत्याहुरित्यनेन स्वारुचिः स्वीकृता।

### बालक्रीड़ा

किन्तु सभी को अनुभव सिद्ध तो यह है कि वक्त्ररूपी चन्द्र के रहते हुए यह ऊपर शीतांशु क्यों उज्जृम्भण कर रहा है उदित हो रहा है। इत्यादि स्थलों में विषय मुख में विषयी चन्द्र के ताद्रूप्य का प्रत्यय होता है।

**आलोचन।** शाब्दबोध में शब्द का भी विशेषण विधया भान होता है अतः चन्द्रपद एवं शीतांशु पद का भान अवश्य होगा। उस अवस्था में "शब्द भेद से अर्थ भेद होता है" इस न्याय से चन्द्रपदार्थ और शीतांशुपदार्थ भिन्न २ होंगे तब तो चन्द्र के रहते शीतांशु का उदित होना ठीक ही है। अगर यहाँ यह कहा जाता कि एक चन्द्र के रहते दूसरे चन्द्र की क्या आवश्यकता तब तो संगति बैठ जाती। परन्तु वैसा कहा नहीं, अतः निर्माण में सावधानी नहीं करी गई है।

कहते हैं कि सत्य है, किन्तु स्व माने चन्द्र, उसका ताद्रूप्य नियम प्राप्त चन्द्रसदृश में है क्योंकि "मुखं चन्द्रः" इसमें चन्द्र पद की चन्द्रसदृश में लक्षणा है। अतः चन्द्रताद्रूप्यवान् चन्द्रसदृश ही है। किन्तु चन्द्र पद का लक्षणा से जो चन्द्रसदृश अर्थ है वह चन्द्रसदृश उपस्थितत्वात् मुख ही है। इस तरह चन्द्रसदृश और मुख अभिन्न हैं। अर्थात्

अन्ये तु— "चंद्रादिपदेभ्यो लक्षणया चंद्रादिसदृशत्वेनापि रूपेणोपस्थितानां चंद्रादित्वेन रूपेणैव मुखादिपदोपस्थापितैः सहाभेदान्वयबोधो जायते। तत्तत्पदलक्षणाज्ञानस्य तत्तत्पदशक्यतावच्छेदकप्रकारकलक्ष्यान्वयबोधत्वावच्छिन्नं प्रति हेतुतायाः, पदार्थोपस्थितिशाब्दबोधयोः समानाकारत्वस्यानुभवसाक्षिकवैलक्षण्यकलाक्षणिकबोधातिरिक्त-विषयतायाश्च कल्पनात् ।

## मर्मप्रकाशः

अत एव मतान्तरमाह—अन्ये त्विति। अपिर्मुखत्वसमुच्चायकः। रूपेणैवेत्यस्याभेदान्वये इत्यत्रान्वयः। उपस्थापितैरित्यस्य मुखत्वादिभिरिति शेषः।

ननु लक्षणाज्ञानकार्यतावच्छेदकं प्राचीनसंमतं प्रागुक्तमिति कथं तथा बोधोऽत आह—तत्पदेति। नन्वेवमपि तदुपस्थितिबोधयोः समानप्रकारत्वनियमभङ्गोऽत आह—पदार्थोपेति।

## मधुसूदनी

अन्येत्विति। चन्द्रादिपदेभ्यः चन्द्रादिसदृशत्वेनाऽपि। अपि शब्दस्यात्रेदं स्वारस्यं, यत् चन्द्रपदात् लक्षणया यत्र चन्द्रसदृशमुपतिष्ठति तत्रोपस्थितौ चन्द्रसदृशत्वमपि भासते। ननु चन्द्रादित्वेनैव रूपेण मुखादिपदेभ्यः उपस्थापितैर्मुखादिभिः सह अभेदान्वयबोध इति कथं, यर्हि चन्द्रसदृशत्वेन उपस्थितिस्तर्हि चन्द्रसदृशत्वेनैव अन्वयबोधः स्यादित्याशंकायामाह–तत्तत्पदलक्षणा-ज्ञानस्येति। अयं भावः–मुखं चन्द्र इत्यत्र चन्द्रपदश्रुतेरनन्तरं शक्त्या चन्द्रत्वं भासते ततश्च मुखेन सह नान्वयः।

## बालक्रीड़ा

चन्द्रसदृश और मुख दोनों पदार्थ एक हैं वस्तु एक ही है। इस अभेद बुद्धि के सहारे जब चन्द्रसदृश चन्द्रताद्रूप्यवान् है तब चन्द्रसदृशाभिन्न मुख भी चन्द्रताद्रूप्यवान् होगया इस तरह मुख में भी चन्द्रत्व की सिद्धि हो गई। "चन्द्रताद्रूप्यवान् चन्द्रसदृश के साथ मुख का अभेद है" इस बुद्धि से चन्द्रताद्रूप्य का बोध सुख पूर्वक होने के कारण मुख में भी चन्द्रताद्रूप्य सिद्ध ही है। इस मत में चन्द्रपद की चन्द्रसदृश में लक्षणा है और चन्द्र ताद्रूप्य ज्ञान फल है।

अन्य आचार्यों का तो कहना है कि "मुखं चन्द्रः" "वाहीको गौः" इत्यादि उदाहरणों में चन्द्र एवं गौः आदि पदों से लक्षणा के द्वारा चन्द्रादिसदृशत्व रूप से मुख एवं वाहीक आदि की उपस्थिति होती है किन्तु चन्द्रादिसदृशत्वेन उपस्थित उन अर्थों का मुख एवं वाहीक आदि अर्थों के साथ अभेदान्वयबोध माने शाब्दबोध चन्द्रत्वेन एवं गोत्वेन होगा। अतएव चन्द्राभिन्न मुख है गवाभिन्न वाहीक है। यह प्रतीति सिद्ध होती है।

प्रश्न—पदार्थोपस्थिति और शाब्दबोध म समानाकारता का नियम है। अर्थात् जिस रूप में पदार्थ की उपस्थिति होती है उसी रूप में शाब्दबोध भी होता है किन्तु प्रकृत मुखं चन्द्रः में तो चन्द्रसदृशत्वेन उपस्थिति होता है और चन्द्रत्वेन शाब्दबोध होता है इस तरह वैरूप्य होने से पदार्थोपस्थिति तथा शाब्दबोध में समानाकारता के नियम का व्याघात हो गया।

उत्तर। तत्तत् पद के शक्य (शक्ति के विषय अर्थ) में रहने वाली शक्यता का

अत एव गङ्गायां घोष इत्यत्र तटत्वेनाप्युपस्थितस्य तटस्य गङ्गात्वेनान्वयबोधस्तत्प्रयोज्यः शैत्यपावनत्वादिप्रत्ययश्च संगच्छते ।

प्रकृते तु विषयिचन्द्रादिनिष्ठासाधारणगुणवत्त्वप्रत्ययः फलम् । न हि चन्द्रत्वप्रतीतिं विना मुखे चन्द्रत्वनियतगुणवत्त्वधीः शक्योपपादयितुम् । ताद्रूप्यपदेन तदसाधारणगुणवत्वमेव प्राचीनैरुक्तम् । इत्थं च स्वरूप-

### मर्मप्रकाशः

कल्पनाया आवश्यकतामाह—अत एवेति । अपिना समीपत्वसमुच्चयः । ननु प्रकृते फलाभावोऽत आह—प्रकृते त्विति । नन्वेवं प्राचीनविरोधः । ताद्रूप्यसंवेदनस्य फलत्वस्य तैरुक्तत्वादत आह—ताद्रूप्येति । तदसाधारणेति । विजातीयाह्लादकत्वेत्यर्थः । इत्थं चेति । रूपके तथा बोधे तथा फलेऽङ्गीक्रियमाणे चेत्यर्थः ।

### मधुसूदनी

एवमन्वयानुपपत्तौ लक्षणा प्रसरति । तथा प्रसरन्त्या तया चन्द्रत्वेन सह अन्वयितुं योग्योऽर्थ उपस्थापनीय इति तत्तत्पदशक्यतावच्छेदकप्रकारकलक्ष्यविशेष्यकान्वयबोधत्वावच्छिन्नं प्रति लक्षणाज्ञानस्य हेतुतायाः कल्पनं कृतम् । नन्वेवमपि पदार्थोपस्थितिशाब्दबोधयोः समानाकारताया नियमो भज्यतेऽत आह—पदार्थोपेति । अक्षरार्थः । अनुभवः साक्षी यत्र वैलक्षण्ये तदनुभवसाक्षिकं वैलक्षण्यं, तद् यत्र बोधे स अनुभवसाक्षिकवैलक्षण्यको लाक्षणिकबोधः तस्मात् तादृशबोधात् अतिरिक्ताया विषयतायाः अपि कल्पनम् । अभिधाजन्यबोधापेक्षया लक्षणाजन्यबोधो विलक्षण इत्यत्र अनुभव एव साक्षी । अतः तदतिरिक्तस्थले विषयतयाः समानाकारतेति भावः ।

चन्द्रनिष्ठो योऽसाधारणो गुण आह्लादविशेषस्तद्वत्वस्य प्रत्ययः । चन्द्रत्वेन नियतं व्याप्तं चन्द्रत्वनिरूपितव्याप्त्याश्रयः गुणवत्त्वं तस्य धीः ।

### बालक्रीड़ा

अवच्छेदक है प्रकार जिसमें ऐसा जो लक्ष्य, तद्विषयक अन्वयबोधत्वावच्छिन्न अन्वय माने गंगात्वप्रकारक तीरविशेष्यक शाब्दबोध उसके प्रति, लक्षणाज्ञान हेतु है और जिस लाक्षणिक बोध (तत्तत्पद शक्यतावच्छेदक प्रकारक लक्ष्यविशेष्यक शाब्दबोध) के वैलक्षण्य में अनुभव साक्षी हैं । उस बोध की विषयता से अतिरिक्त विषयता में ही पदार्थोपस्थितीय और शब्दबोधीय समानकारता कल्पित है ।

इसीलिए "गंगायां घोषः" में गंगासम्बन्धि तटत्वेन तट की उपस्थिति भले ही होगी किन्तु उस उपस्थित तट का अन्वयबोध (शब्दबोध) गंगात्वेन ही होगा और उसी बोध के कारण ही घोष में शैत्यपावनत्व की प्रतीति संगत होती है ।

प्रकृत में तो विषयी चन्द्रादि में रहने वाली असाधारण गुणशालिता की बुद्धि का होना फल है लक्षणा का प्रयोजन है । किन्तु चन्द्रत्व की प्रतीति के विना चन्द्रत्वनियत (चन्द्रत्वव्याप्य) गुणशालिता की बुद्धि का उपपादन करना शक्य नहीं है । क्योंकि यहाँ

सँवित्तिकृतः फलीभूतसंवित्तिकृतश्चोपमातो रूपकस्य भेदः स्फुट एव" इति वदन्ति ।

अपरे तु—"भेदकरम्बितं सादृश्यमुपमाजीवातुभूतम्, भेदाकरम्बितं च गौणसारोपलक्षणाया इति स्फुटे भेदे कृतं फलकृतवैलक्षण्यपर्यन्तानु-

### मर्मप्रकाशः

उपमातो रूपकस्येति । उपमायां तथा बोधाभावात्साधारणस्यैव गुणस्य प्रतीतेश्चेति

### मधुसूदनी

भेदेन करम्बितं गर्भितं तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपं सादृश्यमुपमाया जीवातुः । भेदाकरम्बितमर्थादभेदो गौणसारोपाया जीवातुः । यथा अधिकरणत्वाधेयत्वादिकं पदार्थान्तरं, न संयोगादिरूपं, संयोगादिस्वरूपतायां तु कुण्डे बदरमितिवत् बदरे कुण्डमित्यपि व्यवहारः स्यात् संयोगस्य द्विष्ठत्वात् । तथैव सादृश्यमपि पदार्थान्तरम् । अन्यथा आत्माश्रयः स्यात् । सादृश्यनिरूपकभिन्नत्वे सति सादृश्यनिरूपकगतभूयोधर्मवत्त्वरूपस्य सादृश्यस्य लक्षणे प्रवेशात्, (आत्मा सादृश्यमेव आश्रयः इति) आत्माश्रयदोष एव वर्त्तते । अत उक्तातिरिक्तं सादृश्यं भेदागर्भितमेव ।

चन्द्रसदृशं मुखमिति स्थले आह्लादो धर्मः सादृश्यमिति भेदकरम्बितपक्षे । भेदाकरम्बितपक्षेऽपि मुखं चन्द्र इत्यस्य लक्षणया चन्द्रसदृशमित्यर्थे सादृश्यस्य धर्मरूपता तु समानैव । किन्तु उपमायां चन्द्रभिन्नं चन्द्रसदृशमिति बोधात् भेदकरम्बितं, रूपके चन्द्राभिन्नमिति बोधात् भेदाकरम्बितं तत् ।

### बालक्रीड़ा

ताद्रूप्यपद से चन्द्रासाधारणगुणवत्व को ही प्राचीनों ने कहा है । इस प्रकार उपमा से रूपक का स्वरूपसंवित्तिकृत एवं फलसंवित्तिकृत भेद स्पष्ट ही है ।

अपर आचार्यों का कहना है कि "नञिवयुक्तमन्यसदृशाधिकरणे" इस परिभाषा में कहा है कि जो पदार्थ नञ्युक्त हो और इवयुक्त हो उसको अन्य (अधिकरण) के सदृश अधिकरण में समझना चाहिए । इस पर शंका होती है कि जो पदार्थ सदृश होगा वह अन्य के ही सदृश होगा तव अन्य पद का निवेश क्यों किया । इससे मालूम पड़ता है कि सादृश्य अन्यत्व याने भेद से करम्बित तो होता ही है भेद से अकरम्बित भी वह होता है । फलतः भेदकरम्बित सादृश्य उपमा का जीवातु है प्राण है और भेदाकरम्बित सादृश्य गौणी सारोपा लक्षणा का मूल है । इस तरह उपमा से रूपक का भेद स्पष्ट ही है तब फल कृत वैलक्षण्य पर्यन्त अनुधावन करना व्यर्थ है ।

इस पक्ष में भेद भी और ताद्रूप्य (अभेद) भी रहे यह दोनों परस्पर विरोधी एक साथ रहने कठिन है अतः भेदगर्भ सादृश्य प्रतीति का ताद्रूप्य प्रतीति फल कैसे हो सकता है इस अनुपपत्ति के परिहार के लिए आयास भी नहीं करना पड़ेगा । यह एक और अनुकूलता है । इस प्रकार मत भेद से प्राचीनों के आशय का वर्णन कर दिया है ।

धावनेन। पक्षेऽस्मिन् भेदगर्भसादृश्यप्रतिपत्तेस्ताद्रूप्यप्रतीतिः कथं नाम फलं भवितुमीष्टे इत्यनुपपत्तिं परिहर्तुमायासोऽपि नापततीत्यपरमनुकूलम्" इत्यप्याहुः। तदित्थं प्राचामाशयो मतभेदेन वर्णितः।

नव्यास्तु–"मुखं चन्द्रः, वाहीको गौः" इत्यादौ चन्द्रादीनां मुखादिभिः सह संभवति लक्षणां विनैवाभेदसंसर्गेणान्वयबोधः। बाधनिश्चयप्रतिबध्यतावच्छेदककोटावनाहार्यत्वस्येव शाब्दान्यत्वस्यापि निवेश्यत्वात्। अत

## मर्मप्रकाशः

भावः। अत्रापि पक्षेऽरुचिं सूचयन्मतान्तरमाह—अपरे त्विति। करम्बितं विशिष्टम्। सादृश्यस्य धर्मरूपत्वेऽतिरिक्तत्वे च भेदागर्भत्वादिति भावः। जीवातुर्जीवनौषधम्। स्फुटे भेद इति। उपमायां चन्द्रभिन्नं चन्द्रसदृशमिति बोधः। रूपके तु चन्द्रसदृशमित्येवेति भावः। पक्षेऽस्मिन्नित्यस्यापरमित्यनेनान्वयः।

ननु मुखं न चन्द्र इत्यादिबाधज्ञानसत्त्वेन कथं तथा बोधोऽत आह—बाधेति।

अनाहार्येति। तत्सत्त्वेऽपीच्छारूपोत्तेजकवशादाहार्यस्स्य जायमानत्वादिति भावः। न चेत्यस्यैवमिति शेषः। शब्दान्यत्वनिवेशे इति तदर्थः। नन्वेवं प्रकृतेऽपि योग्यताज्ञाना-

## मधुसूदनी

बाधेति। तद्वत्ताबुद्धिं प्रति तदभावनिश्चयः प्रतिबन्धक इत्येष कश्चन नियमः। प्रतिबन्धको बाधनिश्चयस्तस्य प्रतिबध्या तद्वत्ताबुद्धिः। तस्या भावस्तत्ता तस्याः अवच्छेदककोटौ विशेषणश्रेण्यां यथा अनाहार्यत्वं निवेश्यते तथा शाब्दान्यत्वमपि निवेश्यम्। तथा च आहार्या शाब्दी च बुद्धिः बाधनिश्चयेन न प्रतिबध्येति लक्षणां विनैव "मुखं चन्द्रः" "गौर्वाहीकः" इत्यत्र गोचन्द्रयोः मुखवाहीकाभ्यां यथायोग्यमभेदसंसर्गेण शाब्दो बोधोऽसंभवी न। अत एव सत्यपि बाधनिश्चये आहार्यशाब्दबोधयोः सत्वादेव।

ननु एवं तस्मिन् सत्यपि तयोः सद्भावश्चेत्तर्हि "वह्निना सिञ्चति" इत्यतो

## बालक्रीड़ा

नव्य आचार्य अप्पय्य दीक्षित जी तो कहते हैं कि "मुखं चन्द्रः" गौर्वाहीकः' इत्यादि स्थल में चन्द्रादि का मुख आदि के साथ विना ही लक्षणा के अभेद सम्बन्ध से अन्वय संभव है।

अवान्तर प्रश्न होता है कि मुखत्व और चन्द्रत्व, वाहीकत्व और गोत्व इन परस्पर विरोधी धर्मों के ज्ञान के बदौलत चन्द्राभिन्न मुख है गवाभिन्न बाहीक है यह ज्ञान "मुख चन्द्र से भिन्न है बाहीक गौ से भिन्न है" इस प्रतिबन्धक ज्ञान के रहते कैसे हो सकता है। उत्तर—बाध निश्चय (बाधज्ञान) से प्रतिबध्य (कट जानेवाला) वही ज्ञान है जो अनाहार्य है ऐच्छिक नहीं है और जो शाब्दबोध से भिन्न है। अतः आहार्य (बाधकालिक इच्छाजन्य) ज्ञान और शाब्दबोध, बाधज्ञान से नहीं कटते हैं। इसी को लिखते हैं कि बाध निश्चय से जो प्रतिबध्य हैं उनमें रहने वाली प्रतिबध्यता के अवच्छेदक की 'विशेषण की' श्रेणी में कोटि में

एव 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति प्राचां प्रवादोऽपि संगच्छते। न च 'वह्निना सिञ्चति' इत्यतो वाक्यादपि शाब्दबोधापत्तिः; योग्यताज्ञानविरहात्। मुखं चन्द्रः, वाहीको गौः, इत्यादौ त्विष्टचमत्कारप्रयोजकताज्ञानाधीनाया इच्छायाः सत्त्वादाहार्ययोग्यताज्ञान-

## मर्मप्रकाशः

भावात्कथं बोधोऽत आह—मुखमिति। अत एवाहार्ययोग्यताज्ञानसत्त्वादेव। शाब्दबोधे शाब्दबोधत्वावच्छिन्ने। लाघवान्मतान्तरमाह— आहार्य एव वेति। मा चास्त्विति। वह्निना सिञ्चतीत्यादावप्याहार्यज्ञानस्येष्टत्वादिति भावः। अस्योभयत्रान्वयः।

## मधुसूदनी

वाक्यादपि शाब्दबोधस्य आपत्तिः स्यात्। इति शंका। उत्तरति—नचापत्तिः योग्यताज्ञानस्य विरहात्। नन्वेवं योग्यताज्ञानाभावाच् छाब्दबोधाभावश्चेत्तर्हि उक्तादाहरणयोरपि तदभावात् शाब्दबोधो मास्तु तत आह—मुखमिति। इत्यादौ तु इच्छायाः सत्त्वात् योग्यताज्ञानमस्ति। अयं परामर्शः। अर्थाबाधो योग्यता। अत्र तु अर्थस्य बाधः तत्कथं योग्यता। तथापि बाधकालीनमिच्छाजन्यं ज्ञानमाहार्यमिति नियमादाहार्ययोग्यताज्ञानम्। तदेतदुक्तं तत्साम्राज्यमिति।

ननु इच्छैव कुतः? तत्राह—ज्ञानेति। ज्ञानाधीनाया ज्ञानोत्तरं जायमानायाः। एष क्रमः। पूर्वं जानाति तत इच्छति ततो यतते। अयं परामर्शः। इदं मदिष्टसाधनम्, इदं मत्कृतिसाध्यमिति कृतिसाध्यत्वप्रकारकमिष्टसाधनताज्ञानं प्रवर्त्तकम्। फलेच्छैव उपायेच्छां प्रति कारणम्। इष्ट इच्छाविषयः चमत्कारः फलं तत्प्राप्तुमुपायमातनुते। तन्निष्ठा या प्रयोजकता तस्या ज्ञानं; तदधीनेच्छेति अक्षरार्थः।

## बालक्रीड़ा

अनाहार्यत्व की तरह शाब्दान्यत्व का भी निवेश करना चाहिए। आहार्य ज्ञान क्यों प्रतिबध्य नहीं होता है इसका कारण है इच्छा। इसका उल्लेख आगे किया है। शाब्दज्ञान के प्रतिबध्य न होने के कारण का उल्लेख यहां करते हैं कि वस्तु के अत्यन्त अभाव में भी शब्द से उस वस्तु का ज्ञान हो ही जाता है। अतएव तदवच्छेदक कोटि में शाब्दान्यत्व का निवेश अर्थात् बाधबुद्धि 'अभावज्ञान' से शाब्दबोध नहीं कटता है।

वस्तु के अत्यन्त अभाव में भी यदि शाब्दबोध होगा तो "वह्निना सिञ्चति" इस वाक्य में भी शाब्दबोध होने लगेगा। तब कहते हैं कि यहाँ योग्यता (अर्थाबाध) ज्ञान नहीं है प्रत्युत अर्थ का बाध हो रहा है अतः शाब्दबोध न होगा।

अवान्तर प्रश्न होता है कि यदि योग्यता ज्ञान के अभाव में शाब्दबोध नहीं होता है तब "मुखं चन्द्रः" "बाहीको गौः" यहाँ भी योग्यता ज्ञान के अभाव में शाब्दबोध नहीं होना चाहिए। उत्तर--फलेच्छा, उपायेच्छा का हेतु है इसलिए इन उदाहरणों में तो इष्ट चमत्कार है और उस चमत्कार की प्रयोजकता(जनकता)"मुख चन्द्राभिन्न है", "बाहीक गवाभिन्न

साम्राज्यम् । अत एव शाब्दबोधे योग्यताज्ञानस्य कारणत्वोक्तिः प्राचां संगच्छते ।

## मधुसूदनी

अत एव आहार्ययोग्यताज्ञानस्य साम्राज्यादेव । नन्वेवं तद्वत्ताबुद्धिंप्रतीति नियमस्याकारो गुरुभूत इति मतान्तरमातनोति—आहार्य इति । आलंकारिकमते योग्यताज्ञानस्य शाब्दबोधे कारणता नास्ति । अत एव "मशकदशनमध्ये दन्तिनः सञ्चरन्ति" "वन्ध्यापुत्रः समायाति खपुष्पकृतशेखरः" "पिपीलिका नृत्यति वह्निकुण्डे" "सलिलादग्निरुत्थितः" इत्यादौ काव्ये शाब्दो बोधः । तथा वह्निना सिञ्चतीत्यादावपि शाब्दो बोधो भवत्येव । अन्यथा अद्रवस्य वह्नेः सेचनक्रियाकरणत्वं कथं नामोपजायतामिति प्रश्नः कथं संगच्छेत ? ।

## बालक्रीड़ा

है" इस अभेदज्ञान में है तथा (जानाति इच्छति यतते) पहले वस्तु को जानता है तब उस वस्तु की ईच्छा करता है फिर उस वस्तु की प्राप्ति के लिए यत्न करता है, इस नियम के अनुसार इच्छा, ज्ञान के अधीन है अतः इच्छा के सद्भाव में आहार्ययोग्यताज्ञान का साम्राज्य है ।

यहाँ का भाव यह है कि मुख में चन्द्र के जैसी आह्लादनरूपकार्यकारिता नहीं हैं अतः बाधनिश्चय प्रतिबन्धक है तब भी जो शाब्दबोध होता है वह अलंकारिकों को ही होता है । अन्य को नहीं । उसका कारण है अलंकार शास्त्रीय संस्कार । वह संस्कार उत्तेजक है । फलतः जैसे चन्द्रकान्तमणि का सान्निध्य दाह में प्रतिबन्धक है वैसे ही प्रकृत में बाधज्ञान है । फिर भी चन्द्रकान्तमणि के रहते हुए भी सूर्यकान्तमणि उत्तेजक का सद्भाव दाह में कारण है उसी तरह प्रकृत में भी बाधज्ञान के रहते हुए भी अलंकार शास्त्रीय संस्कार ही शाब्द बोध का कारण है । इसलिए अलंकार शास्त्रीय संस्काराभाव विशिष्ट जो बाधनिश्चय उसका अभाव शाब्दबोध में कारण है । इसीलिए शाब्दबोध में योग्यताज्ञान कारण है यह प्राचीनों का कहना भी संगत हो जाता है । अलंकारिकों के मत में योग्यता ज्ञान शाब्द बोध में कारण नहीं है । सीलिए मशक के दशनों में हाथी घूमते हैं, आकाश कुसुम की माला पहिने हुए वन्ध्या पुत्र आ रहा है, चींटी बह्निकुण्ड में नाचती है, जलसे अग्नि उठ खड़ी हुई, मक्षिका के पैर के आघात से भुवनत्रय काँप उठा इत्यादि काव्यों में शाब्दबोध होता ही है । तथा अग्नि से सिक्त करता है इस वाक्य से भी शाब्दबोध होता ही है । यदि शाब्द बोध यहां नहीं होता तब अद्रुत वह्निकी सेक क्रिया में करणता कैसे हो सकती है यह प्रश्न कैसे हो सकता है ।

यहाँ पर शंका होती है कि जहां नामार्थों में अभेदान्वयबोध होता है वहाँ के लिए, (अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिः, पदद्वारा विरूपाभ्यां विभिन्नरूपाभ्यां धर्माभ्यांमुपस्थितयोरर्थयोरभेदान्वयबोध इति एवं व्युत्पत्तिः,) पदों के द्वारा विभिन्नरूप वाले धर्मों से उपस्थित अर्थों में अभेदान्वयबोध होता है; यह शास्त्रजन्य संस्कार है । जैसे "नीलो घटः" यहाँ पर नीलत्व और घटत्व इन विभिन्नरूप वाले धर्मो से उपस्थित नीलगुणविशिष्ट और घट में अभेद सम्बन्ध से बोध होता है ।

प्रकृत में इसकी संगति यों है कि नीलत्वेन उपस्थित जो नीलगुणवाला धर्मी है वह

आहार्य एव वाऽभेदान्वयबोधोस्तु। मास्तु बाधबुद्धिप्रतिबध्यतावच्छेदक-कोटौ शाब्दान्यत्वम्। मा चास्तु शाब्दबुद्धौ योग्यताज्ञानस्य कारणत्वम्। आहार्यं प्रात्यक्षिकमेवेति नियमश्च। अवश्यं मुखचन्द्र इत्यादौ पराभिमत-

### मर्मप्रकाशः

उक्तं द्रढयति—अवश्यं चेत्यादिना। अभेदेत्यस्याहार्येत्यादिः।

### मधुसूदनी

आहार्यं प्रात्यक्षिकमेव प्रत्यक्षमेव प्रात्यक्षिकमिति स्वार्थे ठक्। अभेदान्वय-बोधस्य आहार्यतायाः फलमाह—अवश्यमिति। आहार्याभेदान्वयः वाच्यार्थयोः

### बालक्रीड़ा

घट ही है और घटत्वेन उपस्थित जो धर्मी है वह भी घट ही है अतः एक होने से अभेद अर्थात् एकता होना स्वाभाविक है किन्तु "मुखं चन्द्रः यहां पर तो मुखत्वेन उपस्थित मुख चन्द्र से भिन्न है और चन्द्रत्वेन उपस्थित चन्द्र मुख से भिन्न है तब भिन्नों में एकता माने अभेद कैसा।

मुख में चन्द्रत्व प्रतीति को अतत् में तत् की प्रतीति रूप भ्रम भी नहीं मान सकते क्योंकि अधिष्ठान के साक्षात्कार नहीं होने पर ही भ्रम होता है। जैसे यह चाँदी है, यह सर्प है, यह भ्रमात्मिका प्रतीति तभी है जब तक प्रकृत भ्रम के अधिष्ठान सीपी एवं रस्सी का साक्षात्कार नहीं हुआ है। यहाँ तो अधिष्ठान नायिका के मुख को देख ही रहे हैं उसीको प्रसन्न करने के लिए ही कहते हैं कि तेरा मुख, चन्द्र है तब वह भ्रमजनित भी अभेद नहीं हो सकता है।

लक्षणा आप मानते नहीं हैं यदि लक्षणा मानते तो उस के द्वारा चन्द्र पद से चन्द्र-सदशत्वेन उपस्थित जो चन्द्रसदृश है वह मुखही है और मुखत्वेन जो उपस्थित हुआ है वह भी मुख ही है अतः दोनों के एक होने से एकता हो सकती थी अगर कहें कि जैसे प्रतिबन्धक चन्द्रकान्तमणि के रहते हुए भी उत्तेजक सूर्यकान्तमणि के रहने पर दाह होता है उसी तरह मख चन्द्र नहीं है इस वाध ज्ञान के रहने पर भी अलंकार शास्त्रीय संस्कार रूप उत्तेजक द्वारा अभेदान्वय वोध हो जाता है इस पर कहना है कि उस संस्काररूप उत्तेजक के सहारे अभेद बोध हो ही जायगा तब योग्यता ज्ञान को आहार्य मानने की क्या आवश्यकता है यह तो अर्धजरतीय होगा। इस पर कहते हैं कि अथवा आहार्य ही अभेदान्वय बोध हो जावे। मत करो वाधबुद्धि से प्रतिबध्य होने वालों की कोटि में शाब्दबोध से अतिरिक्त का निवेश। और मत मानों शाब्दबोध में योग्यता ज्ञान को कारण। तथा

(हम देखते हैं कि मुख चन्द्र नहीं है तब भी कामिनी को खुश करने के लिए कहा जाता हैं कि तुम्हारा मुख चन्द्रमा है इसका कारण वक्ता की इच्छा ही हैं। इसीलिए बाध-कालिक इच्छा जन्य ज्ञान को आहार्य कहते हैं और यह आहार्यज्ञान प्रत्यक्षवस्तु के विषय में ही होता है। इस नियम के विषय में कहते हैं कि) मत मानो इस नियम को कि आहार्य-ज्ञान प्रत्यक्षवस्तु विषयक ही होता है।

सारोपलक्षणोदाहरणे वाच्यार्थयोरेवाभेदान्वयोऽभ्युपगन्तव्यः, न तु वाच्यलक्ष्ययोः। अन्यथा 'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्, 'पादाम्बुजं भवतु मे विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः' इत्यादौ क्रमेणोपमारूपकयोरुपमितविशेषणसमासाधीनयोर्लक्ष्मीकर्तृकालिङ्गन-मञ्जुमञ्जीरशिञ्जितमनोहरत्वयोरनुपपत्तिर्निर्णायिका रूपकोपमयोः प्राचीनैस्तत्र तत्रोपनिबद्धा विरुद्धा स्यात्।

### मर्मप्रकाशः

एवव्यवच्छेद्यमाह—न त्विति। अन्यथा वैपरीत्याङ्गीकारे। विरुद्धेत्यत्रास्यान्वयः। उपमितविशेषणेति। 'उपमितं व्याघ्रादिभिः'। 'मयूरव्यंसकादयश्च' इतीत्यर्थः। तत्र तयोः स्वीकारे या तदनुपपत्तिः सा वैपरीत्ये निर्णायिकेत्यखण्डार्थः।

### मधुसूदनी

मुखचन्द्रयोः। तु किन्तु वाच्यलक्ष्ययोः मुखचन्द्रसदृशयोर्नान्वयः। अन्यथा वाच्यार्थयोरभेदान्वयमनङ्गीकृत्य वाच्यलक्ष्यार्थयोरतत्स्वीकारे। क्रमेणेति। राजेति पद्ये उपमितसमासाधीना उपमा। पादेति पद्ये विशेषणसमासाधीनं रूपकं तयोः। अनुपपत्तिरिति। राजेति पद्ये उपमास्वीकारे नारायणसदृशो राजेत्येवार्थः स्यात्तथा च लक्ष्मीः नारायणं भगवन्तमालिंगति न तु तत्सदृशं राजानमिति लक्ष्मीकर्त्तृकालिंगनस्य अनुपपत्तिरसंगतिः रूपकस्य निर्णायिका। यतो हि रूपके वाच्यार्थयोरेव राजनारायणयोरभेदो भवतीति स्वीकारे नारायणाभिन्नं राजानं सा आलिंगति। इति।

पादेतिपद्ये रूपकस्वीकारे वाच्यार्थयोरम्बुजचरणयोरभेदान्वये अम्बुजाभिन्नश्चरण इत्येवार्थः स्यात्तथा चरणे तु नूपुरस्य परिधानं भवति अम्बुजाभिन्ने तु तस्मिन् तदसंभवि इति मंजीरगतमञ्जुशिञ्जनप्रयुक्तमनोहरत्वस्य अनुपपत्तिरसंगतिः उपमाया निर्णायिका यतः अम्बुजसदृशयोः चरणयोर्नूपुराणां परिधानस्यौचित्यात् मंजुशिञ्जनस्य मनोरहतोपपद्यते। इति।

### बालक्रीड़ा

मुखं चन्द्रः इस पराभिमत सारोपा लक्षणा के उदाहरण में वाच्य अर्थ मुख और चन्द्र का ही आहार्य अभेदान्वय मानना चाहिए न कि वाच्य मुख और लक्ष्य चन्द्रसदृश का।

अन्यथा वाच्य अर्थों में अभेदान्वय न मानकर वाच्य और लक्ष्य अर्थों में अभेदान्वय मानेंगें तो "तुम राजनारायण को लक्ष्मी निर्भर आलिगन करती है" "मंजु मंजीर (नूपुर) से शिञ्जित शब्दायमान अतएव मनोहर अम्बिका का पादाम्बुज मेरा विजय करे" इत्यादि काव्यों में क्रमशः "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इस सूत्र के द्वारा किये गये उपमित समास और "मयूरव्यंसकादयश्च" इस सूत्र के द्वारा किये गये विशेषण समास के अधीन प्रतीति वाले उपमा एवं रूपक में लक्ष्मीकर्तृक आलिंगन एवं मञ्जुमंजीरशिञ्जितमनोहरत्व की अनुपपत्ति रूपक एवं उपमा की निर्णायिका है" ऐसा जो प्राचीन मम्मटादि ने भिन्न २ स्थलों में लिखा है वह सब परस्पर विरुद्ध हो जायगा। क्योंकि प्रथम पद्य में उपमा

आद्यपद्ये उपमाया इव रूपकस्यापि स्वीकारे बाधकस्य तुल्यतया

## मर्मप्रकाशः

बाधकस्य तत्कर्तृकालिङ्गनासंभवस्य ।

## मधुसूदनी

एवं काव्यप्रकाशादि ग्रन्थेषु या अनुपपत्तिस्तयोर्निर्णायिका निबद्धा सा विरुद्धा स्यादित्यन्वयः। कथं विरुद्धा स्यादिति स्फोरयति-आद्यपद्य इति। द्वितीयपद्य इति च। अयमिह परामर्शः। मुखं चन्द्र इत्यादौ लक्षणां विहाय वाच्यार्थयोराहार्याभेदान्वय बोध इत्येकः पक्षः तत्रैव उदाहरणे लक्षणां स्वीकृत्य लक्ष्ययोरभेदान्वयबोध इति द्वितीयः पक्षः। तत्र द्वितीयपक्षोऽनुमन्यते चेत्तर्हि राजनारायणमित्यत्र यथा राजा नारायण इवेत्युपमायाः स्वीकारे नारायणसदृशो राजेति बोधस्तथा राजैव नारायण इति रूपकस्यापि स्वीकारे लक्षणया नारायणसदृशो राजेतिबोधस्ततश्च लक्ष्मीकर्त्तृकालिंग-नानुपपत्तिरूपस्य बाधकस्य तुल्यतया रूपकनिर्णायकताया असंगतेर्हेतोः,— तथैव पादा-म्बुजमित्यत्र उपमायाः स्वीकारे यथा अम्बुजसदृशचरण इति बोधे बाधकस्य अभाव-स्तथा रूपकस्यापि स्वीकारे लक्षणया तत्सदृशबोधे बाधकस्य मंजीरशिञ्जानासंभवरूपस्य अभावः। तेन तन्निवर्त्तकताया रूपकपरिहारस्यायोगात्। बाधक एव निवर्तकस्तस्य चाभावस्ततः प्राचीनैर्मम्मटादिभिर्निर्बद्धा निर्णायिका अनुपपत्तिर्विरुद्धा स्यादित्यन्वयः। अतः प्रथमः पक्षः लक्षणां विनेति रूप एव उचितः।

## बालक्रीड़ा

की तरह रूपक के भी स्वीकार करने में बाधक समान है तव उस अनुपपत्ति को निर्णायक मानना असंगत है। और द्वितीय पद्य में उपमा की तरह रूपक के भी स्वीकार करने में बाधक नहीं है तव रूपक को हटाना संभव नहीं है।

यहाँ का आशय यह है कि "राजनारायणं" में यदि उपमित समास करते हैं तब "राजा नारायण के सदश है" यह शाव्दबोध होगा। इसमें अनुपपत्ति होती है कि लक्ष्मी तो अपने पति नारायण का आलिंगन करती है न कि नारायण के सदृश किसी व्यक्ति का; अतः लक्ष्मीकर्तृक आलिंगन के अनुपपन्न होने से उपमित समास प्रकृत में नहीं कर सकते हैं और यदि यहां विशेषण समासाधीन रूपक मानते हैं तव राजा नारायण है यह शाव्दबोध होगा। उस अवस्था में नारायणाभिन्न राजा का आलिगन लक्ष्मी के लिए औचित्य प्राप्त है। यह तभी हो सकता है जव कि रूपक में लक्षणा नहीं करते हैं और वाच्यार्थ का वाच्यार्थ के साथ अभेद बोध करते हैं। किन्तु जव "राजनारायणम्" में रूपक मानकर नारायण पद की नारायणसदृश में लक्षणा करेंगे तव उसका नारायणसदृशाभिन्न राजा" यह अर्थ होगा। और वाच्यार्थ का लक्ष्यार्थ के साथ अभेद बोध होगा न कि वाच्यार्थ से वाच्यार्थ का। इस बोध के मानने में नारायणसदृश का लक्ष्मी के द्वारा आलिगन नहीं करने की जो आपत्ति उपमा के मानने में लगी थी वही आपत्ति रूपक के भी मानने में लगी तब तुल्यता के कारण अनुपपत्ति को निर्णायक कहना प्राचीनों का असंगत ही होगा। इसलिए रूपक में लक्षणा मानने की कोई आवश्यकता नहीं है।

इसी तरह "पादाम्बुज" में यदि विशेषण समास करते हैं तब पाद अम्बुजाभिन्न है

तन्निर्णायकताया असंगतेः। द्वितीयपद्ये रूपकस्यापि स्वीकारे बाधकाभावेन तन्निवर्तकताया अयोगात्।

न च मुखचन्द्रादौ समासे क्वचिदस्तु नाम प्रागुक्तरीत्या लक्षणां विनापि बोधोपपत्तिः, व्यासे तु लक्षणाया नास्ति बाधकमिति वाच्यम्। 'कृपया सुधया सिञ्च हरे मां तापमूर्छितम्' इत्यादौ व्यासेऽप्यनुपपत्तेः।

मर्मप्रकाशः

बाधकाभावेन तादृशमनोहरत्वासंभवाभावेन।

प्रागुक्तेति। प्राचीनोक्तेत्यर्थः। नास्ति बाधकमिति। प्राचानुक्तत्वादिति भावः।

मधुसूदनी

क्वचित् मुखचन्द्रादौ समासे प्रागुक्तरीत्या राजेति पादेति चेत्यत्रत्यकथित प्रकारेण अस्तु लक्षणां विनाऽपि बोधस्य वाच्यार्थयोराहार्याभेदान्वयज्ञानस्य उपपत्तिः। किन्तु व्यासे समासाभावे वाक्ये लक्षणां विना बोधस्यानुपपत्तिरिति वाक्ये लक्षणाया नास्ति बाधकमर्थाल्लक्षणयैव उपपत्तिरिति।

उत्तरति=इदं न च वाच्यम्। व्यासेऽपि "कृपया सुधया सिंच हरे मां तापमूर्च्छितम्। इत्यादौ समासाभावस्थले वाक्येऽपि लक्षणया शाब्दबोधस्य अनुपपत्तेः लक्षणाया बाधकत्वस्य सत्त्वादित्यर्थः।

वालक्रीड़ा

यह शाब्दबोध होगा। इसमें अनुपपत्ति होती है कि अम्बुजाभिन्न पाद में मञ्जीरशिञ्जितत्व का सम्भव नहीं है। हां अम्बुजसदृश पाद में वह विशेषण संभव है। अतः अम्बुजाभिन्न पाद में मंजीरशिञ्जन के अनुपपन्न होंने से प्रकृत में विशेषण समास नहीं करते हैं और यदि यहाँ उपमित समासाधीन उपमा मानते हैं तब अम्बुजसदृश पाद यह शाब्दबोध होगा। उस अवस्था में तादृश पाद में मञ्जीर का पहिनना और उसका शिञ्जन पूर्ण रूप से संगत हो जाता है। इसलिए जो अम्बुज सदृश है वही पाद है और पाद शब्द का अर्थ पाद है अतः वाच्यार्थ का वाच्यार्थ के साथ अभेद बोध भी हो जाता हैं। किन्तु यदि यहां पादाम्बुजं रूपक में मानेंगे और में अम्बुजपद की अम्बुजसदृश में लक्षणा करेंगे तब उपमा की तरह रूपक में भी अम्बुजसदृश पाद में मंजीर और उसका शिञ्जन दोनों की संगति हो जाती है। किन्तु वाच्यार्थ पाद का लक्ष्यार्थ अम्बुजसदृश के साथ अभेद होगा। ऐसी अवस्था में उपमा की तरह रूपक को भी स्वीकार करने में कोई बाधक नहीं है। तब रूपक की निवर्तकता का योग नहीं हो सकता है। अतः वाच्यार्थ का लक्ष्यार्थ के साथ अभेद न मानकर वाच्यार्थ का वाच्यार्थ से वह मानना ठीक है। लक्षणा की कोई आवश्यकता नहीं है।

अवान्तर प्रश्न होता है कि "मुखचन्द्रः" "राजनारायणम्" "पादाम्बुजम्" आदि समास स्थल में कहीं पर भी तथाकथित प्रकार से लक्षणा के बिना वाच्यार्थों में अभेदान्वय बोध की उपपति हो सकती है किन्तु व्यास याने वाक्य में लक्षणा का बाधक कोई नहीं है। अर्थात् जैसे "पादाम्बुजं' मैं उपमा मानने में अम्बुजसदृश पाद में मञ्जीरशिञ्जितत्व विशेषण

**न च सिञ्चतेरपि विषयीकरणे लक्षणया नानुपपत्तिः ।**

### मर्मप्रकाशः

सिञ्चतेरिति । अपिरेवार्थः । उत्प्रेक्षेति-अत्र तु यथा न लक्षणा तथा स्फुटीभविष्यति ।

### मधुसूदनी

अयमिह परामर्शः । कृपा हि अमूर्तः पदार्थः ततः सेको भवितुं नार्हः । आहार्याभेदे सति तु सुधाभिन्नया कृपया सेको भाव्यः । यतः सुधा द्रवः पदार्थः । लक्षणाकरणे तु सुधासदृशया कृपया सेकाभावाच्छाब्दबोध एव नहि भवति इति शाब्दबोधाभवनमेव लक्षणाया बाधकमिति । अतः लक्षणां विनैवेति पक्षः समीचीनः ।

सिञ्चतेरपीति । अपिः समुच्चये । यथा सुधासदृशयेति बोधार्थं सुधापदं लक्षणाया विषयीक्रियते तथा सिञ्चतेरपि सिञ्चतिपदस्यापि अवलोकयेत्यर्थे लक्षणाया विषयीकरणे कृपासुधासदृशयोः वाच्यलक्ष्ययोरभेदान्वयबोधस्य न अनुपपत्तिः । तथा च सुधासदृशया कृपया मत्कर्मकं सेकसदृशमवलोकनमिति बोधः । ततश्च व्यासे लक्षणाया बाधकं नास्तीति न वाच्यम् । नागेशानुसारं सिञ्चतेरपीत्यत्र अपिरेवकारार्थे । तथा च सिञ्चतेरेव न तु सुधायाः । लक्षणायाः विषयीकरणे गोचरीकरणे सिंचेत्यस्य अवलोकयेत्यर्थः । एवञ्च दैहिकदैविकभौतिकतापत्रयमूर्च्छितं मां सुधया सिञ्च अभिवर्ष । कृपया सिञ्च अवलोकय । ततश्च व्यासे वाक्ये लक्षणाया बाधकं नास्तीति न वाच्यम् ।

### बालक्रीड़ा

अनुस्यूत हो जाता है एवं रूपक मानकर लक्षणा करने पर भी अम्बुजसदृश पाद में उक्त विशेषण की संगति में कोई बाधक नहीं हैं उसी तरह वाक्य में भी लक्षणा करने पर कोई बाधक नहीं है ।

उत्तर—यह कहना कि वाक्य में लक्षणा करने में कोई बाधक नहीं है यह ठीक नहीं है । क्योंकि "कृपया सुधया सिंच हरे मां तापमूर्छितम्' (सुधाभिन्न कृपा से संसार के तापों से मूर्छित पीड़ित मुझको सिक्त करो) इस वाक्य में सुधारूप कृपा से तो सेक संभावित है किन्तु लक्षणा करके सुधासदृश कृपा से सेक संभावित नहीं है क्योंकि कृपा अमूर्त पदार्थ है अन्तःकरण का धर्म विशेष हैं, द्रव पदार्थ नहीं है । अतः वाक्य में भी अद्रव कृपा से सेक का नहीं होना रूप शाब्दबोध की असंभावना ही लक्षणा का बाधक है ।

यदि कहें कि सिचतेरपि में अपि शब्द का समुच्चय अर्थ है । अतः जैसे सुधापद की सुधासदृश में लक्षणा करते हैं उसी तरह सिंचति की भी अवलोकन इस अर्थ में लक्षणा कर लेंगे । तब सुधासदृश कृपा से सेकसदृश अवलोकन मेरा करो हे हरे ? इस तरह वाच्य लक्ष्य में अभेद होने में बाधक नहीं है फलतः व्यास में लक्षणा हो सकती है ।

अथवा नागेश महाशय के अनुसार सिचति पद को ही लक्षणा का विषय माना जाय तो लक्षणा की अनुपपत्ति नहीं होगी । अर्थात् वाक्य में भी लक्षणा का बाधक कोई नहीं है ।

नागेराजी का भाव यह है कि "सिञ्चतेरपि' में अपिपद एवकार के अर्थ में अतः है सिंचति क्रिया को ही न कि सुधापद को भी लक्षणा का विषय बनाया जाय । तब यह अर्थ

**अतिशयोक्त्यतिरिक्तोत्प्रेक्षापह्नुत्यादिष्विव अत्राऽपि आहार्यज्ञानेनोपपत्तौ**

**मधुसूदनी**

**अथवा अपिः प्रश्ने। ननु सिञ्चतेर्विषयीकरणे अर्थात् सिञ्चतिरूपमानभूतः स चात्रोपात्तः अवलोकयेति विषयः उपमेयभूतः तस्य निगरणं कृतम्। तथा च अतिशयोक्ताविह लक्षणया वाच्यलक्ष्ययोर्बोधे नानुपपत्तिरिति न च वाच्यम्। "अतिशयोक्त्यतिरिक्तोत्प्रेक्षापह्नुत्यादिषु"—इति शुद्धः पाठः। अतिशयोक्तीति। अतिशयोक्तौ भवतु वाच्यलक्ष्ययोर्बोधः। तत्र लक्षणाया आचार्यैः स्वीकृतत्वात्। किन्तु अतिशयोक्तेरतिरिक्तासु उत्प्रेक्षापह्नुत्यादिषु यथा आहार्यज्ञानेन आहार्याभेद-ज्ञानेन उपपत्तिस्तथात्र रूपकेऽपि तेनैव उपपत्तौ लक्षणायां बीजस्य अन्वयानुपपत्तिरूपस्य तात्पर्यानुपपत्तिरूपस्य वा कारणस्य अभावात्।**

**बालक्रीड़ा**

होगा कि हे हरे? हे भगवन्! आधिदैविक आधिभौतिक एवं आध्यात्मिक त्रिविध तापों से मूर्छित अर्थात् उन तापों के जलन से दाह से चेतना रहित मुझको सुधा से सिक्त करो अर्थात् मुझ पर अमृत की वृष्टि करो जिससे मैं जीवित हो जाऊं और कृपा से मुझे अवलोकित करो जिससे चेतना वृद्धि को प्राप्तकर बोध को प्राप्त करूं और मुक्त होऊं।

मूर्छित प्राणी मृतप्राय हो जाता है और चेतना रहित हो जाता है अतएव बोधशून्य हो जाता है। सुधा मृतप्राणी को भी (मूर्छित को तो अवश्य ही) जीवन दान देती है किन्तु संसार दावानल के संताप से मुक्त नहीं कर सकती है क्योंकि मुक्ति ज्ञान से मिलती है और ज्ञान भगवत्कृपा से ही प्राप्त होता है। यं कामये तं तमग्रं करोमि तं ब्रह्माणं तं सुमेधाम्। यमेवैष वृणुते तस्मै एव विवृणुते तनूं स्वाम्। जिसको वह चाहता है उस उसको ब्रह्मा विष्णु एवं महेश बनाता है। जिसको यह वरण करता है उसी को अपना स्वरूप दिखा देता है यह सिद्धान्त है। तभी वह मुक्त होता है इसलिए यहाँ पर सुधा एवं कृपा दोनों पदों के उपादान से यह उपरि कथित भाव व्यक्त होता है।

अथवा अपिपद यहां प्रश्नार्थक है। इसलिए प्रश्न होता है कि क्या? इस उक्त वाक्य में सिंचति को विषयी बनाया गया है। सिंचति उपमानपद है जिसका उपादान यहां किया गया है। और उपमेय अवलोकय है जिसका उपादान नहीं किया गया है अतः निगीर्ण है। फलतः यहाँ अतिशयोक्ति अलंकार हैं। और इस अतिशयोक्ति में लक्षणा के द्वारा वाच्य और लक्ष्य में अभेद बोध करने में कोई अनुपपत्ति नहीं है। इसलिए व्यास में कोई बाधक नहीं है। यहां "अतिशयोक्यतिरिक्तोत्प्रेक्षापह्नुत्यादिषु' यह पाठ है।

उत्तर—हाँ अतिशयोक्ति में वाच्य और लक्ष्य में अभेद बोध हो सकता है। क्योंकि इन अलंकारों में लक्षणा का होना आचार्यों को अभिमत है। किन्तु अतिशयोक्ति से अतिरिक्त उत्प्रेक्षा, अपह्नुति प्रभृति में जैसे आहार्यज्ञान से उपपत्ति होती है उसी तरह रूपक में भी आहार्यभेदबोध से ही उपपत्ति करनी चाहिए। क्योंकि रूपक में लक्षणा मानने के लिए नामार्थयोरभेदन्वयः इस व्युत्पत्ति के रहते बीज अन्वयानुपपत्ति या तात्पर्यानुपपत्ति रूप कारण का अभाव है। प्रत्युत लक्षणा के मानने में अनुभव का भी विरोध होता है।

लक्षणायां बीजाभावादनुभवविरोधाच्च ।

मर्मप्रकाशः

विनिगमनाविरहादाह—अनुभवेति ।

मधुसूदनी

ननु प्रयोजनभूतः एषणीयश्चमत्कार एव प्रयोजनवतीलक्षणाया बीजमिहास्तीत्यत आह—अनुभवेति । सादृश्यसम्बन्धाज्जायमानायां गौणसारोपायां लक्षणायां प्रकृतोपयोगिफलभूतः धर्मः क इति गवेषणायां चमत्कारस्य विशृंखलत्वात्, लक्षणाकरण एव चमत्कार उदेतीति अनुभवे विरोधाच्च व्यासेऽपि लक्षणाया बाधकमस्तीत्यन्वयः ।

अत्र "उत्प्रेक्षाद्यतिरिक्तातिशयोक्त्यपह्नवादिषु" इति मुद्रितः पाठः सर्वथा अशुद्धः । प्रत्यक्षरमर्थानुसन्धानविकलत्वात् । तथाहि अपह्नवनामकः कश्चिदलंकारो नास्ति किन्तु अपह्नुतिस्ततश्च अपन्हुत्यादिषु इति करणीयम् ।

अतिशयोक्तौ आहार्यज्ञानं नहि भवति किन्तु लक्षणेति पण्डितराजः = नामार्थयोरभेदसंसर्गेण विशेष्यविशेषणभावस्य व्युत्पन्नतया रूपके तावदुचितो विषयविषयिणोस्तेन संसर्गेण विशेष्यविशेषणभावः । न तु प्रकृते । प्रकृते तु विययितावच्छेदकरूपेण विषयस्यैव भानादभेदसंसर्गस्याप्रसक्तेः । अभेदप्रधानातिशयोक्तिरिति प्रवादस्तु प्रागुक्ते संसर्गारोपरूपक इव विषयितावच्छेदकस्यैव भेदाभावरूपतया निर्वाह्यः ।

बालक्रीड़ा

अनुभव विरोध दिखाने के लिए शंका एवं समाधानों को लिखते हैं। शंका—प्रयोजनीभूत एषणीय चमत्कार ही प्रयोजनवती लक्षणा के मानने में बीज है । समाधान= सादृश्य सम्बन्ध से होनेवाली गौण सारोपा लक्षणा में यहाँ प्रकृत काव्यों के उपयोगी चमत्कार जनक तत्त्व क्या है इसी गवेषणा में चमत्कार की अनुभूति लड़खडा जाती है इसलिए लक्षणा करने पर ही चमत्कार उत्पन्न होता है इस अनुभव में विरोध होता है । फलतः व्यास में वाक्य में भी लक्षणा का बाधक है ।

यहाँ "उत्प्रेक्षाद्यतिरिक्तातिशयोक्त्यपह्नवादिषु' यह पाठ सर्वथा अशुद्ध है क्योंकि प्रत्यक्षर में अर्थानुसन्धान शून्यता है । अपह्नव नामका कोई अलंकार नहीं है । हां अपह्नुति अलंकार है । अतः अपह्नवादिषु की जगह अपह्नुत्यादिषु करना चाहिए और अतिशयोक्ति में आहार्यभेद नहीं है किन्तु लक्षणा होती है । जैसा कि पण्डितराज का लेख है । नामार्थो में अभेद सम्वन्ध से विशेषण विशेष्यभाव व्युत्पत्ति प्राप्त है अतः रूपक में विषय और विषयी में अभेद सम्बन्ध से विशेषण विशेष्यभाव होना उचित है किन्तु प्रकृत (अतिशयोक्ति) में वह उचित नहीं हैं । प्रकृत में तो विषयितावच्छेदकरूप से विषय का ही न कि विषयी का भान होता है अर्थात् एक ही पदार्थ का भान होता तव किसको विशेषण बनायें और किस को विशेष्य बनाया जाय । इसलिए अभेद सम्बन्ध की प्राप्ति ही नहीं है । अभेदप्रधान अतिशयोक्ति का निर्बाह तो विषयितावच्छेदक के भेद के नहीं मालूम पड़ने से करना चाहिए। और विषयितावच्छेक (चन्द्रत्व) से विषय (मुख) को समझने का द्वार क्या है जरिया क्या

अपि चोपमानवाचकस्य चन्द्रादिपदस्य रूपके उपमानसदृशे लक्षणा इति हि प्राचां समयः। तत्र च लक्ष्यतावच्छेदकं सादृश्यम्। तच्च समानधर्मरूपम्। स च लक्ष्यांशे सुन्दरत्वादिना विशेषरूपेण प्रतीयते,

## मर्मप्रकाशः

तत्र विसंवादादाह—अपि चेति। स च समानधर्मश्च। एवमादौ इत्यादावित्यर्थः। अत्रादिशब्दस्य प्रकारार्थत्वात्तत्प्रयोजकधर्ममाह—उपात्तेति। तद्धर्मेति। उपात्तधर्मान्या-

## मधुसूदनी

इति। अतिशयोक्तौ लक्षणा भवतीत्यत्रापि स एव–अत्र च विषये विषयिवाचकपदस्य लक्षणायाः शक्यतावच्छेदकमात्रप्रकारकलक्ष्यविशेष्यकबोधत्वं कार्यतावच्छेदकम्। इति चोक्तवाँस्ततः कथं तदुक्तीः "अतिशयोक्तौ आहार्यज्ञानेनोपपत्तौ लक्षणायां बीजाभावादित्येवं रूपाः संगताः कुर्महे। अपह्नुतावुत्प्रेक्षायाश्चाहार्यज्ञानं भवतीति स एवोक्तवान् तद्यथा=अत्र च (अपन्हुति) लक्षणे आरोप्यमाणमित्यस्याहार्यनिश्चयविषयीकरणमित्यर्थः। इति। "तद्भिन्नत्वेन प्रमितस्येति। इदं च संभावनायामाहार्यतां गमयति। तत्राभेदेन संसर्गेण धर्मिस्वरूपोत्प्रेक्षा" इति च।

रूपके लक्षणास्वीकरणे विप्रतिपत्तिरपि जायते इति प्रदर्शयितुमुपक्रमते—अपि चेति। रूपकस्थले। समयः संकेतः सिद्धान्तो वा। तत्र सिद्धान्ते। तच्च सादृश्यं च। स च धर्मश्च। लक्ष्यांशे उपमानसदृशरूपे अंशे। सामान्यरूपेण

## बालक्रीड़ा

है सिवाय लक्षणा के अतः अतिशयोक्ति में लक्षणा भी अतीव आवश्यक है। और उत्प्रेक्षा एवं अपह्नुति में तो आहार्यज्ञान के विना संगति नहीं हो सकती है अतः आहार्यज्ञान वहां नितान्त अपेक्षित है। यह सब विषय पण्डितराज के अतिशयोक्ति अलंकार एवं अपह्नुति तथा उत्प्रेक्षा अलंकारों के निरूपण में विज्ञ लोगों को देखना चाहिए।

रूपक में लक्षणा के मानने में झगड़ा भी लग जाता है इस बात को दिखलाने के लिए प्रस्तावना करते हैं कि रूपकस्थल में उपमानवाचक चन्द्रादि पद की चन्द्रादिसदृश में लक्षणा होती है यह प्राचीनों का समय सिद्धान्त है। उस सदृश में रहने वाला सादृश्य लक्ष्यतावच्छेदक है और वह सादृश्य समानधर्म रूप है।

अब प्रश्न होता है कि वह समानधर्म (लक्ष्यांश) उपमान सदृश में सुन्दरत्वादि विशेष रूप से प्रतीत होता है। या सामान्य रूप से। इसमें पहला पक्ष ठीक नहीं है क्योंकि सुन्दरत्वादि विशेष रूप से समानधर्म की प्रतीति होना मानेंगे तो सुन्दरं मुखं चन्द्रः में सुन्दर पद से अभिधया सुन्दरत्व की उपस्थिति हुई और चन्द्र पद से भी लक्षणा के द्वारा उसी सदृशनिष्ठसादृश्याभिन्न समानधर्मरूपसुन्दरत्व की उपस्थिति हुई अतः पुनरुक्ति हो जायगी।

**आलोचन।** यहाँ पुनरुक्ति नहीं होनी चाहिए। जैसे गौर्वाहीकः इत्यादि स्थलों में वाहीकं शब्द से अभिधा के द्वारा वाहीक अर्थ उपस्थित होता है और गोशब्द से भी

उताहो सामान्यरूपेण। नाद्यः। सुन्दरं मुखं चन्द्र इत्यादौ पौनरुक्त्यापत्तेः। न चैवमादावुपात्तधर्मके रूपके तद्धर्मातिरिक्तो धर्म एव लक्ष्यतावच्छेदकीभूतसादृश्यरूप इति वाच्यम्; अनुभवविरोधात्।

"अङ्कितान्यक्षसंघातैः सरोगाणि सदैव हि।
शरीरिणां शरीराणि कमलानि न संशयः॥"

## मर्मप्रकाशः

ह्लादकत्वादिरित्यर्थः। तथानुभवे विसंवादादाह—अङ्कितानीति। अक्षाणीन्द्रियाणि, अक्षाः पद्माक्षाश्च तत्समूहैर्व्याप्तानि। रोगसहितानि, सरोगामीनीति च। श्लेषेति। शब्दश्लेषनिमित्तको यो विशेषणार्थयोरभेदाध्यवसायस्तद्विषयीभूतो यो धर्मस्तव्द्याप्तत्वसरोगत्वरूपस्तमित्यर्थः। एवमग्रेपि। एवं चात्र पौनरुक्त्यं दृढमिति भावः।

## मधुसूदनी

सामान्याकारेण। पौनरुक्त्यापत्तेः। 'सुन्दरं मुखं चन्द्रः' इत्यत्र सुन्दरपदेन अभिधया सुन्दरत्वस्य उपस्थितिः। अथ च लक्षणया चन्द्रपदेनापि सदृशनिष्ठसमानधर्मसुन्दरत्वस्यैव उपस्थितिरिति पुनरुक्तेरापत्तिः।

आलोचनम्=वस्तुतस्तु न पुनरुक्तिः। यथा गौर्वाहीक इत्यत्र वाहीकशब्देनाभिधया बाहीकस्य, लक्षणयापि गोशब्दाद्वाहीकस्योपस्थितिः ततश्च व्यंजनया सामान्यविशेषयोरभेदान्वयेन समन्वयो, न पुनरुक्तिस्तथैव प्रकृतेऽपि स्यात्।

न च वाच्यमित्यन्वयः। एवमपि सुन्दरं मुखं चन्द्र इत्यादौ उपात्तः सुन्दरत्वादिरूपो धर्मो यत्र तत्र रूपके। तस्मात् उपात्ताद् धर्मादतिरिक्तो भिन्न आल्हादकत्वादिः धर्म एव। एतादृशस्थले उपात्तधर्मातिरिक्तधर्मो ग्राह्य इति अनुभवो नास्ति इति (लौकिकानां परीक्षकाणां च यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः) दृष्टान्तेन समर्थयति—अंकितानीति। अक्षाणामिन्द्रियाणां पद्माक्षाणां च। पद्माक्षः कमलगट्टा

## बालक्रीड़ा

साधारण गुणाश्रयत्वरूप सम्बन्ध को मानकर लक्षणा के द्वारा भी बाहीक की उपथिति होती है। अर्थात् गोशब्द का भी अर्थ बाहीक है और वाहीक शब्द का तो बाहीक अर्थ है ही किन्तु सिद्धान्त में पुनरुक्ति नहीं मानी जाती है। प्रत्युत गवाभिन्नो बाहीकः इस बोध के लिए वह उपस्थिति आवश्यक है तस्मात् पुनरुक्ति नहीं है।

अवान्तर प्रश्न होता है कि इस तरह के स्थलों में जहाँ रूपक में धर्म का साक्षात् शब्द से उपादान किया गया हो वहां उपात्तधर्म से अतिरिक्त धर्म ही लक्ष्यतावच्छेदकीभूत सादृश्य रूप है। उत्तर—नहीं। ऐसा नहीं कह सकते हैं। क्योंकि अनुभव विरोध है। उपात्तधर्म से अतिरिक्त धर्म को ग्रहण करने में अन्तःकरण साक्षी नहीं है। जैसाकि देखा जाता है—

अक्ष संघात याने इन्द्रिय समूह या पद्माक्षसमुदाय (कमलगट्टों का ढेर) व्याप्त हैं।

इत्यादौ श्लेषभित्तिकाभेदाध्यवसितधर्मं विना धर्मान्तरस्य सर्वथैवास्फूर्तेश्च । नान्त्यः । सादृश्यस्य शब्दोपात्तत्वेनोपमात्वापत्तेः । न च सादृश्यस्य वाच्यतायामेवोपमात्वव्यपदेशः । 'नलिनप्रतिपक्षमाननम्' इत्यादौ तदभावापत्तेः ।

## मर्मप्रकाशः

शब्दोपात्तेति । लक्षणयेति भावः । तथा च रूपकोच्छेदापत्तिरिति भावः । वाच्यतायामेवेति । शक्त्येति भावः । तदभावेति । प्रतिपक्षशब्दस्य न सादृश्ये शक्तिः । किं

## मधुसूदनी

इति प्रसिद्धः । प्रकृते च नामैकदेशे नामग्रहणमिति न्यायेन पद्माक्षैकदेशाऽक्षरूपस्योपादाने पद्माक्षो गृहीतः । संघातैः समूहैरंकितानि लक्षितानि । सदैव सरोगाणि सरोगतानि तथा रोगसहितानि "शरीरं व्याधिमन्दिर"मित्युक्तेः । एवंभूतानि शरीरिणां शरीराणि कमलानि च इति न संशयः ।

इत्यादावुदाहरणे श्लेषभित्तिको योऽभेदः श्लेषमूलकं यदेकत्वं तेन अध्यवसितं ज्ञातं सरोगत्वमक्षांकितत्वमुपात्तं धर्मं विना तं विहाय धर्मान्तरस्य उपात्तधर्मातिरिक्तस्य सर्वथैव नितान्तमस्फूर्तिरप्रतीतिः । एवं समानधर्मरूपसादृश्यस्य लक्ष्यार्थतया विशेषरूपेण प्रतीतेः खण्डनाय हेतुद्वयमुपन्यस्तम् । इदानीं सामान्यरूपेणेति मतस्य खण्डनाय आह=नान्त्य इति । मुखं चंद्र इत्यत्र चन्द्रशब्देन लक्षणया सादृश्यस्य उपात्तत्वेन हेतुना उपमात्वापत्तेः । तदभावापत्तेरिति । उपमा न भविष्यति इत्यापत्तिः । प्रतिपक्षशब्देन सादृश्यस्य लक्ष्यतया अवाच्यत्वात् ।

## बालक्रीड़ा

और सदा रोगों से ग्रस्त है या सदा सर तालाब में रहते हैं । ऐसे शरीरधारियों का शरीर या कमल हैं । इसमें कोई संशय नहीं है ।

[ यहां पद्माक्ष शब्द का एक देश अक्ष स्वरूप का प्रयोग किया गया है । (नामैकदेशग्रहणे नामग्रहणम्) इस न्याय के अनुसार अक्षशब्द से पद्माक्ष को समझा है । क्योंकि अक्ष शब्द का कमलगट्टा अर्थ कोषानुगृहीत नहीं है ]

यहाँ श्लिष्ट परम्परित रूपक में श्लेष भित्तिक जो इन्द्रियसमूह से अंकित होना ही पद्माक्ष समुदाय से व्याप्त है रोगसहित ही सरोगत हैं । इस अभेद से अध्यवसित अक्षसंघातांकितत्व और सरोगत्व धर्म के अतिरिक्त धर्म की बिलकुल स्फूर्ति नहीं होती है अतः विशेष रूप से प्रतीत होना संगत नहीं है ।

अन्त्य पक्ष भी ठीक नहीं है अर्थात् वह समानधर्मरूप लक्ष्यतावच्छेदक सादृश्य, लक्ष्यांश चन्द्रसदृश में सामान्यरूप से याने सादृश्य रूप से प्रतीत होता है यह अन्तिम पक्ष भी ठीक नहीं है । क्योंकि इस पक्ष में सादृश्य, शब्द (चन्द्रशब्द) से उपात्त (लक्षणाके द्वारा बोधित) होने से उपमा की आपत्ति लग जायगी । यहाँ का भाव यह है कि जैसे "चन्द्र इव मुखम्' में सादृश्य इवशब्द से अभिधया उपात्त है उसी तरह "मुखं चन्द्रः' में चन्द्रशब्द से लक्षणया

किं च विद्वान्मानसहंस—'इत्यादौ श्लिष्टपरम्परितरूपके श्लेषनिष्पत्तौ श्लेषभित्तिकाभेदाध्यवसानेन मानसवासित्वरूपे भूपहंसयोः सादृश्ये सिद्धे सदृशलक्षणामूलस्य भूपे हंसरूपकस्य सिद्धिः। तस्यां च सत्यां सरोमनो-

## मर्मप्रकाशः

तु लक्षणेति भाव। इष्टापत्तावाह्--किं चेति। विद्वदिति। 'विद्वन्मानसहंस ? वैरिकमलासंकोचदीप्तद्युते ? दुर्गामार्गणनीललोहित ? समित्स्वीकारवैश्वानर ? सत्यप्रीतिविधानदक्ष ? विजयप्राग्भारभीम ? प्रभो ? साम्राज्यं वरवीर ? वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥' इत्यादावित्यर्थः। अत्र मानसमेव मानसमित्यादिश्लेषः। तस्यां रूपकसिद्धौ। तद्घटकेति। लक्ष्यतावच्छेदकेत्यर्थः।

## मधुसूदनी

श्लेषेति। मानसशब्दे श्लेषस्य "मानसं सरः चित्तं च" इत्यर्थद्वयस्य निष्पत्तौ। भूपहंसयोः मानसवासित्वरूपे सादृश्ये सिद्धे सतीति शेषः। भूपे सदृशलक्षणामूलस्य हंसरूपकस्य सिद्धिः। तस्यां हंसरूपकसिद्धौ च।

परस्पराश्रयमेव स्फोरयितुमाह नहीति। न हि किंचित् प्रमाणं रूपकातिरिक्त मवतरति प्रभवतीत्यर्थः। सदृशलक्षणामूले हंसरूपके। हंसरूपकघटकसादृश्यस्य मानसवासित्वरूपस्य आपाद्यस्य। अन्यथा श्लेषभित्तिकाभेदाध्यवसानरूपोपपा-

## बालक्रीड़ा

सादृश्य उपात्त है। यहां शंका यह हो सकती है कि चन्द्र सदृश में लक्षणा की जाती है अतः सदृश ही लक्षणा से प्राप्त हुआ न कि सादृश्य। तब सादृश्य शब्दोपात्त कैसे हुआ ? उत्तर–जैसे नैयायिकों के यहाँ गोत्वविशिष्ट नें शक्ति होने पर गोत्व भी विशेषण विधया शक्तिलभ्य है उसी तरह सादृश्य विशिष्ट सदृश के लक्ष्य होने पर सादृश्य भी लक्षणा से प्राप्त हुआ है।

**प्रश्न**—साधारण तौर से मान्यता है कि सादृश्य की वाच्यता में ही उपमा होती है किन्तु प्रकृत में सादृश्य लक्षणालभ्य है तब उपमा कैसी।

**उत्तर**—यह मान्यता अग्राह्य है। क्योंकि ऐसी मान्यता में "नलिनप्रतिपक्षमाननम्" में सादृश्य प्रतिपक्ष शब्द का वाच्य नहीं है अपितु लक्ष्य है तब भी सिद्धान्त में जो उपमा मानी जाती है वह नहीं मानी जायगी।

इसके सिवाय एक बात और भी है कि "विद्वन्मानसहंस" इस तरह के श्लिष्टपरम्परित रूपक में सर एवं मन इन दो अर्थों के कथनरूप श्लेष के निष्पन्न होने पर ही अर्थात् श्लेष के बदौलत होने वाला अभेद एकत्व के ज्ञान से भूप और हंस में मानसवासित्वरूप सादृश्य सिद्ध होता है और उस सादृश्य के सिद्ध होने पर ही भूप में सदृशलक्षणामूल हंस रूपक की सिद्धि होती है। तथा रूपक की सिद्धि होने पर सर एवं मन रूप अर्थ द्वय के अभिधान रूप श्लेष की निष्पत्ति होती है। इस तरह यहां परस्पराश्रय दोष है। क्योंकि रूपक श्लेष का आश्रय लेता है और श्लेष रूपक का आश्रय लेता है।

रूपार्थद्वयाभिधानलक्षणस्य श्लेषस्य निष्पत्तिरिति परस्पराश्रयः। नहि रूपकास्फूर्तौ सरोरूपेऽर्थे मानसशब्दस्य तात्पर्यं वेदयितुं किंचित्प्रमाणमवतरति। स्फुरिते तु रूपके तद्घटकसादृश्यान्यथानुपपत्तिरूपेण प्रमाणेनार्थद्वयाभेदबोधकफलकस्य तदुभयप्रतिपादनात्मनः श्लेषस्य निष्पत्तिः। अतो नामार्थयोरभेदान्वयसरणिरेव रूपकस्थले रमणीया।

सदृशलक्षणायाः फलं रूपके ताद्रूप्यप्रत्यय इत्यपि न हृदयंगमम्। तत्सदृश इति शब्दात्सादृश्यप्रत्यये सत्यपि ताद्रूप्यप्रत्ययापत्तेः'' इत्याहुः।

### मर्मप्रकाशः

अर्थद्वयेति। सरोमनोरूपेत्यादिः। प्राचोक्तमन्यत्खण्डयति—सदृशेति।

### मधुसूदनी

दकं विना अनुपपत्तिः। एतद्रूपेण अर्थापत्तिप्रमाणेन सरोमनोरूपार्थद्वयस्याभेदबोध एव फलं यस्य तस्य। तदुभयस्य अर्थद्वयस्य प्रतिपादनमेवात्मा यस्य तस्य। अतः अन्योन्याश्रयाख्यदोषसद्भावात्। इत्याहुरित्यस्वरसोद्भावनं तन्मतोक्तयुक्तीनामापात रमणीयत्वप्रतीतेः।

### बालक्रीड़ा

क्योंकि जबतक रूपक की स्फूर्ति नहीं होगी तबतक सरो रूप अर्थ में मानसशब्द का तात्पर्य है इस बात को बतलाने के लिए कोई प्रमाण अवतरित नहीं होता है किन्तु रूपक के स्फुरित होने पर रूपक घटक (सम्पादक) सादृश्य की अन्यथा श्लेपभित्तिक अभेदाध्यवसाय के बिना उपपत्ति संगति नहीं होने रूप अर्थापत्तिप्रमाण से सरोमनोरूप अर्थद्वय में अभेद बतलाना ही फल जिसका है उस उभयार्थ प्रतिपादन स्वरूप श्लेष की निष्पत्ति होती है अतः रूपक में लक्षणा मानने से अन्योन्याश्रय दोष की प्रसक्ति अनिवार्य है फलतः नामार्थों में अभेदान्वय की सारणि ही रमणीय है।

रूपक में सदृश लक्षणा का फल ताद्रूप्य प्रत्यय है यह भी हृदयंगम नहीं है। क्योंकि "तत्सदृशः" इस शब्द से सादृश्य के प्रतीत होने पर भी ताद्रूप्य की प्रतीति होने लगेगी।

आलोचन। यहां नव्यमत में आलोच्य दो अंश हैं—पहला अंश है (सादृश्यस्य शब्दोपात्तत्वेन) सादृश्य के शब्दोपात्त होने पर। दूसरा अंश है—रूपक में लक्षणा करने पर "विद्वन्मानसहंस" जैसे श्लिष्ट परम्परित रूपक में अन्योन्याश्रय दोष हो जाता है।

भगवन्! "मुखं चन्द्रः" इसमें चन्द्रपद की चन्द्र सदृश में लक्षणा करते हैं अतः यहां सदृश लक्ष्य है और सादृश्य लक्ष्यतावच्छेदक है। इस अवस्था में सादृश्य शब्दोपात्त कैसे हुआ। शब्दोपात्त पदार्थ वही कहलाता है जो अपने वाचक शब्द से कहा गया हो। जैसे सादृश्य के वाचक इव शब्द या इव के अर्थ में "तत्र तस्येव" इस सूत्र से विहित वति प्रत्यय या यथा प्रभृति शब्दों से जब सादृश्य कहा जायगा तभी वह शब्दोपात्त कहलायेगा अन्यथा नहीं। यदि इस सिद्धान्त को मान्यता नहीं दी जायगी तो आपके ही द्वारा किया गया श्रौती आर्थी का विभाग सब व्याकुल हो जायगा।

## बालक्रीड़ा

प्रकृत में चन्द्रपद चन्द्रत्व या चन्द्र अर्थ का बोधक है न कि सादृश्य का तब सादृश्य शब्दोपात्त कैसे हुआ। यदि कहें कि अभिधा से तो वह शब्द उन्हीं अर्थों का बोधक है सादृश्य का नहीं किन्तु लक्षणा से वह सादृश्य का बोधक है। तब भी ठीक नहीं है। क्योंकि लक्षणा से भी वह चन्द्र सदृश का ही बोधक है न कि सादृश्य का। यदि कहें कि सदृश सादृश्य विशिष्ट ही होता है अतः सदृश का बोधक मानना सादृश्य का बोधक मानना हो जायगा। तब भी ठीक नहीं है, क्योंकि

निखिलजगन्महनीया यस्याभा नवपयोधरवत्,
अम्बुजवद्विपुलतरे नयने तद् ब्रह्म संश्रये सगुणम्।

इस उपमालंकार के उदाहण के समन्वय में आपने लिखा है कि (अत्र पूर्वार्द्धे वतेः "तत्र तस्येव" इति सादृश्ये विधानाच्छ्रौती। उत्तरार्धे "तेन तुल्यम्" इति विधानात् सादृश्यवदर्थकतया आर्थी) यहां पूर्वार्द्ध में तत्र तस्येव इस सूत्र से सादृश्य अर्थ में वति का विधान है अतः श्रौती है। उत्तरार्द्ध में "तेन तुल्यम्" इस सूत्र से सादृश्यवान् सदृश अर्थ में वति का विधान है (न कि सादृश्य अर्थ में) अतः आर्थी है।

अब आप ही बतलाइये कि सदृश का बोधक मानना भी यदि सादृश्य का बोधक मानना हो जायगा तब तुल्यार्थक वति के प्रयोग में सादृश्य का भी प्रतिपादन हो जाने से शाब्दी उपमा क्यों नहीं मानी गई आर्थी क्यों मानी गई। क्योंकि श्रौती का निरूपण करते समय आपने लिखा है कि (सादृश्यस्य श्रुत्या बोधनाच्छ्रौती) इत्यादि स्थल में सादृश्य का बोध श्रुति याने शब्द से होता है अतः श्रौती है। तब रूपक में भी लक्षणा के द्वारा सदृश ही का बोध होने पर सादृश्य शब्दोपात्त कैसे हो सकता है तस्मात् प्रकृत में सादृश्य को शब्दोपात्त कहना गड़बड़ ही है।

"विद्वन्मानसहंस" ऐसे श्लिष्ट परम्परित रूपक में अन्योन्याश्रय दोष की प्रसक्ति कहना ठीक नहीं है। क्योंकि बिना एक दूसरे का सहारा लिए जब वाञ्छित स्वरूप ही न बने तब अन्योन्याश्रय दोप है जैसे "आदिरन्त्येन सहेता" को अन्त्य इत् की अपेक्षा है जब उसको अन्त्य इत् का ज्ञान हो तब उसके सहारे प्रत्याहार बनावे और हलन्त्यं को हल् प्रत्याहार की अपेक्षा है। जब उसको हल् प्रत्याहार का ज्ञान हो तब उसके सहारे औपदेशिक अन्त्य हल् की इत् संज्ञा करे। इन व्याकरण के सूत्रों को छोड़कर अन्यत्र संसार में कहीं पर भी इनकी सत्ता नहीं है इसलिए एक दूसरे का आश्रय लेना आवश्यक हो जाता है। प्रकृत में हंस संसार में प्रसिद्ध है और उसका मानस सरोवर में रहना भी प्रसिद्ध है। राजा भी स्वतन्त्र प्रसिद्ध है। कवि के मन में इच्छा हुई कि राजा को हंस बनाया जाय। कल्पना जगत् भी है हंस बना दिया। अब विचार करना है कि मनुष्य पक्षी कैसे हो सकता है हाँ हंस सदृश हो सकता है तब सादृश्य का निरूपण किया गया मानसवासित्व? यह भी कोई जरूरी नहीं है कि मानसवासित्व ही सादृश्य हो तभी राजा हंस बने। नीर-क्षीर-विवेकित्व, गुण-दोष-विवेकित्व, कर्मणा, मनसा, वाचा शुक्लत्व रूप अनेकविध सादृश्य हैं। तात्कालिक इच्छा हुई कि हंस मानस में रहता है राजा भी तत्तद्विषयकज्ञानवत्व रूप सम्बन्ध से विद्वन्मन में रह सकता है। यह कोई बात नहीं है कि जब तक श्लेष द्वारा साधारण धर्म मानस

**अत्रेदं विचार्यते यत्तावदुच्यते नामार्थयोरभेदान्वयबोधेनैवोपपत्तौ रूपके**

### मधुसूदनी

अत्रेदमिति । अत्र नव्यमते इदं विचार्यते अयं समनन्तरं क्रियमाणो विचारः प्रस्तूयते । रूपके लक्षणा नास्ति किन्तु आहार्याभेदबोध एव । तथा च सादृश्यं साधारणधर्मरूपं न प्रतीयते इति यदुच्यते, तत्रोक्तौ इत्यस्य इति सकलसहृदयसिद्धमित्यत्रान्वयः । चमत्कारिणः साधारणधर्मस्य या अनुपस्थितिदशा तस्याम् । अन्यथा तदनुपस्थितिदशायां रूपकालंकारस्यापि निष्पत्तेस्तदुत्थचमत्कारस्य चाभावानंगीकारे । अनुन्मिषन्त्या उन्मेषमुद्गममप्राप्नुवन्त्याः । सुपर्वेति सकलेति साधारणधर्मप्रतिपादकशब्दश्रुतेरनन्तरं कथं सर्वेषां सहृदयानां समुन्मेषः समुद्भवो भवति । भारतं नाकमण्डलम्, भारतं वर्षम् । वर्षं तद् भारतं नाम भारती यत्र सन्ततिः । नाकमण्डलमिति भारते स्वर्गं वारोपः । सुपर्वभिर्देवैरलंकृतं स्वर्गमण्डलम् । सुन्दरैः पर्वभिर्महोभिरलंकृतं भारतं वर्षम् । भारतं महाभारतं प्रसिद्धो ग्रन्थः । तत्र तत्वारोपस्तत्र सुन्दरैः पर्वभिः ग्रन्थविच्छेदरूपैरष्टादशभिः आदिसभावनविराटोद्योगैश्च भीष्मद्रोणकर्णप्रमृतिरलंकृतं शोभितम् । नगरं विधुमण्डलमित्यत्र नगरे विधुत्वारोपः । सकलाः कलाः षोडश अंशा यत्र ।

### बालक्रीड़ा

वासित्वरूप उपस्थित नहीं किया जायगा तबतक राजा को हंस कहा ही नहीं जा सकता । हंसीव कृष्ण ते कीर्तिः स्वर्गंगामवगाहते । यहां कौन मानसवासित्व रूप साधारण धर्म है । और स्वर्गंगामवगाहते में कौन श्लेष है । हंसीव कृष्ण ते कीर्तिः शुक्ला सर्वत्र राजते । यह भी कह सकते हैं । तस्मात् यहां लक्षणा मानने में परस्पराश्रय दोष होता है यह कहना ठीक नहीं है ।

यदि कहें कि प्रकृत में तो राजा को हंस बनाने के लिए मानसवाचित्व रूप शब्द सादृश्य है । अस्तु । परन्तु इसी पद्य में राजा को सूर्य बनाने के लिए जो "वैरि कमला संकोच" शब्द का उपन्यास किया है उसमें कौन साम्य है । एक तरफ वैरियों की लक्ष्मी अर्थ लेने के लिए "वैरि कमला" इतना शब्द लेते हैं । दूसरी तरफ केवल कमल (पुष्प) लेते हैं वैरि शब्द को छोड़ते हैं तब शब्द साम्य भी नहीं कह सकते हैं । अतः जहां आहार्य ही बोध है इच्छा का ही विलास है वहां अन्योन्याश्रय दोष की प्रसक्ति कैसी नामार्थो में अभेद की सरणि में भी तो आपको आहार्य ही अभेद मानना पड़ता है अतः दोष नहीं है । सब ठीक है ।

जो तो कहते हैं कि "नामार्थों में अभदान्वय बोध से ही उपपत्ति संगति हो सकती है अतः रूपक में लक्षणा नहीं है" इस नव्य मत में विचार यह है कि "मुखं चन्द्रः" में लक्षणा करते हैं जब चन्द्र पद से चन्द्र सदृश की लक्षणा से उपस्थिति होती है तब उस सादृश्य को लेकर मुख में चन्द्र रूपत्व की निष्पत्ति होती है और चमत्कार भी मिलता है और यदि लक्षणा नहीं करेंगे तो चमत्कारी साधारण धर्म रूप सादृश्य की उपस्थिति नहीं होगी । तब सादृश्य प्राण उपमालंकार की तरह सादृश्यमूलक रूपक की भी निष्पत्ति नहीं होगी तथा चमत्कार भी नहीं होगा यह सिद्धान्त सकल सहृदय सिद्ध

नास्ति लक्षणेति, तत्र चमत्कारिसाधारणधर्मानुपस्थितिदशायामुपमालंकारस्येव रूपकालंकारस्यापि नास्ति निष्पत्तिश्चमत्कारो वेति सकलहृदयसिद्धम्। कथमन्यथा 'भारतं नाकमण्डलम्' नगरं विधुमण्डलम्' इत्यादिवाक्यश्रवणानन्तरमनुन्मिषन्त्या रूपकप्रतिपत्तेः सुपर्वालंकृत—सकलकलादिशब्दश्रवणोत्तरमेव समुन्मेषः सर्वेषाम्। इत्थमेव च मुखं चन्द्र इत्यादिप्रसिद्धोदाहरणेऽपि। इयांस्तु विशेषः--यदेकत्र साधारणो धर्मः प्रसिद्धतया नियमतः स्वबोधकश्रुतिं नापेक्षते। इतरत्र त्वप्रसिद्धतया तथा।

## मर्मप्रकाशः

नास्ति लक्षणेतीति। मास्तु लक्षणा। नामार्थयोश्चाभेदान्वय एवास्तु। न च बाधज्ञानं प्रतिबन्धकम्। सादृश्यज्ञानरूपदोषस्योत्तेजकत्वात्। एतज्ज्ञानं च प्रसिद्धसादृश्यकस्थले साधारणधर्मानुपादाने एकसंबन्धिज्ञानादपरसंबन्धिस्मरणन्यायेन। साधारणधर्मस्मृतौ च दोषविशेषसहकारेण शब्दादभेदप्रत्ययः। शङ्खे पीतत्वाभावनिश्चये काच-कामलादिदोषेण तत्पीतत्वप्रत्यक्षवत्। रूपके आहार्यबुद्धिरिति प्राचीनव्यवहारे बाधबुद्धिकालिकत्वमात्रे आहार्यपदं लाक्षणिकम्। इव शब्दादिसमभिव्याहारे तु तेन भेदगर्भसादृश्यस्यैवोपस्थापनान्नाभेदप्रतीतिरिति मम प्रतिभाति। तत्र दोषं वक्तुमाह—तत्रेत्यादिना।

चमत्कारी यः साधारणधर्मस्तदनुपेत्यर्थः। उभयत्र क्रमेण साधारणधर्ममाह—सुपर्वेति। देवालंकृतत्वं आदिसभाप्रभृतिपर्वालंकृतत्वं चेत्यर्थः। सकलकलेति। कला षोडशो भागः कौशलं च। एकत्र प्रसिद्धोदाहरणे। इतरत्राप्रसिद्धोदाहरणे तु। तथेति। नियमेन स्वबोधक-

## मधुसूदनी

कलकलेन सहितम्। सकलाः चतुषष्टिः कलाः, अथवा शिल्पादिर्यत्र तन्नगरम्। एकत्र प्रसिद्धे। स्वस्य साधारणधर्मस्य बोधिकां श्रुतिं शब्दम्। इतरत्राप्रसिद्धे तथा अपेक्षते।

## बालक्रीड़ा

है। यदि यह सिद्धान्त सकल सहृदय सिद्ध नहीं होता तो (भारतं नाकमण्डलम्) भारत स्वर्ग प्रदेश है, (नगरं विधुमण्डलम्) नगर चन्द्रमण्डल है इस तरह के वाक्यों के सुनने के वाद भी उन्मेष को नहीं प्राप्त होनेवाली रूपक प्रतिपत्ति का समुन्मेष (सुपर्वालंकृतम्) सुपर्व देवताओं से अलंकृत स्वर्ग देश, सुन्दर पर्व, अध्यायों सभा-वन-विराट आदि से सुशोभित भारत महाभारत ग्रन्थ, (सकल कलम्) सकल कलाओं वाला चन्द्रमण्डल तथा कलकल सहित नगर आदि शब्दों के सुनते ही कैसे सबको हो जाता है। इसी प्रकार मुखं चन्द्र आदि प्रसिद्ध उदाहरणों में भी। हाँ इतनी विलक्षणता है कि एक जगह (मुखं चन्द्रः) में साधारणधर्म प्रसिद्ध होने के कारण अपने को बोधन करने वाले शब्द की अपेक्षा नहीं करता है। दूसरी जगह भारतं नाकमण्डलम् नगरं विधुमण्डलम् में अप्रसिद्ध होने के वह साधारण धर्म स्वबोधक शब्द की अपेक्षा करता है।

एवं स्थिते साधारणधर्मवत्त्वरूपं सादृश्यं यदि रूपकमध्यं न प्रविशेत्तदा कथमिव धर्मविशेषानुपस्थितिदशायां रूपकं पर्यवस्येत्, चमत्कारं वा जनयेत्। उपमानोपमेययोराहार्याभेदबुद्धौ तु अनन्यापेक्षपर्यवसानत्वस्य

### मर्मप्रकाशः

श्रुतिमपेक्षत इत्यर्थः। कथमिव कथमपि। अनन्यापेक्षेति। रूपकस्य तु धर्मविशेषोपस्थि-

### मधुसूदनी

एवं स्थिते साधारणधर्मरूपस्य सादृश्यस्य उपस्थितौ सत्यामेव उपमाया इव रूपकस्य निष्पत्तिस्तदनुपस्थितौ तु न निष्पत्तिरिति सिद्धान्ते। साधारणधर्मवत्वरूपं सादृश्यं यदि रूपकमध्यं न प्रविशेदर्थान्नोपतिष्ठेत्तदा तर्हि तव नव्यस्य मते कथमिव, साधारणधर्माप्रवेशदशायां रूपकं पर्यवस्येत् परिणमेत्। कथमिव चमत्कारं जनयेत्। अर्थान्न पर्यवस्येदेव। न चमत्कारं जनयेत्। तच्च सादृश्यं लक्षणालभ्यमतो रूपके साधारणधर्मरूपसादृश्यप्रत्ययार्थं लक्षणा स्वीकार्या।

ननु रूपके यथा द्वयोः पदार्थयोः सादृश्यमपेक्षितमन्यत्रापि सर्वत्र तथा नामार्थयोः तदपेक्ष्यतामित आह=आहार्याभेदबुद्धौ तु अनन्यापेक्षितर्यवसानत्वस्यः योग्यताज्ञान सादृश्योपस्थितिनिराकांक्षत्वस्य साम्राज्यम् सर्वाधिकारसम्पन्नत्वाद्धेतोर्धर्मविशेषोपस्थितेरावश्यकता नास्ति इत्यर्थः। तदेतदुक्तं=न सादृश्योपस्थितरेपेक्षेति। अन्ये योग्यताज्ञानसादृश्योपस्थिती यन्नापेक्षते तदनन्यापेक्षं तथाभूतं पर्यवसानं यस्यास्तस्य भावस्तस्य पुंस्त्वम्। ननु एतद्बुद्धावपि तत्प्रयोजकमस्तु, का हानिः तत्राह—न चेति। इति

### बालक्रीड़ा

ऐसी स्थिति में जब कि साधारण धर्मरूप सादृश्य की अनुपस्थिति में रूपक की निष्पत्ति अथवा चमत्कार नहीं होता है तब साधारण धर्म की अनुपस्थिति की हालत में कैसे रूपक का पर्यवसान होगा और कैसे चमत्कार होगा। अर्थात् सादृश्य के विना न रूपक की निष्पत्ति होगी और न चमत्कार ही प्राप्य होगा। और वह सादृश्य लक्षणा लभ्य है अतः रूपक में लक्षणा अनिवार्य ह।

**प्रश्न**—रूपक में जैसे दो पदार्थों में उसकी निष्पत्ति एवं चमत्कार के लिए सादृश्य अपेक्षित है वैसे ही अन्य नामार्थों में सभी जगह नीलो घटः इत्यादि में भी सादृश्य की अपेक्षा करनी चाहिए क्या !

**उत्तर**—जहाँ उपमान एवं उपमेय में आहार्याभेदबुद्धि होती है वहाँ योग्यता ज्ञान एवं सादृश्य की अपेक्षा नहीं होती है। क्योंकि उसका तो साम्राज्य है। अर्थात् आहार्याभेद बुद्धि तो सर्वाधिकार सम्पन्न है स्वतन्त्र है अतः उसको सादृश्य की उपस्थिति की आवश्यकता नहीं है। अन्य (योग्यता ज्ञान एवं सादृश्योपस्थिति) की जो अपेक्षा नहीं करे वह अनन्यापेक्ष कहाती है। अनन्यापेक्ष है पर्यवसान निष्पत्ति जिसकी, उसको अनन्यापेक्षपर्यवसान कहते हैं। यह अक्षरार्थ है।

साम्राज्यम्। न चाहार्यपदार्थद्वयाभेदबुद्धौ तच्चमत्कारे वा साधारणधर्म-विशेषज्ञानं प्रयोजकमिति शक्यं वक्तुम्।

'यद्यनुष्णो भवेद्वह्निर्यद्यशीतं भवेज्जलम्।
मन्ये दृढव्रतो रामस्तदा स्यादप्यसत्यवाक्॥'

### मर्मप्रकाशः

त्यपेक्षं पर्यवसानमिति भावः। विशेषज्ञानमिति। तथा च तदभावादभेदबुद्धिरपि न

### मधुसूदनी

वक्तुं न शक्यमित्यन्वयः। आहार्या या पदार्थद्वयविषयिणी अभेदबुद्धिस्तस्याम्। अथवा तज्जनितचमत्कारे।

अभेदबुद्धौ सादृश्यज्ञानस्य प्रयोजकता नास्तीति उदाहरणेन साधयितुमाह =यद्यनुष्ण इति। तदा कदाचित्स्यादपि। अप्रत्ययेऽपि अनुपस्थितावपि। अत्र अनुष्णत्वादीनामिति पाठे त्वप्रत्ययो मुद्रितोऽशुद्धः। यतो धर्मिणोरभेदो विवक्षितः, न तु धर्मयोः। वह्निस्तु उष्ण एव न तु अनुष्णः शीतः। एवं जलं शीतमेव स्वभावतः न तु अशीतमुष्णम्। यदि कदाचित्प्रकृतिविपर्ययो भवेत्तदा मन्ये हठव्रतो रामोऽसत्यवाक् भवेत्। सादृश्यं चात्र किमपि नास्ति; परं तद्विनाऽपि अभेदबोधः अनुष्णाभिन्नो वह्निः, अशीताभिन्नं जलमित्येवंरूपो भवत्येवेति। अयं साधारणधर्मो-पस्थितेरावश्यकतारूपो नवीनो विशेषः वैलक्षण्यम्।

ननु क एवमाह सर्वत्राभेदबोधे साधारणधर्मापेक्षा, विशेषणविशेष्यभावस्थले नीलो घट इत्यादावभेदबोधे सा नास्ति किन्तूपमानोपमेययोरभेदबोधस्थले साधारण-

### बालक्रीड़ा

यह नहीं कह सकते कि दो पदार्थों में आहार्याभेद एवं तज्जनित चमत्कार में भी (सामान्य का नहीं अपितु) विशेष साधारण धर्म का ज्ञान प्रयोजक है।

इसको दृष्टान्त से सिद्धान्त करते हैं जिस अर्थ में लौकिक व्यवहार एवं शास्त्रीय सिद्धान्त को जानने वालों का बुद्धि साम्य हों वह पदार्थ दृष्टान्त रूप से उपन्यस्त होता है। यहां इस "यद्यनुष्ण:" पद्य की वृत्ति में अनुष्णत्वादीनां इस प्रकार त्वप्रत्यय वाला मुद्रित पाठ अशुद्ध है। क्योंकि यहां धर्मियों में अभेद कहना है न कि धर्मों में अतः अनुष्णदीनां पाठ शुद्ध है।

यदि अग्नि गरम नहीं रहे और जल शीतल नहीं रहे अर्थात् प्रकृति में विपर्यय हो जाय तब मानता हूँ कि दृढ़व्रत राम झूठ बोल सकते हैं।

यहां साधारण धर्म के ज्ञान नहीं होने पर भी "अनुष्णाभिन्नो वह्नि" "अशीताभिन्नं जलम्" ऐसा अभेदबोध हो जाता है।

विशेषण विशेष्य भाव स्थल नीलो घटः इत्यादि में साधारण धर्म की उपस्थिति के

इत्यादौ साधारणधर्मस्याप्रत्ययेऽपि वह्न्यनुष्णादीनामभेदप्रत्ययोपगतेः। न चोपमानोपमेयस्थल एवायं नवीनो विशेष इति वाच्यम्। ईदृशविशेषकल्पने मानाभावात्। साधारणधर्मानुपस्थितिदशायामपि 'मुखं यदि चन्द्रः स्यात्तदा भूम्यवस्थितं न स्यात्' इत्यादौ तादृशप्रतीत्युपगमाच्च।

मर्मप्रकाशः

स्यादिति भावः। वह्न्यनुष्णेति। वह्न्यादावनुष्णाद्यभेदप्रतीतेरित्यर्थः। न चोपमेति। वह्न्यनुष्णादीनां तु नोपमानोपमेयत्वम्। अत एव तत्र रूपकादिकं न। अभेदबुद्धिस्तु तत्रास्तीति भावः। न त्वन्यथानुपपत्तिरेव मानं तत्राह--साधारणेति। तादृशेति। उपमानोपमेययोश्चन्द्रमुखयो रूपकसत्त्वेनाभेदप्रतीत्यङ्गीकारादित्यर्थः। तस्मादभेदबुद्धौ [1]तस्य प्रयोजकत्वस्य दुर्वचतया [2]सैव स्यात्। [3]रूपकं न पर्यवस्येत्। अतस्त [4]दुपस्थित्यर्थं लक्षणा-

मधुसूदनी

धर्मरूपसादृश्यज्ञानं प्रयोजकमिति चेदाह न च वाच्यम्। ईदृशविशेषनियमकल्पने साधकं प्रमाणं नास्ति प्रत्युत बाधकं वर्त्तते कथं तदाह—साधारणेति। मुखं यदीति। अयमिह परामर्शः। मुखं यदि चन्द्रः स्यात्तदा भूम्यवस्थितं न स्यादत्र वाक्ये मुखं चेच्चन्द्रः चन्द्ररूपं चन्द्राभिन्नं स्यात्तदा भूमौ अवस्थितं न स्यात् चन्द्रस्य भूमिस्थितिविरुद्धा आकाशे एव चन्द्रस्य अवस्थानात्। इदं तु चन्द्राभिन्नं मुखं भूमौ वर्तते। कथमेतत्। असंगतमेतत्। आम्। यदि तु चन्द्रसदृशं मुखमिति लक्षणया प्रत्ययो भवेत्तदा चन्द्रसदृशस्य तस्य भूमाववस्थानं विरुद्धं न स्यात्। किन्तु चन्द्रसदृशं

बालक्रीड़ा

विना भी अभेदबोध हो सकता है किन्तु उपमानोपमेयभावस्थल में तो उसकी नितान्त आवश्यकता है अतः वहीं पर ही ऐसी नवीन विशेष (सादृश्योपस्थिति) की कल्पना की जाती है। यह भी नहीं कह सकते हैं। क्योंकि ऐसी विशेष कल्पना में कोई साधक प्रमाण नहीं है प्रत्युत बाधक ही है। जब कि साधारण धर्म की अनुपस्थिति दशा में भी "मुख यदि चन्द्र होता तो भूमि में अवस्थित नहीं होता" इस वाक्य में मुख यदि चन्द्राभिन्न माने चन्द्ररूप होता तो भूमि में नहीं रहता। चन्द्र जैसे आकाश में रहता है उसी तरह उसको भी आकाश में रहना चाहिए। वह तो भूमि में है तब मुख को चन्द्र कैसे कहा जा सकता है। हां "मुख चन्द्रमा के समान है" ऐसी विवक्षा होती तो मुख का भूमि में अवस्थान विरुद्ध नहीं होता किन्तु वैसा विवक्षित नहीं है। क्योंकि सादृश्य बोधक कोई पद यहाँ नहीं है। और न कोई विशेष धर्म ही उपस्थित है। हाँ "मुखं कान्त्याकाशचन्द्रः" कान्ति का आसमन्तात् काश ही प्रकाश ही आकाश है उसमें रहनेवाला चन्द्र मुख है इस तरह आकाश-सम्बन्धित्वरूप साधारणधर्म कहा जाता तो मान लेते कि उपमानोपमेयस्थल में साधारण धर्म आवश्यक है। किन्तु ऐसा धर्म कहा नहीं गया है तथापि आहार्याभेद की प्रतीति मानी गई

---

[1] सादृश्यस्य। [2] लक्षणैव।
[3] सादृश्याभावे। [4] सादृश्यस्य उपस्थितये।

ननु रूपकप्रतीतेरुपमानाभेदविषयत्वविरहे सिंहेन सदृशो नाऽयं किं तु

## मर्मप्रकाशः

वश्यमाश्रयणीयेति भावः। तत्र शङ्कते—ननु रूपकेति। विरहे इति। नामार्थयोरभेदान्वय

## मधुसूदनी

मुखमिति विवक्षितं नास्ति। तथा विवक्षायां तु भूम्यवस्थितं न स्यादिति कथनमसंगतं स्यात्ततश्चात्र न सादृश्योपस्थितिः। तस्मादभेदबुद्धिः साधारणधर्मोपस्थितिं विनाऽपि अभ्युपगम्यते। तदेतदुक्तं=तादृशप्रतीत्युपगमाच्चेति।

एवं प्रसंगेन साधारणस्थले लक्षणालभ्यसादृश्यप्रतीतिं विनाऽभेदं प्रसाधयितुरुपमानोपमेयस्थलेऽपि तां विना तं प्रसाधितं स्वीकर्तुर्वादिनः शंकां रूपके दर्शयितुमाह=नन्विति। इदं हृदयम्। यदि रूपके लक्षणा एव भवति, अभेदो; न तर्हि "अयं नराधिपः सिंहेन सदृशो न, किन्तु सिंहः" इत्यत्र सिंहपदस्य लक्षणया सिंहसदृश इत्येवार्थः। ततश्च पूर्वं यस्य नराधिपस्य सिंहसादृश्यनिषेधः क्रियते पश्चात्तस्यैव राज्ञः सिंहसादृश्यविधानं संगतं न। अभेदस्वीकारे लक्षणाया अभावे तु सिंहसादृश्यं निषेध्यं सिंहाभेदो विधेयः न काप्यसंगतिरिति। चेन्न। ताद्रूप्यप्रतिपत्तेरभेदज्ञानस्य प्रतिपादनात्। लक्षणाफलत्वेन।

## बालक्रीड़ा

है। और मुख और चन्द्र में उपमानोपमेयभाव प्रसिद्ध है। अतः अभेदबोध के लिए साधारण धर्म की उपस्थिति न भी रहे तब भी कोई आपत्ति नहीं है यह सिद्ध है।

इस प्रकार प्रसंग से साधारणस्थलों "अनुष्णो वह्निः" आदि में लक्षणा प्राप्त सादृश्योपस्थिति के बिना भी अभेद को सिद्ध करते हुए उपमानोपमेयस्थल में भी उसके बिना अभेद बोध को मानने वाले वादी की शंका का निरूपण करते हैं—शंका—यदि रूपक प्रतीति को उपमानाभेदविषयिणी नहीं मानेंगे और लक्षणा को स्वीकार कर के सादृश्य प्रतीति को मानेंगे तो "यह नराधिप सिंह के सदृश नहीं है किन्तु सिंह ही है" यहां निषेध्यत्व एवं विधेयत्व की संगति नहीं होगी। यहाँ का भाव यह है कि रूपक में लक्षणा मानेंगे तब नराधिप सिंह है इसका अर्थ हुआ नराधिप सिंह सदृश है (क्योंकि सिंह पद की सिंह सदृश में लक्षणा है) तब निषेध्य भी सिंहसदृश हुआ और विधेय भी सिंहसदृश हुआ। इस तरह जो निषेध्य है वह विधेय कैसे होगा और जो विधेय है वह निषेध्य कैसे होगा अतः असंगति स्पष्ट है। और यदि अभेदविषयिणी रूपक प्रतिपत्ति को मानते हैं तब संगति हो जाती है। क्योंकि सिंह सादृश्य निषेध्य है और सिंहाभेद विधेय है।

उत्तर—ऐसी शंका नहीं करना। क्योंकि अभी २ प्राचीनों के दोनों मतों के निरूपण के समय रूपक में ताद्रूप्य प्रतिपत्ति की स्वीकृति का प्रतिपादन किया है। अर्थात् लक्षणा को मान कर भी फल रूप से ताद्रूप्य को भी माना है अतः असंगति नहीं है।

आलोचन। "सिंहेन सदृशो नाऽयं किन्तु सिंहो नराधिपः" इस पद्यांश का यह सिंह के सदृश नहीं है किन्तु नराधिप सिंह है एसा अर्थ ही नहीं है अतः जिस असंगतिरूप दोष को दिखाने के लिए पण्डितराज ने उदाहरण रूप में उपन्यस्त किया है वह दोष नहीं है

सिंहो नराधिपः' इत्यादौ निषेध्यविधेययोरसंगतिरिति चेत्, न। अनुपदमेव

## मधुसूदनी

आलोचनम्। उक्तपद्यांशस्य तथार्थो नास्ति। अतो यमसंगतिरूपं दोषं प्रदर्शयितुं पण्डितराज उदाजहार स दोषोऽत्र नास्ति। अत्र तु प्रधानाविमर्श एव दोषः। तथाहि=कश्चिन्न्यरूपयत् यदयं समक्षमुपस्थितो ना सिंहस्तमन्यो बोधयति=अयं ना सिंहेन सदृशः (चन्द्रेण तुल्यं मुखमितिवदुपमा इहेति भावः) किन्तु नराधिपः सिंहः (मुखं चन्द्र इतिवन्नराधिपे सिंहत्वारोपाद्रूपकं "तद्रूपकमभेदो यः उपमानोपमेययोरिति लक्षणात्) सिंहाभिन्न इत्यर्थः। इत्येवमिह उभयोरुपमारूपकयोर्विधानमेव। लक्षणायाः करणेऽपि सादृश्यप्रतीतावपि निषेधः कस्यापि न। परमेकत्र सादृश्यं वाच्यं परत्र तल्लक्ष्यभियान् भेदः। अतोऽसंगतिर्नास्ति। प्रधानाविमर्शश्चेत्थम्। पूर्वं मुख्य-पदार्थवाचकपदमुपादाय पश्चात्तद्बोधनार्थं प्रतिनिधिपदमुपाददते विद्वांसः। प्रकृत-पद्यांशे च अयं सिंहेन सदृशो न किन्तु नराधिपः सिंह इत्यर्थकरणे अयमिति पदस्य अर्थः कः? पूर्वं मुख्यः कश्चिन्नोपात्तः यमिदम्, अयमिति पदमुपस्थापयेत्। यतः

## बालक्रीड़ा

किन्तु प्रधानाविमर्श नामक दोष है। यह दिखाने का उपक्रम करते हैं। कोई कहता है कि यह सामने उपस्थित मनुष्य सिंह है। उसको कोई अन्य पुरुष समझाता है कि (अयं ना) यह मनुष्य सिंह के सदृश है [चन्द्रेण तुल्यं मुखम् की तरह यह उपमा का उदाहरणभूत अंश है] किन्तु नराधिप सिंह है सिंहाभिन्न है [मुखं चन्द्रः की तरह नराधिप में सिंहत्व का आरोप होने से "तद्रूपकमभेदो य उपमानोपमेययोः" इस लक्षण के अनुसार रूपक का उदाहरण भूत अंश है] इस तरह यहां इस वाक्यों में उपमा एवं रूपक का ही विधान है। यदि लक्षणा करके सादृश्य की प्रतीति भी करें तब भी निषेध किसी का नहीं है। हां एक जगह सादृश्य वाच्य है और दूसरी जगह वह लक्ष्य है यह भेद अवश्य है। अतः असंगति नहीं है। प्रधानाविमर्श दोष इस प्रकार है कि पहले मुख्य का उपादान करके पीछे अमुख्य का उपादान विद्वान् करते हैं इसलिए मुख्यार्थ वाचक पद का उपन्यास पहले करना आवश्यक है। प्रकृत पद्य में अयं इस पद का अर्थ कौन। पहले किसी मुख्य का निर्देश किया नहीं है जिसको यह अयं पद कहे। क्योंकि सर्वनाम शब्दों को प्रतिनिधि शब्द माना गया है इसलिए प्रतिनिधि-भूत अर्थात् अमुख्य को ही ये सर्वनाम कहते हैं। इसलिए पूर्व में मुख्य नराधिप के बोधक मुख्य पद का उपादान नहीं करके अमुख्य अयं पद का उपादान किया है अतः प्रधाना-विमर्श शेष है। इदं रजतम् की तरह (अयं ना) "यह मनुष्य" ऐसी संगति की जायतो "ना" पद का अर्थ अयं पद से कहा जायगा। ऐसा करने पर पहले पीछे की समीक्षा भी नहीं करनी पड़ेगी।

प्रकृत ग्रंथ की संगति के लिए इस पद्यांश का ऐसा निर्माण करना चाहिए।

"सिंहेन सदृशो राजा न तु सिंहोऽयमादृतः" राजा सिंह के सदृश है किन्तु यह राजा आदृत सिंह नहीं है। इस तरह के पाठ में ही लक्षणा के द्वारा सिंह सदृश अर्थ की उपस्थिति होने पर विधान का निषेध असंगत होता है।

प्राचीनमतद्वयेऽपि रूपके ताद्रूप्यप्रतिपत्तेः स्वीकारस्य प्रतिपादनात् ।

अथ विधेयकोटौ प्राचां मते सादृश्यस्यापि प्रविष्टतया तन्निषेधानुपपत्तिस्तथापि स्थितैवेति चेत्, भेदघटितसादृश्यरूपाया उपमाया एव निषेध्यत्वात्, तिरोभूतभेदसादृश्यलक्षणस्य रूपकस्य विधेयत्वाच्च नानुपपत्तिः ।

यदप्युक्तं रूपके लक्षणास्वीकारे 'राजनारायणम्' इत्यत्र 'पादाम्बुजम्' इत्यत्र चोपमारूपकयोर्बाधकतया रूपकोपमयोर्निर्णायकतया च लक्ष्मीकर्तृकालिङ्गनमञ्जुमञ्जीरशिञ्जितत्वयोरनुपपत्तिः प्राचीनैरुक्ता विरुद्धा स्यादित्यादि, तदपि न; रूपके उपमानतावच्छेदकरूपेण तत्सदृशप्रत्ययस्य-

### मर्मप्रकाशः

इति सरण्यनङ्गीकारे इत्यर्थः । विधेयकोटाविति । 'सिंहो नराधिपः' इत्यादावित्यर्थः । तथापि ताद्रूप्यप्रतिपत्त्यङ्गीकारेऽपि । एवेन सादृश्यस्य विधिनिषेधव्यावृतिः । तिरोभूतभेदेति

### मधुसूदनी

सर्वनाम्नां प्रतिनिधिपदत्वात् प्रतिनिधिभूतार्थवाचकत्वमेवेति हेतोः पूर्वं प्रकृतं नराधिपं मुख्यमनुपादाय प्रतिनिधिबोधकं पदमयमित्यात्मकमुपात्तमिति प्रधानाविमर्श एव दोषोऽत्र ज्ञेयः । मन्मते तु इदं रजतमितिवत् "अयं ना" इत्येवं संगतौ तु "ना" एव अयं पदार्थस्ततश्च पूर्वपश्चात्समीक्षैव न करणीया स्यात् ।

प्रकृतार्थसंगतये तु अयं पद्यांश एवं निर्माणीयः=सिंहेन सदृशो राजा न तु सिंहोऽयमादृत इति ।

अथेति विधेयकोटौ सिंहो नराधिप इत्येवं विधानश्रेण्यामपि लक्षणया सादृश्यस्य अनुस्यूततया ! तस्य सादृश्यस्य निषेधः । तथापि ताद्रूप्यप्रतिपत्त्यंगीकारेऽपि । उपमाया एव न तु रूपकस्य । उपमानतावच्छेदकनारायणत्वरूपेण तत्सदृशप्रत्ययस्य नारायणसदृशज्ञानस्य । तादृशकर्मताया नारायणसदृशराजनिष्ठलक्ष्मीकर्तृका

### बालक्रीड़ा

प्रश्न—असंगति नहीं है ऐसा नहीं कह सकते हैं । क्योंकि प्राचीनों के मत में सादृश्य भी विधेय कोटि में प्रविष्ट है अर्थात् सिंह पद का लक्षणा से सिंह सदृश अर्थ है अतः सिंह सादृश्य ही विधेय है । तब यह राजा सिंहसदृश नहीं है किन्तु सिंहसदृश है इस वाक्य में ताद्रूप्य-प्रतिपत्ति को मानने पर भी सिंह सदृश नहीं है इस निषेध की अनुपपत्ति पूर्ववत् ही है ।

उत्तर—भेद गर्भसादृश्यरूपा उपमा निषेध्य है और तिरोभूतभेदसादृश्यलक्षण रूपक विधेय है अतः अनुपपत्ति नहीं है ।

जो तो आपने कहा कि रूपक में लक्षणा मानने पर "राजनारायणम्" "पादाम्बुजम्" में उपमा और रूपक की बाधक तथा रूपक और उपमा की निर्णायिका जो लक्ष्मी कर्तृक आलिगन और मञ्जीरशिञ्जितत्व विशेषणों की अनुपपत्ति प्राचीनों ने कही है वह विरुद्ध हो जायगी । यह कथन भी ठीक नहीं है । क्योंकि रूपक में उपमानतावच्छेदक (नारायणत्व)

उपपादितत्वेन 'राजनारायणम्' इत्यादौ विशेषणसमासायत्तस्य रूपकस्य स्वीकारे प्रधानीभूतोत्तरपदार्थस्य नारायणसदृशस्यापि नारायणत्वेनैव प्रतीतेर्लक्ष्मीकर्तृकालिङ्गनकर्मताया अनुपपत्तेरभावात्। उपमाया उपमितसमासायत्तायाः स्वीकारे तु प्रधानीभूतपूर्वपदार्थस्य राज्ञो राजत्वेनैव प्रत्ययात्तादृशकर्मताया अनुपपत्तेः।

'पादाम्बुजम्' इत्यादावपि रूपकस्य स्वीकारे प्रधानीभूतोत्तरपदस्यार्थस्याम्बुजसदृशस्याम्बुजत्वेनैव प्रतीतेर्मञ्जुमञ्जीरशिञ्जितमनोहरताया अनुपपत्तेः। उपमितसमासायत्तोयमायां तु प्रधानस्य पादस्य पादत्वेनैव प्रतीतस्य नास्ति तस्या अनुपपत्तिरिति न कोऽपि दोषः। न चोपमितसमासे

मर्मप्रकाशः

देति बहुव्रीहिः। सादृश्येति। सादृश्यरूपस्येत्यर्थः। विशेषणसमासेति। मयूरव्यंसक इति समासेत्यर्थः।

उपमितसमासेति। 'उपमितं व्याघ्रादि'---इति समासेत्यर्थः। तादृशेति। लक्ष्मीकर्तृकालिङ्गनेत्यर्थः। तस्या इति। मञ्जुमञ्जीरशिञ्जितमनोहरताया इत्यर्थः।

मधुसूदनी

लिंगनकर्मतायाः। तस्या मंजीरगतमंजुशिञ्जनप्रयुक्तमनोहरतायाः पादे सत्त्वान्नास्ति अनुपपत्तिरित्यन्वयः। प्रधानस्य पूर्वपदार्थस्य पादत्वेनैव न तु अम्बुजत्वेनेति एवार्थः।

न चेति शंकते—रूपक इव उपमितसमासस्थलीयोपमायामपि ताद्रूप्यप्रत्ययः कुतो नेति। अयं भावः। पूर्वमुपमितसमासायत्तोपमायां तु पादस्य पादत्वेन एव

बालक्रीड़ा

रूप से उपमान ( नारायण ) सदृश प्रत्यय ( ज्ञान ) होता है यही बतलाया है अतः "राजनारायणम्" इत्यादि में विशेषणसमासायत्त रूपक के स्वीकार करने पर भी प्रधानीभूत उत्तरपदार्थ नारायणसदृश की नारायण रूप से ही प्रतीति होगी अतः लक्ष्मीकर्त्तृक आलिंगन कर्मता नारायणसदृश राजा में अनुपपन्न नहीं है। किन्तु जब उपमितसमासायत्त उपमा को मानेंगे तब प्रधानीभूत पूर्वपदार्थ राजा का राजत्वेन प्रत्यय होगा अतः लक्ष्मीकर्त्तृक आलिंगन की कर्मता का अनुपपन्न होना औचित्य प्राप्त है।

और "पादाम्बुजम्" में रूपक को मानने पर प्रधानीभूत उत्तर पदार्थ अम्बुज सदृश की जब अम्बुज रूप से ही उपस्थिति होगी तब मञ्जीर शिञ्जितत्व की अनुपपत्ति सिद्ध ही है। और उपमितसमासायत्त उपमा की सत्ता मानते हैं तब प्रधानीभूत पूर्वपदार्थ पाद की पादरूप से प्रतीति है अतः मञ्जीर शिञ्जन की अनुपपत्ति नहीं होती है फलतः दोनों स्थानों में कोई दोष नहीं है।

शंका—उपमित समास "पादाम्बुजम्" में पूर्व पदार्थ उपमेय पाद की उपमेयतावच्छेदक पादत्व रूप से प्रतीति होती है यह युक्त नहीं है। क्योंकि जैसे तुम्हारे मुखरूपी चन्द्र के

पूर्वपदार्थस्योपमेयस्योपमेयतावच्छेदकतयैव प्रतीतिरिति न युक्तम्। 'वक्त्रे चन्द्रमसि' इति प्रागुक्तरूपक इवोपमानताद्रूप्यवदभेदबुद्ध्या तत्ताद्रूप्यस्यात्रापि प्रतिपत्तुं शक्यत्वाल्लक्षणायास्तुल्यत्वादिति वाच्यम्। उपमित-

## मर्मप्रकाशः

उपमानताद्रूप्येति। उपमानसदृशयोरेकपदोपात्तत्वेनोपमानताद्रूप्यवत्सदृशाभेदबुद्धया उपमेये उपमानताद्रूप्यस्योपमायामपि ज्ञातुं शक्यत्वादित्यर्थः। तत्र हेतुमाह—लक्षणेति। रूपके

## मधुसूदनी

न तु अम्बुजत्वेन इति यत् कथितं तत्र चोद्यं करोति...उपमेयतावच्छेकतया पादत्वेन एव प्रतीतिः न तु अम्बुजत्वनेति न युक्तं प्रतिभाति। किन्तु अम्बुजत्वेन प्रतीतिर्युक्ता। यतोहि रूपके यथा लक्षणा भवति तथा उपमितसमासे नरसिंहः, पादाम्बुजम्, सुखचन्द्रः इत्यादौ उपमानपदस्य सिंहादेरपि स्वार्थसदृशे लक्षणा एव भवति। तथा च प्रकृते अम्बुजसदृशलक्षणया अम्बुसदृशाभेदान्वयबोधेन अम्बुजत्वस्यापि प्रतीतिरकामेनाऽपि स्वीकर्त्तव्या, तदेतदुक्तं=लक्षणायास्तुल्यत्वादिति। उपमानताद्रूप्यवान् अम्बुजताद्रूप्यवान् अम्बुजसदृशः। एतस्य पादस्य च अभेद एवेति यदा अम्बुजसदृशे अम्बुजताद्रूप्यं तदा अत्रापि अम्बुजसदृशाभिन्ने पादेऽपि अम्बुजताद्रूप्यस्य प्रतिपत्तुं ज्ञातुं शक्यत्वाद् सुलभत्वादित्यर्थः।

उत्तरति। इदं न च वाच्यम्। यतो रूपके, उपमायां च सादृश्यप्रत्ययार्थं लक्षणा अभ्युपगम्यते। तां विना बोधकस्येवादेरभावेन उभयत्र सादृश्यप्रत्ययो न

## बालक्रीड़ा

रहते यह अपर शीतांशु क्यों उदित होता है इस पहले कहे हुए रूपक में जैसे उपमानताद्रूप्यवदभेद बुद्धि से उपमानताद्रूप्य माना था उसी तरह उपमा में भी उपमान ताद्रूप्य मानना चाहिए। क्योंकि लक्षणा दोनों जगह समान है।

(यहाँ का अक्षरार्थ यह है। चन्द्र सदृश में चन्द्र का ताद्रूप्य जब होता है तब चन्द्र सदृश से अभिन्न मुख में भी चन्द्र का ताद्रूप्य सुतरां तदभिन्नाभिन्न तदभिन्न होता है इस न्याय से सिद्ध है। तत् माने चन्द्र उससे अभिन्न चन्द्रसदृश है और जब चन्द्रसदृश से अभिन्न मुख है तब वह मुख भी चन्द्र से अभिन्न ही है)।

लक्षणा दोनों जगह समान है कहने का भाव यह है कि रूपक में जैसे चन्द्रपद की चन्द्रसदृश में लक्षणा करते हैं और उस लक्षणा का फल ताद्रूप्य प्रत्यय माना जाता है उसी तरह उपमा में भी समासस्थल में सादृश्यबोधक इवादि के अभाव में सादृश्यबोधन के लिए लक्षणा अवश्य मानी जाती है और लक्षणा का फल ताद्रूप्य प्रत्यय भी अवश्य माना जायगा तब पादाम्बुजम् इस समास में अम्बुज की तत्सदृश में लक्षणा और पाद में अम्बुजताद्रूप्य का प्रत्यय औचित्य प्राप्त हुआ। फलतः पाद में अम्बुजताद्रूप्य प्रत्यय होने पर मञ्जीरशिञ्जन की अनुपपत्ति रूपक की तरह उपमा में भी है ही।

उत्तर—यह ठीक नहीं है। क्योंकि उपमित समास जहां होता है वहाँ (पादाम्बुजम्,

समासे भेदघटितसादृश्यस्य लक्ष्यकोटिप्रविष्टतया वैलक्षण्यस्य वक्ष्यमाणत्वात्।

यदप्युक्तं सादृश्यस्य शब्देनोपादानादुपमात्वापत्तिरिति, तदपि न। भेदाकरम्बितसादृश्यविशिष्टस्य रूपके लक्ष्यत्वादुपमाव्यपदेशस्याप्रसक्तेः। 'सादृश्यमुपमा भेदे' इति तत्सिद्धान्तात्।

ननु यत्र भेदघटितसादृश्यवति वक्त्रा लक्षणया मुखं चन्द्र इति

### मर्मप्रकाशः

इवोपमितसमासे वाचकेवशब्दस्याभावेन लक्षणासत्त्वेन तस्याः समत्वादित्यर्थः। भेदाकरम्बीति। भेदाविशिष्टेत्यर्थः। दोषान्तरमाह—भेदेति।

### मधुसूदनी

स्यात्। परन्तु सादृश्यं द्विविधं भेदकरम्बितम्, भेदाकरम्बितञ्च। तत्र पूर्वं तदुपमायां, ततश्च भेदकरम्बितत्वावस्थायामभेदः कुतः, भेदाभेदयोर्विरुद्धत्वात् युगपद् बुद्धिविषयत्वासंभवादित्यर्थः। अन्यच्च उपमायां निरूढा लक्षणा ततश्च ताद्रूप्यरूपफलस्यासंभव एव। अथवा समासे खलु भिन्नैव शक्तिः पंकजशब्दवदिति वैयाकरणानुरोधेन शक्तेः सद्भावेन ताद्रूप्यस्यासंभव एव। तदेतदुक्तं=वैलक्षण्यस्य वक्ष्यमाणत्वादिति।

नान्त्यः, सादृश्यस्य शब्दोपात्तत्वेनोपमात्वापत्तेरित्यंशमालोचयितुमाह—यदप्युक्तमिति। मुखं चन्द्र इत्यत्र चन्द्रपदस्य लक्षणया सामान्यरूपेण सादृश्योपस्थापकत्वात्सादृश्यस्य लाक्षणिकशब्देनैव उपादानादुपमा स्यादिति शंकाशयः।

अस्त्येतत्, भेदाऽकरम्बितमेव सादृश्यं रूपके, परं कदाचित् वक्ता भेदघटितसादृश्यवति भेदकरम्बितसादृश्यविशिष्टे अर्थे मुखं चन्द्र इति शब्दः प्रयुक्तश्चेत्तर्हि का गतिरिति शंकासमाधानाभ्यामाह=नन्विति। यस्मिन् काले भेदघटितसादृश्यप्रतिपादनस्येच्छा तस्मिन् काले। तद्वति भेदघटितसादृश्यवति अर्थे। ताद्रूप्यप्रति-

### बालक्रीड़ा

मुखचन्द्रः) इत्यादि में भेद घटित सादृश्य प्रविष्ट है अतः वहां भेद गर्भसादृश्य की प्रतीति होती है। फलतः पाद में अम्बुजताद्रूप्य नहीं होगा क्योंकि भेदाभेद दोनों तमः प्रकाश की तरह परस्पर विरुद्ध है।

यह भी जो आपने कहा कि सादृश्य का शब्द से उपादान होने से यहां उपमा मानी जायगी। वह भी ठीक नहीं है। क्योंकि रूपक में भेदाकरम्बित सादृश्य विशिष्ट लक्ष्य है अतः यहां उपमा व्यवहार की प्रसक्ति नहीं होगी। भेद रहने पर जो सादृश्य है वह उपमा है। यही वहां सिद्धान्त है। साधर्म्यमुपमा भेदे।

शंका—भेदकरम्बित सादृश्य उपमा का प्राण है और भेदाकरम्बित सादृश्य गौण सारोपा लक्षणा का जीवातु है। और ये दोनों ही सादृश्य लक्षणा से यथास्थल में प्रतीत होते हैं। यदि कदाचित् कोई वक्ता भेदघटित सादृश्य विशिष्ट अर्थ में लक्षणा से "मुखं चन्द्रः"

प्रयुक्तं तत्र तथाप्युपमालंकारापत्तिः स्थितैवेति चेत्, भेदघटितसादृश्यप्रतिपिपादयिषाकाले लक्षणया तद्वति शब्दप्रयोगस्य विरुद्धत्वात्। लक्षणायास्ताद्रूप्यप्रतिपिपादयिषाधीनत्वात्। नहि प्रयोजनमनुद्दिश्य रूढिव्यतिरिक्तया लक्षणयार्थं प्रतिपादयन्त्यार्याः। भेदताद्रूप्ययोर्विप्रतिषिद्धत्वेन युगपत्प्रतिपत्तृबुद्ध्युपारोहासंभवाच्च।

अथोपमितसमासे पुरुषव्याघ्र इत्यादावुत्तरपदस्य स्वार्थसदृशे लक्षणैवोपगन्तव्या। अन्यथा बोधकाभावेन समासे सादृश्यप्रत्ययो न स्यात्।

## मधुसूदनी

पिपादयिषाकाले एव लक्षणया शब्दः प्रयुज्यते तादृशेच्छाधीनत्वाल्लक्षणाया इत्यर्थः। तत्र मुखं चन्द्र इत्यत्र। तथापि लक्षणास्थलाभावेऽपि लक्षणाकरणात्।

अथेति पक्षान्तरमुद्भाव्यते। स्वं व्याघ्रपदं तदर्थः व्याघ्रः। अन्यथा लक्षणाभ्युपगमाभावे। बोधकस्य सादृश्यप्रतिपादकस्य इवादेरभावे। व्याघ्र इवेति विग्रहवाक्यगत इवशब्दः। तद्बोधकः सादृश्यबोधकः। तस्य इवशब्दस्य। तन्निवृत्तेः सम्बन्धत्यागस्य। निवर्त्तकशास्त्रस्य त्याजकसूत्रवार्तिकादेः। स्वेति। स्वमिवशब्दः। तेन घटितस्य वाक्यस्य। वाक्यान्तरस्य विग्रहवाक्याद्भिन्नस्य समासवाक्यस्य। विवरणीयविवरणयोः समानार्थकत्वे एव विवरणत्वं भवति। विग्रहवाक्यगतेवशब्दः यदि समासवाक्यस्य उपमाप्रतिपादकत्वं सम्पादयितुं नेष्टे तर्हि तस्य विग्रहवाक्यस्य विवरणत्वमेवानुपपन्नमित्यर्थः।

## बालक्रीड़ा

ऐसा प्रयोग करता है उस अवस्था में (तथापि) भेदाकरम्बित सादृश्य विशिष्ट लक्ष्य रूपक के रहने पर वहां उपमा लंकार की आपत्ति स्थित ही है।

उत्तर—भेदा घटित सादृश्य के प्रतिपादन की इच्छा के समय भेद घटित सादृश्य विशिष्ट में लक्षणा के द्वारा शब्द प्रयोग विरुद्ध ही है। क्योंकि ताद्रूप्यप्रतिपादन करने की इच्छा होने पर लक्षणा की जाती है। आर्य लोग प्रयोजन के विना रूढ़िभिन्न लक्षणा के द्वारा अर्थ का प्रतिपादन नहीं करते हैं। भेद और ताद्रूप्य (अभेद) दोनों परस्पर विरुद्ध हैं अतः इन विरुद्धों का एक काल में एक साथ प्रतिपत्ता की या वक्ता की बुद्धि में उपारोह होना संभव नहीं है।

उपमित समास में "पुरुषव्याघ्रः" इसमें उत्तरपद व्याघ्र की स्वार्थसदृश (व्याघ्रसदृश) में लक्षणा ही मानना चाहिए। यदि लक्षणा नहीं मानेंगे तो सादृश्य रूप अर्थ के बोधक इवादि पद के अभाव में समास में सादृश्य प्रत्यय नहीं होगा। "व्याघ्र इव" में जो इव शब्द हैं वह इव उस सादृश्य का बोधक हो नहीं सकता है क्योंकि समास में उसका सम्बन्ध नहीं है। यहां का भाव यह है कि जहां उपमान एवं उपमेय का उपमित समास होता है। इवादि का वहाँ समास नहीं होता है। अतः समास में इवादि का सम्बन्ध नहीं होता है। अगर

न च व्याघ्र इवेतीवशब्दस्तद्बोधक इति वाच्यम्, तस्य समासे संबन्धाभावात्। सति च संबन्धे तन्निवृत्तेरयोगात् निवर्तकशास्त्रस्याभावात्। विग्रहवाक्यगतस्त्विवशब्दः स्वघटितवाक्यस्योपमाप्रतिपादकत्वं संपादयितुमीष्टे, न वाक्यान्तरस्य। तस्य विवरणत्वानुपपत्तेश्च। नहि विवरणीयवाक्यगतशब्दाप्रतिपाद्यस्यार्थस्य विवरणं युज्यते।

इत्थं च लक्षणाया एवाभ्युपगम्यतया सत्यां च तत्प्रयोजनीभूत-

## मर्मप्रकाशः

संबन्धाभावादिति। द्वयोरेव पदयोः समासादिति भावः। अभ्युपेत्याह—सति चेति। उपमाप्रतीति। उपमालंकारप्रतीत्यर्थः। वाक्यान्तरस्य समासवाक्यस्य। ननु समासे मास्तु सादृश्यप्रतीतिरत आह—तस्येति। विग्रहवाक्यस्येत्यर्थः। इत्थं च। उक्तदोषे चेत्यर्थः।

## मधुसूदनी

इत्थं च विवरणविवरणीयवाक्ययोः समानार्थकताया आवश्यकत्वे च। अयं भावः। विवरणवाक्ये सादृश्यं तद्वाचकेवशब्दोऽभिधत्ते समासे तु इवशब्दाभावे सादृश्यप्रत्ययाभावः। अतः तदर्थं लक्षणाया अभ्युपगम्यत्वमस्ति। इति।

## बालक्रीड़ा

सम्बन्ध होता तो उसकी निवृत्ति नहीं होती क्यों उसका निवर्त्तक कोई शास्त्र नहीं है। जो तो विग्रह वाक्य में इव शब्द है वह इव शब्द अपने से युक्त विग्रह वाक्य की उपमा के सम्पादन में समर्थ है न कि वाक्यान्तर (समस्तपद) की उपमा के। यदि वाक्यान्तर की उपमा का प्रतिपादन करेगा तो उसका विवरण करना ही अनुपपन्न हो जायगा। क्योंकि विवरणीय (समस्तपद) वाक्य से अप्रतिपाद्य अर्थ का विवरण करना युक्त नहीं है।

**प्रश्न**—इस प्रकार समास में लक्षणा अवश्य माननीय है और उस लक्षणा के प्रयोजन ताद्रूप्य की प्रतीति भी होगी ही तब प्राचीनों ने (द्विलोपे च समासगा) समास में द्विलुप्ता उपमा कैसे कही। यहां का भाव है कि समास में उपमान की उपमानसदृश में लक्षणा करते हैं तब सादृश्य तथा लक्षणा का प्रयोजन ताद्रूप्य अर्थात् धर्म की प्रतीति हो जाती है अतः यहाँ इवादि के अभाव में वाचकलुप्ता कह सकते हैं। धर्मलुप्ता नहीं कह सकते हैं।

**उत्तर**—सादृश्य के प्रत्यय के लिए प्रयोजनवती लक्षणा नहीं मानते हैं किन्तु फलरहिता निरूढ़ा लक्षणा मानते हैं अथवा समास में शक्ति मानते हैं अतः उभयथा धर्म की प्रतीति के अभाव में और वाचक इवादि के अभाव में समास में द्विलुप्ता प्राचीनों का कहना संगत ही है।

इसीलिए कहते हैं कि उपमितसमास की भेदघटित उपमान सादृश्य विशिष्ट उपमेय में शक्ति के अथवा समास घटकीभूत उपमान शब्द की भेद घटित सादृश्य विशिष्ट में निरूढा लक्षणा के स्वीकृत कर लेने से दोष नहीं है।

तादूप्यप्रतिपत्तौ कथमुपमा द्विलुप्ता तत्र प्राचीनैरुक्तेति चेत्, अत्रोच्यते—उपमितसमासस्य भेदघटितोपमानसादृश्यविशिष्टोपमेये शक्तेस्तद्घटकीभूतोपमानशब्दस्य भेदघटितसादृश्यविशिष्टे निरूढलक्षणाया वा स्वीकाराददोषः।

इयमेव निपातानामिवादीनां द्योतकतानये मुखं चन्द्र इवेत्यादौ; वाचकलुप्तायामुपमायां च गतिरनुसरणीया।

## मर्मप्रकाशः

द्विलुप्तेति। उक्तरीत्या धर्मवाचकयोः सत्त्वेन कथं धर्मवाचकलुप्तोक्तेत्यर्थः। विशिष्टशक्तौ गौरवादाह—तद्घटकीति। भेदघटितेति। तथा च साधारणधर्माभानाद्धर्मलुप्तत्वं सुस्थम्। नन्वेवमपि ताद्रूप्यप्रतीत्या कथं धर्मलुप्तत्वमत आह—निरूढलक्षणेति। इयमेवेति उक्तैव गतिरित्यर्थः। धर्मलुप्तोदाहरणमाह—मुखं चन्द्र इवेति। वाचकलुप्तायामिति। तडिद्गौरीत्यादावित्यर्थः। नन्वेवमपि सादृश्यवाचकस्योपमानशब्दस्यैव सत्त्वात्कथं वाचक-

## मधुसूदनी

द्विलुप्तेति। तत्र "नृसोमः" "पुरुषव्याघ्र" इत्यादौ समासे लक्षणायां तत्प्रयोजनीभूतताद्रूप्यस्य सोमत्वादेर्धर्मस्य प्रतिपत्तौ सत्यां कथं प्राचीनैरुपमा द्विलुप्ता उक्ता। अयमाशयः। समासेहि विवरणगतस्य वाक्यस्थस्येवादेः सम्बन्धाभावाद्वाचकस्यैव लोपात् वाचकलुप्ताऽस्तु। परं यदा सादृश्यस्य प्रत्ययार्थं लक्षणाया अवश्याश्रयणेन तत्फलस्य ताद्रूप्यस्य धर्मस्य प्रत्ययोऽस्त्येव तदा एकलुप्तैव यर्हि वक्तव्या तर्हि द्विलुप्ता कथमुक्ता। तथा च वाचकलुप्ता एव समासेऽपि स्यान्नतु धर्मवाचकोभयलुप्तेति।

उत्तरति—अत्रोच्यते इति। सादृश्यप्रत्ययार्थं प्रयोजनवती लक्षणा न स्वीक्रियतेऽपि तु समासशक्तिः स्वीक्रियते तयैव सादृश्यप्रत्ययः। अथवा सादृश्यप्रत्ययार्थं नैयायिकमते निरूढा फलरहिता लक्षणानुसन्धेया। एवञ्चोभयथापि धर्मस्याप्रत्ययात् वाचकस्येवादेरभावाच्च समासे द्विलुप्तेति प्राचीनानां कथनं संगतमेव। अक्षरार्थस्तु भेदघटितं यदुपमानप्रतियोगिकं सादृश्यं तेन विशिष्टे उपमेये शक्तेः। तद्घटकीभूतस्य उपमितसमासघटकीभूतस्य नृसोम इत्यादौ सोमादेरुपमानपदस्य।

इयमेवेति। समासे निर्दिष्टैव गतिः मुखं चन्द्र इवेत्यादौ निपातानामिवादीनां द्योतकतानये चन्द्राद्युपमानपदस्य सादृश्यविशिष्टे शक्तिर्वा निरूढा लक्षणा वा

## बालक्रीड़ा

यही उपमिति समास में बतलाई गई चन्द्रादि उपमान पद की सादृश्य विशिष्ट में शक्ति अथवा निरूढा लक्षणा मानने वाली ही गति, मुखं चन्द्र इव इत्यादि में इवादिनिपातों की द्योतकता मानने के पक्ष में तथा घनश्यामः, वज्रदृढः, अग्नितीक्ष्णः, तडिद्गौरी इत्यादि वाचकलुप्ता उपमा में भी अनुसरणीय है। यहाँ घनादि उपमान पद हैं और "उपमानानि सामान्यवचनैः" सूत्र से समास होता है अतः यह समास उपमान समास कहलाता है। उपमित समास नहीं है अतः वाचकलुप्ता के नाम से लिखा है। मुखं चन्द्र इव में इव शब्द

मधुसूदनी

अनुसरणीया। घनश्याम इत्यादौ वाचकलुप्तायामपि इयमेव समासादिनिर्दिष्टा एव गतिरनुसरणीया। अर्थात् वाचकलुप्तायां घनश्याम इत्यादौ उपमानानि सामान्यवचनैरित्यनेन समासो जातः। ततश्चोपमानसमासे शक्तिरथवा तत्प्रतीतये पूर्वपदे घनेतिरूपे निरूढा लक्षणेति; एवं वाचकस्येवादेरभावे वाचकलुप्तेति व्यवहारः।

बालक्रीड़ा

के प्रयोग में भी द्योतकता पक्ष में वाचकता नहीं रही अतः वाचक लुप्ता हुई और धर्मबोधक शब्द के अभाव में धर्मलुप्ता भी हुई। इस तरह वाक्य में भी द्विलुप्ता हुई। समासे च द्विलोपगा वाला पुराने आचार्यों का सिद्धान्त इवादि को द्योतक न मान कर वाचक मानने से ही सिद्ध होता है।

वाचकलुप्ता "वादेर्लोपे समासे सा कर्माधार क्वचि क्यङि। कर्मकत्रोर्णमुलि" इस काव्यप्रकाशीय सूत्र के अनुसार ६ प्रकार की है। इन में "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इस सूत्र से उपमित समास नहीं होता है किन्तु "उपमानानि सामान्यवचनैः" इस सूत्र से समास होता है अतः यहाँ उपमितसमास नहीं कह कर उपमान समास कहना चाहिए। "कामिनी-गण्डपाण्डुः" "घनश्यामः" "अरविन्दसुन्दरम्" इत्यादि इसके उदाहरण हैं। अब यहाँ झगड़ा यह उपस्थित होता है कि जहाँ उपमितसमास करते हैं वहाँ "नृसोमः" इत्यादि में सोम आदि उपमान शब्द की या उपमित समास की भेदघटितसादृश्यविशिष्ट उपमेय में क्रमशः लक्षणा या शक्ति मान सकते हैं। ठीक है। किन्तु जहाँ वाचकलुप्ता में उपमान समास ही होता है उपमित समास होता ही नहीं है वहाँ उपमेय होता ही नहीं है तब कैसे भेद घटित सादृश्य विशिष्ट उपमेय में लक्षणा हो सकती है।

और भी बात है कि आपने आगे उपमा के शाब्दबोध के निरूपण के प्रसंग में लिखा है कि "अरविन्द सुन्दरम्" में अरविन्द पद की अरविन्द निरूपित सादृश्य प्रयोजक में लक्षणा होती है। अतः एकबार लिखते हैं कि उपमान शब्द की भेद घटित सादृश्य विशिष्ट में और दूसरी बार लिखते हैं कि उपमान निरूपित सादृश्य प्रयोजक में लक्षणा होती है। यह कौन संगति है। अतः वाचक लुप्ता में उपमित समासवाली गति का अनुसरण कैसे किया जाय।

और फिर "वाचकलुप्ता" में तीन शंकायें होती हैं। एक शंका होती है कि "वादेर्लोपे" इस काव्य प्रकाशीय कारिका की वृत्ति में "वाशब्द उपमाद्योतकः" ऐसा लिखा है। अतः यहाँ "अरविन्दसुन्दरम्" में इवादि द्योतक के अभाव में द्योतक लुप्ता कहना चाहिए न कि वाचकलुप्ता। दूसरी शंका है कि क्यजादि प्रत्यय स्थल में इवादि सादृश्य की कृत्तद्धित आदि वृत्ति से ही प्रतिपत्ति हो जाती है अतः जहाँ (उक्तार्थानामप्रयोगः) जिन अर्थों का प्रकारान्तर से कथन हो जाता है जहाँ उन अर्थों के वाचक शब्दों का प्रयोग नहीं किया जाता है क्योंकि पुनरुक्ति हो जाने का डर होता है। इस न्याय के अनुसार इवादि का प्रयोग नहीं किया जाता है किन्तु कृत्तद्धितादि से तो वह सादृश्य वाच्य है ही तब वाचक लुप्ता कैसे। तीसरी शंका है कि नृसिंह इत्यादि उपमित समास में उत्तरपद सिंहादि की और घनश्याम इत्यादि उपमान समास में पूर्वपद घनादि की स्वार्थ सदृश में लक्षणा मानने वाले

वाचकलोपस्तूपमानाद्यकरम्बितसादृश्यतद्विशिष्टान्यतरप्रतिपादकशब्द-शून्यत्वादुपपादनीयः ।

यच्च 'विद्वन्मानस' इत्यत्र दूषणमभिहितं तद्रूपकप्रकरणे परिहरिष्यते ।

### मर्मप्रकाशः

लुप्तत्वमत आह—वाचकेति । वाक्ये इवानुपादाने वाचकलुप्तत्वाय । सादृश्येति । समसदृशाद्यप्रयोगे तत्त्वायाह—तद्विशिष्टेति । सादृश्यविशिष्टेत्यर्थः ।

परिहरिष्यत इति । अयं भावः—उपमेयोपमानयोरभेद एव रूपकमिति मते सादृश्यज्ञानमूलकाभेदप्रतीतिविषय एव सः । एवं च 'पौरुषाब्धेस्तरङ्गः प्रत्यर्थिवंशोल्वणविजयकरिप्रौढदानाम्बुपट्टः खड्गो मालवस्य' इत्यादौ खड्गे शब्दात्प्रतीयमानदानाम्बुपट्टाभेदे प्रत्यर्थिषु वंशाभेदप्रतीतिमूलकतज्जेतृसंबन्धित्वरूपं साधर्म्यं मूलम् । प्रत्यर्थिषु वंशाभेदे च खड्गे

### मधुसूदनी

व्याचष्टुस्य शंकते—ननु नृसिंहः, नृसोमः पुरुषव्याघ्रः मुखचन्द्र इत्यादावुपमितसमासे उत्तरपदस्य सिंहादेः, घनश्यामः तडिद्गौरी इत्यादावुपमानसमासे च पूर्वपदे घनादेश्च स्वार्थसदृशे लक्षणा स्वीकर्त्तुमते वाचकाभावाद् वाचकस्य लोपोऽस्तु परं समासे शक्तिस्वीकर्त्तुर्मते समासस्यैव सादृश्यवाचकत्वाद् वाचकलोपाभावाच्च कथं वाचकलुप्ता । प्रत्युत धर्मस्याप्रत्ययात् धर्मलुप्ता स्यात्ततो धर्मलुप्तैव व्यवहार्या, एवमेव पुरुषव्याघ्र इत्यादावपि । तर्हि कथं वाचकलुप्तेत्यत आह वाचकलोपस्त्विति । अयं भावः । उपमानं तथा आदिपदार्थो भेदः । ताभ्यां करम्बितं सादृश्यं समासेन उच्येत ? यथोक्तम्—उपमितसमासस्य भेदघटितोपमानसादृश्यविशिष्टोपमेये शक्तेरिति । विवक्षितं तु उपमानभेदाभ्यामकरम्बितं सादृश्यम् । ततश्च सादृश्यस्य सादृश्यविशिष्टस्य सदृशस्य वा । अन्यतरस्य द्वयोर्मध्ये एकस्य प्रतिपादकः शब्द

### बालक्रीड़ा

के मत में वाचक के अभाव में वाचक का लोप ठीक है अतः वाचक लुप्ता भी कह सकते हैं । किन्तु समास में शक्ति मानने वाले के मत में समास ही सादृश्य वाचक है अतः वाचक लोप नहीं हुआ तव वाचक लुप्ता कैसे हो सकती है । प्रत्युत धर्म की प्रतीति नहीं होने से ऐसे उदाहरणों में धर्मलुप्ता ही कहना चाहिए ।

उत्तर—वाचक लोप तो उपमान तथा (आदिपदबोध्य) भेद और निरूपितत्व से अकरम्बित अघटित सादृश्य के प्रतिपादक इवादि शब्दों या सादृश्य विशिष्ट सदृश आदि के प्रतिपादक शब्दों के शून्य से उपपादनीय है । अर्थात् सादृश्यमात्र के वाचक इवादि शब्दों के अभाव में या सादृश्यविशिष्टमात्र के वाचक सदृशादि पदों के अभाव में वाचक लुप्ता होती है । इसकी अपेक्षा उपमित समास में (भेदघटितोपमानसादृश्य) भेद से घटित तथा उपमान से करम्बित सादृश्य है और उपमान समास "अरविन्दसुन्दरम्" में उपमान-निरूपितत्व से करम्बित सादृश्य है (अरविन्दनिरूपितसादृश्य) केवल सादृश्य नहीं है ।

जो तो "विद्वन्मानस" इसमें दूषण कहा है उसका परिहार रूपक प्रकरण में करेंगे ।

यदप्युक्तं रूपके सदृशलक्षणायाः फलं ताद्रूप्यप्रत्ययो न युज्यते। तत्सदृश इति शब्दजबोधानन्तरमपि तथाप्रत्ययापत्तेरिति, तन्न। तत्सदृश इत्यत्र लक्षणाया अभावेन ताद्रूप्यप्रत्ययस्यापादनायोगात्। ताद्रूप्यप्रत्ययो लक्षणायाः फलमिति प्राचां समयः। महाभाष्यादिग्रन्थानामस्मिन्नेवानुकूलत्वाच्च। नव्यनये तु तेषामाकुलीभावः स्यादिति दिक्।

"साध्यवसानायां च 'चन्द्रराजी विराजते' इत्यादौ चन्द्रादिशब्दैर्लक्षणया मुखत्वेनोपस्थापितस्यापि मुखादेः शाब्दबोधश्चन्द्रत्वादिना भवति,

## मर्मप्रकाशः

दानाम्बुपट्टाभेदप्रतीतिमूलकतद्व्यङ्ग्यमानत्वम्। तथेति। ताद्रूप्येत्यर्थः। तस्मादवश्यं रूपके लक्षणा। अत्र युक्त्यन्तरमाह—महाभाष्यादीति। तथा च 'पुंयोगादाख्यायाम्' इति सूत्रे भाष्यम्—'भिन्नानामभेदाभावात्, कथं पुनस्तस्मिन् स इत्येतद्भवति। चतुर्भिः प्रकारैस्ताद्रूप्यमारोप्यते न तु मुख्यम्। तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यात्, इति। तात्स्थ्याद्यथा मञ्चा हसन्ति। ताद्धर्म्याद्यथा—'जटी ब्रह्मदत्तः'। ब्रह्मदत्ते यानि कार्याणि जटिन्यपि तानि क्रियन्ते। तत्सामीप्याद्यथा—'गङ्गायां घोषः'। तत्साहचर्याद्यथा 'कुन्तान्प्रवेशय' इति। लक्षणाभाववादिनापि कथमन्योन्याश्रयः परिहार्यः। किमर्थं वा श्लिष्टपर्यन्तानुधावनं नवीनैर्दीक्षितैः कृतमिति चिन्त्यमिति। अयमेव दिगर्थ इति बोध्यम्।

## मधुसूदनी

क्रमश इवादिः सदृशादिर्वा ताभ्यां शून्यत्वादर्थादिवादिसदृशादिपदानामभावादुपपादनीयः। ताद्रूप्यज्ञानप्रसक्तेः तथाप्रत्ययापत्तेः।

"चन्द्रराजी विराजते" इति। अयमाशयः। यथा गंगायां घोष इत्यत्र लक्षणया गंगाशब्देन तीरत्वेन तीरमुपस्थाप्यते शाब्दोबोधस्तु गंगात्वेन भवति। तथैव

## बालक्रीड़ा

जो भी कहा कि रूपक में सदृश लक्षणा का फल ताद्रूप्य प्रत्यय कहा है वह युक्त नहीं है। क्योंकि तत्सदृश इस शब्द के प्रयोग में भी वैसी प्रतीति होने लगेगी। यह बात ठीक नहीं है क्योंकि तत्सदृश में लक्षणा ही नहीं है तब ताद्रूप्य प्रत्यय कैसा? ताद्रूप्य प्रत्यय लक्षणा का फल है यही प्राचीनों का समय है, संकेत है। महाभाष्यादि ग्रन्थों का इसी प्राचीनों के मत में ही आनुकूल्य है। नव्यमत में तो उन ग्रन्थों का व्याकुलीभाव ही हो जायगा। यह विचार की दिक् माने पद्धति है। यह सारोपा लक्षणा का प्रकरण समाप्त हुआ। अब साध्यवसाना लक्षणा के विषय में प्रतिपादन करते हैं।

साध्यवसाना में तो "चन्द्रराजी विराजते" चन्द्रों की पंक्ति शोभायमान हो रही है। (यहाँ राजी शब्द दीर्घ ईकारान्त है। राजि सब्द ह्रस्व इकारान्त भी होता है) इत्यादि उदाहरणों में चन्द्रादि शब्दों ने लक्षणा के द्वारा मुखादित्वेन मुखादि को उपस्थित किया। उसके बाद चन्द्रत्व रूप से मुख का शाब्दबोध होता है। यह सब लक्षणाज्ञान का माहात्म्य

लक्षणाज्ञानस्यैव माहात्म्यात्" इत्येके।

"लक्षणया मुखत्वेन मुखादेः शाब्दबोधे वृत्ते व्यञ्जनयैकशब्दोपात्तत्वप्रादुर्भूतया चन्द्रत्वेन बोधः" इत्यपरे।

मतद्वयेऽप्यस्मिन्मुखादौ चन्द्रत्वभानसामग्र्या मुखत्वादेः स्वधर्मस्य भानं न निवार्यते। इत्थं चैकस्मिन्धर्मिणि चन्द्रत्वादीनां च साक्षाद्भानमेव सारोपातोऽस्या विच्छेदकम्। अपरे तु "निवार्यत एव विरुद्धभान

## मर्मप्रकाशः

माहात्म्यादिति। समानप्रकारकत्वनियमस्य लाक्षणिकबोधान्यबोधविषयकत्वस्य प्रागुक्तत्वादिति भावः। नियमाङ्गीकर्तृमतमाह—लक्षणेति। इदमपि प्रागुक्तम्। मुखत्वादीनां चेति। एकपदोपस्थाप्यानामिति बोध्यम्। साक्षादिति। सारोपायां तु चन्द्रत्वस्य चन्द्रसदृशे भानद्वारा तत्र भानमिति परम्परया तद्भानमिति भावः। अस्या इति। साध्यवसानाया भेदकमित्यर्थः। एकधर्म्यधिकरणकोभयभानं तु समानमिति भावः।

## मधुसूदनी

प्रकृतेऽपि लक्षणया चन्द्रादिशब्दैर्मुखादित्वेन मुखादिरुपस्थाप्यते परं शाब्दबोधश्चन्द्रत्वेन भवति। तदेतत्सर्वं लक्षणाज्ञानस्य माहात्म्यादेव, इति एके आचार्या वदन्ति। लक्षणां विहायैव उपस्थितिशाब्दबोधयोः समानाकारता बोध्येति तत्वम्।

लक्षणयेति। चन्द्रादिशब्दैः मुखादित्वेन मुखादेरुपस्थितिः शाब्दबोधश्च निर्वर्त्येते। वृत्ते च शाब्दबोधे पश्चात् व्यञ्जनया चन्द्रत्वेन बोधः। व्यञ्जनायाः प्रादुर्भावश्च एकेन चन्द्रशब्देन मुखचन्द्रयोर्द्वयोरुपस्थापनात्। मुखादौ चन्द्रत्वभानसामग्री पूर्वत्र लक्षणा, उत्तरत्र व्यंजना। तथा स्वधर्मस्य मुखादिधर्मस्य मुखत्वादेः। इत्थममुना प्रकारेण एकस्मिन् मुखरूपे धर्मिणि। अस्याः साध्यवसानायाः विच्छेदकं

## बालक्रीड़ा

है। माहात्म्य का स्वरूप यही है कि उपस्थिति और शाब्द बोध में समानाकारता का नियम लक्षणा स्थल में नहीं है। यहाँ विषय वाचक शब्दों से विषय की उपस्थिति हो ही नहीं सकती। क्योंकि विषयी के द्वारा विषय का निगरण कर दिया जाता है अतः विषयवाचक शब्द वहाँ नहीं है केवल विषयी का ही वाचक शब्द है। उसी से विषय की उपस्थिति लक्षणा के द्वारा होती है और चन्द्रत्वेन शाब्दबोध होता है। ऐसा कोई आचार्य कहते हैं।

जो कोई समानाकारता के नियम को मानते हैं उन के मत में चन्द्र शब्द से लक्षणा के द्वारा मुखत्वेन मुख का शाब्दबोध हो जाता है उसके बाद एक चन्द्र शब्द से चन्द्र का और मुख का उपादान करने रूप हेतु से प्रादुर्भूत होनेवाली व्यंजना से चन्द्रत्वेन मुख का अभेद बोध होता है। यह द्वितीय मत है। इस मत में अभिधा से चन्द्ररूप अर्थ का लक्षणा से मुखरूप अर्थ का उसके बाद व्यंजना से चन्द्रत्व रूप से चन्द्र के साथ मुख का अभेद बोध होता है।

इन दोनों मतों में मुखादि में चन्द्रत्वभान की सामग्री व्यंजना के द्वारा मुखत्वादि रूप अपने धर्म का भान निवृत्त नहीं होता है।

सामग्रया स्वधर्मस्य भानम् । रजतत्वभानसामग्र्या शुक्तित्वस्याभानात्" इति वदन्ति ।

मतेऽस्मिन्विषयतावच्छेदकास्फूर्तिस्तथा । वस्तुतस्तु साध्यवसानायां विषयतावच्छेदकधर्मभानं यदि सहृदयहृदयप्रमाणकं तदा तद्वारणाय कारण-

मर्मप्रकाशः

विषयतावच्छेदकेति । लक्ष्यतावच्छेदकेत्यर्थः । क्वचित्तथैव पाठः । लक्ष्यतावच्छेदकं

मधुसूदनी

भेदकम् । अर्थात् साध्यवसानायां साक्षाद्भानं चन्द्रत्वमुखत्वयोः, । सारोपायां पूर्वं चन्द्रसदृशे चन्द्रत्वस्य भानं पश्चात् चन्द्रसदृशाभिन्ने मुखे चन्द्रत्वस्य भानमिति परम्परा वर्तते । विरुद्धेति । मुखत्वविरुद्धचन्द्रत्वभानसामग्र्या । चन्द्रपदेन । स्वधर्मस्य मुखत्वस्य । रजतत्वभानसामग्री चाकचक्यं, चक्षुर्दोषो, रागो वा शुक्तेरभानं च ।

विरुद्धभानसामग्रया स्वधर्मस्य मुखादित्वस्य विषयतावच्छेदकस्य भानं निवार्यतेऽतो मतेऽस्मिन् विषयतावच्छेदकस्य मुखादित्वस्य अस्फूर्तिरभानमेव तथा सारोपातः साध्यवसानायाः विच्छेदकम् । सारोपायां विषयविषयिणोः द्वयोरपि शब्दादुपादानेन विषयतावच्छेदकस्य प्रतीतिर्भवति । अस्यां तु विषयिण एवोपादानात् विषयस्यानुपादात्तस्यास्फूर्तिरेवेति ।

बालक्रीड़ा

इस तरह एक धर्मी मुखादि में एक चन्द्र पद से उपस्थित होने वाले चन्द्रत्वादि और मुखत्वादि का साक्षाद् भान ही सारोपा से इस (साध्यवसाना) का विच्छेदक है पृथक् सिद्ध करने वाला हेतु है । सारोपा में तो चन्द्रत्व का भान परम्परया होता है पहले चन्द्रसदृश में चन्द्रत्व का भान होता है उसके द्वारा मुख में चन्द्रत्व का भान होता है । यही परम्परा है ।

एक धर्मी मुख में चन्द्रत्व और मुखत्व का भान तो दोनों जगह समान है ।

अपर आचार्य तो कहते हैं कि विरुद्ध (धर्म चन्द्रत्व) के भान रूपी सामग्री से स्वधर्म (मुखत्व) का भान रुक ही जाता है । जैसे रजतत्व के भान की सामग्री काचकामला दोष एवं रजत विषयक राग से शुक्तित्व का भान रुक जाता है । अर्थात् शुक्तित्व का भान नहीं होता है ।

इस मत में विषयतावच्छेदक (मुखत्व) की अस्फूर्ति अप्रतीति ही सारोपा से साध्यवसाना का भेदक है ।

वस्तुतस्तु साध्यवसाना लक्षणा में विषयतावच्छेदक (मुखत्व) धर्म के भान में यदि सहृदयों का हृदय प्रमाण है तब उस धर्म विषयतावच्छेदक को वारण करने के लिए कारण

कल्पनानुचितैव। शुक्तिरजतभानस्थले तु शुक्तित्वेन भाने पुरोवर्तिनि रजतत्वभानस्य सर्वथैव विरुद्धत्वाद्रजतत्वभानसमये शुक्तित्वभाननिवारणमावश्यकम्, न चेहापि तथा, अनुभवविरुद्धत्वात्। यदि तु तन्न प्रामाणिकं तदा सोचितैव।

## मर्मप्रकाशः

च साधारणधर्मरूपमाह्लादकत्वाद्येवैतन्मते बोध्यम्। तथेति। ततो भेदिकेत्यर्थः।

## मधुसूदनी

तद्वारणाय स्वधर्मस्य भानावरोधाय। कारणकल्पना विरुद्धभानसामग्रया निवार्यत एवेति कल्पना।

नन्वेवं शुक्तिरजतभानस्थलेऽपि शुक्तित्वभाननिवारणाय कारणकल्पनानुचितैव स्यादत आह—शुक्तीति। पुरोवर्तिनि इदमर्थे। इहापि साध्यवसानायामपि तथा स्वधर्मस्य भानं निवार्यम्। इति न च वाच्यमिति शेषः। यदि विषयतावच्छेदकभानं न प्रामाणिकं, सहृदयानां हृदयं तन्नानुमनुते। तर्हि सा तद्वारणाय कारणकल्पना उचितैव योग्यैव।

## बालक्रीड़ा

(विरुद्ध भान रूप सामग्री) की कल्पना करना अनुचित ही है। किन्तु जहाँ शुक्ति में रजत का भान होता है ऐसे स्थल में पुरोवर्ति इदमर्थ में शुक्तित्व का भान यदि हो जाता है तब रजतत्व का भान सर्वथा विरुद्ध है इसलिए रजतत्व के भान के समय शुक्तित्व के भान का निवारण आवश्यक है।

यहाँ साध्यवसाना में चन्द्र शब्द से लक्षणया मुखत्वेन मुख का भान होना विरुद्ध नहीं है अतः विरुद्ध भान से उसके निवारण की आवश्यकता नहीं है प्रत्युत वैसा भान ही नहीं होता है और भात (प्रतीत) हुए का निवारण करना दोनों अनुभव विरुद्ध है: अनुभव में दोनों आते हैं। यदि तो वैसा भान होना प्रामाणिक नहीं है तब वह कल्पना उचित ही है।

संलक्ष्यक्रम और असंलक्ष्यक्रमरूप अभिधामूल ध्वनि एवं अर्थान्तरसंक्रमितवाच्य और अत्यन्ततिरस्कृतवाच्यरूप लक्षणा मूलध्वनि तथा इनके प्रसंग से "यह अभिधा क्या है जिसको मूल में मानकर प्रथम ध्वनि के प्रपञ्च का निरूपण किया और यह लक्षणा क्या है जिसको मूल में मानकर अन्तिम ध्वनि का निरूपण किया है" इसके अनुसार उन ध्वनियों की मूलभूत अभिधा एवं लक्षणा का विस्तार के साथ निरूपण करने के बाद; तथा अभिधा एवं लक्षणा के लक्षणों के कहने से पहले जिन ध्वनियों का नाम एवं स्वरूप कह दिया गया है और [ यहाँ काव्यात्मनः यह प्रयोज्य प्रयोजक भाव सम्बन्ध में षष्ठी है। अतः ] जो काव्य स्वरूप

## अथास्य प्रागभिहितलक्षणस्य काव्यात्मनो व्यङ्ग्यस्य (वाच्यस्य च)

### मर्मप्रकाशः

अथोपमा—काव्यात्मन इति। भेदे षष्ठीयम्। काव्यात्मनो यव्द्यङ्ग्यं तस्येत्यर्थः। यद्वा काव्यात्मन इत्यलंकारा इत्यनेनान्वेति। तत्सामान्यलक्षणमाह—व्यङ्ग्यस्य रमणीयतेत्यादि।

### मधुसूदनी

अथास्येति। अथ असंलक्ष्यक्रमव्यंग्य-संलक्ष्यक्रमव्यंग्यार्थान्तरसंक्रमित-वाच्यात्यन्ततिरस्कृतवाच्यरूपाणां; अभिधामूललक्षणामूलध्वनीनां, तत्प्रसंगेन अथ केयमभिधा यन्मूलः प्रथमं निरूपितो ध्वनिप्रपञ्च इति, अथ केयं लक्षणा यन्मूलश्चरमं निरुपितो ध्वनिरिति च दिशा तन्मूलभूलाभिधालक्षणयोश्च सविस्तरं निरूपणानन्तरम्। "इदमस्तु सन्निकृष्टे" इतिनयानुरोधेन अस्य सन्निकृष्टनिरुपितस्य। प्राग् अभिधालक्षणालक्षणकथनात्पूर्वं कथितमभिहितं लक्षणं नाम, स्वरूपं च यस्य व्यंग्यस्य तस्य। काव्यात्मनः इति षष्ठी, प्रयोज्य प्रयोजकभावः सम्बन्धः। उत्तमोत्तमकाव्यस्वरूपात् उत्तमकाव्यरूपाद्वा प्रयोज्यस्य व्यंग्यस्य रमणीयस्य, अत एव रमणीयताया लोकोत्तराल्हादजनकज्ञानविषयार्थनिष्ठायाः प्रयोजकाः सम्पादका अलंकारा उपमादयो निरूप्यन्ते अभिधीयन्ते।

वस्तुतस्तु तादृशव्यंग्यस्य रमणीयतायै काव्यस्यायमलंकारः कोप्यपूर्वो विधीयते" इति कुन्तकोक्तेः, काव्यं ग्राह्यमलंकारादिति वामनोक्तेः, सालंकारौ शब्दार्थौ काव्यमिति बहूनामुक्तेः, काव्यवृत्तेस्तदाश्रयात् काव्यं काव्यमितिव्यवहारस्यालंकाराधीनत्वादित्यानन्दवर्द्धनोक्तेः, काव्यालंकार प्रस्तावे लौकिकालौकिक-प्रधानवाच्यव्यंग्योपमासाधारणस्य लक्षणकरणानौचित्याच्चेति स्वयं पण्डितराजोक्तेश्च काव्यात्मनः अर्थात् काव्यस्य अलंकारा इत्यन्वयः।

### बालक्रीड़ा

से प्रयोज्य लब्ध व्यंग्य (रसध्वनि वस्तुध्वनि एवं अलंकारध्वनि) तथा वाच्य वस्तु और अलंकार इनकी रमणीयता के प्रयोजक अलंकारों का निरूपण कहते हैं।

वस्तुतस्तु "काव्य का यह अलंकार अपूर्व विधान करते हैं" इस कुन्तक के, "अलंकार के कारण काव्य ग्राह्य है" इस वामन के, सालंकार शब्द और अर्थ ही काव्य है इस आचार्य समुदाय के, काव्यवृत्ति उसके आश्रय पर है अर्थात् यह काव्य है यह काव्य है यह व्यवहार अलंकारों के अधीन है इस आनन्द वर्द्धन के, काव्य के अलंकारों के कथन के अवसर पर लौकिक या अलौकिक, प्रधान एवं अप्रधान, वाच्य एवं व्यंग्य उपमा साधारण का लक्षण कहना अनुचित है ऐसा स्वयं पण्डितराज के लिखने के अनुसार व्यंग्य एवं वाच्य की रमणीयता के प्रयोजक काव्य के अलंकारों का निरूपण करते हैं। [काव्यात्मनः इसमें आत्मा का अर्थ है कि यह काव्य है इस आत्मा माने व्यवहार के प्रयोजक अलंकार हैं]।

यह समझने की बात है कि यहाँ "काव्यात्मनो व्यंग्यस्य" इस पंक्ति में ऐसे पदविन्यास करने का पण्डितराज का अभिप्राय स्पष्ट नहीं प्रतीत होता है प्रत्युत सन्देह का जनक हो

रमणीयताप्रयोजका अलंकारा निरूप्यन्ते ।

### मधुसूदनी

इदं तु बोध्यम् । अत्र पंक्तौ "काव्यात्मनो व्यंग्यस्ये" ति पदविन्यासः पण्डित राजस्य किमभिप्रायकः, प्रत्युत सन्देहाधायक एवेति । काव्यस्यात्मा ध्वनिरिति रीत्या काव्यस्यात्मा जीवभूतो यस्तस्य व्यंग्यस्येत्यन्वयो जागर्ति परं प्रागभिहितलक्षण स्येति विशेषणस्य समन्वयस्तथान्वयजागरणे न सम्भवति । यतः प्रागुपमानिरूपणा रम्भात् क्वापि ग्रन्थेऽस्मिन् व्यंग्यस्य काव्यात्मतया निरूपणं न कृतम् प्रत्युत सर्वत्र उदाहरणसमन्वयदिशि "अत्र काव्ये रतिरभिव्यज्यते", "अत्रायमर्थः प्राधान्येन व्यज्यते" इत्येवं काव्यादेव व्यंग्यस्य प्रतीतिः समर्थिता

तथा काव्यात्मन इत्यत्र आत्मशब्दस्य स्वरूपवाचित्वे काव्यरूपस्य व्यंग्यस्येत्यर्थकरणे पूर्वं रसनिरूपणारम्भीयायाः "तत्र ध्वनेरुत्तमोत्तमस्य काव्यस्येत्यु-ल्लिखित पंक्तेः सङ्गतावपि अस्येति विशेषणं मुखं व्यादाय तमन्वयं निषेधति । यथा शरीरस्थिता अलंकारा आत्मनो रमणीयतां तथैवात्र काव्ये स्थितास्ते व्यंग्यस्य रमणीयतामादधते इति स्थितिः । एवं पञ्चात्मके ध्वनौ परमरमणीयतया रसध्वनेरित्युक्त्या व्यंग्यं रमणीयं काव्यं तु रमणीयार्थप्रतिपादकं वर्त्तते । इति ।

अन्यच्च "इयं च एवम्भेदा उपमा रसवस्त्वलंकाराणं प्रधानव्यंग्यानां वस्त्व-लंकारयोर्वाच्ययोश्च उपस्कारकतया पञ्चधा" इति वक्ष्यमाणसिद्धान्तेन न केवलं व्यंग्यस्य अपितु वाच्यस्यापि रमणीयतायाः प्रयोजका अलंकारा भवन्ति ततश्च व्यंग्यस्येति पदोत्तरं "वाच्यस्य च" इति पठोऽवश्यं योजनीय इति ।

### बालक्रीड़ा

रहा है । क्योंकि "काव्य की आत्मा ध्वनि" इस रीति से "काव्य की आत्मा जीवभूत व्यंग्य" यह अन्वय होता है किन्तु "प्रागभिहित लक्षण है जिसका" इस विशेषण का वहां समन्वय नहीं हो पाता है । जब कि यहाँ उपमा निरूपण के पूर्व कहीं भी ग्रन्थ में व्यंग्य का काव्य की आत्मा के रूप में लक्षण नहीं किया है बल्कि सभी जगह लक्षणों के समन्वय के समय उदाहरणों में इस काव्य में रति की अभिव्यक्ति है । यहाँ अलंकार प्रधानतया व्यक्त होता है । इस प्रकार काव्य से ही व्यंग्य की प्रतीति का होना समर्पित है ।

और यदि "काव्यात्मनः" इस पद में आत्मा शब्द को स्वरूप वाचक मानकर "काव्य-रूप व्यंग्य के" अर्थ करते हैं तब पहले रस निरूपण के आरम्भ की लाइन "तत्र ध्वनेरुत्तमोत्त-मस्य काव्यस्य" की संगति होने पर भी "अस्य" इस विशेषण की संगति नहीं होती है । यह उक्त संगति को रोक रहा है । क्योंकि इदम् शब्द सन्निकृष्ट का बोधक है और सन्निकृष्ट में काव्यस्वरूप व्यंग्य के लक्षणादि कहे नहीं हैं । वस्तु स्थिति यह है कि जैसे शरीर के अवयवों में स्थित अलंकार आत्मा की रमणीयता के प्रयोजक होते हैं उसी प्रकार काव्य के अवयव शब्द एवं अर्थ में स्थित अलंकार काव्य के सारभूत व्यंग्य की रमणीयता के प्रयोजक होते हैं । जैसा कि आगे कहा है "इस तरह पाँच प्रकार की ध्वनियों में रसध्वनि परम रमणीय है" इससे ध्वनि ही रमणीय है । काव्य तो रमणीय अर्थ व्यंग्य का प्रतिपादक है यही सिद्ध होता है ।

तत्रापि विपुलालंकारान्तर्वर्तिन्युपमा तावद्विचार्यते—

साद्दश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालंकृतिः ॥

## मर्मप्रकाशः

तत्रापि तेष्वपि । विपुलेति । वह्वित्यर्थः । वाक्यार्थोपस्कारकमित्यलंकारस्य सामान्यलक्षण-

## मधुसूदनी

तत्रापि अलंकारेष्वपि। विपुला बहुलाः। विचार्यते उपमालक्षणं, लक्षण-गतपदानां प्रयोजनञ्च विविच्य प्रदर्श्यते । वाक्यार्थस्य आकांक्षादिभास्यस्य मुख्यतया तात्पर्यविषयीभूतस्य अर्थस्य। सुन्दरत्वे सति वाक्यार्थोपस्कारकत्वम् इदमलंकारस्य सामान्यं सर्वालंकारसाधारणं स्वरूपम्।

साद्दश्यमिति। सदृशयोर्भावः साद्दश्यम् । तुल्यः समानः सदृक्षः स्वरूपः सदृशः सम; साधारण-सधर्माणौ सवर्णः सन्निभः सदृक् इति हेमचन्द्रकोशानुसारं साधर्म्यमुपमेति काव्यप्रकाशीयं साधर्म्यं, साम्यं वाच्यमवैधर्म्यं वाक्यैक उपमेति साहित्यदर्पणीयं, साम्यं, साद्दश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमेति पण्डितराजादि-भिरुक्तं साद्दश्यं त्रितयं पर्याय वाचकमेव। तेन समानधर्मप्रयोज्यः सम्बन्धः साद्दश्य मेव तच्च पदार्थान्तरम्। वाक्यार्थस्य उपस्कारकं शोभाधायकं सुन्दरं चमत्कार जनकं साद्दश्यमुपमा अलंकृतिः। उप समीपे समीपस्थवस्तुनि मा शोभा यस्याः-सकाशादुदेति साद्दश्यद्वारा उपमानोपमेययोः सामीप्यपरिच्छेदहेतुर्या सा उपमा। यस्या इति पंचमी। यस्याः सद्भावात् स्वाश्रयप्रतिपादकत्वसम्बन्धेन काव्ये शोभा उदेति। स्वम् उपमा, तस्या आश्रयः। ( उपमीयतेऽनेन तत् उपमानम्, उपमातुं योग्यम् उपमेयम् । इति व्याख्यानेऽन्योन्याश्रयो दोषोऽतः साद्दश्यप्रतियोगित्व-सम्बन्धेनोपादीयमानम् प्राकरणिकाप्राकरणिकमुपमानम्। साद्दश्यानुयोगित्वसम्बन्धे-नोपादीयमानं प्राकरणिकमुपमेयम्। इत्येवमुपमाया आश्रयः उपमानम्, उपमेयम्,

## बालक्रीड़ा

और भी बात है कि आगे आप कहेंगे कि यह इतने भेदों वाली उपमा रस, वस्तु एवं अलंकार रूप प्रधानव्यंग्यों के और वाच्य वस्तु एवं अलंकारों को भी उपस्कारक होने से पाँच प्रकार की है। यहाँ पर व्यंग्य का प्रधान विशेषण दिया है अतः व्यंग्यस्य के स्थान पर ध्वनेः पद को बैठा देना चाहिए और व्यंग्यस्य के बाद "वाच्यस्य च" पद को रखना चाहिए तब ग्रन्थ की संगति ठीक होगी। यहाँ संगति का स्वरूप है —(प्राचीनों के अनुसार) काव्य की आत्मभूत ध्वनि रस वस्तु एवं अलंकारों की तथा काव्यस्वरूप उत्तमोत्तम की और वाच्य की रमणीयता के प्रयोजक अलंकारों का निरूपण करते हैं।

उनमें भी विपुल अलंकारों के अन्तः स्थित उपमा का विचार करते हैं। यहाँ विचार पद का अर्थ है उपमा के लक्षण और लक्षणगत पदों के प्रयोजन को विवेचनपूर्वक दिखाना है। वाक्यार्थ का उपस्कारक यांने उसको सजा देने वाला सुन्दर सादृश्य उपमा अलंकृति है। चमत्कृति का आधान करने वाला तत्व सौन्दर्य है। जिसकी सत्ता के विषय में सहृदयों का

सौन्दर्यं च चमत्कृत्याधायकत्वम् । चमत्कृतिरानन्दविशेषः सहृदय-हृदयप्रमाणकः । अनन्वये च 'गगनं गगनाकारम्' इत्यादौ सादृश्यस्य

## मर्मप्रकाशः

प्राप्तम् । सुन्दरमित्यस्य व्यावर्त्यमाह— अनन्वये चेति ।

## मधुसूदनी

इवादिः सदृशादिश्च, साधारणो धर्मश्च । पूर्णायामुपमायां तेषां चतुर्णां, लुप्तायां त्रयाणां, द्वयोः, एकस्य वोपादानं भवति, इति तेषां तयोस्तस्य वा प्रतिपादकं काव्यम् । चमत्कृतिरानन्दः ।

ननु दधि मधुरं, मधु मधुरं, द्राक्षा मधुरा, सिताऽपि मधुरैव । तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नमिति नयान्न आनन्दस्यैकरूपता सर्वस्यापि स्वे स्वे विषये आनन्दानुभूतिरिति परऽयवच्छेदार्थमाह—आनन्दविशेषो विलक्षण आनन्दो न तु सामान्यः । किमत्र मानमित्याह-सहृदयानां सर्वेषां तत्तद्विद्यावासितान्तः करणानां हृदयमेव ।

इदानीं सादृश्यविशेषणस्य सुन्दरपदस्य कृत्यं बोधयितुमुपक्रमते-अनन्वये चेति ।

## बालक्रीड़ा

हृदय प्रमाण है गवाह है वह आनन्द विशेष याने विलक्षण आनन्द चमत्कृति है ।

सादृश्य, साम्य एवं साधर्म्य शब्द पर्याय है उप माने समीपस्थ वस्तु में मा शोभा जिससे हो जाय अर्थात् उपमान एवं उपमेय आपस में एक दूसरे के कितने समीप हैं इसके परिच्छेदक हेतु को उपमा कहते हैं । जिसके रहने से काव्य में शोभा हो जाती है और उस शोभा से रसादि अलंकार्य सुशोभित हो जाय तथा सहृदय पाठक एवं भावुकों को आनन्द विशेष प्राप्त हो जाय तब वह उपमा अलंकार है । अन्यथा नहीं ।

जिससे उपमा की जाय वह उपमान, और उपमा के जो योग्य हो वह उपमेय कहेंगे तो अन्योन्याश्रय दोष हो जायगा अतः सादृश्य के प्रतियोगि विधया उपदीयमान प्राकरणिक या अप्राकरणिक अर्थ उपमान होता है और सादृश्य के अनुयोगिविधया उपादीयमान उपमेय होता है । पूर्णोपमा में उपमा के आश्रय उपमा के स्वरूप के सम्पादक उपमान, उपमेय, इवादि अथवा सदृशादि और साधारण धर्म ये चार होते हैं । लुप्तोपमा में कभी इनमें से तीन, कभी दो, कभी एक रहते हैं ।

दधि, मधुर है मधु मधुर है, द्राक्षामधुर है, मिश्री भी मधुर है । सभी मधुर पदार्थ हैं किन्तु अन्ततोगत्वा जिसका जिसमें मन रम जाय उसके लिए वही मधुर है । इस सिद्धान्त के अनुसार अपनी-अपनी जगह सभी मधुर हैं अतः आनन्द एक रूप नहीं है इसलिए कहते हैं आनन्द विशेष याने सामान्य आनन्द नहीं अपितु विलक्षण आनन्द को चमत्कार कहते हैं । यही सुन्दर पद का अर्थ हैं ।

सुन्दर पद के उपादान करने का फल बतलाते हैं "गगन, गगन के समान है" इत्यादि

द्वितीयसब्रह्मचारिनिवर्तनमात्रार्थमुपात्तत्वेन स्वयमप्रतिष्ठानादचमत्कारितैव । अत एव तस्यान्वयाभावादनन्वयं तमाहुः । व्यतिरेके 'तवाननस्य तुलनां दधातु जलजं कथम्' इत्यादौ चमत्कारिणो निषेधस्य निरूपणाय प्रतियोगिनः सादृश्यस्य निरूपणमचमत्कारकमेव ।

एवमभेदप्रधानेष्वपि रूपकापह्नुतिपरिणामभ्रान्तिमदुल्लेखादिषु, भेद

### मर्मप्रकाशः

सब्रह्मचारीति । सदृशेत्यर्थः । स्वयमिति । स्वस्यापर्यवसानादित्यर्थः । अत एव [1]स्वार्थबोधने तात्पर्याभावादेव । तस्य सादृश्यस्य । द्वितीयं तदाह— व्यतिरेक इति ।

अन्यदपि तदाह—एवमिति । अनन्वयव्यतिरेकयोरिवेत्यर्थः । तत्तन्निष्पादकेति ।

### मधुसूदनी

द्वितीयेति । द्वितीयः सब्रह्मचारी सदृशो नास्तीति निवर्त्तनं केवलं लक्ष्यमिति निवर्त्तनाय परीहाराय सादृश्यमुपात्तमन्यत् प्रयोजनं किमपि न । अत एव तन्निवर्त्तनार्थमुपादानादेव सादृश्यं स्वयमप्रतिष्ठितं, तत एव तस्य सादृश्यस्याचमत्कारिता, तथा । सदृशस्याभावे सदृशनिष्ठस्य सादृश्यस्य सुतरामप्रतिष्ठानमेव । एवं सादृश्यस्य सुन्दरतायामेवोपमा । सुन्दरताया अभावे सत्यपि सादृश्ये भिन्ना एवानन्वादयोऽलंकारा बोध्या इति भावः । अत एव आनन्दविशेषाभावादेव । तस्य सादृश्यस्यान्वयो न । इति तमनन्वयमाहुः ।

तवेति । हे सुन्दरि ? जलजं कमलं तवाननस्य तुलनां सादृश्यं कथं दधातु धारयतु । इत्यादौ व्यतिरेके "तुलनां कथं दधातु" अर्थात् तुलनां कर्त्तुं न समर्थ इत्येवं निषेध एव चमत्कारी । यतः प्रतियोगिनिरूपणं विना अभावनिरूपणं दुःशकमिति निषेधनिरूपणाय कृतं प्रतियोगिनः सादृश्यस्य निरूपणं चमत्काररहितमेवेत्यत उक्तमचमत्कारकमेवेति ।

### बालक्रीड़ा

अनन्वय में कोई भी दूसरा पदार्थ जोड़ीदार नहीं है बस इतना बतलाने के लिए ही सादृश्य का उपादान किया जाता है किन्तु वह अपने स्वरूप का लाभ नहीं कर पाता है अतः सादृश्य चमत्कृत नहीं है । इस अप्रतिष्ठान हेतुक चमत्काराभाव के ही कारण उसको अनवय कहते हैं इसमें सादृश्य का अन्वय नहीं होता है ।

'तुम्हारे आनन की तुलना को जलज कैसे प्राप्त कर सकता है" इत्यादि व्यतिरेक में चमत्कार निषेध के निरूपण करने के लिए निषेध (अभाव) के प्रतियोगीभूत सादृश्य का निरूपण किया गया है अतः चमत्कारी सादृश्य नहीं है ।

इसी तरह अभेद प्रधान चमत्कारी रूपक, अपन्हुति, परिणाम, भ्रान्तिमान्, उल्लेख

---

[1] स्वार्थेति । स्वं सादृश्यपदं तदर्थः सदृशनिष्ठत्वरूपः । तस्य बोधने ।

प्रधानेषु दृष्टान्तप्रतिवस्तूपमादीपकतुल्ययोगितादिषु चमत्कारिषु तत्तन्निष्पादकतयावस्थितस्यापि सादृश्यस्य चमत्कारिताविरहेण नास्त्युपमालंकृतित्वम्। मुखमिव चन्द्र इति प्रतीपे, चन्द्र इव मुखं मुखमिव चन्द्र इत्युपमेयोपमायां च सादृश्यस्य चमत्कारित्वान्नातिप्रसङ्गः शङ्कनीयः, तयोः संग्राह्यत्वात्।

## मर्मप्रकाशः

अभेदापह्नवादिनिष्पादकेत्यर्थः। तयोस्तादृशप्रतीपोपमेयोपमयोः। संग्राह्यत्वादिति। चित्रमीमांसोक्तोपमालक्षणदूषणावसरे इति भावः। नव्यास्तु 'यत्र चन्द्राद्युपमाने सादृश्यप्रतियोगित्वस्य मुखाद्युपमेये सादृश्यानुयोगित्वस्य बुद्धिकृतश्चमत्कारस्तत्रोपमालंकारत्वम्। अनन्वये तु न स्वसादृश्यबुद्धिकृतः सः, किं तु निरुपमत्वबुद्धिकृत इति नोपमात्वम्। उपमेयोपमायामपि न परस्परसादृश्यबुद्धिकृतः सः, किं त्वनयोरेव साम्यं न तृतीय एतत्सदृश इति बुद्धिकृत इति तस्यामपि न तत्त्वम्। मुखमिव चन्द्र इति प्रतीपेऽपि मुखादौ सादृश्यप्रतियोगित्व बुद्धिकृत एव सः, न तदनुयोगित्वबुद्धिकृत इति तत्रापि न तत्त्वम्। 'अहमेव गुरुः—'इति प्रतीपेऽपि उपमानतिरस्कृतत्वकृत एव सः, न तु सादृश्यबुद्धिकृत इति न तत्रापि तत्त्वम्।

## मधुसूदनी

उल्लेखादिषु अत्रादिपदेन उत्प्रेक्षाससन्देहयोर्ग्रहणम्। तुल्ययोगितादिषु अत्रादिपदेन निदर्शनासमासोक्त्योर्ग्रहणम्। वस्तुतस्तु मीलितसामान्यतद्गुणानामेव सत्यपि भेदे भेदाग्रहणाद् भेदप्रधानेषु गणना कार्या। व्यतिरेकस्तु पृथगेव कृत्यप्रदर्शनान्नोक्तोऽस्मिन् प्रसंगे।

तत्तन्निष्पादकतयेति। रूपणापन्ह्वपरिणमनभ्रमोल्लेखनोत्प्रेक्षणसन्देहानाम्। विम्बप्रतिविम्बन-वस्तुप्रतिवस्तुभावन-दीपन-तुल्ययोजनादीनां तेषां तेषां निष्पादकतया सादृश्यमवस्थितमिति सादृश्ये चमत्कारस्य विरहस्तेनोपमालंकारांगतया व्यपदेशो नास्ति तत्र सादृश्ये। नातिप्रसंग इति। नातिव्याप्तिः शंकनीया। तयोः (उपमित्यनिष्पत्त्याऽपि जायमानं प्रतीपं विहाय) निष्पन्नचमत्कृतसादृश्ययोः प्रतीपोप-

## बालक्रीड़ा

और आदि पद से बोध्य उत्प्रेक्षा एवं सन्देह अलंकारों में, और भेदप्रधान चमत्कारी दृष्टान्त प्रतिवस्तूपमा, दीपक, तुल्ययोगिता, आदि पद गृहीत निदर्शना समासोक्ति अलंकारों में सादृश्य यद्यपि इन रूपण, अपन्हवन, परिणमन, भ्रम, उल्लेखन, उत्प्रेक्षण सन्देह, तथा विम्बप्रतिविम्बन वस्तुप्रतिवस्तुभावन दीपन एवं तुल्ययोजना को सम्पादन करने के लिए अवस्थित है तथापि वह चमत्कारी नहीं है अतः उपमा अलंकार कहलानें की क्षमता नहीं रखता है।

"मुख के सदृश चन्द्र है" इस प्रतीप में, "चन्द्र की तरह मुख है और मुख की तरह चन्द्र है" इस उपमेयोपमा में सादृश्य के निष्पन्न अतएव चमत्कारी होने पर भी अतिव्याप्ति लक्षण की नहीं हुई क्योंकि वे दोनों उपमात्वेन संग्राह्य हैं। जिस प्रतीप में उपमिति क्रिया निष्पन्न नहीं है अतएव जो चमत्कारी नहीं है वह प्रतीप उपमात्वेन संग्राह्य नहीं है।

ननु 'त्वयि कोपोऽयमाभाति सुधांशाविव पावकः,इत्यादावुपमानस्यात्य-

### मर्मप्रकाशः

अलंकारभेदे च चमत्कारनिदानभेद एव निदानम्। रूपकोत्प्रेक्षादौ तथा क्लृप्तत्वात्, सहृदयानुभवसाक्षिकत्वाच्च। एतेन सादृश्यस्याप्रतिष्ठाने यदि सादृश्यप्रतीतिस्तर्ह्यनुभव-विरोधः। यदि भेदगर्भाभेदप्रतीतिस्तदा भेदांशनिवेशेन तद्विवरणे किं फलम्। उपमेयोप-मावत्तस्याप्यस्तूपमात्वमित्यपास्तम्' इत्याहुः। उपमानस्य चन्द्राधिकरणकानलस्य।

### मधुसूदनी

मेयोपमयोरुपमात्वेनैव संग्राह्यत्वात् स्वीकार्यत्वात्। ननु सादृश्यस्य सुन्दरत्वे एवोपमा, अन्यथा न; तर्हि त्वयि कोप इत्यादौ का गतिः। यतो यत्र तत्वतोऽसता प्रौढ़ोक्ति-निर्मितेन काल्पनिकेन उपमानेन उपमेयस्य काल्पनिकमेव नतु सुन्दरं सादृश्यं तत्र कल्पितोपमा भवति "फलं चात्र प्रतिभटभूतवस्त्वन्तराभावप्रतिपादनम्" "अत एव नास्या उपमायामन्तर्भावः" किन्तु ततः पृथगेव कल्पितोपमेति। एतादृश्याः कल्पितोपमाया उपमातः पृथक्त्वं नास्तीति शंकासमाधानयोः पण्डितराजः पराक्रमते-नन्विति। ननु शंकायाम्। हे सुन्दरि ? त्वयि अयं कोपः सुधांशौ अमृतकिरणे चन्द्रे पावकोऽग्निरिवाभाति। यस्यांशवः सुधास्वरुपा अतएव दर्शनमात्रेण किमुत स्पर्शनादिना संजीवयितारस्तस्मिन् चन्द्रे यथा अग्नेरसंभवः तथैव त्वयि या ममाङ्गेषु सुधारसच्छटा, या मम दृशोः सुपूरकर्पूर शलाकिका तस्यां त्वयि कोपोऽसंभाव्य आसीत्, अद्यायं प्रत्यक्षायमाणः कोपः कथमिति नायकः कथयति नायिकां सम्बोध्येति।

इत्यादौ सादृश्यप्रतियोगित्वसम्बन्धेनोपादीयमानस्य वस्तुन उपमानस्य सुधांशु-समधिकरणकपावकरूपस्यैव अत्यन्तमसंभावना। ततश्च प्रतियोगिरूपसम्बन्धिनोऽभावे सम्बन्धं सादृश्यमेव प्रतिपत्तुं ज्ञातुं तावदादौ न शक्यं पुनस्तर्हि चमत्कारस्तु सादृश्ये सौन्दर्यन्तु केन स्यात्। सादृश्यनिष्पत्तौ चमत्कारोऽतः मूलं सादृश्यं नास्ति कुतः शाखा, तद्गतं सौन्दर्यमिति भावः। समाधत्ते कविना हीति। खण्डशः पदार्थानामुप-

### बालक्रीड़ा

सादृश्य की सुन्दरता में ही उपमा होती है असुन्दरता में नहीं। तब "तुम्हारे में कोप, सुधांशु अमृतमय किरण वाले चन्द्रमा में अग्नि के सदृश है। इन उदाहरणों की क्या गति होगी। क्योंकि जहाँ वस्तुतः असत् काल्पनिक अर्थात् वास्तविक नहीं होने से सादृश्य असुन्दर है वहाँ कल्पितोपमा होती है। ऐसी उपमा का फल है कि उपमेय की जोड़ीदार द्वितीय वस्तु कोई नहीं है। इसीलिए इसका उपमा में अन्तर्भाव नहीं होता है। किन्तु ऐसी कल्पितोपमा उपमा से पृथक् नहीं है। इन शंका एवं समाधनों को पण्डितराज दिखाने का आरम्भ करते हैं।

"हे सुन्दरि ! जिसके अंश (किरण) अमृतमय हैं जिनके दर्शन ही 'स्पर्श की तो महिमा ही क्या है' संजीवित कर देने वाले हैं उस चन्द्र में अग्नि जैसे असंभाव्य है उसी तरह तुम्हारे

न्तमसंभावितत्वात्सादृश्यमेव न तावत्प्रतिपत्तुं शक्यम्, चमत्कारस्तु पुनः केन स्यादिति चेत्, कविना हि खण्डशः पदार्थोपस्थितिमता स्वेच्छयाऽसंभावितत्वेनाकारेण चन्द्राधिकरणकमनलं प्रकल्प्य तेन सह साम्यस्यापि कल्पने बाधकाभावात्। कल्पितमसत्सादृश्यं कथं चमत्कारजनकमिति तु न वाच्यम्, परमसुकुमारीभवत्कनकनिर्मिताङ्ग्या मणिमयदशनकान्तिनि-

### मर्मप्रकाशः

असंभावितत्वेन न तु सत्येन रूपेणेति भावः।

कल्पितमिति। यतः कल्पितमत एवासदित्यर्थः। नन्वेवं भवतु तादृशस्यापि सादृश्यस्य चमत्कृतिजनकत्वं तथापि लक्षणे उपमानोपमेययोर्निवेशेन तयोः सत्यत्वस्यापेक्षित-

### मधुसूदनी

स्थितिः। तद्वता कविनेतिः समन्वयः। अयमाशयः=लोके पदार्थाः सन्ति। स्वस्वरूपेण वर्त्तमाना अनन्विताः। आकाशे सुधांशुः। पृथिव्यां पावकः। सुधांशौ पावक इत्येवंरूपेण अन्वितपदार्थास्तित्वं नास्ति। परन्तु कविः स्वेच्छया कल्पनां तनुते। अत्र तु पदमपि बौद्धं पदार्थोऽपि बौद्धः। उपस्थितिरपि बौद्धा। ततश्च सुधांशौ पावक इति बौद्धं चन्द्राधिकरणकमनलं प्रकल्प्यतेन सह सादृश्यमपि कल्पयेत्तदा किमपि बाधकं नास्तीति बोध्यम्। ननु ( बुद्धिसिद्धं तु तदसदिति वैशेषिकसूत्र ) तत् कल्पितं कथं चमत्कारीत्याह—कल्पितमिति। लोके ब्रह्मणि कल्पितं तत एव असदेतज्जगत् कियच्चमत्कारजनकमिति सर्वं समक्षं भावयतुः सहृदयस्य काव्ये सादृश्यं कल्पितमसत् कथं चमत्कारं जनयिष्यति इति भावनमेव दुःशकं तथा वक्तुं तु सुतरामिति निष्कर्षः।

### बालक्रीड़ा

में कोप असंभाव्य है किन्तु आज यह कोप कैसे" इत्यादि उदाहरणों में जब उपमान सुधांशु-समधिकरणपावक ही असंभाव्य है अतः प्रतियोगिरूप सम्बन्धी के अभाव में सादृश्य सम्बन्ध का समझना भी दुर्लभ है तब उसमें चमत्कार कैसे प्राप्त हो सकता है। क्योंकि सादृश्य की निष्पत्ति होने पर चमत्कार होता है। जब मूल ही नहीं है तब शाखा कैसी। यह शंका है। इसका समाधान करते हैं।

कवि, जिसको खण्डशः अलग २ पदार्थों की उपस्थिति होती है। जैसे चन्द्रमा अलग एक पदार्थ है पावक भी एक पदार्थ हैं परस्पर में किसी का कोई भी सम्बन्ध नहीं है। किन्तु कवि अपनी इच्छा से भावना करके चन्द्रमा में अग्नि की कल्पना करता है। फिर उसके साथ सादृश्य की कल्पना करता है क्योंकि कोई बाधक नहीं है।

और यह आप कह नहीं सकते कि कल्पित झूठे सादृश्य से कैसे चमत्कार होगा। क्योंकि जिसके अंग सोने के बने हुए हैं और जो अत्यन्त कोमल हैं, जिसके मणिमय दाँतों की कान्ति

र्वासितध्वान्तायाः कान्ताया भावनया पुरोऽवस्थापिताया आलिङ्गनस्याल्हादजनकत्वदर्शनात्। उपमानोपमेययोः सत्यत्वस्य लक्षणे प्रवेशाभावान्नात्र दोषलेशोऽपि।

अत एव

'स्तनाभोगे पतन् भाति कपोलात्कुटिलोऽलकः।
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः॥

### मर्मप्रकाशः

त्वेन कथमुक्तस्थले निर्वाहोऽत आह—उपमानोपेति।

### मधुसूदनी

अतएव उपमानोपमेयसादृश्यानां सत्यत्वासत्यत्वगवेषणाया अकरणीयत्वादेव।

स्तनाभोगे इति। स्तनस्याभोगः परिपूर्णता। "आभोगः परिपूर्णता" इत्यमरः। अत्र एक एवालकः। एकस्मादेव कपोलात्। एकस्मिन्नेव परिपूर्णतायुक्ते अर्थात् पीने स्तने इत्येवं सर्वत्र एकवचनान्तपदानां प्रयोगः सप्रयोजनः। तत्र धम्मिल्लस्य सर्वेऽन्येंशाः पृष्ठभागे प्रसृमराः स्वभावादेव। तदेकांशस्तु अग्रतः एकस्मिन् पीने स्तने प्रसरन् नायिकया सन्धारितः। अतः। "सुमेरोः शिखरैकस्मिन् लम्बमान इवोरगः।" इत्युत्तरार्धं उपमानस्य निरूपकः पाठः समुचितः। ननु शिरसि अलकानां समुदयो न तु कपोले तथा च तत एव तेषां नीचैः प्रसरणं स्यात् न तु कपोलादलकस्य पतनं सम्भाव्यते इति चेत्सत्यम्। इयं कल्पितोपमा अतस्तथा प्रकल्प्योच्यते। नन्वियं कल्पितोपमा, तर्हि उपमातः पृथगेव स्यादिति चेन्न, असत्यत्वं नामोपमानस्य नोपमायाः बाधकम्। अयं भावः। उपमानस्य वैशिष्टयमुपमेयस्य वा क्वचिदिति सिद्धान्तः। तत्र यदि तद्वैशिष्ट्यमेकत्र उपमाने, उपमेये वा द्वयोर्वा कविप्रतिभया कल्प्यते तदा कल्पितोपमा भवति। तथाहि—"त्वयि कोपोऽयमाभाति सुधांशाविव पावकः" इत्यत्रोपमानपावकस्य सुधांशुसमधिकरणकत्वं कविकल्पितं, लोके तथाऽसंभवात्। तदेतदुक्तं=चन्द्राधिकरणकमनलं प्रकल्प्य तेन सह साम्यस्यापि

### बालक्रीड़ा

से उस प्रदेश का अन्धकार दूर कर दिया जाता है ऐसी कान्ता के केवल कल्पना से भावना के द्वारा आलिंगन से आह्लाद उत्पन्न हुआ देखा जाता है। और उपमान एवं उपमेय सत्य हों ऐसा लक्षण में निवेश भी नही किया गया है तब दोष कोई नहीं है।

उपमान, उपमेय एवं उनके सादृश्य के सत्यत्व और असत्यत्व की गवेषणा नहीं करने के कारण ही "स्तनाभोगे" इत्यादि उदाहरणों में कोई अनुपपत्ति नहीं है।

कपोल से स्तनाभोग पर गिरता हुआ कुटिल अलक; शशांक बिम्ब से मेरु की तरफ लम्बायमान साँप की सदृश प्रतीत होता है। आभोग माने परिपूर्णता। यहाँ आभोगे, कपोलात्,

इत्यादावपि नानुपपत्तिः। परे तु अस्याः कल्पितोपमाया उपमाना-

मधुसूदनी

कल्पने बाधकाभावादिति। एतदुपमानगतवैशिष्ट्योदाहरणम्। स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः। सुमेरोः शिखरैकस्मिन् लम्बमान इवोरगः।

इत्यत्रोपमेयस्यालकस्य शिरसः प्रसृमरत्वं विहाय कपोलात्त्वं कविकल्पितमिति उपमेयगतवैशिष्ट्योदाहरणम्। पर्वतेषु तूरगाणां सम्भव एवेति उपमानविषयेऽत्र कवि कल्पना नास्ति।

उभयत्र कल्पनायां पण्डितराजीयं यथास्थितमुदाहरणं बोध्यम्। तथा च पूर्वार्द्धे उपमेयस्यालकस्य कपोलापादनकत्वम्। उत्तरार्द्धे उरगस्य शशाङ्कबिम्बापादानकत्वं कविकल्पितं बोध्यम्। तदेतदुक्तं=इत्यादावपि नानुपपत्तिः उपमायाः स्वीकारे असंगति नास्ति।

तदेतत्पण्डितराजस्योदाहरणप्रदर्शने निर्मितिक्रियायां कार्पण्यम्। अलकः पतन्निति एवंरूपेणऽश्लीलत्वं दोषमुद्भावयति। पतनवर्णनमलकस्य तादृशमेव। अतः "अलकः प्रसरन्" इति पाठ इह बोध्यः।

प्रोपसर्गस्य "विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोप" इति नियमाल्लोपः। अथवा सरन्निति एव भवतु। अथ च "कदाचिदुपमेयगतं वैशिष्ट्यं सादृश्यप्रयोजकं कविप्रतिभया कल्प्यते" इति उदाहर्तुं प्रवर्त्तनसमये उपमेयगत एव धर्मो निर्देष्टव्यो न तु उपमानगतोऽपि। उभयगतत्वे तु तृतीयमुदाहरणं स्यात्। इदं तृतीयमेवोदाहरणमिति चेद् द्वितीयमुदाहरणं क्वास्ते। मन्मते तु। सुमेरोः शिखरैकस्मिन्निति एवं तृतीयपाद-कल्पने द्वितीयमुदाहरणमन्यथा वर्तमानपाठे तृतीयमुदाहरणं बोध्यम्। तथा च कदाचिदुपमानोपमेयोभयगतत्वेन कविप्रतिभया कल्प्यते इति पूरणीयमिति।

परे त्विति। परे तु अलंकाररत्नाकरकारास्तु। तेषामयमाशयः। यदा हि उपमेयकोटौ समकक्षतया प्रवेशमाटीकितुं प्रतिद्वन्द्विभूतमुपमानं स्वाभाविकं प्रसिद्धं वा जगति न मिलति तदा कविः सम्भावितत्वेनाकारेणोपमानं प्रतिभया कल्पयति तदा सा उपमा कविकल्पितोपमेति व्यवह्रियते। अत एवैतस्या उपमायामन्तर्भावो नास्ति। उपमानगुणविशिष्टोपमेयप्रतिपत्तिफलकोपमायामुपमानान्तरासंभवाभावरूपं फलमत्र तूपमानान्तरासंभवः इति भिन्नं फलम्। तत्र फलभेदेऽपि अस्या उपमा-यामन्तर्भावः स्वीक्रियते तर्हि अनन्वयव्यतिरेकयोरपि तदन्तर्भाव एवास्तु।

बालक्रीड़ा

अलकः इस तरह सभी पदों में एक वचन के प्रयोग का प्रयोजन है कि धम्मिल्ल के अन्य सभी अंश स्वभाव से पीठ पर फैले हुए हैं किन्तु उसका एक अंश पीन स्तन के ऊपर गिर रहा है। इस उपमेयांश में एक वचन के अनुसार उपमानांश में भी "सुमेरोः शिखरैकस्मिन् लम्बमान इवोरगः" ऐसा पाठ उचित है।

दूसरे आचार्य तो इस कल्पितोपमा को उपमा से भिन्न ही अलंकार कहते हैं। क्योंकि कल्पित उपमान के सिवाय अन्य कोई उपमान नहीं है यही उसका फल है।

न्तराभावफलकत्वेनालंकारान्तरतामाहुः। तन्न। सादृश्यस्य चमत्कारितयोपमान्तर्भावस्यैवोचितत्वात्। सन्निरुपितत्वस्य लक्षणे प्रवेशाभावात्। उपमानान्तराभावफलकत्वं ह्युपमाविशेषत्वे साधकम्, न तूपमाबहिर्भावे।

### मर्मप्रकाशः

अभावफलकत्वमिति। उपमानान्तराभावस्य फलत्वेऽपि कविकल्पितसादृश्यकृत एव चमत्कार इति नव्यमतेऽपि न दोषः।

### मधुसूदनी

ननु भवतु तयोरपि उपमायामन्तर्भावः का वो हानिरिति चेत्, अलंकारत्वेन समेषामलंकाराणां तथा सादृश्यमूलकत्वेन कतिपयानां तेषामेकत्वमेवास्तु। ननु तत्र लक्षणादिभेदाद्भेदोऽस्ति इति चेत्, स तु प्रकृतेऽप्यस्ति। तथाहि उपमानापेक्ष एव "इदमुपमेयम्" इति व्यवहारः। उपमानस्यावास्तवत्वे उपमेयस्यापि तथात्वं, द्वयोरसत्यत्वे तद्गतसादृश्यस्याप्यसत्यत्वे उपमितिमिक्रियाया अनिष्पत्तिरतस्तस्या निष्पत्तये ते कल्प्येते। अतः कल्पितोपमा, लोकशास्त्रयोः प्रसिद्धं वा प्रसिद्धेन सह वा साधर्म्यमाश्रित्य प्रवृत्ताया उपमायाः पृथगेवेति। तन्नेति अपार्थक्यं साधयितुमाह— सादृश्यस्येति। मम तु मतम्—

उपमानान्तराभावरूपं भेदबीजं फलमकिञ्चित्करं, यतो हि उपमेयोपमायां द्वाभ्यामतिरिक्तं तृतीयमुपमानं नास्ति इत्येवंरूपस्य, प्रतीपेऽपि उपमानतिरस्कारेणोपमानं नास्तीति रूपस्य, उपमानलुप्तायाञ्च "यस्य तुलामारोहसीति पद्ये यस्य तुलां हे चम्पक ? त्वमारोहसि, तं तु वयं न जानीम इत्युक्तया स कोऽपि तवोपमानं भविष्यति। किन्तु अस्माकमसर्वज्ञत्वाद् गोचरो नेति उपमानस्य लोपोऽभाव इतिरूपस्य फलस्य भेदेऽपि सादृश्यस्य निष्पत्त्या यथा तेषूपमाविशेषत्वेनैव व्यवहारो न तूपमाबहिर्भूतत्वेन तथा प्रकृतेऽपि तत्फलं तस्या उपमाविशेषत्वे साधकं नतु ततो बहिर्भावे। अत एवानन्वये सादृश्यस्यैव अनिष्पत्त्या उपमाविशेषत्वेन व्यवहारो नास्ति ततः पृथगेव सः। इति।

यदप्युक्तम्=उपमायामुपमानगुणविशिष्टोपमेयप्रतिपत्तिरत्र तु सा नास्तीति तदपि न सत्। यतो हि मधुरमधुरस्वभावाया नायिकायाः सम्बन्धिना कोपेन सह पावकस्य सादृश्याभावो मा प्रसिध्यतु इति पावकस्य सुधांशुसमधिकरणकत्वं प्रकल्प्य सादृश्यमेव निष्पाद्यतेऽतः सुधांशुसमधिकरणकपावकोपमानगुणविशिष्टस्य नायिकाधिकरणककोपोपमेयस्य प्रतिपत्तिरिहापि भवतीति।

### बालक्रीड़ा

यह ठीक नहीं है। सादृश्य में चमत्कार यहाँ मिलता है अतः उपमा का ही यह भेद है। उचित भी है क्योंकि सत् ही उपमान हो ऐसा लक्षण में कोई निवेश भी नहीं किया है। अन्य उपमान का नहीं मिलना रूप फल उपमाविशेष का ही साधक है उपमा से अलगाव करने में साधक नहीं है।

अथ

## मधुसूदनी

ननु यदाऽयमुपमानांशो लोकतः सिद्धिमृच्छति । तदोपमैव, येनेवशब्दः साधर्म्यसूचकः ।

यदा पुनरयं लोकादसिद्धः कविकल्पितः । तदोत्प्रेक्षैव, येनेवशब्दः संभावनापरः ।

इति सिद्धान्तादुपमानस्य लोकादसिद्धत्वेऽन्योऽलंकार इहास्ति, न तूपमेति चेन्न । सादृश्यनिष्पत्तावुपमा भवति । उपमानं कविकल्पितं वा स्वतः सिद्धं वा भवतु नैतदावश्यकं स्वतः सिद्धंमेवतत्किन्तु, सादृश्यनिष्पत्तिस्तथेति प्रसाध्येदानीं तत्प्रयोजकस्य धर्मस्य साधारणताविषये विचारयितुं प्रवर्त्तते=अथेति । अयमाशयः । साधारणधर्मो हि सादृश्यस्य जीवातुः । किन्तु धर्मे सकलाधारवृत्तित्वं नास्ति । तद्यथा—"हँसीव धवलश्चन्द्रः स्वर्गंगामवगाहते" इत्यादौ न हि यदेव धावल्यं चन्द्रे तदेव हंस्यामपि । किन्तु तत्सजातीयम् । एवं धर्मयोः साधारण्याभावात् प्रत्युत भेदात्तस्याः स्वरूप-निष्पत्तिरेव न स्यात् । ननु तर्हि धर्मयोः साधारण्याय किञ्चिद्बीजं गवेषणीयं, तत्र किं बीजं, तत्रापि किमित्यनवस्था । यदि सादृश्यं तद्बीजं तर्हि तदर्थं साधारण्यं, तेन सादृश्यं, तदर्थं पुनः साधारण्यमिति चक्रकमात्माश्रयो वा दोषः ।

## बालक्रीड़ा

अथ—उपमान लोक सिद्ध होने पर उपमा होती है किन्तु प्रकृत में वह कवि कल्पित है अतः उपमा नहीं है यह कहना ठीक नहीं है । क्योंकि यह लोकसिद्धत्व आवश्यक नहीं है सादृश्य निष्पत्ति आवश्यक है वह जब है तब उपमा मानने में कोई संदेह नहीं है । इस बात को सिद्ध करके उपमा के प्रयोजक साधारण धर्म के विषय में विचार करने में प्रवृत्त होते हैं ।

दूसरे आचार्य अलंकाररत्नाकर के निर्माता हैं । इनका आशय यह है कि जब उपमेय की श्रेणी में समकक्षतया प्रवेश पाने के लिए प्रतिद्वन्दी, स्वाभाविक याने जगत् में प्रसिद्ध उपमान नहीं मिलता है तब कवि सम्भावना करके अपनी प्रतिभा से उपमान की कल्पना करता है । इसीलिए उसको कल्पितोपमा कहते हैं फलतः उसका उपमा में अन्तर्भाव नहीं होता है । इसके सिवाय जहाँ उपमा में उपमेय को उपमान के विलक्षण गुणों वाला समझना है वहाँ अन्य उपमान का मिलना असंभव नहीं है । और कल्पितोपमा में अन्य उपमान का मिलना ही असंभव है तथा इन दोनों का फल भी भिन्न २ है । इस तरह यदि फल भेद होने पर भी इसका उपमा में अन्तर्भाव मानेंगे तब तो अनन्वय और व्यतिरेक का भी उपमा में अन्तर्भाव मान लिया जाय । क्योंकि सादृश्य की प्रतीति वहाँ पर भी समान है । यदि कहें कि हो जाय अन्तर्भाव, क्या हानि है । तब तो अलंकारत्वेन सभी अलंकारों का या सादृश्य मूलक होने से कतिपय अलंकारों का भी उसी में समावेश कर दिया जाय ।

यदि लक्षण एवं चमत्कार के अलग होने से वे अलंकार अलग माने जाते हैं ऐसा कहा जाय तो वह स्थिति प्रकृत कल्पितोपमा में भी है ही । जैसे—यह उपमेय है यह व्यवहार

## मधुसूदनी

तत्कुतश्चेदुच्यते। आधार आधारणं भावे ल्युट्। आधारणमपरित्यज्य वर्त्तते इति विग्रहे अव्ययं विभक्तीति साकल्यार्थेऽव्ययीभावोऽस्वपदविग्रहो नित्यः समासः। अव्ययीभावे चाकाले इति सहशब्दस्य सादेशेन साधारणमिति पदं निष्पन्नं, तस्यार्थः स्वीयाधारभूते सकले पदार्थे वर्तमानत्वम्। तच्च धर्मश्चेति कर्मधारयसमासे साधारणधर्मः। स च स्वीयाधारभूतयोरुपमानोपमेययोरुभयत्र तिष्ठन् जागर्ति तदा सादृश्यं निष्पादयति। किन्तु तथा स्थितिर्नास्ति। उपमानोपमेययोर्भिन्नतया तन्निष्ठो धर्म्मोऽपि भिन्न एव, एकरूपो न।

## बालक्रीड़ा

उपमान की अपेक्षा पर निर्भर करता है। यदि उपमान झूठा है तो उपमेय भी झूठा है। वे दोनों असत्य हैं तब सादृश्य भी असत्य है फलतः उपमिति क्रिया की निष्पत्ति अर्थात् उपमा की सिद्धि वहाँ नहीं होगी। अतः उपमा की निष्पत्ति के लिए जहाँ उपमान की कल्पना की जाती है वह कल्पितोपमा, लोक एवं शास्त्र से सिद्ध उपमान के साथ उभय सिद्ध साधर्म्य के सहारे प्रवृत्त होने वाली उपमा से अलग ही है।

इसके उत्तर में कहते हैं कि यह बात नहीं है। सादृश्य में चमत्कार होने के कारण उसका उपमा में अन्तर्भाव करना उचित है। इसलिए अन्य उपमान का मिलना असंभव है ऐसा भेद का कारण फल अकिंचित्कर है। क्योंकि उपमेयोपमा में तृतीय सदृश नहीं है। प्रतीप में उपमान का तिरस्कार किया जाता है अतः उपमान ही नहीं है। उपमानलुप्ता में, वह कोई तुम्हारा उपमान होगा जिसको हम असर्वज्ञ होने के कारण जान नहीं सकते हैं; इस तरह उपमान का लोप होता है इन तीनों जगहों में उपमान का अभाव कल्पितोपमा के समान ही है किन्तु सादृश्य में चमत्कार होने के कारण उनको जैसे उपमा विशेष कहा जाता है उपमा से अलग नहीं, वैसे ही कल्पितोपमा को भी उपमा विशेष ही कहना चाहिए न कि उपमा से अलग कहना चाहिए।

अनन्वय एवं व्यतिरेक में तो वह सादृश्य निष्पन्न ही नहीं होता है तब चमत्कार जनक कैसे हो सकता है अतः उनका पृथग्भाव उचित ही है।

और जो आपने कहा कि उपमा में तो उपमानगुण विशिष्ट उपमेय की प्रतीति होती है और कल्पितोपमा में तो वह नहीं है। यह भी ठीक नहीं है। क्योंकि मधुर स्वभावा नायिका के कोप के साथ पावक की तुलना नहीं हो सकती है ऐसी प्रसिद्धि न हो जाय इस लिए सुधांशु में अग्नि की कल्पना करके तुलना की जाती है इसलिए सुधांशुसमधिकरणक पावकोपमान गुणविशिष्ट नायिकासमधिकरणक कोपोपमेय की प्रतीति यहाँ भी होती है।

अथ—यहाँ का भाव यह है कि साधारण धर्म उपमा का प्राण है किन्तु धर्म सकलाधारवृत्ति नहीं हो पाता है जैसे "हंसीव धवलश्चन्द्रः स्वर्गंगामवगाहते" यहाँ जो धवलता हंसी में है वही धवलता चन्द्रमा में नहीं है किन्तु वैसी है तत्सजातीय है। इस तरह धर्म में साधारणता होना तो दूर बल्कि भेद होने से उपमा की निष्पत्ति ही नहीं होती।

## मधुसूदनी

ननु अनुगामितायामेकेन शब्देन अपृथङ् निर्देशात्प्रतीतेरेकरूपत्वाच्च साधारणधर्मस्य एकरूपतैवेति चेत्सत्यमेकरूपता। किन्तु वस्तुप्रतिवस्तुभावे का स्थितिः। यत्र भिन्नाभ्यां पदाभ्यां पृथङ् निर्देशे; स्वरूपगतो भेदः, सम्बन्धिभेदश्च धर्मस्य साधारण्यं प्रतिबध्नाति। इति चेन्न। प्रतीतेरेकत्वमर्थैकत्वं प्रतिबन्धकं निवारयतस्ततो धर्मस्य साधारण्यं वर्त्तते एव। नन्वेवमपि बिम्बप्रतिबिम्बभावस्थले का गतिः, यत्रार्थस्य, धर्मिणः, स्वरूपस्य च भेदा बलवत्प्रतिबध्नन्ति साधारण्यमतो यत्र धर्मयोर्बिम्बप्रतिबिम्बभावस्तत्र साधारणधर्माभावात्सादृश्यस्यानिष्पत्तेरुपमा भवितुं नार्हाऽपितु दृष्टान्तालंकार इति चेच्छृणु।

## बालक्रीड़ा

यदि धर्मों में साधारणता के लिए किसी बीज की गवेषणा करेंगे तब अनवस्था हो जायेगी। क्योंकि उसका बीज क्या फिर उस बीज का बीज क्या। यदि सादृश्य को बीज मानें तो सादृश्य के लिए धर्मों की साधारणता, उससे सादृश्य, फिर उसके लिए साधारणता, और साधारणता के लिए सादृश्य इस तरह चक्रक या आत्माश्रय दोष हो जायेगा।

ऐसे दोषों की उद्भावना क्यों करते हैं। सुनिए। आधार का पर्याय ही आधारण है। आङ् पूर्वक धृञ् धारणे धातु से अधिकरण में ल्युट् प्रत्यय हुआ है।

आधारण का विना परित्याग किये जो रहे इस विग्रह में "अव्य यं विभक्ति" इस सूत्र से साकल्य अर्थ में अस्वपद विग्रह नित्य अव्ययीभाव समास हुआ और "अव्ययीभावे चाकाले" सूत्र से सह शब्द को सादेश होने पर साधारणं यह पद निष्पन्न होता है। उसका अर्थ है कि जो अपने आधारभूत सभी पदार्थों में रहे। वह धर्म साधारण धर्म कहलाता है। जो अपने आधार उपमान एवं उपमेय दोनों में रहता है तभी वह उनमें सादृश्य को निष्पन्न करता है। किन्तु वैसी स्थिति नहीं है। उपमान एवं उपमेय के भिन्न होने से उनमें रहने वाला धर्म भी भिन्न ही है एक रूप नहीं है।

अगर कहें कि जहाँ अनुगामी धर्म है वहाँ एक ही शब्द से और स्वतन्त्ररूप से अलग२ निर्देश नहीं होने से प्रतीति की एक रूपता के कारण साधारण धर्म में भी एक रूपता है तब मान सकते हैं किन्तु वस्तु प्रतिवस्तुभाव, जहाँ भिन्न शब्दों से अलग २ निर्देश करने पर स्वरूपगत भेद और सम्बन्धियों के भेद से धर्म में साधारणता नहीं रहती है वहाँ क्या स्थिति होगी। यदि कहें कि वहाँ शब्द भेद होने पर भी अर्थों में एकता है और तदनुसार प्रतीति में एकता है अतः धर्मों में साधारणता होने में कोई प्रतिबन्धक नहीं है तब भी बिम्ब प्रतिबिम्ब भावस्थल जहाँ शब्द, अर्थ (धर्मी) स्वरूप एवं सम्बन्धियों के भेद बलवान् होकर साधारणता को रोकते हैं वहाँ साधारण धर्म के अभाव में सादृश्य की निष्पत्ति नहीं हो सकती है अतः वहाँ उपमा न मानकर उस जगह दृष्टान्तालंकार ही मानना पड़ेगा। इस पर कहते हैं कि सुनिए।

दर्पण, मणि, जल, खड्ग, तैल एवं कपोल वगैरह में किसी परछाई को देखकर दर्शक लोग यह खोजते हैं कि किसका प्रतिबिम्ब यह है। जब अपने प्रतिबिम्ब को समझकर देखकर

## मधुसूदनी

लोको हि दर्पणे, मणौ, जले, खड्गे, तैले, कपोलादौ वा यत्किञ्चित्प्रतिबिम्बदर्शने बिम्बमनुलम्बते कस्य प्रतिबिम्बमिदमिति। यथा स्वप्रतिबिम्बदर्शने स्वात्मानं निभालयति। अहो मदीयमेवैतद्वदनमिति मनुते च। तत्कस्य हेतोः। अस्ति किंचित्कारणम्। कारणगवेषणायां क्रियमाणायां; लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतमिति त्रिविधप्रमाणेषु लोकरूपप्रमाणेन, तथा "स्वभावोऽध्यात्ममुच्यते" इति गीतोक्तेः। स्वभावनियमाभावादुपकारो हि दुर्घटः। सुघटत्वेऽपि सत्यर्थेऽसति कागतिरन्यथा। इति चान्यत्रोक्तेः। स्वभावरूपाध्यात्मप्रमाणेन च सिद्धोऽभेदस्तत्र बिम्बप्रतिबिम्बभावस्थले कारणं मन्तव्यम्।

## बालक्रीड़ा

अपने को देखता है और मानता भी है कि मेरी ही परछाही है। मेरा ही मुख दिखाई दे रहा है। यह क्यों। है कोई कारण। कारण की गवेषणा करने पर (लोको वेदस्तथा ऽध्यात्मं प्रमाणं त्रिविधं स्मृतम्") लोक, वेद तथा अध्यात्म तीन प्रमाण हैं। इन तीन प्रमाणों में—

स्वभावनियमाभावादुपकारो हि दुर्घटः।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा॥

यदि स्वभाव को नियामक नहीं मानेंगे तो व्यवहार चलना ही दुर्घट हो जायेगा। कदाचित् पदार्थों की सद्भावना दशा में व्यवहार सुघटित भी हो किन्तु उनके अभाव दशा में क्या गति होगी। अतः स्वभाव को नियामक अवश्य मानना होगा और वह स्वमाव ('स्वभावोऽ ध्यात्ममुच्यते' इस गीता के कथनानुसार) अध्यात्म है। अतः लोक और अध्यात्म प्रमाणों से यह सिद्ध है कि बिम्ब और प्रतिबिम्ब की एकता का कारण है भेद का नहीं मालूम पड़ना।

अगर वहाँ पर भेद के तिरोधान को कारण नहीं मानेंगे तो प्रतिबिम्ब को देखकर मैं गौर हूँ, मैं दुर्बल हूँ, मैं सुन्दर हूँ, मैं स्थूल हूँ यह बुद्धि ही उत्पन्न नहीं होगी। और तो और भूषणों के पहिनने में तिलक वगैरह के लगाने में और उनको यथा स्थान में जानने के लिए कोई भी प्रतिबिम्ब का अनुसरण नहीं करेगा।

काव्य संसार में प्रतिभाकी ही प्रधानता है। प्रतिभात वस्तु ही चमत्कारक है। और प्रतिभा एवं प्रतिभात पदार्थों में यह स्वाभाविक विशेषता है कि जिससे वर्तमान पदार्थों का प्रतिमान तो होता ही है अतीत एवं अनागत अर्थों का भी भान प्रतिभा के द्वारा हो जाता है। अतः बिम्बभूत अर्थ से प्रतिबिम्ब स्थानीय पदार्थों में भेद रहने पर भी लोक एवं स्वभाव से नियत एकता बिम्बप्रतिबिम्ब भावापन्न पदार्थों में होती है और इसीलिए उस जगह में उनमें साधारणता होती है तथा तत्प्रयोज्य सादृश्य की निष्पत्ति भी होती है। इसी बात को स्पष्ट करने के लिए कि बिम्ब प्रतिबिम्बभावापन्न धर्म के द्वारा भी उपमा होती है दिखाने का आरम्भ करते हैं।

अथ 'विलसत्याननं तस्या नासाग्रस्थितमौक्तिकम्।
आलक्षितबुधाश्लेषं राकेन्दोरिव मण्डलम् ॥"

इत्यादौ साधारणधर्मस्याभावात्कथमुपमानिष्पत्तिः ? बुधमौक्तिकयोरेकैकमात्रवृत्तित्वात् ।

### मर्मप्रकाशः

आलक्षितेति। आलक्षिताश्लिष्टबुधमित्यर्थः। तथा पाठस्तूचितः अत एव वक्ष्यति—बुधमौक्तिकयोरिति। कथमिति। तद्धर्मोपस्थितेः कारणत्वस्य तत्र प्रागभिहितत्वादिति

### मधुसूदनी

अन्यथा तद्भावस्थले अभेदस्वीकाराभावे गौरोऽहं, कृशोऽहं, स्थूलोऽहं, सुन्दरोहमिति बुद्धिरेव नोदियात्। न च भूषणविन्यासे, तिलकादिधारणे, तेषां यथास्थाननिर्धारणे च केऽपि प्रतिबिम्बमाद्रियेरन्। अन्यच्च काव्यसंसारे प्रतिभायाः प्राधान्यम्। प्रतिभाप्रतिभातार्थयोश्च स्वाभाविको विशेषः, येन अतीतानागतार्थयोरपि प्रतिभाविषयत्वं वर्तते। वर्तमानार्थस्य तु तथात्वमस्त्येव। अतः सत्यपि बिम्बात्प्रतिबिम्बस्य भेदे लोकस्वभावनियतोऽभेदः प्रतिभातयोर्बिम्बप्रतिबिम्बभावमापन्नधर्मयोरस्तीति साधारणधर्मप्रयोज्यसादृश्यस्य निष्पत्तेरस्ति बिम्बप्रतिबिम्बभावेऽप्युपमेति मानसे समाधाय परामृशति—विलसतीति। एकैकेति बुधस्य चन्द्रे, मौक्तिकस्य चानने पृथक् पृथगवस्थानादुभयसाधारण्यं नास्तीति भावः।

### बालक्रीड़ा

विलसति। नासिका के अग्रभाग में मोती धारण किये हुए नायिका का मुख, बुध को गोद में लिए हुए दिखाई पड़ने वाले पूर्णिमा चन्द्र की तरह शोभायमान है।

यहाँ साधारण धर्म के अभाव में उपमा कैसी। क्योंकि बुध और मोती केवल एक-एक में रहने वाले हैं बुध चन्द्रमा में है और मोती नासिका में है। अतः पृथक्-पृथक् आधार होने के काण साधारणता नहीं हैं।

यदि यहाँ नासिका में मोती पहिने हुए उस नायिका का आनन आलक्षितबुधाश्लेष राकेन्दु मण्डल की तरह विलसित हो रहा है। इस तरह यदि "आलक्षितबुधाश्लेष राकेन्दु मण्डल निरूपित (प्रतियोगिक) सादृश्य का प्रयोजक जो विलास, उसका आश्रय नासाग्रस्थित मौक्तिक वाला आनन है" ऐसा बोध मानने में तात्पर्य है तब विपूर्वक लसति का अर्थ शोभाविशेष ही समान धर्म है।

और अगर उस तरह के इन्दुमण्डल की तरह जो उस तरह का आनन है वह शोभा पा रहा है इस तरह उस तरह के इन्दुमण्डल निरूपित सादृश्यसे अवच्छिन्न (विशिष्ट) आनन को उद्देश्य करके विलासाश्रयत्व विधेय है तब पद्म की तरह मुख है इस वाक्य के समान यहाँ साधारण धर्मलुप्ता उपमा है और आह्लादकत्वादि धर्म उन्नेय है यह कहते हैं, तब भी ठीक नहीं है, क्योंकि उपमान की शोभा एवं उपमेय की शोभा वस्तुतः असाधारण हैं।

न चात्र यदि नासाग्रस्थितमौक्तिकं तस्या आननमालक्षितबुधाश्लेषं राकेन्दोर्मण्डलमिव विलसतीति तादृशराकेन्दुमण्डलनिरूपितसादृश्य-प्रयोजकविलासाश्रयस्तादृशमाननमिति तात्पर्यं तदा विपूर्वकलसत्यर्थ-शोभाविशेष एव समानो धर्मः। यदि च तादृशमिन्दुमण्डलमिव यत्तादृशमाननं तद्विलसतीति तादृशसादृश्यावच्छिन्नमाननमुद्दिश्य विलासा-श्रयत्वं विधेयतया विवक्ष्यते तदास्या लुप्तोपमात्वात्पद्ममिव मुखमित्यादा-

## मधुसूदनी

शंकते-नचेति। नाऽयं नासाग्रस्थितमौक्तिकत्वं कण्ठाश्लिष्टबुधत्वं चन्द्राननयोः समानो धर्मोऽपि तु विलसतिपदस्यार्थः शोभाविशेषः शब्दोपात्तः; आह्लादकत्वादिरुन्नेयो वा तथेति न च वाच्यम्।

इदन्तु बोध्यम्। अत्र नासाग्रस्थितमौक्तिकालक्षितबुधाश्लेषपदयोरुपमेयस्य उपमानस्य च रचनायामेकप्रसरता नास्ति ततश्च भग्नप्रक्रमाख्यो दोषः। तत्परी-हारायेत्थं रचना विधेयोत्तरार्द्धस्य।

## बालक्रीड़ा

यहाँ यह एक बात समझने की है कि नासाग्रस्थित मौक्तिक उपमेय और आलक्षित-बुधाश्लेष उपमान के विशेषण वाचक पदों की रचना में एकप्रसरता नहीं है। अतः भग्न-प्रक्रमताख्य दोष है। क्योंकि मोती नासा के अग्रभाग में स्थित है यह लेख; और बुध का आश्लेष दिखाई पड़ रहा है जिसमें, यह लेख; दोनों भिन्न रूप हैं। तथा राकेन्दुमण्डल उपमान वाचक पद है अतः उसके बाद इव पद का विन्यास होना चाहिए उसके अभाव में अस्थानस्थ-पदत्व दोष भी है। अतः इन दोषों के परिहार के लिए उत्तरार्द्ध की रचना ऐसी होनी चाहिए।

राकेन्दोर्मण्डलमिव कण्ठोपाश्रितमौक्तिकम्। ऐसा करने पर एक और सुन्दरता बढ़ जाती है मौक्तिकं सौम्यकं इस तरह कं कं अत्यानुप्रास बैठ जाता है। और दूसरी सुन्दरता जैसे मुक्त एव मौक्तिकम् यह विनयादिभ्यष्ठक् इस सूत्र से स्वार्थ में ठक् करने पर निष्पन्न हुआ है उसी तरह सौम्य एव सौम्यक यह भी स्वार्थीय क प्रत्यय से बना है। तीसरी सुन्दरता यह है कि पद्य के पूर्व भाग में उपमेय वाचक पद और उपमान वाचक पद (आनन, राकेन्दोर्मण्डलमिव) आ जाते हैं और उनके विशेषण उत्तर भाग में पड़ जाते हैं अतः दोनों का विन्यास भी शोभाधायक है।

यहाँ का भाव यह है कि यदि अधिकण्ठाश्रित बुधत्वविशिष्ट राकेन्दुमण्डल निरूपित सादृश्यप्रयोजक विलास का आश्रय नासाग्रस्थितमौक्तिकत्वविशिष्ट उसका आनन है इस तरह पूर्णोपमा विधेयक शाब्द बोध मानते हैं तब विलसति शब्द से उपात्त शोभा विशेष साधारण धर्म है। और यदि तादृशराकेन्दुमण्डलनिरूपित सादृश्यावच्छिन्न (विशिष्ट) तादृश आनन है इस तरह साधारण धर्म लुप्ता उपमा उद्देश्य है विलासाश्रयत्व विधेय है ऐसा शाब्दबोध मानते हैं तब आह्लादकत्वादि व्यंग्य साधारण धर्म हैं।

विवाह्लादकत्वादिधर्म उन्नेय इति वाच्यम्। उपमानोपमेयशोभयोरपि वस्तुतोऽसाधारणत्वात्।

'कोमलातपशोणाभ्रसंध्याकालसहोदरः।
काषायवसनो याति कुङ्कुमालेपनो यतिः॥

इत्यादौ धर्मान्तरस्याप्रतिभानादसुन्दरत्वाच्च कोमलातपादीनामसाधारणत्वात्कथमुपमेति चेत् ? अत्राहुः—उपमेयगतानामुपमानगतानां च-

मर्मप्रकाशः

भावः। तादृशराकेन्दुमण्डलेति। तद्विशिष्टराकेन्द्वित्यर्थः। एवमग्रेऽपि। तथा वक्तुं तु युक्तम्। आद्ये दूषणमाह—उपमानोपेति। द्वितीयरीत्योक्तप्रसिद्धोदाहरणे निर्वाहेऽप्यप्रसि-

मधुसूदनी

राकेन्दोर्मण्डलमिव कण्ठोपाश्रितसौम्यकम्। एवंकरणेऽपरमपि सौन्दर्यम्। मौक्तिकं सौम्यकमिति कं कमित्यन्त्यानुप्रासः। अन्यदपि यथा मुक्तैव मौक्तिकमिति विनयादिभ्य इत्यनेन स्वार्थठका निष्पद्यते तथा सौम्य एव सौम्यक इत्यपि स्वार्थीयकप्रत्ययेन निष्पन्नः। राकेन्दोर्मण्डलमुपमानपदं तत्परमेव इवपदं प्रयोक्तव्ये यद्राकेन्दोरुत्तरं प्रयुक्तं, सोऽन्यदोषः परिहृतो भवति। उपमानोपमेयवाचकपदयोः पद्यस्य पूर्वभागे, तद्विशेषणयोश्चोत्तरभागे विन्यासोऽपि शोभाधायक एव।

इदं हृदयम्। यदि अधिकण्ठस्थितबुधत्वविशिष्टराकेन्दुमण्डलनिरूपित सादृश्य प्रयोजकविलासाश्रयो नासाग्रस्थितमौक्तिकत्वविशिष्टं तस्या आननमिति पूर्णोपमाविधेयकः शाब्दबोधस्तदा शोभाविशेषः समानो धर्मः। तादृशराकेन्दुमण्डलनिरूपित सादृश्य (अवच्छिन्नं) विशिष्टं तादृमाननमिति लुप्तोपमोद्देश्यकः विलासाश्रयत्वविधेयकः शाब्दबोधस्तदा आह्लादकत्वादिस्तथेति।

उत्तरति। उपेति। उपमानशोभा पृथक् उपमेयशोभा पृथगिति तयोर्वस्तुतः साधारणत्वं नास्ति ततश्च साधारणधर्माभावादुपमानिष्पत्तिर्नास्ति।

ननून्नेयाह्लादकत्वादिधर्मसद्भावादुपमानिष्पत्तिरिति चेन्न—कोमलातपेत्यादौ उन्नेयस्य धर्मस्य अभाव एव धर्मान्तरस्य प्रतिभानं नास्ति इत्यर्थः। यातिपदस्यार्थो यानविशेष उपात्तोऽपि समानो धर्मः सुन्दरो नास्ति। कोमलातपादीनां साधारणत्वाभावात्। कोमल आतपो यस्मिन्, शोणं रक्तमभ्रं गगनं यस्मिन् संध्याकाले इति कोमला-

बालक्रीड़ा

किन्तु प्रथम मत ठीक नहीं है क्योंकि शोभा अपनी २ चीज है अतः असाधारण है। अतः साधारणता के अभाव में उपमा नहीं हो सकती।

द्वितीय रीति से प्रसिद्ध उदाहरणों में निर्वाह हो सकता है किन्तु अप्रसिद्ध स्थलों में कोमलातप इत्यादि उदाहरणों में कैसे उपमा हो सकती है।

मधुसूदनी

तपशोणाभ्रत्वयोरुपमानभूतसन्ध्याकालमात्रवृत्तितया; कुंकुमस्यालेपनम्, तद् यत्रास्ति, काषायं कषायेण रक्तं वसनं यस्य यतेरिति कुंकुमालेपनत्वकाषायवसनत्वयोरुपमेयभूतयतिमात्रवृत्तितयाऽसाधारणत्वात्साधारणत्वं नास्ति। ततश्चात्र कथमुपमा।

इदं तु बोध्यम्। अस्मिन्नपि पद्ये रचनादारिद्र्यं पण्डितराजस्य प्रतिभाति। अत्र कोमलातत्वरूपविशेषणस्य उपमाननिष्ठस्य प्रतिद्वन्द्वितया कुंकमालेपनत्वं विशेषणमुपमेयनिष्ठतया उपात्तं किन्तु एकप्रसरताया अभावः कलहायते, यथा शोणाभ्रत्वस्य प्रतिद्वन्द्वि काषायवसनत्वं, तथेह नास्ति। अत एवं पाठो विधेयः। सुलेपकुंकुमो याति काषायवसनो यतिरिति। एवं समकक्षतया विन्यासे विशेषणयोः पूर्वापरीभावव्यत्यासोऽपि प्रक्रमभंगदोषः परिहृतो भवति।

अत्र कुंकुमस्यालेपनयुक्तत्वमपेक्षितं तच्च बहुव्रीहिसमासाधीनं, स च समासो व्यधिकरणो न हि भवति। अत्र पाठे तु कुंकुमस्य आलेपनं यत्रेति व्यधिकरणमन्तरा गतिरेव नास्ति। तथा पाठकरणे तु महद्दूषणमिदमपहस्तितं स्यादित्यपरमानुकूल्यम्।

अन्यच्च आतपस्य कोमलत्वविशेषणेन सन्ध्याकालीनातपस्य तीव्रत्वाभावः प्रतीयते, तेन च सुखमयः काल इति व्यज्यते। एवमेव कुंकुमे सुलेपत्वविशेषणेनापि कुंकुमस्य समुचितस्थानयातत्वं, तेन च आकर्षकत्वं प्रतीयते। अन्यथा यथास्थितपाठे

बालक्रीड़ा

सन्ध्या का सहोदर याने भाई यति जा रहा है। यहाँ भाई कहने का यह भाव है कि जैसा सन्ध्याकाल है वैसा ही यति है। अब सादृश्य दिखाने के लिए प्रयत्न करते हैं। जिस सन्ध्या काल में सूर्य का आतप घाम कोमल है क्योंकि उस काल में घाम में तेजी नहीं रहती है। उधर यति के वसन काषाय हैं। कषैले कहने का भाव यह है कि वसन जैसे चटकीले होने चाहिए वैसे वे नहीं हैं फीके हैं। सान्ध्यशोणिमा छाई हुई है अत: अभ्र मेघ शोण हैं। उधर यति ने सुन्दर रूप से कुंकुम का लेप कर रक्खा है अतः उसके शरीर पर कुंकुम है लाली है। यह भी व्याख्या हो सकती है।

वस्तुतस्तु यों कहिये। जैसे शोणाभ्रत्व का जोड़ीदार काषायवसनत्व है वैसे कोमलातपत्व का जोड़ीदार कुंकुमालेपनत्व का उपादान किया है किन्तु जोड़ी बन नहीं रही है अतः ऐसा पाठ कर दिया जाय जिससे जोड़ी फिट हो जाती है। इसका स्पष्टीकरण आगे होगा।

कोमलातपशोणाभ्रसन्ध्याकालसहोदरः।
सुलेपकुंकुमो याति काषायवसनो यतिः।

इस तरह पाठ करने से विशेषणों तथा विशेषणांशों का पूर्वापरीभावव्यत्यासरूप प्रक्रमभंगदोष भी दूर हो जाता है।

## मधुसूदनी

कुंकुमस्यालेपनमात्रप्रतीत्या तथा रोचकता न स्यादिति विच्छायत्वरूपं दूषणमपि कुंकुमगतं दूरं भवति।

ननु कोमलातपत्वशोणाभ्रत्वविशिष्टसन्ध्याकालेन सह सुलेपकुंकुमत्वकाषायवसनत्वविशिष्टयतेरुपमा। सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः इति न्यायेन सविशेषणे सन्ध्याकाले यतौ च विहितोपमा विशेषणानामपि स्यादेव। तथा च कोमलातप इव सुलेपकुंकुमः, शोणाभ्र इव काषायवसनः। सन्ध्याकाल इव यतिरिति रीत्या वाक्यार्थोपमा च वर्तताम्। सा चैवं क्रमशः उपमानोपमेययोः कोमलातपसुलेपकुंकुमयोराकर्षकत्वसुखप्रदत्वादिधर्मेण, शोणाभ्रकाषयायवसनयोराच्छादकत्वादिधर्मेण (सान्ध्यरक्तिम्नोपरक्तानि अभ्राणि गगने व्याप्तानि तदाच्छादयन्ति। वस आच्छादने इति ल्युटि निष्पन्नवसनशब्द आच्छादकार्थ एव। तथा चाच्छादकत्वादिधर्मः सूपपन्नः।) सन्ध्याकालयत्योश्च चिरकालस्थितिकर्तृत्वाद्यभावरूपधर्मेण उपमेति। यथा सन्ध्याकालो मुहूर्त्तद्वयमेव तिष्ठति ततः परं न। तथैवाऽयं यतिरपि नारदादिः गोदोहनकालमात्रस्थायी। यतिश्चिरस्थानमेकत्र देशे न सहते इति स्वाशयं प्रकाशयन्तं प्रत्याह—धर्माणां साधारणत्वकल्पनादिति। अदो हृदयम्। यत्र धर्मस्य विशिष्टानेकधर्मिगतैकरूपत्वस्य कल्पनोपारूढत्वं विनैव धर्मिणोरुपमानिष्पत्तिस्तत्र वाक्यार्थोपमा। यत्र तु धर्मस्य तादृशत्वस्य कल्पनोपारूढतयोपमा जागर्ति तत्र बिम्बप्रतिबिम्बभावापन्नधर्मप्रयोज्या पदार्थोपमा। यतो धर्माणां तादृशत्वस्य कल्पना बिम्बप्रतिबिम्बभाव एव जायते। स हि

## बालक्रीड़ा

यहाँ पर प्रश्न होता है कि यति को सन्ध्याकाल के सदृश कैसे समझा जाय। क्योंकि सादृश्य का प्रयोजक धर्म कौन। अन्य धर्मों का प्रतिभान होता नहीं है। उपात्त भाति पद का अर्थ भान सादृश्य का प्रयोजक नहीं बन सकता है क्योंकि उसमें सुन्दरता नहीं है और कोमलातप इत्यादि यतिसन्ध्याकालोभय साधारण नहीं है। प्रत्युत कोमलातपत्व एवं शोणाभ्रत्व केवल सन्ध्याकाल में ही हैं और काषायवसनत्व एवं कुंकुमालेपनत्व एकमात्र यति के धर्म हैं अतः असाधारण हैं तब यहाँ उपमा कैसी।

यह समझने की बात है कि यहाँ कुंकुम के आलेपन से युक्त यति है ऐसा अर्थ अपेक्षित है वह बहुव्रीहि समास के अधीन है और वह समास व्यधिकरण नहीं होता है। किन्तु "कुंकुमालेपनः" इस पाठ में "कुंकुम का आलेप है जिसमें" ऐसे व्यधिकरण समास के विना गति नहीं है अतः यहाँ सुलेपकुंकुमः पाठ होना चाहिए। इसमें वह दोष नहीं है।

और भी बात है कि आतप को कोमल कहने भा भाव है कि उसमें तीव्रता नहीं है। इससे व्यक्त होता है कि समय सुखमय है। इसी तरह कुंकुम में सुलेपत्व विशेषण से भी यह प्रतीत होता है कि कुंकुम समुचित स्थानों में लगा हुआ है जिससे वह आकर्षक मालूम होता है। अन्यथा यथा स्थित पाठ में कुंकुम का लेप मात्र ही प्रतीत होता उसकी सुन्दरता नहीं मालूम होती। इस तरह कुंकुम का विच्छायत्व रूप दोष भी दूर हो जाता है।

असाधारणानामपि धर्माणां सादृश्यमूलेनाभेदाध्यवसायेन साधारणत्वकल्पना-

## मर्मप्रकाशः

द्वोदाहरणे दोषमाद्यसाधारणमाह— कोमलेति। कोमलातपत्वं शोणाभ्रत्वं च बहुव्रीहिणा संध्याकालविशेषणम्। अत एव कोमलातपादीनामिति वक्ष्यति। अभेदाध्यवसायेनेति। न चैकधर्मवत्त्वमिवोपमानवृत्तिधर्मसदृशधर्मवत्त्वमप्युपमाप्रयोजकमस्तु किममुनाऽभेदाध्यवसायेनेति

## मधुसूदनी

भावस्तेषामेव भवति यतस्ते हि धर्मा धर्मिणो विलक्षणत्वप्रदर्शकाः। यथात्रैव किंचित्कालं स्थातुं सहस्वेति आग्रहिलान् भक्तान् प्रति तस्य यतेर्विलक्षणशील-शालित्वप्रतिपादनम्।

ननु धर्माणां स्वरूपतोऽर्थतो धर्मितश्च भेदस्य सत्त्वे तादृशत्वस्य कल्पनायाः क आश्रय इति चेदाह--अभेदाध्यवसायेनेति। अत्र नञर्थः अध्यवसायपदार्थे-नान्वेति। भेदस्य अध्यवसायः भेदाध्यवसायः न भेदाध्यवसायः अभेदाध्यवसायः भेदाग्रह इति यावत्। न तु अभेदस्य अध्यवसायः।

## बालक्रीड़ा

प्रश्न होता है कि एक न्याय है (सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः) कि विशिष्ट को जो विधान या निषेध किया जाता है वह विशेषणों में संक्रमण करता है अतः कोमलातपत्व शोणाभ्रत्वविशिष्ट सन्ध्याकाल के साथ विहित, सुलेपकुंकुमत्वकाषायवसनत्व-विशिष्ट यति की उपमा उनके विशेषणों में हो रही है। जैसे कोमलातप इव सुलेपकुंकुमः। शोणाभ्र इव काषायवसनः। सन्ध्याकाल इव यतिः। इस रीति से यह वाक्यार्थगत उपमा होनी चाहिए :

इसका स्पष्टीकरण इस प्रकार है। क्रमशः उपमान एवं उपमेय कोमलातप एवं सुलेपकुंकुम में सादृश्य प्रयोजक धर्म आकर्षकत्व सुखप्रदत्वादि से, शोणाभ्र एवं काषायवसन में आच्छादकत्वादि धर्म से। (सान्ध्य रक्तिमा से उपरक्त अभ्र, गगन में व्याप्त होकर आच्छादन कर रहे हैं और वस आच्छादने धातु से ल्युट् प्रत्यय द्वारा निष्पन्न वसन शब्द आच्छादकार्थक है) यति और सन्ध्याकाल में चिरकालस्थितिकर्तृत्वाद्यभाव धर्म से उपमा है, जैसे सन्ध्याकाल दो मुहूर्त्त ही ठहरता है अधिक नहीं उसी तरह यह नारदादि यति भी गोदोहनकालमात्र स्थायी है अतः चिरकाल तक एक जगह ठहर नहीं सकते हैं।

इस प्रकार के आशय को प्रकट करने वाले को आचार्य कहते हैं कि उपमेयगत और उपमानगत असाधारण धर्मों में भी साधारणता की कल्पना करके उपमाकी सिद्धि करते हैं।

यहाँ का हृदय यह है कि जहाँ धर्मों के; विशिष्ट अनेक धर्मियों में एक रूप से रहने की कल्पना किये विना ही यांने कल्पना में अनारूढ़ धर्मों से उपमा की निष्पत्ति होती है वहाँ वाक्यार्थगत उपमा होती है। और जहाँ तो धर्मों में उस तरह की कल्पना करने के बाद उन कल्पनोपारूढ़ धर्मों से उपमा होती है वहाँ विम्वप्रतिबिम्बभावापन्नधर्मप्रयोज्य

## मर्मप्रकाशः

वाच्यम् । साधारणधर्मेणोपमानोपमेययोरभेदप्रतीतिकृतचमत्कारस्योपमायामिष्टस्य धर्मयोर-भेदाध्यवसानं विनानुपपत्तेः । तथा चोक्तमलंकारसर्वस्वकृता—'भेदाभेदप्रधानोपमेति'ति

## मधुसूदनी

ननु धर्माणां भेदेन प्रतीतेरभावे किं मूलमिति चेत्; लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतमिति (स्वभावोऽध्यात्ममुच्यते) सिद्धान्तात्, लोकप्रसिद्धार्थ-विषयकं लोकरूपं प्रमाणं गृहाण । लोको हि, (जले प्रतिबिम्बितश्चन्द्रः कम्पते, बालैः स चपेटाभिस्ताड्यते किन्तु मुख्यस्य चन्द्रस्य तथा कथा न, एवं) बिम्बप्रतिबिम्बभूतयोर्महति भेदे सत्यपि भेदं न मनुते; तत एव दर्पणे प्रतिबिम्बितं मुखमपि मुख्यमुखाद्भिन्नं न मनुते; ततो भिन्नं मनुयाच्चेत्तर्हि तिलकाञ्जनभूषणादिविन्यासाय तन्न स्वीकुर्यात् । किन्तु स्वीकरोत्येव तत्प्रतिबिम्बितं मुखं तद्विन्यासायेति भेदप्रतीतिर्नास्ति तत उक्तं-लोक इति ।

ननु नायं लोक, इदं तु काव्यं; तर्हि लोकप्रसिद्धार्थ विषयकं प्रमाणं लोकं कथम-पेक्षेतेति चेदुच्यते । न हि लोकप्रसिद्धिमवधूय कोऽपि पदार्थः स्थितिमश्नुते । कवयः केवलं तानेव पदार्थान् पश्यन्त्यपरपर्यायप्रतिभया निकषेण परीक्ष्यैवं समर्पयन्ति येन त एव पदार्थाः कामपि चमत्कृतिभूमिमासादयन्ति । तदेतदुच्यते—

कविशक्त्यर्पिता भावास्तन्मयीभावयुक्तितः ।
यथा स्फुरन्त्यमी काव्यान्न तथाऽध्यक्षतः किल ॥
नानुमितो हेत्वाद्यैः स्वदते व्यञ्जितो यथा विभावाद्यैः
न च सुखयति वाच्योऽर्थः, प्रतीयमानः स एव यथा ।

तस्माल्लोकेऽनुभूयमानसदृश एव बिम्बप्रतिबिम्बभावः काव्ये नान्यादृशः, प्रतीतिपरमार्थत्वात्काव्यस्येति ।

## बालक्रीड़ा

पदार्थगत उपमा होती है । क्योंकि धर्मों में उस तरह की कल्पना बिम्ब प्रतिबिम्बभाव स्थल में ही होती है । ऐसे ही धर्म, धर्मियों में विलक्षणता को दिखाते हैं । जैसे प्रकृत में "कुछ काल और ठहरिये महाराज" इस तरह के आग्रह करने वाले भक्तों के प्रति यति का विलक्षण शीलशालित्व कि वह ठहरता नहीं है किन्तु जा रहा है ।

अब प्रश्न होता है कि जब धर्मों में स्वरूप, अर्थ एवं धर्मियों के कारण भेद है तब एक रूपत्व की कल्पना का आश्रय क्या है । समाधान । अभेदाध्यवसाय याने भेद का मालूम नहीं होना प्रत्युत अभेद का भ्रम होना ही कल्पना का आश्रय है । यहाँ नञर्थ का अध्यवसाय पदार्थ से अन्वय है । अतः भेद का अध्यवसाय नहीं होता है ।

प्रश्न = धर्मों में भेद के नहीं मालूम होने में क्या प्रमाण है । समाधान । "लोको वेदस्तथाऽध्यात्मम् प्रमाणं त्रिविधं स्मृतम्" "स्वभावोऽध्यात्ममुच्यते" इन सिद्धांतों के अनुसार=लोक में प्रसिद्धार्थ के विषय में लोक रूप और स्वभाव इसमें प्रमाण है । जैसे

## मधुसूदनी

इदन्तु बोध्यम् । सादृश्यमूलेनाभेदाध्यवसायेन साधारणत्वकल्पनादित्युक्तिरविद्याविलास एव । यतो यतिसन्ध्याकालयोः सादृश्यनिष्पत्तये धर्माणां साधारण्यं गवेष्यते । साधारण्यनिष्पत्तये अभेदज्ञानं, तदर्थं च सादृश्यमन्विष्यते, तदर्थं पुनः धर्माणां साधारण्यमिति कोऽयं पन्थाः । नायं निराविलः, चक्रकेण अनवस्थया च कवलितत्वात् । तस्माल्लोकप्रसिद्धिस्वभावमूलेनेति भ्रमात्मकेनेति पाठः साधीयान् । अभेदाध्यवसायेनेत्यत्रापि भेदानध्यवसायेनेति तदर्थः ।

ननु सत्यपि बिम्बभूतपदार्थेभ्यः प्रतिबिम्बभूतपदार्थानां भेदे यद्भेदानवबोधस्तयोः, तदा तादृशबोधनिवन्धना रागाद्, दोषाद्, दैवात्, अनादि-वासनातः, इच्छादितो वा यदतस्मिन् तद्बुद्धिः, स आरोपः, आहार्यारोपः, अहार्याभेदः, अध्यासः भ्रमः इति व्यवह्रियते । यद्यपि भ्रमस्थले उत्तरकाले बाधः पूर्वमतस्मिन् तद्बुद्धिसमये बाधो नास्ति, आहार्यारोपे पूर्वमतस्मिन् तद्बुद्धिसमये एव बाधः, उत्तरकाले नास्ति । यदि पूर्वमेव नेदं रजतमिति ज्ञानं स्यात्तदा प्रवृत्तिरेव न स्यात्तदादातुम् । तथापि अतस्मिन् तद्बुद्धिः सर्वत्रापि समेति भ्रमव्यवहारः ।

## बालक्रीड़ा

जल में चन्द्रमा की परछाईं दिखाई पड़ती है । जल के हिलने से वह हिलती है, बच्चे लोग उसको थपेड़ों से पीटते भी हैं । मुख्य बिम्बभूत चन्द्र में कोई ऐसी बात नहीं है । इस तरह दोनों में महान् भेद के रहते हुए भी लोक उनमें भेद नहीं मानता है । दर्पण में प्रतिबिम्बित मुखादि अवयवों को मुख्य मुखादि से भिन्न समझता हुआ भी भिन्न नहीं मानता है । अगर उससे भिन्न मानें तो तिलक, अञ्जन एवं भूषण वगैरह के विन्यास के लिए उस प्रतिबिम्ब का सहारा ही न लेवें । किन्तु तिलकादि के विन्यास के लिए उसी का सहारा लेता है । इसके माने हैं कि भेद प्रतीति नहीं होती है ।

प्रश्न—"कोमलातप" यह तो काव्य है न कि लोक, जो लोकप्रसिद्धार्थविषयक लोकरूप प्रमाण की अपेक्षा करे । या उसके स्वभाव की । समाधान । लोकप्रसिद्धि का अवधूनन करके कोई भी पदार्थ ठहर नहीं सकता । कवि लोग केवल उन पदार्थों को पश्यन्ती की अपरपर्याय प्रतिभारूप कसौटी से परीक्षा करके समर्पण करते हैं जिससे वे ही पदार्थ विलक्षण चमत्कार पैदा कर देते हैं । इसीलिए कहा है कि—

कविशक्त्यर्पिता भावास्तन्मयीभावयुक्तित;
यथास्फुरन्त्यमी काव्यान्न तथाध्यक्षतः किल
नानुमितो हेत्वाद्यैः स्वदते व्यञ्जितो यथा विभावाद्यैः ।
न च सुखयति वाच्योऽर्थः, प्रतीयमानः स एव यथा ॥

तन्मयीभाव रूप योग के द्वारा कवि की प्रतिभा से समर्पित काव्य से प्रतीत हुए ये पदार्थ जैसा चमत्कार को पैदा करते हैं वैसा प्रत्यक्ष देखने से नहीं ।

हेत्वादि से अनुमित हुआ पदार्थ स्वादु नहीं होता है जैसा कि विभावादि के द्वारा व्यक्त हुआ वही पदार्थ सुस्वादु होता है ।

दुपमासिद्धिः । न च भ्रमात्मकेनाहार्याभेदबोधेन कथं नाम कुङ्कुमालेप-कोमलातपादीनां वस्तुतो भिन्नानां साधारणत्वसिद्धयेऽत्यन्तमसन्नभेदः सेद्धुं

### मधुसूदनी

एवं च प्रकृतेऽपि तादृशेन तेन कथं साधारणत्वसिद्धिरिति सुशंक्य समाधातुमाह— न चेति ।

### बालक्रीड़ा

इसलिए लोक में अनुभूयमान विम्बप्रतिविम्बभाव से भिन्न यह भाव काव्य में नहीं होता है और काव्य प्रतीति प्रधान है ।

और भी एक बात है कि लोक एवं स्वभावमूल अभेदाध्यवसाय से धर्मों में साधारणत्व की कल्पना करते हैं । यह कथन भी निराश्रित नहीं है । क्योंकि यति और सन्ध्याकाल में सादृश्य की निष्पत्ति के लिए धर्मों में साधारणता की खोज करते हैं और धर्मों में साधारणता के लिए अभेद ज्ञान की, अभेद ज्ञान के लिए सादृश्य की, इस तरह चक्रक या अनवस्था से यह कवलित है । इसलिए लोक एवं स्वभाव मूलक भ्रम से भेद नहीं मालूम पड़ता है अतः यहाँ "लोकस्वभावमूलेन अभेदाध्यवसायेन" ऐसा पाठ उचित है ।

विम्बभूत पदार्थों से प्रतिविम्बपदार्थों में भेद के रहने पर भी भेद का ज्ञान नहीं होता है अतएव (भेद के प्रतीत न होने से ही) राग, द्वेष, दैव या अनादि वासना से जो अतत् में तत् बुद्धि होती है वह अध्यास एवं भ्रम कहलाता है । इसी तरह इच्छा से अतत् में तत् बुद्धि होती है वह आरोप, आहार्यारोप, आहार्यभेद कहलाता है । भ्रम या अध्यास में उत्तरकाल में वाध होता है पहले "अतत् में तत्" बुद्धि के समय बाध नहीं होता है । यदि उसी समय वाघ हो जाता अर्थात् पहिले ही यह रजत नहीं है ऐसा ज्ञान हो जाता तो उसके लेने के लिए प्रवृत्ति ही नहीं होती । आरोपादि में पहिले ही अतत् में तत् बुद्धि के समय में ही वाघ होता है उत्तरकाल में बाघ नहीं होता है । क्योंकि यह इच्छा जन्य है (बाधकालिकमिच्छाजन्यं ज्ञानमाहार्यम्) अतः यहां वाघ बुद्धि प्रतिबन्धक नहीं होती है ।

इस तरह भ्रम अध्यास के कारण और आरोप आहार्यारोप आहार्यभेद के कारण भिन्न है अतः कारण भेद से इनको पृथक्-पृथक् समझना चाहिए किन्तु अतत् में तत् बुद्धि रूप फल सभी जगह समान है फलतः ये सब एक हैं । इसीलिए पण्डित राज ने भ्रमात्मक आहार्यभिदवोवेन ऐसा लिखा है । और अव शंका समाधान लिखते हैं ।

वस्तुतः भिन्न कोमलतप और कुंकुमालेप में साधारणत्व की सिद्धि के लिए जो अत्यन्त असत् अभेद, भ्रमात्मक आहार्यभेद बोध से सिद्ध करना चाहते हैं वह कैसे हो सकता है ।

समाधान = (भ्रान्तिरपि सम्बन्धतः प्रमा) भ्रान्ति भी सम्बन्ध विशेष के कारण प्रमा हो जाती है । और—

अपारे काव्यसंसारे कविरेकः प्रजापतिः
यथास्मै रोचते विश्वं तथेदं परिवर्त्तते ।

शक्नुयात्, भ्रमेणार्थसिद्धेरभावादिति वाच्यम्। प्रागुक्तेऽपि 'त्वयि कोपो ममाभातिः सुधांशाविव पावकः' इत्यादावुपमानोपमेययोरत्यन्तासत्यत्वेऽपि कल्पनामात्रतो यथा (उपमायाः) निष्पत्तिस्तथैव प्रकृते साधारणधर्मस्यापीति व्यक्तमुपपादयिष्यामः। अयमेव बिम्बप्रतिबिम्बभाव इति प्राचीनैरभिधीयते।

## मर्मप्रकाशः

बोध्यम्। प्रागुक्त इति। यत इत्यादिः। अयमेव सादृश्यमूलाभेदाध्यवसाय एव।

## मधुसूदनी

अशक्यत्वे हेतुमाह—भ्रमेणेति। न च वाच्यमिदं त्वया इत्यन्यः। ननु कुतो न वाच्यमित्याह-कल्पनामात्रेति। भ्रान्तिरपि सम्बन्धतः प्रमा भवति इति। अपारे काव्यसंसारे कविरेकः प्रजापतिः। यथास्मै रोचते, विश्वं तथेदं परिवर्तते। इतिचोक्तेः कल्पनामात्रतः प्रतीतिपरमार्थे काव्ये सत्यत्वादिविचारो निरुपयोग एवेति। यथेति। यथा तत्र उपमायाः निष्पत्तिस्तथैव प्रकृते साधारणधर्मस्यापि निष्पत्तिरित्यन्वयः। अत्र उपमायाः इतिपदं मुद्रणे विच्छिन्नमिति पूरणीयम्।

## बालक्रीड़ा

इस कथन के अनुसार कल्पनामात्र से प्रसूत प्रतीति परमार्थ काव्यीय पदार्थों में सत्यत्वासत्यत्व का विचार सब निरूपयोगी है अतः "त्वयि कोपो ममाभाति सुधांशाविव पावकः" इत्यादि में उपमान के अत्यन्त असत्य होने पर भी कल्पनामात्र से जैसे उपमा की निष्पत्ति हो जाती है वैसे ही प्रकृत (कोमलातप) में साधारण धर्म की भी निष्पत्ति हो जाती है। यह सब हमें आगे भुजो भगवतः उदाहरण में कहना है। इसी लोकस्वभावमूलक अभेदाध्यवसाय को प्राचीन लोक बिम्बप्रतिबिम्बभाव कहते हैं।

यहाँ यह बतलाना जरूरी है कि आरम्भ में "अभेदाध्यवसाय से साधारणत्व की कल्पना से उपमा की सिद्धि" मध्य में "वैसे ही प्रकृत में साधारण धर्म की कल्पनामात्र से निष्पत्ति" उपसंहार में भी "अभेदध्यावसान से साधारण धर्म की सिद्धि से उपमा की सिद्धि" ऐसा लिखा है याने साधारणता को सिद्ध करने का ही सर्वत्र प्रयास है। किन्तु भ्रमात्मक आहार्य अभेद बोध से वस्तुतः भिन्न धर्मों में साधारणत्व की सिद्धि के लिए अभेद कैसे सिद्ध हो सकता है" इस अभेद के विषय की शंका की क्या आवश्यकता प्रकृत प्रसंग में आई। उसका समाधान नागेश महाशय के शब्दों में है कि "जैसे समानधर्म उपमा का प्रयोजक होता है वैसे ही उपमानवृत्ति धर्म के सदृश उपमेयगतधर्म भी उपमा का प्रयोजक हो सकता है तब इस अभेदाध्यवसाय की क्या आवश्यकता है साधारणत्व की सिद्धि के लिए" यह कहना ठीक नहीं है क्योंकि साधारणधर्म के द्वारा उपमान एवं उपमेय में अभेद की प्रतीति से जो उपमा में चमत्कार मिलता है वह इष्ट चमत्कार धर्मों में अभेद समझे बिना नहीं संगत होता है जैसा कि अलंकार सर्वस्कार ने कहा है कि उपमा में भेद एवं अभेद दोनों की प्रधानता है। इसका आशय है कि जब पदार्थ दो हैं तब भेद तो सिद्ध ही है किन्तु

एवम्

'भुजो भगवतो भाति चञ्चंश्चाणूरचूर्णने ।
जगन्मण्डलसंहारे वेगवानिव धूर्जटिः ॥'

अत्र धूर्जटिभगवद्भुजयोराकारेण सादृश्यस्याभावात्प्रकारनिर्मुक्तस्य केवलभानस्याप्रयोजकतया चाणूरचूर्णननिमित्तकचाञ्चल्यवत्त्वजगन्मण्डल-

### मर्मप्रकाशः

प्राचीनैर्बिम्बप्रतिबिम्बभाव इत्यभिधीयत इत्यर्थः। एवम् उक्तोदाहरणे उपमासिद्धिवत् । भगवतः कृष्णस्य । चञ्चन् चाञ्चल्यवान् । धातूनामनेकार्थत्वात् । चाणूरो दैत्यः ।

### मधुसूदनी

एवमुक्तोदाहरणवत् भुज इत्यत्रोदाहरणे साधारणधर्मस्य सिद्धेरुपमासिद्धिरित्यन्वयः। आकारेण स्वरूपेण। प्रकारनिर्मुक्तस्य अविशिष्टस्य अत एव केवलस्य शुद्धस्य। कयोरपि पदार्थयोः स्वरूपेण सादृश्यं न हि भवति। साधारणधर्मप्रयोज्यस्य सम्बन्धस्य सादृश्यपदार्थत्वात्। भातिपदार्थे क्रियारूपे केवलभाने सादृश्यप्रयोजकता नास्ति असुन्दरत्वात्। अर्थात् जगन्मण्डलसंहारनिमित्तकवेगवत्वविशिष्टधूर्जटिरिव चाणूरचूर्णननिमित्तकचाञ्चल्यवत्वविशिष्टो भगवद्भुजो भाति। एवंरूपेण केवलभानस्य प्रयोजकता नास्ति। किन्तु तन्निमित्तकवेगवत्त्वाभिन्नतन्निमित्तकचञ्चत्त्वप्रकारधूर्जटिनिरूपितसादृश्यप्रयोजकं भानं तद्विशेष्यो भगवद्भुजः, इत्येवं रूपेण विशिष्टे भाने सादृश्यप्रयोजकता वर्तते।

### बालक्रीड़ा

वस्तुतः भेद नहीं है अभेद ही परमावश्यक है अतः अभेद को समझाने के लिए ऐसा लिखना आवश्यक था।

एवं माने इस कथित उदाहरण की तरह भुजो भगवतः इस उदाहरण में अभेदाध्यवसान से साधारणधर्म की सिद्धि से उपमा की सिद्धि होती है।

जगन्मण्डल के संहार में वेगवान् धूर्जटि की तरह चाणूर चूर्णन में चञ्चल भगवान् का भुज सुशोभित हो रहा है।

यहाँ धूर्जटि (शिव) एवं भगवान् कृष्ण के भुज में आकार से स्वरूप से सादृश्य नहीं है क्योंकि स्वरूप से पदार्थों में सादृश्य नहीं होता है। साधारणधर्मप्रयोज्य सम्बन्ध को सादृश्य कहते हैं। और भाति पद से उपस्थापित केवल भान याने प्रकार विशेष से निर्मुक्त शुद्धभान भी असुन्दर होने से सादृश्य का प्रयोजक नहीं है। अतः चाणूर के चूर्णन करने के लिए जो भगवान् के भुज में चञ्चलता है और जगमण्डल के संहार के लिए जो धूर्जटि में वेग है इन दोनों धर्मों में अभेद करना आवश्यक है। याने जगन्मण्डलसंहारनिमित्तक जो धूर्जटिगत वेग है वही चाणूरचूर्णननिमित्तक भगवान् के भुज में चञ्चलता है इस तरह

संहारनिमित्तकवेगवत्त्वयोरभेदाध्यवसानेनाभिन्नधर्मप्रकारकभानविशेष्यत्वस्य साधारणधर्मस्य सिद्धेरुपमासिद्धिः। तत्र चाणूरजगन्मण्डलयोर्वस्तुतो भिन्नयोर्महाकायत्वादिना सादृश्याद्बिम्बप्रतिबिम्बभावः। चूर्णनसंहारयोश्चाश्चल्यवेगवत्त्वयोस्त्वाश्रयभेदाद्भिन्नयोरपि वस्तुत एकरूपतैवेति वस्तुप्रतिव-

## मर्मप्रकाशः

तत्र धर्मयोर्मध्ये।

वस्तुप्रतिवस्तुभाव इति। तत्र चूर्णनसंहारयोराश्रयभेदजभेदप्रत्ययस्तत्संबन्धिचाणूर-

## मधुसूदनी

अक्षरार्थस्तु। तत्त्वयोरभेदाध्यवसानेन साधारणधर्मस्य सिद्धेः, अभिन्नधर्मप्रकारकधूर्जटिप्रतियोगिकसादृश्यप्रयोजकभानविशेष्यत्वस्य भुजे सत्वादुपमायाः सिद्धिः महाकायत्वादिना आकारेण एकरूपत्वात्। आश्रयभेदात्सम्बन्धिभेदात्।

इदन्तु बोध्यम्। तत्रेत्यारभ्य महाकायत्वादिना सादृश्यादितिपर्यन्ता कोक्तिः। यतो हि एवमुच्यमाने धर्मिणो भुजधूर्जटिरूपयोरुपमा स्वप्नायिता स्यात्। धर्मयोश्चाणूर जगन्मण्डलयोरुपमा शिरसि स्यात्। यत्र चाणूरः उपमेयभूतः जगन्मण्डलमुपमानं महाकायत्वादिः साधारणो धर्मः प्रतीयमान अनुपात्त इति यावत्। तत्र चाणूरः करचरणादिमान् महाकायो, जगन्मण्डलं न तादृक् इति कथं तेन तयोः सादृश्यम्।

## बालक्रीड़ा

दोनों में आहार्य ऐच्छिक (इच्छा से करणीय) अभेद समझना नितान्त आवश्यक है। और इस तरह अभिन्न समझे हुए धर्मों को भान में प्रकार याने विशेषण बना दिया जाय और भान में विशेष्य भुज को। इस तरह अभिन्नधर्मप्रकारक भानविशेष्यत्व रूप (भुजगत) साधारणधर्म की सिद्धि हुई उससे भुज में उपमा की सिद्धि हो गई।

तत्र वहाँ धूर्जटि और भुज की उपमा के प्रयोजक अभिन्नधर्मों में क्रमशः जगन्मण्डल एवं चाणूर, संहार एवं चूर्णन, वेग एवं चञ्चलत्व (चाञ्चल्य) तीन-तीन अंश हैं। इनमें जगन्मण्डल एवं चाणूर में महाकायत्वादि साधारणधर्म के द्वारा सादृश्य होने से बिम्ब प्रतिबिम्बभाव है। और चूर्णन और संहार में तथा चाञ्चल्य और वेगवत्व में आश्रय भेद से भिन्नता रहने पर भी वस्तुतः एक रूपता है अतः वस्तुप्रतिवस्तुभाव है।

यहाँ एक विचार होता है कि इस तरह धर्मों की उपमा के सिद्ध करने की व्यग्रता में धर्मियों की उपमा स्वप्न हो जायगी। यहाँ धर्मों की उपमा में चाणूर उपमेय है जगन्मण्डल उपमान है। इनमें साधारण धर्म महाकायत्वादि अनुपात्त होने से प्रतीयमान है। विचार यह है कि चाणूर तो करचरणादिमान् शरीरी है अतः उसको काय है। और जगन्मण्डल वैसा शरीरी नहीं है अतः उसको काय नहीं है तब महाकायत्वादि से कैसे उनमें सादृश्य होगा। अगर कहें कि यहाँ कायपद का आकार अर्थ है। ठीक है। किन्तु आकार में महत्व भी उनमें एक जैसा नहीं है। अतः साधारणधर्म के अभाव में वहाँ उपमा कैसी।

स्तुभावः । इत्येवं निरूपितमुपमालक्षणम् ।

अथेयमुदाहियते—

(सह) 'गुरुजन(भय?)मद्विलोकनान्तः समुदयदाकुलभावमावहन्त्याः ।
दरदलदरविन्दसुन्दरं हा हरिणदृशो नयनं न विस्मरामि ॥'

## मर्मप्रकाशः

जगन्मण्डलयोर्भेदबुद्धिर्बहिरङ्गा नोदेतीति भावः । चाञ्चल्यवेगवत्त्वयोस्त्वाश्रयभेदाद्भेदेऽपि

## मधुसूदनी

ननु इह कायपदेन आकारो गृह्यते । अस्तु । तथापि तत्र आकारे महत्वमपि नैकादृशं तयोः । ततश्च साधारणधर्मताया अभावे कथमुपमा स्यात् । अथ च धर्मिणोरुपमानिरूपणप्रसंगे धर्मयोरुपमागवेषणाया अनौचित्यमेव । तस्माद् विम्वप्रतिविम्वभावस्थले सर्वत्र विम्बधर्माणां प्रतिविम्वेऽभावात् । प्रतिविम्ब धर्माणां तु विम्बे सुतरामभाव एवेति सत्यपि भेदे तयोर्भेदाभाव एव आहार्यो लोक स्वभावरूपप्रमाणद्वयसिद्धः । ननु भेदाभाव आहार्यस्तर्हि भ्रान्तिरेव, तत्पर्याय त्वात्तस्येति चेद् दत्तमुत्तरम् । भ्रान्तिरपि सम्बन्धतः प्रमेति ।

## वालक्रीड़ा

और धर्मियों के उपमा के निरूपण के प्रसंग में धर्मों में उपमा की गवेषणा अनुचित ही है । इसलिए विम्व प्रतिविम्वभावस्थल में सभी जगह विम्वगत धर्मों का प्रतिविम्व में प्रतिविम्व गतधर्मों का विम्व में सुतरां अभाव के कारण भेद के रहने पर भी जो अभेद (भेद का अभाव) है वह लोकस्वभावरूपप्रमाणों से सिद्ध आहार्य है । अगर कहा जाय कि भेदाभाव अभेद आहार्य है तव तो भ्रान्ति ही है क्योंकि पर्यायवाचक शब्द है दोनों । तव कहते हैं कि इसका उत्तर दे दिया गया है कि भ्रान्ति भी सम्वन्ध से प्रमा होती है । इस तरह उपमा के लक्षण का निरूपण कर दिया ।

अथ इसके वाद उपमा के उदाहरणों को दिखाते हैं । सहगुरुजनेति । यहाँ नायक अपने मित्र से अपने हृदय के भावों को कह रहा है कि मुझे नायिका ने देखा उसी समय गुरुजन भी दिखाई पड़ गए । मुझे देखकर स्वभावतः उसके हृदय में उत्सुकता उत्पन्न हुई किन्तु तत्काल ही गुरुजनों के दिखाई पड़ जाने से त्रास हुआ कि ये लोग क्या सोचेंगे कि वड़ी उच्छृंखल है । अतः मन में व्याकुलता उत्पन्न हो गई कि क्या करूँ (आकुल भाव का अर्थ किंकर्त्तव्यविमूढता है) इस तरह कर्त्तव्य में विमूढ़ हुई मृगनयना के ईषत्-ईषत् विकसित हो रहे अरविन्द के समान सुन्दर नयनों को भूल नहीं सकता ।

यहाँ यह समझने की वात है "गुरुजनभयमद्विलोकन" ऐसा मुद्रित पाठ अशुद्ध है । इसके स्थान पर "सहगुरुजनमद्विलोकन" यह पाठ शुद्ध है । "वोपसर्जनस्य" इस सूत्र से विकल्प से सह के स्थान में सादेश होता । स आदेश के नहीं होने पर "सहगुरुजन" पद गुरुजनेन सह अर्थ में वना ।

अत्र दलदरविन्दशब्दस्योपमानवाचकस्य सुन्दरशब्देन सामान्यवचनेन

## मधुसूदनी

समासे "सति" इति पूरणीयम्। प्रतीयमाना आर्थी। न विस्मरामीति पदेन वाच्या स्मृतिः। हापदगम्यो हरिणदृशो विषयेऽनुतापः। स्मृतिरुपमया उपस्क्रियते। तामुपस्कृत्य विप्रलम्भमपि सा उपस्करोतीति।

## बालक्रीड़ा

क्योंकि 'दरत्रासौ। भीतिर्भीः साध्वसं भयम्" इस अमर कोष के अनुसार भय और त्रास पर्याय है। आपने लिखा है कि पूर्वार्द्ध में एक दूसरे को दवाने की इच्छा रखने वाले त्रास और औत्सुक्य में संधि है। संधि भावों की होती है। और भाव संज्ञा तब होती है जब कोई व्यभिचारी निर्वेदादि व्यक्त हों। क्योंकि अव्यक्त वाच्य व्यभिचारी निर्वेदादि, भाव नहीं होते हैं। व्यभिचारी तथाञ्जितः यही सिद्धान्त है। इसी सिद्धान्त को स्वयं आप (पण्डितराज) ने अप्यय्यदीक्षित के मत को खण्डन करने के लिए स्मरणालंकार में कहेंगे कि (न हि वाच्यस्य व्यभिचारिणो भावत्वमित्यारभ्य अहोमहदिदमाश्चर्यं यत् स्वेनैव निर्मितः कुवलयानन्दाख्यः सन्दर्भो विस्मृतः। उक्तं च तत्र विभावानुभावाभ्यामभिव्यंजितो निर्वेदादिर्भाव इत्यन्तः, वाच्य व्यभिचारी निर्वेदादि, भाव नहीं कहलाते। यहाँ से आरम्भ करके "अहो महान् आश्चर्य है कि जो अपने ही बनाये हुए संदर्भ (ग्रन्थ) 'कुवलयानन्द को भुला दिया। वहाँ लिखा है कि विभाव एवं अनुभाव से व्यक्त हुआ निर्वेदादि, भाव होता है। यहाँ तक। प्रकृत में भय और त्रास पर्याय होने से भय पद से त्रास व्यंग्य नहीं है किन्तु वाच्य है।

अगर कहें कि व्याघ्रादि भीषणजन्तु एवं पदार्थों को देखने से परम अनर्थ का कारण वैक्लव्य चित्त में उत्पन्न हों जाय तब भय है जो भयानक रस का स्थायी भाव कहलाता है और वही भय जब परम अनर्थ का कारण नहीं बनें तब त्रास व्यभिचारी कहलाता है यही दोनों में भिन्नता है। तब भी ठीक नहीं है क्योंकि अपसिद्धान्त हो जायगा। सिद्धान्त है। विभाव एवं अनुभाव से व्यक्त हुए न कि स्थायी भाव से व्यक्त हुए निर्वेदादि व्यभिचारी, भाव कहलाते हैं।

और भी समस्या है कि ("व्यभिचारिरसस्थायिभावानां सब्दवाच्यता। दोषः") व्यभिचारी, रस, एवं स्थायीभाव इनको स्ववाचक शब्द से निर्देश करना दोष है। अतः भय को भय शब्द से कहना दोषपूर्ण है। और भी बात है कि नायिका को गुरुजनों से सर्वदा भय नहीं होता है किन्तु जब नायिका स्वतन्त्रता पूर्वक व्यवहार करे या उच्छृंखल होते की स्थिति में होती है तब उनसे भय होता है इसलिए कहा कि "सहगुरुजन" यह पाठ साधु है।

यहाँ उपमान वाचक दरदलदरविन्द शब्द का साधारण धर्मवाचक सुन्दर शब्द के साथ समास हुआ है। अतः प्रतीयमान याने आर्थी उपमा स्मृति को उपस्कृत करती हुई सकल वाक्य के प्रतिपाद्य विप्रलम्भ श्रृंगार को उपस्कृत करती है अतः अलंकार है।

सयासे प्रतीयमानोपमा सकलवाक्यार्थस्य विप्रलम्भशृङ्गारस्य स्मृत्युपस्करणद्वारोपस्कारकतयालंकारः। न चात्र स्मृतिः प्रधानतया ध्वन्यत इति वक्तुं शक्यम्, न विस्मरामीति स्मृत्यभावनिषेधमुखेन स्फुटमावेदनात्। नापि पूर्वार्धगतत्रासौत्सुक्ययोः परस्पराभिभवकामयोः संधिः प्रधानम्,

मर्मप्रकाशः

एकनिमित्तकत्वेनाभेदमादाय साधारणतेति बोध्यम्। समासे सति। 'उपमानानि'—इति सूत्रेणेति भावः। अत एव न श्रौतीत्याह—प्रतीयेति। सकलवाक्यार्थस्य सकलवाक्यतात्पर्यविषयभूतस्य। शृङ्गारस्येत्यस्योपस्कारकतयेत्यत्रान्वयः। त्रासेति गुरुजनभयमद्विलोकन पदबोध्ययोर्गुरुजनभयमद्विलोकनयोर्मध्ये व्याकुलत्वोदयेन द्वयोरपि तुल्यकक्षत्वम्। अत आह—परस्परेति।

मधुसूदनी

त्रासेति। सहगुरुजनमद्विलोकनेति। गुरुजनैः श्वश्र्वादिभिः सहैव मम विलोकनं तेन अन्तर्मनसि समुदयन् ( ई गतावित्यस्य शत्रन्तं रूपम् ) य आकुलभावः किंकर्तव्यविमूढ़ता। यस्मिन् समये गुरुजनानां विलोकनं जातं तस्मिन्नेव समये ममापि तत्। तेषां विलोकनेन त्रासो मद्विलोकने औत्सुक्यं व्यज्यते। तयोरेको ऽपरमभिभवितुं कामयते इति संधिरेककाले परस्परसंसर्गभासः।

इदन्तु बोध्यम्। दरत्रासौ भीतिर्भीः साध्वसं भयमित्यमराद्धयत्रासयोः पर्यायतया गुरुजनभयेति भयपदेन त्रासस्य वाच्यतैव नतु व्यंग्यत्वम्।

"व्यभिचारी तथाञ्जितः" इत्युक्तेरञ्जितो व्यभिचारी भावपदाभिधेयोऽनञ्जितस्तु न तथा। ततश्च त्रासस्य भावत्वाभावात्कथं त्रासौत्सुक्ययोः सन्धिः स्यात्। स्वयं भवतापि स्मरणालंकारे वक्ष्यते "नहि वाच्यस्य व्यभिचारिणो भावत्वमित्यारभ्य अहो महदिदमाश्चर्यं स्वेनैव निर्मितः कुवलयानन्दाख्यः सन्दर्भो विस्मृतः। उक्तं च तत्र विभावानुभावाभ्यामभिव्यंजितो निर्वेदादिर्भाव इत्यन्तं यावदप्पय्यदीक्षितमतं खण्डयितुमिति।

बालक्रीड़ा

शंका—यहाँ स्मृति प्रधानतया ध्वनित होती है ऐसा क्यों न कहा जाय।

समाधान—ऐसा आप नहीं कह सकते। क्योकि (न विस्मरामि) मैं भूलता नहीं हूँ याने बराबर याद बनी रहती है इस तरह स्पष्ट रूप से स्मृति को कह दिया गया है। (स्मृति का अभाव विस्मरण भूलना, नहीं विस्मरण करना, उसका निषेध याने स्मृति करना)

यह भी नहीं कह सकते कि एक दूसरे को दवा देने की कामना करने वाले पूर्वार्धगत त्रास और औत्सुक्य कीं संधि प्रधान है। क्योंकि वह संधि नायिका निष्ठ होने से अनुवाद्य है। "क्योंकि नायिका के नयनों को नहीं भूलता हूँ" इस प्रकार नयनों को नहीं

तस्य नायिकागतत्वेनानुवाद्यत्वात्, उत्तरार्धगतस्मृत्यङ्गत्वाच्च। तस्माद्भावसंध्युपमालंकाराभ्यामुपस्कृता स्मृतिर्हापदगम्यः संतापोऽनुभावश्च विप्रलम्भमेवोपस्कुरुत इति तस्यैवात्र प्राधान्यम्।

### मर्मप्रकाशः

तस्य संधेः।

### मधुसूदनी

ननु भयं भयानकरसस्य स्थायी भावः। त्रासस्तु व्यभिचारीति। परमानर्थविषयको व्याघ्रादिदर्शनजन्मा वैक्लव्याख्यः भयं, तद्विषयकत्वाभावे तु अन्तःकरणधर्मस्त्रास इत्युक्तेर्भेदस्तथापि भयेन त्रासाभिव्यक्तिरिति अपसिद्धान्तः, सिद्धान्तस्योक्तत्वात्।

अपरञ्च व्यभिचारिरसस्थायिभावानां शब्दवाच्यतायाः दोषात् स्थायिनो भयस्य स्वशब्देन कथनं दोष एव। अन्यच्च नहि यत्र कुत्रापि गुरुजनेभ्यो भयं समुदेति किन्तु स्वस्याः स्वतन्त्रतया व्यवहरणे, स्थितौ वा तेषां विलोकने तेभ्यस्तत्स्यात्। अतः गुरुजनभयेति मुद्रितपाठस्थाने सहगुरुजनेति पाठः साधीयान्। वोपसर्जनस्येति सूत्रेण विकल्पेन सहशब्दस्य स्थाने सादेशविधानात्, सादेशाभावे इदं रूपम्।

तस्य संधेः अनुवाद्यत्वादिति। अत्र तादृशनायिकामुद्दिश्य तन्नयनकर्मकविस्मरणाभावस्य विधेयता। एवं हि नायिकाया उद्देश्यत्वे तद्विशेषणानां तद्गम्यानां भावानामपि उद्देश्यत्वमनुवाद्यत्वमुचितमेवेति। तस्यैव विप्रलम्भश्रृंगारस्यैव।

### बालक्रीड़ा

भूलना विधेय है उसमें नायिका अनुवाद्य है। फ़लतः अनुवाद्य के धर्म अनुवाद्य हो गये। और उत्तरार्धगत स्मृति के अंग होने से भी वे प्रधान नहीं हैं। इस लिए भाव संधि एवं उपमालंकार से उपस्कृत हुई स्मृति और हापद से गम्य सन्ताप अनुभाव ये दोनों विप्रलम्भ को ही उपस्कृत करते हैं अतः विप्रलम्भ श्रृंगार की ही प्रधानता है।

विप्रलम्भ की प्रधानता है कहने का भाव यह है कि उपमा का ही यह पद्य उदाहरण है उसीको बतलाने के लिए यह सब व्याख्या है और (प्रधानेन हि व्यपदेशा भवन्ति) व्यवहार प्रधान के ही नाम से होता है अतः उपमा ही प्रकृत में यद्यपि प्रधान है तद्यपि

रसभावादितात्पर्यमाश्रित्य विनिवेशनम्। अलंकृतीनां सर्वासामलंकरत्वसाधनम्।

रसभावादिकों को प्रधान मानकर विन्यास करने पर ही उपमादि में अलंकारत्व सिद्ध होता है। इसको ध्यान में रखकर ही अलंकार प्रकरण की संगति करनी चाहिए।

अप्पय्यदीक्षिताः पुनश्चित्रमीमांसायाम्—"उपमितिक्रियानिष्पत्ति-

## मर्मप्रकाशः

पुनःशब्दस्तोरर्थे। शब्दस्य शब्दवाच्यत्वमते नायं दोषोऽत आह—

## मधुसूदनी

उपमितिक्रियेति। इदं तु बोध्यम्। चित्रमीमांसायां श्रीमदप्पय्यदीक्षितै रुपमितिक्रियानिष्पत्तीति यः समुल्लेखः कृतः स मम्मटमहाशयानां प्रतीपालंकारोदाहरणे "ए एहि दाव सुन्दरी"त्यत्रगतं मुखेन उपमीयमानस्य शशिनः स्वल्पतरगुणत्वात् "उपमित्यनिष्पत्त्येति, कचित्तु निष्पन्नैव उपमितिक्रिये"ति च लेखम नुसृत्यैवेति ध्येयम्।

मम्मटभट्टाश्च लोचनानुयायिनः। "दत्तानन्दाः" इति पद्यस्य व्याख्यानावसरे "उपमानोपमेयभाव" इति प्रतीकमुपादाय लोचनकारैः=तेन उपमितिरूपणव्यतिरेकनिह्नवादयो व्यापारमात्ररूपा एव आस्वादप्रतीतेः प्रधानं विश्रान्तिस्थानं, न तूपमेयादीति सर्वत्रालंकारे बोध्यमिति समवालेखि।

अनुमितिगादाधर्या व्याख्यानेऽपि क्रियाभेदभिन्नमूर्तिकतयेत्यत्र क्रियाया अनुमिनोमीति अनुमितिरूपायाः अनुमायाः, उपमिनोमीति उपमितिरूपायाः उपमाया, एवं रूपेण यो भेदः प्रकारस्तेन भिन्नाः मूर्तिर्यस्य तस्य भावस्तयेति व्यचारि।

उपमितिरूपाया क्रियायाः उपमाया निष्पत्तिः सिद्धिर्यस्मिन् सादृश्यवर्णने अस्ति तददुष्टमव्यंग्यमर्थाद्वाच्यं सादृश्यवर्णनमुपमालंकारः। कृतेऽपि सादृश्य वर्णने यदि तस्या उपमाया निष्पत्तिर्न स्यात्तदा उपमा नास्ति यथा अनन्वयादिष्वलंकारेषु। यत्र तिरस्कारार्थमुपानस्योपमेयीकरणे उपमितिक्रियाया अनिष्पत्तिस्तत्र प्रतीपे च।

यत्र तु तद्वर्णने कृते सति उपमितिक्रियाया निष्पत्तिस्तत्रोपमा। यथा प्रथमस्वरूपे प्रतीपे, उपमेयोपमायां च।

## बालक्रीड़ा

"अप्पय्यदीक्षिताः पुनः" यहाँ पुनः शब्द तु के अर्थ में हैं। हमने उपमा का स्वरूप ऐसा कहा किन्तु अप्पय्यदीक्षितजी का चित्रमीमांसा ग्रन्थ में—उपमिति क्रिया का निष्पादक सादृश्यवर्णन उपमालंकार होता है। वह वर्णन निर्दोष होना चाहिए और व्यंग्य न होकर वाच्य होना चाहिए। यह जो "उपमितिक्रियानिष्पत्ति" उल्लेख है वह काव्यप्रकाश में मम्मट भट्ट के प्रतीपालंकार के उदाहरण "ए एहि दाव सुन्दरि" की विवृति की पंक्ति के अनुसार है। वहाँ लिखा है कि मुख से उपमीयमान शशि स्वल्प गुण वाला है अतः उपमिति की निष्पत्ति नहीं हुई। कहीं पर तो "निष्पन्न ही उपमिति क्रिया"। इति।

मम्मट भट्ट ने भी लोचन का अनुगमन किया है लोचनकार ने "दत्तानन्दाः प्रजानां" इस पद्य की व्याख्या में "उपमानोपमेयभाव" इस प्रतीक को लेकर उपमिति, रूपण, व्यतिरेचन निन्हव आदि केवल व्यापार ही आस्वाद प्रतीति के प्रधान विश्रान्ति स्थान हैं न कि उपमेय

मत्सादृश्यवर्णनमदुष्टमव्यंग्यमुपमालंकारः। स्वनिषेधापर्यवसायि सादृश्य-वर्णनं तथाभूतं वा" इति लक्षणद्वयमाहुः। तच्चिन्त्यम्। वर्णनस्य विलक्षण-शब्दात्मकस्य विलक्षणज्ञानात्मकस्य वा शब्दवाच्यताविरहेणार्थालंकारताया बाधात्। तस्य सर्वथैवाव्यंग्यत्वविशेषणवैयर्थ्याच्च।

मर्मप्रकाशः

विलक्षणज्ञानेति। अव्यङ्ग्यत्वाद्व्यङ्ग्यत्वाभावात्।

मधुसूदनी

वा अथवा स्वस्य सादृश्यस्य निषेधे अ नास्ति पर्यवसायो विश्रामोऽस्य वर्णनस्य तादृशं वर्णनमुपमा। ननु वर्णनं शब्दप्रयोगस्तथा च सादृश्यवर्णनं नाम किमपि वर्णनी-मवलम्ब्य सादृश्यस्य प्रतिपादकः शब्दप्रयोगः। स च "गौरिव गवयः" इत्यादिष्वपि वर्त्तते। इति तद्वारणाय वर्णनपदार्थमाह=विलक्षणेति। विलक्षणः चमत्कारप्रयोजकः शब्द आत्मा स्वरूपं यस्य तत्। अथवा विलक्षणान् शब्दान् वर्णनकर्त्ता कविर्ज्ञास्यति तदा तादृशान् शब्दान् वर्णने उपयोक्ष्यति इत्याशयेन वर्णनपदस्यार्थान्तरमाह-विलेति। यादृशज्ञानेन कविर्विलक्षणान् शब्दान् प्रयुंक्ते तादृशं विलक्षणं चमत्कारप्रयोजकं ज्ञान-मेवात्मा यस्य तत्। विलक्षणशब्दप्रयोगहेतुर्विलक्षणं यद् वर्णनं ज्ञानं तदुपमा।

शब्दवाच्यतेति। अदो हृदयम्। रमणीयस्यार्थस्य प्रतिपादकः शब्दः काव्यम्। एवं हि काव्यरूपशब्दस्य प्रतिपाद्यः अर्थ एव न तु भवदुक्तं शब्दरूपं, ज्ञानरूपं वा वर्णनं प्रतिपाद्यम्। तथा च यदा तादृशे वर्णने काव्यरूपशब्दवाच्यत्वमेव नास्ति तर्हि तादृशवर्णनात्मिकाया उपमाया अर्थगतत्वेन काव्यालंकारता कथं स्यादित्यर्थः।

ननु काव्ये सहोक्तिविनोक्तिप्रभृतीनामुक्त्याख्यशब्दरूपाणामपि स्वनिष्ठप्रति-पादकतानिरूपितप्रतिपाद्यत्वसम्बन्धेन; तथा भ्रान्तिसन्देहादीनां ज्ञानरूपाणामपि स्वनिष्ठविषयितानिरूपितविषयत्वसम्बन्धेन यथा अर्थालंकारता तथैव प्रकृतेऽपि स्या-दित्याह=बाधादिति। तादृशः कश्चित् सम्बन्धो न जागर्त्ति। ततश्च तादृशवर्णन-रूपोपमायाः शब्दवाच्यताविरहेण अर्थालंकारताया बाध एवेत्यर्थः। अयमाशयः। पूर्वत्र स्वे काव्ये सहविनादिशब्दानामुक्तिः उत्तरत्र काव्यनिबद्धभ्रान्तसन्दिग्धादि-गतभ्रान्तिसन्देहादिः। यथा सा, स वा काव्ये निबध्यते तथा शब्दरूपवर्णनस्य ज्ञानरूपवर्णनस्य वा काव्ये निबन्धो नास्ति तेन उक्तसम्बन्धो न जागर्तीति।

बालक्रीड़ा

वगैरह। ऐसा लिखा है। वा अथवा सादृश्य के निषेध के कारण जहाँ सादृश्य का पर्यवसान नहीं होवे ऐसे (तथाभूत) अदुष्ट एवं अव्यंग्य सादृश्य के वर्णन का नाम उपमा है। इन दो लक्षणों को कहते हैं। वे चिन्त्य हैं। क्योंकि वर्णन शब्द रूप है या ज्ञान रूप है अतः वह वर्णन शब्दवाच्य अर्थात् शब्दप्रतिपाद्य अर्थ नहीं होगा। क्योंकि शब्द का वाच्य शब्द नहीं होता है और न ज्ञान ही होता है वह तो अर्थ होता है। इसलिए शब्द वाच्यता के विरह के कारण उसमें अर्थालंकारता नहीं बनेगी। और वह वर्णन वाच्य ही होता है व्यंग्य नहीं होता है। अतः उसमें अव्यंग्यत्व विशेषण सर्वथा व्यर्थ ही है।

अथ यदि वर्णनविषयीभूतं तादृशसादृश्यमुपमेत्युच्यते, तदा यथा गौस्तथा गवय इत्यत्रोपमालंकारापत्तेः । एवं "कालोपसर्जने च तुल्यम्"

## मर्मप्रकाशः

तादृशेति । अदुष्टाव्यङ्ग्यत्वविशेषणद्वयान्यतरेत्यर्थः ।

## मधुसूदनी

ननु शब्द भाषणे इति धातुः । तत्र भाषणं शब्द एव । एवं हि शब्दरूपस्य शब्दधातोरर्थः भाषणं शब्दरूपः । तथा च शब्दस्व शब्दवाच्यता प्राप्ता । एवमेव ज्ञा अवबोधने इति धातुः । तत्र अवबोधनं ज्ञानमेव । एवं हि शब्दरूपस्य ज्ञाधातोरर्थः अवबोधनं ज्ञानरूपम् । तथा च ज्ञानेऽपि शब्दवाच्यता प्राप्तेति तयोः शब्दज्ञानयोः शब्दवाच्यत्वस्य विरहो नास्ति इति चेन्न । शुद्धयोस्तयोर्वाच्यवाचकभावं कः प्रतिषेधति । काव्यरूपशब्दस्य तादृशशब्दज्ञानयोश्च वाच्यवाचकभावो नास्तीत्यतः शब्दवाच्यत्वविरह एत्र तयोरिति ।

तस्य वर्णनस्य । सर्वथैव अव्यंग्यत्वादिति । इदन्तत्वम् । यहिं उक्तरीत्या वर्णनस्य शब्दवाच्यताविरहेण उपमात्वमेव नास्ति तर्हि सर्वथैव अव्यंग्यत्वादिति कथनस्य कः प्रसङ्गः । पूर्वं वर्णनं शब्दवाच्यतया उपमा भवेत्तदा वाच्या सा उपमा अलंकारः । व्यंग्या सा अलंकारो नेति व्यवस्थायै अव्यंग्यत्वकथनं युक्तिसंगतं स्यात् । मूलं नास्ति कुतः शाखेति भावः ।

एवं तत्त्वविरहेण उपमा नास्ति चेत्तर्हि तादृशकथनस्य प्रसंगाभावादव्यंग्यत्वविशेषणस्य सर्वथा वैयर्थ्यमेव ।

अथेति वर्णनेत्यत्र पक्षान्तरमुद्भाव्योच्यते ।

ननु विशेषणविशेष्यभावे कामचारः । एवं हि सादृश्यवर्णनयोर्विशेषणविशेष्यभावो व्यत्ययेनापि वर्णनसादृश्ययोः क्रियते । ततश्च वर्णनस्य विलक्षणशब्दात्मकत्वपक्षे विलक्षणशब्दोपारूढमुपमितिक्रियानिष्पत्तिमत्सादृश्यमुपमा । वर्णनस्य विलक्षणज्ञानात्मकत्वपक्षे विलक्षणज्ञानविषयीभूतमुपमितिक्रियानिष्पत्तिमत्सादृश्यमुपमेति

## बालक्रीड़ा

पक्षान्तर का उद्भावन करने के लिए कहते हैं कि अगर वर्णनविषयीभूत तादृशसादृश्य को उपमा कहते हैं । यहाँ का तत्व यह है कि विशेषणविशेष्य भाव में कामचार है । इसलिए सादृश्य एवं वर्णन में जो विशेषण विशेष्य भाव है उसके विपरीत वर्णन एवं सादृश्य में वह भाव करते हैं । वर्णन विलक्षण शब्दात्मा है इस पक्ष में विलक्षण शब्दों से प्रतिपादित किया गया उपमिति क्रिया का निष्पादक सादृश्य उपमा है । और वर्णन लिक्षण ज्ञानात्मक है इस पक्ष में विलक्षण ज्ञान का विषय उपमिति क्रिया का निष्पादक सादृश्य उपमा है । ये दो लक्षण बन गये । इन में पहले लक्षण के अनुसार जैसी गौ वैसा ही गवय इस वाक्य में, दूसरे लक्षण के अनुसार 'कालोपसर्जने च तुल्यम्' इस पाणिनि सूत्र में भी उपमा होने की आपत्ति लग जायगी ।

इत्यादावपि। अशिष्यत्वादिना प्रधानप्रत्ययार्थवचनसादृश्यस्यात्रापि

### मर्मप्रकाशः

इत्यादावपीति। उपमालंकारापत्तिरित्यस्यानुषङ्गः। आदिसंग्राह्यं चिन्त्यम्। अत्रापि

### मधुसूदनी

लक्षणद्वयं सम्पन्नम्। तदा पूर्वस्मिन् पक्षे यथा गौस्तथा गवय इत्यत्रापि; उत्तरस्मिन् पक्षे कालोपसर्जने च तुल्यमिति पाणिनिसूत्रेऽपि उपमात्वापत्तेः।

कथं तत्त्वापत्तिरित्याह अशिष्यत्वादिनेति। अत्र आदिपदार्थः कोऽपि नास्ति अतः आदिपदं व्यर्थम्। अयमिहाभिप्रायः। "तदशिष्यं संज्ञाप्रमाणत्वात्" इति सूत्रं

### बालक्रीड़ा

प्रश्न—कैसे उपमा की आपत्ति लग जायगी। समाधान—अशिष्यत्वादि से। यहाँ आदि पद का कोई अर्थ नहीं है अतः आदि पद व्यर्थ है। यहाँ का अभिप्राय यह है कि "तदशिष्यं संज्ञाप्रमाणत्वात्" यह सूत्र बतलाता है कि "जनपदे लुप्" इस सूत्र से लुप् करने पर जो "लुपि युक्तवद् व्यक्तिवचने" इस सूत्र के द्वारा प्रकृतिवत् लिंग और वचन का अतिदेश होता है वह अशिष्य है माने शास्त्र के द्वारा समझाना ठीक नहीं है। प्रश्न-क्यों अशिष्य है। समाधान – लोक व्यहार ही इस अंश में प्रमाण है अतः शास्त्र इस अंश में प्रवृत्त नहीं होता है। जैसे, जल वाचक आप् शब्द, ऋतु वाचक वर्षा शब्द, धूलि वाचक सिकता शब्द ये सब शब्द बहुवचन में और स्त्रीलिंग में ही प्रयुक्त होते हैं। स्त्री वाचक दार शब्द पुलिङ्ग एवं बहुवचन में। इसी तरह स्त्री वाचक कलत्र शब्द नपुंसक लिंग में प्रयुक्त होता है, कौन अनुशासक है।

संज्ञा संज्ञान माने लोक व्यवहार ही प्रमाण है अतः लिंग एवं वचन का अतिदेश शास्त्र के द्वारा नहीं बतलाना चाहिए। भाष्यकार भी कहते हैं कि (लिंगमशिष्यं लोकाश्रयत्वाल्लिंगस्य) लिंग के विषय में अनुशासन कहीं करना चाहिए। क्योंकि लिंग, लोक के अधीन है।

इसी अशिष्यत्व के प्रसंग में प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्, "कालोपसर्जने च तुल्यम्" इन दो सूत्रों का भी उपन्यास किया है। यहाँ स्थिति यह है कि न केवल प्रकृति का प्रयोग करना चाहिए और न केवल प्रत्यय का: क्यों कि केवल में अर्थबोधन करने की क्षमता नहीं होने से अर्थवत्ता उपपन्न नहीं होती है। इस लिए प्रकृति और प्रत्यय दोनों साथ मिलकर अर्थ का बोधन करते हैं। इस विषय में पूर्वाचार्यो का कहना है कि प्रकृति और प्रत्यय इन दोनों में प्रत्यय का अर्थ प्रधान होता है। इसी प्रसंग में प्रथम सूत्र समझाता है कि प्रत्ययार्थ की प्रधानता के विषय में पूर्वाचार्यो का कहना अशिष्य है अर्थात् पूर्वाचार्यो को इस प्रसंग में अनुशासन नहीं करना चाहिए। क्योंकि लोकसिद्ध वस्तु के वियय में अनुशासन अकिंचित्कर होता है।

इसी अशिष्यत्व के प्रसंग में द्वितीय सूत्र "कालोपसर्जने च तुल्यम्" का निर्देश किया है। यहाँ पर कालश्च उपसर्जनं च यह समाहार द्वन्द्व है और कालोपसर्जने यह विषय

प्रतिपादनात् ।

मर्मप्रकाशः

कालोपसर्जनयोरपि । अत्र कालोपसर्जने च तुल्यमित्यत्र (द्वयोरु) द्विवचनो(?)पादानादिति भावः । एतदर्थमेव

मधुसूदनी

बोधयति यत् "जनपदे लुबि" ति सूत्रेण लुपिकृते सति यत् "लुपि युक्तवदि" ति प्रकृतिवल्लिंगवचने अतिदिश्येते तदतिदेशनमशिष्यं शास्त्रेण न बोधनीयम् । कुतोऽशिष्यमित्याह—संज्ञानां लोकव्यवहाराणामेव तदंशे प्रमाणत्वात् शास्त्रं तदंशे न प्रवर्त्तते इत्यर्थः । आपो, सिकताः, स्त्रियां भूम्नि; स्त्रीवाचको दारशब्दः पुंसि बहुवचने, तद्वाचकः कलत्रशब्दो नपुंसके प्रयुज्यते कोऽनुशासकः । संज्ञा संज्ञानं लोकावगतिरेव प्रमाणम् । अतस्तदतिदेशनमशिष्यम् ।

एतस्यैव अशिष्यत्वस्य प्रसंगे प्रधानेति कालेतिच सूत्रं द्वयम् । तत्र न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः । केवलाभ्यामर्थस्यावचनादर्थवत्ता तयो र्नोपपद्यते इति प्रकृतिप्रत्ययौ सहार्थं ब्रूत इति स्थितिः । तत्र पूर्वाचार्यैर्नियमः क्रियते तयोः प्रत्ययार्थः प्रधानं, प्रसंगेऽस्मिन् प्रथमं सूत्रं बोधयति यत् प्रत्ययार्थस्य प्रधानत्वविषयकं पूर्वाचार्याणां वचनमशिष्यम् । कुतस्तदित्याह=अर्थस्येति । अर्थस्य प्रत्ययार्थप्राधान्यस्य अन्यस्माल्लोकत एव प्रमाणत्वात् प्रमितत्वात् । न हि लिंगसंख्ये शास्त्रेणातिदेशनीये लोकाश्रयत्वात्तयोरिति सिद्धान्तात् लोकसिद्धे वस्तुनि शास्त्रमकिञ्चित्करं भवति इत्यर्थः ।

एतस्यैव अशिष्यत्वस्य प्रसंगे द्वितीयं सूत्रं "कालोपसर्जने च तुल्यम्" इति । कालश्च उपसर्जनं चेति समाहारद्वन्द्वः । तस्मिन् कालोपसर्जने । विषयसप्तमीयम् । चोप्यर्थे । वचनमिति पूर्वसूत्रतोऽनुवर्त्तते । एवञ्च कालोपसर्जनविषयेऽपि पूर्वाचार्यवचनं तुल्यम् अशिष्यत्वेन साधारणधर्मेण समम् ।

अशिष्यत्वेनेति तृतीयार्थः प्रयोज्यत्वं, तेन अशिष्यत्वप्रयोज्यस्य प्रधानप्रत्ययार्थनिरूपितसादृश्यस्य अत्रापि कालोपसर्जनविषयकवचनेऽपि प्रतिपादनात्, उपमा भवितुमर्हेति शेषः ।

बालक्रीड़ा

सप्तमी है । चकार अपि के अर्थ में प्रयुक्त है । वचनं यह पद पूर्व सूत्र से आता है । इस प्रकार इस का अर्थ हुआ कि काल एवं उपसर्जन के विषय में भी पूर्वाचार्यों का कहना अशिष्यत्वरूप साधारण धर्म के द्वारा समान है तुल्य है । यहाँ अशिष्यत्वेन इस तृतीया का अर्थ प्रयोज्यत्व है इस से अशिष्यत्व प्रयोज्य प्रधानप्रत्ययार्थ वचन निरूपित सादृश्य का काल एवं उपसर्जन के विषय में प्रतिपादन किया है अतः "कालोपसर्जने च तुल्यम्" इस सूत्र में भी उपमा हो सकती है ।

**न चात्र वचनभेदस्य दोषस्य सत्त्वाददुष्टत्वविशेषणेन वारणं भविष्यतीति वाच्यम्। एतद्वाक्योपप्लुतवाक्यान्तरप्रतिपादितैकोपमेयके**

### मर्मप्रकाशः

द्वितीयदोषोक्तिः। उपप्लुतेति। कल्पितेत्यर्थः। प्रधानप्रत्ययार्थवचनवत्काल इत्यादीति भावः। तदाह—एकोपमेयेति। अत्रेति। यथा गौरित्यादावित्यर्थः।

### मधुसूदनी

आशंक्य समाधत्ते—न च वाच्यमिति। वचनभेदस्येति। कालविषये पूर्वाचार्याणां वचनं भिन्नम्। उपसर्जन विषये तद्भिन्नमतो वचनभेदस्य (कृदभिहितो भावो द्रव्यवत्प्रकाशते इत्यनुसारं) भिन्नवचनकृतस्य दोषस्य विसंष्ठुलताख्यस्य सत्त्वे नोपमेति शंका। प्रधानप्रत्ययार्थविषयकवचनरूपेण एकेन उपमानेन सह कालोपसर्जनविषयकयोर्द्वयोर्भिन्नयोर्वचनरूपोपमेयमोर्युगपन्निरूप्यमाणं सादृश्यं विसंष्ठुलं प्रतिभातीति। सत्वेपि वर्त्तमानेऽपि (तस्य दोषस्य) अदुष्टत्वविशेषणेन लक्षणगतेन वारणं भविष्यतीति नातिव्याप्तिरिति न च वाच्यम्। कुतो न वाच्यमित्याह—एतदिति। एतेन कालोपसर्जने च तुल्यमित्यनेन वाक्येन उपप्लुतं वाक्यमेतत्सूत्ररूपं विभज्य सम्पादितं यद्वाक्यान्तरं भिन्नं २ वाक्यद्वयं तेन प्रतिपादितमेकमुपमेयं यस्मिन् तस्मिन् सादृश्ये तथापि वचनभेददोषस्य वारणेऽपि अतिप्रसंगात् अतिव्याप्तेः। वर्णनविषयीभूतत्वं सादृश्ये नास्ति ततो वर्णनस्याविषये वस्तुनि सादृश्ये व्याप्तम्।

एकोपमेयकसादृश्यस्वरूपं विश्लिष्य प्रदर्श्यते=प्रधानप्रत्ययार्थविषयकं प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तत्र प्रत्ययार्थः प्रधानमित्येवंरूपं पूर्वाचार्याणां वचनम्।

### बालक्रीड़ा

इस विषय पर शंका करके समाधान करते हैं कि यहाँ पर वचन भेद रूप दोष है, माने काल के विषय में पूर्वाचार्यों का वचन भिन्न है। और उपसर्जन के विषय में वह वचन भिन्न है, अतः प्रधान प्रत्ययार्थविषयक वचन रूप एक उपमान के साथ काल और उपसर्जन विषयक भिन्न-भिन्न वचन रूप दो उपमेयों का एकसाथ निरूप्यमाण सादृश्य विसंष्ठुल मालूम पड़ता है। और "लक्षणगत अदुष्टत्व विशेषण से ही उक्त विसंष्ठुल सादृश्य का वरण हो जायगा इस लिए अतिव्याप्ति नहीं होगी" यह आप कह नहीं सकते हैं। क्योंकि इस वाक्य से उपप्लुत याने इस को तोड़ कर बनाये गये वाक्यान्तर अर्थात् भिन्न-भिन्न वाक्यों से प्रतिपादित एकोपमेयक सादृश्य में फिर भी अतिव्याप्ति रह ही गई। सिद्धान्त में इस तरह के सादृश्य को उपमालंकार नहीं माना है किन्तु भवदुक्त लक्षण की अतिप्रसक्ति हो ही गई।

यहाँ का हृदय है कि (प्रधानमत्ययार्थविषयकं प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तत्र प्रत्ययार्थः प्रधान मिति वचनम्) प्रकृति और प्रत्यय दोनों साथ मिलकर अर्थ को कहते हैं उनमें प्रत्यय

सादृश्ये तथाप्यतिप्रसंगात् । न चात्रोपमितिक्रियाया निष्पत्तावपि न सादृश्य-वर्णनम्, विषयस्याचमत्कारित्वात् । चमत्कारिविषयककविव्यापारस्यैव

## मधुसूदनी

अतीताया रात्रेः पश्चार्द्धेन आगामिन्याः पूर्वार्द्धेन च सहितः कालोऽद्यतनः । तद्भिन्नोऽनद्यतनः काल इति पूर्वाचार्याणां वचनञ्च तुल्यमशिष्यत्वात् । प्रधानप्रत्ययार्थविषयकं प्राचामाचार्याणां वचनम्, उपसर्जनं विशेषणमित्येवंरूपं प्राचार्याणां वचनञ्च तुल्यम्; अशिष्यत्वात् ।। इति ।।

इदानीं सादृश्ये अतिप्रसंगं दर्शयति=न चेति । निष्पत्तावपि सद्भावेऽपि । अत्र निष्पत्तिपदस्यार्थः सद्भाव एव । अन्यथा वक्ष्यमाणमनिष्पन्नं सादृश्यमिति न संगच्छेत । पूर्वं निष्पत्तिः सादृश्यस्योच्यते अग्रे अनिष्पन्नं तदिति कथं स्यात् । सादृश्यवर्णनं न वर्णनविषयीभूतं सादृश्यं नास्तीत्यर्थः । तत्र हेतुमाह=विषयेति । विषयस्य वर्णनीयसादृश्यायाऽचमत्कारित्वात् चमत्काररहितत्वात् ।

ननु वर्णनेन चमत्कार उदेतीति विषयं चमत्कारिणं कर्त्तुमेव कविर्व्याप्रृणोति । चमत्कारी विषयो यस्मात् स चमत्कारिविषयकः कवेर्व्यापार एव वर्णनपदार्थः । तेन यदि सादृश्यं चमत्कारि नाभविष्यत्तर्हि सादृश्यं नावर्णयिष्यत् । इति चेन्न । एवं हि उपमितिक्रियायाः सद्भावेऽपि सादृश्यवर्णनाभावे हि । लक्षणे उपमालक्षणे उपमितिक्रियानिष्पतिमत् वर्णनविषयीभूतं चमत्कारि सादृश्यमुपमेति रूपेण

## बालक्रीड़ा

का अर्थ प्रधान है । यह प्रधान प्रत्ययार्थ विषयक पूर्वाचार्यों का वचन, तथा अतीत रात्रि के पश्चार्द्ध और आगामिनी रात्रि के पूर्वार्द्ध के सहित जो काल है उसका नाम अद्यतन है यह पूर्वाचार्यों का वचन दोनों तुल्य हैं । उसका हेतु है अशिष्यत्व । प्रधान प्रत्ययार्थ विषयक पूर्वाचार्यों का वचन और उपसर्जन विशेषण है यह पूर्वाचार्यों का वचन दोनों तुल्य है उसका कारण है अशिष्यत्व ।

अब सादृश्य में अतिप्रसंग दिखाते हैं कि उपमिति क्रिया की निष्पत्ति होने पर भी सादृश्य का वर्णन नहीं हुआ । क्योंकि वर्णन के विषय सादृश्य में चमत्कार नहीं मिला । यहाँ निष्पत्ति शब्द का अर्थ सद्भाव ही करना होगा अन्यथा आगे चलकर जो कहेंगे कि सादृश्य के निष्पन्न नहीं होने से चमत्कार नहीं है वह कहना असंगत हो जायगा । क्योंकि यहाँ कहते हैं कि सादृश्य की निष्पत्ति हो गई फिर कहेंगे कि उसकी निष्पत्ति नहीं हुई इस तरह परस्पर विरुद्ध हो जायगा ।

प्रश्न—वर्णन वह पदार्थ है जिसके कारण विषय में चमत्कार की अनुभूति होती है । क्योंकि प्रतिपाद्य विषय को चमत्कृत करने के लिए ही कवि अपना वर्णनात्मक व्यापार करता है यदि उस वर्णन से चमत्कार की उपलब्धि नहीं हुई तो कहिए कि वर्णन ही नहीं हुआ ।

वर्णनपदार्थत्वादिति वाच्यम्। एवं हि चमत्कारित्वस्य लक्षणेऽवश्यं निवेश्यत्वेनोपमितिक्रियाविशेषणस्य वैयर्थ्यात्। नह्यनिष्पन्नमापाततः प्रतीयमानं सादृश्यं चमत्कृतिमाधत्ते। एवं द्वितीयलक्षणेऽपि निषेधापर्यवसायित्वं निरर्थकम्। व्यतिरेके कमलादिसादृश्यनिषेधस्यानन्वये च सर्वथा सादृश्यनिषेधस्य चमत्कारितया तदर्थं सादृश्यस्य निरूपणमिति प्रागेवाभिधानात्। किंच।

### मर्मप्रकाशः

व्यतिरेक इति। तवाननस्येत्यादावित्यर्थः। कमलादिसादृश्येति। कमलादिनिष्ठसादृश्येत्यर्थः। ननु वर्णनपदस्य चमत्कारजनकज्ञानविषयीभूतानुयोगिकत्वार्थे तात्पर्यग्राहकमिदम्, न तु लक्षणशरीरघटकमिति चेत्, तत्राह—किं चेति। वाक्यार्थत्वेनेति। तथा

### मधुसूदनी

चमत्कारित्वस्य विशेषणस्यावश्यं निवेशः करणीयः स्यात्। एवमुपमितिक्रियानिष्पत्तिरूपविशेषणस्य वैयर्थ्यमेव एवं प्रथमलक्षणवत् निषेधाऽपर्यवसायित्वं निरर्थकम्। तदर्थं सादृश्यनिषेधार्थम्। निषेधप्रतियोगिनः सादृश्यस्य निरूपणं कृतमिति प्रागेव उपमालक्षणघटकसुन्दरपदस्य कृत्यप्रदर्शनवेलायाम्।

एवमुक्तप्रकारेण लक्षणं विदूष्य प्रकारान्तरेण तद् दूषयितुमुपक्रमते=किंचेति। शशांक बिम्बापादानको मेरुपर्वताधिकरणको लम्बमान उरगो यथा भाति तथा कपो-

### बालक्रीड़ा

समाधान—यदि उपमिति क्रिया की निष्पत्ति में भी चमत्कारी सादृश्य वर्णन नहीं हुआ तो उपमा के लक्षण में चमत्कारित्व विशेषण का निवेश अवश्य ही करना होगा। अतः चमत्कारी सादृश्य वर्णन ही उपमा है इतना कहना पर्याप्त होगा तब "उपमिति क्रिया निष्पत्तिमत्" यह विशेषण व्यर्थ हो जायगा। क्योंकि सादृश्य निष्पन्न हुए विना आपाततः प्रतीत होने वाले सादृश्य में चमत्कार नहीं होता है और चमत्कार ही मुख्य है जब उक्त विशेषण के रहने पर भी फल नहीं मिलता है तब वह विशेषण व्यर्थ है।

इस उपमितिक्रियानिष्पत्तिमत् विशेषण की तरह द्वितीय लक्षण में भी निषेधापर्यवसायित्व विशेषण निरर्थक है। क्योंकि व्यतिरेक में (मुख की तुलना कमलादि के साथ नहीं हो सकती है। इस तरह) कमलादिनिरूपित सादृश्य का निषध, और अनन्वय में सादृश्य का सर्वथा निषेध मुख्य है यहां निषेव ही में चमत्कार है। और निषेव प्रतियोगीनिरूपण सापेक्ष है अतः निषेव की स्वरूपोपलब्धि के लिए ही अनन्वय एवं व्यतिरेक में सादृश्य का निरूपण किया जाता है" यह सब पहिले उपमा के लक्षण में आये हुए सुन्दर पद का फल दिखाते समय कहा जा चुका है।

अच्छा। आप जैसा उपमा का लक्षण कहते हैं उसे ही हम स्वीकार करते हैं। इस प्रकार अभ्युपगम करके पुनः लक्षण में दोष दिखाते हैं—किंच। शशांक बिम्ब से मेरु

"स्तनाभोगे पतन् भाति कपोलात्कुटिलोऽलकः ।
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः ॥"

इत्यादौ मुख्यवाक्यार्थत्वेनानलंकारभूतायामुपमायामतिव्याप्तिः, उपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनस्यादुष्टाव्यङ्ग्यत्वस्य चात्रापि सत्त्वात् । न चेयमप्युपमा लक्ष्येति वाच्यम्; ध्वन्यमानोपमानिवारणप्रयासस्य

### मर्मप्रकाशः

च न वाक्यार्थोपस्कारकत्वमिति भावः । तदाह—अनलमिति । ननु अलंकरोतीति योगबोधितोपस्कारकत्वस्यालंकारसामान्यस्वरूपत्वेन

### मधुसूदनी

लापादानकः स्तनाभोगाधिकरणकः प्रसरन् कुटिलोऽलको भाति । अत्र अलके कुटिलत्वमुपमानापेक्षया वैलक्षण्यं प्रकाशयत् यूनां हृदि चमत्कारमातनुते ।

अत्र भानरूपसाधारणधर्मप्रयोज्यस्य उरगालकयोः सादृश्यस्यैव न तु सादृश्याद‌तिरिक्तस्य कस्यचिन्मुख्यवाक्यार्थत्वं, तेन मुख्यवाक्यार्थत्वेन हेतुना अनलंकारभूतायामलंकारकत्वधर्मरहितायामुपमायामतिव्याप्तिर्भवदुक्तलक्षणप्रसक्तिः अत्रापि "स्तनाभोगे" पद्येऽपि । सत्त्वात् वर्त्तमानत्वात् ।

ननु उपमितिक्रियेति स्वनिषेधेति द्विविधमपि एतदुपमासामान्यलक्षणमिति दीक्षितोक्तेरुपमासामान्यलक्षणप्रस्तावः । ततश्च इयमुपमा अनलंकारभूताऽपि लक्ष्येति चेत्तर्हि वाच्यं, तथाभूता व्यंग्यापि सा लक्ष्या । इत्यत आह=न च वाच्यमिति । कुतो न वाच्यमित्याह=ध्वन्येति ।

### बालक्रीड़ा

पर्वत पर लम्बमान सर्प के जैसा कुटिल अलक है जो कि कपोल से स्तनाभोग पर फैला हुआ है ।

यहाँ पर भानरूप साधारणधर्म प्रयोज्य उरग उपमान एवं अलक उपमेय का सादृश्य ही मुख्य वाक्यार्थ है । उससे अतिरिक्त कुछ वर्णनीय नहीं है । इस मुख्यवाक्यार्थता के कारण अलंकारत्व धर्मरहित अनलंकार भूत उपमा में आप के लक्षण की अतिव्याप्ति हो गई ।

अगर कहें कि यह उपमा सामान्य का लक्षण है । जैसा कि चित्रमीमांसा में लिखा है (इति द्विविधमप्येतदुपमासामान्यलक्षणम्) उपमिति इत्यादि स्वनिषेधेत्यादि दोनों ही उपमा सामान्य अलंकार या अनलंकार भूत उपमामात्र के लक्षण हैं अतः यह भी मुख्य वाक्यार्थरूप होने से अनलंकारभूता भी उपमा लक्ष्य है; ऐसा नहीं कह सकते । क्योंकि यदि ऐसा कहेंगे तब तो ध्वन्यमान उपमा जो कि स्वतः अनलंकार भूत है उस के निवारण के लिए प्रयास करना व्यर्थ हो जायगा ।

वैयर्थ्यापत्तेः ।

'व्यापार उपमानाख्यो भवेद्यदि विवक्षितः ।
क्रियानिष्पत्तिपर्यन्तमुपमालंकृतिस्तु सा' ॥

## मधुसूदनी

यद्यनलंकारभूताऽपि लक्ष्या तर्हि तथाभूताया ध्वन्यमानायास्तस्या अव्यंग्यत्व-विशेषणेन निर्वारणप्रयासस्य वैयर्थ्यापत्तेः निरासोद्योगस्य निरर्थकत्वमेव स्यात् ।

व्यापार इति । यद्यपि उपमीयतेऽनेनेति करणव्युत्पत्या उपमितिकरणमुपमानं सदृशज्ञानमित्येवमुक्तं; करणं च व्यापारघटितं न तु व्यापार एव तथापि दीक्षितैरत्र करणमेव व्यापारत्वेन स्वीकृतं लाघवार्थम् ।

उपमानाख्यः उपमाननामकः उपमितिक्रियाया उपमितिरूपस्य फलस्य निष्पादको व्यापारः सादृश्यवर्णनरूपो यदि उपमितिरूपक्रियानिष्पत्तिपर्यन्तं विवक्षितस्तर्हि सोपमालंकृतिः । यदा सादृश्यवर्णनेन मुखं चन्द्र इवेत्यादिशब्दप्रयोगेण उपमितिक्रियायाः चन्द्रप्रतियोगिकसादृश्यवन्मुखमिति फलस्य निष्पत्तिः सिद्धिश्चमत्कारो भवति तदा सोपमा ।

## बालक्रीड़ा

उपमान नामक सादृश्यवर्णन रूप व्यापार जो उपमिति रूप फल का निष्पादक है वह यदि उपमितिक्रिया निष्पत्ति पर्यन्त विवक्षित हो तब उपमा अलंकार है क्योंकि उपमितिक्रिया उपमेय के को लेकर होती है । मुख को चन्द्र के सदृश जानूँ (उपमिनोमि) यह उपमिति क्रिया मुख को चन्द्र के सदृश जानने पर निष्पन्न हो जाती है । उस सादृश्य से वर्णनीय प्रधान का उत्कर्ष होता है तब वह अलंकार होता है ।

यहाँ का रहस्य यह है कि साधारण तौर से जाने हुए पदार्थ को पूर्णतया विशेषरूप से जानने का जो कारण है या ने मेय के स्वरूप को स्पष्टतया जानने का जो साधन हो उसे मान कहते हैं । और उस मान के समीप में रहने वाले साधन को उपमान कहते हैं । इस तरह जानने के साधन दो हुए । उनमें मान वह है जो मेय का अत्यन्त परिच्छेदक साधन हो याने मेय जितना हो जैसा हो उस की स्पष्ट जानकारी में सहायक हो । और उपमान वह है जो मेय का अत्यन्त पूर्णरूप से परिच्छेदक नहीं हो याने मेय जितना हो या जैसा हो उसकी आंशिक जानकारी में सहायक हो । यह भी सिद्धान्त है कि जहाँ पदार्थों में सामीप्य होता है वहाँ समानधर्म के द्वारा ही सामीप्य होता है फलतः मुखादि को समान धर्म के सहारे आंशिक रूप से चन्द्र के सदृश समझाने के लिए कवि का (मुखं चन्द्रसदृशं मनोज्ञत्वात् इत्यादि) मुख मनोज्ञता के कारण चन्द्र के सदृश है इत्यादि सदृश ज्ञापनरूप व्यापार होता है । और भावुक लोग सदृशज्ञान करते हैं । सदृशज्ञान एवं उपमान समानार्थक हैं यह आरम्भ में ही कह चुके है । अतः जब सदृशज्ञान व्यापार है तब उपमान भी व्यापार ही हुआ । इसी लिए दीक्षितजी ने व्यापार उपमानाख्यः लिखा है । आधार भेद के कारण धर्म में भेद और

इति स्वकृतसूत्रेऽलंकारभूतोपमाया एव लक्ष्यत्वेनाभिधानात्। अलंकारभूतोपमालक्षणंत्वेतदेवादुष्टाव्यङ्ग्यत्वविशेषितमिति तत्रैव पुनरभिधानाच्च। नह्यत्रोपमानोपमेयसादृश्यादुपमास्वरूपादस्ति कश्चिदतिरिक्तो वाक्यार्थः, येनोपमा तमलंकुर्यात्। नह्यत्राभेदप्रधानोत्प्रेक्षा शक्या वक्तुम्। कल्पितो-

## मधुसूदनी

इति चित्रमीमांसायां स्वकृतसूत्रम्। तत्रैव चित्रमीमांसायामुपमाप्रसंग एव द्विविधोपमालक्षणकथनोत्तरं पुनर्द्वितीयवारम्। एतदेव द्विविधमुपमासामान्यलक्षणमेव। एवं चात्र उपमासामान्यस्य लक्षणं नोपक्रान्तं येनानलंकारभूताऽपि सा गृह्येतेति भावः।

ननु मास्तु तथोपक्रमः। किन्तु स्तनाभोग इत्यत्र अनलंकारभूता उपमा कुत इत्यत आह-नहीति। अयं भावः। वाक्यार्थोपस्कारक एव अलंकार इति सिद्धान्तः। यदा यः अलंकारत्वेन विवक्षणीयः सः स्वयमेव वाक्यार्थरूपस्तदा कमन्यमलंकुर्यात्। एवञ्च स्तनाभोगे इत्यत्र अनलंकारभूतैव सा। उपमास्वरूपातिरिक्तवाक्यार्थस्याभावात्। एवमेव यत्र प्रधानतया व्यंग्यभूतोऽर्थस्तत्रापि सोऽलंकार्य एव। न हि सोऽन्यमलंकरोति ॥ इति ॥

ननु मास्तु प्रकृते तादृशी उपमा। उत्प्रेक्षैवास्तु तत आह—न हीति। तथा सति कल्पितोपमा निर्विषया स्यादित्यर्थः। यद्यपि मुख्यवाक्यार्थत्वेन इयमपि अनलंकारभूतेत्यन्यदेतत्, तथापि उत्प्रेक्षा नास्तीति।

## बालक्रीड़ा

समन्वयी होने के कारण उसमें अभेद होता है। इन धर्मगत भेद एवं अभेद के कारण उपमान; उपमेय के परिच्छेद में व्यापृत किया जाता है अतः यह व्यापार है। यहाँ यह प्रासंगिक है (उपमीयतेऽनेनेति उपमिति करणमुपमानम् सदृशज्ञानम्) कि उपमिति के करण का नाम सदृशज्ञान उपमान है। करण का स्वरूप है जो व्यापारवान् हो और असाधारण कारण हो। इस तरह दार्शनिकों की परिभाषा में उपमान करण है और व्यापार उस का अवान्तर अंग है किन्तु अप्पय्य दीक्षित जी ने उसे करण न मानकर सीधे व्यापार ही माना है।

इस अपने बनाये हुए सूत्र में अलंकारभूत उपमा को ही लक्ष्यत्वेन कथन किया है। क्योकि अलंकारभूत उपमा का लक्षण तो यही अदुष्टत्व और अव्यंग्यत्व विशेषणों से युक्त है ऐसा वहाँ पर ही पुनः कहा है - अतः यह अनलंकार भूत उपमा भी लक्ष्य है यह कहना ठोक नहीं है। क्योंकि उपमा सामान्य का लक्षण यहाँ उपक्रान्त नहीं है जिससे इसको भी समझा जाय।

अच्छा तो फिर इसे अलंकारभूत ही उपमा मान लीजिए। इसके उत्तर में कहते हैं कि यह बात नहीं है क्योंकि अलंकार वह होता है जो किसी दूसरे की अलंकृत करे। याने

पमाया निर्विषयत्वप्रसङ्गात् । अपि च लक्षणे सादृश्यविशेषणं निरर्थकम् । 'उपमितिक्रियानिष्पत्तिमद्वर्णनमुपमा' इत्येतावतैव स्वाभीष्टार्थलाभात् ।

### मर्मप्रकाशः

विशेषलक्षणेषु तदनिवेशेऽपि क्षत्यभाव इत्यत आह – अपि चेति । अत एव चित्रभूतोपमा-लक्षणं त्विति तैर्नोक्तम् । पूर्ववदस्यापि तात्पर्यग्राहकत्वादिदमपि चिन्त्यम् । अव्यङ्ग्यत्वं

### मधुसूदनी

ननु अलंकारत्वे सति, हृद्यत्वे सति इति विशेषणयोः सामान्यतः सर्वत्रालंकार लक्षणे निवेश्यत्वात् प्रकृतेऽपि ते प्राप्त एव । ततश्च इयमनलंकारभूतापि लक्ष्येति समाशंकितुमवसर एव नायाति । इति चेद् दूषणान्तरमुपन्यस्यति=अपि चेति । लक्षणे लक्षणगते वर्णने सादृश्यविशेषणं सादृश्येति विशेषणस्योपादानं निरर्थकं पुनरुक्तम् । यथा गोधूमोत्पत्तिक्रियानिष्पादकं वपनं गोधूमस्यैव नान्यस्य यवादेर्वपनम् । तथैव उपमितिक्रियानिष्पादकं वर्णनं सादृश्यस्यैव नान्यस्याभेदस्यापह्नुत्यादेर्वा वर्णनमस्ति । सादृश्यमुपमितिरित्यनर्थान्तरम् । ततश्च अर्थात्प्राप्तस्य शब्देन कथनं पुनरुक्तमेव निरर्थकमेवेत्यर्थः ।

अत्र मुद्रणदोषात् पाठक्रमो व्यत्यस्तः । सचेत्थं ग्राह्यः । वैयर्थ्यापत्तेरनन्तरं व्यापार उपमानाख्य इति । तदनन्तरं न ह्यत्रोपमानेति, ततो न ह्यत्राभेदेति, ततोऽपि चेति । यतः पूर्वं "स्तनाभोगे" इत्यत्रातिव्याप्तेरुत्थानम् ।

### बालक्रीड़ा

जो वाक्यार्थ का उपस्कारक हो वह अलंकार है । जो तो स्वयं ही मुख्यवाक्यार्थरूप है वह किसको अलंकृत करे ।

जैसे प्रकृत में यहाँ "स्तनाभोग" पद्य में उपमानोपमेय का सादृश्य जो कि उपमा का स्वरूप है उसके अतिरिक्त कौन वाक्यार्थ है जिस को उपमा अलंकृत करे । अतः अनलंकार भूता उपमा यहाँ है । फलतः अतिव्याप्ति दोष है ।

अगर कहें कि यहाँ उपमा नही है यहाँ तो अभेद प्रधान उत्प्रेक्षा है । तो ऐसा भी आप नहीं कह सकते । क्योंकि ऐसा मानने पर कल्पितोपमा ही समाप्त हो जायगी । यद्यपि मुख्य वाक्यार्थरूप होने से कल्पितोपमा भी अनलंकारभूता है इत्यन्यदेतत् । तथापि उत्प्रेक्षा नहीं है ।

प्रश्न—अलंकारत्वे सति हृद्यत्वे सति इन विशेषणों को सभी अलंकारों के लक्षणों में सामान्यतः जब अवश्य निवेश करना है और तदनुसार प्रकृत में भी वे विशेषण सामान्यतः प्राप्त हो जायँगे तब यह अनलंकार भूता भी यहाँ लक्ष्य है ऐसी शंका करने का अवसर ही नहीं आता है ।

समाधान—अपिच । यहाँ अपिच पद किन्तु के अर्थ में प्रयुक्त है । हाँ ठीक है । किन्तु ऐसा कहने पर लक्षण गत वर्णन पद में सादृश्य विशेषण का उपादान करना निरर्थक हो

इति विद्यानाथोक्तं लक्षणमपास्तम्। व्यतिरेके निषेधप्रतियोगिनि सादृश्येऽतिव्याप्तेः।

एवम्

### मर्मप्रकाशः

च तल्लक्षणे प्राधान्येनाव्यङ्ग्यत्वं बोध्यमिति दिक्। एवपदार्थमाह—व्यतीति। तवाननस्ये-

### मधुसूदनी

लब्धोऽभेदः कैरपि गुणपदार्थत्वेन संगृहीतः। ननु अभेद एकत्वं, तच्च संख्यारूपत्वाद् गुण इति चेद्। अहो मोहस्य माहात्म्यं यत्, तस्य भ्राता तस्य सखा तस्य पुत्र इतिवत् परम्परालब्धवस्तुनो गुणत्वमनुमोद्यते कण्ठरवेणोक्तं शब्दस्य गुणत्वं नानुमोद्यते प्रत्युत अपोह्यते।

ननु श्लेषपदेनात्र श्लिष्टविशेषणा अलंकाराः सम्मता इतिचेन्न। तर्हि स्पष्टं तदेवोच्यतामन्यथा अन्यद्भुक्तमन्यद्वान्तमिति न्यायः प्रसज्येत।

व्यतिरेके इति। व्यतिरेकघटके इत्यर्थः। निषेधस्य प्रतियोगिभूते सादृश्ये अलक्ष्ये उपमालक्षणस्य संगमादतिव्याप्तिः। यथा वाच्यमिति साम्यस्य विशेषणमुपात्तं तथा "निषेधाप्रतियोगि" इति च विशेषणं तस्यावश्यं निवेश्यमन्यथातिप्रसक्तिः स्यादिति भावः।

एवं विद्यानाथोक्तलक्षणवत्। विशेषणान्तरस्य पूर्वार्धोक्तयोरन्ययोर्विशेषणयोरुपमानोपमेयत्वयोग्ययोरित्यस्य द्वयोरर्थयोरित्यस्य च वैयर्थ्यात्। ननु स्वरूपकथनमिदं न तु लक्षणान्तःपातीति चेदस्तु। मास्तु वैयर्थ्यमिति भावः।

### बालक्रीड़ा

इस से श्लेष को हटाना मुश्किल है। वहाँ तक का दीक्षित जी का पराक्रम सहेतुक नहीं मालूम पड़ता है अतः चिन्तनीय है। क्योंकि "सर्वदो माधवः पायाद् यो गंगां समदीधरत्" इत्यादि श्लेष में कहीं पर भी किसी भी विद्वान् ने माधव एवं उमाधव में विशेषणों के श्लिष्ट होने पर भी अभेदाध्यवसाय स्वीकृत नहीं किया है और न श्लेष के कारण अभेदाध्यवसाय से लब्ध अभेद को किसी ने गुण पदार्थ ही माना है।

अरे भाई! सुनिये तो सही। अभेद माने एकत्व। और वह एकत्व संख्यारूप है अतः गुण है। अहो यह सब मोह का प्रभाव है। उसका भाई। उस भाई का सखा और उस सखा का पुत्र इस वाक्य की तरह परम्परा लब्ध वस्तु को तो गुण माना जाय और आचार्य ने कण्ठ रव से जिस शब्द को गुण कहा उस को गुण मानना दूर रहा। प्रत्युत छियाया जा रहा है। अगर कहें कि श्लेष पद से यहाँ श्लेषमूलक अलंकार माने तो है स्पष्ट करना चाहिए। अन्यथा खाया कुछ और वमन किया कुछ और वाली कहावत हो जायगी।

इस प्रकार विद्यानाथ का कहा हुआ लक्षण भी अपास्त हुआ। व्यतिरेकालंकार में

'उपमानोपमेयत्वयोग्ययोरर्थयोर्द्वयोः ।
हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभिः' ॥

इति प्राचामपि लक्षणं प्रत्युक्तम् । हृद्यतामात्रेण निर्वाहे विशेषणान्तरवैयर्थ्यात् । एवं काव्यप्रकाशोक्तमपि 'साधर्म्यमुपमा भेदे' इति लक्षणं नातीव रमणीयम्; व्यतिरेके निषेधप्रतियोगिनि सादृश्येऽतिव्यापनात् । न च पर्यवसितत्वेन साधर्म्यं विशेषणीयमिति वाच्यम् । अनन्वयस्थसादृश्यस्यापर्यवसायित्वेनैव वारणे भेदविशेषणवैयर्थ्यापत्तेः । काव्यालंकारप्रस्तावे

### मर्मप्रकाशः

त्यादावित्यर्थः । एवमग्रेऽपि यथासंभवम् । एवमर्थमाह—हृद्यतेति । ननु तत्रैव तात्पर्यग्राहकं तदत आह—काव्येति ।

### मधुसूदनी

पर्यवसितत्वेनेति । "पर्यवसितसाधर्म्यमुपमा भेदे" इति लक्षणाकारः । एवं हि यत्र साधर्म्यस्य पर्यवसानं सोपमेति स्वीकारेण व्यतिरेके साधर्म्यस्य निषेधादपर्यवसितत्वेन वारणेऽपि भेदग्रहणं व्यर्थम् । यतो हि अभेदे तस्य पर्यवसानं न भवति भेदे एव तत् । तथा च तेनैव तस्यापि वारणादित्याशयेनाह—अनन्वयस्येति ।

ननु न मया पर्यवसितत्वं निवेश्यते केवलमुपमायाः सामान्यं लक्षणमुच्यत इत्यत्राह-काव्येति ।

### बालक्रीड़ा

निषेधप्रतियोगी सादृश्य में यह लक्षण अतिव्याप्त हो जाता है । उपमानत्व एवं उपमेयत्व के योग्य दो अर्थों में हृद्य साधर्म्य उपका है—ऐसा काव्य के विद्वान् कहते हैं यह प्राचीनों का लक्षण प्रत्युक्त है । साधर्म्य में केवल हृद्य विशेषण से ही निर्वाह हो जाता है तब विशेषणान्तर व्यर्थ है ऐसी आपत्ति लगजायगी । इस प्रकार काव्य प्रकाश में कहा हुआ भी भेद रहने पर समान धर्मप्रयोज्य सम्बन्ध उपमा है । यह लक्षण अतीव रमणीय नहीं है । क्योंकि यह लक्षण व्यतिरेक घटक निषेधप्रतियोगी अलक्ष्य सादृश्य में अतिव्याप्त हो जाता है । यह नहीं कहना चाहिए कि साधर्म्य को पर्यवसितत्व विशेषण से युक्त कर दिया जायगा । अर्थात् पर्यवसितसाधर्म्य ही उपमा है यह उपमालक्षण मान लिया जाय । क्योंकि जब अनन्वय के अपर्यवसित सादृश्य का अपर्यवसितत्व विशेषण से ही वरण हो जायगा तब भेद विशेषण देना व्यर्थ ही हो जायगा । यहाँ का आशय यह है कि अभेद में भेदाधिष्ठान सादृश्य का पर्यवसान नहीं होता है उसका पर्यवसान भेद ही में होता है । अतः पर्यवसितत्व विशेषण से ही वारण हो जायगा भेद ग्रहण व्यर्थ ही है ।

अगर कहें कि मैंने तो उपमा सामान्य का लक्षण कहा है । तब भी ठीक नहीं । क्योंकि जब काव्य के अलंकारों का प्रस्ताव है उस समय लौकिक, अलौकिक, प्रधान, वाच्य

एवम्

'स्वतःसिद्धेन भिन्नेन संमतेन च धर्मतः।
साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा' ॥

## मधुसूदनी

ततः उपमासामान्यनिरूपणप्रस्तावात्तस्या अपि लक्ष्यत्वस्वीकारः। वैयर्थ्यापत्ति-कथनेन तस्य निरासः। ततो व्यापार उपमानाख्य इत्यनेन उपमासामान्यनिरूपण-प्रस्तावाभावप्रदर्शनं, पुनः कथितातिव्याप्तेः नह्यत्रोपमानेति वाक्येन दृढीकरणं, तत उपमां स्वीकृत्योत्प्रेक्षेति कथनं, तन्निरासश्च। ततः प्रकारान्तरेण उपमालक्षणखण्डन-मिति संगतः क्रमः। अन्यथा असंगतिः स्पष्टा एवेति बोध्यम्।

एवमप्पय्यदीक्षितोपज्ञचित्रमीमांसानिदर्शितोपमालक्षणवत्।

स्वतः सिद्धेनेति। अत्र स्वतः सिद्धेनेत्यनेन कल्पितोपमायाः व्यावृत्तिः। तस्या-मुपमानं स्वतः सिद्धं नास्ति अतएव तस्याः सर्वमते उपमान्तर्भावो नास्ति। स्वतः सिद्धेनेत्युत्प्रेक्षाव्यावृत्तिरिति न समीचीनम्। उपमानस्य स्वतः सिद्धत्वाभावे कल्पित-त्वे एव उत्प्रेक्षा नहि भवति यावदिवस्य संभावनापरत्वं न स्यात्। तस्य तत्परत्वा-भावादेव कल्पितोपमाना कल्पितोपमा उत्प्रेक्षातः पृथगेव सर्वैराचार्यैः स्वीकृता।

भिन्नेनेति अनन्वयनिरासः। अभेदे हि भेदाधिष्ठानस्य सादृश्यस्यासंस्पर्शान्नो-

## बालक्रीड़ा

जायगा। माने पुनरुक्त हो जायगा। जैसे गेहूँ की पैदाइस के लिए गेहूँ को ही बोया जाता है दूसरे जो, तिल या धान नहीं बोये जाते। उसी प्रकार उपमितिक्रिया की निष्पत्ति के लिए उपमिति माने सादृश्य ही का वर्णन किया जायगा, संभावना वगैरह का नहीं। अतः अर्थात् प्राप्त को शब्द से कहना पुनरुक्त ही होता है। क्योंकि उपमिति और सादृश्य दोनों शब्द पर्याय शब्द हैं।

यहाँ मुद्रण दोष से पाठ में कुछ हेर फेर हो गया है। अतः यहाँ ऐसा संगत पाठ है "वैयर्थ्यापत्तेः" के बाद "व्यापार उपमानाख्यः" यह पाठ; उसके बाद "नह्यत्रोपमान" यह पाठ, इस के बाद "नह्यत्राभेद" यह पाठ, इसके बाद "अपि च" यह पाठ होना चाहिए। क्योंकि लक्ष्य बहिर्भूत अनलंकार उपमा में लक्षण की व्याप्ति दिखाना, उपमा सामान्य कथन प्रस्ताव के अनुसार यह भी लक्ष्य है यह अवान्तर समाधान, उसके बाद ध्वन्यमानोपमानिवारण प्रयास का व्यर्थतारूप मुख्यसमाधान और उपमासामान्य लक्षण प्रस्ताव नहीं है यह दिखाना, पुनः अतिव्याप्ति को दृढ़ करने के लिए उपमास्वरूप के अतिरिक्त अलंकरणीय वाक्यार्थ के अभाव को दिखाना; उस के बाद स्तनाभोगे में उपमा मानने से ही यह दोष है अतः अभेद प्रधाना उत्प्रेक्षा मान ली जाय की आशंका और उसका समाधान। उसके बाद अपाप्यत्यदीक्षितोक्त उपमा लक्षण का प्रकारान्तर से खण्डन। यह पाठ का संगत क्रम है। अन्यथा असंगति स्पष्ट ही है।

## मधुसूदनी

पमानोयमेयभाव इति तत्त्वम्। संमतेनेति सर्वविधदुष्टोपमाव्यावृत्तिः।

धर्मतः इति। अत्र धर्मपदेन गुणः, क्रिया, शब्दोऽभावश्च। तथा हि स्फुटमर्थालंकारावेतावुपमासमुच्चयौ किन्तु। आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः। इत्यत्र केवलस्य शब्दस्यापि साधारणधर्मत्वोक्तेः शब्दोऽपि गृह्यते। धर्मत इति पंचम्याः प्रयोज्यत्वमर्थः। तया च धर्मप्रयोज्यं साम्यमित्यन्वयः। यद्यपि नैयायिकमते शब्दस्य गुणत्वात् शब्दसाम्यमपि गुणसाम्येन परिगृहीतं शक्यं तथापि गोबलीवर्दन्यायेन पृथगुच्यते।

धर्मत इति श्लेषव्यावृत्तिरिति मूलग्रन्थोक्तिः। श्लेषव्यावृत्यर्थं धर्मत इति विशेषणमप्ययुक्तमित्यारभ्य तस्माद् धर्मत इत्यनेन न श्लेषो व्यावर्त्तयितुं शक्यते इत्यन्तो दैक्षितः पराक्रमः किंहेतुक इति चिन्त्यमेव। यतो हि कुत्रापि श्लेषे सर्वदो माधवः पायाद्यो गंगां समदीधरदित्यादौ माधवोमाधवयोः विशेषणानां श्लिष्टत्वेऽपि नाभेदाध्यवसायः कैश्चिदपि विद्वद्भिरुहितः, समादृतो वा। न च श्लेपभित्तिकाभेदाध्यवसाय-

## बालक्रीड़ा

यहाँ स्वतः सिद्धेन इस विशेषण से कल्पितोपमा की व्यावृत्ति होती है। क्योंकि इस में उपमान स्वतः सिद्ध नहीं है किन्तु कविकल्पित है अतएव उसका उपमा में अन्तर्भाव नहीं है यह भी कई आचार्यो का मत है। यह किसी का कहना कि "स्वतः सिद्धेन इस विशेषण से उत्प्रेक्षा की व्यावृत्ति हो जाती है" वह समीचीन नहीं है। क्योंकि उपमान के स्वतः सिद्ध न होने पर या कल्पित होने पर ही उत्प्रेक्षा नहीं होती किन्तु जब तक इव शब्द सम्भावना परक नहीं होगा तब तक उत्प्रेक्षा नहीं होगी। इव के संभावना बोधक होने पर ही उत्प्रेक्षा होती है। इसी का फल है कि जहां उपमान कल्पित है वह कल्पितोपमा उत्प्रेक्षा से पृथक ही अलंकार मानी है।

"भिन्नेन" विशेषण से अनन्वय का निरास हो गया। क्योंकि अभेद में वही यह है ऐसी बुद्धि होती है अतः वहाँ भेदघटित सादृश्य का अत्यन्त ही अभाव है। अत एव उपमानोमेयभाव नहीं बनता है।

"धर्मतः" यहाँ धर्म पद से गुण, क्रिया, अभाव एवं शब्द का ग्रहण है। रुद्रट एवं सभी आचार्यों ने शब्द मात्र को साधारण धर्म मानकर उपमा को स्वीकार किया है इसलिए शब्द भी धर्म हो सकता है। यद्यपि चतुर्विंशति गुणों में शब्द का पाठ है अतः धर्म पद से गुण को ग्रहण करलेने से शब्द का ग्रहण स्वतः प्राप्त है तथापि गोबलीवर्द न्याय से शब्द का पृथक् निर्देश किया गया है।

धर्मतः इस पंचमी का प्रयोज्यत्व अर्थ है अतः धर्मप्रयोज्य साम्य यह अन्वय होता है।

धर्मतः इससे श्लेष की व्यावृति होती है यह मूल ग्रन्थकार का कथन, और श्लेष की व्यावृत्ति के लिए धर्मतः यह विशेषण भी अयुक्त है यहाँ से आरम्भ कर के; इस लिए धर्मतः

इति विद्यानाथोक्तं लक्षणमपास्तम् । व्यतिरेके निषेधप्रतियोगिनि सादृश्येऽतिव्याप्तेः ।

एवम्

### मर्मप्रकाशः

च तल्लक्षणे प्राधान्येनाव्यङ्ग्यत्वं बोध्यमिति दिक् । एवपदार्थमाह—व्यतीति । तवाननस्ये-

### मधुसूदनी

लब्धोऽभेदः कैरपि गुणपदार्थत्वेन संगृहीतः । ननु अभेद एकत्वं, तच्च संख्यारूपत्वाद् गुण इति चेद् । अहो मोहस्य माहात्म्यं यत्, तस्य भ्राता तस्य सखा तस्य पुत्र इतिवत् परम्परालब्धवस्तुनो गुणत्वमनुमोद्यते कण्ठरवेणोक्तं शब्दस्य गुणत्वं नानुमोद्यते प्रत्युत अपोह्यते ।

ननु श्लेषपदेनात्र श्लिष्टविशेषणा अलंकाराः सम्मता इतिचेन्न । तर्हि स्पष्टं तदेवोच्यतामन्यथा अन्यद्भुक्तमन्यद्वान्तमिति न्यायः प्रसज्येत ।

व्यतिरेके इति । व्यतिरेकघटके इत्यर्थः । निषेधस्य प्रतियोगिभूते सादृश्ये अलक्ष्ये उपमालक्षणस्य संगमादतिव्याप्तिः । यथा वाच्यमिति साम्यस्य विशेषणमुपात्तं तथा "निषेधाप्रतियोगि" इति च विशेषणं तस्यावश्यं निवेश्यमन्यथातिप्रसक्तिः स्यादिति भावः ।

एवं विद्यानाथोक्तलक्षणवत् । विशेषणान्तरस्य पूर्वार्धोक्तयोरन्ययोर्विशेषणयोरुपमानोपमेयत्वयोग्ययोरित्यस्य द्वयोरर्थयोरित्यस्य च वैयर्थ्यात् । ननु स्वरूपकथनमिदं न तु लक्षणान्तःपातीति चेदस्तु । मास्तु वैयर्थ्यमिति भावः ।

### बालक्रीड़ा

इस से श्लेष को हटाना मुश्किल है । वहाँ तक का दीक्षित जी का पराक्रम सहेतुक नहीं मालूम पड़ता है अतः चिन्तनीय है । क्योंकि "सर्वदो माधवः पायाद् यो गंगां समदीधरत्" इत्यादि श्लेष में कहीं पर भी किसी भी विद्वान् ने माधव एवं उमाधव में विशेषणों के श्लिष्ट होने पर भी अभेदाध्यवसाय स्वीकृत नहीं किया है और न श्लेष के कारण अभेदाध्यवसाय से लब्ध अभेद को किसी ने गुण पदार्थ ही माना है ।

अरे भाई ! सुनिये तो सही । अभेद माने एकत्व । और वह एकत्व संख्यारूप है अतः गुण है । अहो यह सब मोह का प्रभाव है । उसका भाई । उस भाई का सखा और उस सखा का पुत्र इस वाक्य की तरह परम्परा लब्ध वस्तु को तो गुण माना जाय और आचार्य ने कण्ठ रव से जिस शब्द को गुण कहा उस को गुण मानना दूर रहा । प्रत्युत छिपाया जा रहा है । अगर कहें कि श्लेष पद से यहाँ श्लेषमूलक अलंकार माने तो है स्पष्ट करना चाहिए । अन्यथा खाया कुछ और वमन किया कुछ और वाली कहावत हो जायगी ।

इस प्रकार विद्यानाथ का कहा हुआ लक्षण भी अपास्त हुआ । व्यतिरेकालंकार में

'उपमानोपमेयत्वयोग्ययोरर्थयोर्द्वयोः ।
हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभिः' ॥

इति प्राचामपि लक्षणं प्रत्युक्तम् । हृद्यतामात्रेण निर्वाहे विशेषणान्तरवैयर्थ्यात् । एवं काव्यप्रकाशोक्तमपि 'साधर्म्यमुपमा भेदे' इति लक्षणं नातीव रमणीयम्; व्यतिरेके निषेधप्रतियोगिनि सादृश्येऽतिव्यापनात् । न च पर्यवसितत्वेन साधर्म्यं विशेषणीयमिति वाच्यम् । अनन्वयस्थसादृश्यस्यापर्यवसायित्वेनैव वारणे भेदविशेषणवैयर्थ्यापत्तेः । काव्यालंकारप्रस्तावे

### मर्मप्रकाशः

त्यादावित्यर्थः । एवमग्रेऽपि यथासंभवम् । एवमर्थमाह—हृद्यतेति । ननु तत्रैव तात्पर्यग्राहकं तदत आह—काव्येति ।

### मधुसूदनी

पर्यवसितत्वेनेति । "पर्यवसितसाधर्म्यमुपमा भेदे" इति लक्षणाकारः । एवं हि यत्र साधर्म्यस्य पर्यवसानं सोपमेति स्वीकारेण व्यतिरेके साधर्म्यस्य निषेधादपर्यवसितत्वेन वारणेऽपि भेदग्रहणं व्यर्थम् । यतो हि अभेदे तस्य पर्यवसानं न भवति भेदे एव तत् । तथा च तेनैव तस्यापि वारणादित्याशयेनाह—अनन्वयस्येति ।

ननु न मया पर्यवसितत्वं निवेश्यते केवलमुपमायाः सामान्यं लक्षणमुच्यत इत्यत्राह-काव्येति ।

### बालक्रीड़ा

निषेधप्रतियोगी सादृश्य में यह लक्षण अतिव्याप्त हो जाता है । उपमानत्व एवं उपमेयत्व के योग्य दो अर्थों में हृद्य साधर्म्य उपका है—ऐसा काव्य के विद्वान् कहते हैं यह प्राचीनों का लक्षण प्रत्युक्त है । साधर्म्य में केवल हृद्य विशेषण से ही निर्वाह हो जाता है तब विशेषणान्तर व्यर्थ है ऐसी आपत्ति लगजायगी । इस प्रकार काव्य प्रकाश में कहा हुआ भी भेद रहने पर समान धर्मप्रयोज्य सम्बन्ध उपमा है । यह लक्षण अतीव रमणीय नहीं है । क्योंकि यह लक्षण व्यतिरेक घटक निषेधप्रतियोगी अलक्ष्य सादृश्य में अतिव्याप्त हो जाता है । यह नहीं कहना चाहिए कि साधर्म्य को पर्यवसितत्व विशेषण से युक्त कर दिया जायगा । अर्थात् पर्यवसितसाधर्म्य ही उपमा है यह उपमालक्षण मान लिया जाय । क्योंकि जब अनन्वय के अपर्यवसित सादृश्य का अपर्यवसितत्व विशेषण से ही वारण हो जायगा तब भेद विशेषण देना व्यर्थ ही हो जायगा । यहाँ का आशय यह है कि अभेद में भेदाधिष्ठान सादृश्य का पर्यवसान नहीं होता है उसका पर्यवसान भेद ही में होता है । अतः पर्यवसितत्व विशेषण से ही वारण हो जायगा भेद ग्रहण व्यर्थ ही है ।

अगर कहें कि मैंने तो उपमा सामान्य का लक्षण कहा है । तब भी ठीक नहीं । क्योंकि जब काव्य के अलंकारों का प्रस्ताव है उस समय लौकिक, अलौकिक, प्रधान, वाच्य

लौकिकालौकिकप्रधानवाच्यव्यङ्ग्योपमासामान्यलक्षणकरणानौचित्याच्च। अत एव 'भेदाभेदतुल्यत्वे साधर्म्यमुपमा' इत्यलंकारसर्वस्वोक्तमपि लक्षणं तथैव। एवं 'प्रसिद्धगुणेनोपमानेनाप्रसिद्धगुणस्योपमेयस्य सादृश्यमुपमा' इत्यलंकाररत्नाकरोक्तमपि न भव्यम्। श्लेषमूलकोपमायां तादृशशब्दात्मकस्य धर्मस्य

## मर्मप्रकाशः

अत एवेति। प्रकाशग्रन्थे। उक्तदोषगणादेवेत्यर्थः। तथैव नातीव रमणीयमित्यर्थः। एवमिति। व्यतिरेकेऽतिव्यापनादित्यर्थः। ननु पर्यवसितत्वेन विशेषणान्न दोषोऽत आह—श्लेषेति।

## मधुसूदनी

भेदाभेदेति। अत्यन्ताभेदे स एवायमिति बुद्धेः कारणात् भेदाधिष्ठानस्य सादृश्यस्यासम्भव एव। अत्यन्तभेदे त्वन्यदेवेति रीत्या अन्वयिनो रूपस्याभावेनापि सादृश्यस्याभाव इति भेदाभेदविमर्शेन द्वयोस्तुल्यत्वे भेदाभेदोभयसम्भिन्नतायामयमेतत्सदृश इति बुद्धिर्जायते ततः साधर्म्यमुपमेति लक्षणं तथैव काव्यप्रकाशीयलक्षणवत् दोषग्रस्तमेव।

प्रसिद्धेति। प्रसिद्धेनाप्रसिद्धस्य सादृश्यमुपमा मतेति तदुक्तलक्षणस्वरूपं प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमिति न्यायसूत्रानुसारं बोध्यम्। इदमपि लक्षणं न भव्यं, तत्र भव्यत्वाभावे हेतुमाह=श्लेषेति। सकलकलं पुरमेतज्जातं सम्प्रति सुधां-

## बालक्रीड़ा

एवं व्यंग्य सभी उपमाओं का लक्षण कहना अनुचित है।

अत एव काव्यप्रकाशीय लक्षण के दोषग्रस्त होने से ही "भेदाभेद की तुल्यता में साधर्म्य उपमा है" यह अलंकारसर्वस्वकार का कहा हुआ भी लक्षण उसी प्रकार दोषग्रस्त है। यहाँ का आशय यह है कि अत्यन्त अभेद में "वही यह है" ऐसी वुद्धि होती है अतः भेदाधिष्ठान सादृश्य का सर्वथा असम्भव है। अत्यन्त भेद में दूसरा ही यह है उस रीति से जब दो पदार्थों में अन्वय ही नहीं होगा तब उनमें सादृश्य कैसा। हाँ अंशेन भेद भी हो और अंशन अभेद भी हो तब भेद अभेद दोनों के मिश्रण में यह इसके सदृश है यह बुद्धि जहाँ हो वह साधर्म्य उपमा है। यह काव्यप्रकाशीय लक्षण की तरह दोषग्रस्त है।

प्रसिद्ध गुण वाले उपमान के साथ अप्रसिद्ध गुणवाले उपमेय का सादृश्य उपमा है यह अलंकार रत्नाकर में कहा हुआ लक्षण भी भव्य नहीं है क्योंकि संप्रति यह पुर चन्द्रविम्ब की तरह सकलकल हो गया है। इस श्लेष मूलक उपमा में सम्पूर्ण कलाएँ एवं कलकल सहितत्व रूप अर्थ के बोधक सकलकल इस श्लिष्ट शव्दात्मक साधारणधर्म की कल्पना कवि ने ही की है क्योंकि चन्द्रमा उस तरह के श्लिष्ट शब्द रूप गुण वाले रूप से प्रसिद्ध नहीं है।

इस प्रकार उपमा के लक्षण में सन्निविष्ट पदों के कृत्य याने फल दिखाते हुए पण्डित

कविनैव कल्पनात् तेन रूपेणोपमानस्याप्रसिद्धेश्च इत्यलं परकीयदूषणगवेषणया। प्रकृतमनुसरामः।

### मधुसूदनी

शुबिम्बमिवेति श्लेषमूलकोपमायाम्। तादृशेति। कलासाकल्यकलकलसहितत्वरूपार्थबोधकस्य सकलकलेति श्लिष्टशब्दात्मकस्य। कल्पनात् उद्भावनात् श्लिष्टशब्दरूपो धर्मः प्रसिद्धो नास्ति इत्यर्थः। तेन रूपेण श्लिष्टशब्दात्मकगुणवत्त्वेन रूपेण उपमानस्य सुधांशुबिम्बस्याप्रसिद्धेरपि। चकारोऽप्यर्थः।

इत्येवमुपमालक्षणपदकृत्यं निर्दिशन् पण्डितराजः परेषां तल्लक्षणं समालोच्यापि असन्तुष्यन्नाह=इत्यलमिति। अन्यदपि समालोच्यमस्ति परमेतावतैवालमिति। परकीयदूषणानां गवेषणा न कार्येति भावः।

इदन्तु बोध्यम्। स्वनिर्मिते अलंकारकौस्तुभे विश्वेश्वरपण्डितो महानैयायिकः अप्पय्यदीक्षितान् पण्डितराजञ्च समालोचयन् गजनिमीलिकां समाचचार तत्र प्रतिविधीयते। यत् स आह—तत्रेदं चिन्त्यम्। इदं पण्डितराजोक्तं चिन्त्यं विचार्यम्। किन्तदाह "स्तनाभोग"—इत्युत्प्रेक्षैव, उक्तविधोरगस्याप्रसिद्धेरिति। उक्तविधोरगस्य चन्द्रबिम्बापादानकमेर्वधिकरणकलम्बमानत्वविशिष्टोरगस्य अप्रसिद्धेरिति हेतुना उत्प्रेक्षैवेति भवता साध्यते। यदा पुनरयं (मुपमानांशः) लोकादसिद्धः कविकल्पितः। तदोत्प्रेक्षैवेति चक्रवर्त्तिनोक्तं हृदि निधाय। तत्रोच्यते। लोकादसिद्धः कविकल्पित इत्येवांशः भवता उपर्युपरि धावता दृष्टः परं "येनेवशब्दः संभावनापरः" इत्यंशो नालोचितः। उपमानांशस्य लोकादसिद्धत्वे सति कविकल्पितत्वेपि तदैव उत्प्रेक्षा स्यात् यदा इवशब्दस्य सम्भावनापरत्वं स्यादन्यथा तु सम्भावनापरत्वाभावे तु उत्प्रेक्षा न भवति किन्तूपमेति; अत एव संभावनमुत्प्रेक्षेति सकलालंकारिकसिद्धान्तः। यदा तु उपमानांशस्य तथाभूतत्वेऽपि इवशब्दस्य सादृश्यवाचकत्वं तदोपमैव नोत्प्रेक्षेति च तेषां राद्धान्तः। अत एव कल्पितोपमानामक उपमातः पृथगलंकार इति अलंकाररत्नाकरकारादीनां मतमन्येषां तूपमैव न तूपमातः पृथगिति। एवं स्थितौ कथमत्र

### बालक्रीड़ा

राज औरों के लक्षण की समालोचना करके भी संतुष्ट नहीं हुए अतः कहते हैं कि और भी समालोचनीय अंश अभी अवशिष्ट है किन्तु इतनी ही समालोचना पर्याप्त है। दूसरों के दोषों की खोज करना अब ठीक ही है।

यह एक समझने की वस्तु है कि महानैयायिक पं० विश्वेश्वर जी पार्वतीय उद्भट विद्वान् हुए हैं। उन्होंने अपने बनाए हुए अलंकार कौस्तुभ नामक ग्रंथ में अप्यप्य दीक्षित एवं पण्डितराज की समालोचना की है। उसकी प्रति समालोचना यहाँ दिखाते हैं। जैसा कि उन्होंने कहा है कि=यहाँ पर पण्डितराज का कथन विचारणीय है कि स्तनाभोगे इस पद्य में कल्पितोपमा है। किन्तु यहाँ उत्प्रेक्षा ही है। क्योंकि उस प्रकार का उरग अप्रसिद्ध है।

## मधुसूदनी

स्तनाभोगपद्ये उत्प्रेक्षा। किमत्रेवशब्दः संभावनापरः। न हि कश्चिदनुन्मतः तथा कथयिष्यति। सादृश्यवाचकत्वे संभावनावाचकत्वाभावे तु इवशब्दस्य उपमैव।

भवतापि कल्पितोपमाया निर्विषयत्वापत्तिवारणाय सिद्धान्तितं यत् "उपमानतावच्छेदकविशिष्टस्योपमानत्वेनाभिमतस्याप्रसिद्धौ तदुपमानत्वकल्पनस्य कल्पितोपमाविषयत्वादिति" तद्रीत्या उक्तविधोरगस्याप्रसिद्धौ तदुपमानत्वकल्पनं कृतं, सादृश्यवाचकतया च संभावनापरत्वमपीवशब्दस्य नास्ति इति कल्पितोपमात्र-निर्विवादा।

यच्च अत एव सर्वत्र "उद्गर्भहूणरमणी" इत्यादिकमेव तदुदाहरणं लिखितमिति तु हास्यास्पदमेव। केनापि लिखितं दृष्ट्वैव मनुते, नवीनतयोद्भवनं न कुरुते। अहो परकीयदूषणचिन्तनदुराग्रहः।

यद्यपि अन्यथा मदुक्तनियमास्वीकारे "न नित्यमस्मिन् परिपूर्णता" इत्यादीनामप्युत्प्रेक्षात्वभंगापत्तेरिति। तदपि अविचारितमेव। चेदत्रोत्प्रेक्षा स्यात्, नियमास्वीकारे उत्प्रेक्षा न भवेत्तदा तद्भंगापत्तिदूषणं स्यात्। क्षोणीतलावतीर्णत्वविशिष्टस्य उपमानत्वेनाभिमतस्य अप्रसिद्धौ तादृशस्येन्दोरुपमानत्वं कविना कल्पितमिति भवदुक्त नियमं स्वीकृत्यैव ब्रूमः। अत्रोपमैवास्ति। उत्प्रेक्षा नास्ति इति भवानपि स्वीकरोति

## बालक्रीड़ा

इस पर हमारा कहना है कि "आपने यदा पुनरयं (उपमानांशः) लोकादसिद्धः कविकल्पितः तदोत्प्रेक्षैव" इस चक्रवर्ती के पूरे श्लोक के आधे ही अंश को मन में रख कर यहाँ चन्द्रबिम्ब से मेरु पर्वत के ऊपर लम्बमान उरग की अप्रसिद्धि के कारण उत्प्रेक्षा मानते हैं वह ठीक नहीं है। क्योंकि (येन इव शब्दः संभावना परः) कविकल्पित उपमानांश स्थल में उत्प्रेक्षा क्यों होती है उसके लिए सिद्धान्त स्थिर करते हैं कि उसका कारण है कि जहाँ पर इव शब्द संभावना परक है वहाँ ही उत्प्रेक्षा होती है। यदि वह इव संभावना बोधक नहीं है उस अवस्था में वहाँ उपमा ही होता है उत्प्रेक्षा नहीं इसी लिए कल्पितोपमा नाम का एक उपमा से पृथक् अलंकार, अलंकार रत्नाकर प्रभृति ने माना है। औरों के मत में वह उपमा ही हैं। ऐसी स्थिति में स्तनाभोगे इस में उत्प्रेक्षा कैसे। क्या वहाँ इव शब्द सम्भावना परक है। सावधान, पुरुष ऐसा नहीं कह सकता। कोई उन्मत्त कहे तो उसका कोई मूल्य नहीं है। जब संभावना परक नहीं है और सादृश्य वाचक है तब कोई हेतु नहीं है कि स्तना भोग में उत्प्रेक्षा मानी जाय। अतः सिद्धान्त है कि यहाँ उपमा ही है।

आपने भी कल्पितोपमा की निर्विषयत्वापत्ति को वारण करने के लिए सिद्धान्त किया है कि जो उपमानत्वेन अभिमत पदार्थ है वह यदि उपमानतावच्छेदक से विशिष्ट होकर प्रसिद्ध नहीं हो तब उपमानत्व की कल्पना करते हैं अर्थात् जहाँ कल्पित उपमानतावच्छेदक से विशिष्ट उसको बनाया जाय वहाँ कल्पितोपमा कही जाती है। इस के अनुसार उक्तविध उरग के अप्रसिद्ध होने के कारण उस उरग में उपमानत्व की कल्पना की ओर इव

## मधुसूदनी

यतः एतत्समनन्तरपंक्तौ "अभ्युपेत्यापि ब्रूमः इति लिखति। न नित्यमिति स्तनेति पद्ये उपमैव नोत्प्रेक्षा इति अभ्युपेत्य स्वीकृत्यापि दूषणान्तरं ब्रूम इत्येव भवदुक्तस्यार्थः। उक्तमपि भवता दूषणान्तरं, प्रकृतं स्वीकृत्येत्यपि सर्वसमक्षम्।

अन्यच्च चन्द्रबिम्बादिव विषमित्यत्र या कथा सैव कथा "स्तनाभोगे" इत्यत्रापि वर्त्तते। तथाहि—यथा चन्द्रबिम्बाद्विषमसंभावितम्। यथा चन्दनादग्निरसंभावितः, तथा त्वन्मुखात् परुषा वागसंभावितेति। एवमेव यथा शशांकबिम्बतो मेरौ लम्बमान उरगो भाति तथा कपोलात् पतन्नलको भातीति। को हेतुः चन्द्रेति पद्ये उपमा; स्तनेति पद्ये उत्प्रेक्षा। तद्रूपेण उपमानत्वकल्पनमुभयत्र समानं बिम्बप्रतिबिम्बभावश्च समानः। संभावनापरत्वाभावपुरःसरं सादृश्यवाचकत्वमपि इवशब्दस्य समानम्। हेतुमन्तरा प्रतिज्ञावाक्येन नार्थसिद्धिस्तस्मात् स्तनेति पद्ये उत्प्रेक्षैवेति कथनमलंकारमर्मानभिज्ञतानिदर्शनम्।

## बालक्रीड़ा

के सादृश्यवाचक होने के बदौलत संभावनापरत्व भी नहीं है तब प्रकृत में कल्पितोपमा निर्विवाद है।

और जो आपने कहा कि इसीलिए सभी आचार्यों ने अपने ग्रंथों में सभी जगह "उद्गर्भ हूणरमणीलपनोपमान" यही उदाहरण दिया है दूसरा उदाहरण नहीं दिया है यह तो अतीव हास्यास्पद है। क्योंकि परवर्त्ती पण्डितराज के उदाहरण को पूर्ववर्ती कैसे लिखते। और किसी के लिखे हुए को देखकर आप मानते हैं अपने विचार से नवीन उद्भावन करने की क्षमता को प्रकट नहीं करते हैं, अहो दूसरे के दोषों को खोजने में कितना दुराग्रह है।

और भी जो आपने कहा कि मेरे बतलाए हुए नियम को नहीं मानेंगे तब "न नित्य मस्मिन् परिपूर्णतेति पद्य में उत्प्रेक्षा के भंग होने की आपत्ति लग जायगी। यह भी अविचारित कथन ही है। क्योंकि यहाँ उत्प्रेक्षा हो और भवदुक्त नियम के न स्वीकार करने पर उत्प्रेक्षा भग्न होती हो तब तद्भंगापत्ति रूप दोष होगा। किन्तु यहाँ तो उपमानत्वेन अभिमत राजा की क्षोणीतलावतीर्णत्वविशिष्ट इन्दु के रूप में प्रसिद्धि नहीं थी अतः तद्रूप से उपमानत्व की कल्पना की गई है अतः भवदुक्त नियम को स्वीकार करके ही हम कहते हैं कि यहाँ उपमा ही है, उत्प्रेक्षा नहीं है। और आप ने भी यहाँ उत्प्रेक्षा न मानकर उपमा ही मानी है। क्योंकि इसी के आगे वाली पंक्ति में आपने लिखा है कि (अभ्युपेत्यापि ब्रूमः) उपमा ही है उत्प्रेक्षा नहीं है इस को स्वीकार करके ही दूषणान्तर को कहते हैं। और दूषणान्तर को कहा भी है। अतः वह अविचारित है यह हमारा कहना दुरुस्त है।

और भी बात है कि जो कथा "चन्द्राबिम्बादिव विषम्" पद्य में है वही कहानी स्तनोभोगे में भी है। जैसे बताते हैं कि चन्द्रबिम्ब से जैसे विष असंभावित है। चन्दन से जैसे अनल असंभावित है वैसे ही तुम्हारे मुख से परुष वाणी असंभावित है। इसी प्रकार शशांक बिम्ब से मेरु के ऊपर लम्बमान उरग जैसे प्रतीत होता है वैसे ही कपोल से स्तन के

## मधुसूदनी

यदपि स्तनेति पद्ये "अलंकार्यवाक्यार्थस्याभावादनलंकारत्वम्" इत्युक्तं पण्डितराजेन, तदयुक्तम्। "नहि वाक्यार्थ एवालंकार्य इति नियमे प्रमाणमस्ति" इत्यारभ्य सकलमाकुलं स्यादितिपर्यन्तं सर्वमपि बालभाषितमेव; कथमेतदिति चेदवधार्यताम्=

"यत्र हि रसस्य वाक्यार्थीभावस्तत्र कथमलंकारत्वम्? अलंकारो हि चारुताहेतुः प्रसिद्धः न त्वसौ आत्मैवात्मनश्चारुताहेतुः। तदयमत्र संक्षेपः—

रसिभावादितात्पर्यमाश्रित्य विनिवेशनम्।
अलंकृतीनां सर्वासामलंकारत्वसाधनं ॥

अयं भावः उपमादीनामलंकारत्वे यादृशी वार्ता तादृश्येव रसादीनाम्। तदवश्यमन्येनालंकार्येण भवितव्यम्। तदुक्तम् - रसभावादितात्पर्यमिति। लोचनम्। ध्व० द्वि० उद्योत १९७ पृष्ठम्। एवं हि सकलालंकारिकगुरवो ध्वनिकारा लोचनकाराश्च प्रमाणम् वाक्यार्थ एवालंकार्य इति नियमे। इति

## बालक्रीड़ा

ऊपर फैला हुआ कुटिल अलक प्रतीत होता है। क्या कारण है कि चन्द्रबिम्ब पद्य में उपमा और स्तनाभोगे पद्य में उत्प्रेक्षा है। वहाँ जैसे विष एवं अनल के साथ परुष वचन की उपमा में चन्द्र, चन्दन एवं मुख का बिम्बप्रति बिम्ब भाव है उसी तरह यहाँ पर भी उरग एवं अलक की उपमा में शशांक और कपोल, मेरु और स्तन का बिम्ब प्रतिबिम्ब भाव है। इसके सिवाय इव शब्द भी दोनों जगह संभावनापरक न होकर सादृश्यवाचक ही है। इस लिए हेतु के विना प्रतिज्ञावाक्य से अर्थसिद्धि नहीं हो सकती है। अत: 'स्तन' इस पद्य में उत्प्रेक्षा कहना गडवड़ है।

और भी जो 'स्तन' इस पद्य में अलंकार्य वाक्यार्थ के अभाव में उपमा अनलंकारभूता है यह पण्डित राज का कहना अयुक्त है क्योंकि वाक्यार्थ ही अलंकार्य होता है इस में कोई प्रमाण नहीं है "यहाँ से आरम्भ करके" "सकल व्यवस्था आकुल हो जायगी" यहाँ तक का आप का कथन है वह सब वालकों की बात चीत है। बालक जैसे दूसरे के कथन को उसी रूप में प्रमाण मान लेता है कुछ भी विचार नहीं करता है वैसे आप भी दूसरे के लेख को देखकर ही विना विचारे प्रमाण मान लेते हैं। कैसे यह है उसे सुनिये और समझिये।

रस भावादितात्पर्यमाश्रित्य विनिवेशनम्।

अलंकृतीनां सर्वासामलंकारत्वसाधनम्। द्वि० उ० १९७ पेज ध्व.। तस्माद्यत्र रसादयो वाक्यार्थीभूता इति। यत्र तु प्राधान्येनार्थस्य वाक्यार्थीभावः स रसादेरलंकारताया विषयः। यदि तु चेतनानां वाक्यार्थीवो रसाद्यलंकारस्य विषयः। इत्युच्यते। अथ अचत्तेनानां वाक्यार्थीभाव··· इति। "तरंगभ्रूभंगा" इत्येवमादौ विषयेऽचेतनानां वाक्यार्थीभावेऽपीति। मूलम्। 'तव शतपत्रेत्यत्र देवीस्तोत्रे वाक्यार्थीभूते।

रसाभासस्यालंकारता यथा ममैव स्तोत्रे समस्तगुणसम्पद' इत्यत्र हि परमेशस्तुतिमात्रं वचः परमोपादेयमिति वाक्यार्थे शृंगाराभासश्चारुता हेतुः। इस तरह ध्वन्यालोक एवं उस

## मधुसूदनी

यदपि सादृश्येन उपमेयस्य मुखस्यैवोत्कर्षादिति लिखितं, तदपि तुच्छम्। तथाहि—सादृश्यं हि प्रतियोग्यनुयोगिनिरूपितं भवति। अत एव सर्वैः प्राग्भिराचार्यैः भवतापि विभिन्नशैलीभिः द्वयोः सादृश्यमुपमा, भिन्नयोः सादृश्यमुपमेति प्रादर्शि। एवञ्च उपमानम्, उपमेयम् सादृश्यप्रयोजकः साधारणो धर्मः, (अथवा सादृश्याभिन्नः सः) सादृश्य-सादृश्यविशिष्टान्यतर-वाचकः शब्दश्चेति चत्वारि अंगानि मिलित्वा एका अंगिनी उपमा। अनया अलंकार्यो वाक्यार्थः न तु तदेकदेशः पदार्थः इति "न हि आत्मैवात्मनश्चारुताहेतुरिति" ध्वनिकारैः व्यवस्थापितम्। तर्हि अंगभूतमुपमानं, तादृशमुपमेयं कथमलंकुर्यात्। गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादिति चाचार्योक्तेः। किं च लुप्तोपमेयायामुपमेयस्याभाव एव। एवं हि सादृश्यं कमुत्कर्षयतु। इत्यपि द्रष्टव्यम्। द्वयोः मुखचन्द्रयोः समकक्षतया नहि चन्द्रेण मुखस्योत्कर्षः संभावनीयः।

## बालक्रीड़ा

के लोचन में सभी जगह वाक्यार्थ ही अलंकार्य है। अतः इस नियम में सकल आलंकारिकों के गुरु ये लोग ही प्रमाण हैं।

और जो आप ने लिखा कि सादृश्य से मुख का ही उत्कर्ष होता है वह भी तुच्छ है। जब कि आचार्यों के सिद्धान्त से वाक्यार्थ ही अलंकार्य है न कि उसका एक देश पदार्थ' यह नियम, प्रमाण सिद्ध है फलतः पद समूह रूप वाक्यार्थ का एक देश पदार्थ अलंकार्य नहीं है तब मुख का सादृश्य से उत्कर्ष होता है यह कहना तुच्छ ही है।

और भी बात है कि सादृश्य, प्रतियोगी और अनुयोगी से निरूप्य होता है। इसी लिए सभी आचार्यों ने और आपने भी "दो के सादृश्य का नाम उपमा है' कहा है। इस प्रकार भिन्न-भिन्न पदों से उपस्थित हुए उपमेय एवं उपमान, इन दोनों में रहने वाला सादृश्य प्रयोजक साधारण धर्म और सादृश्य या सादृश्य विशिष्ट वाचक शब्द ये चारों अंग मिलकर एक अंगिनी उपमा होती है। यही उपमा का स्वरूप है। रसभावादि को लक्ष्य करके रक्खे गये अलंकार, अलंकारत्व के साधक हैं इस सिद्धान्त के अनुसार रस भावादि रूप वाक्यार्थ न कि उसका एक देश पदार्थ अलंकार्य है, यह पहले व्यवस्थित कर दिया गया है। तब अंगभूत उपमान, अंगभूत उपमेय को कैसे अलंकृत कर सकता है। गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्। इस के अनुसार गुण को गुण अलंकृत नहीं कर सकता है। क्यों कि दोनों सम है; अलंकार्य अलंकार का भाव के लिए गुण प्रधान भाव रूप विषमता आवश्यक है।

जो तो मम्मट, दीक्षित, एवं जगन्नाथ पण्डितराज के उदाहरणों का अपने मत को व्यक्त करने के लिए उद्धरण आपने किया है वह भी धूलि समुद्धलन ही है। जैसे "स्वप्नेऽपि समरेषु त्वाम्" इसमें हे राजन्? आप समरविजयी हैं इत्यादि राज प्रशंसारूप मुख्य-वाक्यार्थ की उपस्कारिका विजय श्री और स्वाधीनपतिका की उपमा है न कि वह मुख्यवाक्यार्थ-भूता है। फलतः राज विषयक कविनिष्ठ भाव की अंगभूता उपमा है। यह मम्मटोदाहरण की कथा है।

## मधुसूदनी

यच्च किंचैवमित्यादिना तत्सिद्धये मम्मटाप्पयपदीक्षितजगन्नाथानां प्राचार्याणां काव्यानि समुद्धिरे तदपि न सम्यक्।

"स्वप्नेऽपि समरेषु" इत्यत्र हे राजन् ? भवान् सरविजयीति राजप्रशंसारूपस्य मुख्यवाक्यार्थस्य उपस्कारिका विजयश्रीस्वाधीनपतिकयोरुपमा। मुख्य वाक्यार्थभूतोपमा नास्ति। यतः सा कविनिष्ठे राजविषयकभावेऽङ्गभूता।

"हंसीव कृष्ण" ? इत्यत्र हे कृष्ण ? सर्वत्र प्रसरणशाली ते प्रभाव इत्येवं कृष्ण वर्णन रूपस्य मुख्यवाक्यार्थस्य उपस्करिका कीर्तिहंस्योरुपमा। अत्रापि कृष्णविषयकभावेंऽगभूतोपमा न तु मुख्यवाक्यार्थभूता।

"विभाति वदनं तस्याः" इत्यादावपि अभिलाषाख्यविप्रलम्भशृंगाररूपस्य मुख्यवाक्यार्थस्योपस्कारिका वदन-चन्द्रयोरुपमा। "स्तनाभोगे" इत्यत्र तु निरभ्रा वृष्टिः। कस्यापि वर्णनं नास्ति। केवलं कल्पितोपमाया नूतनमुदाहरणं निर्माय प्रदर्शितमतः उपमैव मुख्यवाक्यार्थभूता अनलंकारेति इति सर्वं समञ्जसं निराकुलं च भासते विदुषां, भवानेव सर्वतः आकुलः प्रतिभाति ॥इति॥

## बालक्रीड़ा

"हंसीव कृष्ण ? ते कीर्तिः" इस में "हे कृष्ण ? सर्वत्र प्रसरणशाली तुम्हारा प्रभाव है" इस तरह कृष्ण वर्णनरूप मुख्यवाक्यार्थ की उपस्कारिका हंसी एवं कीर्ति की उपमा है। यहाँ पर भी कृष्णविषयक भाव में अंगतया वर्त्तमान उपमा है न कि मुख्यवाक्यार्थ भूत है। यह अप्पय्य दीक्षित के उदाहरण की कहानी है।

"विभाति वदनं तस्याः" इस पण्डितराज के उदाहरण में भी अभिलाषाख्य विप्रलम्भशृंगार रूप मुख्यवाक्यार्थ की उपस्कारिका वदन एवं चन्द्र की उपमा है। किन्तु "स्तनाभोगे" इस में तो विना मेघों की वृष्टि है। किसी का वर्णन नहीं है। केवल कल्पितोपमा का नूतन उदाहरण बनाकर पण्डितराज ने दिखाया है। परन्तु यहाँ उपमा ही मुख्यार्थ है। जब चारुता का हेतु अलंकार होता है। तब चारु होने वाला अलंकार्य कोई दूसरा ही होता है। अपने आप, अपने आप की चारुता का हेतु नहीं हो सकता है। अतः यह उपमा अनलंकार भूता है। इस तरह विद्वानों को सब कुछ निराकुल प्रतीत होता है आप ही स्वयं आकुल हैं।

और भी जो यहाँ पर आपने चित्रमीमांसा में कहे हुए अय्यय्य दीक्षितजी के लक्षण को व्याख्या सहित दिखाते हुए जयराम भट्टाचार्योक्त दूषण का "न्यायपञ्चाननादय" यहाँ से "प्राहुः" यहाँ तक का उद्धरण दिया है वह भी अन्धलग्न न्याय के सदृश ही है। उपमितिक्रिया माने साधर्म्यनिष्पत्ति है यह लेख सर्वथा उद्ग्रंथ है ग्रंथ के बाहर है। क्यों कि प्रतीपालंकार के उदाहरण के समन्वय के प्रकरण में काव्यप्रकाश में उपन्यस्त "उपमित्यनिष्पत्या" क्वचितु "निष्पन्नैव उपमितिक्रिया!" इन पदों को लेकर ही दीक्षित जी ने उपमा का लक्षण बनाया है। उपमितिक्रियानिष्पत्तिमदित्यादि। अतः काव्यप्रकाश ग्रंथ के अनुसार "उपमितिक्रिया नाम

### मधुसूदनी

यदपि भवता चित्रमीमांसोक्तदीक्षितलक्षणं सव्याख्यं दर्शयता जयराम-भट्टाचार्योक्तं दूषणमत्र न्यायपञ्चाननादय इत्यादि प्राहुरित्यन्तं समुद्दध्रे, तदन्धलग्न-न्यायसदृशमेव ।

उपमितिक्रिया नाम साधर्म्यनिष्पत्तिरिति वाक्यं सर्वथा उद्ग्रन्थम् । काव्य-प्रकाशकारेण प्रतीपालंकारस्योदाहरणसमन्वयप्रकरणे उपमित्यनिष्पत्त्येति क्वचित्तु निष्पन्नैवोपमितिक्रियेति च उपन्यस्तं पदमादाय दीक्षितैरुपमालक्षणं निरमायि "उपमिति-क्रियानिष्पत्तिम"दित्यादि । अतो मम्मटमतेन उपमितिक्रिया नाम साधर्म्यं तस्य निष्पत्तिः ततश्च उपमितिक्रियानिष्पत्ति र्नाम साधर्म्यनिष्पत्तिरिति वाक्यं सद्ग्रन्थं स्यात् । "सा च साधर्म्यनिष्पत्तिरनन्वयेऽप्यस्ति" इति । अहो मोहस्य माहात्म्यम् । यत्र साधर्म्यस्य अन्वयः संगतिर्निष्पत्तिर्नास्ति स अनन्वयः स्वेन स्वस्य साधर्म्यं निरूप्यमाणमनिष्पन्नमेव भवति भेदे तु तन्निष्पन्नं भवति । तथाप्युच्यते सा चेत्यादि वाक्यम् तदपि निर्हेतुकम् ।

निरुपमत्वस्येति । निष्क्रान्तो बहिर्भूत उपमायाः निरुपमस्तस्य भावस्तत्त्वम् । यः खलूपमातो बहिर्भूतोऽनन्वयादिस्तत्र कीदृशी अपि स्वनिरूपिता स्वेतरनिरूपिता वा उपमा कथं भवितुमर्हा । भेदो नाम उपमाया जीवातुः । ततः स्वस्मिन् स्वस्य साधर्म्यं संभावयितुमशक्यमथापि वर्ण्यते इति तद्वर्णनमसंगतं सद् व्यर्थीभूय ज्ञापयति स्वस्मिँस्तु तदस्त्येव नहि; स्वेतरस्मिन्नपि तत्साधर्म्यं नास्तीति निरुपमत्वप्रतीतिः कथम् ।

### बालक्रीड़ा

साधर्म्यं तस्य निष्पत्तिः अतः उपमितिक्रियानिष्पत्तिर्नाम साधर्म्यनिष्पत्तिः" ये वाक्य सद्ग्रंथ है । उस के बाद आप लिखते हैं कि वह साधर्म्यनिष्पत्ति अनन्वय में भी है अहो ? मोह का ही माहात्म्य है ।

जहाँ साधर्म्य के अन्वय की संगति निष्पत्ति नहीं है वह अनन्वय है अर्थात् अपने साथ निरूप्यमाण अपना साधर्म्य अनिष्पन्न ही रहता है वह तो भेद में निष्पन्न होता है तब यह कहना कि वह साधर्म्य अनन्वय में हैं यह तो मोहमाहात्म्य ही है ।

और भी सुनिए । कौशाम्बीसे जो निष्क्रान्त अर्थात् बहिर्भूत है वह निष्कोशाम्बी कहलाता है । उसी तरह उपमा से जो बहिर्भूत है वह निरुपम है । उसका भाव निरुप-मत्व है । अतः जो उपमा से बहिर्भूत है उस में कैसी भी उपमा नहीं हो सकती है । क्योंकि भेद ही उपमा का जीवातु है । स्व में स्व के साधर्म्य की जब संभावना भी नहीं कर सकते हैं फिर भी उसका वर्णन करते हैं । तब यह वर्णन ही असंगत है । फलतः यह असंगत वर्णन ही व्यर्थ हो कर ज्ञापन करता है कि स्व में स्वनिरूपित साधर्म्य तो है ही नहीं किन्तु स्व में स्वेतरनिरूपित साधर्म्य भी नहीं है । अगर साधर्म्य है उपमा है तब निरूपमत्व प्रतीति कैसी । इसलिए जब उपमा ही नहीं है तब उपमितिवैजात्य किस की अपेक्षा से हो । आप ही कहिए । आपही उत्तर दीजिए .

अस्याश्चोपमायाः प्राचामनुसारेण केचिद्भेदा उदाहियन्ते—तथाहि —उपमा द्विविधा, पूर्णा लुप्ता च। पूर्णा तत्र—श्रौती, आर्थी चेति द्विधा

### मर्मप्रकाशः

प्राचां प्रकाशकारादीनाम्। तत्र तयोर्मध्ये।

### मधुसूदनी

यदोपमितिरेव नास्ति तदा सापेक्षपदार्थस्य उपमितिवैजात्यस्य कः प्रश्नः। रूपके रूपणस्य, व्यतिरेके व्यतिरेचनस्य (आधिक्यस्य) उत्प्रेक्षायां संभावनस्य, अपह्नुतौ अपह्नवस्य उपमितिक्रियाऽपेक्षं वैजात्यमेवालंकारभेदप्रयोजकमन्यथा सादृश्यस्य सर्वत्रानुस्यूततया उपमैवैकोऽलंकारः स्यादिति बोध्यम्।

श्रौतीति। इवादेस्तदर्थकवतेश्च प्रयोगे शाब्दी श्रौती। द्विष्ठस्य सम्बन्धस्य श्रुत्यैव विशेष्यतया अवगमनात्।

भेद्यं विशेष्यमित्याहुर्भेदकं तु विशेषणम्।
भेदकत्वेऽपि नियते षष्ठीवदिववादयः॥
द्विष्ठं श्रुत्यैव सम्बन्धं गमयन्ति स्वभावतः॥ इति॥

तुल्यादिपदानां तदर्थकवतेश्च प्रयोगे आर्थी। यतस्तुल्यादीनामेकत्रैव उपमेये एव न तूपमाने, उपमान एव न तूपमेयेऽपि, युगपदुभयत्रैव नत्वेकत्रेति विश्रान्तेरनियतत्वात्। साम्यपर्यालोचनेन तुल्याविमाविति प्रतीतेः सद्भावात्।

### बालक्रीड़ा

रूपक में रूपण का, व्यतिरेक में व्यतिरेचन (आधिक्य) का, उत्प्रेक्षा मे संभावन (एक कोटि के उत्कट होने) का, अपन्हुति में निन्हवन (छिपाने) का उपमिति क्रियापेक्ष वैजात्य ही तत्तदलंकारत्व का प्रयोजक है अन्यथा सादृश्य के सर्वत्र अनुस्यूत होने से उपमा ही एक अलंकार होना चाहिए।

श्रौती वह उपमा कहलाती है जहाँ इवादि पदों का या तदर्थक वति का प्रयोग होता है क्योंकि वहाँ उपमान एवं उपमेय दो में रहनेवाले साधारणधर्मप्रयोज्य सम्बन्धरूप साधर्म्य की श्रुति (शब्द) से ही प्रधानतया प्रतीति हो जाती है। जैसाकि कहा है।

भेदकत्वेऽपि नियते षष्ठीवदिवादयः
द्विष्ठं श्रुत्यैव सम्बन्धं गमयन्ति स्वभावः।

"भेद्यं विशेष्यमित्याहुर्भेदकं तु विशेषणम्" विशेष्यपदार्थ भेद्य होता है और विशेषण भेदक ही होता है इस नियम के अनुसार भेदकत्व के नियत होने पर भी षष्ठी की तरह इवादि, सुनते ही दो में रहने वाले सम्बन्ध को बतलाते है यह उनका स्वभाव है।

तुल्यार्थक पद एवं तुल्यार्थक वति के प्रयोग में आर्थी होती है। क्योंकि तुल्यादि पदार्थ की विश्रान्ति किसी एक में नियत नहीं है।। कमल के तुल्य मुख है इस तरह

भवन्ती वाक्यसमासतद्धितगामितया षोढा। लुप्ता च—उपमानलुप्ता, धर्मलुप्ता, वाचकलुप्ता, धर्मोपमानलुप्ता, वाचकधर्मलुप्ता, वाचकोपमेयलुप्ता, धर्मोपमानवाचकलुप्तेति तावत्सप्तविधा। तत्रोपमानलुप्ता—वाक्यगा, समासगा चेति द्विविधा। धर्मलुप्ता समासगता—श्रौती, आर्थी। वाक्यगता—श्रौती, आर्थी। तद्धितगता च—आर्थ्येव, न श्रौती। इति पञ्चविधा। वाचकलुप्ता—समासगता, कर्मक्यङ्गता, आधारक्यज्गता, क्यङ्गता, कर्मण-

### मर्मप्रकाशः

तत्र तासां सप्तानां मध्ये। तत्र

### मधुसूदनी

ग्रीष्मेति। ग्रीष्मर्तुसम्बन्धिनश्चण्डकिरणमण्डलस्य भीष्मा ये ज्वालाः। वह्नेर्द्वयोर्ज्वालकीलावित्यमरः। तेषां ज्वालानां संसरणेन व्याप्त्या तापिता तप्ता मूर्तिर्यस्य। ज्वालशब्दः पुंल्लिगः। तापितेति स्वार्थे णिच्।

### बालक्रीड़ा

मुख ही में तुल्यार्थका सम्बन्ध नियत है कमल में नही है यह बात नहीं। क्यों कि मुख के तुल्य कमल है यह भी प्रतीति होती है। पारी पारी से इन दोनों में विश्रान्ति है यह भी नहीं। क्यों कि कमल और मुख तुल्य हैं इस तरह युगपत् एक साथ दोनों कमल एवं मुख में तुल्यादि पदार्थ की विश्रान्ति होती है। किन्तु जब साम्य की पर्यालोचना करते हैं तब इमौ तुल्यौ यह प्रतीति होती है अतः आर्थी है।

प्राचीनों के अनुसार इस उपमा के कुछ भेदों को लिखते हैं। यहाँ भेदा उदाह्रियन्ते में उदाह्रियन्ते पद ठीक नहीं है किन्तु प्रदर्श्यन्ते आदि पद होना चाहिए। क्योंकि पहले केवल भेदों को ही दिखाते हैं भेद दिखाने के बाद (क्रमेण) क्रमशः (उदाह्रियन्ते) उदाहरण बताते हैं ऐसा लिखा है। यह संगत भी हैं। अन्यथा उदाह्रियन्ते का दो बार लेख असंगत होगा।

उपमा दो प्रकार की है। एक पूर्णा दूसरी लुप्ता। उनमें पूर्णा, श्रौती एवं आर्थी भेद से दो प्रकार की होती हुई वाक्य, समास एवं तद्धित गामी होने से छ प्रकार की है। और लुत्ता, उपमानलुप्ता १, धर्मलुप्ता २ वाचकलुप्ता ३ धर्मोपमानलुप्ता ४ वाचकधर्मलुप्ता ५ वाचकोपमेयलुप्ता ६ धर्मोपमानवाचकलुप्ता ७ सात प्रकार की है उनमें उपमानलुप्ता = वाक्य एवं समासगा होकर दो प्रकार की है। प्रत्ययार्थ उपमा में तृतीया आगे बतायेंगे।

धर्मलुप्ता = समासगा श्रौती एवं आर्थी, वाक्यगा = श्रौती एवं आर्थी, तथा तद्धितगा केवल आर्थी इस तरह पाँच प्रकार की है। वाचकलुप्ता = समासगा १ कर्मक्यज्गता २ आधारक्यज्गता ३ क्यङ्गता ४ कर्तृणमुल्गता ५ कर्मणमुल्गता ६ इस तरह छ प्रकार की है। धर्मो-

मुल्गता, कर्तृणमुल्गता चेति षड्विधा। धर्मोपमानलुप्ता—वाक्यगता, समासगता चेति द्विविधा। वाचकधर्मलुप्ता क्विब्गता, समासगता चेति द्विविधैव। वाचकोपमेयलुप्ता क्यजगतु तैकविधा। धर्मोपमानवाचकलुप्ता समासगतैकविधा। इति। एवं साकल्येनैकोनविंशतिर्लुप्ताभेदाः पूर्णाभेदैः षड्भिः सह पञ्चविंशतिः क्रमेणोदाह्रियन्ते।

तत्र पूर्णा श्रौती वाक्यगता यथा—

'ग्रीष्मचण्डकरमण्डलभीष्मज्वालसंसरणतापितमूर्तेः।
प्रावृषेण्य इव वारिधरो मे वेदनां हरतु वृष्णिवरेण्यः॥'

अत्र प्रावृषेण्य इत्यनेन वारिधरविशेषणेन नैराकाङ्क्ष्यात्, इवेन

मर्मप्रकाशः

पञ्चविंशतीनां मध्ये। ग्रीष्मेति। मण्डलस्य भीष्मा ज्वाला यत्र तत्र देशे यत्संसरणं गमनं तेनेत्यर्थः। वृष्णिवरेण्य कृष्णः। वाक्यगत्वमाह—अत्रेति। इवेन समास इति

बालक्रीड़ा

पगानलुप्ता=वाक्यगता और समासगता दो प्रकार की हैं। वाचक धर्मलुप्ता= १ क्विब्गता और २ समासगता दो प्रकार की है। वाचकोपमेयलुप्ता केवल १ क्यज्गता एक प्रकार की है। क्यचि वाद्युपमेयासे। धर्मोपमान वाचकलुप्ता भी १ समासगता एक ही प्रकार की है। इस तरह सकल भेदों को मिला देने से १९ भेद लुप्ता के हैं। इन को पूर्णा के ६ भेदों से मिला देने से कुल योग २५ होता है। जिनका क्रमशः उदाहरण देते हैं।

उन में वाक्यगता श्रौती पूर्णा का उदाहरण जैसे=वर्षा कालीन मेघ सदृश वृष्णिवरेण्य, ग्रीष्म ऋतु कालीन चण्डकर-मण्डल की भीष्मज्वालाओं से संतप्त मेरी बेदना को हरण करे।

इस पद्य में ज्वाल शब्द पुंलिग है। और तापित पद स्वार्थणिच् से बना है जिसका अर्थ है तप्त। "प्रावृषेण्य इव वारिधर," यहाँ पर प्रावृषेण्य और वारिधर दोनों शब्दों में किसी के भी साथ इव शब्द का समास नहीं है। क्योंकि प्रावृषेण्य वारिधर का विशेषण है अतः वारिधर सापेक्ष है। और सापेक्ष असमर्थ होता है। क्योंकि पदविधिः समर्थ में ही होती है असमर्थ में नहीं होती है। अतः समास नहीं हो सकता है।

(नैराकांक्ष्यात्) असामर्थ्यात्। पण्डितराजका निराकांक्षत्व निरपेक्षत्व हेतु लिखने का आशय यह है कि जिन पदों में समास होना है उन समस्यमान पदों से अतिरिक्त पद के अर्थ में सापेक्ष होने वाला पद असमर्थ होता है। यही "सापेक्षमसमर्थं भवति" इस भाष्य की संगति है। किन्तु जिन पदों में समास होना है उनमें तो परस्पर सापेक्षता गुण है प्रत्युत निरपेक्ष होना दोष है। ,यही दोष प्रकृत में है प्रवृषेण्य इवशब्द के विषय में निराकांक्ष है निरपेक्ष है अतः समास नहीं होता है।

इदं चान्यत्तस्मिन्नेव प्रस्तावे चित्रमीमासाकृद्भिरभ्यधीयत—

'नृणां यं सेवमानानां संसारोऽप्यपवर्गति ।
तं जगत्यभजन्मर्त्यश्चञ्चा चन्द्रकलाधरम् ॥'

अत्र क्विप्कनोर्लोपे प्रत्येकं वाचकधर्मलोप उभयत्रापि," तदरमणीयमेव।

### मर्मप्रकाशः

इदं चान्यदिति । वक्ष्यमाणमन्यच्चेत्यर्थः । क्विब्लोपे तयोक्तेर्युक्तत्वेऽपि कन्लोपेऽयुक्तत्वमित्याह—

### मधुसूदनी

वस्तुतो यो वाचकस्तस्यैव लोपे वाचकलुप्तेति सिद्धान्तः । एवं पटुपटुर्देवदत्तः शास्त्रवेत्तेत्यत्र द्विर्भावः सादृश्यद्योतकः न तु वाचकः । ततश्चात्रोक्तसिद्धान्तानुरोधात् सादृश्यद्योतकस्य द्विर्भावस्य सद्भावेऽपि वाचकस्यादर्शनाद्वाचकलुप्ता । स्यादप्येवम् । तत्रेवादीनां द्योतकत्वमेव न वाचकत्वम्, निपातत्वादुपसर्गवदितिवादिनाऽपि भवता चन्द्र इव मुखमित्यादौ इवस्य द्योतकस्य सद्भावेऽपि वाचकाभावे वाचकलुप्तोपमानुमन्येत चेत् । नानुमन्यते, तर्हि दुराग्रहमात्रमेवेति । इदं पण्डितराजमते ।

इदं चान्यदिति । अस्मिन्नेव धर्मवाचकलुप्तायां धर्मलोपस्यैच्छिकत्वमपि सम्भवतीति निरूपणे प्रस्तावे ।

क्विप्कनोरिति । अपवर्गतीत्यत्र आचारार्थस्य क्विपः । चञ्चेत्यत्र कनः

### बालक्रीड़ा

सादृश्य का द्योतक है वाचक नहीं है । अतः उक्त सिद्धान्त के अनुरोध से सादृश्य द्योतक द्विर्भाव के रहने पर भी वाचक के अदर्शन से वाचक लुप्ता कही जाती है । उस पर हमारा कहना है कि आप का उक्त कथन संगत हो सकता है यदि आप के द्वारा स्वीकृत "उनमें इवादि द्योतक ही हैं वाचक नहीं है, क्योंकि ये उपसर्ग की तरह निपात ही हैं" इस सिद्धान्त के अनुसार चन्द्र इव मुखं में द्योतक के रहने पर वाचक के अभाव में वाचक लुप्ता उपमा मानी गई होती तो । किन्तु ऐसी स्थिति नहीं है अतः द्विर्भाव स्थल में वाचक लुप्ता मानने का दुराग्रह मात्र ही है ।

यह जो और कुछ इसी धर्मवाचक लुप्ता में धर्म का लोप ऐच्छिक भी हो सकता है इसी के निरूपण के प्रकरण में चित्रमीमांसाकार जी ने कहा ।

जिसकी सेवा करने वाले मनुष्यों के लिए संसार भी मोक्ष के सदृश व्यवहारणीय है । उस चन्द्रकलाधर भगवान् का भजन नहीं करने वाला मनुष्य संसार में चञ्चा के सदृश है ।

यहाँ अपवर्गति में क्विप् के लोप होने पर, चञ्चा में कन् के लोप होने पर प्रत्येक में दोनों में वाचक एवं धर्म दोनों की लुप्ता उपमा है ।

वह सब अरमणीय है । क्योंकि क्विप् एवं कन् रूप वाचकों के लोप होने पर भी

कनो वाचकस्य लोपेऽपि तं चन्द्रकलाधरमभजन्निति चन्द्रकलाधरभजनराहि-त्यरूपस्य धर्मस्य चञ्चामर्त्यसाधारणस्योक्तत्वात्कथं तावद्धर्मस्य लोपः। न चोपमेयमर्त्यविशेषणतयोपात्तस्य चन्द्रकलाधरभजनराहित्यस्य सादृश्योप-सर्जने चञ्चायामनन्वयान्न साधारण्यमिति वाच्यम्।

"यद्भक्तानां सुखमयः संसारोऽप्यपवर्गति।
तं शंभुमजन्मर्त्यश्चञ्चैवात्महिताकृतेः॥'

इति पाठे धर्मश्रवणमुभयत्रापि संभवति" इति स्वोक्तेरसंगतत्वापत्तेः। इहाप्युपमेयसंसारविशेषणतयोपात्तस्य सुखमयत्वस्य सादृश्योपसर्जनेऽपवर्गे

**मर्मप्रकाशः**

कन इति। तामुपपादयति—इहापीति। कथंकारं कथं कृत्वा। पाठान्तरवादी स्वाशयमाह—

**मधुसूदनी**

लोपे सति। आचाररूपधर्मवाचकस्य क्विपो लोपे धर्मलोपः। किन्तु इवार्थ कनो लोपे धर्मलोपः कथमिति। शंका

सादृश्योपसर्जन इति। सादृश्ये उपसर्जनं गुणश्चञ्चा तस्मिन्। इवार्थे सादृश्ये कनो विधानात् चञ्चाक पदस्य तथा कनो लोपेऽपि चञ्चापदस्य चञ्चानिरूपितसादृश्य मित्यर्थः। ततश्च चञ्चानिरूपितसादृश्ये चञ्चार्थः उपसर्जनमिति तत्र उक्तधर्मस्य चंचायां गुणानाञ्च परार्थत्वादसम्बन्धः समत्वादिति न्यायेनानन्वयात्साधारण्यं नास्ति। केवले मर्त्येऽन्वयादसाधारण्यमेवेति न वाच्यमित्यन्वयः।

नन्वेवं कथने का असंगतिरित्याह—स्वोक्तेरिति।

यद्भक्तानामिति परिवर्त्तिते पाठे धर्मश्रवणमुभयत्रापि सम्भवतीति स्वोक्तेरसंगतिः स्यादित्यर्थः। ननु कथं सा असंगतिरित्याह—इहापीति। ननूभयगतत्वेनोपात्तस्य

**बालक्रीड़ा**

उस चन्द्रकलाधर को भजता नहीं है इस धर्म के रहने पर धर्म का लोप कैसा। यदि कहें कि चन्द्रकलाधर भजन राहित्य रूप धर्म उपमेय मर्त्य का विशेषण है।

अतः (चंचानिरूपित सादृश्यवदभिन्नो मर्त्यः) इस बोध के अनुसार सादृश्य में उप-सर्जन गुण चंचा में उस धर्म का अन्वय नहीं है। फलतः वह साधारण धर्म नहीं है। वह भी ठीक नहीं है। क्योंकि—

जिसके भक्तों के लिए यह सुखमय संसार अपवर्ग सदृश व्यवहरणीय है। उस शंभु को नहीं भजने वाला मर्त्य चञ्चा सदृश है। क्योंकि उसने अपना हित नहीं किया है।

इस तरह के पाठ में धर्म का शाब्द बोध दोनों जगह संभव है। इस अपनी पहले कही हुई उक्ति की असंगति के तरफ ध्यान देवें। यहाँ पर भी उपमेय संसार के विशेषण

ऽन्वयाभावात्कथंकारं धर्मस्य साधारण्यम्। उपमेयगतत्वेनोपमानगतत्वेन वोपात्तस्य धर्मस्य शाब्द उभयान्वयेऽसत्यपि वस्तुत उभयवृत्तित्वज्ञानमेव साधारणताया नियामकमिति चेद्, चन्द्रकलाधरभजनराहित्येऽपि दीयतामेव-मेव दृष्टिः। यदि चोपमेयतावच्छेदकतयैव चन्द्रकलाधरभजनराहित्यं मम विवक्षितम्, साधारणधर्मश्च स्वात्महिताकरणरूपः स चात्र लुप्त एवेति शपथेन स्वाभिप्रायः प्रकाश्यते, तदा निवारितोऽयं दोषः; तुष्यतु भवान्।

मर्मप्रकाशः

उपमेयेति। एवमेवेति। एवं च तुल्यतेति भावः। प्रकारान्तरेण स स्वाशयमाह—यदि चेति।

मधुसूदनी

धर्मस्य उभयगतत्वेन शाब्दोऽन्वयो मास्तु किन्तु स धर्म उभयवृत्तिरिति ज्ञानमेव धर्मस्य साधारणताया नियामक इति चेत्तर्हि चन्द्रकलाधरभजनराहित्यरूपो धर्मोऽपि चक्षामर्त्यसाधारण एव।

ननु चन्द्रकलाधरभजनराहित्याख्यो धर्मः केवलमुपमेयतावच्छेदकः। उपमा-प्रयोजकतावच्छेदकस्तु साधारणो धर्मः स्वात्महिताकरणरूपः। स चात्र लुप्त इति चेदाह-शपथेनेति।

बालक्रीड़ा

रूप से उपात्त सुखमयत्वका सादृश्य में उपसर्जनीभूत अपवर्ग में अन्वय नहीं होता है तब धर्म में साधारणत्व कैसे होगा।

अगर यह भाव हो कि कोई भी धर्म चाहे उपमेय में कहा गया हो या उपमान में कहा गया हो। जिसमें कहा गया होगा उसी एक में उसका शाब्द अन्वय होगा। दोनों में शाब्द अन्वय नहीं होगा। किन्तु वस्तुतः यदि देखा जाय तो वह धर्म उपमान एवं उपमेय दोनों में है यह ज्ञान तो होता ही है। बस-बस। यह उभयवृत्तित्व का ज्ञान ही धर्म के विषय में साधारणता का नियामक है। तब तो दीक्षित जी ? इसी तरह की दृष्टि; चन्द्रकलाधर भजनरादित्य पर भी दीजिए। उसका भी तो ज्ञान दोनों जगह हो ही जाता है।

अगर कहें कि हो जाय भले उसका दोनों जगह में ज्ञान, किन्तु उपमेयतावच्छेदकरूप से माने उपमेय मर्त्य के विशेषण के रूप में ही चन्द्रकलाधर भजनराहित्य धर्म मुझे विवक्षित है और स्वात्महिताकरणरूप साधारण धर्म है जो कि यहाँ लुप्त ही है ऐसा यदि अपना अभिप्राय शपथ के द्वारा प्रकाशित करते हैं तब यह दोष निवारित हो गया। आप तुष्ट होइये।

इदमप्यन्यत्तैरेव वाचकोपमेयलुप्तायामुदाहरणं निरमीयत—

'रूपयौवनलावण्यस्पृहणीयतराकृतिः ।
पुरतो हरिणाक्षीणामेष पुष्पायुधीयति ॥'

इदं च पद्यमपशब्ददुष्टमवैयाकरणतां कर्तुः प्रकाशयति । तथा हि पुरत इति नगरवाचिनः पुरशब्दात्तसिलि हरिणाक्षीणां नगरादित्यर्थस्यासंगतेः । नहि पूर्ववाचकः पुरशब्दः क्वापि श्रूयते । पूर्वशब्दात्तु 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इत्यसौ पुरादेशे च पुर इति भाव्यम् । न तु पुरत इति । अत-एव 'अमुं पुरः पश्यसि देवदारुम्' इति प्रायुङ्क्त महाकविः । एवमेव

## मर्मप्रकाशः

इदमप्यन्यदिति । वक्ष्यमाणमित्यर्थः । तसिलीति इदं चिन्त्यम् । तदप्राप्तेः । आद्यादित्वात्तसावित्युचितम् । महाकविः कालिदासः । तैः अप्पदीक्षितैः । इदं चिन्त्यम् । "पुरत इति निपाताङ्गीकारात् । अत एव 'इयं च तेऽन्या पुरतो विडम्बना' इति कालिदासः, 'पश्यामि तामित इतः पुरतश्च पश्चात्' इति भवभूतिश्च संगच्छते इति केचित् । अन्ये तु "दक्षिणोत्तराभ्यामतसुच्' इत्यत्र तसुचैव पुंवद्भावेन सिद्धेऽतसुज्विधानमन्यस्मादपीति ज्ञापनाय । तेन पचाद्यजन्तात्पुरशब्दात्तस्मिन्निष्टसिद्धिः ।" इत्याहुः । वस्तुतस्तु—'पुर

## बालक्रीड़ा

यह भी जो और वाचकोपमेयलुप्ता का उदाहरण उन्होंने वनाया है ।

रूप, यौवन एवं लावण्य के कारण अतीव स्पृहणीय आकृतिवाला यह पुरुष मृगनयनाओं के समक्ष में पुष्पायुध कामदेव के सदृश व्यवहरणीय है ।

यह पद्य अपशब्द दोष से युक्त है अतः निर्माण कर्त्ता की अवैयाकरणता को प्रकाशित करता है । जैसे=पुरतः यह पद नगरवाचक पुरशब्द से तसिल् प्रत्यय करने पर बना है । जिसका अर्थ होता है "हरिणाक्षियों के नगर से" जो कि असंगत है । पूर्व का वाचक पुरशब्द कहीं भी सुनाई नहीं पड़ता है । हाँ पूर्व शब्द को "पूर्वाधरावराणामसि पुरधवश्चैषाम्" इस सूत्र में पुर आदेश होने पर पुरः यह प्रयोग होना चाहिए । न कि पुरतः । इसीलिए महाकवि कालिदास ने (अमुं पुरः पश्यसि) इस देवदारु वृक्ष को सामने देख रहे हो । इस वाक्य में पुरः पद का प्रयोग किया है । एक यही अपशब्द नहीं इन्होंने नहीं किया है । इसी तरह "मुख के सामने चन्द्रमा निष्प्रभ है" यहाँ अप्रस्तुत प्रशंसा में । उपमा निरूपण रूप द्वितीय प्रकरण के आरम्भ में भी उन्होंने अपशब्द कर दिया है । जैसा कि वैयाकरणों ने कहा है । पति के पुरतः और परतः, ऊँची नीची भूमि में अपने पैर को पुरतः रख रही है । वह सुदती पुरतः आये हुए मुझको इत्यादि सभी अपशब्द है । जिनके मूल में व्याकरण का अज्ञान ही है । यहाँ पर इतना कहना आवश्यक है कि "स्यात्पुरः पुरतोऽग्रतः" अमर कोष एवं "पुरतः प्रथमे चाग्रे" विश्वकोश में पुरतः शब्द प्रामाणिक तौर से

"मुखस्य पुरतश्चन्द्रो निष्प्रभः' इत्यप्रस्तुतप्रशंसा" इति द्वितीयप्रकरणारम्भेऽप्यपशब्दितं तैः । तथा चाहुर्वैयाकरणाः—"पत्या पुरतः,' 'आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि', 'पुरतः सुदती समागतं माम्' इत्यादयः सर्वेऽपि व्याकरणाज्ञानमूला अपशब्दाः" इति ।

इयं चैवंभेदोपमा वस्त्वलंकाररसरूपाणां प्रधानव्यङ्ग्यानां वस्त्वलंकारयोर्वाच्ययोश्चोपस्कारकतया पञ्चधा ।

तत्र व्यङ्ग्यवस्तूपस्कारिका यथा—

'अनवरतपरोपकरणव्यग्रीभवदमलचेतसां महताम् ।
आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव ॥'

### मर्मप्रकाशः

अग्रगमने' इति तौदादिकाण्णिजभावे इगुपधलक्षणे के सार्वविभक्तिकस्तसिः' इति बोध्यम् । वैयाकरणा इति । प्राञ्च इत्यादिः । एवं भेदा वक्ष्यमाणप्रकारभिन्ना । तदेव बिशिष्याह—वस्त्विवति । आपातेति । प्रागनुभूयमानकटुत्वकानीत्यर्थः ।

### मधुसूदनी

उपमालक्षणोक्तं वाक्यार्थोपस्कारकं स्मृत्वाऽऽह—इयं चेति । यथा प्रधानव्यंग्योऽलंकार्यस्तथा मुख्य वाच्यार्थोप्यलंकार्यः । रसस्तु स्वप्नेऽपि न वाच्यतामर्हतीति सिद्धान्तात् द्वौ वस्त्वलंकारौ वाच्यौ, वस्त्वलंकाररसास्त्रयः प्रधानव्यंग्या इति पंचोपस्कार्या वाक्यार्थाः । अतः इयमुपमा पंचधा ।

अनवेति । परोपकरणार्थं व्यग्रं स्वभावतस्तु निर्मलं चेतो येषां तेषां महतां

### बालक्रीड़ा

उल्लिखित है । और "पुर अग्रगमने यह चौरादिक धातु है इससे णिच् के अभाव पक्ष में" यह नागेशमहाशय का लेख है या लेखक प्रमाद से आ गया है । जो हो यह पुर अग्रगमने तुदादिगण का धातु है । जिसकी १३४७ संख्या है । चुरादिगण का नहीं है । धातुपाठ में एक ही जगह तुदादि में इसका उल्लेख है ।

यह इस प्रकार के भेदों वाली उपमा; वस्तु, अलंकार एवं रसरूप प्रधान व्यंग्यों की तथा वस्तु एवं अलंकार रूप मुख्य वाच्यों की उपस्कारिका है अतः पाँच प्रकार की है । ३२ प्रकार की उपमा ५ से गुणा करने पर १६० प्रकार की यह सिद्ध होती है ।

उनमें व्यंग्य वस्तु को उपस्कृत करनेवाली उपमा जैसे—अनवरत "राम काज कीन्हे विना मोहि कहाँ विश्राम" इस हनुमान् जी की उक्ति के अनुसार विना विराम ग्रहण किये दूसरों के उपकार करने में व्यग्र हो रहा है किन्तु स्वभावतः निर्मल है चित्त जिनका, ऐसे

अत्र तादृंशि वचनान्यर्थद्वारा सेव्यमानस्य मनागप्यक्षुभ्यतः परिणामे परमं सुखं भवतीति प्राधान्येन व्यङ्ग्यस्य वस्तुन उपस्कारिका भेषजोपमा।

व्यङ्ग्यालंकारोपस्कारिका यथा—

'अङ्कायमानमलिके मृगनाभिपङ्कं
पङ्केरुहाक्षि ! वदनं तव वीक्ष्य बिभ्रत्।
उल्लासपल्लवितकोमलपक्ष्ममूला-
श्चञ्चूपुटं चपलयन्ति चकोरपोताः ॥'

मर्मप्रकाशः

तादृंशि आपातकाटवानि। प्राधान्येन व्यङ्ग्यस्येति तेनापातकाटवानीति पदव्यङ्ग्यस्येत्यर्थं। नन्वत्रोपमालंकारो नैवात आह—

मधुसूदनी

मातापितृगुरूणां वचनानि। आपातकाटवानि प्रथमं श्रवणलायां कटूनि परं परिणामरमणीयानि। कानीव भेषजानीव। स्पष्टमन्यत्।

अंकेति। हे पंकेरुहाक्षि ? अलिके भाले अंकायमानं कालिम्ना चन्द्रगतांकसदृशं मृगनाभिपंकं विभ्रत् धारयत् वदनं वीक्ष्य चकोराः चञ्चूपुटं चिरं चटुलयन्ति।

भालस्थमृगनाभिपंके अंकसादृश्यदर्शनाद् वदने चन्द्रभ्रान्तिश्चकोराणां व्यंग्या। तस्या उपपादको भालस्थे मृगमदपंके विषये अंकस्याभेदः। अस्य मूलं सादृश्यम्। इति सादृश्यमुपमा व्यंग्यभ्रान्तेरुपस्कारिका।

बालक्रीड़ा

महापुरुयों के वाक्य औषध के सदृश चमक रहे हैं। जो वचन कानों में श्रवण के समय कड़ुवे किन्तु परिणाम में सुखजनक हैं और भेषज भी मुख में पीने के समय कड़ुई किन्तु फल में हितकारक हैं।

वचन उपमेय, भेषज उपमान, इव उपमावाचक, आपातकाटवता साधारण धर्म है अतः पूर्णोपमा है।

यहाँ पर आपातकाटव वचनों का अर्थानुभूति के साथ सेवन करके थोड़ा भी क्षोभ नहीं करनेवाले पुरुष को परिणाम में परमसुख मिलता है इस प्रधान व्यग्यं वस्तु की उपस्कारिका भेषजोपमा है।

हे पंकेरुहाक्षि ? भाल में अंकसदृश कस्तूरीतिलक को धारण किये हुए तुम्हारे वदन को देखकर उल्लास से आनन्द से जिनके कोमलपक्ष्ममूल पल्लवित हो गये हैं वे चकोर अपने चञ्चूपुटों को चिरकाल तक चटुल करते हैं।

अत्र प्राधान्येन व्यङ्ग्ये आरोप्यमाणचन्द्रके भ्रान्तिमत्यलंकारे उपपादकस्य भालस्थमृगमदपङ्कविषयकस्याङ्काभेदारोपस्याङ्कसादृश्यरूपदोषमूलकत्वादुपमात्रालंकारः ।

रसोपस्कारिका तु 'दरदलदरविन्द—इत्यत्र प्रागेवोदाहृता । रसपदेनासंलक्ष्यक्रमस्योपलक्षणाद्भावाद्युपस्कारिकाप्यत्रैवान्तर्भाव्या । यथा—'नैवापयाति हृदयादधिदेवतेव', 'वन्यकुरङ्गीव वेपते नितराम्' इत्यादिषु प्रागुदाहृतेषु । वाच्यवस्तूपस्कारिका यथा—

'अमृतद्रवमाधुरीभृतः सुखयन्ति श्रवसी सखे ? गिरः ।
नयने शिशिरीकरोतु मे शरदिन्दुप्रतिमं मुखं तव ॥'

### मर्मप्रकाशः

अत्र प्राधान्येनेति । व्यङ्ग्ये इति । वाक्यव्यङ्ग्ये इत्यर्थः । अलंकारे सतीति शेषः । उपपादकेत्यादिः । अत्रालंकार इति । तथा च तदुपस्कारकत्वमस्याः स्पष्टमिति भावः ।

### मधुसूदनी

अत्र मृगमदपंकेति पंकपदं शुष्कस्य मृगमदस्य तिलकानर्हता पंकतां गतस्य तु तदर्हतेति द्योतयितुमुपात्तम् । यद्यपि वदने चन्द्रभ्रान्तौ अंकायमानत्वस्य पदार्थस्य हेतुतया काव्यलिंगमपि । तथापि अंक इवाचरतीत्यर्थस्य मूलभूतत्वादुपमेति न्यरूपि ।

अमृतेति । अमृतद्रववन्माधुरीभृत्त्वं गिरां सुखकरत्वे कारणं, शरदिन्दुना प्रतिमा तुलना यस्य मुखस्येति तादृशत्वं मुखस्य नयनशिशिरीकरणे हेतुरिति उभयत्र

### बालक्रीड़ा

यहाँ कस्तूरी तिलक में कालिमा के कारण कलंक का सादृश्य देखकर वदन में चन्द्र की भ्रान्ति होती है अतः आरोप्यमाणचन्द्र विषयकभ्रान्तिमान् अलंकार प्रधानतया व्यंग्य है। उसका उपपादक है भालस्थ मृगमदपंकरूप विषय उपमेय में अंक का अभेदारोप । उसका मूल है अंकसादृश्य रूप दोष । अतः प्रधानव्यंग्यभ्रान्तिमदलंकार की उपस्कारिका उपमा है ।

रस की उरस्कारिका उपमा "दरदलदरविन्दसुन्दर" इसमें पहिले ही दिखलाई है। यहाँ रसपद असंलक्ष्य क्रम का उपलक्षण है अतः भावाद्युपस्कारिका उपमा का भी इसी में अन्तर्भाव है । जैसे=अधिष्ठात्री देवता की तरह वह नायिका हृदय से नहीं जाती है । वन्य मृगी की तरह वह अतीव काँप रही है । इत्यादि पहले बतलाये हुये उदाहरणों में समझना चाहिए ।

वाच्यवस्तु की उपस्कारिका उपमा जैसे=हे सखे ? द्रुतअमृत की मधुरिमा से भरी हुई तुम्हारी वाणी कानों को सुख पहुँचाती है । और शरदृतु के इन्दु के सदृश तुम्हारा मुख मेरे नयनों को शीतल करता है ।

अत्र नयनशिशिरीकरणरूपे वस्तुनि वाच्ये मुखस्य शरदिन्दूपमोपस्कारिका ।

वाच्यालंकारोपस्कारिका यथा—

'शिशिरेण यथा सरोरुहं दिवसेनामृतरश्मिण्डलम् ।
न मनागपि तन्वि ! शोभते तव रोषेण तथेदमाननम् ।।'

अत्र वाच्यस्य दीपकस्योपमोपस्कारिका ।

रसादिस्तु न वाच्य इति प्रागेवाभिहितम् ।।

अथ कथमलंकारस्यालंकारान्तरोपस्कार्यत्वमुच्यते । प्रधानस्यैवालंकार्यत्वादिति चेत्, मैवम् । अलंकारस्योपमादेर्ध्वन्यमानतायां प्राधान्याद्रसा-

मर्मप्रकाशः

ननु वस्त्वलंकारयोरिव रसस्यापि वाच्यत्वेन षोढा वक्तुमुचितेयमत आह—रसादिरिति। प्रधानस्यैवेति । अलंकारस्त्वप्रधानमेवेति भावः ।

मधुसूदनी

काव्यलिंगमपि तथापि गीर्मुखयोस्तत्त्वमुपमाहेतुकमिति सैवालंकार उपस्कारक इत्युक्तम् ।

अथ कथमिति । ननु अलंकारः परशोभाधायकतया अन्योत्कर्षकतया अप्रधानं,

बालक्रीड़ा

यहाँ नयनों को शीतल करने रूप वाच्य वस्तु को मुख के साथ शरदृतु के इन्दु की उपमा उपस्कृत करती है । वाणी के सुख देने में अमृद्रवमाधुरी से पूर्ण होना कारण है । अतः काव्यलिंग है ।

हे तन्वि ? जैसे शिशिर से सरोरुह एवं दिवस से अमृतरश्मि चन्द्रमण्डल ग्लान हो जाते हैं शोभा रहित हो जाते हैं उसी तरह रोष से तुम्हारा आनन शोभा रहित हो जाता है याने थोड़ा भी अच्छा नहीं लगता है ।

यहाँ सरोरुह एवं चन्द्र अप्रकृत हैं, मुख प्रकृत है । इनका शोभा राहित्य रूप एक धर्म से सम्वन्ध है । यही दीपक का स्वरूप है । इस वाच्य दीपकालंकार की उपस्कारिका यथातथा पदप्रतिपाद्या उपमा है ।

प्रधान व्यंग्य रस, वस्तु, अलंकार, तथा वाच्य वस्तु एवं अलंकार की तरह वाच्य रसादि की उपस्कारिका उपमा के एक और भेद को मिला कर छः भेद कहने चाहिए थे पाँच ही कैसे कहे । इस प्रश्न के उत्तर में कहते हैं कि रस, और आदि पदग्राह्य भावादि कभी वाच्य नहीं होते हैं यह पहिले ही कहा जा चुका है । इस प्रश्नोत्तर के लिखने की ग्रन्थकार को क्या आवश्यकता थी । अच्छा । स्पष्ट-स्पष्ट प्रतिपत्तिके लिए कह दिया ।

प्रश्न होता है कि प्रधान व्यंग्य यह रस, वस्तु एवं अलंकार ही उपस्कार्य होते हैं ।

दिवदलंकारान्तरोपस्कार्यत्वे न कोऽपि तावदस्ति विरोधः । एवमेव मुख्यतया वाच्यतायामपि । यथा ह्यापणादौ विक्रीयमाणतायां कनकताटङ्कस्य रत्नाद्यलंकारान्तरोपस्कार्यत्वे तस्यैव कामिनीकर्णालंकरणतायां पुनः प्रधानान्तरसांनिध्यात्ताटङ्कस्य तद्गतरत्नानां च साक्षात्परम्परया च कर्णादिशोभोपस्कारकतया यथा तदलंकारत्वम् , एवमेव रसादिसांनिध्ये रूपकादेस्तदुपस्कारकस्यालंकारान्तरस्य च रसाद्यलंकारतेति ।

### मर्मप्रकाशः

वाच्यतायामपि न विरोध इत्यनुषङ्गः ।

### मधुसूदनी

तस्यापि अप्रधानस्यापि यदि अन्य उत्कर्षकः, एवं हि अप्रधानमपि अलंकार्यं भवतीति प्राप्तं, तर्हि प्रधानमेवालंकार्यमिति—

रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलंकृतीनां सर्वासामलंकारत्वसाधनमिति

सिद्धान्तो व्याहतस्तथापि प्रतीयमानो व्यंग्योर्थो द्विविधः स्फुटोऽस्फुटश्चेति । तत्र य एव स्फुटः स ध्वनिः । अस्फुटस्य द्वयी गतिः गुणीभूतव्यंग्यो भवति, शव्दचित्रमर्थचित्रं च भवति । स्फुटोऽपि वाच्यांगश्चेद्; गुणीभूतः, यदुक्तं—

यत्र प्रतीयमानोऽर्थः प्रम्लिष्टत्वेन (अस्फुटत्वेन) भासते
वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेरिति

एवं प्रधानाप्रधानव्यवस्था सकारणा । व्यंग्यापेक्षयाऽपि वाच्यस्य प्राधान्यं यर्हि, तर्हि, वाच्यान्तरापेक्षया वाच्यान्तरस्यापि प्राधान्ये नास्त्यवरोध इति भवति वाच्यालंकारस्योपस्कारको वाच्यालंकारः इति ।

लौकिकी स्थितिस्तु पण्डितराजेन निर्दिष्टा । अक्षराणि सरलानि । तस्यैव उपस्कार्यस्यैव प्रधानान्तरस्य कामिनीकर्णरूपस्य सान्निध्याद्धेतोः । तदलंकारत्वं कर्णालंकारत्वम् । तदुपस्कारकयेति रूपकाद्युपस्कारकेण अलंकारान्तरेण उपस्कार्यो रसादिः ।

### बालक्रीड़ा

क्योंकि गुण प्रधान भाव स्थल में ही अलंकार्य अलंकारक भाव होता है (गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्) गुण दूसरों के ही लिए होते हैं और समान कोटि के होते हैं अतः उनमें परस्पर उपस्कार्य उपस्कारक भाव सम्बन्ध नहीं हो सकता है तब एक अलंकार दूसरे अलंकार से उपस्कार्य कैसे कहा । क्योंकि दोनों ही अलंकार हैं अलंकार्य कोई नहीं है ।

उत्तर—ऐसा मत कहिए । जो रस सर्वावस्था में व्यंग्य ही रहता है वह रस भी प्रधान रूप से ध्वन्यमान उपमादि अलंकारों तथा रसादि का उपस्कारक हो जाता है उस अवस्था

एवं च प्राचां मते पञ्चविंशतिभेदायाः पुनः पञ्चविधतायां सपादशतं भेदाः। द्वात्रिंशद्भेदवादिनां तु षष्ट्युत्तरं शतम्। इतश्चान्येऽपि प्रभेदाः कुशाग्रीयधिषणैः स्वयमुद्भावनीया।

## मधुसूदनी

कुशाग्रीयेति। अत्र इवे प्रकृतिकृतावित्यधिकारे "कुशाग्राच्छः" इति इवार्थे छप्रत्यये निष्पन्नमिदम्। कुशाग्रमिव कुशाग्रीया कुशाग्रतुल्या धिषणा येषां तैः।

अत्रैका दृष्टिः। "न श्रौती तद्धिते पुनः" इति मम्मटोक्तं सर्वैरालंकारिकैरादृतं तेषामयमाशयः। धर्मलोपे कृते सति तद्धिते श्रौती न हि भवति। कुत इति चेत्। "तत्र तस्येव" इति सूत्रेण सप्तम्यन्तात् षष्ठ्यन्तात् विधीयमानो वतिः सप्तम्यर्थाधारविशेषणस्य षष्ठ्यर्थसम्बन्धविशेषणस्य साधारणधर्मस्य प्रयोगमपेक्षते। अतः उपमेये उपमानसम्बन्ध बोधकस्य वतेर्धर्मलोपे सति संगतिर्नास्तिः।

नन्वस्तु इवार्थो वतिः धर्मलोपे न संभवति। परं शिलाया ढः, ढञ्, कुशाग्राच्छः, शर्करादिभ्योऽणित्यादिसूत्रैरिवार्थे शिलाया इव शिलेयं, शैलेयं दधि। कुशाग्रमिव

## बालक्रीड़ा

में उसका नाम रसवदलंकार होता है। इस तरह जब ध्वन्यमान अतएव प्रधानीभूत उपमादि अलंकार, प्रधान व्यंग्य रस की तरह अन्य अलंकारों के द्वारा उपस्कार्य होने में कोई विरोध नही है। तब मुख्यतया वाच्य उपमादि अलंकारों के, अमुख्यतया वाच्य उपमादि अलंकारों के द्वारा उपस्कार्य होने में कौन बाधक है। जैसे—दुकान वगैरह में बेचने के लिए रक्खे हुए सोने के ताटंक कर्णभूषण, रत्नादि अलंकारान्तर से उपस्कार्य होने पर भी कामिनी के कर्णों को सुशोभित करने की दशा में प्रधान कर्ण की सन्निधि में जो दुकान में विक्रीयमाणावस्था में प्रधान था वही ताटंक और उसमें रहनेवाले रत्न भी कर्ण की शोभा करने के कारण कर्ण के अलंकार बन जाते हैं।

यहाँ भाव यह है कि सुवर्ण और रत्न दानों में रत्न बहुमूल्य होने के कारण प्रधान होते हैं और रत्नापेक्षया अल्पमूल्य होने से सुवर्ण अप्रधान होता है। किन्तु सुवर्ण से बने हुए गहनों में रत्नों को जड देते हैं तब रत्न अप्रधान हो जाते हैं और सुवर्ण प्रधान। इस पर भी जब वह रत्नजटित स्वर्णाभरण कामिनी के कानों की शोभा को बढ़ाता है तब रत्नापेक्षया प्रधान बना हुआ वह स्वर्ण दूसरे प्रधान कामिनी कर्ण की सन्निधि में अप्रधान बनकर अलंकार हो जाता है।

इसी तरह रस की सन्निधि में दीपक रूपक आदि अलंकार रस का उपस्कार करते हैं उसका उपस्कार सादृश्य करता है इस तरह एक अलंकार दूसरे अलंकार से उपस्कार्य होता है। इस विषय में अधिक जानना चाहें वे मधुसूदनी में रखें।

इस तरह प्राचीनों के मत में २५ प्रकार की उपमा को पाँच प्रकार की मानने पर उसका १२५ सवासौ भेद होते हैं। ३२ भेद मानने वालों के मत में १६० साठ सौ भेद

**तत्र क्वचिदनुगाम्येव धर्मः। क्वचिच्च केवलं बिम्बप्रतिबिम्बभावमापन्नः। क्वचिदुभयम्। क्वचिद्वस्तुप्रतिवस्तुभावेन करम्बितं बिम्बप्रतिबिम्बभावम्। क्वचिदसन्नप्युपचरितः। क्वचिच्च केवलशब्दात्मकः।**

### मधुसूदनी

कुशाग्रीया धिषणा, शर्करा इव शार्करम् मोदकम्। पुण्डरीकमिव मुखमित्यादिषु तद्धितप्रत्ययान्तेषु क्रमशः कठिनत्वतीक्ष्णत्वमधुरत्वमनोज्ञत्वरूपधर्माणां लोपेऽपि श्रौती उपमा संभाव्येति चेत्। शृणु। इवार्थे विहिता अपीमे प्रत्ययास्तुल्यार्था एव। शैलेयं दधीत्यादिषु सर्वत्र अभेदान्वयस्य दर्शनात्। तेषां सादृश्यार्थकत्वे तुल्यार्थत्वाभावे हि उक्तप्रयोगेषु सामानाधिकरण्यस्यासंभव एव स्यादिति।

तत्रेति। तत्र पूर्णायां न तुलुप्तायां, तस्यां तु धर्मस्यानुगामित्वबिम्बप्रतिबिम्बभावाः केचन। अतोऽनुगामित्वाद्यतिरिक्ता भेदा लुप्तयां न भवन्ति। सर्वैरपि ते क्यच् क्यङ् क्विप् णमुलादि प्रत्ययैः साध्याः प्रकारान्तरेण। तत्र धर्मः शुद्धः अध्यवसितः। अध्यवसायोऽपि श्लेषेण वा प्रकारान्तरेण वा। क्वचित्तस्य सकृन्निर्देशः। क्वचित्पृथङ् निर्देशः। तत्र सकृन्निर्देशे क्वचिदनुगामी एकरूपः। कुहचिदसन्नपि उपचरितः। कुत्रचित् समासान्तरमाश्रितः। क्वचिच्छ्लिष्टः। कुहचन केवल शब्दात्मकः। क्वचन समासान्तरमाश्रितः। पृथङ्निर्देशे सम्बन्धिभेदमात्रं न तु स्वरूपतो भिन्नं प्रतिवस्तूप

### बालक्रीड़ा

उपमा के होते हैं। इससे और अधिक भेदों का कुशाग्रीय घिषण कुश के अग्रभाग के सदृश पैनी बुद्धिवाले विद्वान् लोग उद्भावन करें।

वहाँ पूर्णोपमा में (लुप्तोपमा में नहीं वहाँ तो केवल अनुगामी और बिम्बप्रतिबिम्बभावरूप ही धर्म होता है) कहीं अनुगामी धर्म होता है। कहीं केवल बिम्बप्रतिबिम्बभावापन्न रहता है। कहीं उभय रूप रहता है। कहीं पर वस्तु प्रतिवस्तुभाव से करम्बित बिम्बप्रतिबिम्बभाव को आपन्न धर्म रहता है। कहीं पर असत् हुआ भी उपचरित होता है। कहीं पर केवल शब्दात्मक रहता है। यहाँ का तत्त्व मधुसुदनी में अधिक देखेंगे।

यहाँ यह रहस्य है। यह उपमा साधारण धर्म से सम्बन्ध होने पर प्रकृतो में, या अप्रकृतों में या प्रकृत एवं अप्रकृत में होती है। क्योंकि साधर्म्य अर्थात् साधारण धर्म निबन्धन सम्बन्ध ही उपमा का स्वरूप है। धर्म जो है वह द्रव्य में रहता है और यावदाधार गामी है। तथा भाव एवं अभाव रूप से दो प्रकार का है। उनमें अभाव रूप एक प्रकार का है। और भावरूप वह धर्म जातिरूप, गुणरूप एवं क्रियारूप है। इसके सिवाय इन तीनों में से जिसका कोई भी रूप नहीं है वह शुद्ध धर्ममात्र है। जैसे—

सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव।

उस महाभुज राजा ने नवोढा वधू की तरह अचिरोपनता मेदिनी का, सहसा उपभोग करने पर संभव है उद्विग्न हो जाय इसलिए सावधानी से उपभोग किया।

## मधुसूदनी

मावत् वस्तुप्रतिवस्तुभावमापन्नः। क्वचित् धर्मितो भिन्नं स्वरूपतो भिन्नं दृष्टान्तवत् बिम्बप्रतिबिम्बभावमापन्नः। क्वचिन् मिश्रितः। इत्यनेकविधः।

इदं रहस्यम्। इयमुपमा प्रकृताप्रकृतयोः प्रकृतयोरप्रकृतयोः साधारणेन धर्मेण सम्बन्धे सति भवति। यावता हि साधारणधर्मनिबन्धनमुपमास्वरूपम्। धर्मश्च द्रव्याश्रितो यावदाधारगामी। स च भावाभावरूपतया द्विविधः। तत्र अभाव एकरूपः। भावरूपश्च स धर्मः जातिरूपः, गुणरूपः, क्रियारूपः। एतदतिरिक्तमपि धर्ममात्रं, जातिगुणक्रियासु यस्य एकमपि रूपं नास्ति। यथा—

यथासदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति।
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव।

इत्यत्र अचिरोपनताख्यः सम्बन्धः संयोगादिगुणमध्यपाठाभावाद्धर्ममात्रम्। एवं चतुर्विधः। अभावेन सह पञ्चविधः। इति सर्वसम्मतः पक्षः।

जातेः साधारणधर्मत्वेऽपि सादृश्यनिमित्तत्वाभावान्नोपमाङ्गत्वम्। तज्जातीयत्वं हि तत्वं स्यान्न तु तत्सदृशत्वं, घटत्वजातिमत्वं हि घटत्ववत्वं स्यान्नतु घटसदृशत्वं स्यात्। अन्यच्च जातेः प्रत्येकं व्यक्तिषु सर्वात्मना परिसमाप्तत्वात् शुक्लतरः शुक्लतम इति गुणेषु, गच्छतितरां गच्छतितमामिति क्रियासु च तारतम्यस्य दर्शनात्, गोतरः गोतम इति जातिष्वदर्शनाच्च तत्र तरतमहेतुत्वाभावाद्विशेषाभावः। यत्र किंचित्सामान्यं कश्चिद्विशेषः स विषयः सदृशताया इति सिद्धान्तात्, गुणानां

## बालक्रीड़ा

यह अचिरोपनतत्व मेदिनी और वहू में रहने वाला धर्म, संयोगादि गुणों में पाठ नहीं होने से गुण नहीं है। नित्य और अनेक समवेत नहीं होने से जाति भी नहीं है। साध्य नहीं होने से क्रिया भी नहीं है किन्तु इनसे भिन्न धर्ममात्र है। इस तरह भावरूप धर्म चार प्रकार का हुआ अभाव से मिला देने पर ५ प्रकार का है। यह सर्व सम्मत पक्ष है।

जाति साधारण धर्म होने पर भी सादृश्य की निमित्त नहीं हो सकती है सादृश्य का प्रयोजक नहीं बन सकती है अतः उपमाङ्ग नहीं है क्योंकि तज्जातीय का मतलब वह है न कि उसके सदृश, जैसे घटत्व जाति वाला घटत्ववान् होगा न कि घट सदृश। एक बात और भी है कि प्रत्येक जाति स्वानुगत प्रत्येक व्यक्ति में समान रूप से रहती है अतः "शुक्लतर शुक्लतम" इत्यादि गुणों की "गच्छतितरां गच्छतितमां" इत्यादि क्रियाओं की तरह उसमें तरतम भाव नहीं हो सकता है फलतः विशेष रूप वह नहीं है। किन्तु जहाँ कुछ सामान्य हो और कुछ विशेष हो वह उपमा का विषय होता है। अतः जाति उपमा का अंग साधारण धर्म नहीं हो सकती है।

गुणों का गुण या क्रिया साधारण धर्म नहीं हो सकता है और क्रिया का भी गुण और क्रिया साधारण धर्म नहीं हो सकती है क्यों कि वे गुण और क्रिया एक मात्र द्रव्य के ही धर्म हैं। शुद्ध गुण क्रिया से अतिरिक्त धर्म गुणादि का भी साधारण धर्म हो सकता है। वह

## मधुसूदनी

क्रियाणां च न गुणक्रियारूपः साधारणो धर्मः तयोर्द्रव्यैकधर्मत्वात्, गुणादेरपि धर्ममात्रं साधारणं भवति। तस्य धर्ममात्रस्य क्वचिद् द्रव्यवृत्तित्वेऽपि न गुणत्वं गुणानां परिगणितत्वात्, गुणक्रियावृत्तित्वाच्चेति। एवं धर्मः गुणरूपः क्रियारूपः, एतद्भिन्नं धर्ममात्रमभावश्चेति चतुर्विध इति अलंकाररत्नाकरकाराणां मतम्।

चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यप्रक्रियया जातिगुणक्रियाद्रव्यरूपो धर्मो भवति। ननु जातौ तरतमभावो नास्ति तस्याः प्रत्येकपरिसमाप्तत्वात्। गुणे गुणानङ्गीकारात्। क्रिया द्रव्यमेवाश्रित्य तिष्ठति। नहि स्वं स्वस्मिन् तिष्ठतीति द्रव्यमपि न कोऽपि धर्मः। इति चेन्न विरोधः। धर्मधर्मिभावस्य आश्रयाश्रयिभावेन सत्वात्। अतएव धर्मधर्मिभावो न वास्तवः। जात्याद्यात्मनो धर्मिणोऽपि कदाचिदन्याश्रितत्वे धर्मत्वात्। यथा

यान्त्या मुहुर्वलितकन्धरमाननं
तदावृत्तवृन्तशतपत्रनिभं वहन्त्या ॥

इत्यत्र वलितत्वावृत्तत्वयोर्धर्मयोः कन्धरावृन्तयोर्धर्मिणोर्वर्तमानत्वम्। कन्धरावृन्तयोर्धर्मिणोरपि आननशतपत्रापेक्षया धर्मत्वमेव। अत एवोक्तं "स भावो न वास्तवः" इति। एवं च तदतिरिक्तं धर्ममात्रमपि साधारणं न किंचिद्वाच्यम्। चतुष्टय्या एव शब्दानां प्रवृत्तेरुक्तत्वादिति विमर्शिनीकाराणां मतम्।

## बालक्रीड़ा

शुद्ध धर्म किसी द्रव्य में रहकर गुण रूप नहीं होता है। क्योंकि गुण परिगणित है। इसके सिवाय वह शुद्ध धर्म गुणाक्रिया में रह सकता है। इस तरह साधारण धर्म गुण, क्रिया, शुद्धधर्म एवं अभाव चार प्रकार का है यह अलंकाररत्नाकरकारका मत है।

चतुष्टयी शब्दों की प्रवृत्ति है यह महाभाष्यकार का मत है। इस प्रक्रिया के अनुसार जाति, गुण, क्रिया एवं द्रव्य साधारण धर्म होता है। प्रश्न=जाति में तरतम भाव नहीं होता है क्योंकि वह प्रत्येक में परिसमाप्त है। गुण में गुण नहीं रहता। क्रिया द्रव्याश्रित ही रहती है। द्रव्य भी धर्म नहीं हो सकता हैं क्यों कि अपने में अपने आप रह नहीं सकता हैं। कितना ही बुद्धिमान् क्यों न हो कोई, किन्तु अपने कन्धे पर अपने नहीं चढ़ सकता है।

उत्तर। यह ठीक नहीं है। यह धर्म धर्मिभाव आश्रय आश्रयिभाव को लेकर के है। इसीलिए वह वास्तविक नहीं है, क्योंकि जाति, गुण, क्रिया एवं द्रव्य रूप धर्मी भी किसी अन्य के आश्रित होने पर धर्म हो जाते हैं। जैसे=मेरी तरफ देखने की इच्छा से वह नायिका बार २ ग्रीवा को घुमाती हुई जा रही थी। उस समय उसका मुख बार २ आवर्त्तित वृन्त (वृन्त प्रसवबन्धन है अर्थात् पुष्प एवं फल जिस स्थान पर उगते हैं उस स्थान के जोड़ को वृन्त कहते हैं) वाले कमल की शोभा को प्राप्त कर रहा था।

यहाँ वलितत्व और आवृत्तत्व दो धर्म कन्धरा (ग्रीवा) और वृन्त में है। और कन्धरा तथा वृन्त भी मुख और कमल में धर्मरूप है। इसीलिए कहा था कि वह धर्म-

तत्राद्यो यथा—

'शरदिन्दुरिवाह्लादजनको रघुनन्दनः ।
वनस्रजा विभाति स्म सेन्द्रचाप इवाम्बुदः' ॥

अत्र पूर्वार्धे सकृन्निर्देशाद्धर्मोऽनुगामी ।

केवलबिम्बप्रतिबिम्बभावापन्नः 'कोमलातपशोणाभ्र—' इत्यत्र बोध्यः ।

द्वितीयार्धे तूभयम् (विशेषभानरूपोऽनुगामी, इन्द्रचापवनस्रजोर्बिम्बप्रतिबिम्ब-भावः सादृश्यमूलकाभेदाध्यवसाय इति यावत् तद्विषयश्चेत्युभयरूप इत्यर्थः)

तृतीयोऽपि त्रिविधः—विशेषणमात्रयोर्विशेष्यमात्रयोस्तद्युगलयोर्वा वस्तुप्रतिवस्तुभावेन करम्बितः ।

### मर्मप्रकाशः

उभयं अनुगामित्वं बिम्बप्रतिबिम्बभावं च । द्वितीयार्धे तु वनस्रजा विभाति इत्यादौ । वनस्रजा आपादतलावलम्बिमालया । अयं चोक्तान्तर्गतो नातिरिक्तो भेदः । अत एव वक्ष्यति—तृतीयोऽपि त्रिविध इति ।

### मधुसूदनी

शरदिति । अत्र पूर्वार्धे धर्म आह्लादजनकत्वमेकरूपः सकृन्निर्देशात् ।

द्वितीयेति । द्वितीयार्द्धे शरदिन्दुपद्यस्योतरार्द्धे उभयं बिम्बप्रतिभावमनुगा-मित्वञ्चापन्नो धर्मः । तथाहि—विशेषेण भानं रघुनन्दनाम्बुदयोरनुगामी । वनस्रग् रघुनन्दने, इन्द्रचापोऽम्बुदे । एवमयं तयोः बिम्बप्रतिबिम्बभावमापन्नः । इति ।

### बालक्रीड़ा

धर्मिभाव वास्तविक नहीं है । और इसके सिवाय शुद्ध धर्म कोई वस्तु नहीं है । क्योंकि चतुष्टयी शब्दों की प्रवृत्ति है । यह विमर्शिनीकार का मत है ।

उन धर्मों में प्रथम का उदाहरण जैसे—शरद्‌ऋतु के इन्दु की तरह आह्लाद करने वाले रघुनन्दन हैं ।

यहाँ पूर्वार्द्ध में आह्लादजनकत्व धर्म का सकृन्निर्देश है एक बार कथन है अतः वह धर्म अनुगामी है ।

"कोमलातशोणाभ्र" इसमें केवल बिम्बप्रतिबिम्बभावापन्न धर्म है ।

वनमाला पहिने हुए भगवान् रामचन्द्र ऐसे सुन्दर मालूम पड़ते हैं जैसे इन्द्रधनुष से मेघ सुन्दर होता है ।

यहाँ उत्तरार्ध में विभातिपदार्थ सुन्दरता अम्बुद और रघुनन्दन में अनुगामी है । और वनमाला एवं इन्द्रधनुष में बिम्बप्रतिबिम्बभावापन्न है ।

तीसरा भी तीन प्रकार का है । विशेषणमात्र में स्थित १, या विशेष्यमात्र में

तत्राद्यो यथा—

'चलद्भृङ्गमिवाम्भोजमधीरनयनं मुखम् ।
तदीयं यदि दृश्येत कामः क्रुद्धोऽस्तु किं ततः ॥

अत्र चलनाधीरत्वयोर्विशेषणयोर्वस्तुत एकरुपयोरपि शब्दद्वयेनोपादानाद्वस्तुप्रतिवस्तुभावः । तद्विशेषणकयोश्च भृङ्गनयनयोर्बिम्बप्रतिबिम्बभावः । इति तत्करम्बितोऽयमुच्यते ।

तत्र द्वितीयो यथा—

'आलिङ्गितो जलधिकन्यकया सलीलं
लग्नः प्रियंगुलतयेव तरुस्तमालः ।
देहावसानसमये हृदये मदीये
देवश्चकास्तु भगवानरविन्दनाभः ॥'

अत्रालिङ्गितत्वलग्नत्वयोर्वस्तुप्रतिवस्तुभावः । तद्विशेष्यकयोश्च जलधिकन्याप्रियंगुलतयोर्बिम्बप्रतिबिम्बभावः । इत्ययमपि तत्करम्बित एव ।

तत्र तृतीयो यथा—

'दशाननेन दृप्तेन नीयमाना बभौ सती ।
द्विरदेन मदान्धेन कृष्यमाणेव पद्मिनी ॥

बालक्रीड़ा

स्थित २, या दोनों में स्थित ३ वस्तु प्रतिवस्तुभाव से करम्बित बिम्बप्रतिबिम्बभावापन्न ।

उनमें पहिला जैसे=चलद्भृंग कमल की तरह अधीरनयन उसका मुख सामने दिखाई पड़े तब कामदेव क्रुद्ध भी हो जाय तो क्या; उससे कुछ बनता विगडता नहीं है ।

यहाँ चलन और अधीरत्व विशेषणों में वस्तुतः एक अर्थ का शब्दद्वय से उपादान कर देने से वस्तुप्रतिवस्तुभाव है । और चलन और अधीरत्व विशेषण हैं जिनमें, उन भृङ्ग और नयन में बिम्बप्रतितम्बभाव है । इसलिए वस्तु प्रतिवस्तुभाव से युक्त बिम्बप्रतिबिम्बभाव है ।

उनमें दूसरा जैसे=प्रियंगुलता (प्रियंगुर्महिलाह्वया इत्यमरः) महिलाह्वयलता संलग्न तमालतरु की तरह लीला के साथ जलधि कन्या से आलिङ्गित भगवान् अरविन्दनाभ देव मेरे हृदय में देहावसान के समय प्रतिभात होवें ।

यहाँ लग्नत्वालिङ्गितत्व में वस्तुप्रतिवस्तुभाव है । उनके विशेष्य प्रियंगुलताजलधिकन्या में बिम्बप्रतिबिम्बभाव है । इस तरह यह भी तत्करम्बित ही है । पूर्व में विशेषण थे यहाँ विशेष्य है ।

उनमें में तीसरा जैसे=दृप्त दशानन से नीयमाना सती पतिव्रता सीता मदान्ध हस्ती से कृष्यमाणा पद्मिनी की तरह मालूम पड़ रही है ।

अत्र विशेषणयोर्दृप्तत्वमदान्धत्वयोर्विशेष्ययोश्च नीयमानत्वकृष्यमाणत्व-योर्वस्तुप्रतिवस्तुभावेनोभयतः संपुटितो दशाननद्विरदयोर्बिम्बप्रतिबिम्बभावः। इत्ययमपि तत्करबिम्बतः।

विमलं वदनं तस्या निष्कलङ्कमृगाङ्कति' इत्यत्र वैमल्यनिष्कलङ्कत्व-योर्वस्तुत एकरूपयोर्बिम्बप्रतिबिम्बभावनिर्मुक्तं वस्तुप्रतिवस्तुभावमापन्नयोरुप-मानिष्पादकत्वं यद्यस्ति तदा शुद्धं वस्तुप्रतिवस्तुभावमापन्नोऽप्येष षष्ठो धर्मः। न च 'कोमलातपशोणाभ्रसंध्याकालसहोदरः' इत्यादौ यतिसंध्याकालयोरुप-

## मर्मप्रकाशः

यद्यस्ति तदेत्यनेनारुचिः सूचिता। तद्बीजं तु—एकोप्यर्थो भिन्नशब्देनोपात्तो भिन्न इव प्रतीयते। अत एव 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इत्यादौ 'रक्त एवास्तमेति च' इति पाठे दुष्टतेति प्राञ्चः। प्रकृते संबन्धिभेदादपि भेदप्रत्ययस्तयोः। भिन्नरूपेण प्रतीयमानस्य च न साधारणता। साधारणीकरणस्य च न कश्चिदुपायः, विना विम्बप्रतिबिम्ब-भावापन्नैकधर्मसंबन्धित्वम्। तथा च शब्दाद्भेदेन प्रत्यये, संबन्धिभेदाच्च भेदप्रत्ययं, बिम्बप्रति-बिम्बभावापनैकधर्मसम्वन्धित्वेन तयोरभेदाध्यवसाये साधारणत्वमस्येति कथं शुद्धस्योपमानि-ष्पादकत्वम्। अत एव प्राञ्चः बिम्बप्रतिबिम्बभावकरम्बित एवायमित्याहुरिति। षष्ठ इति।

## मधुसूदनी

शुद्धमिति। शुद्धं केनापि न करम्बितं वस्तु प्रतिवस्तुभावमित्यन्वयः। एकस्यैव धर्मस्य सम्बन्धिभेदेन द्विरुपादानं वस्तुप्रतिवस्तुभावः। स तु शुद्धो न संभवतीति चित्रमीमांसायां दीक्षितानामुक्तिं कटाक्षयितुमियमुक्तिः।

## बालक्रीड़ा

यहाँ विशेषण दृप्तत्व मदान्धत्व, और विशेष्य नीयमानत्व और कृष्णमाणत्व में स्थित वस्तुप्रतिवस्तुभाव से उभयतः सम्पुटित दशानन और द्विरद में बिम्बप्रतिबिम्बभावः है। इस तरह यह भी उससे करम्बित है।

उसका विमल वदन निष्कलङ्क मृगाङ्क के सदृश है। यहाँ पर वैमल्य और निष्कलंकत्व एकरूप हैं।

अतएव ये केवल वस्तुप्रतिवस्तुभाव को आपन्न प्राप्त हैं। अर्थात् अकरम्बित बिम्बप्रतिबिम्बभाव इनमें नहीं हैं उससे विनिर्मुक्त हैं। अतएव शुद्ध है अगर ये विमलत्व निष्कलंकत्व धर्म उपमा के निष्पादक हो जाते हैं तब केवल बिम्बप्रतिबिम्बभावापन्नधर्म की तरह केवल वस्तुप्रतिवस्तुभावपन्न धर्म नाम से यह छठा एक भेद और हो सकता है।

प्रश्न—"कोमलातपशोभाभ्रसन्ध्याकालसहोदरः" इत्यादि उदाहरणों में यति और सन्ध्याकाल की उपमा में धर्मान्तर की प्रतीति नहीं होती है अतः कुंकुमालेप कषायवसन

मायां धर्मान्तरस्यानवगमात्कुङ्कुमालेपकषायवसनयोः कोमलातपशोणाभ्रयोश्च विम्बप्रतिविम्बभावो यथावश्यमभ्युपेयः, प्रकृते तु न तथा वस्तुप्रतिवस्तुभावः वदनमृगाङ्कयोः सौन्दर्यरूपसाधारणधर्मस्य प्रतीयमानत्वेन धर्मान्तरानपेक्षणादिति वाच्यम् । एवं तर्हि 'यान्त्या मुहुर्वलितकंधरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या' इति भवभूतिपद्येऽपि प्रतीयमानेन सौन्दर्येणैव सामान्येन निर्वाहे कंधरावृन्तयोर्विम्बप्रतिविम्बभावस्य वलितत्वावृत्तत्वयोर्वस्तुप्रतिवस्तुभावस्य च सकलैरालंकारिकैः स्वीकारो विरुद्धः स्यात् ; अतो यथास्थितमेव साधु ।

मर्मप्रकाशः

प्रकृते तु न तथेति । तथा तु प्रकृते नेत्यर्थः ।

मधुसूदनी

धर्मान्तरस्यानवगमादिति । यतिसंध्याकालयोरुपमायां धर्मान्तरस्य विम्बप्रतिविम्बभावमापन्नधर्मादतिरिक्तस्य धर्मस्यानवगमादित्युक्तिरसंगतैव । यतः नारदस्य शुकदेवप्रभृतीनां च गोदोहनमात्रं यावद् गृहस्थानां गृहेषु स्थायित्वस्य प्रसिद्धत्वात् । सन्ध्याकालस्यापि अहोरात्रयोः संधिकालस्यापि द्विमुहूर्तव्यापित्वोक्तेश्च अचिरस्थायित्वं तयोः साधारणं धर्मान्तरमवगम्यते एवेति । अतः विम्बप्रतिविम्बभावो नाव श्यमभ्युपेयः । इति "अवश्याभ्युपेयत्वो"क्तिरपि न समीचीनेति ।

बालक्रीड़ा

तथा कोमलातप शोणाभ्र में विम्बप्रतिविम्बभाव अवश्य मानना पड़ेगा । किन्तु प्रकृत विमलं वदनं में वस्तुप्रतिवस्तुभाव अवश्य अभ्युपेय नहीं है । क्योंकि वदन और मृगाङ्क में सौन्दर्यरूप अनुगामी धर्म की प्रतीति होती है अतः शुद्ध वस्तुप्रतिवस्तुभावरूप धर्मान्तर की अपेक्षा नहीं है ।

उत्तर=यदि ऐसी भावना से प्रतीत धर्म के सहारे उपमा की सिद्धि मान ली जायगी तब तो "यान्त्या मुहुः" इस भवभूति के पद्य में भी प्रतीयमान सौन्दर्य साधारणधर्म के द्वारा ही उपमा का निर्वाह हो सकता था तब सकल आलंकारिकों द्वारा स्वीकृत कन्धरा एवं वृन्त में विम्बप्रतिविम्बभाव तथा वलितत्व एवं आवृत्तत्व में वस्तुप्रतिवस्तुभाव विरुद्ध ही हो जायगी । अतः यथा स्थित ही साधु है ।

सच शुद्धो न संभवति, किन्तु विशेषणतया विशेष्यतया सर्वत्र बिम्बप्रतिविम्बभाव करम्बितः, वह वस्तुप्रतिवस्तुभाव शुद्ध मिलना संभव नहीं है । अतः वह सभी जगह विशेषण रूप से या विशेष्यरूप से विम्बप्रतिविम्बभाव से करम्बित ही रहेगा । यह चित्रमीमांसाकार का कथन ठीक नहीं है । क्योंकि जैसे यान्त्या में सौन्दर्य धर्म के प्रतीत होने पर भी बिम्बप्रतिबिम्ब एवं वस्तुप्रतिवस्तुभाव माना है उसी तरह प्रकृत में भी समझना चाहिए ।

उपचरितो यथा—

'शतकोटिकठिनचित्तः सोऽहं तस्याः सुधैकमयमूर्तेः ।
येनाकारिषि मित्रं, स विकलहृदयो विधिर्वाच्यः ॥'

एषा सीतां विवासितवतः स्वात्मगता रामस्योक्तिः । अत्र काठिन्यं पार्थिवो धर्मश्चित्ते उपचरितः ।

मधुसूदनी

काठिन्यं धर्मे उपचरित इति विचार्यते। आह्लादकत्वं माधुर्यं श्रृंगारे द्रुतिकारणमिति काव्यप्रकाशे द्रुतिकारणमित्युक्त्या प्रतिभाति, यद् अद्रुतस्य चेतसो द्रुतेः कारणं माधुर्यमिति। द्रुतस्य द्रुत्यर्थं प्रवृत्तिर्नहि भवति किन्त्वद्रुतस्य तदर्था प्रवृत्तिः। एवं हि अद्रुतं नाम कठिनमपि चित्तं भवति तत एव द्रुतिकारणत्वोक्तिः संगता । चित्तद्रव्यं हि जतुवत्स्वभावात्कठिनात्मकम्। तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते। इत्युक्तिश्च

अतएव; वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हसीति प्रसिद्धिश्चेति ।

बालक्रीडा

यहाँ आलोचन है कि यति और संन्ध्याकाल की उपमा में बिम्बप्रतिबिम्बभाव से अतिरिक्त धर्म की प्रतीति नहीं होती है अतः इनकी उपमा में बिम्बप्रतिबिम्बभाव मानना आवश्यक है। यह पण्डितराज का कथन गड़बड़ है। क्योंकि जैसे नारद एवं शुकदेव प्रभृति यतियों का गृहस्थों के घरों में गोदोहन काल तक थोड़ी देर ठहरना प्रसिद्ध है उसी तरह सन्ध्याकाल अर्थात् अहोरात्र के संधिकाल का भी दो ही मुहूर्त तक थोड़ी देर ठहरना प्रसिद्ध है इस तरह अचिरस्थायित्व रूप अन्य साधारणधर्म की यति और संन्ध्याकाल में प्रतीति हो रही है तब अन्य धर्म की प्रतीति नहीं होने से कुंकुमालेप काषायवसन तथा कोमलातप शोणाभ्र में विम्बप्रतिविम्बभाव अवश्य मानना पड़ेगा यह कहना कैसे।

अतः सिद्ध है=जैसे—दृष्टान्त में केवल बिम्बप्रतिबिम्बभाव प्राप्त है उसी तरह प्रतिवस्तूपमा में केवल वस्तुप्रतिवस्तुभाव प्राप्त होता है। फलतः वह शुद्ध नहीं मिल सकता है वह चित्रमीमांसाकार का कथन भी शिथिल है।

शतकोटि (वज्र) सदृश कठिन हृदय मुझको सुधामयमूर्ति उस नायिका का मित्र जिसने बनाया वह विधि विकल है अतएव वाच्य है निन्दनीय है।

यह सीता को विवासित करनेवाले राम की अपने विषय में उक्ति है। यहाँ काठिन्य पार्थिव धर्म है चित्त में उसका उपचार किया है।

यहाँ "चित्त में काठिन्य उपचरित है" यह विचारणीय है। क्योंकि चित्त में काठिन्य स्वाभाविक नहीं हो तब उपचरित कहना संगत हो सकता है। किन्तु साहित्यदर्पण एवं लोक प्रमाण से चित्त की कठिनता स्वाभाविक भी है। जैसे= (स्वाभाविकानाविष्टत्वात्मक

केवलशब्दात्मको यथा—

'यत्र वसन्ति सुमनसि, मनुजे, पशौ च शीलवन्तः सर्वत्र समाना मन्त्रिणो मुनय इव ।'

अत्रोपमानोपमेयगतस्यार्थस्यैकस्याभावाच्छब्द एव धर्मः ।

एवमेतेषां धर्माणां व्यामिश्रणं च संभवति ।

मधुसूदनी

समाना इति । अन प्राणने इत्यस्माद् घञि आन इति सम आनः समानस्तस्य भावस्तत्त्वम् । मुनिषु सर्वत्र समानत्वम् सर्वप्राणिविषये समप्राणदर्शित्वं । मन्त्रिषु मानेन प्रमाणेन सह न्यायकरणे वृत्तित्वं समानत्वम् ।

बालक्रीड़ा

काठिन्यपरित्यागेन सहृदयचित्तार्द्रप्रायत्वं द्रवीभावः) गूढ़ विषयों में संचाराक्षमत्व रूप स्वाभाविक काठिन्य के परित्याग से सहृदय (प्रतिभाशाली) के हृदय की आर्द्रता का नाम द्रवीभाव है । यहाँ चित्त में स्वाभाविक काठिन्य सिद्ध होता है ।

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥

महापुरुषों के चित्त वज्र से भी कठोर हैं और कुसुम से भी मृदु हैं । उनको हर एक नहीं समझ सकता है । यह लोक प्रमाण है ।

केवल शब्दात्मक साधारण धर्म जैसे—जिस राजा के राज्य में मन्त्रिलोग मुनियों की तरह सुमन देवताओं में (सुपर्वाणः सुमनसः इत्यमरः) या सुमन विद्वानों में मनुज में, और पशु में सभी में शीलवान् हैं और समान हैं । मुनि लोग सभी में शीलवान् रागद्वेषरहितत्वरूप-भाव वाले हैं । और सम तुल्य है आन प्राणन जिनका ऐसे । अर्थात्—

सभी रहें सुख से यहाँ, सभी रहें नीरोग
सब देखें कल्याण को, दुखी न होवें लोग ।

यही सम भावना जिनका जीवन है । मन्त्रि लोग सभी में शीलवान् नियमवान् है सभी के साथ नियम का पालन करते हैं । और सभी में समान है मान प्रमाण जिनका ऐसे । अर्थात् प्रमाणों से ही सबके साथ न्याय करते हैं । (शीलः स्वभावो नियमश्च) यह श्रीधरी भागवत टीका और तत्त्व बोधिनी सिद्धान्त कौमुदी की टीका में है । मंत्रिपद के अर्थ के साथ समान शब्द की योजना करने में समान के स्थान में स आदेश हो गया है ।

यहाँ उपमान मुनि और उपमेय मंत्री में शील और समान शब्द का एक अर्थ नहीं है भिन्न-भिन्न अर्थ है किन्तु शब्द एक हैं वही यहाँ समान धर्म हैं ।

इस प्रकार बतलाये हुए धर्मों का परस्पर में व्यामिश्रण भी संभाव्य है । जैसे—हे

यथा—

'श्यामलेनाङ्कितं भालं बाले ? केनापि लक्ष्मणा ।
मुखं तवान्तरासुप्तभृङ्गफुल्लाम्बुजायते ॥'

अत्र भालगताङ्कप्रसुप्तभृङ्गौ बिम्बप्रतिबिम्बभावमापन्नौ क्यङर्थे आचारेऽनुगामिन्यभेदमापद्य स्थितौ ।

यथा वा—

'सिन्दूरारुणवपुषो देवस्य रदाङ्कुरो गणाधिपतेः ।
संध्याशोणाम्बरगतनवेन्दुलेखायितः पातु ॥'

मधुसूदनी

श्यामेति । मुखमम्बुजायते मुखमम्बुजमिवाचरतीति क्यङर्थ आचार मुखे अम्बुजे चानुगामी । तत्र मुखे भालगतश्यामललक्ष्माङ्कत्वम्, अम्बुजे स्वान्तरासुप्तभृङ्गत्वं धर्मौ । तद्धर्मविशिष्टाम्बुजकर्तृकाचारसदृशः तद्धर्मविशिष्टमुखकर्तृकाचारः । एवं बिम्बप्रतिबिम्बभावमापन्नौ तौ धर्मौ क्यङर्थे आचारेऽनुगामिनि एकतां प्राप्तौ ।

सिन्दूरेति । गणाधिपते रदांकुरोऽम्बरगतनवेन्दुलेखायितः नवेन्दुलेखा इवाचरन् पातु । क्यङर्थं आचारो रदांकुरे नवेन्दुलेखायां चानुमामी । कीदृशो गणपतिः सिन्दूरेण अरुणं वपुर्यस्य सः । कीदृशमम्बरं संध्यया शोणम् ।

अत्र वस्तुत एकरूपयोरपि सम्बन्धिनोऽम्बरस्य गणपतेश्च भेदाद् द्विरुपात्तयोः शोणारुणयोर्वस्तुप्रतिवस्तुभावः ।

तत्रोक्तभावमापन्नयोः शोणारुणयोर्विशेषणतया स्थितौ सन्ध्यासिन्दूरौ बिम्बप्रतिबिम्बभावं गतौ । तादृशयोस्तयोः विशेष्यतया स्थितौ अम्बरगणाधिपौ बिम्वप्रतिबिम्वभावमापन्नौ ।

सन्ध्याहेतुकशोणत्वविशिष्टाम्बरगतनवेन्दुलेखाचारसदृशाचारवान् सिन्दूरजन्यारुण्यविशिष्टगणपतिसम्बन्धिरदाङ्कुरः पातु ।

बालक्रीड़ा

वाले ? मस्तक में किसी श्यामल चिह्न से अंकित हुआ तुम्हारा मुख जिसके भीतर भौंरा सोया हुआ है ऐसे खिले हुए कमल के सदृश आचरण करता है ।

यहाँ बिम्वप्रतिबिम्व भाव को प्राप्त हुए भालगत अंक और अम्बुज में प्रसुप्त भृंग क्यङ प्रत्ययार्थ अनुगामी आचार में अभिन्न होकर स्थित हैं । यहाँ बिम्बप्रतिबिम्ब भाव एवं अनुगामी धर्मों का मिश्रण है ।

और भी जैसे—सान्ध्य शोणिमा से शोण अम्बर में वर्त्तमान नवीन इन्दु लेखा के सदृश सिन्दूर से अरुण शरीर वाले देव गणेश जी का रदाङ्कुर (दाँतरूपी अंकुर) हमारी रक्षा करे ।

अत्र वस्तुप्रतिवस्तुभावमापन्नयोः शोणारुणयोः क्रमशो विशेषणतया विशेष्यतया स्थिताभ्यां सिन्दूरसंध्याभ्यां गणाधिपगगनाभ्यां च बिम्बप्रतिबिम्बभावमापन्नाभ्यां धर्माभ्यां संपादितविशिष्टधर्मेण सहाभेदेनावस्थितः क्यङर्थोऽनुगामी ।

क्वचिद्धेतुहेतुमद्भावेन । यथा—

खलः कापट्यदोषेण दूरेणैव विसृज्यते ।
अपायशङ्किभिर्लोकैर्विषेणाशीविषो यथा ॥

### मर्मप्रकाशः

गणाधिपगगनाभ्यामिति । गणाधिपगगनयोर्बिम्बप्रतिबिम्बभावे च बिम्बप्रतिबिम्बभावापन्नसिन्दूरसंध्याविशेषणकारुणत्वशोणत्वे वस्तुप्रतिवस्तुभावापन्ने एव साधारणधर्मं इति तयोरभेदेन विशिष्टधर्मेणेत्युक्तिरिति भावः । यद्यपि प्रसिद्धौज्ज्वल्यशोभाविशेषादिकमादायाप्याचारोऽनुगामी कर्तुं शक्यते तथापि कवितात्पर्यविषयतास्यैवेति बोध्यम् । तादृशशोभाविशेषयोरैक्यप्रतिपत्तये वानयोर्बिम्बप्रतिबिम्बभाव आवश्यक इत्याहुः केचित् ।

### मधुसूदनी

एवमत्र बिम्बप्रतिबिम्बभावकरम्बितो वस्तुप्रतिवस्तुभावः । तादृशवस्तुप्रतिवस्तुभावकरम्बितः पुनर्बिम्बप्रतिबिम्बभावः इत्येवं विशिष्टधर्मेण सह अभेदेन अवस्थितः क्यङर्थ आचारोऽनुगामी ।

अत्र वस्तुप्रतिवस्तुभावमापन्नयोः शोणारुणयोः क्रमशः विशेषणतया विशेष्यतया स्थिताभ्यां सन्ध्यासिन्दूराभ्यां गणाधिपगगनाभ्यां बिम्बप्रतिबिम्बभावमापन्नाभ्यां धर्माभ्यां सम्पादितविशिष्टधर्मेण सह अभेदेनावस्थितः क्यङर्थोऽनुगामी । इति पाठो मौलिकः साधीयान् । पूर्वं मुद्रितस्य त्वसंगतिं सर्व एव जानाति । इति सुधीभिर्विमृश्यम् । सम्पादित उद्भूत इत्यर्थः । विशिष्टो धर्मोऽस्माभिः प्रदर्शिते शाब्दबोधेऽनुसन्धानीयः ।

खल इति । यथा अपायशंकिलोककर्तृकं विषहेतुकमाशीविषकर्मकं दूरविसर्जनं तथा तादृशलोककर्तृकं कापट्यदोषहेतुकं खलकर्मकं दूरविसर्जनम् ।

### बालक्रीड़ा

यहाँ इन्दुलेखा उपमान एवं रदाङ्कुर उपमेय में उपमा है । इन दोनों के क्रमशः सम्बन्धी हैं संध्याकालीनशोणिमा सम्पन्न अम्बर एवं सिन्दूर जन्यारुण्य विशिष्ट गणाधिपति । इन में संध्या एवं सिन्दूर का बिम्बप्रतिबिम्ब भाव हैं । इनके विशेष्य शोणिमा एवं आरुण्य में वस्तु प्रतिवस्तु भाव है जो कि उक्त भाव से करम्बित है । इनके विशेष्य अम्बर एवं गणाधिपति में पुनः बिम्बप्रतिबिम्ब भाव है । जो कि उक्त करम्बित भाव से करम्बित है । उक्त करम्बित भाव करम्बित धर्म से अभेद को प्राप्त हुआ क्यङर्थ आचार अनुगामी धर्म है । यहाँ मिश्रितों का मिश्रण है ।

कहीं पर हेतुहेतुमद्भाव अर्थात् कार्यकारण भाव से धर्मों में साधारण्य है । जैसे=

अत्र कापट्यं विषं च बिम्बप्रतिबिम्बतां गतं दूरतो विसर्जनेऽनुगामिनि हेतुः।

यथा वा—

'रूपवत्यपि च क्रूरा कामिनी दुःखदायिनी।
अन्तः काटवसंपूर्णा सुपक्केवेन्द्रवारुणी॥'

अत्र रूपवत्त्वदुःखदायित्वयोर्द्वयोरनुगामिनोर्मध्ये युवतित्वसुपक्कत्वे क्रौर्यकाटवे च बिम्बप्रतिबिम्बभावमापन्ने रूपवत्व-दुःखदायित्वाभ्यां सह हेतु-

### मर्मप्रकाशः

अनुगामिनि हेतुरिति। तयोर्बिम्बप्रतिबिम्बभावं विना भिन्नप्रकरणकत्वेन दूरविसर्जने भेदप्रतीत्यानुगामित्वमेव न स्यादिति भावः।

### मधुसूदनी

रूपवतीति। अत्र कामिनी उपमेया। इन्द्रवारुणी उपमानम्। इन्द्रवारुणी सुपक्का अत एव रूपवती। कामिनी युवतिरत एव रूपवती। बालिकाया अवयवानां विकासाभावेन, वृद्धायास्तेषां ह्रासात् रूपवतीत्वं नास्तीत्यर्थः। तथात्वं युवत्या एव। इन्द्रवारुणी पक्षे रूपवत्यां हेतुः सुपक्कत्वमुपात्तम्। कामिनीपक्षे तद्धेतुः युवतीत्वं नोपात्तमिति आर्थः स हेतुः। इन्द्रवारुणी अन्तः काटव सम्पूर्णा अत एव दुःखदायिनी। कामिनी अन्तः क्रूरा अत एव दुःखदायिनी। तथा च अन्तःकाटवपूर्ण सुपक्वेन्द्र-वारुणीनिरूपितसादृश्यप्रयोजकदुःखदायिनीत्वरूपवतीत्वाश्रया क्रूरयुवतिकामिनी इति वाक्यार्थः। रूपवत्वं रूपमेव। दुःखदायित्वं दुःखमेव। एवं रूपं दुःखञ्चानु-गामिनौ धर्मौ। तयोर्मध्ये क्रौर्यं काटवं सुपक्वत्वं युवतित्वं च बिम्बप्रतिबिम्बभावेन

### बालक्रीड़ा

अपाय की शंका करने वाले लोग जैसे विष के कारण सर्प का दूर ही से त्याग कर देते हैं उसी तरह कपटता दोष के कारण खल का भी।

यहाँ आशीविषकर्मक दूरविसर्जन रूप हेतुमान् (कार्य) का हेतु है विष, और खल का दूरत्याग रूप कार्य का कारण है कपटता। इस तरह बिम्बप्रतिबिम्ब भाव को प्राप्त हुए कापट्य एवं विष, दूरतोविसर्जन रूप अनुगामी धर्म में हेतु हैं।

और भी जैसे=सुपक्व अतएव रूपवती किन्तु अन्तः कड़ुवापन से भरी हुई इंद्रायन जैसे दुःखदायिनी है वैसे ही युवति अतएव रूपवती कामिनी किन्तु क्रूरा है अतः दुःखदायिनी है।

यहाँ रूपवत्व और दुःखदायित्व अनुगामी धर्म हैं। इनके मध्य में रूपवत्व के साथ बिम्बप्रतिबिम्बभावापन्न युवतित्व एवं सुपक्वत्व का और दुःखदायित्व के साथ; बिम्बप्रतिबिम्ब

हेतुमद्भावेन मिश्रितानि। अपरेण तु शुद्धसामानाधिकरण्येन। एवमन्यैरपि व्यामिश्रणं बोध्यम्। प्रकारान्तरं च लक्ष्यानुसारेण सुधीभिः स्वयमुन्नेतुं शक्यम्।

'यथा लतायाः स्तबकानतायाः स्तनावननम्रे ? नितरां समासि।
तथा लता पल्लविनी सगर्वे ? शोणाधरायाः सदृशी तवापि ॥'

## मधुसूदनी

स्थिता धर्माः। एषां धर्माणां रूपदुःखाभ्यां सह हेतुहेतुमद्भावेन मिश्रणम्। बालिकायाः कामिनीत्वं न भवति वृद्धायास्तद् ध्रसति।

तथा च अत्र "अपरणे तु शुद्धसामानाधिकरण्येन" इति तु सुपक्वत्वयुवतित्वे प्रति अनवधानमेवेति बोध्यम्। अपरः कः पदार्थोऽवशिष्टो येन अपरेण इति कथनमावश्यकं स्यात्।

यथा लताया इति। हे स्तनाभ्यामवनम्रे ? प्रह्वीभूते कान्ते ? नितरामतिशयेन त्वं स्तकैर्गुच्छैरानताया भुग्नाया लतायाः समासि तुल्यासि। अत्र कान्ता उपमानम्। लता उपमेया। समशब्दः सादृश्योपस्थापकः। विशेषणयोः स्तनस्तवकयोर्बिम्बप्रतिबिम्बभावः। विशेष्ययोरानतावनम्रयोर्वस्तुप्रतिवस्तुभावः। एवं स्तना-

## बालक्रीड़ा

भावापन्न क्रौर्य एवं काटव का हेतु-हेतुमद्भाव से मिश्रण है। अतः अपर रूपवत्व के साथ उनका शुद्ध सामानाधिकरण्य है यह कहना ठीक नहीं है क्योंकि रूपवत्व का हेतु सुपक्वत्व एवं युवतीत्व है। तव शुद्धसामानाधिकरण्य किसके साथ होगा। हाँ जहाँ इन्द्रायन में रूपवत्व है वहाँ ही काटव भी है। और जहाँ कामिनी में रूपवत्व है वहाँ ही क्रूरत्व भी है इस तरह एक २ अधिकरण में दो २ धर्मों का शुद्ध सामानाधिकरण्य से व्यामिश्रण है इस प्रकार और-और धर्मो का भी और २ धर्मों के साथ व्यामिश्रण समझना चाहिए। प्रश्न= व्यामिश्रण के प्रकारों को बतलाना चाहिए। क्या २ प्रकार हैं। उत्तर=अन्य प्रकारों का सुधी लोग स्वयं उन्नयन कर सकते हैं। बतलाने की आवश्यकता नहीं है। प्रकारान्तर का उन्नयन जैसे=

हे स्तनों से झुकी हुई कान्ते ? तुम गुच्छों से झुकी हुई लता के अत्यन्त समान हो। यहाँ कान्ता उपमान है। लता उपमेया है। समशब्द सादृश्योपस्थापक है। विशेषण स्तन एवं स्तवक में विम्ब प्रतिविम्बभाव है। और विशेष्य अवनम्र एवं अवनत में वस्तुप्रतिवस्तु भाव है। अतः स्तनावनम्रत्व एवं स्तवकानतत्व विम्बप्रतिविम्बभावकरम्बितवस्तुप्रतिवस्तुभावापन्न साधारण धर्म है। यह समशब्दप्रतिपादित एक उपमा है।

इस तरह पूर्वार्द्ध में निराकांक्ष वाक्यार्थ सम्पन्न होता है किन्तु उत्तरार्द्ध में तवापि में तव के बाद अपि शब्द का प्रयोग और सगर्वे ? यह सम्बोधन साभिप्राय है अतः वाक्य साकांक्ष है। इतनी दोनों में विशेषता है।

अत्र स्तनावनम्राहं स्तबकानताया लताया उपमानमस्मीति गर्वं मा विदध्याः। यतः शोणाधराया उपमेयायास्तवापि पल्लविनी लतोपमानं

## मधुसूदनी

वनम्रत्वाभिन्नस्तबकानतात्वं विम्वप्रतिविम्बभावकरम्बितवस्तुप्रतिवस्तुभावापन्नः साधारणधर्मः। इयं समशव्दप्रतिपादितोपमैका।

इत्येवं निराकांक्षो वाक्यार्थः सम्पन्नो भवति। किन्तु उत्तरार्द्धे तवापीति तवेत्युत्तरमुपात्तोऽपिशव्दः सगर्वे इति सम्वोधनं च साभिप्रायमत आकांक्षामुत्थापयति। यत् हे सगर्वे ? अहं लताया उपमानमिति गर्वं मा समुद्वह यतः शोणाधरायास्तवापि शोणपल्लविनी लता उपमानं वर्त्तते। अत्र लता उपमानं, सगर्वा कान्ता उपमेया। सदृशीशव्द उपमोपस्थापकः। शोणत्वविशिष्टोऽधरः कान्ताया विशेषणम्। तद्विशिष्टः पल्लवो लताया विशेषणम्। शोणत्वमेकत्र शव्दोपात्तमितरत्राक्षेप्यमित्यन्यदेवत्। इदं शोणत्वं सम्वन्धिभेदाद् भिन्नं वस्तुतस्तु एकमेवेति वस्तुप्रतिवस्तुभावः। अधरपल्लवयोर्विम्वप्रतिविम्वभावः। तथा च वस्तुप्रतिवस्तुभावकरम्बितविम्वप्रतिविम्वभावापन्नं शोणपल्लवाभिन्नशोणाधरत्वं साधारणधर्मः। इयं सदृशीशव्दप्रतिपादितोपमा द्वितीया।

## वालक्रीड़ा

हे सगर्वे ? मैं लता की उपमान हूँ यह गर्व मत कर। क्योंकि शोणीधरा तुम्हारी भी शोण पल्लविनी लता उपमान है। यहाँ लता उपमान है और सगर्वा कान्ता उपमेया है। सदृशी शब्द उपमा का उपस्थापक है। शोणत्व विशिष्ट अधर कान्ता का और तद्विशिष्ट पल्लव लता का विशेषण है। इनमें एक जगह शोणत्व शाव्द है दूसरी जगह आर्थ है। यह शोणत्व सम्वन्धियों के भेद से भिन्न है वस्तुतस्तु एक है। इसलिए इसमें वस्तुप्रतिवस्तुभाव है। किन्तु अधर और पल्लव में विम्वप्रतिविम्वभाव है। अतः वस्तुप्रतिवस्तुभावकरम्बित-विम्वप्रतिविम्बभावापन्न शोणपल्लवाभिन्न शोणाधरत्व साधारण धर्म है यह सदृशी शव्दप्रतिपादित द्वितीया उपमा है।

इस तरह यह वाक्यार्थ निराकांक्ष सम्पन्न हो गया। कान्ता इव लता, लता इव कान्ता यह परस्परोपमा है। किन्तु उपमेयोपमा नहीं है क्योंकि एक ही धर्म के सहारे एक दूसरे का प्रतियोगी हो वह उपमेयोपमा होती है। जहाँ तो भिन्न-भिन्न धर्मो से वैसी स्थिति हो वहाँ उपमा होती है। अतः प्रकृत में उपमा ही है। भिन्न धर्म व्याख्या में पहिले दिखा दिये गये हैं।

इस तरह निराकांक्ष सम्पन्न पूर्वार्द्ध एवं उत्तरार्द्ध गत वाक्यों में निर्दिष्ट उपमाएँ यथा तथाऽनुगत वाक्यार्थोपमा के सम्पादक हैं जैसे = स्तवकानतत्वविशिष्टलतासम्बन्धि सादृश्य की आश्रया जैसी तुम हो वैसी ही शोणाधरत्वविशिष्टत्व त्सम्वन्धि सादृश्याश्रया शोण पल्लविनी लता हैं। यहाँ यथापद सन्निहित वाक्यार्थ उपमान हैं तथा पद सन्निहित वाक्यार्थ उपमेय है।

इसी बात को पण्डितराज ने लिखा कि=यहाँ स्तनावनम्रा मैं स्तनकावनता लता की उपमान हूँ। ऐसा गर्व मत करो। क्योंकि शोणाधरा उपमेय तुम्हारी भी शोण पल्लविनी

भवतीति वाक्यार्थे यथातथापदप्रतिपाद्या कान्तोपमानिका लतोपमेयिकोपमा-निष्पाद्या ।

निष्पादिके चास्यामुपमायां निरूपकतासंबन्धेनोपमेयगते द्वे उपमे

**मर्मप्रकाशः**

उपमा । निष्पादिके चेति । एवं च वाक्यार्थोपस्कारिके उपमेइत्यर्थः ।

**मधुसूदनी**

इत्येवं निराकांक्षो वाक्यार्थः सम्पन्नो भवति । कान्तेव लता, लतेव कान्तेयति इयं परस्परोपमा । न तु अन्योन्यप्रतियोगिकत्वविशिष्टा उपमेयोपमा । यतो हि तत्र एकेनैव धर्मेण अन्योन्यप्रतियोगिकत्वं भवति । अत्रोपमायां तु भिन्नाभ्यां धर्माभ्यां तद्भवति । अत उपमैव । भिन्नो धर्मौ तु पूर्वत्र व्याख्यायां निर्दिष्टौ ।

एवं निराकांक्षतया निष्पन्नयोर्वाक्यार्थयोर्मध्ये निर्दिष्टौ यथा तथा शब्दौ वाक्यार्थोपमां प्रयोजयतः । तथाहि—स्तवकानतत्वविशिष्टलतासम्बन्धिसादृश्याश्रया यथा त्वमसि, तथा शोणाधरत्वविशिष्टत्वत्सम्बन्धिसादृश्याश्रया शोणपल्लविनी लतेति । अत्र यथापदसन्निहितो वाक्यार्थ उपमानम् । तथापदसन्निहितो वाक्यार्थ उपमेयः ।

तदेतदुक्तं पण्डितराजेन=इति वाक्यार्थे यथा तथा प्रतिपाद्या विशिष्टकान्तोपमानिका विशिष्टलतोपमेयिका उपमा निष्पाद्येति ।

अत्र यत्तदोर्नित्यसम्बन्धात् यथोपष्टब्धार्थकतथाशब्दप्रयोगे यथा विशिष्टधर्मवती कान्ता तथा विशिष्टधर्मवती लतेति, उभयविशेष्यको बोधः । पश्चात् यत्तद्भ्यां बिम्बप्रतिबिम्बभावमापन्नयोः धर्मभूतयोरुपमयोः साधारण्यप्रत्ययात् साधारणधर्मप्रयोज्यं सादृश्यं कान्तालतयोर्निष्पद्यते इति अस्यां वाक्यार्थगतायामुपमायां स्थिते द्वे उपमे निष्पादिके इत्यन्वयः ।

अथाक्षरार्थः । निष्पादिके चेति । अस्यां यथा तथा प्रतिपाद्यायां वाक्यार्थगतायाम् । उपमायां समसदृशीशब्दाभ्यां प्रतिपादिते वस्तुप्रतिवस्तुभावमापन्ने अतएव साधारणधर्मतया स्थिते निरूपकता सम्बन्धेन कान्तालतोभयोपमानोपमेयगते द्वे उपमे निष्पादिके इति । "सादृश्यमुपमा" सामान्यतः तत्राश्रयत्वसम्बन्धेन सादृश्यमुपमेयगतं, निरूपकता सम्बन्धेन तदुपमानगतं भवति । यतः सादृश्यस्य निरूपकमुपमानमेवातस्तेन सम्बन्धेन तद्गतं तदिति सिद्धान्तः । प्रकृते च कान्तोपमानं पूर्वार्द्धे,

**बालक्रीड़ा**

लता उपमान है इन वाक्यार्थों में यथा तथा से प्रतिपाद्य विशिष्ट कान्तोपमानिका विशिष्ट लतोपमेयिका उपमा निष्पाद्या है सम्पाद्या है । यहाँ यत्तद का नित्य सम्बन्ध होने से यथोपष्टब्धार्थक तथा शब्द के प्रयोग में "जैसी विशिष्ट धर्मवती कान्ता है वैसी विशिष्ट धर्मवती लता है" इस तरह का उभय विशेष्यक बोध होता है ।

समसदृशशब्दाभ्यां प्रतिपादिते बिम्बप्रतिबिम्बभावमापन्ने साधारणधर्मतया स्थिते। तत्र निरूपकतासंबन्धेन पूर्वार्द्धे उपमानकान्तागतायामुपमायां प्रति-

### मर्मप्रकाशः

बिम्बप्रतिबिम्बभावमापन्ने इति। यद्यपि समसदृशशब्दाभ्यां प्रतिपादितोपमयोर्वस्तुप्रतिवस्तुभाव एव, तथापि तद्विशेषणयोः शोणाधरनायिकास्तवकावनम्रलतयोर्बिम्बप्रतिबिम्बभाव आवश्यक इति भावः। तयोश्च बिम्बप्रतिबिम्बभावे सादृश्यानुयोगित्वमेव साधारणो धर्म इति ध्येयम्। तत्र तयोरुपमयोर्मध्ये। निरूपकतेति।

### मधुसूदनी

उत्तरार्द्धे लतोपमानमिति उभयत्र सादृश्यं विश्रामम्यति। ततश्च कान्तालतोभयोपमानोपमेयगते इति सिद्धम्। तथापि यथा तथाशब्दवेद्यायामुपमायां लताया उपमेयत्वादुपमेय गतेत्युक्तिः संगच्छते।

तत्र तयोरुपमयोर्मध्ये पूर्वार्द्धे निरूपकतासम्बन्धेन प्रयोजकत्वसम्बन्धेन। उपमानभूतकान्तागतायामुपमायाम्। प्रतिबिम्बभूतायाम्। प्रतिबिम्बेति। अयमाशयः। दर्पणादौ स्थितं मुखं प्रतिबिम्बमप्रधानं यतः प्रतिबिम्बभूतमुखाश्रयणेन तिलका-

### बालक्रीड़ा

उसमें बिम्बप्रतिबिम्बभाव को प्राप्त होने वाली ये उपमाएँ ही, साधारण धर्म हो जाती हैं। जिसके बदौलत कान्ता एवं लता में साधारण धर्म प्रयोज्य सादृश्य निष्पन्न हो जाता है अतः इस वाक्यार्थ गत उपमा में दो उपमाएँ निष्पादक रूप से स्थित हैं।

यहाँ के अक्षरों का अर्थ है कि इस यथा तथा पदों से प्रतिपाद्य वाक्यार्थगत उपमा की सम सदृशी शब्दों से प्रतिपादित वस्तुप्रतिवस्तुभाव को प्राप्त अतएव साधारणधर्मतया स्थित अर्थात् साधारण धर्म रूप से अनुभूयमान कान्ता उपमान एवं लता उपमेय गत दो उपमाएँ निरूपकता सम्बन्ध से अर्थात् प्रयोजकता सम्बन्ध से निष्पादिका हैं।

यहाँ का भाव यह है कि "सादृश्य उपमा" है। उसमें सामान्य तौर से आश्रयत्व सम्बन्ध से सादृश्य उपमेय गत है। आश्रयत्व सम्बन्ध से सादृश्य उपमेय में वहाँ ही रहता है जहाँ इव शब्द या इवार्थक शब्द गर्भित समास हो या उपमान तृतीयान्त हो। किन्तु जहाँ षष्ठ्यन्त पद के बाद सदृश या सदृशार्थक शब्द रहेगा वहाँ आश्रयत्व सम्बन्ध से सादृश्य उपमान में रहेगा। यह प्रयोग के अनुसार शाब्दबोध होता है। चूंकि उपमान सादृश्य का निरूपक होता है अतः निरूपकता सम्बन्ध से सादृश्य उपमान में रहता है। प्रकृत में पूर्वार्द्ध में कान्ता उपमान है उत्तरार्द्ध में लता उपमान है। अतः सादृश्य की विश्रान्ति दोनों जगह है। इस तरह कान्ता और लता उपमान एवं उपमेय दोनों हैं। किन्तु यथा तथा प्रतिपाद्य उपमा में लता उपमेय ही है अतः उपमेय लता कहा है।

उन दोनों उपमाओं में यह पहिले बतलाया जा चुका है कि समा पद जहाँ लगा है वह वाक्यार्थ उपमान और सदृशी पद वाला वाक्यार्थ उपमेय है। तदनुसार पूर्वार्द्ध में प्रति-

**विम्बभूतायां गुच्छस्तनयोर्वस्तुप्रतिवस्तुभावापन्ननमननम्रीभवनविशेषणयोर्विम्बप्रतिविम्बभावमापन्नयोः साधारणधर्मत्वम्। एवमुत्तरार्द्धे तेनैव सम्बन्धेन**

### मर्मप्रकाशः

प्रतियोगितेत्यर्थः। तेनैव संबन्धेनेति प्रतियोगितासंबन्धेनेत्यर्थः।

### मधुसूदनी

दिमिश्चर्चनीयं, (यस्य प्रतिविम्बं दर्पणादौ गतं तत्र) मुखं विम्बं प्रधानीभूतमिति लौकिकी स्थितिः। नायकयोरुत्कर्षनिरुपणार्थं रसविशेषानुभूत्यर्थं च प्रसिद्धं किन्तु अप्रकृतं चन्द्रादिकं समाश्रित्य प्रकृतं मुखादि वर्ण्यते। अर्थात् मुखादिगत वैलक्षण्यानां स्पष्टप्रतिपत्तये मुखादिगतवैलक्षण्यापेक्षाधिक-वैलक्षण्यसम्पन्न-चन्द्रादिकं समालम्ब्य मुखादि निरूप्यते। एवञ्च विम्बं मुखादि प्रकृतमेव। चन्द्रादि अप्रकृतमेव प्रतिबिम्बम्। गुणक्रियादिरूपं केवलं धर्ममात्रं वा दर्पणस्थानीयमिति बोध्यम्। अत एव यथा दर्पणस्थप्रतिविम्बमुखाश्रयणेन मुखादिचर्चने दर्पणः प्रयोजकं तथा उपमान निरूपित सादृश्यस्य उपमेये चर्चने अध्ययने साधारणधर्मः प्रयोजक इति रहस्यमिति आलंकारिक-संप्रदायः। स्वनेत्राभ्यां स्वमुखस्य दर्शनं न सम्भवि। नहि सुनिपुणोऽपि पुमान् स्वस्कन्धमधिरोढुमीष्टे।

अत्र प्रधानीभूतोपमेति भ्रष्टः पाठः। यथा तथा प्रतिपाद्यप्रधानीभूतोपमाया निष्पाद्यायाश्चर्चनप्रसंगो नास्ति। प्रकृते तु निष्पादिकयोरुपमयोः प्रसंगः। ततश्चात्र पूर्वार्द्धे इति पाठः। अग्रेतनस्य उत्तरार्द्धे इति पाठस्य संगाति रपि तदैव स्यात्।

तेनैवेति। तेनैव पूर्वोक्तेनैव सम्बन्धेन निरूपकतासम्बन्धेनेत्यर्थः।

### बालक्रीड़ा

विम्बभूत उपमान कान्तागत उपमा में, गुच्छाभिन्नस्तन प्रयोजकता निरूपकता सम्बन्ध से साधारण धर्म है। गुच्छ और स्तन यद्यपि भिन्न-भिन्न दो पदार्थ है किन्तु बिम्बप्रतिबिम्बभाव को प्राप्त हो जाने से दोनों अभिन्न हो गये हैं। ये दोनों वस्तुप्रतिवस्तुभाव को प्राप्त अवनमन एवं नम्री भवन में विशेषण है।

इसी प्रकार उत्तरार्द्ध में लता रूप उपमेय गत विम्बभूत उपमा में उसी निरूपकत्व प्रयोजकत्व सम्बन्ध से अधर पल्लव भी पूर्ववत् साधारण धर्म हैं।

यह यहाँ का आशय हैं कि दर्पण आदि में दिखाई पड़ने वाला मुख प्रतिबिम्ब है अप्रधान है और प्रतिबिम्ब मुख का आश्रयण करके तिलकादि से चर्चनीय (जिसका प्रतिविम्ब दर्पण आदि में दिखाई देता है वह) मुख बिम्ब है प्रधान है। यह स्थिति लोक में है। काव्य में नायक नायिकाओं के उत्कर्ष निरूपण करने के लिए और रसानुभूति के लिए भी; प्रसिद्ध किन्तु अप्रकृत चन्द्रादि के सहारे प्रकृत मुखादि का वर्णन किया जाता है। अर्थात् मुखादिगत विलक्षणताओं की स्पष्ट जानकारी के लिए मुखादिगत विलक्षणताओं की अपेक्षा अधिक विलक्षणता सम्पन्न चन्द्रादि का अवलम्बन करके मुखादि का निरूपण करते हैं अतः विम्ब प्रकृत मुखादि है और प्रतिबिम्ब अप्रकृत चन्द्रादि होते हैं।

लतारूपोपमेयगतायां बिम्बभूतायामुपमायामधरपल्लवयोः। न च तेन सदृश इत्यादौ तन्निरूपितसादृश्याश्रयस्योपमेयस्य, तस्य सदृश इत्यादौ च तत्सं-बन्धिसादृश्याश्रयस्योपमानस्य प्रतीतेः सिद्धत्वात्प्रकृते च तव सदृशीति शब्दा-न्निवेद्यमानेऽप्युपमानभावे कथं नाम लताया उपमेयतेति वाच्यम्। सदृशी-शब्दप्रतिपाद्यधर्मभूतोपमायामुपमानत्वेऽपि यथातथाशब्दवेद्योपमायां लताया उपमेयत्वे बाधकाभावात्। एवमन्येऽपि प्रकाराः।

### मर्मप्रकाशः

अधरपल्लवयोरिति। कान्तालताविशेषणयोर्बिम्बप्रतिबिम्बभावमापन्नयोः साधारणधर्म-त्वमित्यर्थः। तन्निरूपितेति।

### मधुसूदनी

अधरेति। अधरपल्लवयोः कान्तालता-विशेषणयो बिम्बप्रतिबिम्बभावमापन्नयोः साधारणधर्मत्वमित्यन्वयः। न नु निरूपकतासम्बन्धः प्रतियोगितासम्बन्ध एव। तेन सम्बन्धेन सादृश्यमुपमानगतमेव भवति न तूपमेयगतं, ततश्च तेनैव सम्बन्धेन लता रूपोपमेयगतायामुपमायामिति संगतिरहितमेवेत्याह-नचेति। इदं वस्तु शंका समाहितीभ्यां स्पष्टं निरूपितं, साधर्माणां समानजातीयनाम्।

### बालक्रीड़ा

गुण क्रिया आदि या केवल धर्ममात्र दर्पण स्थानीय है। इसीलिए जैसे दर्पणस्थ प्रतिबिम्ब मुख के आश्रयण से मुखादि के चर्चन में दर्पण प्रयोजक होता है उसी तरह उपमान निरूपित सादृश्य का उपमेय में चर्चन करने के लिए साधारण धर्म प्रयोजक होता है। यह रहस्य है यही आलंकारिक सम्प्रदाय है।

यहाँ प्रधानीभूतोपमा यह पाठ भ्रष्ट है। यथा तथा प्रतिपाद्य प्रधानीभूत निष्पाद्य उपमा का प्रसंग नहीं है किन्तु निष्पादिका उपमाओं के निरूपण का प्रसंग है। इसलिए यहाँ पूर्वार्द्धे पाठ है। क्योंकि आगे उत्तरार्द्धे यह पाठ है।

अब शंका होती है कि निरूपकता सम्बन्ध प्रतियोगिता सम्बन्ध ही है और उस सम्बन्ध से सादृश्य उपमान में ही है रहता है उपमेय में नहीं, तब उसी सम्बन्ध से लतारूप उपमेय में रहने वाली उपमा में यह कहना तो असंगत ही हुआ। इसका अवान्तर उत्तर देते हैं कि यह शंका ठीक नहीं है क्योंकि प्रतीतियों के अनुरोध से "तेन सदृश" यहाँ पर तृतीयान्त पाठ में तन्निरूपित सादृश्य का आश्रय उपमेय माना जाता है और "तस्य सदृश" इत्यादि षष्ठयन्त पाठ में तत्सम्बन्धी सादृश्य का आश्रय उपमान माना जाता है अतः प्रकृत में "तव सदृशी" इस पष्ठयन्त पाठ में त्वत्सम्बन्धी सादृश्य की आश्रय लता उपमान ही तो हुई न कि उपमेय। तब लता को उपमेय कैसे कहा।

उत्तर=यद्यपि सदृशी शब्द प्रतिपाद्य धर्म भूतउपमा में लता उपमान है किन्तु यथा-तथा शब्द प्रतिपाद्य निष्पाद्य उपमा में तो लता के उपमेय होने में कोई बाधक नहीं है।

'यथा तवाननं चन्द्रस्तथा हासोऽपि चन्द्रिका।
यथा चन्द्रसमश्चन्द्रस्तथा त्वं सदृशी तव॥'

एभिर्भेदैः प्रागुक्तानां सधर्माणां भेदानां यथासंभवं गुणने बहुतरा भेदा भवन्ति। तथा धर्माणां वाच्यतायां वाच्यधर्मा बहुधोक्ता। व्यङ्ग्यत्वे व्यङ्ग्यधर्मा धर्मलोपे गदितैव।

लक्ष्यतायां यथा—

'सर्प इव शान्तमूर्तिः, श्वेवायं मानपरिपूर्णः।
क्षीब इव सावधानो, मर्कट इव निष्क्रियो नितराम्॥'

इत्यत्रोपमानमहिम्ना शान्तमूर्त्यादिशब्दैर्विरुद्धा धर्मा लक्ष्यन्ते।

### मर्मप्रकाशः

तत्प्रतियोगिकेत्यर्थः। सादृश्याश्रयस्य तत्प्रतियोगिन इत्यर्थः। सधर्माणां भेदानामिति। साधारण-धर्मभेदसहितानां पूर्णालुप्तादिभेदानामित्यर्थः। व्यङ्ग्यत्वे इति। धर्माणामित्यस्यानुषङ्गः। लक्ष्यतायामिति। धर्माणामित्यादिः। महिम्नेति। तेषु शान्तमूर्तित्वादेरभावादिति भावः।

### मधुसूदनी

सर्प इति। अत्र विरोधिलक्षणा 'उपकृतं वहु तत्रेत्यादिवत्।'

### वालक्रीड़ा

इस तरह अन्यान्य प्रकारों को समझना चाहिए। जैसे तुम्हारा मुख चन्द्र है वैसे तुम्हारा हास भी चन्द्रिका है। और जैसे चन्द्र के समान चन्द्र है वैसे ही तुम भी तुम्हारे ही जैसी हो।

इन भेदों के साथ प्रागुक्त समान जातीय धर्मों का यथा संभव गुणन करने पर बहुत से भेद होते हैं और धर्मों की वाच्यता अवस्था में वाच्यधर्म बहुत प्रकार से कह दिये हैं। और उन धर्मों की व्यंगता में व्यंग्यधर्म भी धर्मलुप्ता उपमा में कह दिए हैं। अब उन धर्मों की लक्ष्यता में जैसे सर्प की तरह शान्तमूर्ति, कुत्ते की तरह अभिमान सम्पन्न। मद्यप की तरह सावधान और मर्कट वानर की तरह एकदम निष्क्रिय यह पुरुष है।

यहां उपमान सर्प, कुत्ता, मद्यप एवं मर्कट की महिमा माने उनके स्वभाव के कारण शान्तिमूर्ति, मान परिपूर्ण, सावधान एवं निष्क्रियशब्दों से विरुद्धधर्म अशान्तमूर्तित्व अपमान परिपूर्णत्व, असावधानत्व और व्यर्थक्रियाकारित्व लक्षित होते हैं।

यह उपमा कहीं पर मुख्यार्थ की साक्षात् उपकारिणी होती है। और कहीं पर दूसरे-दूसरे उपस्कारकों को उपस्कृत करती हुई उपस्कारक होती है। उनमें साक्षात् उपस्कारिणी उपमा पहिले बहुत प्रकार से कही जा चुकी है। परम्परया उपस्कारिणी जैसे—

इयं चोपमा मुख्यार्थस्य क्वचित्साक्षादुपस्कारिणी, क्वचिच्चोपस्कारकान्तरोपस्करणद्वारा। तत्र साक्षादुपस्कारिणी प्राग्बहुधोदीरिता।

परम्परया यथा—

'नदन्ति मददन्तिनः, परिलसन्ति वाजिव्रजाः
पठन्ति विरुदावलीमहितमन्दिरे बन्दिनः।
इदं तदवधि प्रभो ! यदवधि प्रवृद्धा न ते
युगान्तदहनोपमा नयनकोणशोणद्युतिः॥'

अत्र मुख्यार्थस्य राजविषयायाः कविरतेरुपस्कारकस्य यदैव तव कोपोदयस्तदैव रिपूणां संपदो भस्मसाद्भविष्यन्तीति वस्तुन उपस्कारिका नयनकोणशोणद्युतेर्युगान्तदहनोपमा। इयं चेवयथावादिशब्दैर्वाचकैः प्रतिपादिता वाच्यालंकारः। लक्ष्यापि चालंकुर्वाणा दृश्यते।

### मर्मप्रकाशः

धर्मा लक्ष्यन्त इति। लक्ष्यतावच्छेदकेऽपि लक्षणेति मतेनेदम्। इयं चेति। उपमेत्यर्थः।

### मधुसूदनी

"नदन्ति" इति। इदं नदनं परिलसनं पठनं च। युगान्तदहनस्य उपमा तुलेति सा यत्रास्तीति। अत्र नयनशोणिमा उपमेयः। युगान्तदहन उपमानम्। इयमुपमा मुख्यार्थस्य परम्परयोपस्कारिणी। तथाहि मुख्यार्थः राजविषया कविगतरतिः। तस्या उपस्कारकं यदैव तव कोपादयस्तदैव रिपूणां सम्पदो भस्मसाद्भविष्यन्तीति व्यंग्यं वस्तु। तस्योपस्कारिकेयमुपमेति।

### बालक्रीड़ा

दुश्मनों के मन्दिरों में मस्त हाथी चिंग्घाड़ते हैं, घोड़ों की कतारें सुशोभित होती हैं और स्तुतिपाठक लोग विरुदावलियों का पाठ करते हैं। हे प्रभो ? यह चिंघाड़ना, सुशोभित होना एवं विरुदावलिका पठन तभी तक होता है। जब तक प्रलय की अग्नि के सदृश तुम्हारे नयनों की लालकान्ति बढ़ती नहीं है।

यहाँ नयन शोणिमा उपमेय है युगान्तदहन उपमान है। यह उपमा मुख्यार्थ की परम्परया उपस्कारिणी है। राजविषयकरति मुख्यार्थ है। उसका उपस्कारक है "जभी तुम्हारे कोप का उदय होगा तभी दुश्मनों की सम्पतियाँ भस्म हो जाँयगी" यह व्यंग्य वस्तु; उसकी उपस्कारिका है उपमा।

यथा—

'नीवीं नियम्य शिथिलामुषसि प्रकाश-
　　मालोक्य वारिजदृशः शयनं जिहासोः ।
नैवावरोहति कदापि च मानसान्मे
　　नाभेर्निभा सरसिजोदरसोदरायाः ॥'

अत्रैकोदरप्रभवत्वरूपस्य मुख्यार्थस्य बाधात्तदीयशोभालक्षणसमानांशहरत्वादेः प्रयोजनस्य सत्त्वात्सोदरपदेन सदृशो लक्ष्यते।

आर्थी च तत्रोपमा लक्ष्यमाणा। अवरोहतिलक्ष्यस्य विषयतया स्मृतिशून्यीभवनस्य निषेधनेन प्रतीयमानायाः स्मृतेरुपस्कारिका। एवं प्रतिभटप्रति-

मर्मप्रकाशः

तत्र नाभौ। अवरोहतिलक्ष्यस्येति एतत्पदलक्ष्यस्येत्यर्थः।

मधुसूदनी

नीवीमिति। उषसि प्रकाशमालोक्य शयनहानात्प्राक् शिथिलां नीवीं नियम्य। शयनं जिहासोः वारिजदृशः सरसिजोदरसोदरायाः नाभेः निभा शोभा मे मानसात् कदापि च नैवावरोहति दूरं गच्छति।

सोदरेति। सोदरपदेन सदृशो लक्ष्यते तत्कथमित्याह—अत्रेति। नाभेः प्रभव उत्पत्तिस्थानं नायिका। सरसिजोदरस्य प्रभवः सरसिजमिति तयोर्भिन्नाधिकरणप्रभवतया एकोदरत्वं बाधितमिति लक्षणा प्रवृत्ता। लक्षणायाः प्रयोजनं सरसिजोदरसम्बन्धि—शोभारूपसमानांशहरत्वम्। एकोदरप्रभवाः सकुल्याश्च दायादा भवन्ति। दायो नाम स्वसम्बन्धि धनम्। समानविभागेन तमाददानो हि दायादो भवति। प्रकृतेऽपि नाभिः सरसिजोदरस्य सपिण्डा दायादा अतः स्वसम्बन्धिनः सरसिजोदरस्य शोभालक्षणं दायं समानांशं हरतीति।

तत्र नाभौ आर्थी (श्रौत्या अभावे) उपमा लक्ष्यमाणा। अवरोहतीति। अवरोहणं नीचैर्गमनं तच्च चेतनधर्मः। शोभा अचेतनपदार्थः। अतो बाधाल्लक्ष्यते

बालक्रीडा

उषः काल में प्रकाश को देखकर अतएव शिथिल नीवी का नियमन करके शयन को छोड़ने के लिए उद्यत नायिका की कमल के मध्य भाग के सदृश नाभिकी शोभा मेरे मन से कभी हटती नहीं है।

जिस उदर से कमल पैदा हुआ है उसी उदर से नाभि नहीं पैदा हो सकती है अतः एकोदरप्रभवत्व रूप मुख्यार्थ के बाध हो जाने से तदीय नाभि सम्बन्धी शोभा (लक्षण) रूप समान अंश के हरणकर्तृत्व प्रयोजन के कारण सोदर पद की सदृश की अर्थ में लक्षणा करते

मल्लादिशब्दानां तदीयन्यग्भवनतदीयशोभारूपसर्वस्वापहरणादेः प्रयोजनस्य सत्वात्सादृश्यवति लक्षणैव, न व्यञ्जना, मुख्यार्थस्य बाधात्। प्रयोजने पुनर्व्यंजनैवेति।

क्वचिद्व्यङ्ग्यापि चेयमुपमालंकारः। यथा—

'अद्वितीयं रुचात्मानं मत्वा किं चन्द्र ? हृष्यसि।
भूमण्डलमिदं मूढ ? केन वा विनिभालितम्॥'

कस्यचिद्विदेशस्थितस्य किरणैरात्मानं संतापयन्तं चन्द्रं प्रत्येषोक्तिः। अत्र च अस्ति मम प्रियायाः कदापि बहिरनिर्गतायाः, अत एव त्वयाप्यदृ-

### मर्मप्रकाशः

व्यञ्जनैवेति इत्यस्य बोध्यमिति शेषः। विनिभालितमिति विशेषेण दृष्टमित्यर्थः। अत्र चेति। प्रतीयमानेत्यत्रास्यान्वयः।

### मधुसूदनी

मानसविषयतया स्मृतिः प्रतीयते। एवं प्रतीयमानायाः स्मृतेः लक्ष्यमाणोपमा उपस्कारिकेति।

अद्वितीयमिति। अत्र मूढपदेन ध्वन्यमानायामसूयायामुपमालंकारः।

### बालक्रीड़ा

हैं। इस तरह सदृश पद के योग में आर्थी लक्ष्यमाणा उपमा है। अवरोहति पद का वाच्य अर्थ है नीचे उतरना। वह मानस के निराकार होने से संगत नहीं होता है अतः अवरोहति पद का लक्ष्य (नाभि) विषयक स्मृति का शून्यीभवन अभाव है। उस अभाव के निषेध (अभाव) से (अभावाभाव भावरूप होता है इस लिए) स्मृति प्रतीत होती है। स्मृति की उपस्कारिका उक्त उपमा है। इस तरह प्रतिभट प्रतिमल्लादि शब्दों की सादृश्यवान् अर्थात् सदृश में प्रयोजनवती लक्षणा ही होती है व्यंजना नहीं। क्योंकि मुख्यार्थ का बाध यहाँ होता है। तदीय अर्थात् उपमान का न्यग्भवन और तदीय शोभा रूप सर्वस्व का अपहरण आदि प्रयोजन में तो व्यंजना ही है।

कहीं पर यह उपमा व्यंग्या भी होती है जैसे—हे चन्द्र ? अपने आपको कान्ति में अद्वितीय समझ कर क्यों प्रसन्न हो रहे हो। अरे मूढ ? इस भूमण्डल को किस ने पूरा देखा है।

यह किसी विदेश में पड़े हुए व्यक्ति की किरणों से संतप्त करने वाले चन्द्र के प्रति उक्ति है। यहाँ पर कभी भी बाहर नहीं निकली अतएव तुमने भी जिसको नहीं देखा है ऐसी मेरी प्रिया का आनन तुम्हारे जैसा है इस तरह प्रतीयमाना उपमा, मूढ़ पद से ध्वन्यामाना वक्ता की चन्द्र विषयक असूया में अलंकार है।

ष्टाया आननं त्वत्सदृशमिति प्रतीयमाना उपमा मूढपदेन ध्वन्यमानायां चन्द्रविषयायां वक्तृगतायामसूयायामलंकारः।

एतेनाप्पदीक्षितैरुपमालक्षणे दत्तमव्यङ्ग्यत्वविशेषणमयुक्तमेव। नहि व्यङ्ग्यत्वालंकारत्वयोरस्ति कश्चिद्विरोधः। प्राधान्येन व्यङ्ग्यतायां तु प्रधानत्वालंकारत्वयोर्विरोधादलंकारलक्षणं तत्र मातिप्रसाङ्क्षीदित्युपस्कारकत्वेन पुनर्विशेषणीयम्, न त्वव्यङ्ग्यत्वेन। प्रागुक्तायामसूयालंकारोपमायामव्याप्त्यापत्तेः। विशिष्टोपमादिस्थले विशेषणाद्युपमानां वाक्यसिद्ध्यङ्गतया गुणीभूतव्यङ्ग्यत्वम्, सिद्धार्थस्योपस्करणाभावात्तु नालंकारत्वमिति न काप्यसंगतिः।

यच्चापि "सेयमुपमा संक्षेपतस्त्रिविधा—क्वचित्स्ववैचित्र्यमात्रविश्रान्ता। यथा स च्छिन्नमूलः क्षतजेन रेणुः' इत्यादौ। क्वचिदुक्तार्थोपपादनपरा। यथा

**मर्मप्रकाशः**

प्रतीयमाना उपमेति। अत्रोपमानस्योपमेयत्वकल्पनात्मकप्रतीपस्यैव व्यङ्ग्यत्वम्। मूढपदस्वारस्यात्, चमत्कारातिशयाच्च। किं हृष्यसीत्येतत्स्वारस्याच्चेति केचित्। एतेनेति। एतेनापीत्यर्थः। अपिना प्रागुक्तदूषणसमुच्चयः।

**बालक्रीड़ा**

इसलिए अप्पय्य दीक्षित जी का उपमा लक्षण में दिया हुआ अव्यंग्यत्व विशेषण युक्ति संगत नहीं है। क्योंकि व्यंग्यत्व एवं अलंकारत्व का कोई विरोध नहीं है। उसी उपमा की प्रधानतया व्यंग्यदशा में तो प्रधानत्व और अलंकारत्व का विरोध है अतः अलंकार का लक्षण उस प्रधानतया व्यंग्य उपमा में अति-प्रसक्त मत हो जाय इसलिए उपस्कारकत्व विशेषण को उपमा लक्षण में निवेश करना चाहिए। किन्तु अव्यंग्यत्व विशेषण को नहीं। यदि उपस्कारकत्व विशेषण का नहीं उपन्यास करेंगे तो प्रांगुक्त असूया को अलंकृत करने वाली व्यंग्य उपमा में लक्षण व्याप्त नहीं होगा।

अगर कहें कि विशिष्ट उपमा अर्थात् वाक्यार्थोपमा स्थल में विशेषणों में होने वाली व्यंग्योपमा के व्यावर्त्तन के लिए अव्यंग्यत्व विशेषण सार्थक है तब भी ठीक नहीं है क्योंकि वहाँ वह उपमा वाच्यसिद्धचंग होने से गुणीभूतव्यंग्य है। और व्यंग्यत्व तथा अलंकारत्व का कोई विरोध नहीं है यह पहिले ही कहा जा चुका है अतः कोई दोष नहीं है। यदि वह व्यंग्योपमा किसी वाच्य की सिद्धि नहीं करती है क्योंकि वह अर्थ सिद्ध ही है तब इसमें उपस्कारकत्व के अभाव में अलंकारत्व ही नहीं है अतः भी कोई दोष नहीं है।

और जो भी वह उपमा संक्षेप से तीन प्रकार की है—कहीं पर स्ववैचित्र्यमात्र में विश्रान्त होने वाली जैसे—"स च्छिन्नमूलः क्षतजेन रेणुः" इत्यादि में। कहीं पर उक्तार्थ के

'अनन्तरत्नप्रभवस्य' इत्यादौ'' 'क्वचिद् व्यंग्य प्रधाना सा' इति तैरेव द्रविड-शिरोमणिभिरभ्यधीयत। तदप्यहृद्यमेव। 'नयने शिशिरीकरोतु मे शरदिन्दु-प्रतिमं मुखं तव,' इति वाच्यवस्तूपस्कारिकायाः शरदिन्दूपमाया अक्रोडी-करणात्। अलंकारभूतोपमासु स्ववैचित्र्यमात्रविश्रान्ताया उपमायाः संग्रहे को नाम ध्वन्यमानायास्तस्या निरासायाव्यङ्ग्यत्वविशेषणदानदुराग्रहः।

अहो महदेवेदमन्याय्यम्—यदलक्षणीयायाः संग्रहः, लक्षणीयायाश्चा-

### मर्मप्रकाशः

तैरेवेति। अप्पदीक्षितैरेवेत्यर्थः।

### मधुसूदनी

वाच्यवस्त्विति। वाच्यवस्तुनो मुखेन नयनयोः शिशिरीकारणस्य। शर-दिन्दुप्रतिमत्वान्मुखे तत्करणसामर्थ्यमुदीतमिति भावः। शारद इन्दुः शिशिरता-पादकस्तत्तुल्यं मुखम्।

स्ववैचित्र्येति। स्वीये वैचित्र्ये एव या विश्रान्ता अन्यत्र कस्मिन्नपि स्ववैचित्र्यं नादधाति अर्थात्कञ्चनमन्यं नोपस्करोति एवमनलंकारभूताया उपमायाः संग्रहे ध्वन्यमानायास्तादृश्याः संग्रहः सुतरां कृत एवेति अनलंकार भूताया उपमाया निरासाय अव्यंग्यत्वविशेषणदानं दुराग्रहमात्रमेव।

अलक्षणीयाया इति। उपस्कारकत्वमलंकारत्वमिति सामान्यं लक्षणमलंकारा-णाम्। अतः स्ववैचित्यमात्रविश्रान्ताया इतरोपस्कारकत्वाभावादनलंकारतया अलंकारलक्षणबहिर्भूताया अलक्षणीयायाः।

लक्षणीयाया इति। यद्यपि ध्वन्यमानाया अनलंकारत्वाल्लक्षणीयात्वाभावा-ल्लक्षणीयाश्चासंग्रह इति न संगच्छते तथापि लक्षणे अव्यंग्यत्वविशेषणदानेन

### बालक्रीड़ा

उपपादन में तत्परा जैसे—"अनन्तरत्नप्रभवस्य" इत्यादि में। कहीं पर व्यंग्यप्रधाना वह है। ऐसा द्रविड़ शिरोमणि जी ने कहा है। वह भी अहृद्य ही है। क्योंकि "नयने शिशिरी करोतु मे शररिन्दुप्रतिमं मुखं तव" इस वाच्य वस्तु की उपस्कारिका शरदिन्दूपमा का क्रोडी-करण अर्थात् संग्रह नहीं हो रहा है।

अलंकार भूत उपमाओं में स्ववैचिव्यमात्र में विश्रान्त अर्थात् अनलंकार भूत उपमा का संग्रह करने पर ध्वन्यमान उपमा के निरास के लिए अव्यंग्यत्व विशेषण देने का कौन दुराग्रह है। अनलंकार भूतत्व धर्म, स्ववैचित्र्यमात्र विश्रान्त एवं ध्वन्यमाना दोनों उपमाओं में बराबर है। तब एक का संग्रह दूसरे का निरास यह तो आश्चर्य है।

अहो बहुत ही बड़ा यह अन्याय है कि जो अलक्षणीया अनलंकार भूता का संग्रह हो

संग्रह इति। प्राचीनानां तूपमासामान्यं लक्षयतां ध्वन्यमानाया इवास्या अपि संग्रहो नानुचितः। स तु स्वस्य यत्नेन ध्वन्यमानोपमां निरस्य कण्ठरवेणालंकारभूतोपमालक्षकस्य।

यदि च प्रबन्धव्यङ्ग्योपस्कारकत्वेनेयं संगृह्यत इत्युच्यते तदा 'स्ववैचित्र्यमात्रविश्रान्ता' इति स्वोक्तिर्विरुद्धा स्यात्।

### मर्मप्रकाशः

स्वस्येति। तवेत्यर्थः। अनुचित इत्यस्यानुषङ्गः। इयं स्ववैचित्र्यमात्रविश्रान्ता। विरुद्धा स्यादिति। वस्तुतस्तु उपमानोपमेययतावच्छेदकयोर्भेदाच्चास्त्येवोपमितिनिष्पत्तिः। अत एव सेयमुपमेत्येवोक्तम्, न त्वलंकार इति। 'नयने शिशिरीकरोतु मे शरदिन्दुप्रतिमं मुखं तव' इत्यत्र तु उक्तार्थोपपादनपरैव मुखकर्तृकनयनकर्मकशिशिरीकरणस्य कव्युक्तस्येन्दूपमयैवोपपत्तेः। उक्तार्थोपपादनेत्यस्य चोक्तार्थस्योपपादनमुक्तार्थे वोपपादनमित्यर्थद्वयम्

### मधुसूदनी

"अद्वितीयं रुचात्मानमित्यादिषु" व्यंग्यापि चेयमुपमा मूढपदेन ध्वन्यमानायां चन्द्रविषयायां वक्तृगतायामसूयायामलंकारत्वं भजमाना लक्षणीया एव निरस्यते इति लक्षणीयायाश्चासंग्रह इति संगच्छते एवेति भावः।

प्राचीनानामिति। उपमा सामान्यं लक्षयतां अलंकारानलंकारभूतोपमामात्रस्य लक्षणं विदधतां प्राचीनानां यथा ध्वन्यमानाया उपमाया अलक्षणीयायाः संग्रहः अनुचितो न तथा अस्या स्ववैचित्र्यमात्रविश्रान्तायाः अपि संग्रहस्तथा न। तु किन्तु यत्नेन अव्यंग्यत्वविशेषणदानरूपेण। लक्षकस्य लक्षणनिर्माणं कुर्वतः स्वस्य तव अस्याः स्ववैचित्र्यमाविश्रान्तायाः स संग्रहोऽनुचितः।

स्वोक्तिर्विरुद्धेति। पूर्वमुक्तमियमुपमा स्वीये वैचित्र्ये विश्रान्ता अन्यस्मिन् स्वीयं वैचित्र्यं नादधाति। इदानीमुच्यते प्रबन्धव्यंग्योपस्कारिकेयम्। इति पूर्वापरविरुद्धाभिधानमेति भावः।

### बालक्रीड़ा

रहा है और लक्षणीया व्यंग्यत्व और अलंकारत्व का विरोध नहीं होने से लक्ष्यभूता गुणीभूतव्यंग्या का संग्रह नहीं हो रहा है।

उपमा सामान्य का लक्षण बतलाने वाले प्राचीनों का तो अनलंकारा ध्वन्यमाना की तरह इस स्ववैचित्र्यमात्र विश्रान्ता अनलंकारा उपमा का भी संग्रह अनुचित नहीं है। अगर कहें कि प्रबन्ध से व्यक्त होने वाले अर्थ की उपस्कारिका होने से इसको भी संगृहीत करते हैं ऐसा कहें तो स्ववैचित्र्य में विश्रान्त होने वाली कहना ही आपका विरुद्ध होगा प्रबन्धव्यंग्य का उपस्कार भी करें और अपने ही चमत्कार में लीन रहे। अर्थात् दूसरे का उपस्कार नहीं करे ये दोनों परस्पर विरुद्ध हैं।

'अनन्तरत्नप्रभवस्य' इत्यत्र गुणसमूहसमानाधिकरण एको दोषो दोषत्वेन न स्फुरतीत्यस्यार्थस्य पूर्वार्धप्रतिपादितार्थसमर्थनात्मकस्य सामान्यरूपस्य विशेषरूपोदाहरणप्रदर्शनमन्तरेण सम्यगनाकलनादिन्दुकिरणसमानाधिकरणेऽङ्क उदाहृतः न तूपमानतया निर्दिष्टः।

सामान्याद्विशेषस्य भेदाभावेनोपमितिक्रियाया अनिष्पत्त्या उपमालंकृते-

### मर्मप्रकाशः

विनिगमनाविरहात्; इति न दोष इति चिन्त्यमिदमिति बोध्यम्। उक्तार्थोपपादनपरोपमायास्तदुक्तमुदाहरणं दूषयति —अनन्तेति। 'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्। एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः॥' इत्यत्रेत्यर्थः। स्फुरतीत्यस्यार्थस्य तृतीयचरणप्रतिपाद्यस्य। तत्त्वेनानिर्दिष्टत्वे हेतुमाह—सामान्येति।

### मधुसूदनी

गुणेति। यत्र गुणसमूहः गुणसन्निपातस्तत्रैवैको दोषः स्यात्तदा गुणसमूहसमानाधिकरणो दोष उच्यते। पूर्वार्द्धे प्रतिपादितो योऽर्थस्तस्य समर्थनात्मकः सामान्यरूपोऽर्थस्तस्य। यस्मिन्निन्दौ किरणसमूहस्तत्रैवैदावंक इति इन्दुकिरणसमानाधिकरणोऽङ्कः।

भेदाभावेनेति। उपमितिक्रियायाः उपमानतावच्छेदकोपमेयतावच्छेदकयोर्भेदे एव निष्पत्तिर्भवति प्रकृते तु गुणसमूहसमानाधिकरण एको दोषो दोषत्वेन न स्फुरति इति सामान्योऽर्थः। यथा इन्दुकिरणसमानाधिकरणोंऽको दोषत्वेन न

### बालक्रीड़ा

यद्यपि ध्वन्यमाना अनलंकाररूपा होने से लक्षणीया नहीं हो सकती है इसलिए लक्षणीया का असंग्रह हो रहा है यह कहना असंगत है तथापि लक्षण में अव्यंग्यत्व विशेषण के देने से "अद्वितीयं रुचात्मानम्" इत्यादि स्थलों में व्यंग्या भी यह उपमा मूढ़पद से ध्वन्यमान वक्तृगत असूया की उपस्कारक होने से जो अलंकार भी वन गई है उस लक्षणीया का ही निरास होने लगेगा अतः लक्षणीया का संग्रह नहीं हो रहा है कहना संगत भी हो सकता है।

"अनन्त रत्नप्रभवस्य" इसमें (जहाँ गुण समूह है वहाँ ही यदि एक दोष रहे तो उसको गुणसमानाधिकरण दोष कहते हैं इस तरह) गुणसमानानाधिकरण एक दोष दोषरूप से नहीं मालूम पड़ता है इस सामान्यरूप अर्थ जो कि अनन्तरत्नों की उत्पत्ति के स्थान हिमालय का हिम पाला उसके सौभाग्य को नष्ट नहीं कर सका इस पूर्वार्द्धप्रतिपादित अर्थ का समर्थक है उसका सम्यक् आकलन तब तक नहीं होगा जब तक किसी विशेष अर्थ का उदाहरण रूप से विन्यास नहीं करेंगे। इसलिए यहाँ प्रकृत में इन्दु किरणों के साथ-साथ अंक को भी उदाहरणरूप से रक्खा उपमानरूप से नहीं रक्खा। क्योंकि उपमिति क्रिया की निष्पत्ति वहीं होती है जहाँ उपमेयतावच्छेदक और उपमानतावच्छेदक धर्मों में भेद रहे प्रकृत में यहाँ निर्विशेष

रत्रानवतारादुदाहरणालंकारोऽयमतिरिक्तः । यथा 'इको यणचि' इति वाक्यार्थस्य सामान्यस्य विज्ञानाय दध्युदकमित्यत्रोदकोकारे दधीकारस्येवेति वाक्यान्तरेण तद्विशेष उदाह्रियते तद्वदत्रापीति तत्प्रसङ्गे विवेचयिष्यामः ।

यच्चाप्पदीक्षितैः 'लुप्तायां तु नैवं भेदाः । तस्यां साधारणधर्मस्यानुगा-

## मर्मप्रकाशः

अनवतारादिति । अग्रे तथा चेति शेषः । अलंकारोऽयमतिरिक्त इति । 'अदत्त्वा मादृशो मा भूर्दत्त्वा त्वं त्वादृशो भव' इत्यभिन्नधर्मिकोपमायामुपमानतावच्छेदकोपमेयतावच्छेदकभेदेनोपमितिक्रियानिष्पत्तेरुपमालंकारव्यवहारस्य च सर्वसंमतत्वेन तद्वदिहापि सामान्यधर्मविशेषधर्मयोस्तयोर्भेदेन तन्निष्पत्तेः संभवादुदाहरणालंकारो मास्त्वतिरिक्त इति तदाशयाच्चिन्त्यमेतत् । 'उदकोकारे दधीकारस्य य इति' इति पाठः । तत्प्रसङ्गे उदाहरणालंकारप्रसङ्गे ।

## मधुसूदनी

स्फुरतीति विशेषोऽर्थः । सामान्यविशेषयोरभेद इति सिद्धान्तादनयोर्भेदस्य अभाव एव । अत्र अनन्तेत्यत्र । अनवतारात् अप्रसक्तेः ।

इको यणचीति । इत्यत्र यथा अजव्यहितपूर्वत्वविशिष्टस्य इकः स्थाने यण् स्यादिति सामान्यस्य वाक्यार्थस्य विज्ञानाय सम्यगाकलनाय उदकोकारे उदकशब्दगतोकारे परे दधीकारस्य दधि गतेकारस्य यकारे सति दध्युदकं जायत इति वाक्यान्तरेण तद्विशेषो वाक्यार्थविशेष उदाह्रियते तद्वदत्रापि अनन्तरत्नप्रभवस्येत्यत्रापि उदाहृत इति शेषः ।

नैवमिति । एवं पूर्णोपमायां यथा विम्बप्रतिविम्बभावादिनानाविधधर्माणां भेदाद् ये भेदा भवन्ति तथा लुप्तोपमायां नैव भवन्तीति ।

## बालक्रीड़ा

न सामान्यं के अनुसार सामान्य अर्थ (गुणसमानाधिकरण एक दोष, दोष नहीं है) और विशेष अर्थ (इन्दु किरणसमानाधिकरण एक अंक दोष विशेष, दोष नहीं है) दोनों में कोई भेद नहीं है अतः उपमिति क्रिया की निष्पत्ति के अभाव में उपमालंकार का अभाव ही यहाँ है । यहाँ तो उदाहरण अलंकार एक पृथक् ही है ।

जैसे "इको यणचि" अच् परे रहते इक् के स्थान में यण् हो इस सामान्य वाक्यार्थ का सम्यक् आकलन करने के लिए "दध्युदकं" में उदक के उकार परे रहते दधि के इकार के स्थान में इस वाक्यान्तर से उसके विशेष रूप का उदाहरण बतलाया जाता है उसी तरह यहाँ भी है । अधिक इसका विवेचन उदाहरण अलंकार के प्रसंग में करेंगे ।

जो भी अप्पायदीक्षित जी ने कहा कि लुप्ता में पूर्णा की तरह भेद नहीं होते हैं । उसमें तो साधारणधर्म के अनुगामी होने का नियम है । वह ठीक नहीं है । क्योंकि "जगत् में मलय की तरह पाण्डु है और धरणि में वल्मीक की तरह धृतराष्ट्र है । यहाँ किसी अनु-

मितानियमात्' इत्युक्तम्, तन्न। 'मलय इव जगति पाण्डुर्वल्मीक इवाधिधरणि धृतराष्ट्रः' इत्यत्रानुगामिधर्मस्याप्रत्ययाच्चन्दनानां पाण्डवानाम्, सर्पाणां दुर्योधनादीनां च बिम्बप्रतिबिम्बभावस्यैव प्रतिपत्तेः। न च शब्देनोपात्तत्वं बिम्बप्रतिबिम्बभावे तन्त्रमित्याग्रहो विदुषामुचितः। श्रौतत्वार्थ-

## मधुसूदनी

मलय इवेति। जगति लोके पाण्डुः मलय इव। अत्र मलयसादृश्यं पाण्डौ प्रतिपाद्यते परं सादृश्यप्रयोजकं धर्मं तु नोपाददाति। अनुगामिनो धर्मस्याप्रत्ययात् मलये लोकानन्दनचन्दनप्रभवत्वं, पाण्डौ लोकाभ्युदयकारियुधिष्ठिरादि-पंच-पाण्डवजनकत्वं धर्मः वस्तुप्रतिवस्तुभावकरम्बितविम्बप्रतिविम्बभावमापन्नः। एवमेव वल्मीके लोकभयसमर्पक-सर्पोत्पादकत्वं, धृतराष्ट्रे लोकोत्पीडकदुर्योधनादिजनकत्वं तादृशो धर्मः।

अयं च विशेषः—उभयमध्ये प्रतिबिम्बस्यैवोपादाने उपमेये धर्महानिर्दोषः। तथोपादाने उपमेयस्थानीयधर्मानुक्तेः। बिम्बमात्रोपादाने उपमाने धर्महानिर्दोषः। तत्र तन्मात्रोपादाने उपमानस्थानीयधर्मानुक्तेः। अत्रोपमेयवृत्तिधर्मस्य विम्बता उपमानवृत्तिधर्मस्य प्रतिविम्बतेत्यालंकारिकसंप्रदायः। तस्माद्बिम्बप्रतिबिम्बभावमापन्नयोर्द्वयोरेव शाब्दत्वं द्वयोरेव वाऽर्थत्वं विवक्षितं नत्वेकस्य शाब्दत्वमन्यस्यार्थत्वमिति बिम्बप्रतिविम्बभावस्थले तयोः शब्देनोपादानमावश्यकमिति विदुषामाग्रहो न भवतीति बोध्यः।

## बालक्रीड़ा

गामी धर्म के प्रतीत नहीं होने से चन्दन और पाण्डवों का तथा सर्प और दुर्योधन आदि का विम्बप्रतिविम्ब भाव ही प्रतीत होता है। मलय में लोकानन्दनचन्दन प्रभवत्व धर्म है और पाण्डु में लोकाभ्युदयकारि युधिष्ठिरादिजनकत्व धर्म है। जो कि वस्तुप्रतिवस्तुभावकरम्बित बिम्बप्रतिविम्बभावापन्न धर्म है। इसी तरह वल्मीक में लोकभयसमर्पक सर्पोत्पादकत्व धर्म है और धृतराष्ट्र में लोकोत्पीडक दुर्योधनादिजनकत्व धर्म पूर्ववत् है।

यहाँ इतनी विशेषता है कि दोनों के मध्य में केवल प्रतिविम्ब का ही उपादान करते हैं तो उपमेय में धर्म की हानि दोष है क्योंकि उस उपादान में उपमेय स्थानीय धर्म नहीं कहा गया है और यदि विम्बमात्र का उपादान करते हैं तो उपमान में धर्महानि दोष है क्योंकि उस उपादान में उपमान स्थानीय धर्म नहीं कहा गया है।

(यह जानना आवश्यक है कि उपमेयवृत्ति धर्म विम्बस्थानीय है। उपमानवृत्ति धर्म प्रतिविम्बस्थानीय हैं यह आलंकारिकों का सम्प्रदाय है। इसलिए विम्बप्रतिबिम्बभावापन्न दोनों ही धर्मों का शाब्द होना या आर्थ होना आवश्यक है न कि एक का शाब्द और दूसरे का आर्थ। अतः विम्बप्रतिविम्बभावस्थल में दोनों का शब्द से ही उपादान करना नियत है यह आग्रह विद्वानों को उचित नहीं है। क्योंकि श्रौत एवं आर्थ भेद से बिम्बप्रतिबिम्बभाव का

त्वाभ्यां बिम्बप्रतिबिम्बभावस्य द्वैविध्यौचित्यात् । अत एवाप्रस्तुतप्रशंसादौ प्रकृताप्रकृतवाक्यार्थयोरौपम्यमवयवबिम्बप्रतिबिम्बभावमूलं संगच्छते ।

इयमपि रूपकवत्केवलनिरवयवा, मालारूपनिरवयवा, समस्तवस्तुविषय-सावयवा, एकदेशविवर्तिसावयवा, केवलश्लिष्टपरम्परिता, मालारूपश्लिष्टपर-म्परिता, केवलशुद्धपरम्परिता, मालारूपशुद्धपरम्परिता चेत्यष्टधा। तत्रोपमायां केवलत्वं मालानन्तर्गतत्वं निरवयवत्वं चोपमान्तरनिरपेक्षत्वम् । इयं च शतशः प्रागेवोदाहृता ।

मालारूपनिरवयवा यथा—

'आह्लादिनी नयनयो रुचिरैन्दवीव
कण्ठे कृतातिशिशिराम्बुजमालिकेव ।
आनन्दिनी हृदि गता रसभावनेव
सा नैव विस्मृतिपथं मम जातु याति ॥'

मर्मप्रकाशः

अत एव तस्य द्वैविध्यादेव । इयमपि उपमापि । तत्र तासां मध्ये । इयं च केवल-निरवयवा च । ऐन्दवीति । ऐन्दवी रुचिरिवेत्यर्थः ।

मधुसूदनी

अतएव बिम्बप्रतिबिम्बभावस्य श्रौतत्वार्थत्वाभ्यां द्वैविध्योपगमादेव अप्रस्तुत-प्रशंसादौ । आदिपदात् प्रतिवस्तूपमादीपकयोः परिग्रहः । सादृश्यमूलके तुल्ये प्रस्तुते

बालक्रीड़ा

दो प्रकार का होना ही उचित है । इसीलिए अप्रस्तुतप्रशंसा आदि अलंकारों के प्रकृत और अप्रकृत वाक्यार्थ रूप अवयवियों में औपम्य सादृश्य, अवयवों में बिम्बप्रतिबिम्बमूलक औपम्य होने पर संगत होता है । यहाँ का भाव यह है कि वाक्यार्थ विशिष्ट ही अर्थ होता है इस विशिष्ट अर्थ में यदि औपम्य रहता है तो अवयवों में अर्थात् औपम्य सिद्ध हो जाता है । अतः बिम्बप्रतिबिम्बभाव अवयवों में आर्थ होता है ।

यह भी उपमा रूपक की तरह केवल निरवयवा १ मालरूप निरवयवा २ समस्तवस्तु-विषया सावयवा ३ एकदेशविवर्त्ति सावयवा ४ केवललिष्टपरम्परिता ५ मालारूपलिष्ट-परम्परिता ६ केवल शुद्ध परम्परिता ७ मालारूप शुद्ध परम्परिता ८ इस तरह आठ प्रकार की है । उन आठों उपमाओं में केवलत्व का अर्थ है माला में जिसका अन्तर्भाव नहीं हो। निरवयवत्व वह है जिसमें अन्य उपमान की अपेक्षा नहीं होवे । यहां केवल निरवयवा के पहिले सैकड़ों उदाहरण दिये जा चुके हैं याने बहुत उदाहरण हैं । मालारूप निरवयवा जैसे—

नयनों से देखी हुई ऐन्दवी रुचि चन्द्रकान्ति की तरह आह्लादिनी, कण्ठ में पहिनी हुई

यथा वा—

'कलेव सूर्यादमला नवेन्दोः, कृशानुपुञ्जात्प्रतिमेव हैमी ।
विनिर्गता यातुनिवासमध्यादध्याबभौ राघवधर्मपत्नी ॥'

पूर्वमनुगामिना धर्मेण भिन्नदेशकालक्रियावच्छेदेन, अत्र तु बिम्बप्रति-

## मर्मप्रकाशः

यातुनिवासेति । राक्षसनिवासेत्यर्थः । द्वितीये तमुपपादयति—अत्रेति । द्वितीयपद्य इत्यर्थः ।

## मधुसूदनी

तुल्यस्य अप्रकृतस्य वचने अप्रस्तुतप्रशंसास्थले । अवयवानां बिम्बप्रतिबिम्बभावः ।

पूर्वमिति । पूर्वमाह्लादिनीति पद्ये आह्लादोऽनुगामी धर्मः । इन्दो रुचिर्नायिका च नयनयोराह्लादिनीति देशाभेदः किन्तु इन्दोरुचिर्दिवा न किन्तु रात्रावेव तथा, नायिका तु दिवा निशि चेति कालभेदः । अतिशिशिरत्वमनुगामिधर्मः । परमम्बुजमालिकायाः कण्ठे करणं धारणं, नायिकायाः कण्ठे करणमालिंगनमिति क्रियाभेदः, देशस्तु कण्ठरूप एक एव । आनन्दोऽनुगामी धर्मः । रसानां शृंगारादीनां भावना चर्वणा हृद्येव नायिकाया भावना तु हृदयंगमाऽपि सर्वांगीणेति देशभेदः । देशश्च कालश्च क्रिया चेति देशकालक्रियाः भिन्नाः । तदवच्छेदेन परिच्छेदेन ।

अत्र तु कलेवेति पद्येतु । धर्मपत्नी उपमेया, कला प्रतिमा च उपमानम् । तत्र

## बालक्रीड़ा

अतिशीतल अम्बुज माला की तरह आह्लादिनी, हृदय में अनुभव की गई रसभावना की तरह आनन्दिनी उस नायिका को कभी मैं भूल नहीं सकता हूँ ।

और भी जैसे=चन्द्रमा की अमल कला जैसे सूर्य से, सोने की प्रतिमा जैसे अग्नि से विनिर्गता शोभायमान हुई उसी तरह राक्षसों के आवास लंका से विनिर्गता सीता भी शोभायमान हुई ।

पहिले पद्य में आह्लाददायकत्व रूप एक अनुगामी धर्म देश, क्रिया, कालरूप अवच्छेद परिच्छेद से भिन्न होकर मालारूप हो गया है । जैसे इन्दु की कान्ति और नायिका नयनों को सुख देती है अतः देश में भेद नहीं हुआ किन्तु इन्दु की कान्ति दिन में सुख नहीं देती रात्रि में सुख देती है और नायिका रात दिन सुख देती है अतः काल भेद है । अतिशिशिरत्व अनुगामी धर्म है किन्तु अम्बुजमालिका का कण्ठ में करना धारण है और नायिका का कण्ठ में करना आलिंगन है यहां देश कण्ठ एक है अतः भेद नहीं है किन्तु क्रिया भेद है । रसों शृंगारादि की भावना चर्वणा हृदय में ही है और नायिका की भावना प्रत्यक्षानुभूति हृदय में ही है अर्थात् उसका प्रत्यक्ष मानस ही होता है यह बात नहीं किन्तु चाक्षुष, श्रावण, स्पार्शन, घ्राणज एवं अधरोष्ठ पान से रासन भी प्रत्यक्ष होता है याने सर्वांगीण प्रत्यक्ष है । अतः देश भेद है । यहां भिन्नदेशकालक्रियावच्छेदेन यह पाठ है ।

यहाँ "कलेव" इस पद्य में तो राघवधर्म पत्नी उपमेया, कला और प्रतिमा उपमान है ।

बिम्बभावमापन्नेनैकदेशकालावच्छेदेनेति विशेषः। अत्राधिकदीप्तिरूपे वाक्यार्थे उपमे उपस्कारिके। आत्यन्तिकविनाशहेतुत्वेन देदीप्यमानत्वेन च साधारण्येन सूर्यमण्डलस्य, निष्कलङ्कताभिव्यञ्जकत्वेन भस्मीभवनहेतुत्वेन

## मधुसूदनी

राघवो बिम्बभूतः, नवेन्दुः हेम च प्रतिबिम्बभूते। तथा यातुनिवासः (यातुयातुधानशब्दौ पर्यायौ राक्षसार्थकौ), उपमेयो बिम्बः। सूर्यः कृशानुपुञ्ज उपमानभूतौ प्रतिबिम्बौ। एको देशः कालश्च कथञ्चिदेवं बोध्यः। अमायां रावणवधे सति प्रतिपदि सीताविनिर्गमः। अमायां "दर्शः सूर्येन्दुसंगम" इत्युक्तेश्चन्द्रस्य विलयने सति प्रतिपदि तस्योदयः। अतएव प्रतिपच्चन्द्रमिव प्रजा नृपमिति वर्ण्यते। तत्रापि चन्द्रस्तु प्रतिप्रतिपदमुदीते सीता तु कस्यामेकस्यां प्रतिपदि विनिर्गता। इति यद्यपि कालभेदः। चन्द्रस्तु नभसि उदीते, सीता तु लंकापरिसरे रामस्यावासे भूमौ। इति देशभेदश्च तथापि यस्यां प्रतिपदि सीता विनिर्गता तस्यां प्रतिपदि अपि चन्द्र उदयंगतस्ततस्तयोरेककालत्वं कथञ्चित्। आकाशस्तु एक एवेति विभुरपि लंकापरिच्छिन्नत्वेऽपि वस्तुगत्या भेदाभावेन एकदेशत्वमपि कथञ्चित् स्यादिति भावः। हैमीप्रतिमायास्तु भिन्नदेशकालत्वं स्पष्टमेव।

## बालक्रीड़ा

उनमें राघव बिम्बभूत है नवेन्दु एवं हेम (सुवर्ण) प्रतिबिम्ब हैं। यातु और यातुधान शब्द दोनों पर्याय हैं राक्षसवाची हैं यातुनिवास लंका उपमेय है अतएव बिम्ब है। सूर्य एवं अग्नि उपमान है और प्रतिबिम्बभूत हैं।

सीता और चन्द्रकला का एक देश एवं एक काल किसी प्रकार यों समझिये।

अमावस्या में रावण के वध होने पर प्रतिपदा को लंका से सीता का विनिर्गमन हुआ। अमा में "दर्शः सूर्येन्दुसंगमः" के अनुसार चन्द्र का सूर्य में विलयन होने पर भी प्रतिपदा को सूर्य से उसका विनिर्गम हुआ किन्तु चन्द्रमा प्रत्येक प्रतिपदा को उदित होता है इसीलिए "प्रतिपच्चन्द्रमिव प्रजा नृपम्" यह वर्णन भी संगत है और सीता तो किसी एक प्रतिपदा को विनिर्गत हुई और चन्द्रमा आकाश में निकलता है किन्तु सीता तो लंका परिसर में रामजी के आवास भूमि पर निकल कर आई। इस तरह काल एवं देश भेद है तथापि सीता जिस प्रतिपदा को विनिर्गत हुई उस प्रतिपदा को भी तो चन्द्र निकला था। अतः एक कालिकत्व हो गया और आकाश एक ही है और विभु भी है। अतः लंका परिछिन्न होने पर वस्तुत भेदाभाव होने से एकदेशत्व भी हो गया। हैमी प्रतिमा का तो भिन्न देशकालत्व स्पष्ट ही है।

यहाँ अधिक दीप्तिरूप वाक्यार्थ की दोनों उपमाएँ उपस्कारिका हैं। सूर्यमण्डल, चन्द्र के आत्यन्तिक विनाश का और लंका, सीता के आत्यन्तिक विनाश की हेतु है। देदीयमानत्व दोनों के द्वारा दोनों का होता है। अतः साधारण धर्म है। अग्नि, हैमी प्रतिमा की और लंका, सीता की निष्कलंकता की अभिव्यंजक है और भस्मी भवन रूप हेतु दोनों के समान है।

कृशानुपुञ्जस्य च लङ्काप्रतिबिम्बता। मालारूपत्वं चात्रैकोपमेयकानेकोपमासामानाधिकरण्यात्।

समस्तवस्तुविषया सावयवा यथा—

'कमलति वदनं यस्यामलयन्त्यलका मृणालतो बाहू।
शैवालति रोमावलिरद्भुतसरसीव सा बाला॥'

यथा वा—

'ज्योत्स्नाभमञ्जुहसिता सकलकलाकान्तकान्तवदनश्रीः।
राकेव रम्यरूपा राघवरमणी विराजते नितराम्॥'

### मर्मप्रकाशः

सूर्यमण्डलस्येति। लङ्काप्रतिबिम्बतेत्यत्रान्वयः। अमायां रावणवधे सति प्रतिपदि सीतानिर्गम इत्येकदेशकालावच्छिन्नत्वं बोध्यम्। सामानाधिकरण्यादिति। उपमान्तरनिरपेक्षत्वान्निरवयवत्वमित्यपि बोध्यम्। कमलतीति। अत्र चतुर्षु उपमानादाचारे क्विप्। ज्योत्स्नेति। ज्योत्स्नाभं मञ्जु हसितं यस्याः।

### मधुसूदनी

लंकाप्रतिबिम्बतेति। लंकानिष्ठबिम्बत्वनिरूपितप्रतिबिम्बतेत्यर्थः। उपमेयधर्मस्य बिम्बत्वमुपमानधर्मस्य प्रतिबिम्बत्वमित्यालंकारिकसमयस्य प्राङ् निवेदितत्वात्।

कमेति। ज्योत्स्नेति। अत्र कमलालिमृणालशैवालेभ्य उपमानवाचि पदेभ्यश्चतुर्भ्य "उपमानादाचारे" इति क्विप्। ज्योत्स्नेवाभातीति ज्योत्स्नाभं मञ्जु हसितं यस्याः। सकलाभिः कलाभिः कान्तो मनोहरः अथवाः सकलः पूर्णः कलाकान्तश्चन्द्रः। तद्वत्कान्ता वदनश्रीर्यस्याः।

### बालक्रीड़ा

लंका बिम्ब है सूर्य एवं अग्नि प्रतिबिम्ब हैं कह चुके हैं। एक सीता उपमेय का अनेक नवेन्दु कला, हेमी प्रतिमा रूप अनेक उपमान के साथ सामानाधिकरण्य होना यहाँ माला रूपता है।

समस्तवस्तुविषया सावयवा जैसे—

वह बाला अद्भुत सरसी है। जिसमें वदन कमल है। अलक गुल्फियाँ भौंरे का आचरण करती हैं। बाहू दोनों मृणाल हैं। रोमावली शैवाल है।

और जैसे—

राघवरमणी सीता राका पूर्णिमा की तरह रम्यरूपवाली अत्यन्त शोभायमान हो रही है। ज्योत्स्ना की आभा की तरह जिसका मञ्जु सुन्दर हास्य है सकल पूर्ण या सकल कलाओं सोलह कलाओं के कान्त पति चन्द्र की तरह कान्त मनोहर जिसके वदन की श्री बनी है।

अत्र सर्वेषामुपमानानां शब्दैरेवाभिधानात्समस्तवस्तुविषया अङ्गोपमाभिनिष्पाद्यमानत्वाच्च साङ्गा भवति ।

एकदेशविवर्तिनी सावयवा यथा—

'मकरप्रतिमैर्महाभटैः, कविभी रत्नसमैः समन्वितः ।
कवितामृतकीर्तिचन्द्रयोस्त्वमिहोर्वीरमणासि कारणम् ॥'

अत्रोत्तरार्धे उपमितसमास एव । विशेषणसमासवेद्यस्य तादात्म्यस्य प्रकृतेऽनुपयोगात् । राज्ञो जलधेरुपमा शब्देनानभिहिताप्यङ्गोपमाभिराक्षिप्ता प्रतीयते इत्येकदेशविवर्त्तनादेकदेशविवर्तिनी ।

मर्मप्रकाशः

सकलः पूर्णकलः कलाकान्तश्चन्द्रस्तद्वत्कान्ता वदनश्रीर्यस्याः । अत्र उदाहरणद्वये । सर्वेषामवयवरूपाणामवयविरूपाणां च । तथा च तेषां तदभिधेयत्वमेव समस्तवस्तुविषयत्वमिति भावः । अङ्गोपमेति । अवयवोपमेत्यर्थः । एवमग्रेऽपि । साङ्गा सावयवा । तथा चोपमानां सापेक्षत्वं सावयवत्वमिति भावः । मकरा मत्स्याः । कविता अमृतमिव । कीर्तिश्चन्द्र इव ।

मधुसूदनी

अत्र उदाहरणयोः सर्वेषामुपमानानामुपमेयानाञ्चावयवानामवयविनां श्रौतत्वाद्धेतोः साङ्गा समस्तवस्तुविषयोपमा ।

मकरेति । कविता अमृतमिवेति कीर्तिश्चन्द्र इवेति उत्तरार्द्धे "उपमितं" सूत्रेण समासः । अत्रैकदेशे विशेषेण विलक्षणेन आर्थेन प्रकारेण वर्त्तनात् भवनात् एकदेशविवर्त्तिनी उपमा ।

श्रौती चार्थी तुला यस्मिन्नेकदेशविवर्त्तिनी इति । यस्मिन् पद्ये इत्यर्थः । चकारः समुच्चयार्थकः ।

बालक्रीड़ा

यहाँ प्रथम पद्य में बाला उपमेय है और द्वितीय पद्य में सीता उपमेय है । बाला को सरसी के सदृश कहा गया है और सीता को पूर्णिमा के सदृश कहा गया ह । इनके अंगों में भी सादृश्य का निरूपण किया है । अतः सांगा है और सब उपमानों का शब्दों से कह देने से समस्त वस्तु विषया है । प्रथम में क्विप् प्रत्यय है । और द्वितीय में इव का प्रयोग है किन्तु समास है । एकदेशविवर्त्तिनी सावयवा जैसे—

हे उर्वीरमण ? पृथ्वीपते ! आप इस लोक में अमृत सदृश कविता एवं चन्द्रसदृश कीर्ति के जनक हैं । मकर सदृश महाभट और रत्नों के सदृश कविलोग आप की सेवा में निरत हैं संलग्न है ।

केवलश्लिष्टपरम्परिता यथा—

'नगरान्तर्महीन्द्रस्य महेन्द्रमहितश्रियः ।
सुरालये खलु क्षीबा देवा इव विरेजिरे ॥'

अत्र श्लेषोपस्थापितेन सुमेरुणा मदिरागारस्योपमा क्षीबानां देवोप-

### मर्मप्रकाशः

विशेषणेति । मयूरव्यंसकेतीत्यर्थः । नगरान्तरिति । महेन्द्रवत्पूजिता श्रीर्यस्य तस्य राज्ञो नगरमध्ये सुरालये मत्ता देवा इव खलु विरेजिरे इत्यर्थः । मदिरागारस्योपमेति । सुरालये

### मधुसूदनी

नगरेति । सुराणामालयः सुमेरुः पर्वतः । सुराया आलयो मद्यशाला मद्यपानां संगमभूमिः । इतिश्लेषः । महेन्द्रः सुरराजः । तस्येव महिता (मह पूजायां) पूजिता श्रीः शोभा ऐश्वर्यं वा यस्य महीन्द्रस्य पृथ्वीपतेः नगरान्तः नगरमध्ये सुरालये सुमेरौ देवा इव सुरालये मदिरागारे क्षीवा मद्यपा विरेजिरे । अन्योन्येति । इदं तु बोध्यम् । अत्र पण्डितराजस्तदनुयायी नागेशो महाशयश्च उभावपि समदर्शिनौ । वस्तुस्थितिरियम् । परस्य आरोपो नियतस्यारोपस्य वर्णनीयतया अवश्यमपेक्षणीयस्य आरोपस्य उपायः साधारणधर्मसम्पादकतया निमित्तं तत्परम्परितम् । इति काव्यप्रकाशकारः । भवन्तावपि यत्र एक आरोप एवारोपान्तरस्य निमित्तं तत्परम्परितमित्येवाहतुः । भवतोरुक्त्यैको नियतारोपो निमित्ती कार्यं, परस्यारोपा निमित्तं कारणं तथा सति कथं परस्परोपायत्वमेकस्य कारणं परः । परस्य कारणमेक इति कारणतानिरूपिता कार्यता, कार्यतानिरूपिता कारणतेतिवत्समर्थ्य समर्थकभावोऽपि परस्परं नहि भवितुमर्हति यतो वर्णनीयतया अवश्यमपेक्षणीयो हि समर्थ्य एव न तु समर्थक इत्यपि निश्चप्रचम् । भवतापि कमलावासकासार इत्यत्र यशः सौरभ्यलशुन इत्यत्र च अन्योन्याश्रयो नाशंकनीयः अन्योन्योपायरूपता नास्तीति साधितम् । ततश्चात्र पूर्वत्र चास्माभिरुक्त एव पन्थाः समीचीनः । इति ।

### बालक्रीड़ा

यहाँ उत्तरार्ध में कवितामृत कीर्तिचन्द्रयोः पद में उपमिति उपमेय समास ही है । विशेषण समास मयूर व्यंसकादयश्च सूत्र कृत समास से वेद्य तादात्म्य अभेद का प्रकृत में कोई उपयोग नहीं है । राजा की समुद्र के साथ उपमा यद्यपि कही नहीं गई है तथापि अंगभूत उपमाओं से आक्षिप्त हुई प्रतीत होती है । इस तरह एकदेश में रहने के कारण एकदेश विवर्तिनी यह है ।

केवल श्लिष्ट परम्परिता उपमा जैसे—

महेन्द्र की तरह पूजित है श्री जिसकी । उस महीन्द्र राजा के नगर में मद्यशाला के मद्यप सुमेरु में रहने वाले देवताओं की तरह सुशोभित हैं ।

यहाँ सुरों का आलय निवासस्थल सुमेरु एवं सुरा मदिरा का आलय अगार ये दो अर्थ

माया उपाय इति श्लिष्टपरम्परिता। अन्योन्योपायतारूपस्यैव परम्परितत्व-स्येह परिभाषणात्, मालारूपताविरहाच्च केवला।

मालारूपश्लिष्टपरम्परिता यथा—

'महीभृतां खलु गणे रत्नसानुरिव स्थितः।
त्वं काव्ये वसुधाधीश ? वृषपर्वेव राजसे॥'

### मर्मप्रकाशः

इतीति भावः। नन्वेवं श्लिष्टत्वेऽपि कथं परम्परितत्वमत आह—अन्योन्योपायतारूपस्यैवेति। सावयवायां परस्परसमर्थकत्वेऽपि नोपायता। ज्योत्स्नायां हसितत्वारोपं विनापि औज्ज्वल्यादिना सीतायां राकासाम्यसिद्धेः। इह तु मदिरागारेषु सुमेरूपमां विना क्षीवेषु देवोपमायां न किंचित्साधर्म्यम्। तस्मिश्च तादृशसादृश्यप्रतीतिमूलाभेदमापन्नसुरालयवृत्तित्वमेव तथा। मदिरागारेषु सुमेरूपमायां च क्षीबेषु देवोपमां विना न साधारणधर्म इत्यन्योन्योपायता। अन्योन्याश्रयपरिहारस्तु रूपकप्रकरणे वक्ष्यते। चस्त्वर्थे केवलपदोत्तरं वा योज्यः। महीभृतां पर्वतानां राज्ञां च। गणे समूहे। रत्नसानुः सुमेरुः। काव्ये शुक्रे कवित्वे च। वृषपर्वेव दैत्यराज इव।

### मधुसूदनी

महीति। अत्र महीभृत्पदे काव्यपदे चाभंगश्लेषः। ताभ्यां क्रमशः राज्ञः पर्वतस्योपस्थितिः। शुक्रस्य कवित्वस्य चोपस्थापनम्। तत्र पर्वतेन राज्ञः, शुक्रेण कवित्वस्य चोपमे द्वे उपायौ द्वयोरूपमयोरित्यतः उपाय इति एकवचनान्तप्रायोगापेक्षया उपायौ इति द्विवचनान्तः प्रयोगः साधुः। सुधियः प्रमाणम्।

### बालक्रीड़ा

सुरालय शब्द के विवक्षित हैं। अतः यहाँ श्लेष से उपस्थापित सुमेरु से मदिरागार की उपमा, मद्यपों की देवताओं के साथ उपमा का उपाय है इसलिए श्लिष्ट परम्परिता उपमा है। यहाँ एक दूसरे का उपायरूपता को प्राप्तकर लेना ही परम्परित कहा गया है। और माला रूपता के अभाव में केवल कही गई है।

माला श्लिष्ट परम्परिता जैसे—हे वसुधाधीश ? पृथ्वीपते ? आप महीभृत पर्वतों के समूह में रत्नसानु सुमेरु की तरह राजाओं के समूह में विराजमान हैं। और शुक्राचार्य के संयोग से जैसे वृषपर्वा (एतन्नामक दानव) सुशोभित है वैसे ही आप कविता से विराज रहे हैं।

यहाँ महीभत् और काव्य पदों के श्लेष से उपस्थापित पर्वतों के साथ राजाओं और शुक्र के साथ काव्य की उपमाएँ मेरु एवं वृषपर्वा के साथ प्रकृत राजा की उपमा के उपाय हैं।

अत्र श्लेषोपस्थापिताभ्यां पर्वतशुक्राभ्यां राजकाव्ययोरुपमे मेरुवृषपर्वभ्यां राज्ञ उपमयोरुपायौ। नन्वत्र पर्वतानामिव राज्ञां शुक्र इव कवित्वे इत्येवंरूपा उपमा कथं प्रत्येतुं शक्या। उपमानोपमेयशब्दयोः पार्थक्याभावादिति चेत्, श्लेषे ह्येकशब्दोपात्तत्वेन रूपेणाभेदाध्यवसानस्येव तेनैव साधर्म्येण सादृश्याध्यवसानस्यापि सुवचत्वात्, तस्यैव च प्रकृते प्रयोज्योपमानुकूलत्वात्।

### मधुसूदनी

ननु श्लिष्टपरम्परित रूपके विद्वन्मानसेत्यादौ एकेन मानसपदेनोपस्थाप्ययोर्मनःसरसोरभेदान्वयो भवतीति सर्वैरपि भवत्पूर्वैराचार्यैर्भवता च समसाधि। तथैव प्रकृतेऽपि महीभृतामित्यत्रापि पर्वतस्य राज्ञश्चोपमानोपमेययोरभेदान्वय एव भविष्यति न तु भेदान्वयस्तर्हि भेदे उपमेति सिद्धान्ताद्भेदाभावेन कथमत्रोपमेति उपमायाः प्रत्येतुमशक्यत्वे हेतुमाह—उपेति। साधर्म्यमुपमाभेदे इति सिद्धान्तादुपमानोपमेययोः पार्थक्यं भेद अपेक्षितः स च तयोः महीभृतामिति काव्य इति च एक पदोपस्थाप्यत्वान्नास्ति, इति चेदुच्यते। श्लेषे हि यथा एकशब्दोपात्तत्वेन रूपेण साम्येन अभेदस्य वस्त्वन्तरतादात्म्यस्य अध्यवसायः आहार्यप्रतीतिः। तद्वत् तेनैव साधर्म्येण एकशब्दोपात्तत्वेन रूपेण सादृश्याध्यवसानस्यापि सादृश्यस्य पर्वतगणराजगण प्रतियोगिक सादृश्यस्य शुक्राचार्यकवित्वनिरूपितसादृश्यस्य च अध्यवसानमाहार्यप्रतीतिः। तस्या अपि सुवचत्वात्। तस्यैव सादृश्याध्यवसानस्यैव प्रकृते पद्ये प्रयोज्यायाः साध्याया रत्नसानुरिव वसुधाधीशः, वृषपर्वेव वसुधाधीशः इत्येवं रूपाया उपमाया अनुकूलत्वात् निमित्तत्वात्।

अयं भावः। यथाश्लिष्ट परम्परितरूपके उपायरूपकमभेदसम्पादकं तथा प्रकृतेऽपि उपायोपमा सादृश्यसम्पादिका। यतः पर्वतत्वं राजत्वं, शुक्रत्वं कवित्वं च असाधारणमेवातोधर्मयोर्भेद एव। धर्मभेदज्ञानं चोपमायां प्रतिकूलमत एव बिम्बप्रतिबिम्बभावेन वस्तुतो भिन्नयोर्धर्मयोः साधारण्याय प्रयत्न आस्थीयते। एवं च रूपकीयाहार्याभेदज्ञानायेव आहार्यसादृश्यज्ञानाय प्रयोजिका उपायभूतोपमा साधारण्यसम्पादिका एकपदोपात्तत्वादिति।

### बालक्रीड़ा

अब यहाँ शंका होती है कि पर्वतों की राजाओं के साथ, शुक्र की कविता के साथ उपमा को कैसे समझ सकते हैं। क्योंकि उपमान एवं उपमेय वाचक शब्दों की पृथक् २ अभिधा नहीं है अर्थात् उपमानतावच्छेदक एवं उमभेयतावच्छेदक के भेद में ही उपमिति क्रिया की निष्पत्ति हाती है। वह यहाँ नहीं है। उत्तर। श्लेषं में जैसे एक शब्दोपत्तत्व रूप से अभेदाध्यवसान होता है उसी तरह उसी एक शब्दोपात्तत्व रूप साधर्म्य से पर्वतों एवं राजाओं में शुक्र एवं काव्य में सादृश्याध्यवसान होता है ऐसा सुख से कहा जा सकता है

केवला शुद्धपरम्परिता यथा—

'राजा युधिष्ठिरो नाम्ना सर्वधर्मसमाश्रयः ।
द्रुमाणामिव लोकानां मधुमास इवाभवत् ॥'

मालारूपा शुद्धपरम्परिता यथा—

'मृगतां हरयन्मध्ये वृक्षतां च पटीरयन् ।
ऋक्षतां सर्वभूपानां त्वमिन्दवसि भूतले ॥'

### मर्मप्रकाशः

तेनैव एकशब्दोपात्तत्वेन साधर्म्येण । मधुमास इव चैत्रमास इव । अत्र मालारूपताविरहात्केवलत्वम्, श्लेषाभावाच्छुद्धत्वम्, अन्योन्योपायतारूपत्वात्परम्परितत्वमिति बोध्यम् । मृगतामिति । मृगा (णाम्)इवाचरतां सर्वभूपानां मध्ये हरयन्सिंह इवाचरन्वृक्षा (णाम्)इवाचरतां तेषां मध्ये पटीरयंश्चन्दनद्रुरिवाचरंस्त्वं ऋक्षतां नक्षत्राणी(?) (णामि) वाचरतां तेषां मध्ये भूतले

### मधुसूदनी

राजेति । अत्र युधिष्ठिरो राजा उपमेयः । मधुमास उपमानम् । द्रुमाणामुपमानत्वम् लोकानामुपमेयत्वम् । उभयत्र इव द्वयं सादृश्यप्रतिपादकम् । सर्वधर्मसमाश्रयत्वसर्वविधपुष्पोद्भावकत्वयोर्वस्तुतो भिन्नयोरपि धर्मयोः सादृश्यादभेदाध्यवसायाद् साधारण्यमतोऽत्र बिम्बप्रतिबिम्बभावमापन्नता ।

मृगतामिति । हे राजन् ? त्वं मृगतां मृगाणामिवाचरतां सर्वभूपालानां मध्ये हरिरिव सिंह इव आचरसि । मृगाणामुपमानत्वं सर्वभूपालानामुपमेयत्वम् । आरण्यकजीवित्वस्य साधारणधर्मस्य इवार्थेविहित क्विपः सादृश्यप्रतिपादकस्य लोपः । हरिरुपमानम् । त्वमिति वर्णनीयो राजा उपमेयः । मृगाणां च मृगेन्द्रोऽहमित्युक्तेः

### बालक्रीड़ा

जो कि प्रकृत में प्रयोज्य साध्य मेरु एवं वृषपर्वा के साथ प्रकृत राजा की उपमा के अनुकूल है प्रयोजक है साधन है । अतः उपमा बन जाती है ।

केवल शुद्ध परम्परिता जैसे—

वृक्षों के सदृश लोक के लिए मधुमास वसन्त के सदृश राजा जो कि युधिष्ठिर नाम से प्रसिद्ध था वह सम्पूर्ण धर्मों का आश्रय था ।

यहाँ राजा युधिष्ठिर उपमेय है । मधुमास उपमान है । उपमान द्रुम हैं । लोक उपमेय हैं । दोनों जगह दो इव शब्द सादृश्य प्रतिपादक हैं । सर्वधर्माश्रयत्व सर्वविध पुष्पोद्भावकत्व धर्म वस्तुतः भिन्न हैं किन्तु सादृश्याध्यवसाय से साधारण्य है अतः इन में बिम्ब-प्रतिबिम्ब भावापन्नता है ।

मालारूप शुद्धपरम्परित जैसे—

हे राजन् ! आप मृग की तरह आचरण करने वाले सर्व भूपों राजाओं में सिंह के

उपमानयोः परस्परमुपमेययोश्चानुकूल्ये उपमेययोरेषोपायता निरूपिता ।

## मर्मप्रकाशः

चन्द्रवदाचरसीत्यर्थः । अनुकूल्ये इति । अनुकूलताख्यगुणे सतीत्यर्थः । मृगतां हरयन्नित्यत्रापि

## मधुसूदनी

मृगेन्द्रत्वम् । तेषु श्रेष्ठत्वं साधारणधर्मः । वृक्षाणामिवाचरतां राज्ञां मध्ये । वृक्षसर्वभूपयोरुपमानोपमेयभावः । वनाङ्गत्वं साधारणधर्मः । पटीरश्चन्दनमुपमानम् । त्वमुपमेयः । स्वसम्पर्केणेतरसुरभिसम्पादकत्वं साधारणधर्मः । ऋक्षाणामिव नक्षत्राणामिवेति । ऋक्षाणि उपमानम् । सर्वभूपा उपमेयाः । सामान्यतस्तेजःशालित्वं सा० धर्मः । इन्दुरिवाचरसि इन्दवसि । इन्दुरुपमानम् । त्वमुपमेयः । तमोनिवारकत्वे सति सर्वप्रकाशकत्वं साधारणधर्मः । अत्र सर्वत्र क्विपि धर्मवाद्योर्लोपे लुप्तोपमा । तथा त्वंपदार्थे नियते हरिपटीरेन्दूनां सादृश्ये सर्वभूतेषु मृग-वृक्ष-ऋक्षाणां सादृश्यं निमित्तमिति परम्परिता मालारूपा श्लेषाभावाच्छुद्धा । उपमानोपमेययोः समानविभक्तिक्त्वनियमात् मृगा इव, वृक्षा इव, ऋक्षाणीवाचरतां भूपानामित्यत्र कथमुपमानोपमेयभाव इति सुधियः शोधयन्तु । मर्मप्रकाशे तु प्रथमान्त षष्ठन्तयोः स भावोऽकितः । इति ।

## बालक्रीड़ा

समान है वृक्षों की तरह आचरण करनेवाले राजाओं में चन्दन के समान हैं नक्षत्रों की तरह आचरण करनेवालों में चन्द्र के समान हैं भूतल में ।

यहाँ मृग उपमान हैं सर्व भूपाल उपमेय हैं । यह सब जगह उपमेय हैं । आरण्यक जीवित्व साधारणधर्म है । हरि उपमान है त्वम् से वर्णनीय राजा उपमेय हैं । सभी जगह राजा उपमेय है । मृगों में मृगेन्द्र हूँ इस से मृगों में श्रेष्ठत्व साधारण धर्म है । वृक्ष उपमान हैं । वनाङ्गत्व साधारण धर्म है । पटीर चन्दन उपमान है । अपने सम्पर्क से दूसरों को सुगन्धित कर देना साधारण धर्म है । ऋक्ष नक्षत्र उपमान हैं । सामान्यतः तेजः शालित्व साधारण धर्म है । इन्द्र उपमान हैं । त्वं उपमेय हैं । तमो निवारण करते हुए सब को प्रकाशित कर देना साधारणधर्म है ।

इनमें सब जगह क्विप् प्रत्यय है अतः धर्म एवं इवादि के लोप में लुप्तोपमा है । तथा नियत त्वं पदार्थ राजा का सिंह , चन्दन एवं चन्द्र के साथ सादृश्य में सर्वभूपों का मृग, वृक्ष एवं नक्षत्रों के साथ सादृश्य निमित्त है अतः परम्परितोपमा है और माला के सद्भाव में केवला नही हैं । श्लेष के अभाव में शुद्धा है ।

इन सभी उदाहरणों में उपमान एवं उपमेयों में परस्पर आनुकूल्य है अतः आनुकूल्य स्थलीया उपमाओं की उपायता का यह निरूपण हुआ ।

प्रातिकूल्ये उपायता यथा—

'राजा दुर्योधनो नाम्ना सर्वसत्त्वभयंकरः ।
दीपानामिव साधूनां झञ्झावात इवाभवत् ॥'

अत्रोपमानयोर्दीपझञ्झावातयोरन्योन्यमुपमेययोश्च साधुदुर्योधनयोः प्रातिकूल्येऽप्युपमयोः परस्परमानुकूल्यादुपायतैव ।

एवम्—

'सरोजतामथ सतां शिशिरर्तवताधुना ।
दर्भतां सर्वधर्माणां राज्ञानेन विदर्भितम् ॥'

मर्मप्रकाशः

मृगाधिपत्वादानुकूल्यमेवेति बोध्यम् । एवं प्रातिकूल्ये शुद्धपरम्परितामुदाहरति—एवमिति । कमलवदाचरतां सतां मध्ये शिशिरर्तुवदाचरतानेन राज्ञा अधुना दर्भवदाचरतां सर्वधर्माणां

मधुसूदनी

राजा दुर्योधन इति । अत्र विनाशकत्वसाधर्म्यादुपमानयोः दीपझंझावातयोः । उपमेययोश्च साधु-दुर्योधनयोरन्योन्यं प्रातिकूल्येऽपि (प्रयोज्योपमायां दुर्योधने झंझावात सादृश्यरूपायामुपेयायामनुकूलत्वात्साधुषु दीपसादृश्यरूपोपमा उपायः इति) उपमयोः परस्परमुपायोपेयभाव एवानुकूल्यात् समर्थ्यसमर्थकभावात् ।

एवं समनन्तरोक्तमार्गेण मालाशुद्धपरम्परितरूपोपमायामपि प्रातिकूल्य उदाहरणं सरोजतामित्यादि बोध्यम् ।

उपमानसरोजवदाचरतां सतामुपमेयानाम् । कृते इति शेषः । अत्र सद्गुण विकासनमाचारः । उपमानशिशिरर्त्तुवदाचरता अनेन राज्ञा उपमेयेन । शिशिरर्त्तौ सरोजानां ह्रानिरिति वस्तुस्थितिः । शिशिरहेतुकं सरोजगतममुन्मीलनम् । एतद्राज

बालक्रीड़ा

प्रातिकूल्य में उपमाओं की उपायता जैसे—

दीप सदृश साधुओं के विषय में झञ्झावात के सदृश राजा दुर्योवन, सव प्राणियों के लिए भयंकर हुए ।

यहाँ दीप एवं झंझावात उपमानों में और साधु एवं दुर्योवन उपमेयों में परस्पर प्रतिकूलता होने पर भी प्रयोज्य उपमा दुर्योधन की झंझावात के साथ होनेवाली उपेय उपमा में साधुओं की दीप के साथ की जानेवाली उपमा अनुकूल है अतः उपाय है अतः उपमाओं में परस्पर उपायोपेय भाव ही है ।

इसी तरह समनन्तर कथित पद्धति से माला शुद्ध परम्परित उपमा में भी प्रतिकूलता दशा में उदाहरण "सरोजताम्" समझिये ।

### मनुसूदनी

हेतुकः सत्सु गतोऽनुत्कर्षः अनुन्मीलनमनुत्कर्षणमाचारः। दर्भतां दर्भवदाचरताम्। दर्भा उपमानम्। सर्वधर्मा उपमेयाः। पवित्रीकरणमाचारः। एकरूपेण गुम्फनं वा सर्वधर्माणां कृते। अनेन राज्ञा वेनेन वा विदर्भितम्। विदर्भवदाचरितम्। विशेषेण दारयतीति दृ धातोः "दृदलिभ्यां भः" उणादिः ३।१५१। सूत्रेण भः प्रत्ययः विदर्भो विदारकः। वेनेन राज्ञा स्वराज्ये यद् "न यष्टव्यं न होतव्यम्" इति प्रचारेण यागादिधर्माणां नाश एव कृतः। उपमानम्। राजा वेनो वाथवा अनेनेति प्रत्यक्षनिर्देशेन कश्चिद्यवनस्तत्कालभवो राजा उपमेयः। विनाशकत्वं साधारणधर्मः।

अत्र विदर्भदेशवदाचरितमित्युक्तिर्नागेशमहाशयस्य ज्ञातुमशक्यैव। विदर्भनामकराज्ञो व्यपदेशेन भरतराज्ञो व्यपदेशेन भारतवर्षमिव विदर्भो देशः। तस्यां विदर्भोऽजनयत् पुत्रौ नाम्ना कुशक्रथौ।

तृतीयं रोमपादश्च विदर्भकुलनन्दनम्। अस्यैव नाम्ना विदर्भनगरी कुण्डिनपुरम्। अथवा विदर्भनामा मुनिर्हरिवंशोक्तः =

द्वैपायनो विदर्भश्च जैमिनिर्माठरः कठ इति। अत्र देशे विशिष्टा दर्भा मिलन्तीति विदर्भ इति प्रसिद्धिः।

### बालक्रीड़ा

'उपमान' सरोज की तरह विकसित होने रूप आचरण करने वाले (उपमेय) सज्जनों के लिए (उपमान) शिशिर ऋतु के सदृश अनुन्मीलन उत्कर्षरहितत्व रूप आचरण करने वाले तथा (उपमान) दर्भ कुशाओं के सदृश पवित्रीकरण रूप या एकरूप में गुम्फन रूप आचरण करने वाले सर्वधर्मों के लिए इस राजा ने इस समय विदर्भ विदारक अर्थात् विनाशक के सदृश आचरण किया। यहाँ विपूर्वक दृ विदारणे धातु से "दृदलिभ्यां भः" इस ४३९ वें उणादि सूत्र से भ प्रत्यय होने पर विदर्भ बना। जिसका अर्थ है विदारक विनाशक। राजा वेन ने किसी को यज्ञ नहीं करना चाहिए और न हवन करना चाहिए इत्यादि प्रचार करके पवित्र करने वाले धर्म का नाश ही किया था। या चाणक्य ने जैसे एक रूप में उगे हुए कुशाओं का विदारण किया। (वृक्षादनो वृक्षभेदो विदर्भः कुशदारकः,) इस कोष के अनुसार है।

यहाँ नागेश महाशय का विदर्भदेशवदाचरितम् यह लेख बोध गम्य नहीं है। भरत राजा (जिसके नाम से भारतवर्ष राष्ट्र है) के तरह विदर्भ राजा एवं विदर्भ मुनि भी हुए हैं

तस्यां विदर्भोऽजनयत् पुत्रौ कुशक्रथौ<br>
तृतीयं रोमपादश्च विदर्भकुलनन्दनम्।

भागवत ८।२४।९

द्वैपायनो विदर्भश्च जैमिनिर्माठरः कठः।

हरिवंश महाभारत का अंश।

इत्यादौ मालारूपतायामपि ।

उपमेयानां स्वस्वोपमानानुपमानानां रशनोपमा । यथा—

'वागिव मधुरा मूर्तिर्मूर्तिरिवात्यन्तनिर्मला कीर्तिः ।
कीर्तिरिव जगति सर्वस्तवनीया मतिरमुष्य विभोः ॥'

इयं धर्मभेदे ।

धर्मैक्ये तु—

'भूधरा इव मत्तेभा मत्तेभा इव सूनवः ।
सुता इव भटास्तस्य परमोन्नतविग्रहाः ॥'

धर्मलोपे तु तस्येत्यस्यानन्तरम् 'भटा इव युधि प्रजाः' इति बोध्यम् ।

### मर्मप्रकाशः

मध्ये विदर्भदेशवदाचरितमित्यर्थः । स्वस्वोपमानानुपमानानामिति । इदं विशेषण-मुपमेयोपमायामतिव्याप्तिवारणार्थम् । भूधरा इति । परमोन्नतविग्रहत्वमेकोऽत्र धर्म. ।

### मधुसूदनी

उपमेयानामिति । अत्र स्वमुपमेयम् । स्वेषां स्वेषां उपमेयानां यानि उपमा-नानि । तेषामुपमानानि न भवन्ति परेषां तानि भवन्ति एतादृशानि यानि स्वस्वोपमा-नानुपमानानि उपमेयानि तेषाम् । उपमेयोपमायां स्वस्योपमेयस्य यदुपमानं तदेवोप-मेयीकृत्य स्वमुपमेयमुपमानीभवति । गिरिरिव गजराजः । गजराज इव गिरिः । इत्यत्र यथा गजराज उपमेयः स्वोपमानं गिरिमुपमेयीकृत्य स्वयं गजराज उपमानं भवति तथा यत्र नहि भवति सा रशनोपमा वागिवेति । इयं रशनोपमा धर्माणां मधुरत्व-निर्मलत्व-स्तवनीयत्वानां प्रत्युपमं भेदे सति निदर्शिता । धर्मस्य परमोन्नतविग्रहत्वस्य ऐक्ये तु भूधरा इति ।

### बालक्रीड़ा

रशनोपमा वह होती है जहाँ उपमेय अपने अपने उपमानों के उपमान नहीं होकर आगे कहे जाने वालों के उपमान बन जाते हैं । जैसे—इस राजा की मूर्ति वाणी की तरह अत्यन्त निर्मल कीर्ति है । कीर्ति की तरह अत्यन्त स्तुत्या मति है ।

यहाँ प्रत्येक उपमा में धर्मों में भेद है । धर्म की एकता में तो जैसे—

भूधरों की तरह मत्तहाथी, मत्तहाथियों की तरह पुत्र, और पुत्रों की तरह भट परमोन्नत शरीर वाले हैं ।

इसी उपमा को धर्म के लोप में दिखलाना हो तो तस्य के बाद युद्ध में भटों की तरह प्रजा हैं । ऐसा पाठ समझना चाहिए ।

इयमेवंभेदा प्राचीनैर्भेदैर्गुणने वागगोचरं भूमानं भजमाना नेयत्तामर्हतीति दिक्।

एषैव च यदा सकलेन वाक्येन प्राधान्येन ध्वन्यते तदा परिहृतालंकारभावा ध्वनिव्यपदेशहेतुः। अस्यां चालंकारव्यपदेशः कदाप्यलंकारभावमप्राप्तेषु मञ्जूषादिगतेषु कटकादिष्विवालंकुर्वाणगतधर्ममात्रसंस्पर्शनिबन्धनः। क्वचिदसौ शब्दशक्तिमूलानुध्वननविषयः। क्वचिदर्थशक्तिमूलानुध्वननविषयः।

### मर्मप्रकाशः

एषैव च उपमैव। परीति। त्यक्तालंकारत्वकेत्यर्थः। नन्वेवं कथं तत्रालंकारव्यवहारोऽत आह—अस्यां चेति। धर्ममात्रेति। उपमात्वेत्यर्थः। मात्रपदेनालंकारत्वव्यवच्छेदः।

### मधुसूदनी

एषा उपमा एव। परिहृतोऽलंकारभावः परित्यक्त उपस्कारकत्वधर्मो यया सा। ननु यदा उपस्कारकत्वधर्म एभिरुपमालंकारादिभिः सर्वैस्त्यक्तस्तर्हि कथं रूपकालंकारध्वनि रुपमालंकारध्वनिरिति नामकरणमिति समाधातुं प्रयतते= अस्यां चेति। परिहृतालंकारभावेऽपि यदस्यामुपमायामलंकारव्यपदेशः, रूपकालंकारध्वनिरित्यादिसमाख्या। स तु कदापि उपभोगात्पूर्वं, संप्रति प्राप्तोपभोगावस्थं यावत् अलंकारभावमप्राप्तेषु, निर्माय विक्रयार्थं प्रस्तावितत्योपभोगतां नानीतेषु किन्तु क्रेतृगणप्रदर्शनाय

### बालक्रीड़ा

यहाँ इस तरह के भेदों वाली यह उपमा प्राचीन भेदों के साथ गुणन करने पर वाणी के अगोचर गौरव महत्व को प्राप्त करती है अतः इसके इतने भेद होते हैं यह नहीं कहा जा सकता है।

यही उपमा जब सकल वाक्य से प्रधानरूप से ध्वनित होती है तब अलंकार भाव को छोड़कर ध्वनि, व्यपदेश का हेतु होती है।

शंका—जब उपमादि अलंकारों ने उपस्कारकत्व धर्म को छोड़ दिया तब उनको केवल ध्वनि कहना चाहिए न कि उपमालंकारध्वनि कहना चाहिए।

उत्तर। इस उपमा में भी जो अलंकार का व्यवहार होता है उसका कारण है कि जो कटकादि कभी भी जब से उनका निर्माण हुआ है तब से बेचने के वास्ते खरीददारों को दिखाने के लिए पेटी में रक्खे हुए हैं किन्तु पहिने नहीं गये हैं इन कटकादि में पहिने हुए गहनों के धर्म अलंकारत्व का केवल संस्पर्श।

कहीं पर यह अलंकार शब्दशक्तिमूल ध्वनि का विषय होता है और कहीं पर अर्थशक्ति मूल ध्वनि का विषय होता है। उन में पहला जैसे—जिसने निरन्तर बहने वाली मदजल एवं दानजल की धारा से धरणितल को सिक्त कर दिया है और जिसकी मूर्ति घनद

आद्यो यथा—

'अविरलविगलद्दानोदकधारासारसिक्तधरणितलः ।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥'

यथा वा—

'विमलतरमतिगभीरं सुपवित्रं सत्त्ववत्सुरसम् ।
हंसावासं स्थानं मानसमिह शोभते नितराम् ॥'

### मर्मप्रकाशः

अविरलेति । अयं राजा सार्वभौमः सर्वभूमीश्वरः । उदग्दिग्गजश्च । धारापदं व्यर्थमिति केचित् । 'सकीचकैः–' इतिवत्प्रयोग इत्यन्ये । धनदातॄणामग्रे पूजितमूर्तिः । कुवेराग्रे पूजितमूर्तिश्च । सत्वं प्राणी बलं च ।

### मधुसूदनी

मञ्जूषादिषु गतेषु स्थापितेषु कटकादिषु यथा अलंकुर्वाणानां वर्त्तमानकाले भूषयतां कटकादीनां मध्ये गतस्य स्थितस्यालंकारत्वधर्मस्य केवलं यः संस्पर्शस्तन्निबन्धनस्तद्हेतुकस्तथैव प्रकृतेषु काव्ये ध्वन्यमानेषु अलंकारेषु अपि वोध्यः इति शेषः ।

विमलेति । मानसं सरः चित्तं च । तृणमृदादिरूपमलापगमाद्विमलम् । रागद्वेषादिशून्यत्वाद्वा आवरणविक्षेपरूपमलाभावस्तथा तलस्पर्शराहित्याद्गभीरम् । स्वगतभावानां परैरवेद्यत्वाद्गभीरम् । पवित्रताकारकत्वाच्छोधकत्वात्पवित्रम् परानिष्टकारकभावत्यागात्पवित्रम् । सत्ववत् मत्स्यकच्छपादिसत्त्वसत्वात् सजीवम् । सत्वगुणयुक्तत्वात्सत्ववत् । सुरसं सुजलम् । सुन्दरतया न तु रसाभासतया श्रृंगारादीनामनुभावकम् ।

### बालक्रीड़ा

कुबेर के आगे एवं धनियों में सर्वप्रथम पूजी जाती है वह सार्वभौम दिशागज एवं सम्पूर्ण भूमि का अधिपति सर्वोत्कृष्ट है ।

ओर जैसे—यह मानस सरोवर एवं मानस चित्त अतीव शोभायमान है । तृण एवं मृत्तिकादि रूप मल के हट जाने से सर विमल है । रागद्वेषादि से शून्य होने से मन विमल है । तल स्पर्श नहीं होने से सर गम्भीर है । स्व गतभावों के दूसरों के लिए अवेद्य होने से मन गम्भीर है । शोधक होने से सर पवित्र है । दूसरों के अनिष्ट कारक भावों के त्याग देने से मानस पवित्र है । मत्स्य कच्छपादि सत्त्वों के रहने से सर सत्ववत् सजीव है । सत्त्व गुणयुक्त होने से मन सत्त्ववत् है बलशालि है । सर सुरस है सुजल है । मन सुन्दर रूप से श्रृंगारादि रसों का अनुभावक है अतः सुरस है हंस पक्षियों का आवास स्थान सर है एवं परमात्मा का आवास स्थान मन है ।

अत्रानेकार्थानामपि शब्दानां प्रकरणेन कृतेऽपि शक्तिसंकोचे तन्मूलकेन ध्वननेन प्रतीयमानस्य सरोवररूपस्यार्थान्तरस्याप्रस्तुतस्याभिधानं मा भूदिति प्रकृताप्रकृतयोरुपमानोपमेयभावः प्रधानवाक्यार्थतया कल्प्यते।

द्वितीयो यथा—

'अद्वितीयं रुचात्मानं दृष्ट्वा किं चन्द्र ! दृप्यसि।
भूमण्डलमिदं सर्वं केन वा परिशोधितम् ॥'

अत्र मूढादिपदाप्रयोगादसूयादेरप्रत्ययान्मुख्यतयोपमैव व्यङ्ग्या।

अथात्र सादृश्यस्य पदार्थान्तरत्वे बोधो विचार्यते—

### मर्मप्रकाशः

रसो जलं शृङ्गारादिश्च। हंसः पक्षी परमात्मा च। अत्रेति। उदाहरण- द्वये इत्यर्थः। अद्वितीयमिति। वाशब्दो हेत्वर्थः। असूयादेरप्रत्ययादिति। अत्र मूढादि- पदाप्रयोगेऽपि किं चन्द्र दृप्यसीत्याक्षेपेणासूया व्यङ्ग्या न वेति सहृदयैर्विभाव्यम्।

### मधुसूदनी

अद्वितीयमिति। अत्र "भूमण्डलमिदं मूढ" इत्येवं मूढपदमप्रयुज्य तत्स्थाने सर्वमिति पदं यदा प्रयुज्यते तदा मूढपदप्रयोगाभावादसूयायाः प्रत्ययो ज्ञानं न हि भवति। तस्मान्मुख्यतया उपमा एव नत्वसूया व्यंग्या ध्वन्यमानेत्यर्थः।

अथात्रेति। अथ लक्षणोदाहरणाभ्यामुपमाया निरूपणविवेचनयोरनन्तरमत्र प्रकरणे सादृश्यं सादृश्यपदेनाभिलप्यमानं वस्तु। समानधर्मप्रयोज्यो द्रव्यादिपरि- गणितसप्तपदार्थेभ्यो भिन्नः पदार्थः, पदार्थान्तरं तस्य भावस्तत्त्वं तस्मिन्। सादृश्यस्य

### बालक्रीड़ा

यहाँ अनेकार्थक शब्दों की शक्ति का प्रकरण के द्वारा संकोच होने पर भी शब्द शक्तिमूल ध्वनन के द्वारा प्रतीत होने वाले द्वितीय सरोरुह अर्थ का अप्रस्ताव में कथन हुआ है ऐसा कोई नहीं कहे इस लिए प्रकृत एवं अप्रकृत में उपमानोपमेय भाव की प्रधान- वाक्यार्थ के रूप में कल्पना करते हैं।

द्वितीय अर्थ शक्तिमूल ध्वनि जैसे—

हे चन्द्र ? कान्ति के द्वारा अपने आप को अद्वितीय समझकर क्यों इतना महा गर्वीले होते हो। किसने इस सम्पूर्ण भूमण्डल का शोध किया है अन्वेषण किया है।

यहाँ मूढ आदि पदों के प्रयोग का अभाव है अतः असूयादि की प्रतीति नहीं होती है फलतः मुख्यरूप से उपमा ही व्यंग्या है।

यहाँ तक उपमा के लक्षण एवं उदाहरणों के द्वारा निरूपण एवं विवेचन करने के बाद इस प्रकरण में सादृश्य को समानधर्मरूप पदार्थ से भिन्न मानकर बोध का विचार करते

अरविन्दसुन्दरमित्यत्रारविन्दनिरूपितसादृश्यप्रयोजकं लक्ष्यते ।

मर्मप्रकाशः

लक्ष्यत इति । अरविन्दपदेनेति शेषः ।

मधुसूदनी

पदार्थान्तरत्वे । पूर्वमिति शेषः । पूर्वं बोधो विचार्यते । अत्र मते इवपदस्य सादृश्यमात्रवाचकत्वम् ।

नैयायिकमतं विसंष्ठुलं, तथा=तद्भिन्नत्वे सति तद्गतधर्मवत्वं सादृश्यमिति सादृश्यस्वरूपं, तच्च इवादिपदानां बोध्यम् । एवं हि भेदो धर्मश्चेवादिपदस्यार्थः तथा च व्याख्यानादुभयत्र तत्पदार्थ उपमानं चन्द्रादि । ततश्च उपमानचन्द्रादिभिन्नं चन्द्रगतधर्मवदुपमेयं मुखमिति बोधः । एवं हि चन्द्रगतस्य धर्मस्य विधेयत्वप्रतीतिवच्चन्द्रभेदस्यापि विधेयत्वेन प्रतीतिः स्यात् । सा चानुभव विरुद्धा सादृश्यमूलकेषु रूपकेषु अभेदविधेयेषु भेदस्यापि विधेयत्वेन प्रतीतौ रूपकादीनामुच्छेद एव स्यादित्यनुभव विरोधः । इति दुर्बोधञ्च नैयायिकमतं परित्यज्य मीमांसकमतं सुकरं सुबोधञ्चेति पूर्वं निरूप्यते इति भावः । अरविन्दसुन्दरमिति । अत्र समासगता वाचकलुप्तोपमा । उपमानवाचकारविन्दपदस्य साधारणधर्मवाचकसुन्दरपदेन सह समासः । अरविन्दमिव सुन्दरमिति विग्रहवाक्यम् । तत्र बोधो विचार्यते कथं बोधः स्यादिति । अयं रहाभूतार्थः । अरविन्दसुन्दरमित्यत्र समासे अरविन्देति नाम्नः प्रातिपदिकस्य अर्थः,

बालक्रीड़ा

हैं । नैयायिक मानते हैं कि सादृश्य द्रव्यादि सात पदार्थों से भिन्न नहीं है किन्तु उनमें सामान्य के अन्तर्गत है । मीमांसक लोग सादृश्य को भिन्न मानते हैं तथा समानधर्म प्रयोज्य मानते हैं ।

इन मतों में मीमांसा का मत आलंकारिकों को अभिमत है । नैयायिकों का मत विसंष्ठुल है क्योंकि उनके यहाँ (तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्वं सादृश्यम्) तद्भिन्नत्व माने तद्भेद, और तद्गतभूयोधर्मवत्व माने तद्गत धर्म, सादृश्य है । इस में उन्हीं की व्याख्या के अनुसार दोनों जगह तत् पद का अर्थ उपमान है । फलतः जहाँ सादृश्य विधेय होगा वहाँ उपमान भेद एवं उपमानगत धर्म विधेय होंगे । किन्तु यह भेद का विधेय होना अनुभव विरुद्ध होगा । क्योंकि सादृश्यमूलक और अभेदविधेयक रूपकादि अलंकारों में भी भेद की प्रतीति होने लगेगी । इस तरह रूपकादिका उच्छेद ही हो जायगा । फलतः नैयायिकों का मत ठीक नहीं है ।

"अरविन्दसुन्दरम्" इसमें समासगता वाचक लुप्ता उपमा है । उपमानवाचक अरविन्द पद का साधारणधर्मवाचक सुन्दर पद के साथ "उपमानानि" सूत्र से "अरविन्दमिव सुन्दरम्" इस विग्रह वाक्य में समास हो गया है ।

अब प्रश्न होता है कि "अरविन्द इव सुन्दर" इन से बोध कैसा होगा । उत्तर । ये तीनों नाम हैं प्रातिपदिक हैं अतः इन के अर्थों का "नामार्थयोरभेदान्वयः" इस नियम के

तच्च सुन्दरपदार्थैकदेशेन सौन्दर्येणाभेदसंशर्गेणान्वेति । तेनारविन्द-निरुपितसादृश्यप्रयोजकाभिन्नसौन्दर्यवदभिन्नमिति धीः । निपातातिरिक्त-

## मधुसूदनी

सुन्दरेति नाम्नः प्रातिपदिकस्य अर्थश्च वर्त्तते । तत्रात्र समासे नामार्थयोः कः सम्बन्धः । यतो हि अरविन्दमिव सुन्दरमिति रीत्या इवार्थोऽत्र अनुस्यूतो विग्रहवाक्ये । तस्यापि अन्वयोऽपेक्षितः तथा च अभेदान्वयो वा भेदान्वयो वा कथं बोधः । तत्र चोद्यम् । एकार्थीभावलक्षणं विलक्षणं सामर्थ्यं तेन हि विग्रहवाक्यगतानामवयवानां संस्पर्श एव नास्ति । तदुक्तम्—

## बालक्रीड़ा

अनुसार अभेदेन बोध हो जायगा । हो सकता है किन्तु यहाँ उपमान समास है अतः विग्रह-वाक्यगत इव पद के अर्थ सादृश्य में अरविन्द का प्रतियोगितया निरूपिततया भेद से ही अन्वय होता है और निपातरूप नामार्थ में अरविन्द विशेषण भी है । ऐसी स्थिति में कैसा बोध होना चाहिए । विशेषण होने से अभेद होना चाहिए । और भी बात है यह पदविधि समर्थाश्रित होती है । सामर्थ्य एकर्थीभावरूप विलक्षण वस्तु है । जिसके कारण विग्रह वाक्यगत अवयवों का समस्त में संस्पर्श नहीं होता है जैसा कि –

बहूनां वृत्तिधर्माणां वचनैरेव साधने
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ।

कहा है । जो बहुत से कार्य वृत्ति से ही सिद्ध हो सकते हैं उनको वचनों से सिद्ध करने से बड़ा भारी गौरव होगा इसलिए एकार्थीभाव का आश्रयण किया । उसका फल हुआ कि

चकारादिनिषेधोऽथ बहुव्युत्पत्तिभंजनम् ।

धवश्च खदिरश्च में जो धवखदिरसाहित्य समास से ही प्राप्त हो जाता है उसके लिए चकार का, चित्र गावो यस्मिन् में यत्पद का, तथा अरविन्दमिव में इव पद का प्रयोग समस्त पद में नहीं होता है । अतः इव के अभाव में इवार्थ सादृश्यका अन्वय कैसे होगा । और बहुत सी व्युत्पत्तियों नामार्थयोरभेदान्वयः इत्यादि का भञ्जन याने त्याग करना होता है । तब कैसे अन्वय होगा ।

उत्तर—इस के विषय में वैयाकरण कहते हैं कि समास में विशिष्ट अर्थ की शक्ति है ।

समासे खलु भिन्नैव शक्तिः पंकज लक्षणा ।

नैयायिका मत है कि ऐसे स्थलों में पूर्व पद की पूरे अर्थ में लक्षणा की जाती है । उत्तरपद तात्पर्य का ग्राहक है ।

उनमें लक्षणा वाला मत लिखते हैं कि अरविन्दसुन्दरं यहाँ पर अरविन्द पद की अर-विन्दनिरूपित सादृश्य प्रयोजक में लक्षणा करते हैं । वह लक्ष्य सुन्दर पदार्थ के एक देश सौन्दर्य में अन्वित होता है । उस के फल स्वरूप अरविन्दनिरूपित सादृश्य के प्रयोजक सौन्दर्य वाले सुन्दर से अभिन्न यह बोध हो गया । इसप्रकार बहुव्युत्पत्तिभंजन नियम से अभेदान्वय के

## मधुसूदनी

बहूनां वृत्तिधर्माणां वचनैरेव साधने स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः। इति। तदाश्रयणेन किं फलं स्यादित्यत आह—चकारादीति। चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम्। धवखदिरौ इत्यत्र चकारार्थस्य वृत्त्यैव क्रोडीकरणाच्चकारो-नोपयुज्यते। आदिपदाच् चित्रगुरित्यत्र चित्रा गावो यस्येति यत्पदार्थस्य च। तथैव प्रकृतेऽपि अरविन्दमिवेति विग्रहवाक्यीयमिवपदमपि नोपयुज्यते। ततश्च इवपदाभावे इवार्थाभावात्तदर्थे सादृश्येऽरविन्दस्य भेदेनान्वयस्तथा नामार्थान्तरविशेषणीभूतत्वं च सुतरां न स्तः।

ननु संसृष्टार्थं समर्थमिति भाष्योक्तेरेकार्थीभावत्वं विशेषणविशेष्यभावागाह्यु-पस्थितिजनकत्वम्। विशेषणविशेष्यभावश्च नामार्थयोरभेदातिरिक्तभेदसंसर्गेणा-नुपपन्नत्वादभेदसंसर्गेणैवोपपद्यते। अभेदसंसर्गार्थं च तयोः समानविभक्तिकत्वमा-वश्यकमिति व्युत्पत्तिवादे प्रथमाकारके गदाधरभट्टाचार्यो जगाद— अभेदश्च प्रातिपदि-कार्थे (अनुयोगिनि) स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना च पदेन उपस्थापित-स्यैव (प्रतियोगिभूतस्यार्थस्यैव) संसर्गमयादया (आकांक्षादिभिः) भासते इति। प्रकृते अरविन्दसुन्दरमित्यत्र समासेन विभक्तिलोपात्समानविभक्तिकत्वं नास्ति इत्यत आह—लक्ष्यते। अरविन्देति सुन्दरेति। नामार्थयोरभेदान्वयानुपपत्या प्रसरन्ती लक्षणा अभेदान्वयोपयोगिपदार्थं बोधयतीत्यर्थः।

अत्र लाक्षणिकं पदमरविन्दपदम्। लक्ष्यमरविन्दनिरूपितसादृश्यप्रयोजकम्। तादृशं च प्रयोजकं प्रकृते सुन्दरपदार्थैकदेशः सौन्दर्यमेवेति तत्रैव लक्ष्यार्थस्य अभेदसम्बन्धेनान्वयः। तदेतदुच्यते तच्च (प्रतियोगिभूतं तादृशप्रयोजकं) सुन्दर-पदार्थैकदेशे सौन्दर्येऽनुयोगिनि अभेदसंसर्गेण अन्वेति अभिन्नं सद् तत्र भासते शाब्दबोधविषयीभवतीत्यर्थः। सौन्दर्यस्य चाश्रयतया सुन्दरे, सुन्दरं च अभिन्नतया विशेष्ये। तदेतदुच्यते तेनेत्यारभ्य धीरितिपर्यन्तम्।

यथापि तादृशं प्रयोजकं प्रकृते सौन्दर्यमेव नान्यत् अतस्तत्रैवान्वयो युक्तः किन्तु तत्सौन्दर्यं सुन्दरपदार्थैकदेशः। व्युत्पत्तिश्च पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेश-नेति। ततश्च पदार्थैकदेशत्वात् सौन्दर्ये अरविन्दपदलक्ष्यार्थस्य कथमन्वयः, व्युत्पत्ति विरोधात्। इत्येकः प्रश्नः।

## बालक्रीड़ा

विषय में अनुपपत्ति के कारण उपस्थित लक्षणा ने अभेदान्वय के उपयोगी पदार्थ का ज्ञान करा दिया।

यहाँ दो प्रश्न होते हैं कि यथापि तादृश प्रयोजक प्रकृत में सौन्दर्य ही है अतः उसी में अन्वय होना चाहिए। किन्तु वह सौन्दर्य सुन्दर का एक देश हैं और नियम है कि पदार्थ का पदार्थ के साथ अन्वय होता है न कि पदार्थ के एकदेश के साथ। तब सौन्दर्य में लक्ष्यार्थ का अन्वय कैसे। एक प्रश्न है।

नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वादभेदानुसरणम् । एकदेशान्वयस्तु देव-

### मर्मप्रकाशः

अभेदानुसरणमिति । प्रयोजकसौन्दर्ययोरिति भावः ।

### मधुसूदनी

अन्यच्च अरविन्दसुन्दरमित्यादौ समासवशात् सादृश्यवाचकेवादेरभावेनार-विन्देति पूर्वपदं स्वनिरूपितसादृश्यमेव लक्षणया बोधयतु, कुतः प्रयोजकान्तमनुधावति। इति द्वितीयः प्रश्नः ।

इमौ प्रश्नौ समाधत्ते व्युत्क्रमेण । अरविन्देति नाम (प्रातिपदिकम्) सुन्दरेति च नाम । तत्रायं नियमः निपातातिरिक्तनामार्थयोर्भेदेनान्वयो व्युत्पत्या असिद्धोऽभेदेन तूपपन्नः इति । ततश्च अन्वयानुपपत्त्या प्रसरन्ती लक्षणाऽभेदान्वययोग्यमर्थमुपस्था-पयितुं प्रयोजकान्तमनुधावति । तथाकरण एव अभेदान्वयः इति ।

क्वचिद् यथा पदार्थस्य पदार्थेन अन्वयः साकांक्षस्तथा कुहचन पदार्थैकदेशे-नैव पदार्थस्यान्वयः साकांक्षो नतु पदार्थेन, आकांक्षायाः फलबलकल्प्यत्वात् ।

### बालक्रीड़ा

अरविन्दसुन्दरं में समास के कारण सादृश्यवाचक इव पद का अभाव है अतः अरविन्द पद इव पद के अर्थ अरविन्दनिरूपित सादृश्य मात्र को लक्षणा से उपस्थित करे किन्तु प्रयोजक पर्यन्त को उपस्थित कैसे करता है । यह दूसरा प्रश्न है ।

क्रमशः इन दोनों प्रश्नों का समाधान करते हैं कि निपात भिन्न नामार्थों का भेदेन अन्वय व्युत्पत्ति से सिद्ध नही है किन्तु अभेदेन अन्वय सिद्ध है । इसलिए प्रकृत में अभेदेन अन्वय के असिद्ध होने से प्रसरण करने वाली लक्षणा अभेदान्वय के योग्य अर्थ को उपस्थापित करने के लिए प्रयोजक पर्यन्त अनुधावन करती है । क्योंकि "अरविन्द निरूपित सादृश्य प्रयोजक" अर्थ के उपस्थित होने पर अभेदान्वय हो सकता है अन्यथा नहीं ।

किन्तु कहीं पर फल के अनुरोध से पदार्थैकदेश के ही न कि पदार्थ के साथ पदार्थ का अन्वय नित्य साकांक्ष है वहाँ नित्यसाकांक्ष स्थल में एकदेशान्वय भी साधु माना है । जैसा कि घट नित्य है . यहाँ घट के साथ नित्यपदार्थ का अन्वय असंभव है अतः घट के एक देश घटत्व जाति के साथ नित्यपदार्थ का अन्वय होता है । और पशु दीर्घ है यहाँ पर भी लोम एवं लाङ्गूल के साथ दीर्घत्व का अन्वय है अर्थात् एकदेशान्वय ही विवक्षित है । विशेष्य पदार्थ पशु के साथ दीर्घ पदार्थ का अन्वय नहीं है । क्योंकि दीर्घ लम्बे लम्बे लोम बाल एवं लाङ्गूल पूंछ वाला पशु है यही सिद्धान्तभूत अर्थ है ।

इसी बात को स्पष्ट करने के लिए नित्यसाकांक्ष स्थल में एकदेशान्वय होता है इस को दिखाते हैं कि एकदेशान्वय तो देवदत्त का नप्ता इत्यादि की तरह यहाँ अरविन्द सुन्दरम् में भी स्वीकार करना चाहिए । यहाँ का भाव यह है कि नप्ता पद का अर्थ है पुत्री का पुत्र । जब देवदत्त का नाती कहेंगे तब देवदत्त की पुत्री का पुत्र है यही अर्थ होता है

दत्तस्य नप्तेत्यादाविवात्राप्यभ्युपेयः। 'समासस्यैव विशिष्टार्थे शक्तिः' इत्येके। अरविन्दपदमेव लक्षणया सर्वार्थबोधकं सुन्दरपदं तु तात्पर्यग्राहकम्' इत्यपरे।

### मर्मप्रकाशः

ननु नित्यसाकाङ्क्षस्थले तथाङ्गीकारेऽप्यत्र न तथेति चेदत एव मतान्तरमाह—समासेति ।

### मधुसूदनी

तद्यथा=नित्यो घट इत्यत्र घटैकदेशेन घटत्वेन जात्या नित्यपदार्थस्य सम्बन्धः। दीर्घः पशुरित्यत्र लोमलाङ्गूलवान् पशुरित्यर्थके पशौ विशेष्ये न दीर्घत्वान्वयः किन्तु लाङ्गूले लोम्नि च। महाकवि महाप्राज्ञः इत्यत्र कवने, ज्ञाने महत्वान्वयो न तु पुरुषविशेषे। इत्यादौ नित्यसाकांक्षस्थले एकदेशान्वयस्य साधुत्वोपपादनादत्रापि सुन्दरपदार्थैकदेशे सौन्दर्येऽपि प्रयोजकान्तस्य अन्वयः साधुः। अत एवोच्यते= "देवदत्तस्य नप्ता" नप्ता पुत्रपुत्रः अथवा पुत्रीपुत्र इत्यादौ प्रथम पुत्रपदार्थे नप्तृपदार्थैकदेशे देवदत्तस्य अन्वय अभ्युपेयः। अर्थात् तद्वारा पदार्थेऽन्वयः। तदुक्तम्।

समुदायेन सम्बन्धो येषां गुरुकुलादिषु।
संप्रश्यावयवाँस्ते तु युज्यन्ते तद्वता सहेति।

समासस्यैवेति। इदं पदम् तस्यायमार्थ इति यत्र विभाजयितुमशक्यं तत्र समासस्य समस्तपदसमुदायस्यैव विशिष्टार्थे शक्तिरिति। एके वैयाकरणा। ते हि इति सिद्धान्तयन्ति।

"समासे खलु भिन्नैव शक्तिः पंकजशब्दवत्"

अरविन्देति। अरविन्दपदमेव लक्षणया सर्वार्थबोधकं सुन्दरपदं तात्पर्य-

### बालक्रीड़ा

इस अर्थ में देवदत्त पदार्थ का नाती के एकदेश पुत्री के साथ अन्वय होता है। उसी तरह प्रकृत अरविन्दसुन्दरम् में भी अरविन्दनिरुपितसादृश्यप्रयोजकाभिन्नसौन्दर्य इस तरह सुन्दर पदार्थ के एकदेश सौन्दर्य के साथ लक्ष्यपदार्थ का अभेदेन अन्वय होता है जैसा कि सिद्धान्त है कि जहाँ चैत्र के गुरुकुल ऋद्ध के राजमातङ्ग इत्यादि में जिन चैत्र एवं ऋद्ध का समुदाय से समास से सम्बन्ध है वहाँ वे चैत्र एवं ऋद्ध समुदाय के अवयव समुदायी गुरु एवं राजा से संस्पर्श सम्बन्ध करके तद्वान् अवयववान् अवयवी समुदाय से सम्बन्ध करते हैं।

एक आचार्य कहते हैं कि जहाँ यह पद है उस का यह अर्थ है ऐसा विभाग नहीं कर सकते हैं वहाँ समास की विशिष्ट अर्थ में शक्ति है। वह स्थल समास ही जैसा कि कहा है—पंकज शब्द की तरह समास में भिन्न ही शक्ति है।२।

दूसरे आचार्य कहते हैं कि अरविन्द सुन्दरम् में अरविन्द पद ही लक्षणा के द्वारा सम्पूर्ण अर्थ का बोधक है, सुन्दर पद तो तात्पर्य का ग्राहक है।३।

तथा अरविन्दमिव सुन्दरमित्यत्रेवार्थे सादृश्येऽरविन्दस्य निरूपितत्व-

मर्मप्रकाशः

अत्र मते गौरवान्मतान्तरमाह—अरविन्देति। तथेति। समस्तवद्

मधुसूदनी

ग्राहकमित्युपलक्षणं ततश्च सुन्दरपदमपि लक्षणया सर्वार्थबोधकमरविन्दपदं तात्पर्य-ग्राहकमित्यपि बोध्यमिति केषांचिदुक्तिर्भ्रान्तिमूलैव।

इदं तत्त्वमत्र। एक उपमानसमासः, उपमानानि सामान्यवचनैरिति सूत्र-विहितः। द्वितीय उपमेयसमास उपमितं व्याघ्रादिभिरिति सूत्रविहितः। तत्रोपमान-समासे पूर्वपद एव लक्षणा उत्तरपदं तात्पर्यग्राहकम्। उपमेयसमासे उत्तरपद एव लक्षणा पूर्वपदं तात्पर्यग्राहकमिति सिद्धान्तः। प्रकृते उपमानसमास इति पूर्वमरविन्द-पदमेव लाक्षणिकं न तु उत्तरं सुन्दरपदमत "इत्यपि" बोध्यमित्युक्तिर्भ्रान्तिरेव। इदं मतत्रयं समासगत वाचकलुप्तोपमाश्रयेणोदाहृतम्।

अत्र प्रयोजकान्तं लक्ष्यम् तस्याभेदेनान्वयः इत्येकं मतम् १। समासस्य विशि-ष्टार्थे शक्तिरिति द्वितीयं मतम् २। पूर्वस्य वा उत्तरस्य वा उभयत्रोपमानवाचक पदस्यैव सर्वार्थे लक्षणेति तृतीयं मतम् ३। अथ चतुर्थं ४ मतमवतारयति=अरविन्द-मिव सुन्दरमिति। अत्र व्यस्तं पदं वाक्यमित्यर्थः। अत्र अभेदानुसरणं नास्ति संसर्गमर्यादयान्वयः। यथा समस्ते सरणिरर्थबोधे तथा एव वाक्येऽपि इति तथापदस्याशयः।

तथा अरविन्दमिति। यथा अरविन्दसुन्दरमिति समासे तथा अरविन्दमिव सुन्दरमिति व्यस्ते वाक्येऽपि बोधः। अत्र चतस्रः शंकाः। अयमाशयः। यथेव-

बालक्रीड़ा

कोई कहते हैं कि अरविन्द पद ही लक्षणा के द्वारा सम्पूर्ण अर्थ का बोधक है और सुन्दर पद तात्पर्य का ग्राहक है यह उपलक्षण है अतः सुन्दर पद भी लक्षणा के द्वारा सर्वार्थं का बोधक होता है अरविन्द पद तात्पर्य का ग्राहक है किन्तु यह उपलक्षण कहना भ्रान्तिमूलक ही है।

इसका सार यह है कि एक उपमान समास है जो "उपमानानि सामान्यवचनैः" सूत्र से विहित है। दूसरा उपमेय समास है जो उपमितं व्याघ्रादिभिः सूत्र से विहित है। जिसके उदाहरण हैं नृसिंहः नृसोमः। प्रकृत में उपमान समास है उसका अरविन्दसुन्दरम् यह उदाहरण है। इस उपमान समास में उपमान वाचक पूर्व पद में ही लक्षणा होती हैं उत्तरपद धर्मवाचक तात्पर्य ग्राहक है। और उपमेय समास में उत्तरपद उपमान में ही लक्षणा होती है पूर्व उपमेयवाचक पद तात्पर्य ग्राहक है। फलतः दोनों जगहों में उपमानपद में ही लक्षणा होती है उपमेय वाचक एवं धर्मवाचक पदों में लक्षणा नहीं होती है यही सिद्धान्त है अतः उपलक्षण मानकर जो उक्त कथन है वह भ्रान्तिमूलक ही है।

## बालक्रीड़ा

इस तरह ये तीन मत समासगत वाचक लुप्तोपमा के विषय में कहे हैं। यहाँ पहला मत है कि प्रयोजकान्त लक्ष्य है उसका अभेदेन अन्वय है। दूसरा मत है कि समास की विशिष्टार्थ में शक्ति है। तीसरा मत है कि पूर्व में हो या उत्तर में हो दोनों जगह उपमान वाचक पद की ही सर्वार्थ में लक्षणा है। अन्य उपमेयवाचक या धर्मवाचक दोनों ही तात्पर्य ग्राहक हैं।

चौथा मत वाक्य गत पूर्णोपमा का लिखते हैं। जैसा अरविन्दसुन्दरम् इस समास में बोध होता है वैसा ही अरविन्दमिव सुन्दरं मुखं इस वाक्य में भी बोध होता है।४।

यहाँ चार शंकाएँ होती हैं। पहली शंका है कि यथा इव व आदि शब्द जिसके बाद प्रयुक्त होते हैं उसी में उपमानता की प्रतीति कराते हैं। फलतः यथादि उपमान के विशेषण होते हैं। इससे उपमान ही में न कि उपमेय में सादृश्य का बोध होगा। क्योंकि नियम है जो जिसका विशेषण होता है वह उसी में अपना वैलक्षण्य बताता है फलतः अन्य का विशेषण अन्य में अपना वैलक्षण्य नहीं बतायेगा। किन्तु प्रकृत में अरविन्दनिरूपितसादृश्यवत् इस रीति से उपमेय मुख में ही, न कि उपमान अरविन्द में, सादृश्य विशेषण होता है तब उपमान के विशेषण कैसे। उत्तर। जैसे अरुणोदय की पुस्तक है इसमें षष्ठी विभक्ति शब्द शक्ति स्वभाव के अनुसार दोनों जगह अरुणोदय में स्वामित्व और पुस्तक में स्वत्व रूप सम्बन्ध को बतलाती है। उसी तरह इवादि भी प्रतियोगी एवं अनुयोगी दोनों जगहों में सादृश्य का बोधन करते हैं अतः अनुपपत्ति नहीं है।

इतनी तो समझने की बात है कि

भेद्यं विशेष्यमित्याहुर्भेदकन्तु विशेषणम्
भेद्यभेदकयोः श्लिष्टिः सम्बन्धोऽन्योन्यमिष्यते
द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात्। इति।

भेद्य विशेष्य है और भेदक विशेषण है। इन दोनों में श्लेष है। क्योंकि सम्बन्ध परस्पर में एक दूसरे का एक दूसरे के साथ इष्ट है। इस तरह यथापि सम्बन्ध दोनों में है। तथापि षष्ठी की उत्पत्ति भेदक से ही होती है। इस नियम के अनुसार अनुवेशी एवं प्रतिवेशी दोनों में सम्बन्ध को बतलाने वाली षष्ठी की उत्पत्ति भेदक प्रतिवेशी प्रतियोगी से ही होती है। इसी तरह उपमान एवं उपमेय दोनों में सादृश्य को बतलाने वाले इवादि का प्रयोग उपमान के बाद ही होता है। किन्तु राजा का पुरुष इसमें राजनिरूपित सम्बन्ध का आश्रय पुरुष होता है अतः सम्बन्ध पुरुष में ही विशेषण होता है राजा में वह सम्बन्ध विशेषण नहीं होता है किन्तु चन्द्र इव मुखम् इसमें चन्द्र निरूपित सादृश्य का आश्रय मुख ही होता है अतः इवार्थ सादृश्य मुख में ही विशेषण होता है चन्द्र में वह सादृश्य विशेषण नहीं होता है तब उपमान के विशेषण ये इवादि हैं यह लिखना असंगत है। प्रत्युत चन्द्र निरूपितसादृश्यवन्मुखम् इस बोध के अनुसार इवादि के विशेषण उपमान हैं यही कहना संगत होगा। फलतः इवादि उपमान की अपेक्षा विशेष्य हैं और उपमेय की अपेक्षा विशेषण हैं। किन्तु उपपान के विशेषण ये इवादि कथमपि नहीं हैं। अतः वह लेख असंगत है॥१॥

संसर्गेणान्वयः। तस्य च प्रयोजकतासंसर्गेण सौन्दर्ये। एवं चाऽरविन्द-

## मर्मप्रकाशः

व्यस्तेऽपीत्यर्थ, : ननु विशेष्यतया नामार्थप्रकारकबोधे विशेष्यतया विभक्तिजन्योपस्थिते-

## मधुसूदनी

वादयः शब्दा यत्परास्तत्रैव उपमानतां सादृश्यं प्रत्यायन्ति। ननु यर्हि उपमान-विशेषणानि इति नियमः। तर्हि उपमाने एव सादृश्यं बोधनीयं न तूपमेये। अन्य विशेषणस्य अन्यत्र सादृश्य बोधकत्वाभावात्। परं प्रकृते अरविन्दनिरूपितसादृश्य-वदिति रीत्या मुखे उपमेये एव सादृश्यं ज्ञातं विशेषणं च भवति नतूपमाने तत् तत्कथमिति चेच्छृणु। अरुणोदयस्य पुस्तकमित्यत्र षष्ठ्या यथा स्वामित्वमरुणोदये स्वत्वं पुस्तके बोध्यते शब्दशक्तिस्वाभाव्यादुभयत्र सम्बन्धस्तथा इवादिभिरपि बोधनान्नानुपपत्तिः।

## बालक्रीड़ा

प्रश्न "अरविन्दमिव सुन्दरम्" यहाँ पर अरविन्दार्थ भी नामार्थ है और इवार्थ सादृश्य भी नामार्थ है। अतः जब कि नामार्थों का अभेदेनैव सम्बन्ध व्युत्पत्ति से सिद्ध नियम है तब अभेद से अतिरिक्त (अरविन्दनिरूपित सादृश्य इस प्रकार) निरूप्यनिरूपक भावाख्य भेद सम्बन्ध से अन्वय कैसा। यह चार शंकाओं में से प्रथम नियम भंग विषयक द्वितीय शंका है ॥२॥

पदार्थ का पदार्थ ही के साथ अन्वय होता है न कि पदार्थैकदेश से जब यह व्युत्पत्ति से सिद्ध नियम है तब इव पदार्थ सादृश्य का सुन्दर पदार्थैकदेश सौन्दर्य में (अरविन्दनि- रूपित सादृश्य प्रयोजक सौन्दर्य इस प्रकार) प्रयोज्य प्रयोजक भाव से अन्वय कैसा। यह द्वितीय नियम भंगविषयक तृतीय शंका है ॥३॥

नामार्थ यदि प्रकार होगा तो विभक्त्यर्थ में ही होगा। नामार्थान्तर में नहीं होगा अर्थात् नामार्थ प्रकार होता है उस हालत में विभक्त्यर्थ ही विशेष्य होता है। नामार्थान्तर विशेष्य नहीं होता है नियम भी है कि भेद सम्बन्ध से नामार्थ प्रकारक शाब्द बोध में विशेष्य तया विभक्तिजन्य अर्थ की उपस्थिति हेतु है। इसलिए अरविन्दार्थ रूप नामार्थ का सुविभक्ति के अर्थ में अन्वय को छोड़कर इवार्थ सादृश्य रूप नामार्थ में प्रकार विधया अन्वय नहीं होता है तब इवार्थसादृश्य रूप नामार्थ का सौन्दर्यरूप नामार्थ में प्रकारविधया अन्वय कैसा। क्योंकि इवशब्द निपात है अतः निपात होने के कारण उसमें विभक्ति का अभाव है। फलतः उक्त नियम यहां लागू नहीं हो सकता है। यह तृतीय नियम भंग विषयक चतुर्थ शंका है ॥४॥

इस प्रकार यहां तीन नियमों का उल्लंघन किया है जिन में दो का उत्तर "निपातातिरिक्तनामार्थ" कहकर और नित्यसाकांक्षस्थल समझा कर दे दिया गया है। अब तीतृय

निरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्नमिति। अरविन्दमिवेत्यत्र त्वरविन्दनिरूपितसादृश्यवदिति निपातजन्योपस्थितिप्रयोज्यप्रकारतानिरूपित-

## मर्मप्रकाशः

हेतुत्वात्कथमिवार्थसादृश्येऽरविन्दस्यान्वयस्तस्य च कथं सौन्दर्येऽन्वयोऽत आह—निपातेति।

## मधुसूदनी

ननु नामार्थयोरभेदेनैव अन्वयस्य व्युत्पत्तिसिद्धत्वेऽपि अत्र अरविन्दमित्यस्य नामार्थस्य इवरूपनामार्थेन सह अभेदातिरिक्तेन निरूप्यनिरूपकभावेन भेदसंसर्गेण अन्वयान्नियमभंगः प्रथमः। पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्यापि अत्र इवपदार्थस्य सादृश्यस्य सुन्दरपदार्थैकदेशे सौन्दर्ये प्रयोज्यप्रयोजकभावेनान्वयात् नियमभंगो द्वितीयः। नामार्थप्रकारकभेदान्वयबोधे विशेष्यतया विभक्त्यर्थस्यैव भानं न तु नामार्थान्तरस्येति व्युत्पत्त्या प्रकृते अरविन्देति नामार्थप्रकारकभेदेनान्वये विशेष्यतया प्रत्ययार्थस्य भानमुचितं परमिह नामार्थान्तरस्य इवार्थसादृश्यस्य विशेष्यतया भानान्नियमभंगस्तृतीयः। एवमत्र नियमत्रयस्य भंगसद्भावेऽपि द्वयोः निपातातिरिक्तत्वेनेति साकांक्षस्थले इत्यादिना च दत्तोत्तरत्वात् तृतीयनियमभंगोद्धारार्थं तृतीयनियमसंकोचाकारमेव विशिष्य प्रदर्शयति=अरविन्दमिवेति।

निपातजन्येति। अयमत्र संक्षेपः। निपातिरिक्तनामार्थयोरभेदान्वयः। इति नियमात् इवार्थसादृश्यस्य निपातार्थतया अरविन्दार्थे अभेदेनान्वयोऽवरुद्धः ततो भेदेनान्वयः। अस्तु। किन्तु नामार्थो यदि प्रकारस्तर्हि विभक्त्यर्थे एव। एवं च नामार्थप्रकारकशाब्दबोधे विशेष्यतया विभक्तिजन्यार्थोपस्थितिर्हेतुरिति नियमात्

## बालक्रीड़ा

नियमभंग के उद्धारार्थ नियम संकोच के आकार को विशेष रूप से दिखाते हैं—अरविन्दमिव।

जिस शाब्द बोध में भेदसम्बन्ध याने निरूप्यनिरूपक भाव या प्रयोज्यप्रयोजकभाव आदि सम्बन्ध से नामार्थ प्रकार बनता है उसका हेतु है विभक्त्यर्थ का विशेष्य रूप से उपस्थित होना। किन्तु यह नियम निपातस्थल में भिन्न है।

पद, पदार्थोपस्थिति एवं शाब्दबोध में क्रम है। तथा पदजन्य पदार्थोपस्थिति है। और पदार्थोपस्थिति से शाब्दबोध होता है अतः इनमें कार्यकारण भाव है। एक नियम है कि ज्ञान, इच्छा, कृति एवं द्वेष ये सविषय पदार्थ हैं। इसका फल है कि ज्ञान का जो विषय है उसमें विषयता रहती है। वह विषयता प्रकारता विशेष्यता एवं संसर्गता नामक तीन प्रकार की है उन विषयताओं में (उपस्थितीय विषयता और शाब्दबोधीय विषयताओं में) प्रयोज्य प्रयोजक भाव है।

निपातस्थलीय भिन्न नियम का स्वरूप यह है—निपातजन्योपस्थितिप्रयोज्य प्रकारता निरूपितविशेष्यता एवं निपातजन्योपस्थितिप्रयोज्यविशेष्यता इन दोनों में अन्यतर से भिन्न विशेष्यता सम्बन्ध से जो नामार्थ प्रकारक शाब्दबोध होता है उसी बोध में विशेष्यतया

## मधुसूदनी

अरविन्दनामार्थस्य विभक्त्यर्थेऽन्वयं विहाय कथमिवार्थे सादृश्येऽन्वयः। अथ इवस्य निपाततया विभक्त्यभावेऽपि इवपदार्थस्य सुन्दरपदार्थेऽन्वयं विहाय कथं सुन्दरपदार्थैकदेशे सौन्दर्येऽन्वयः। इति जिज्ञासायाम्। उत्तरति। भेद सम्बन्धेन नामार्थप्रकारक शाब्दबोधे विशेष्यतया विभक्तिजन्योपस्थितिर्हेतुरिति नियमो निपातस्थले भिन्नरूपः। तद्यथा=

अत्र स्थलद्वयमुदाहरणम्। "अरविन्दमिव सुन्दरम्" इति, "अरविन्दमिव" इति च। पूर्वत्र अरविन्दार्थः इवार्थे विशेषणम्। इवार्थो विशेष्यम्। पुनरिवार्थो विशेषणं प्रकारः। सुन्दरपदार्थैकदेशः सौन्दर्यं विशेष्यम्। एवमिवार्थस्य द्वयी गतिः। तत्र विशेष्यता उपस्थितीया। प्रकारता शाब्दबोधीया। तथा सौन्दर्ये शाब्दबोधीया विशेष्यता। पदं, पदार्थोपस्थितिः, शाब्दबोधः एष क्रमः। एवं पद-पदार्थोपस्थिति-शाब्दबोधानां कार्यकारणभावः। ज्ञानेच्छाकृतिद्वेषाणां च सविषयत्वनियमः। एवं ज्ञानस्य यो हि विषयो भवति तत्र विषयता भवति। सा च प्रकारताख्या, विशेष्यताख्या संसर्गताख्या त्रिविधा। यज् ज्ञानयोः (उपस्थितिशाब्दबोधयोः) कार्यकारणभावस्तद्विषयतयोः प्रयोज्यप्रयोजकभावः। तथा हि=

इव निपातः। तेन जन्या या उपस्थितिः सादृश्यस्य स्मृतिः। तद्विषयः सादृश्यम्। तन्निष्ठा विशेष्यताख्या विषयता। इयमुपस्थितीया विशेष्यताख्या विषयता सादृश्ये वर्त्तते। परं सादृश्यं सुन्दरपदार्थैकदेशे सौन्दर्ये प्रकारः। अतोऽत्र सादृश्ये

## बालक्रीड़ा

विभक्तर्थोपरस्थिति हेतु है।। अर्थात् जहाँ निपातार्थ विशेष्य है और विशेषण भी है वहां ही विभक्त्यर्थ विशेष्य नहीं होता है जैसे घड़ा कपड़ा है न कि चमडा है। यहां घड़े की अपेक्षा नञर्थ विशेष्य है और कपड़े एवं चमड़े की अपेक्षा विशेषण है। उसी तरह अरविन्दार्थ की अपेक्षा इवार्थ सादृश्य में विशेष्यता है और सुन्दरैकदेश सौन्दर्य की अपेक्षा इवार्थ में विशेषणता है इसलिए कहते हैं कि इव निपात से जन्या जो उपस्थिति सादृश्य की स्मृति उसका विषय है सादृश्य। उस सादृश्य रूप विषय में रहने वाली उपस्थितीया विशेष्यताख्या विषयता है। किन्तु वह सादृश्य सुन्दरैक देश सौंदर्य में प्रकार भी है अतः इस सादृश्य में शाब्द बोधीय प्रकारता भी हैं। इस तरह इवजन्या जो सादृश्यविषयक उपस्थिति। उस उपस्थिति में प्रयोज्य जो सौन्दर्य की अपेक्षा उपस्थितिविषयीभूत सादृश्यार्थ निष्ठा शाब्दबोधीया प्रकारता। तादृश प्रकारता से निरूपिता जो सौन्दर्य निष्ठा-विशेष्यता (जिसकी उपस्थिति होती है उसी का शाब्दबोध होता है) इस प्रकार उपस्थिति विषयीभूत पदार्थ में उपस्थितींया विशेष्यता होती है किन्तु शाब्दबोधविषयीभूतपदार्थ के अनुकूल विशेषणता के कारण प्रकारता भी रहती है (शाब्दबोधविषयीभूतपदार्थ प्रायः विशेषण नहीं होता है) अतः उसमें विशेष्यता ही है। प्रकारता और विशेष्यता में परस्पर विशेष्यविशेषण भाव है। अतः कहीं पर विशेष्यता निरूपित प्रकारता। कहीं पर प्रकारता निरूपित विशेष्यत होती है।

विशेष्यता-निपातजन्योपस्थितिप्रयोज्यविशेष्यतान्यतरभिन्नविशेष्यतासंसर्गेण नामार्थप्रकारकबोध एव विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुत्वादिवार्थस्य नञर्थस्येव भेदसंसर्गेण नामार्थविशेष्यत्वे च न दोषः।

### मर्मप्रकाशः

उक्तोदाहरणे इवार्थसादृश्ये प्रकारताविशेष्यतान्यतरत्वसत्वादन्यतरभिन्नत्वनिवेशः। एवेनोक्तकार्यकारणभावव्यवच्छेदः।

### मधुसूदनी

प्रकारताऽपि शाब्दबोधीया वर्तते। एवमिवजन्या या सादृश्यविषयकोपस्थितिः तत्प्रयोज्या या सौन्दर्यापेक्षया उपस्थितिविषयीभूतसादृश्यार्थनिष्ठा शाब्दबोधीया प्रकारता तन्निरूपिता सौन्दर्यनिष्ठा विशेष्यता। यस्योपस्थितिस्तस्यैव शाब्दबोधः। एवमुपस्थितिविषयीभूते पदार्थे उपस्थितीया विशेष्यता भवति परं शाब्दबोधीयपदार्थानुकूलविशेषणतया प्रकारताऽपि। शाब्दबोधविषयीभूतस्तु पदार्थः कुत्रापि विशेषणं न हि भवति अतोऽत्र विशेष्यतैव। प्रकारताविशेष्यतयोश्च परस्परं विशेषणविशेष्यभावः। क्वचिद् विशेष्यतानिरूपितप्रकारता भवति। क्वचिच्च प्रकारतानिरूपितविशेष्यता। अत उक्तं प्रकारतानिरूपितविशेष्यतेति। इयमेका अरविन्दमिव सुन्दरमित्यत्र विशेष्यता। द्वितीयस्या विशेष्यतायाः। उदाहरणम्=अरविन्दमिवेत्यत्र तु अरविन्दनिरूपितसादृश्यवदिति।

अत्र अरविन्दार्थः इवार्थे विशेषणम्। इवार्थः सादृश्यं विशेष्यम्। ततश्च निपातेन इवेन जन्या या सादृश्यार्थस्य उपस्थितिस्तत्प्रयोज्या या शाब्दबोधीया विशेष्यता। इयं द्वितीया विशेष्यता। एवं द्विविध विशेष्यतान्यतरस्माद्भिन्ना या विशेष्यता तत्संसर्गेण नामार्थप्रकारकबोधे विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुत्वम् अर्थात् विभक्तिद्वारा अन्वयः। अत्र नामार्थे इवार्थस्य विशेषणत्वं विशेष्यत्वं च ततो न दोषः।

### बालक्रीड़ा

द्वितीय विशेष्यता का उदाहरण है (अरविन्दमिव) अरविन्द निरूपित सादृश्य। यहाँ अरविन्दार्थ इवार्थ में विशेषण है। इवार्थ विशेष्य है। इसलिए निपात इव से जन्य जो सादृश्य अर्थ की उपस्थिति। उस उपस्थिति से प्रयोज्य जो शाब्दबोधीया विशेष्यता। यह दूसरी विशेष्यता है। इन दोनों विशेष्यताओं में से अन्यतर विशेष्यता से भिन्न जो विशेष्यता है। उस भिन्न विशेष्यता के सम्बन्ध से जो शाब्द बोध होता है जहाँ नामार्थ प्रकार है उस शाब्दबोध की हेतु है विशेष्यतया विभक्ति जन्य उपस्थिति। अर्थात् जहाँ उक्त द्विविध विशेष्यताएँ रहेगी और जहाँ नामार्थ प्रकार बनेगा उस शाब्दबोध में विशेष्यतया विभक्त्यर्थ की उपस्थिति कारण नहीं है।

प्रकृत में नञर्थ की तरह इवार्थ (भेद सम्बन्ध से) नामार्थ में विशेष्य भी है और विशेषण अर्थात् प्रकार भी है अतः विभक्त्यर्थ विशेष्य नहीं है। जिसका फल है कि अरविन्द

अरविन्दमिव भातीत्यत्रारविन्दनिरूपितसादृश्यस्य प्रकारतासंबन्धेन धात्वर्थेऽन्वयादरविन्दसादृश्य प्रकारकधीविशेष्य इति। तत्रैव सौन्दर्येणेति धर्मोपादाने तृतीयार्थः प्रयोज्यत्वं धात्वर्थे भाने इवार्थे सादृश्ये वान्वेति। तेन सौन्दर्यप्रयोज्यारविन्दनिरूपितसादृश्यप्रकारकधीविशेष्य इति।

## मर्मप्रकाशः

धात्वर्थमाह—धीति। तत्रैवेति। अरविन्दमिव भातीति वाक्य एवेत्यर्थः। तृतीयार्थाभिन्नं प्रयोज्यत्वम्। अन्वये कर्तृभानस्य तत्प्रयोज्यत्वाभावादाह—इवार्थे

## मधुसूदनी

"अरविन्दमिव भाति" इत्यत्र भाधात्वर्थो ज्ञानम्। ज्ञाने हि कश्चित्प्रकारो भवति। किञ्चिद्विशेष्यम्। तत्र इवार्थः सादृश्यं प्रकारः। विशेष्यभूतोऽर्थो नोपात्तः। सादृश्यस्य च प्रकारतासम्बन्धेन धात्वर्थे भानेऽन्वयः। ततश्च अरविन्दनिरूपित सादृश्यप्रकारकधीविशेष्यः। अत्र विशेष्य इति पुंस्त्वनिर्देशात् करो वा पादो वा विशेष्यपदार्थः करकमलचरणकमलेति दिशा कविभिः प्रयुज्यमानत्वात्। प्रकारकेति बहुव्रीहिस्तदर्थः प्रकारतानिरूपकत्वम्। धियः प्रकारताविशेष्यतयोर्निरूपकत्वात्।

तत्रैव अरविन्दमिव भातीति वाक्ये एव। अरविन्दसदृशत्वभाने को हेतुरिति गवेषणायां सौन्दर्यस्य हेतुत्वं तेन सौन्दर्यप्रयोज्यं यदरविन्दनिरूपित सादृश्य प्रकारकं भानमित्येवं धात्वर्थे भाने प्रयोज्यत्वस्यान्वयः। भानस्य सौन्दर्यजन्यत्वाभावेन सौन्दर्यप्रयोज्यं भानमिति नान्वयस्तर्हि तादृशं सादृश्यं किं हेतुकमिति गवेषणायां सौन्दर्यप्रयोज्यं तादृशं सादृश्यमित्येवं सादृश्ये प्रयोज्यत्वस्यान्वयः।

## बालक्रीड़ा

का इवार्थ सादृश्य में इवार्थ सादृश्य का सौन्दर्य सुन्दरैक देश में अन्वय होने में कोई दोष नहीं है।

(अरविन्दमिव भाति) अरविन्द की तरह मालूम पड़ता है। यहाँ भा धातु का अर्थ ज्ञान है। उस ज्ञान में इवार्थ सादृश्य प्रकार है अतः प्रकारता सम्बन्ध से धात्वर्थ ज्ञान में सादृश्य का अन्वय होने से अरविन्द निरूपित सादृश्य प्रकारक ज्ञान विशेष्य यह अन्वय होता है। यहाँ सादृश्य प्रकारक यह बहुव्रीही समास है। उसका अर्थ सादृश्यनिष्ठ प्रकारता का निरूपक (ज्ञान) है।

उसी (अरविन्दमिव भाति अरविन्द की तरह मालूम पड़ता है) वाक्य में (सौन्दर्येण अरविन्दमिव भाति) सौन्दर्य से अरविन्द सा मालूम पड़ता है इस तरह धर्म का उपादान कर सकते हैं। वहाँ तृतीया का अर्थ प्रयोज्यत्व है उसका भा धात्वर्थ ज्ञान में अन्वय होता है। यदि कहें कि सौन्दर्य से (मालूम पड़ता है) इस प्रकार का ज्ञान सौन्दर्य से प्रयोज्य नहीं है। क्योंकि सौन्दर्य तो साधारण धर्म है और साधारण धर्म से प्रयोज्य सादृश्य होता है ज्ञान नहीं

**तथा गज इव गच्छति, पिक इव रौतीत्यादावुपमानपदानां तत्कर्तृक-क्रियायां लक्षणया गजादिगमनादिसदृशगमनाद्यनुकूलकृतिमानिति ।**

## मधुसूदनी

इदन्तु बोध्यम्। अरविन्दमिव भाति, सौन्दर्येण अरविन्दमिव भाति, अरविन्दमिव सुन्दरं भातीत्यत्र च अरविन्दनिरूपित सादृश्यप्रयोजक सौन्दर्यविशिष्ट भानविषयः कः, मुखादिनामभावेऽन्वयः कथं भविष्यतीति गवेषणीयम्।

तथेति। यथा पूर्वोक्तवाक्येषु सादृश्यस्य धात्वर्थेऽन्वयस्तथा गज इव गच्छतीत्यादौ अपि तस्य तत्रान्वयो जायतां स कथमित्याह उपमानेति। उपमानवाचकपदानां गजपिकमयूराणां तत्कर्त्तृकक्रियासु। तत्पदार्थाः गजादयाः कर्त्तारः यासु क्रियासु तास्तत्कर्त्तृकक्रियास्तासु।

लक्षणयेति। अदो हृदयम्। गजपुरुषयोः पिकनायिकयोः, मयूरटिट्टिभयोः कर्त्रोः धर्मान्तरैः स्थूलत्व कृष्णत्वविहङ्गमत्वरूपैः सादृश्यं नास्ति परं तद्गतानां क्रियाणां वाक्योक्ताभिः क्रियाभिः सह सादृश्यम्। ततो गजाद्यर्थस्य इवार्थे निरूप्य-निरूपकभा वेन अन्वयाभावात् गजाद्युपमानपदानां गजादिकर्त्तृकायां क्रियायां गमने रुते कूजने लक्षणाऽद्रियते। ततश्च लक्ष्यार्थस्य प्रतियोगित्वेन सादृश्ये, तस्य अनुयोगितया धात्वर्थे। गमने रुते कूजने तस्य च अनुकूलत्वसम्बन्धेन तिप्प्रत्ययार्थे कृतौ, कृतेश्च आश्रयत्वेन प्रकृतविशेष्ये नायिकायां टिट्टिभे चान्वयः।

**तथा च गजगमनसदृशगमनानुकूलकृतिमान्, पिकरुतसदृशरुतानुकूलकृतिमती नायिका; मयूरकूजनसदृशकूजनानुकूलकृतिमान् टिट्टिभः इति बोधः।**

## बालक्रीड़ा

होता है अतः सौन्दर्य प्रयोज्य जो अरविन्द निरूपित सादृश्य। वह सादृश्य है प्रकार अर्थात् विशषण जिसमें ऐसा जो ज्ञान उसमें विशेष्य यह अन्वय हुआ।

जैसे उक्त दो वाक्यों में सादृश्य का धात्वर्थ में अन्वय हुआ वैसे गज इव गच्छति, पिक इव रोति, मयूर इव कूजति इत्यादि स्थलों में भी सादृश्य का धात्वर्थ में अन्वय होना चाहिए। वह कैसे होगा इसको कहते हैं कि उपमान वाचक पद गज, पिक एवं मयूर की तत्कर्त्तृक क्रियाओं में लक्षणा करेंगे।

यहां का हृदय यह है कि गमन क्रिया के कर्त्ता गज और पुरुष, रौति क्रिया के कर्त्ता पिक और नायिका; कूजन क्रिया के कर्त्ता मयूर और टिट्टिभ के सादृश्य के प्रयोजक क्रमशः स्थूलत्व कृष्णत्व एवं विहङ्गमत्व नहीं है किन्तु क्रियाएँ हैं। जो वाक्यों में कहीं गई हैं। किन्तु शुद्ध कर्त्तृविरहित क्रियाओं का शुद्ध क्रियाओं के साथ सादृश्य बाधित है अतः गजपद की गजकर्त्तृक गमन में, पिकपद को पिककर्त्तृक राव में और मयूर पद की मयूरकर्त्तृक कजन में लक्षणा की गई। उसके वाद लक्ष्यार्थ का प्रतियोगित्वेन सादृश्य में, सादृश्य का आश्रयतया अनुयोगितया धात्वर्थ (गमन, रुत, एवं कूजन) में, उसका अनुकूलत्व सम्वन्ध से तिप् प्रत्ययार्थ

ननु घटो न पश्यतीत्यत्र घटान्विताभावस्य दर्शने कर्मतासंसर्गेणान्वयऽस्य वारणाय धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेण शाब्दबोधं प्रति नामार्थनिष्ठप्रकारतानिरूपितविशेष्यतया विभक्त्यर्थोपस्थितेर्हेतुत्वम् । एवं च गज इव गच्छति, पिक इव रौतीत्यादौ नेत्राद्यर्थस्य सादृश्यस्य

## मधुसूदनी

इवार्थः सादृश्यं धात्वर्थेऽन्वेतीति अत्र मतान्तरोपन्यासविधया शंकते नन्विति । अयं भावः । यदि इवादिनिपातार्थो धात्वर्थेऽन्वेति यथा अरविन्दमिवेत्यत्र तथा पिक इव रौतीत्यादौ च धात्वर्थेऽन्वयदर्शनात् । तर्हि "घटो न पश्यति" इत्यादौ घटान्विताभावस्य घटाभावं पश्यतीविदिशा घटाभावनिष्ठकर्मतासंसर्गेण धात्वर्थे दर्शनेऽन्वयो विरोधाद् भवितुं नार्हति । अतः तादृशान्वयवारणाय बोधो नियम्यते । तथाहि धात्वर्थनिष्ठेत्यादिः ।

यत्र क्वचित् धात्वर्थो विशेष्यः, नामार्थो प्रकारस्तत्र नामार्थे विभक्त्यर्थो विशेष्यः । विभक्त्यर्थे प्रकारीभूय नामार्थो धात्वर्थे प्रकारीभवति (नामार्थधात्वर्थयोः साक्षाद्भेदेनान्वयानुपपत्तेः)। तथा च यथा "घटो न पश्यति" इत्यत्र नञर्थरूपनामार्थसद्भावेऽपि नञो निपाततया विभक्तेरभावात् पूर्वनियमनियंत्रणरूपहेतोः दर्शनक्रियायां तदर्थस्या (घटा) भावस्य कर्मतयाऽन्वयो न भवति गज इव गच्छति पिक इव रौतीत्यादौ इवार्थस्य सादृश्यस्य धात्वर्थे गमने रावे चान्वयो न हि भवति किन्तु गमनरावयोः कर्तरि एवान्वयः । ततश्च गजनिरूपितसादृश्याश्रयः गमनकर्ता पिक-

## बालक्रीड़ा

कृति में, कृति का आश्रयत्व सम्बन्ध से प्रकृत विशेष्य पुरुष, नायिका एवं टिट्टिभ में अन्वय हुआ । तदनुसार गजकर्त्तृकगमनसदृश गमनानुकूल कृतिमान् पुरुष है । पिककर्तृक रुतसदृश रुतानुकूल कृतिमती नायिका है । मयूरकर्त्तृककूजनसदृश कूजनानुकूलकृतिमान् टिट्टिभ है । ऐसा बोध होगा ।

इसपर शंका करते हैं ननु इति ! यहाँ का भाव है कि उक्त उदाहरणों की तरह निपातार्थ का धात्वर्थ में अन्वय करेंगे तो "घटो न पश्यति" इत्यादि स्थलों में घटो न इस घटान्वित अभाव का भी घटाभावनिष्ठकर्मता संसर्ग से धात्वर्थ दर्शन में अन्वय करना पड़ेगा । तब घटाभावं पश्यति यह वाक्य का और घटाभाव निष्ठ कर्मता निरूपकाभिन्नदर्शनानुकूलकृतिमान् यह अन्वय का आकार होगा । जो कि अनुचित है । इस अनौचित्य का वारण करने के लिए धात्वर्थेत्यादि नियम की कल्पना करनी पड़ेगी ।

नियम का अर्थ यह है कि जहाँ कहीं धात्वर्थ विशेष्य हो और नामार्थ प्रकार हो वहाँ नामार्थ में विभत्यर्थ विशेष्य होगा । अर्थात् वह नामार्थ विभक्त्यर्थ में प्रकार बनकर धात्वर्थ में प्रकार बनेगा । क्योंकि नामार्थ और धात्वर्थ का साक्षाद् भेदेन अन्वय अनुपपन्न है । फलतः "घटो न पश्यति" इसमें नञ् के निपात होन से उसमें विभक्ति का अभाव है । अतः

धात्वर्थेऽन्वयः संभवति। तस्माद्गजादिसादृश्यस्य गमनादिकर्तर्येवान्वयः स्वगमनादिसदृशगमनादिकर्तृत्वेन समानधर्मेण।

इत्थमेव चाख्यातवादशिरोमणिव्याख्यातृभिरपि सिद्धान्तितमिति चेत्,

## मर्मप्रकाशः

इति। कर्तर्येवेति। एवेन लक्षणादिव्यवच्छेदः। समानधर्मेणेत्यस्य पूर्वत्रान्वयः। ननु

## मधुसूदनी

निरूपितसादृश्याश्रयः रुतिकर्त्ता। गजसदृशो गमनानुकूलकृतिमानित्यर्थः। पिकसदृशी रुतानुकूलकृतिमाती। मयूरसदृशः कूजनानुकूलकृतिमान् इत्यर्थः।

नन्वेवं गजसदृशः स्थूलो पिकसदृशः कृष्ण इत्येवं स्थूलत्वकृष्णधर्मान्तराभ्यां तयोः सादृश्यं प्रतिफलति न तु गमनेन रुतेन वेत्यत आह—स्वगमनेति। स्वं गजः पिकः। गजगमनसदृशगमनकर्तृत्वेन पिकरुतिसदृशरुतिकर्तृत्वेन समानधर्मेण।

इत्थमेव गजनिरूपितसादृश्यस्य गमनकर्त्तरि एवान्वय इत्येवमाख्यातवादस्य शिरोमणिः रघुनाथशिरोमणिकृता दीधितिष्टीका कार्यकारणयोरभेदोपचारात्। तस्या व्याख्यातृभिः विवरणकारैः रुद्रभट्टाचार्यादिभिर्निर्णीय स्थिरीकृतमिति चेत् न। एवं सति प्रकृते सादृश्यस्य विधेयतया साध्यतया प्रतीतेरित्यस्याप लापापत्तिः तथा प्रतीतिरनुभवसिद्धा नास्तीति कथनस्य प्रसंगः स्यात्। एवञ्च इवार्थस्य धात्वर्थे एवान्वयो न तु कर्त्तरि। तथान्वये एव उपमायाः विधेयत्वं स्यादित्यर्थः। कर्तरि सादृश्यान्वये कर्त्रोरुपमानोपमेयभावे धर्मान्तरेण सादृश्यं स्यादित्यर्थः।

## बालक्रीड़ा

नञर्थ रूप नामार्थ घटाभाव का कर्मतया दर्शन क्रिया में अन्वय नहीं होगा। क्योंकि पूर्व कथित नियम के द्वारा उस अन्वय का नियन्त्रण हो जाता है। तदनुसार गज इव गच्छति इत्यादि उदाहरणों में भी इवार्थ सादृश्य का धात्वर्थ गमनादि में अन्वय नहीं होगा। किन्तु गमनादि क्रियायाओं का तत्तत्कर्त्ताओं में ही अन्वय होगा। अतः गजनिरूपित सादृश्याश्रय अर्थात् गजसदृशः गमनकर्त्ता गमनानुकूलकृतिमान्। पिकनिरूपितसादृश्याश्रयः अर्थात् पिकसदृशः रुतिकर्त्ता रुत्यनुकूलकृतिमान्। यह बोध होगा।

इस पर पुनः शंका होती है कि उक्त अन्वय के अनुसार गजसदृश स्थूल पुरुष और पिकसदृश कृष्णा नायिका है इस तरह स्थूलत्व एवं कृष्णत्व धर्मों से उनका सादृश्य होगा न कि गमन एवं रुति से। किन्तु अपेक्षित है उन्हीं क्रियाओं से सादृश्य हो। इसपर कहते हैं कि ठीक है स्वगमनादि सदृश गमनादि कर्त्तृत्व रूप समान धर्म से गजादि सादृश्य का गमनादि कर्त्ताओं में ही अन्वय होता है।

गजनिरूपित सादृश्य का गमन कर्त्ता में ही अन्वय होता है इस प्रकार आख्यातवाद के शिरोमणि अर्थात् रघुनाथ शिरोमणिकृत दीक्षिति टीका (यहाँ कार्य टीका कारण शिरोमणि में अभेदोपचार किया गया है) के व्याख्याता विवरणकार रुद्र भट्टाचार्यादि न निर्णय कर के

नैवम् । गज इव गच्छतीत्यत्र सादृश्यस्य विशेष्यतया प्रतीतेरपलापापत्तेः । गज इव यः पुरुषः स गच्छति, पुरुषो यः स गज इव गच्छतीति वाक्याभ्यां भिन्नप्रतीत्योरानुभविकत्वात् । एवं वनं गज इव गृहं देवदत्तो गच्छतीत्यादौ वनादेः सर्वथैवानन्वयापत्तेश्च । एवं बिम्बप्रतिबिम्बभूतस्य

## मर्मप्रकाशः

तस्य तत्त्वेन प्रतीतावेव न मानमत आह—गज इवेति ।

## मधुसूदनी

दृष्टान्तेन समर्थ्यं दर्शयति-गज इति । "गज इव यः पुरुष स गच्छति" इत्यत्र गजप्रतियोगिक सादृश्यानुयोगियच्छब्दार्थाभिन्नपुरुषानुवादेन गमनं विधेयम् । "पुरुषो यः स गज इव गच्छति" इत्यत्र यच्छब्दार्थाभिन्नपुरुषानुवादेन गजगमनसदृशगमनस्य विधेयत्वं प्रतीयते इत्येवं द्वाभ्यां वाक्याभ्यां भिन्नविधेयविषयकप्रतीत्योरानुभविकत्वात् अनुभवेन सिद्धत्वात् ।

तदेव उदाहरणान्तरेणापि समर्थ्यं दर्शयति—एवमिति । एवं सादृश्यस्य कर्त्तरि एवान्वये वनं गज इव गृहं देवदत्तो गच्छतीत्यादौ "गजसदृशो देवदत्तो गमनानुकुलकृतिमान्" इत्येवमन्वये वनगृहयोः सर्वथैवानन्वयापत्तेरन्वयाभावप्रसंगश्च ।

अनयोरेवान्ययाभाव इति न किन्तु बिम्बप्रतिबिम्बभूतस्य कारकमात्रस्यानन्वयः । वनं कारकं प्रतिबिम्बभूतं गृहं तद् बिम्बभूतमिति ।

## बालक्रीड़ा

स्थिर कर दिया है । इसपर कहते हैं कि यह बात नहीं है । ऐसा मानेंगे तो गज इव गच्छति इसमें सादृश्य की जो विधेयतया प्रतीति होती है उसका अपलाप करना होगा । फलतः इवार्थ का धात्वर्थ ही में अन्वय होता है न कि कर्त्ता में । धात्वर्थ ही में अन्वय होने पर उपमा में विधेयता की प्रतीति होगी । यदि कर्त्ता में सादृश्य का अन्वय करेंगे तो कर्त्ताओं में उपमानोपमेयभाव के लिए धर्मान्तर से सादृश्य मानना होगा । इस बात को दृष्टान्त से समर्थित करते हैं ।

गज की तरह जो पुरुष है वह जाता है । इसमें गज प्रतियोगिक सादृश्यानुयोगिकयच्छब्दार्थाभिन्न पुरुष को उद्देश्य करके गमन विषय है यह प्रतीति होती है पुरुष जो है वह गज की तरह जाता है । इसमें यच्छब्दार्थाभिन्न पुरुष को उद्देश्य करके गजगमनसदृशगमन विधेय है यह प्रतीति होती है । इस प्रकार दो वाक्यों से भिन्न-भिन्न विधेयों की प्रतीति होती है । यह अनुभव सिद्ध है ।

इसी विषय को अन्य उदाहरणों से भी समर्थन करते हुए दिखाते हैं । उक्त रीति से सादृश्य का कर्त्ता में ही अन्वय करेंगे तो गजसदृश (स्थूल) देवदत्त जाता है । यही

कारकमात्रस्यानन्वयो बोध्यः। तस्माद्गजनिरूपितसादृश्यप्रयोजकगमनाश्रय इत्येव गज इव गच्छतीत्यत्र धीः। कारकोपादाने तूपमानपदानां तत्कर्तृकक्रियायां लक्षणेत्येव साधु।

### मर्मप्रकाशः

अनन्वयो बोध्य इति। वस्तुतस्तु वनं गज इव रणभूमिं शूरो गच्छतीत्यादौ वनकर्मकगमनानुकूलकृतिमद्गजसदृशः समरभूमिकर्मकगमनानुकूलकृतिमाञ्शूर इत्यादि। इवशब्देन च बिम्बप्रतिबिम्बभावापन्नवनसमरभूमिविशेषणकगमनमेव बोध्यते धर्मत्वेन। इवादयश्च धर्मत्वेनैव बोधका इति सर्वसंमतम्। गज इव यः पुरुषः स गच्छतीत्यत्र चेवेन गमनान्वित एव शूरत्वादिधर्मत्वेन बोध्यते। पुरुषो यः स गच्छतीत्यत्र तु गमनमेव तथेति तयोर्विशेषोऽप्युपपद्यत एव। उपमाया विधेयत्वं चैतदेव यद्विधेयस्यैव धर्मत्वेनोपमाबोधकबोध्यत्वमिति चिन्त्यमिदम्। वैयाकरणनये तु क्रिययोरेवोपमानोपमेयभावः। गच्छतीत्यस्य चावृत्योभयत्रान्वयः। गजादिपदानां स्वकर्तृकक्रियायां लक्षणा वेति दिक्। कारकोपेति। कर्त्रादीत्यर्थः। अङ्गीकारे

### मधुसूदनी

उपसंहरति—तस्मादिति। प्रतीत्योरानुभावकत्वाद्धेतोः। कारकोपादाने वनं गज इव गृहं देवदत्तो गच्छतीतिवत् कारकमात्रस्य निर्देशे।

लक्षणेति। नैयायिकमते लक्षणा। वैयाकरणमते लक्षणा नास्ति। अदो हृदयम्। उपमानस्य प्रतियोगितया निरूपितत्वेन सादृश्ये, तस्य च प्रयोजकतया साधारणधर्मे, गुणक्रियारूपे शुद्धे वा, तस्य चाश्रयतया सम्बन्धेन उपमेयेऽन्वयो भवतीति स्थितिः। अस्यां स्थितौ यदि वाक्यमध्ये कारकाणां बिम्बप्रतिबिम्बभावमापन्नानामुपादानं क्रियते यथा वनमिति निर्दिष्टे वाक्ये गजनिरूपितसादृश्यप्रयोजकोत्तरमुपात्तायां गमनक्रियायां वनगृहयोः कर्मकारकयोः कथमन्वयः। यदि वनाभिन्नगृहकर्मकगमनमिति बोधः क्रियते तदा प्राधान्याद्वनस्य गृहं वनरूपतां गतं न तु गृहं स्वस्वरूपे स्थितं, ततश्च तत्र गजस्य तु अन्वयः सुष्ठु। देवदत्तस्य तु स कथं, देवदत्तस्तु

### बालक्रीड़ा

अन्वय होगा। इसका फल होगा कि कर्मभूत वन एवं घर का अन्वय सर्वथा नहीं होगा। और भी बात है कि इन्हीं वन एवं गृह रूप कर्म कारकों का अन्वय नहीं होगा यह बात नहीं है। अपि तु जितने भी इस तरह के बिम्बप्रतिबिम्बभावापन्न कारक होंगे उन सबका अन्वय नहीं होगा। प्रकृत में गृह बिम्ब है और वन प्रतिबिम्ब कारक है।

उपसंहार करते हैं कि भिन्न-भिन्न वाक्यों से भिन्न-भिन्न प्रतीतियाँ अनुभव में आती हैं। अतः गजनिरूपित सादृश्य के प्रयोजक गमन का आश्रय देवदत्त है यही धी गज इव गच्छति में होती है। कारकों (वन एवं गृह) के उपादान करने पर तो उपमान पदों की स्वकर्तृक क्रिया में लक्षणा होती है यही ठीक है। नैयायिक के मत में लक्षणा है किन्तु वैयाकरण के मत में लक्षणा नहीं है।

## मधुसूदनी

गृहे एव गच्छति। अथ यदि देवदत्तस्यान्वयार्थं वनसदृशं गृहमिति क्रियते तदा गृहस्य प्राधान्यात् गजान्वयो दुष्टु। तथा चैषोन्वयः दरिद्रदम्पत्योः कृशतरनिशावगुण्ठनीयवसनविशेषवदेकेनापकृष्यमाणोऽपरं परिहरति। अत उपमानपदानां गजादीनां तत्कर्तृक तत्कर्मकक्रियायां लक्षणा। एवञ्च गजकर्तृकवनकर्मकगमनसदृशं यद् गृहकर्मकगमनं तदनुकूलकृतिमान् देवदत्तः। इति नैयायिकाः। वैयाकरणास्तु गजकर्तृकवनकर्मकगमनसदृशं देवदत्तकर्तृकं गृहकर्मकं गमनमिति। लक्षणाकर्तृमते सादृश्यस्य धात्वर्थेऽन्वयः। गमने मन्दत्वं साधारणधर्मः। गजराजगतिः, मृगराज कटिरित्येवं नायिकाया मन्दगमनस्य क्षीणकटेश्च वर्णनं कविभिः क्रियत एव।

नन्वेवं सादृश्यस्य धात्वर्थान्वयेन प्राप्तस्य धात्वर्थनिष्ठेत्यादि कार्यकारणभावविषयकव्यभिचारस्य वारणावश्यकतया भिन्नप्रतीत्योरानुभाविकत्वादिति हेतुर

## बालक्रीड़ा

यहाँ का हृदय यह है। उपमान प्रतीयोगी होता है अतः उपमाननिरूपित सादृश्य इस प्रकार निरूपितत्व सम्बन्ध से उसका अन्वय सादृश्य में होता है। सादृश्य का प्रयोजकता सम्बन्ध से गुणरूप, या क्रियारूप' या शुद्ध साधारण धर्म में और साधारण धर्म का आश्रयत्व सम्बन्ध से उपमेय में अन्वय होता है यह स्थिति है ऐसी स्थिति में यदि किसी वाक्य में बिम्बप्रतिबिम्बभावापन्न कारकों का उपादान करते हैं जैसा कि वनं गज इव गृहं देवदत्तो गच्छति वाक्य में उपादान है। तब गजनिरूपितसादृश्य प्रयोजकोत्तर उपात्त गमनक्रिया में वन और घर का अन्वय कैसे होगा।

यदि 'वनाभिन्नगृहकर्मकगमन" ऐसा बोध करते हैं तब वन की प्रधानता होन से घर, वन हो गया। न कि घर अपने रूप में स्थित हुआ तब वहाँ गज का तो अन्वय ठीक है किन्तु देवदत्त का अन्वय कैसे होगा। क्यों कि देवदत्त तो घर में जाता है। अथवा यदि देवदत्त का अन्वय करने के लिए वनसदृश घर ऐसा अन्वय करते हैं तब घर की प्रधानता हो जाने से गज का अन्वय दुष्ट हो जायगा अर्थात् गज का अन्वय नहीं होगा। ऐसी हालत में यह अन्वय दरिद्र दम्पतियो के रात्रि में ओढने के अत्यन्त छोटे वस्त्र की तरह एक के द्वारा अपनी तरफ खैंचने पर दूसरे को त्याग देता है। अतः उपमान पदों के वाचक गजादि की तत्कर्तृक क्रिया में लक्षणा होती है। अतः गजकर्तृकवन कर्मक गमनसदृश जो गजकर्मकगमन तदनुकूल कृतिमान् देवदत्त है। नैयायिकाभिमत बोध है।

वैयाकरणों का कहना है कि गजकर्तृकवनकर्मक गमनसदृश देवदत्तकर्तृक गृहकर्मक गमन है ऐसा बोध होता है। लक्षणा मानने वाले के मत में सादृश्य का धात्वर्थ में अन्वय होता है। धात्वर्थ गमन के सादृश्य का प्रयोजक मन्दत्व साधारण धर्म है। क्योंकि गजराजगतिः। मृगराजकटिः। इस प्रकार नायिकाओं की गजराज की तरह मन्दगति एवं सिंह की तरह क्षीण कटिका वर्णन कवि लोग करते ही हैं।

इस तरह निपातार्थ सादृश्य का धात्वर्थ में अन्वय करेंगे तो "घटो न पश्यति' इत्यादि स्थलों में नञर्थ घटाभाव का भी कर्मता सम्बन्ध से घटाभावं पश्यति के रूप में दर्शन क्रिया

न च प्रागुक्तकार्यकारणभावस्य धात्वर्थनिष्ठेत्यादेर्व्यभिचारः, तस्यानङ्गीकारात्, अङ्गीकारे च तूष्णीमारात्पृथगित्याद्यर्थानां धात्वर्थान्वयोऽनुभवसिद्धोऽपलपनीयः स्यात् ।

कथं तर्हि घटो न पश्यतीत्यादौ घटाभावं पश्यतीति नान्वयबोधः ।

### मर्मप्रकाशः

दोषमाह—अङ्गीति । उक्तदोषमुद्धरति—कथमिति । मात्रपदेनेतरनिपातव्यवच्छेदः ।

### मधुसूदनी

किञ्चित्कर इत्यत आह=तस्येति । तस्य धात्वर्थनिष्ठेत्यादिकार्यकारणभावनियमस्य अनंगीकारात् । ननु नियमभंगमनुसरता भवता नियमक्रीडा क्रियते इत्यत आह—अंगीकारे चेति । इत्याद्यर्थानां निपातानाम् । अत्रादिपदात् साक्षादिति निपातो ग्राह्यः । अपलपनीयः असतोऽपि सत्त्वेन सतोपि असत्त्वेन कथनरूपोऽपह्नवः अपलापः करणीयः स्यात् ।

ननु यथोक्तकार्यकारणभावस्यानंगीकारे घटो न पश्यतीत्यत्र घटस्य प्रतियोगितया नञर्थाभावे, तस्य च विषयतया धात्वर्थदर्शनेऽन्वयदशायां घटाभावं पश्यति इति बोधः स्यादित्याशंकते=कथमिति । कथं न अन्वयबोध इत्यन्वयः । उत्तरति=

### बालक्रीड़ा

में अन्वय होने लगेगा । इसलिए शाब्दबोध के विषय में एक कार्य कारण भाव सम्बन्धी नियम बनाया जिससे वह दोष हट गया । किन्तु भिन्न २ वाक्यों से होने वाली भिन्न २ प्रतीतियों के अर्थात् अनुभवों के आधार पर व्यवस्था करेंगे तो धात्वार्थनिष्ठेत्यादि उक्त कार्यकारण भाव में व्यभिचार आ जायगा । जिस व्यभिचार का वारण करना अत्यावश्यक है । अतः अनुभवाधृत व्यवस्था अकिंचित्कर है । इसपर कहते हैं कि ऐसा मत कहिए । क्योंकि उक्त कार्यकारणभाव को हम नहीं मानते हैं । यदि उक्त कार्यकारण भाव को मानेंगे तो अनुभव सिद्ध तूष्णीम्, आरात्, पृथक् एवं साक्षात् इत्यादि निपातार्थों का धात्वर्थ के साथ होने वाले अन्वय का अलाप करना पड़ेगा अर्थात् असत् को सत् और सत् को असत् कहना पड़ेगा । क्योंकि यह नियम के साथ क्रीड़ा करना कहलायेगा ।

फिर शंका होती है कि इस तरह से उक्त कार्यकारण भाव का अंगीकार नहीं करेंगे तो "घटो न पश्यति" यहाँ पर घट का प्रतियोगितया नञर्थ अभाव में, नअर्थ अभाव का विषयतासम्बन्ध से धात्वर्थ दर्शन में अन्वय होने लगेगा । फलतः घटाभाव को देखता है यह शाब्द बोध क्यों नहीं होगा । अवश्य ही यह शाब्दबोध होगा । इसपर कहते हैं कि नहीं; वैसा शाब्दबोध नही होगा । क्योंकि धात्वर्थनिष्ठ विशेष्यता निरूपित प्रकारता संसर्ग से अन्वयबोध के प्रति केवल नञ् जन्योपस्थिति को प्रतिबन्धक माना गया है । अतः प्रकृत घटो न पश्यति इसमें नञ् पदजन्य उपस्थिति है अतः धात्वर्थनिष्ठ विशेष्यता निरूपित प्रकारता सम्बन्ध से दर्शन में कर्मतया अभाव का अन्वयबोध नही होगा ।

धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेणान्वयबोधं प्रति नञ्जन्योपस्थितिमात्रस्य प्रतिबन्धकत्वकल्पनात्। धात्वर्थस्य नामार्थभिन्नत्वेन विशेषणं तु द्वयोस्तुल्यम्। तेन पाको न याग इत्यादौ न व्यभिचारः। इत्यलमप्रसक्तविचारेण।

## मधुसूदनी

धात्वर्थेति। नञर्थो धात्वर्थे प्रकारो नहि भवतीत्यर्थः। तथा च घटो न पश्यतीत्यत्र नञ्पदजन्योपस्थितेः सद्भावेन धात्वर्थनिष्ठ विशेष्यतानिरूपितप्रकारतासम्बन्धेन दर्शने कर्मतयाऽभावस्यान्वयबोधो न भवति।

नन्वेवं पाको न याग इत्यत्र नञर्थान्योन्याभावस्य पाको यागभिन्न इत्येवंरूपेण पाकेऽन्वयो न स्यात्। पाकस्य धात्वर्थतया "धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधं प्रति नञः प्रतिबन्धकत्वकल्पनात् अन्योन्याभावस्यान्वयबोधायोगादिति चेन्न। धात्वर्थस्य नामार्थभिन्नत्वेन नामार्थातिरिक्तत्वेन विशेषणं प्रदीयते। तेन पाको न याग इत्यत्र पाकादेर्धात्वर्थत्वेऽपि नामार्थत्वात् तत्र पाके यागप्रतियोगिकस्य भेदस्य अन्योन्याभावस्यान्वयो भवत्येव।

नन्वेवं नामार्थाभिन्नो यो धात्वर्थस्तन्निष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधं प्रति विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुतायां नञ्पदजन्योपस्थितेः प्रतिबन्धकत्वम्। अर्थात् यत्र वाक्ये नञ्पदजन्योपस्थितिर्भवेत्तत्र तादृशसम्बन्धेन जायमाने शाब्दबोधे विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुता नास्ति। इत्यर्थः।

नन्वेवं नियमाकारो गुरुभूत इति चेन्न। तादृशं विशेषणं तु द्वयोस्तव मम च तुल्यमेव। नन्वस्य विशेषणप्रदानस्य किं फलमत आह—तेनेति। तेन विशेषणप्रदानेन। न व्यभिचारो नासंगतिः।

## बालक्रीड़ा

फिर शंका होती है कि यदि इस तरह नञ् पदजन्योपस्थिति को शाब्दबोध में प्रतिबन्धक मानेंगे तो "पाको न यागः" यहाँ पर नअर्थ अन्योन्याभाव को लेकर पहले कहे हुए धात्वर्थनिष्ठेत्यादि कार्यकारण भाव में व्यभिचार हो जायगा। इस पर कहते हैं उस कार्यकारण भाव को हम नहीं मानते हैं। क्योंकि यदि उसको मानेंगे तो तूष्णीम्, आरात्, पृथक् एवं साक्षात् निपातार्थों का धात्वर्थ के साथ होने वाला अन्वय जो कि अनुभव सिद्ध है उसका अपलाप करना होगा। नहीं को है, कहना और है को नहीं कहना रूप अपह्लव करना होगा।

शंका। यदि उक्त कार्यकारण भाव को नहीं मानियेगा तो घटो न पश्यति इस वाक्य में घट का प्रतियोगिविधया नअर्थ अभाव में अभाव का विषयतया दर्शन में अन्वय होने की दशा में घटाभाव को देखता हूँ यह शाब्दबोध क्यों नहीं होगा।

उत्तर। वैसा अन्वय नहीं होगा। क्योंकि धात्वर्थनिष्ठ विशेष्यता निरूपित प्रकारता संसर्ग से होने वाले शाब्दबोध में नञ्जन्योपस्थिति की प्रतिबन्धक के रूप में कल्पना की गई

अथारविन्दतुल्यो भातीत्यत्र कथं धीः । तुल्यपदार्थस्य निपातभिन्न-

मर्मप्रकाशः

कथमिति । भेदेनाभेदेन वेत्यर्थः । तत्र नाद्य इत्याह—तुल्येति । उक्तव्युत्पत्तेरिति भावः ।

मधुसूदनी

अथेति विषयान्तरमारभते। कथमिति बोधविषये सन्दिहानः पृच्छति-यदरविन्दतुल्यो भातीत्यत्र कथं धीरिति। किम् "अरविन्दमिव भाति" इतिवत् भेदेनान्वयः, उत स्तोकः पाक इति वदभेदेनान्वयः। ननु कुतः सन्देग्धि इत्यत आह=तुल्येति। तुल्यपदार्थो निपातभिन्ननामार्थः। अतः तस्य तादृशनामार्थत्वेन धात्वर्थे भेदेनान्वयस्यायोगात्। तथा चोच्यते=भेदसम्बन्धेन निपातातिरिक्तनामार्थप्रकारकशाब्दबोधं प्रति विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुत्वमिति। प्रकृते च ज्ञानस्य धात्वर्थत्वेन विभक्तिजन्योपस्थितिविशेष्यत्वस्य हेतोर्विरह एव।

बालक्रीड़ा

है। अर्थात् नअर्थ अभाव धात्वर्थ में प्रकार नहीं होता है। फलतः घटो न पश्यनि वाक्य में नञ्जन्योपस्थिति होने के कारण उक्त सम्बन्ध से दर्शन क्रिया में कर्मतया अभाव का अन्वय नहीं होगा।

शंका। उक्त प्रकार से नअर्थ का धात्वर्थ में अन्वय नहीं होगा मानेंगे तो पाको न यागः इस वाक्य में पाक जो धात्वर्थ है उसमें अन्योन्याभाव का (पाक याग से भिन्न है इस रूप में) अन्वय नहीं होगा। क्योंकि नियम बाधक हो जायगा।

उत्तर। नियम बाधक नहीं होगा। क्योंकि नियम में धात्वर्थ के स्वरूप में नामार्थ-भिन्नत्व रूप विशेषण का निवेश करेंगे जो हमारे तुम्हारे दोनों के लिए तुल्य ही निवेशनीय है। इसमें पाको न यागः में पाक के धात्वर्थ क्रिया होने पर भी नामार्थभिन्न क्रिया नहीं होने से अर्थात् नामार्थ रूप क्रिया होने से भेद अन्योन्याभाव का अन्वय हो ही जायगा। कोई व्यभिचार नहीं होगा।

प्रश्न। इस प्रकार विशेषण के निवेश करने पर लक्षण (नामार्थ से भिन्न जो धात्वर्थ, उसमें रहने वाली जो विशेष्यता। उस विशेष्यता से निरूपित प्रकारता रूप सन्बन्ध से जायमान शाब्द बोध के प्रति विशेष्यतया विभक्तिजन्योपस्थिति को हेतु मानने में नञ् पदजन्योपस्थिति प्रतिबन्धक रुकावट डालती है अर्थात् जिस वाक्य में नञ् पदार्थ की उपस्थिति हो वहाँ उक्तसम्बन्ध से जायमान शब्दबोध म विशेष्यरूप में विभक्तिजन्योपस्थिति हेतु नहीं होती है) बहुत बड़ा हो गया।

उत्तर। इसका उत्तर दे दिया गया है कि यह गुरुत्व तुम्हारे हमारे दोनों के मत में समान है। अब बस करो बे मतलब की बहस में कोई फायदा नहीं है।

अब दूसरे विषय को आरम्भ करते हैं। प्रश्न—अरविन्द तुल्यो भाति वहां पर क्या अरविन्दमिव भाति की तरह भेद सम्बन्ध से अन्वय होगा या स्तोकं पाकः की तरह अभेद

नामार्थत्वेन धात्वर्थे भेदेनान्वयायोगात् । तादृशतुल्यत्वादेरुद्देश्यतावच्छेदकत्वे भानमात्रविधेयतायां विवक्षितार्थाप्रतीतिः ।

न च तुल्यपदेन तुल्यत्वप्रकारको लक्षणयोपस्थापितो ह्यभेदेन धात्वर्थे-

### मर्मप्रकाशः

नाप्यभेदेनेत्याह—न चेति । धात्वर्थे भानरूपे ।

### मधुसूदनी

ननु मास्तु नियमाभावात्तादृशतुल्यत्वभानरूपयोर्नामार्थधात्वर्थयोः साक्षाद्भेदेनान्वयः किन्तु तयोरुद्देश्यविधेयभावेनान्वयो भवितुमर्हत्येवेत्यत आह=तादृशतुल्यत्वादेरिति । तादृशतुल्यत्वमरविन्दनिरूपितसादृश्यमुद्दिश्य केवलं भानं विधीयते चेत्तर्हि विवक्षितार्थस्य, कः भाति कथं भाति, भानञ्च कीदृशं किमात्मकमित्यादि जिज्ञासाया जागरूकत्वे विवक्षितोऽर्थोऽत्र अयमस्तीति प्रतीतिर्नास्ति । इति उक्तेन भावेनान्वयो नास्ति इत्यर्थः । तादृशतुल्यत्वादेरुद्देश्यतावच्छेदकत्वे भान इति पाठः ।

ननु भातीत्यस्य "आश्रये तु तिङः स्मृताः" इति नयानुरोधात् भानाश्रय इत्यर्थः । तथाचाभेदेन अरविन्दनिरूपितसादृश्याभिन्नभानाश्रय इति बोधो जायतामित्यपि वक्तुं न शक्यते ज्ञानाधिकरणमात्मेति सिद्धान्तानुरोधात् तादृशबोधस्यायोग्यतापराहत्वमेव ।

नन्वेवमुभयथाप्यन्वयोऽनुपपन्नश्चेदन्वयानुपपत्त्या प्रसरन्ती लक्षणा अन्वयोपपादकमर्थमुपस्थापयतु का हानिरित्यात्राह=नचेति । अयं तत्त्वार्थः । तुल्यपदं

### बालक्रीड़ा

सम्बन्ध से । अवान्तर प्रश्न । ऐसा सन्देह आप क्यों करते हैं । उत्तर । तुल्य पदार्थ निपातभिन्न नामार्थ है । अतः उसका निपातारिक्त नामार्थ होने से धात्वर्थ में भेद से अन्वय नहीं होगा ।

जैसा कि कहा जाता है कि भेद सम्बन्ध से निपातातिरिक्त नामार्थ प्रकारक शाब्द बोध के प्रति विशेष्यरूप से विभक्तिजन्योपस्थिति हेतु है । प्रकृत में ज्ञान के धात्वर्थ होने से विभक्तिजन्योपस्थिति विशेष्यत्व रूप हेतु नहीं है ।

तब कहते हैं कि अच्छा नियम के अभाव में तादृशतुल्यत्व रूप नामार्थ का भानरूप धात्वर्थ के साथ साक्षात् भेद सम्बन्ध से अन्वय मत हो । किन्तु उद्देश्य विधेयभाव से तो उनका अन्वय हो ही सकता है । इसपर प्रश्न करते हैं कि तादृशतुल्यत्व अर्थात् अरविन्दनिरूपित सादृश्य को उद्देश्य करके केवल भानका विधान करते हैं तब कः भाति कथं भाति, और वह भान कीदृश है किमात्मक है इत्यादि जिज्ञासा में यह है ऐसा है ऐसे विवक्षित अर्थ की प्रतीति नहीं होती है । अर्थात् उक्त भाव से अन्वय नहीं हो सकता है ।

यहाँ भानोद्देश्यतावच्छेदकत्वे भानमात्र विधेयतायाम् यह पाठ जडबड है पुनरुक्ति होती है अतः तादृशतुल्यत्वस्य उद्देश्यतावच्छेदकत्वे भान यह पाठ ठीक है ।

ऽन्वेष्यतीति वाच्यम्। क्रियाविशेषणत्वेनारविन्दतुल्यशब्दस्य नपुन्सकत्वापत्तेरिति चेत्, व्याकरणस्य सिद्धानुवादकत्वेन स्तोकं पचतीत्यादिमात्र-

### मधुसूदनी

लक्षणया तुल्यत्वप्रकारकमर्थमुपस्थापयतु। स च नामार्थत्वेन धात्वर्थे ज्ञाने अभेदेन अन्वेष्यति तथा च अरविन्द निरूपिततुल्यत्वप्रकारकाभिन्नज्ञानविशेष्यको बोधो-भविष्यति। तत्र कथयति "न चेति वाच्य" मिति। ननु कुतो न च इति वाच्यमत आह-क्रियेति एवमन्वये अरविन्दतुल्यप्रकारकस्य लक्ष्यस्य क्रियाविशेषणतया लक्षकस्य पदस्यारविन्दतुल्यमिति क्लीवत्त्वापत्तिः। "क्रियाविशेषणानां कर्मत्वं नपुंसकलिंगता च वक्तव्या" इत्यनुशासनात्, अरविन्दतुल्य शब्दस्य क्रियाविशेषणत्वेन नपुंसक लिंगतापत्तेः क्लीवत्वस्य प्रसंगः स्यात्। तत्र तुल्यत्वप्रकारकं विशेषणतया, अभेदश्च संसर्गतया, ज्ञानं च विशेष्यतया भासते।

### बालक्रीड़ा

अगर कहें कि "आश्रये तु तिङः स्मृताः" इस न्याय के अनुरोध से 'भाति" इस पद का अर्थ भानाश्रयः ऐसा होगा। तब अभेद सम्बन्व से अरविन्द निरूपित सादृश्याभिन्न भानाश्रयः। ऐसा वोध हो जायगा क्या हानि है। उत्तर। ऐसा नहीं कह सकते है क्योंकि ज्ञानाधिकरणमात्मा यह सिद्धान्त है अतः योग्यता के अभाव में उस तरह का वोध हो ही नहीं सकता।

प्रश्न। इन दोनों प्रकारों से यदि अन्वय अनुपपन्न है तब अन्वयानुपपत्ति होने पर आनेवाली लक्षणा से अन्वयोपपादक अर्थ की उपस्थिति हो जायगी क्या क्षति है। अस्तु तुल्यपद लक्षणा के द्वारा तुल्यत्वप्रकारक अर्थ का उपस्थापक होवे। किन्तु उसका धात्वर्थ में अभेदेन अन्वय नहीं हो सकता है। क्योंकि इस तरह अन्वय करने पर लक्ष्य अरविन्द तुल्यत्व प्रकारक, भान क्रिया में विशेषण हो जायगा। फलतः अरविन्दतुल्यम् इस रूप में अरविन्द-तुल्यपद नपुंसक हो जायगा। जैसा कि क्रिया विशेषणानां कर्मत्वं नपूंसकलिंगता च वक्तव्या अनुशासन है।

इसलिए अरविन्दनिरूपिततुल्यत्वप्रकारकाभिन्न ज्ञान विशेष्यक इस बोध के उप-स्थापक अरविन्दतुल्यो भाति वाक्य में यह पुलिंग पद ही अशुद्ध है। तव अशुद्ध पद से अर्थ का बोध कैसे होगा। उत्तर। सिद्धान्त है कि लौकिक शब्द लोक में सिद्ध है और वैदिक शब्द वेद में सिद्ध है। इसके अनुसार लोक एवं वेद में सिद्ध शब्दों की रक्षा, ऊह, आगम, लाघव एवं सन्देह निराकरण रूप प्रयोजन को स्पष्ट करन के लिए व्याकरण है अतः वह सिद्धानुवादक है। लोक में स्तोकं पचति मधुरं जागद, वहु पराक्राम्यति इस तरह के लक्ष्य वहुत हैं। और इन लक्ष्यों के विषय में सन्देह को निराकरण करके उक्त अनुशासन चरितार्थ हो गया। तब प्रकृत में अरविन्दतुल्यो भाति वाक्य में पुलिग पद अशुद्ध नहीं हुआ और उक्त बोध होन में भी कोई गड़बड़ी नहीं होगी। एक समाधान यह भी है। इसका दूसरा भी

विषयत्वेन क्रियाव्ययविशेषणानां क्लीबतेष्यते इत्यस्योपपत्तेः। धातोरेव लक्षणया सकलार्थबोधकत्वमितरस्य तात्पर्यग्राहकतेत्यपि केचित्।

अरविन्दवत्सुन्दरमित्यत्र वतेः तेन तुल्यम्—' इति विहितस्य सादृश्यवदर्थकस्य सादृश्ये लक्षणा तस्य सुन्दरपदार्थैकदेशेन सुन्दरत्वेनान्वयाद-

## मर्मप्रकाशः

उपपत्तेरिति। तथा चोक्तरीत्या अभेदेनैवान्वय इति भावः। मतान्तरमाह—धातोरेवेति। तथा च तस्य तादृशो विशिष्ट एवार्थ इति नोक्तव्युत्पत्त्यवसर इति भावः। इत्यपि केचिदिति। वस्तुतस्तु उपमाविधेयकबोधे तात्पर्ये अरविन्दतुल्यमित्येव साधु, न तु तुल्य इति। यदि तु विधेयस्य धर्मत्वेन विधेयबोधकबोध्यत्वमेव विधेयत्वमुपमाया इति विभाव्यते तर्हि अरविन्दतुल्यविषयकं भानं भानविषयोऽरविन्दतुल्य इति वा बोधेऽपि भानस्य धर्मत्वेन भानादुपमाया अविधेयत्वमेव। धर्मान्तरस्य तथाभाने तु अरविन्दतुल्य इत्येव प्रयोगः सर्वसंमतः। उपमाया उद्देश्यतावच्छेदकत्वं चेति ध्येयम्। अरविन्दमिव सुन्दरमित्यत्रेति।

## मधुसूदनी

समाधत्ते—व्याकरणस्येति। लौकिकाः शब्दाः लोके सिद्धाः, वैदिकाः शब्दा वेदे सिद्धाः। अतो व्याकरणं हि लोकवेदयोः सिद्धानां शब्दानां रक्षोहागमलघ्वसंदेहरूप प्रयोजनार्थं प्रवर्त्तते इत्यनुवादकम्। लोके च "स्तोकं पचति" "मधुरं जगाद" "बहु पराक्राम्यति" इत्यादि प्रसिद्धानि लक्ष्याणि तन्मात्र विषयत्वेन केवलतादृशलक्ष्यसंगमनकारित्वेनापि क्रियाव्ययविशेषणानां क्लीवता इष्यत इत्यस्यानुशासनस्य उपपत्तेश्चारितार्थ्यात्।

क्रियाविशेषणताप्रयुक्तनपुंसकतानिरासार्थं केषांचित्कल्पनां जल्पन्नाह—धातोरेवेति। धातोरेव भाधातोरेव लक्षणया वृत्त्या सकलार्थबोधकत्वं सादृश्यप्रकारकज्ञानरूपार्थप्रतिपादकत्वमितरस्यारविन्दतुल्य इत्यस्य तात्पर्यग्राहकत्वम्। तथा च क्रियाविशेषणानां क्लीवत्वप्रसंगाख्यो दोषो न भविष्यति इति भावः।

## बालक्रीड़ा

समाधान है कि भाधातु ही प्रकृत में लक्षणा के द्वारा सकल अर्थ की उपस्थापक है और इतर अरविन्दतुल्य पद तात्पर्य का ग्राहक है।

"अरविन्दवत् सुन्दरम्।" इस वाक्य में वति का तुल्य अर्थ में विधान है। जिसका अर्थ है सादृश्यवान्। उस वति से सादृश्य अर्थ की प्रतीति लक्षणा के जरिये होती है। उस सादृश्य का सुन्दर पदार्थ के एक देश सौन्दर्य से अन्वय होता है इसलिए जैसे अरविन्दमिव सुन्दरम् से बोध होता है उसी तरह वति प्रत्यय स्थल में भी होगा। हाँ इतनी विशेषता है कि इवस्थल में अभिधा से और वति स्थल में लक्षणा से सादृश्य का प्रतिपादन किया गया है अतः पूर्व में श्रौती उपमा है और उत्तर में आर्थी।

रविन्दमिव सुन्दरमित्यत्रेव बोधः। एकत्र शक्त्यापरत्र लक्षणया च सादृश्य-प्रतिपादनाच्छ्रौत्यार्थी चेति।

अरविन्दवन्मुखमित्यत्र त्वरविन्दनिरूपितसादृश्यवदभिन्नमिति।

मर्मप्रकाशः

वस्तुतस्तु क्रियायास्तुल्यत्वे एव 'तेन तुल्यम्–'इति वतिविधानादरविन्दमिव सुन्दरमित्यादिवत्कथं बोध इति चिन्त्यमिदम्। अत एव ब्राह्मणवदधीते इत्यत्र ब्राह्मणकर्तृकाध्ययने ब्राह्मणपदस्य लक्षणेति महाभाष्यकारादयः। अरविन्दवत्सुन्दरं मुखमित्यत्र च भवति क्रियाध्याहार्या। अरविन्दपदेन च सुन्दरारविन्दभवनं लक्ष्यते। तथा च सुन्दरारविन्दभवनसदृशं सुन्दरं मुखभवन-मिति शाब्दे बोधे वृत्ते अरविन्दमुखयोः सौन्दर्यधर्मकृतसादृश्यं व्यञ्जनया बुध्यते। एवमरविन्द-वन्मुखमित्यत्रापि अरविन्दभवनसदृशं मुखभवन मित्येव बोधो युक्त इति बोध्यम् एकत्र अरविन्दमिवेत्यत्र। अपरत्र अरविन्दवदित्यत्र। सादृश्यवदभिन्नमितीति। बोध इत्यस्या-

मधुसूदनी

एकत्रेति। अरविन्दमिव सुन्दरमित्यत्र शक्त्या अभिधया सादृश्यस्य प्रति-पादनाच्छ्रौती। अपरत्र अरविन्दवत्सुन्दरमित्यत्र तु वतिप्रत्ययः सादृश्यवदर्थकोऽतो लक्षणया सादृश्यस्य प्रतिपादनादार्थी। अदो हृदयम्। तेन तुल्यं क्रिया चेदिति सूत्रेण विहितस्य वतेः क्रियायामेवान्वयः। तृतीयान्ताद्वतिः स्यात् तुल्यमित्यर्थे। यत्तुल्यं सा क्रिया चेदिति क्रिया विशेषणत्वाद्वत्यर्थसादृश्यस्य क्रियायामेवान्वयो युक्त-स्तथापि क्रियाग्रहणेन क्रियावत एवोपलक्षणे क्रियाद्वारकं क्रियावतः सादृश्यमाश्रय-णीयम्। एवं "स्थानिवदादेशोऽनल्विधौ" "असिद्धवदत्राभात्" इत्यादौ स्थानिना तुल्य आदेशो नामार्थः क्रियावानेव गृह्यते ततश्च भवतिक्रियामध्याहृत्य अरविन्द-वत्सुन्दरं मुखमित्यत्र सुन्दरारविन्द भवनसदृशं सुन्दरं मुखभवनमितिबोध इति हृदि निधायैव पण्डितराजेन बोधितं यत् "अरविन्दमिवसुन्दरमित्यत्रेव अरविन्दवत्सुन्दर सादृश्यवदभिन्नमिति प्रतीकमादाय लक्षणेति भावः। अतएव तुः प्रयुक्त इति व्याचख्युर्नागेशमहाशयाः। तस्यायमाशयः। वतेरर्थः सादृश्यवत्। तच्च प्रकृते अरविन्दवन्मुखमित्यत्र मुखमेवेति सादृश्यवदभिन्नं मुखमिति लक्षणां विनैव अर्थात् सादृश्ये लक्षणामकृत्वैव बोधः। अरविन्दस्य तु सादृश्यवत एकदेशे सादृश्ये-ऽन्वयः। अरविन्दवत्सुन्दरमित्यत्र तु वत्यर्थस्य सादृश्यवतः सुन्दरपदार्थैकदेशे सुन्दरत्वेऽन्वयो भवितुं नार्हति इति सादृश्ये लक्षणा क्रियते इति।

बालक्रीड़ा

"अरविन्दन्मुखम्" इसमें तो "अरविन्दनिरूपितसादृश्यवदभिन्नं मुखम्" यहं बोध लक्षणा के विना ही हो गया। इसीलिए "इत्यत्र तु" इसका प्रयोग किया। इसका आशय यह है कि वति का अर्थ है सादृश्यवत्। वह सादृश्यवत् "अरविन्दवन्मुखम्" में मुख ही है। अतः सादृश्य में लक्षणा नहीं की। और "अरविन्दवत्सुन्दरम्" में तो सादृश्यवान् का सुन्दर के एक देश सौन्दर्य में अन्वय हो नहीं सकता है अतः सादृश्य में लक्षणा करना आवश्यक है।

अरविन्दवत्सौन्दर्यमस्येत्यत्रारविन्दशब्दस्यारविन्दसौन्दर्यलाक्षणिकतयारविंद सौन्दर्यनिरूपितसादृश्याधिकरणमेतत्संबन्धिसौन्दर्यमिति मुखारविन्द-सौन्दर्ययोः सादृश्यबोधे शाब्दे तयोरभेदाध्यवसायादभिन्नधर्ममूला पश्चान्मुखारविन्दयोरपि सादृश्यधीः ।

## मर्मप्रकाशः

नुषङ्गः लक्षणा नेति भावः । अत एव तुः प्रयुक्तः । सौन्दर्यलाक्षणिकतयेति । तत्र तस्येवेति वतेरिवार्थे विहितत्वेन सादृश्यार्थकस्य तत्प्रयोजके लक्षणयारविन्दसादृश्यप्रयोजकमेतत्सबन्धिसौन्दर्यमिति बोधे उपपन्ने अरविन्दपदस्यारविन्द सौन्दर्यलक्षणा किंप्रमाणा चेति चिन्त्यमिदम् । शाब्दे इति । वृत्ते इति शेषः । तयोर्मुखार विन्दसौन्दर्ययोः । अभेदेत्यस्य सादृश्यमूलेत्यादिः । अभिन्नधर्मेति । सौन्दर्यरूपेत्यर्थः । सादृश्ये तुल्यपदार्थैकदेशे ।

## मधुसूदनी

सौन्दर्यलाक्षणिकतयेति प्रतीकमुपादाय सौन्दर्यलक्षणा किंफला किंप्रमाणा चेति चिन्त्यमिति चिरन्तनमनीषिणो नागेशमहाशया अचिन्तयन् । तत्र चिन्त्यते अरविन्दवत्सौन्दर्यमस्येत्यत्र अस्य मुखस्य सौन्दर्यमरविन्दवदिति बुद्धौ मुखारविन्द-गतयोः धर्मयोः सौन्दर्ययोः सादृश्यं, धर्मिणोः मुखारविन्दयोः सादृश्यं सफलयति इति सिद्ध्यति ।

अतः पूर्वं धर्मसादृश्यमपेक्षितमाक्षेप्यम् । आपेक्षोऽत्र लक्षणेति । धर्मसादृश्य-रूपफलार्थं अरविन्दशब्दस्य तत्सौन्दर्ये लक्षणा सम्पाद्यते पण्डितराजेन । येन विना यदनुपपन्नं तत्तेनाक्षिप्यते इति प्रमाणात् । यतो धर्मसादृश्यं विना धर्मिसादृश्य-मनुपपन्नमिति नागेशमहाशयानां मते पूर्वं धर्मिसादृश्यं सम्पाद्यं तदनु धर्मसादृश्यमिति अपष्ठुलमेवेति ।

## बालक्रीड़ा

"अरविन्दवत्सौन्दर्यमस्य" अरविन्द की तरह इस मुख का सौन्दर्य है । यहाँ जैसा सौन्दर्य अरविन्द का है वैसा सौन्दर्य मुख का है । इस तरह पहिले दोनों सौन्दर्यों का धर्मों का सादृश्य करना आवश्यक है उसके बाद उक्त सौन्दर्य प्रयोज्य सादृश्य धर्मियों में करना है । इनमें पहला शाब्द है दूसरा आर्थ है ।

यहाँ पण्डितराज लिखते हैं कि अरविन्द शब्द अरविन्दसौन्दर्य अर्थ में लाक्षणिक है । इसलिए अरविन्द सौन्दर्य निरूपित सादृश्य का अधिकरण इस मुख का सौन्दर्य है । इस तरह मुख और अरविन्द के सौन्दर्यों का सादृश्यबोध शाब्द माने शब्द से प्राप्त है । इसके बाद उन दोनों सोन्दर्यों में अभेदाध्यवसाय अर्थात् ये दोनों सौन्दर्य एक हैं समान है यह ज्ञान करना होगा । इसके बाद सौन्दर्य रूप साधारण धर्ममूल अरविन्द एवं मुख में सादृश्य बुद्धि होती है । यह उपमा का ज्ञान है ।

अरविन्देन तुल्यमित्यत्र तृतीयार्थो निरूपितत्वम् । तस्य च सादृश्येऽन्वयादरविन्दनिरूपितसादृश्याश्रयाभिन्नमिति । तत्रैव सौन्दर्येणेति धर्मनिर्देशे तृतीयार्थः प्रयोज्यत्वम् । तेनारविन्दनिरूपितसौन्दर्यप्रयोज्यसादृश्यवदभिन्नमिति ।

अरविन्दमाननं च सममित्यत्र प्रथमं शब्दात्सादृश्यवदभिन्नमिति बोधे पश्चान्मानसी वैयञ्जनिकी वा परस्परनिरूपितसादृश्यस्य प्रतीतिः प्रसिद्धनिरूपितसादृश्यस्य वा ।

### मर्मप्रकाशः

अभिन्नमितीत्यस्य बोध इति शेषः । एवमग्रेऽपि । निरूपितप्रयोज्यते सादृश्यविशेषणे । अभिन्नमिति । अरविन्दमाननं चेति शेषः । परस्परेति । मुखसादृश्यस्य कमले, कमलसादृश्यस्य मुखे इत्यर्थः । विनिगमनाविरहादिति भावः । प्रसिद्धत्वस्य गमकत्वादाह—प्रसिद्धेति । अरविन्देत्यर्थ । सादृश्यस्य वेति । प्रतीतिरित्यस्यानुषङ्गः ।

### मधुसूदनी

तत्रैवेति । अरविन्देन तुल्यमित्यत्रैव । तेन हेतुना अरविन्दनिरूपितं सादृश्यप्रयोज्यं यत्सादृश्यं तद्वदभिन्नमिति ।

अरविन्दमाननं च सममिति । अत्र समानविभक्त्यन्तशब्दश्रवणमात्रान्नोपमानोपमेयभावः किन्तु प्रथमं समशब्दश्रुतेः साम्यवदभिन्नमिति बोधः । तदनु मनसा व्यञ्जनया वा परस्परनिरूपितसादृश्यस्य अरविन्दनिरूपितसादृश्यवदाननम् । आनननिरूपितसादृश्यवदरविन्दमिति । अथवा प्रकृतत्वाप्रकृतत्वपर्यालोचनया उपमानत्वेन प्रसिद्धारविन्दनिरूपितसादृश्यस्य प्रतीतिर्मुखे जायते ।

### बालक्रीड़ा

"अरविन्देन तुल्यम्" यहाँ पर तृतीया का अर्थ है निरूपितत्व । उसका सादृश्य में अन्वय हो जाने से अरविन्द निरूपित सादृश्य का आश्रय जो सदृश उससे अभिन्न है यह बोध हुआ । इसी वाक्य में सौन्दर्येण इस तृतीयान्त पद के द्वारा धर्म का निर्देश करने पर भी वही बोध होगा । इस तृतीया का अर्थ है प्रयोज्यत्व । अर्थात् अरविन्द से निरूपित और सौन्दर्य से प्रयोज्य जो सादृश्य तद्वदभिन्न यह बोध होगा । यहाँ निरूपितत्व और प्रयोज्यत्व दोनों सादृश्य के विशेषण हैं ।

अरविन्द और आनन समान हैं । इसमें शब्द से पहिले सुनते ही समान विभक्ति वाले पदों अरविन्द और आनन में उपमानत्व एवं उपमेयत्व की प्रतीति नहीं होती है । किन्तु सम पद के सुनने से दोनों समान हैं । इसी को पण्डितराज ने साम्यवदभिन्नम् लिखा है । फिर मानस बोध या वैयञ्जनिक बोध होता है कि अरविन्दनिरूपितसादृश्यवदानन है और आनननिरूपितसादृश्यवत् अरविन्द है । इस तरह परस्पर निरूपित सादृश्य की प्रतीति होती है या फिर उमानत्वेन प्रसिद्ध जो अरविन्द है तन्निरूपित सादृश्य की प्रतीति होती है ।

बिम्बप्रतिबिम्बभावापन्ने तु—

'कोमलातपशोणाभ्रसंध्याकालसहोदरः।
कुङ्कुमालेपनो याति काषायवसनो यतिः॥'

इत्यादौ कुङ्कुमालेपनादिविशिष्टो यतिः कोमलातपादिविशिष्टसंध्याकालसदृशाभिन्न इति शक्त्या बोधे पश्चात्सादृश्यप्रयोजकधर्माकाङ्क्षायां श्रुतानां कोमलातपादीनामुपमानोपमेयविशेषणानां सादृश्यमूले तादात्म्याध्यवसाने साधारणत्वनिष्पत्तिः। कुङ्कुमालेपकषायवसनाभ्यामयं यतिरित्यत्र कुङ्कुमालेपकषायवसनयोरसाधारणयोरपि साधारणत्वज्ञानजननद्वारा कल्प-

## मर्मप्रकाशः

पन्ने त्विति। तदापन्नधर्मके त्वित्यर्थः। सहोदरशब्दार्थमाह—सदृशेति। तादात्म्येति। अभेदेत्यर्थः। लक्ष्यान्तरमाह—कुङ्कुमालेपेति। साधारणत्वेति। सादृश्यमूलाभेदाध्यवसानेनेत्यादिः। कल्पनीयेति। यतिरित्यस्य यतिरिवेत्यर्थः अन्यत्र अन्यशब्दप्रयोगादिति भावः।

## मधुसूदनी

विम्वेति। अत्र यदस्ति तत्सर्वं पूर्वं व्याख्यातं तस्मादवसेयम्।

## बालक्रीड़ा

जहाँ धर्मों में बिम्बप्रतिविम्बभाव है वहाँ कोमलातप इत्यादि में तो पहिले शक्ति अभिधा के द्वारा कोमल आतप एवं लाल (अभ्र) वादल जिसमें हैं ऐसे संध्याकाल के सदृश, काषाय वस्त्रधारी एवं कुंकुम से आलिप्त यति जा रहा है। ऐसा बोध होता है। उसके बाद सादृश्य के प्रयोजक धर्मों की आकांक्षा होने पर शब्दोपात्त उपमान एवं उपमेय के विशेषण कोमलातपादि एवं काषाय वसनादि में सादृश्यमूलक तादात्म्याध्यवसान के द्वारा साधारणत्व की निष्पति हो जाता है।

कुंकुमालेप एवं काषाय वसनों से विशिष्ट यह यति कोमलातप शोणाभ्र से विशिष्ट संध्याकाल के सदृश है। इसमें यति एवं संध्या के विशेषण यथापि असाधारण हैं तद्यपि उनमें सादृश्य मूलक अभेदाध्यवसाय से साधारणता का ज्ञान पैदा करा जाता है। अतः वे यति और संध्याकाल में कल्पनीय सादृश्य के प्रयोजक वन जाते हैं। फलतः उन विशेषणों का सादृश्य में प्रयोज्यत्वेन अन्वय हो जाता है। उसका आकार यह है—संध्याकाल से निरूपित और कोमलातपाभिन्न कुंकुमालेपन शोणाभ्राभिन्न काषायवसन से प्रयोज्य जो सादृश्य, उस सादृश्य वाले से अभिन्न यति है। प्रश्न। यहां सहोदर पद का अर्थ है सादृश्य वाला किन्तु यहां प्रकृत में निरूपितत्व एवं प्रयोज्यत्व का अन्वय सादृश्यवाले में न करके उसके एक देश सादृश्य में कैसे किया। क्योंकि पदार्थ का पदार्थ के साथ अन्वय होता है न कि उसके एक

नीयसादृश्यनिष्पत्तिप्रयोजकत्वात्प्रयोज्यत्वेन सादृश्येऽन्वयः। एकदेशान्वयः पुनरेषु पक्षेष्वगतिकतयाश्रीयत इत्युक्तमेव।

सादृश्यस्य समानधर्मरूपत्वे तु अरविन्दसुन्दरं वदनमित्यत्र लक्षणयारविन्दवृत्तिसमानधर्मः प्रतीयते। तस्य चाभेदेन सुन्दरपदार्थैकदेशेन सुन्दरत्वेनान्वयः। अरविन्दमिव सुन्दरमित्यत्रारविन्दपदार्थ आधेयतया संसर्गेण इवपदार्थेन समानधर्मेणान्वेति। शेषं प्राग्वत्। सौन्दर्येणारविन्देन

मर्मप्रकाशः

लक्षणयेत्यस्यारविन्दपदस्येत्यादिः। शेषमिति। तस्य चाभेदेनेत्यादीत्यर्थः।

मधुसूदनी

साद्दश्यस्येति। सादृश्यं पदार्थान्तरं साधारणधर्मप्रयोज्यमिति मतेन व्याख्यायेदानीं सादृश्यं समानधर्मरूपमिति मतेनोच्यते। अरविन्दसुन्दरमिति उपमान समासस्थले उपमानपदेऽरविन्दे लक्षणा। अन्वय इति। अरविन्दवृत्तिसमानधर्माभिन्नसौन्दर्यवदभिन्नं वदनमित्यन्वयः। अरविन्दमिवेति वाक्ये। संसर्गेण संसर्गमर्यादया। आधेयत्वं भासते। यद्यपि आधाराधेयभावः सम्बन्धस्तद्यपि वृत्ति नियामकः सम्बन्ध आधेयत्वमेव। शेषं प्राग्वत् समासस्थलोक्तप्रकारवत्।

सौन्दर्येणेति। अत्र प्रकरणे इवार्थः समानधर्मः समशब्दार्थश्चसमानधर्मवान्। समानधर्मः सौन्दर्यादिरेव। अतः अरविन्दमिव सुन्दरमित्यत्र इवपदमपि समानधर्मोपस्थापकं सुन्दरपदमपि तदुपस्थापकं. ततश्च पुनरुक्तिरेव स्यात्। न च इवपदं

बालक्रीड़ा

देश से। उत्तर। ऐसी जगहों में एक देशान्वय तो अगतिकगति है अतः करना ही पड़ता है। यह पहले उपमा के आरम्भ में ही कह दिया गया है।

यह सब सिद्धान्त भूत कथा आलंकारिकों की है। इस मत में सादृश्य एक भिन्न पदार्थ है और वह साधारणधर्म से प्रयोज्य है। जो तो नैयायिक सादृश्य को समानधर्म रूप मानते हैं। उनके मत में तो अरविन्द सुन्दर वदन है इसमें उपमान वाचक अरविन्द पद में लक्षणा के द्वारा अरविन्द वृत्ति समानधर्म प्रतीत होता है। उसका अभेद सम्बन्ध से सुन्दर पदार्थ के एक देश सुन्दरत्व से अन्वय हो गया। अरविन्दवृत्तिसमानधर्माभिन्न का सौन्दर्यवदभिन्न वदन है यह बोध हुआ है।

अरविन्दमिव सुन्दरम् में अरविन्द पद का अर्थ वृत्तित्व रूप आधेयता है वह वृत्तिनियामक संसर्ग से इव पद के अर्थ समानधर्म से अन्वय करता है। बाकी बातें पूर्ववत् हैं।

सौन्दयण अरविन्देन समम् में सौन्दर्यपदोत्तर तृतीया का अर्थ धान्येन धनवान् की तरह अभेद है। अन्य अरविन्दपदोत्तर तृतीया का अर्थ निरूपितत्व है। अतः सौन्दर्याभिन्न और अरविन्द से निरूपित जो सादृश्य तद्वान् से अभिन्न वदन है यह बोध हो गया है।

समभित्यत्र सौन्दर्योत्तरतृतीयया धान्येन धनीत्यत्रेव अभेदार्थिकया अन्यया च निरूपितत्वार्थिकया सौन्दर्याभिन्नमरविन्दनिरूपितं यत्सादृश्यं तद्वद्भिन्नमिति धीः। क्यङर्थाचारो धर्ममात्रम्। तस्य चोपमानपदेन लक्षण-

### मर्मप्रकाशः

अन्यया चेति। अरविन्दपदोत्तरया चेत्यर्थः। एकदेशान्वयः प्राग्वदेवेत्याह—सादृश्यमिति। लुप्तास्थले बोधमाह—क्यङर्थेति। सादृश्यस्यातिरिक्तत्वे आह—प्रयोजकतेति।

### मधुसूदनी

सामान्यरूपेण समानधर्मोपस्थापकं सुन्दरपदं विशेषरूपेण तदुपस्थापकमिति वाच्यम्। विशेषरूपेण उपस्थापने धर्मस्य साधारणता व्याहन्येत अथ च एकस्मिन्नेव तस्मिन्नसाधारणे धर्मे सामान्यरूपता विशेषरूपता भावाभावयोरिव विरुद्धैव।

अन्यच्च इवपदं साधारणधर्मवाचकं सुन्दरपदमपि धर्मस्य वाचकमेव, न च लक्षकं, नापि व्यञ्जकं, ततश्चास्मिन् मते इवपदाभावेऽपि धर्मलुप्ता सुन्दरपदाभावेऽपि धर्मलुप्ता सा। अथवा उभयत्र धर्मवाचकलुप्ता स्यात्। किं च अरविन्दमिव मुखमित्यत्रैव सुन्दरपदाभावे धर्मलुप्ता कुतः, अरविन्दसुन्दरमित्यत्रापि इवाभावे सा कुतो न स्यात्। किं निवारकं यतः इवपदमपि तद्वाचकमेव तदभावेऽन्या कोपमा स्यात्। ननूक्तमेव इवपदं सामान्यरूपेण साधारणधर्मोपस्थापकं, सुन्दरादिपदं विशेषरूपेणेत्यतः विशेषरूपेण तदुपस्थापकानां सुन्दरादिपदानामभावे एव धर्मलुप्तेति चेन्न। एवं हि पौरं सुतीयति जनमित्यत्र उपमानादाचारे इति सूत्रेण उपमानवाचकात् सुतमिति कर्मपदात् "समरान्तरेऽसावन्तः पुरीयति" इत्यत्र उपमानवाचकात् अन्तःपुरे इत्यधिकरण पदात् "नारीयते सपत्नसेना" इत्यत्र कर्त्तुः क्यङिति सूत्रेण उपमान वाचकात् नारीति कर्तृपदात् सामान्यतः आचारार्थे क्रमशः क्यच्क्यङोर्विधानात्, क्यच्क्यङ्भ्यामिवादिपदवत्सामान्यत एव साधारणधर्मोऽभिधीयते सुन्दरादिपदवद्विशेषतो नाभिधीयते ततश्चैषु स्थलेष्वपि धर्मलुप्तैव उपमा व्यवह्रियतां परं तथा व्यवहारो नास्ति तस्मादालंकारिकाणां सिद्धान्ते सादृश्यं समानधर्मरूपं नास्ति किन्तु सादृश्यमतिरिक्तः पदार्थः। तस्य च प्रयोजकः समानधर्मः। सादृश्यं तत्प्रयोज्यमिति सादृश्यसमानधर्मयोः प्रयोज्यप्रयोजकभावः सम्बन्धः। इति।

अन्ययेति। अरविन्देनेति अरविन्दपदोत्तरविहितया तृतीयाविभक्त्या। सादृश्यं समानधर्मः। अरविन्देन सममित्यादौ समादिपदोपादानस्थले समान-

### बालक्रीड़ा

क्यङर्थ आचार केवल धर्म ही पहले यहां उपस्थित होता है स्नेहपालनादि प्रकृत अर्थ के अनुरूप क्रियादि पीछे उपस्थित होती हैं। उपमान पद से लक्षणा के द्वारा उपस्थित उपमाननिरूपित सादृश्य उस धर्म का अभेदसम्बन्ध से या प्रयोजकता सम्बन्ध से विशेषण है। और उपमेय उसमें आश्रयतया विशेष्य है। क्यजर्थ आचार अनुरूप क्रियादि है। यह सब केवल मार्ग प्रदर्शन है। इसी तरह सभी स्थलों में समन्वय करना चाहिए।

योपस्थितं तन्निरूपितसादृश्यं प्रयोजकतासंसर्गेणाभेदेन वा विशेषणम्। विशेष्यं चाश्रयतयोपमेयम्। क्यजर्थाचारश्चानुरूपक्रियादिरिति दिक्।

तत्रेवादीनां द्योतकत्वमेव न वाचकत्वम्। निपातत्वादुपसर्गवत्। द्योतकत्वं च स्वसमभिव्याहृतपदान्तरेण शक्त्या लक्षणया वा तादृशार्थबोधने तात्पर्यग्राहकत्वेनोपयोगित्वमिति वैयाकरणाः। उपसर्गणां द्योतकत्वमात्र-

मर्मप्रकाशः

धर्मरूपत्वे आह—अभेदेति। विशेष्यमिति। अस्य चेत्यादिः। तत्र सादृश्ये। ननु न द्योतकत्वं साध्यम्। अनर्थकनिपातेषु निपातत्ववत्सु द्योतकत्वाभावेन व्यभिचारात्। अत एव द्योत्यं साध्यमाह—न वाचकत्वमिति। तथा च वाचकत्वाभावे साध्ये नोक्तव्यभिचार इति भावः। नानार्थभिन्नस्थले शक्त्या बोधने तात्पर्यग्राहकानपेक्षणादाह—लक्षणयेति।

मधुसूदनी

धर्मवान् समादिपदानामर्थः। परन्तु अरविन्दादीनां निरूपितत्वसम्बन्धेन तदैकदेशे समानधर्मेऽन्वयः। क्यङर्थाचारो धर्ममात्रमर्थात् सामान्यतो धर्मो ननु विशेषतः स्नेहपालनादिः प्रकृतार्थानुरूपक्रियादिः। आदिपदार्थः गुणः।

तत्रेवादीनामिति। तत्र सादृश्ये। इवादीनां द्योतकत्वमेव न वाचकत्वमित्यत्र एवकारोऽन्ययोगव्यवच्छेदार्थः। यथा धनुर्धरः पार्थ एव न भीमसेनस्तथा इवादिः सादृश्यस्य द्योतक एव न वाचकः। एवं पण्डितराजस्य तथा काव्यप्रकाशकारादेश्च इवादिरुपमाद्योतकः इति स्वीकृत्यापि व्यवहारस्तु वाचकलुप्ता उपमेत्येव तत्कथं न द्योतकलुप्तेत्यपि व्यवहर्तुं च शक्यमेवेति। अन्यच्चास्मिन् प्रसंगे नागेशमहाशयाः। ननु अनर्थकनिपातेषु निपातत्ववत्सु द्योतकत्वाभावेन व्यभिचारात् न द्योतकत्वं साध्यमपि तु द्योत्यं साध्यमिति प्राहुस्तत्किमर्थम्। यतो हि भवद्भिरेव तत्रेवादीनाभित्यत्र तत्रेत्यस्य सादृश्ये इति व्याख्या कृता। ततश्च सादृश्यविषये इवादीनां कथां बोधयितुं ग्रन्थकारः प्रवृत्तो न तु निपातत्वेन यावन्निपातानातामिति।

उपसर्गाणां द्योतकत्वमावश्यकमिति। एतद्रहस्यम्। दीपादयो द्योतकाः स्वाव्यवहितप्रदेशे यत्र कुत्र स्थितान्, यान् कानपि, कीदृशेनापि सम्बन्धेन रहितान्

वालक्रीड़ा

उस सादृश्य के इवादि द्योतक ही हैं। वाचक नहीं हैं। इसमें हेतु एवं दृष्टान्त बतलाते हैं कि निपात होने के कारण। उपसर्गों की तरह। वैयाकरणों के अनुसार द्योतकत्व की परिभाषा को बतलाते हैं। स्व माने निपात पद उसके समीप में उच्चारण किये गये दूसरे पद से शक्ति या लक्षणा के द्वारा सादृश्यादि अर्थ के बोधन में जिनका तात्पर्य ग्राहक के रूप में उपयोग किया जाता हो वे इवादि द्योतक हैं।

उपसर्गों को द्योतक ही मानना आवश्यक है। अन्यथा यदि उपसर्गों को द्योतत नहीं मानेंगे तो उपास्यते गुरुः अनुभूयते सुखम् इत्यादि स्थलों में गुरु एवं सुख आदि का लट् प्रत्यय से अभिधान कथन नहीं होगा। क्योंकि धात्वर्थ कर्मता का वहाँ अभाव है। यहाँ

श्यकम् । अन्यथा उपास्यते गुरुः, अनुभूयते सुखम्, इत्यादौ गुर्वादेर्लेनाभि-
धानं न स्यात् । धात्वर्थकर्मताविरहात् । इवादीनां तु वाचकत्वम् । बाधका-

### मधुसूदनी

पूर्वसिद्धान् पदार्थान् प्रकाशयन्ति । अतएव अर्थनिरपेक्षाः सन्तो दीपादयो द्योतका मताः । शब्दास्तु अन्वयव्यतिरेकाभ्यां संकेत सहाया एव न तु अगृहीकसंकेताः स्वीयान् अर्थान् प्रकाशयन्तीति अर्थसापेक्षा एव न तु अर्थनिरपेक्षाः । अतोऽर्थ-सापेक्षाणामत एव ससम्बन्धिना मिवादिशब्दानां वाचकत्वमेव । अर्थसापेक्षत्वासा-पेक्षत्वनियमरहितानांमुपसर्गाणां द्योतकत्वमिति स्थितिः ।

अन्यथेति । उपसर्गाणां द्योतकताया अभावेऽर्थात् वाचकत्वे लेन लकारेण गुर्वादेः कर्मणोऽभिधानं न स्यात् । यतो हि उपास्यते इत्यत्र उपस्योसर्गस्य सेवनमर्थः । धातुः "आस्" उपवेशनार्थक एव । एवमनुभूयते इत्यत्रापि अनोरुपसर्गस्य उप-भोगोऽर्थः । भूधातुः सत्तामात्रार्थक एव । ततश्च तयोर्धात्वोरकर्मकतया कर्मणि लट् प्रत्ययो दुर्लभः स्यात् । प्रत्ययाभावे को गुरुसुखयोः गतायाः कर्मताया अभिधायकः स्यात् । उपास्यते गुरुः अनुभूयते सुखमित्यादि प्रयोगानापत्तिश्चेति उपसर्गाणां द्योतकत्वमावश्यकम् ।

बाधकाभावादिति । इवादीनामुपसर्गवत्स्थितेरभावात्प्रयोगानापत्तिरूप बाध-

### बालक्रीड़ा

का भाव यह है कि "उपास्यते" में आस् धातु का अर्थ है बैठना और अनुभूयते में भूधातु का अर्थ सत्ता है। इन अर्थों में वे दोनों धातु अकर्मक हैं। ऐसी स्थिति में इन से कर्म में लट् प्रत्यय होना ही दुर्लभ है। तब कर्म का अभिधान लकार से कैसे होगा। हाँ उपासना एवं अनुभव अर्थ में ये सकर्मक होती हैं किन्तु जब उपसर्ग उप एवं अनु के ही उक्त अर्थ मान लेते हैं तब धातुओं के वे अर्थ नहीं है। इस तरह उपसर्गों को वाचक मानने में यह दोष है। हाँ यदि उपसर्गों को द्योतक मानते हैं तब उपासना और अनुभव अर्थ धातुओं के ही हैं उपसर्ग तो तात्पर्य के ग्राहक हैं। ऐसी स्थिति में सकर्मक हुई आस् एवं भूधातु से कर्म में लकार सुलभ होगा। तब वह लकार गुरु एवं सुख रूप कर्मो का अभिधान करेगा। और अभिहित कर्म में प्रथमा विभक्ति भी साधु होगी। इसी तरह अनभूयते में अनुभव करना उपभोग करना भ् धातु का अर्थ नहीं है। वह अर्थ अनु उपसर्ग का है। लट् प्रत्यय होता है धातु से न कि उपसर्ग से। इवर सत्ता अर्थ में वह धातु अकर्मक है। अतः भू धातु से कर्म में लट् प्रत्यय होना दुर्लभ है। फलतः अकर्मक भूधातु से विहित लट् प्रत्यय सुख रूप कर्म का अभिवान कैसे करेगा। इत्यादि पूर्ववत् है।

इवादिकों को तो वाचक मानना ही पड़ेगा। इसमें कोई बाधक नहीं है। उपसर्गों की तरह धात्वर्थ कर्मताद्यनुपपत्ति वगैरह नहीं है। पहले कहे हुए अनुमान (इवादीनां, न वाचकत्वं; निपातत्वात्, उपसर्गवत्) में दिया हुआ हेतु अप्रयोजक है अतः साधक नहीं है। अस्तु इवादिषु निपातत्वम्; मास्तु तेषु वाचकत्वाभावः इस तरह की यदि व्यभिचारोद्भावक

**भावात्। प्रागुक्तहेतुस्त्वप्रयोजकत्वान्न साधकः। अन्यथा अव्ययत्वादिति हेतुना अव्ययमात्रस्यैव द्योतकतापत्तिरिति नैयायिकाः।**

### मर्मप्रकाशः

लेन लकारेण। अप्रयोजकत्वादिति। 'साक्षात्क्रियते दयिता' इत्यादौ लेन दयितादेरभिधानसिद्धये निपातत्वे द्योतकतावच्छेदकता कल्प्यत इति चिन्त्यमेतत् द्योतकतापत्तिरिति। न चेष्टापत्तिः। स्वरादीनां स्वातन्त्र्येण प्रयोगानापत्तेरितिभावः।

### मधुसूदनी

कस्य अभाव एव। प्रागुक्तेति। प्राक् इवादीनां वाचकत्वानुमाने उक्तो हेतुर्निपातत्वादिति तु अप्रयोजकत्वात् इवादीनां वाचकत्वस्य न साधकः। व्यभिचारोद्भावकशंकाया उत्थाने तस्या निवर्त्तकस्यानुकूलतर्कस्य अभावात्।

इदं तु बोध्यम्। केचन निपाता उपसर्गाश्च वाचकाः १, द्योतकाः २, सहाभिधायकाः ३, विशेषकाः ४, कार्यार्थाः ५, निरर्थकाश्च ६, इति षड्विधाः। यतः पदार्थानां तिलतण्डुलवत् १ नीरक्षीरवत् २ पांसूदकवत् ३ यदविभागरूपेणावास्थानं भवनं स एकार्थीभावः। नान्विताभिधानं नाभिहितान्वयः। पदानां संहत्य कारिता। परस्परापेक्षीणि पदानि पदार्था इव संहत्य कार्यं कुर्वन्तीति मतम्। एवमेव अकांक्षादिमतां पदार्थानामपि व्यवस्था।

अन्यथा प्रागुक्त हेतोरप्रयोजकत्वास्वीकारे।

नैयायिका इति। प्रादीनामुपसर्गाणां द्योतकत्वं चेवादीनां निपातानां वाचकत्वं नैयायिका मन्वते। वैयाकरणास्तु निपातानामुभयविधत्वं—निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः। आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः। वा २।१९४। इति वाक्यपदीयकारिकायां स्वीचक्रुः। पुनस्तत्रैव के निपाता द्योतका इत्याकांक्षायामाह—चादयोऽत्र प्रयुज्यन्ते पदत्वे सति केवलाः। प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते। इति इवादस्तु निपाता वाचका अपि।

निपातानां वाचकत्वमन्वव्यतिरेकयोरिति वै० भू० निपातनिरूपणे।

### बालक्रीड़ा

शंका उठ जायगी तो उस शंका का निवर्त्तक अगर निपातत्व हेतुक इवादिकों में वाचकत्वाभाव नहीं मानेंगे तो निपातों में द्योतकत्व नहीं रहेगा ऐसा अनुकूल तर्क नहीं है। अन्यथा (अप्रयोकत्वान्न साधकः) इवादि वाचक हैं ऐसा नहीं मानेंगे तो अव्ययत्व हेतु को बनाकर अव्ययमात्र को द्योतक मानना पड़ेगा। अगर कहें कि सभी अव्यय द्योतक हो जांय अच्छी बात है यह ठीक नहीं है। क्योंकि ऐसा मानने पर प्रादिकी तरह स्वरादिकों का भी परतन्त्र ही प्रयोग होगा स्वतंत्र रूप से प्रयोग न हो सकेगा : अतः इवादि में वाचकता है। इतना समझना अवश्य है कि उपसर्ग एवं निपातों के विषय में छ सिद्धान्त हैं। कुछ वे द्योतक हैं या वाचक हैं या सहाभिधायक हैं या विशेषक हैं या कार्यार्थक हैं या निरर्थक हैं।

**अथास्याश्चमत्कारस्यापर्षकं यावत्तत्सर्वमपि दोषः कविसमयप्रसिद्धिराहित्यम्। उपमानोपमेययोर्जात्या प्रमाणेन लिङ्गसंख्याभ्यां चाननुरूप्यम्। बिम्बप्रतिबिम्बभावे धर्माणामुपमानोपमेयगतानां न्यूनाधिक्यम्। अनुगामितायामनुपपद्यमानकालपुरुषविध्याद्यर्थकत्वम्, एवमादि।**

### मर्मप्रकाशः

अस्याः प्रकृतोपमायाः। समयः संकेतः। आननुरूप्यमिति। नञ्समासोत्तरं भावप्रत्ययः। कालो भूतादिः। पुरुषः प्रथमादिः। प्रफुल्लेति।

### मधुसूदनी

अथेति आनन्तर्यार्थकः आरम्भार्थकश्चेति। ततश्च उपमायाः सकलभेदसहिताया निरूपणानन्तरं तदीयान् दोषान् समाहर्तुमारभते अस्या इति। अस्या उपमाया वामनाचार्येण हीनत्वम् १ अधिकत्वम् २ लिङ्गभेदः ३ वचनभेदः ४ असादृश्यम् ५ असंभवः ६ इति षड् दोषा निर्दिष्टाः हीनत्वाधिकत्वलिंकवचनभेदा सादृश्यासम्भवास्तद्दोषा इति सूत्रेण। तत्र पण्डितराजः त्रीन् पूर्वान् पृथक् पृथक् कथयति।

उत्तरौ द्वौ दोषौ च कविसमयप्रसिद्धिराहित्यमिति तं सूत्रेण कथयति। ततश्च चमत्कारस्यापकर्षकास्ते ये तमपकर्षयन्त्येव न विनाशयन्ति इत्येकम्। तथा ये नापकर्षयन्ति किन्तु विनाशयन्त्येव इति द्वितीयं, तदुत्पत्तिमेव विघ्नन्ति इति तृतीयं दोषाणां लक्षणं भवति। तत्र हीनत्वाधिकत्वदोषावपकर्षयतः, लिङ्गभेदवचनभेदौ विनाशयतः, असादृश्यासंभवौ तु विघ्नं कुरुतः। एवं हि लक्षणत्रयं दोषाणां स्यात् किन्तु सर्वे दोषा अपकर्षकत्वेन समाहृता इति बोध्यम्।

कवीनां समयः आचारः सिद्धान्तश्च ताभ्यां या वर्ण्य वस्तुनः प्रसिद्धिस्तद्राहित्यमभावः। तदेतदुक्तम्=अप्रतीतगुणं सादृश्यमसादृश्यम्। अप्रतीतत्वं प्रसिद्धिराहित्यं तच्च तेषामाचाराभावात्। जात्या अनेकसमवेतधर्मेण, गुणेन क्रियया च आनुरूप्यं हीनत्वमधिकत्वं च। प्रमाणेन अणु महद् दीर्घं ह्रस्वञ्चेति परिमाणेन, प्रत्यक्षादिना प्रमितिकरणभूतेन। हीनत्वाधिकत्वे जातिप्रमाणधर्मे न्यूनत्वमुपमानस्य

### बालक्रीड़ा

क्योंकि पदार्थों का तिलतण्डुलवत् या नीरक्षीरवत् या पांसूदकवत् जो अविभक्त होकर रहना है वह एकार्थीभाव है। न अन्विताभिधान है और न अभिहितान्वय ही है। इसी तरह पदार्थो की तरह पदों में संहत्य कारिता है। क्योंकि परस्परापेक्ष पद मिल कर ही अर्थो के उपस्थापक होते हैं।

इसके अनन्तर अब इस विस्तार से कही हुई उपमा के चमत्कार का अपकर्ष करने वाले जो भी हैं वे सब दोष हैं। जैसे कवियों के जो समय हैं संकेत हैं सिद्धान्त हैं। उनका अभाव। उपमान एवं उपमेय में जाति, प्रमाण, लिंग एवं संख्या की अननुरूपता अयोग्यता,

क्रमेण यथा—

'प्रफुल्लकह्लारनिभा मुखश्री रदच्छदः कुङ्कुमरम्यरागः ।
नितान्तशुद्धा तव तन्वि ? वाणी विभाति कर्पूरपरम्परेव ॥'

'मुनिः श्ववदयं भाति सततं पर्यटन्महीम् ।
विनिवृत्तक्रियाजातः श्वापि लोके शुकायते ॥'

मर्मप्रकाशः

अत्र कह्लारमुखयोः केसरौष्ठयोः कर्पूरवाण्योश्च तत्त्वं तत्संकेताप्रसिद्धम् । कह्लारः पुष्पविशेषः । रदानां दन्तानां छदोऽपवारकः पल्लवः ओष्ठ इति यावत् । विनीति । विशेषेण निवृत्तक्रियासमूहः । अत्र श्वमुन्योः शुकशुनोश्च जात्याऽननुरूप्यम् । सुपचेलिमं अत्यन्तपक्वम् ।

मधुसूदनी

हीनत्वम् । तेनाधिकत्वं व्याख्यातमिति । लिंगसंख्याभ्यामाननुरूप्यं लिंगभेदो वचनभेदश्च उपमानोपमेययोर्लिंगव्यत्यासो लिंगभेदो वचनभेदो व्याख्यातः । कालो वर्त्तमानादिः पुरुषः प्रथममध्यमोत्तमरूपः । विध्याध्यर्था निमंत्रणामंत्रणादयः । तदर्थानामनुपपत्तिरसम्भवः । उपपत्तिः सिद्धान्तसमन्वयः । तद्राहित्येऽसम्भव एव ।

क्रमेण यथोद्दिष्टमनुद्देशन । प्रफुल्लेनेति । कर्पूरपम्परा कर्पूरसमूहः स्वभावतः स्वरूपतः शुक्लो, वाणी तु व्याकरणलक्षणाननुगमह्रपदोषरहितत्वे सति तदनुगमरूप गुणसहिता शुद्धेति व्यपदिश्यते । इति कवीनामाचारे प्रसिद्धिर्नास्ति ।

मुनिरिति । अत्र श्वमुन्योः सादृश्ये जातिगतन्यूनता । निरन्तरं महीकर्मकपर्यटनकर्तृत्वं साधारणो धर्मः । विनिवृत्तं त्यक्तं क्रियाजातं कर्मकलापो येन सः । शुकायते शुकमुनिरिवाचरति । अत्र परस्परोपमा । उपमेयोपमा नास्ति एकधर्माभावात् । धर्मभेदे सा नहि भवति ।

बालक्रीड़ा

उपमान एवं उपमेय में बिम्ब प्रतिबिम्ब भाव से रहने वाले धर्मों में न्यूनता या अधिकता और अनुगामी धर्मों में काल, (भूत भविष्यत वर्तमान) पुरुष (प्रथम मध्यम उत्तम) एवं विध्यादि अर्थों की उपपत्ति न होना इत्यादि । क्रम से इनके उदाहरण ये हैं ।

हे तन्वि ? तुम्हारे मुख की शोभा खिले हुए रक्त कमल की तरह । तुम्हारे ओष्ठ कुंकुम की तरह सुन्दर लाल और तुम्हारी वाणी जो कि नितान्त निर्मल है वह कर्पूर पंक्ति की तरह शोभायमान है । यहाँ कल्हार एवं मुख का, केसर एवं ओष्ठ का, कर्पूर और वाणी का सादृश्य कवि समय में अप्रसिद्ध है यह नागेश जी का लेख है । किन्तु मुख के साथ कमल की उपमा दी ही जाती है । केसर के साथ ओष्ठ की उपमा यहाँ नहीं की गई है । यहां तो ओष्ठों की लाली केसर के सदृश बतलाई है जो कि ठीक ही है । और निर्मलताहेतुक कर्पूर और वाणी का सादृश्य भले ही प्रसिद्ध न हो किन्तु औचित्य पूर्ण है दोष नहीं है ।

निरन्तर पृथ्वी पर घूमता हुआ मुनि कुत्ते की तरह मालूम पड़ता है । यहां जात-पांत की अननुरूपता है । इसी तरह कुत्ता भी शुकदेव जी की तरह है इसमें भी वही दोष है ।

'सरसि प्लवदाभाति जम्बीरं सुपचेलिमम् ।
आदिकारणतोयौघ इव ब्रह्माण्डमण्डलम् ॥'

एतस्यैव किंचित्पदव्यत्यासे ब्रह्माण्डस्योपमेयतायां चायमेव दोषः ।

'द्राक्षेव मधुरं वाक्यं चरितं कौमुदी यथा ।
सदैवार्द्राणि चेतांसि सुधेव सुमहात्मनाम् ॥'

### मर्मप्रकाशः

आदिकारणेति । 'अप एव ससर्जादौ तासु बीजमवासृजत्' इति श्रुतेस्तत्त्वमिति भावः । अत्र प्रमाणत आननुरूप्यम् । तयोरत्यन्तवैलक्षण्यात् । एतत्पोषकमपि सुपचेलिममिति विशेषणम् । पक्वस्यात्यन्तसूक्ष्मत्वात् । किंचित्पदेति । इवप्लवत्पदयोरित्यर्थः । 'सरसीव समाभाति प्लवद्ब्रह्माण्डमण्डलम्' इति यावद् । अयमेव प्रमाणतोऽननुरूपपताख्य एव । द्राक्षेति । अत्र

### मधुसूदनी

सरसीति । अपकं फलं भारि (भारवत्) भवति तदेव पकं सत् लघु भवति अत एव सरसि प्लवत् सन्तरत् । इत्युक्तम् । किञ्चित्पदानां केषांचित्पदानां व्यत्यासे परिवर्तने । सरसीति एकवचनस्य स्थाने बहुवचनं तोयौघस्य समन्वयार्थं "सरःसु इति । प्लवदिति ब्रह्माण्डविशेषणं, इवेति च जम्बीरविशेषणं क्रियते तद्यथा—

आदिकारणतोयौघे प्लवद् ब्रह्माण्डमण्डलम्
सरस्विव समाभाति जम्बीरं सुपचेलिमम् ।
तदापि अयमेव प्रमाणन्यूनत्वाख्यो दोषः
द्राक्षेति । अत्र स्त्रीलिंगनपुंसकलिंगयोर्भेदः ।

### बालक्रीड़ा

पूर्ण पका हुआ जम्वीर निम्बू तालाव में तैरता हुआ ऐसा मालूम पड़ता है जैसे विश्व के आदि हेतु जल में ब्रह्माण्डमण्डल तैरता हो । यहाँ प्रमाण में अननुरूपता है ।

इसी पद्य के प्लवत् और इवपदों को उल्टा कर अर्थात् पूर्वार्द्ध पद को उत्तरार्द्ध में उत्तरार्द्धस्थको पूर्वार्द्ध में रखकर और ब्रह्माण्ड को उपमेय बना दिया जाय तव भी यही प्रमाणाननुरूप्य दोष है ।

महात्माओं के वाक्य द्राक्षा की तरह मधुर हैं । उनका चरित कौमुदी की तरह सुखद है । और चित्त सुधा की तरह सदा आर्द्र ही होते हैं । यहां पूर्वार्ध में वाक्य एवं चरित उपमेय नपुंसक लिंग वाले हैं और द्राक्षा एवं कौमुदी उपमान स्त्रीलिंग है । उत्तरार्ध चेतांसि नपुंसक एवं बहुवचन उपमेय है । और सुधा स्त्रीलिंग एवं एकवचन है अतः लिंग एवं वचन गत दोष है :

'वामाकल्पितवामाङ्गो भासते भाललोचनः ।
शम्पया संपरिष्वक्तो जीमूत इव शारदः ॥'

अत्र जीमूतगतो भालस्थलोचनप्रतिविम्बो नोपात्त इति न्यूनत्वम् । 'भगवान्भवः' इति कृते तु बिम्बस्यैवाभावान्न प्रतिबिम्बापेक्षेति साधुः ।

'विष्णुवक्षःस्थितो भाति नितरां कौस्तुभो मणिः ।
अङ्गारक इवानेकतारके गगनाङ्गणे ॥'

अत्र तारकाणां बिम्बाभावादाधिक्यम् । 'विष्णोर्वक्षसि मुक्तालिभासुरे

### मर्मप्रकाशः

पूर्वार्धं लिङ्गोदाहणम् । उत्तरार्धं लिङ्गसंख्योदाहरणम् । वामेति । वामया पार्वत्या कल्पितं स्वीकृतं वामाङ्गं यस्य सः । शम्पया विद्युल्लतया । जीमूतो मेघः । राजराजस्य कुबेरस्य ।

### मधुसूदनी

वामेति । "नमो वामार्द्धजानये", "अर्द्धांगीकृतदाम्पत्यमपि" इत्यादिप्रयोगदर्शात् वामे अर्धे आकल्पितानि । वामाकल्पितानि । वामाया अंगानि वामांगानि । वामाकल्पितानि वामांगानि येन सः । शम्पया विद्युता धर्मन्यूनताया उदाहरणमेतत् ।

### बालक्रीड़ा

जिसके वाम भाग में पार्वती हैं वह भालस्थ लोचन वाले शंभु विजली से संपरिष्वक्त शारदीय मेघ की तरह भासित हो रहे हं ।

यहाँ उपमेय शंभु में पार्वती और उपमान जीभूत में विद्युत् का विम्व प्रतिविम्व भाव से उपन्यास है । किन्तु उपमेय के भाल में लोचन बिम्बभूत उपात्त है किन्तु उपमान जीमूत में उसका प्रतिबिम्व उपात्त नहीं है यह न्यूनता है । अगर भाल लोचन की जगह पर "भगवान् भवः" पद का उपन्यास कर दें तो विम्ब के अभाव में प्रतिविम्व की अपेक्षा नहीं होने पर न्यूनता दोष नहीं होगा ।

अनेक ताराओं से युक्त गगनाङ्गण में अंगारक भौम की तरह विष्णु के वक्षः स्थल में कौस्तुभ मणि अत्यन्त शोभायमान है ।

यहाँ उपमान मंगल के पक्ष में विशेषण के रूप में तारका प्रतिविम्ब भूत है किन्तु उपमेय कौस्तुभमणि के विशेषण के रूप में विम्बभूत कोई पदार्थ नहीं है । अतः उपमान में अधिकता है । यहाँ यदि "विष्णोर्वक्षसि मुक्तालि भासुरे भाति कौस्तुभः" कर देते हैं तब उक्त दोष नहीं है । इस पाठ में कौस्तुभ का विशेषण वक्षस्थल है और अंगारक का विशेषण गगनांगण है । इन विशेषणों के विशेषण हैं क्रमशः मुक्तालि एवं अनेकतारक । अतः विशेषणों के विशेषणों में बिम्वप्रतिबिम्व भाव होने से विशेषणों में भी बिम्वप्रतिबिम्व भाव है और उसी के कारण उपमालंकार है ।

भाति कौस्तुभः' इत्यर्थे तु न दोषः। अत्र विशेषणविशेषणयोर्मुक्तालितारका-गणयोर्बिम्बप्रतिबिम्बभावेन वक्षोगगनाङ्गणयोर्विशेषणयोर्बिम्बप्रतिबिम्बभावः। तन्मूला चोपमा।

'रराज राजराजस्य राजहंसः करस्थितः।
हस्तनक्षत्रसंसक्त इव पूर्णो निशाकरः ॥'

अत्र रराजेति प्रतिपाद्ये भूतकालावच्छिन्नक्रियाविशेषे राजहंसस्यान्वय इव न निशाकरस्येत्यनुपपद्यमानकालघटितत्वं धर्मस्य।

यथा वा—शम्बरवैरिण इति क्वचित्पाठः।

'रणाङ्गणे रावणवैरिणो विभोः शराः समन्ताद्वलिता विरेजिरे।
निदाघमध्यंदिनवर्तिनोऽम्बरे सहस्रभानोः प्रखराः करा इव ॥'

मर्मप्रकाश

न निशाकरस्येति। तदीयक्रियाविशेषस्य वर्तमानत्वात्। निशाकरस्याकल्पस्थायित्वात्। एवमग्रेऽपि बोध्यम्। धर्मस्य क्रियाविशेषस्य। अस्यैवोदाहरणान्तरमाह—यथा वेति। एव-

मधुसूदनी

विशेषणविशेषणयोरित्यत्रेयं स्थितिः। वक्षो विशेष्यं तत्र भासुरत्वं विशेषणं, [तच्च भासुरत्वं मुक्तानां मौक्तिकानामलिभिः श्रेणीभिर्भवनीयमिति मुक्तालिहेतुकत्व-विशिष्टम्। एवञ्च हेतुविधया] भासुरत्वे च मुक्तालिर्विशेषणम्। गगनाङ्गणं विशेष्यम्। तत्र अनेकास्तारका यस्मिन्निति बहुव्रीहिसमासरीत्या अनेकतारकयुक्तत्वं विशेषणं, तत्र युक्तत्वे च अनेकतारका इति विशेषणम्। अनेतारका तारागण इत्य-नर्थान्तरम्। एवञ्च विशेष्ययोर्वक्षोगगनाङ्गणयोर्विशेषणे भासुरत्वयुक्तत्वे, तयोर्वि-शेषणयोर्भासुरत्वयुक्तत्वयोर्मध्ये विशेषणविशेषणयोर्मुक्तालितारागणयो विम्बप्रतिबिम्ब भावेन बिम्बप्रतिबिम्बभावः। वस्तुतस्तु बिम्बप्रतिबिम्बभावकरम्बितो वस्तुप्रतिवस्तु-भावः। यतो हि अनेकारताका यस्मिन्नित्युक्त्या गगनांगणे तारकगणसद्भावप्रदर्श-नेन ताभिस्तस्य भासुरत्वं व्यज्यते वाच्यव्यंग्ययोर्भासुरत्वयोरेकरूपत्वाद् वस्तुप्रति-वस्तुभाव एव। रणांगणे इति। वलिताश्चलिताः। प्रखरास्तीक्ष्णाः।

बालक्रीड़ा

हस्त नक्षत्र से संयुक्त पूर्णिमाचन्द्र की तरह राज-राज कुवेर के करमें बैठा हुआ राजहंस शोभायमान हुआ। यहाँ रराज से भूतकालिक विशेष क्रिया प्रतिपाद्य है इसमें राजहंसका अन्वय ठीक है किन्तु चन्द्रमा जो आकल्प स्थायी होने से तीनों कालों में वर्तमान है उसका अन्वय ठीक नहीं है अतः रराज यह साधारण धर्म नहीं हो पाया। क्योंकि रराज यह पद अनुपपद्यमान परस्परविरुद्ध भूत वर्त्तमान काल से घटित है।

रणाङ्गण में रावण के वैरी विभु रामचन्द्र जी के शर चारों तरफ में ऐसे शोभाय-मान थे जैसे आकाश में निदाघ (ग्रीष्म) सम्वन्धी मध्याह्नकालीन सूर्य के प्रखर किरण।

यथा—

'आगतः पतिरितीरितं जनैः शृण्वती चकितमेत्य देहलीम् ।
कौमुदीव शिशिरीकरिष्यते लोचने मम कदा मृगेक्षणा ॥'

अत्र शृण्वतीति शत्रा प्रत्यायितेन श्रमणसमकालमेव प्रियया देहल्यागमनमित्यर्थेनातिशयोक्त्यात्मा गमितस्त्वरातिशयस्तद्गतमौत्सुक्या-

### मर्मप्रकाशः

मग्रेऽपि । विभोः श्रीरामस्य । वलितास्तीक्ष्णाः । ईरितमिति । वच इति शेषः । तद्गतं नायिकागतम् । तत्परिपोषितं नायिकागतौत्सुक्यातिशयपोषितम् । औत्सुक्यमिति ।

### मधुसूदनी

आगत इति । तद्गतं नायिकागतम् । तत्परिपोषितं नायिकागतौत्सुक्याति-शयपरिपोषितम् । चकितं यथा स्यात्तथा एत्येत्येवं यद् गमनक्रियाविशेषणं भवदपि विचार्यमाणं विचारणया पुनः चकितत्वं नाम त्रासो नेत्राभ्यामेव चकितनेत्रेति प्रसिद्धेर्व्यज्यते मुखप्रसादमालिन्याभ्यां हर्षशोकाविव । सत्यपि हर्षादीनां त्रयाणां

### बालक्रीड़ा

यहां अब भी मध्याह्नकाल में सूर्य के किरण प्रखर हैं किन्तु रामजी के शर ही अब जब नहीं है तब वे अब प्रखर कैसे होंगे । अतः काल भेद है । सायंकाल में या दूसरे किसी दिन प्रातः काल में कोई भी यह कह सकता है कि सूर्य के किरण प्रखर थे उस अवस्था में भूतकालिक क्रिया का समन्वय हो सकता है । अतः यथा वा से दूसरा उदाहरण देते हैं ।

पति आगये हैं ऐसा सुनते ही मृगेक्षणा चकित हुई देहली पर आई । और भावना कर रही है कि कब वे मेरे लोचनों को कौमुदी की तरह शीतल करेंगे ।

किन्तु पति का विरह जैसे दुःखदायी था उसी तरह पतिके विरह दशा में कौमुदी भी तो दुःखदायी थी वह शिशिर कहाँ थी अतः अब जैसे पति आयेंगे तब शिशिर करेंगे उसी तरह उनके आने पर विरह हटेगा, संयोग होगा तब कौमुदी भी शिशिर करेगी । इस तरह साधारणधर्म बन जाता है कोई दोष नहीं है ।

यहां शृण्वती इस शतृप्रत्यय से प्रतीत होता है कि सुनते ही प्रिया देहली पर आगई । यह अर्थ अतिशयोक्ति रूप है । क्योंकि सुनने के बाद प्रिया का आगमन होगा । सुनना कारण है आगमन कार्य है । और कारण और कार्य में पूर्वापरीभाव होता है । किन्तु यहां दोनों एक ही काल में हो गये हैं अतः उनमें विपर्यय है । यह विपर्यय अतिशयोक्ति का स्वरूप है । अस्तु ।

उस अतिशयोत्क्यात्मक अर्थ से नायिका की जल्द बाजी व्यक्त होती है । उससे मालूम पड़ता है कि नायिका अत्यन्त उत्सुक है यह स्थिति नायिका की है । किन्तु कौमुदी की उपमा प्रिय की उत्सुकता को बतला रही है । जो उत्सुकता "नायिका प्रतीक्षा करती होगी बहुत दिन बाहर रह गये जल्दी चलना चाहिए" इत्यादि विचारों से अत्यन्त उद्वेलित

तिशयं पुष्णाति। कौमुद्युपमा तु तत्परिपोषितं प्रधानीभूतं प्रियगतमौत्सुक्यम्। चकितमित्यागमनविशेषणमपि वस्तुतो विचार्यमाणमीक्षणविशेषणीभवत्तस्यैवानुकूलम् इति स्थिते भविष्यत्कालावच्छिन्नशिशिरीकरणस्य साधारणधर्मस्योपमेयान्वितत्वमिव नोपमानान्वितत्वम्।

'एतावति महीपालमण्डलेऽवनिमण्डन ?
तारकापरिषन्मध्ये राजन्राजेव राजसे॥'

### मर्मप्रकाशः

पुष्णातीत्यस्यानुषङ्गः। तस्यैवेक्षणस्यैव। नोपमानान्वितत्वमिति। तथा चानुपपद्यमानकालार्थकत्वं सर्वत्र बोध्यम्। एषु सर्वेषु भूतभविष्यतत्तत्पदार्थानामेवोपमानीकरणेनान्वयस्य संभवोऽस्त्येवेति चिन्त्यान्येतान्युदाहरणानि। 'त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव' इत्यादि तूदाहर्तुमुचितम्। राजेव चन्द्र इव। नोपमानेति। तथा चानुप-

### मधुसूदनी

हृदयधर्मत्वे। इति चकितत्वमीक्षणे विशेषणम्। तस्यैव ईक्षणस्यैव। उपमेयमृगेक्षणायामन्वितत्वं न तूपमानकौमुद्यां संगतत्वम्।

### बालक्रीड़ा

हो रही है ( कौमुदी के लिए भी बहुत से लालायित रहते हैं और उसके बिना तड़पते हैं। उसके आने पर सुख का अनुभव भी करते है अतः शिशिरीकरिष्यमाणत्व बन जाता है इतना अंश उपमा का प्रयोजक हो सकता है कथञ्चित्। यह प्रिय की उत्सुकता यहां प्रधान है। क्योंकि प्रिय को उत्सुकता नही होगी तो वह शिशिर करने क्यों आयेगा। चकित का अर्थ संस्कृत के कोषों के अनुसार भीत होता है अतः डरी हुई आई यह अर्थ यहाँ होता है। किन्तु भय आखों से ही प्रतीत होता है अतः चकित यह विशेपण नेत्रों का होता है। विचार से संगत भी है। किन्तु हिन्दी भाषा में वे चकित हो गये अर्थात् आश्चर्यान्वित हो गये इस अर्थ में प्रयुक्त होता है अतः आने की कोई उम्मीद नहीं थी क्या सचमुच आगर्य कैसे आने का अवसर मिला इस तरह विकल्पों से आश्चर्य करती हुई आई। यह भी अर्थ संगत हो तो भावुक लोग समझें।

यहां भविष्यत्कालिक शिशिरी करणरूप साधारण धर्म जैसे आगमिष्यमाण पति उपमेय में अन्वित होता है उस तरह उपमान कौमुदी में अन्वित नहीं हो रहा है क्योंकि कौमुदी का आगमन हर महीने होता रहता है और पति का आगमन हर महीने नहीं होता रहता है किन्तु पति का आगमन तो उसी समय होगा। अतः कालभेद है।

हे अवनिमण्डन ? हे राजन् ? आप इतने विशाल महीपाल मण्डल में ऐसे शोभित हो रहे हैं जैसे ताराओं के समूह में चन्द्रमा। यहाँ राजते इस वर्तमान कालिक क्रिया की सबोध्य उपमेय राजा में जैसी संगति होती हैं वैसी संगति उपमान चन्द्रमा में नहीं। क्योंकि

अत्र क्रियायां संबोध्योपमेयान्वय इव नोपमानान्वयः ।

'राजेव संभृतं कोषं केदारमिव कर्षकः ।
भवन्तं त्रायतां नित्यं भयेभ्यो भगवान्भवः ॥'

अत्र प्रार्थ्यमानत्राणकर्तृत्वमुपमेये भव इवोपमानयो राजकर्षकयोर्नास्ति । तयोस्त्राणकर्तृत्वस्य सिद्धत्वात् । यदि तु त्रायत इति प्रार्थनानिर्मुक्तं त्राणकर्तृत्वमुच्यते तदा धर्मस्य साधारणत्वान्न दोषः । अथ त्रायत इति प्रार्थ्यमानतानिर्मुक्तेऽपि त्राणकर्तृत्वे न साधारणत्वम् । प्रार्थ्यमानताया

### मर्मप्रकाशः

पद्यमानपुरुषार्थकत्वमत्र बोध्यम् । विध्यादीत्यादिपदग्राह्यप्रार्थनोदाहरणमाह—राजेवेति । नास्तीति । विशेषणाभावप्रयुक्तविशिष्टाभावोऽत्र । तदाह—तयोरिति। त्रायते इतीति । लडन्तमिति भावः । लडन्तपक्षे शङ्कते—अथेति । विधेयतेति । उपमाननिष्ठे तत्रानुवाद्यत्वमुपमेयनिष्ठे तत्र विधेयत्वमिति भावः । प्रार्थ्यमानताया इवेत्यस्य प्रार्थ्यमानतातदभावयो-

### मधुसूदनी

प्रार्थनानिर्मुक्तमिति । नहि उपमानभूतौ राजकर्षकौ प्रार्थ्येते केनचित्, यद् युवां स्वकोषकेदारयोस्त्राणं कुरुतं, यतस्तयोस्तद्रागप्राप्तमत एव प्रार्थनानिर्मुक्तं शुद्धं त्राणकर्तृत्वम् । उपमेये भगवति भवे तु प्रार्थनाढ्यं तत् । ननूभयोः साधारण्याय त्रायतामित्यनुक्त्वा त्रायते इत्युच्यतामिति चेदाह अथेति । ननु तथासति कुतो

### बालक्रीडा

राजा अभी ही है चन्द्र तो तीनों कालों में रहता है । किन्तु यह ठीक नहीं है क्योंकि चन्द्रमा अमावस्या को नहीं रहता है एक बात है । चन्द्रमा दिन में नहीं रहता है यदि रहता है तो सुन्दर नहीं है और जिस समय रात्रि रहता है और सुन्दर है उसी काल में उपमा की जाती है अन्य में नहीं । अतः संगति है ।

राजा जैसे अपने संभृत कोष की भय चौर डाकुओं से रक्षा करता है और खेतिहर जैसे अपने लहलहाते खेतों की भय गाय भैंस आदि जन्तुओं से रक्षा करता है वैसे ही भगवान् शंभु आप की भयों से रक्षा करें ।

यहां जैसे भगवान् भव की त्राण करने के लिए प्रार्थना की गई है वैसे राजा एवं कर्षक से त्राण के लिए प्रार्थना नहीं की गई है । क्योंकि उनका रक्षा करना राग से प्राप्त है । यहाँ अगर (त्रायतां) प्रार्थना में लोट् प्रत्यय न करके वर्तमान में (त्रायते) लट् प्रत्यय करें । तब प्रार्थना निर्मुक्त त्राणकर्त्तृत्व धर्म तीनों राजा, कर्षक एवं भव में साधारण हो जायगा और कोई दोष नहीं होगा ।

अथ अब लट् प्रत्यय पक्ष में शंका करते हैं कि जैसे रक्षा की प्रार्थना करना और रक्षा की प्रार्थना नहीं करना भिन्न है उसी तरह उपमान राजा और कर्षक में रक्षा सिद्ध है अतएव

इव विधेयतानुवाद्यत्वयोर्भेदकत्वादिति चेत्। सत्यम्। इह हि धर्मलोपरहितायामुपमायां धर्मवाचकशब्दप्रतिपाद्यैः प्रार्थनाभूतभविष्यद्वर्तमानत्वादिभिर्विशेषणैर्विशिष्टधर्मस्योपमानोपमेयसाधारण्याभावेन प्रयोजकाभावान्नोपमानिष्पत्तिरिति निर्विवादम्। तत्र विधेयत्वानुवाद्यत्वाभ्यां शब्देनानिवे-

### मर्मप्रकाशः

रित्यर्थः। साधारण्याभावे सतीति शेषः। प्रयोजकेति। सादृश्यप्रयोजकसाधारणधर्माभावादित्यर्थः। तत्र तस्यामुपमायाम्। उदासीनैः शब्दाप्रतिपाद्यैः। प्रसिद्धोदाहरणेऽप्येव-

### मधुसूदनी

नेत्याह-प्रेति। प्रार्थनाढ्यं त्राणकर्त्तृत्वं, शुद्धं च सत्। एवं रीत्या यथा प्रार्थना त्राणकर्तृनिष्ठस्य त्राणस्य भेदिका तथा त्राणगतमुद्देश्यत्वं विधेयत्वमपि त्राणस्य भेदकम्। राजकर्षकयोस्त्राणस्य रागप्राप्तत्वादुद्देश्यत्वम्। भवे तु प्रार्थ्यमानत्वादत एवाप्राप्तत्वात् त्राणस्य विधेयत्वम्।

प्राप्ताप्राप्तविवेकेन यत्प्राप्तं तदुद्देश्यं, यदप्राप्तं तद्विधेयमिति सिद्धान्तात्। एवञ्च विधेयत्वानुस्यूतं त्राणं पृथगुद्देश्यत्वानुस्यूतं च पृथक्। उद्देश्यविधेयभावेन भेदान्न साधारण्यमिति चेत्सत्यम्। इति त्रायत इत्युच्यमानेऽपि। सत्यमिति अर्द्धांगीकारः। धर्मसद्भावायाम्। इह हि प्रार्थना, भूतत्वं, भविष्यत्वं, वर्त्तमानत्वम्। आदिपदात् प्रथमपुरुषत्वादीनि विशेषणानि। विशिष्टस्य धर्मस्य प्रार्थनाद्याढ्यत्राणकर्त्तृत्वादेरेकत्र सद्भावादुभयसाधारण्यं नास्ति। तथा सति प्रयोजकस्य उपमासाधकस्य साधारणधर्मस्याभावात्। विशिष्टो हि धर्मः कदाचिदुपमाने एव संगच्छते। कदाचिदुपमेये एव। एवं हि धर्मे साधारण्यस्याभाव एव। तत्र भेदकधर्मोपादानस्थलीयोपमायाम्। उद्देश्यत्वं विधेयत्वञ्च "उद्देश्यवचनं पूर्वं विधेयवचनं परमिति

### बालक्रीड़ा

उद्देश्य भूत वह है और उपमेय भगवान् भव में वह रक्षा साध्य है अतएव विधेय है इस उद्देश्य विधेय के कारण भी वह रक्षा भिन्न २ हो गई। कहते हैं कि सच है। हां ठीक है। अर्धस्वीकृति करते हैं। यहां प्रकृत में उपमा धर्मलोप रहिता अर्थात् धर्मयुक्ता है। धर्म भी विशिष्ट है। जैसे रक्षा धर्म है वह भी अपने को कहने वाले लोट, लङ लुङ, लिट्, लृट् लट् आदि शब्दों से प्रतिपाद्य विशेषणों प्रार्थना, भूतत्व, भविष्यत्व वर्तमानत्व और आदि पद ग्राह्य पुरुषगत प्रथमत्व मध्यमत्व उत्तमत्व से विशिष्ट है। विशिष्ट धर्म उपमान एवं उपमेय में साधारण नहीं हो सकता है। क्योंकि वे विशेषण कभी उपमान ही में संगत है कभी उपमेय ही में। फलतः शब्द प्रतिपाद्य विशेषणों से विशिष्ट धर्मस्थल में प्रयोजक के अभाव में उपमा की निष्पत्ति नहीं होती है यह निर्विवाद है।

किन्तु जो विशेषण; शब्दों से अनिवेदित हैं अर्थात् प्रतिपाद्य नहीं हैं उन शब्दानिवेदित विशेषणों से विशिष्ट धर्म की साधारणता नहीं हो पाती है तो मत होवे साधारणता।

दिताभ्यां विषयताभ्यां विशिष्टस्य धर्मस्य यदि नास्ति साधारण्यं मास्तु नाम। नह्युदासीनैर्विशेषणैर्विशिष्टस्य धर्मस्य साधारण्यमपेक्षितम्। अपि तु धर्मवाचकशब्दनिवेदितैः। एवं चन्द्रवत्सुन्दरं मुखमित्यत्रापि सुन्दरत्वस्योपमानेऽनुवाद्यत्वे उपमेये च विधेयत्वेऽपि न साधारण्यहानिः।

ननु

'नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः।
प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः॥'

मर्मप्रकाशः

मेवेत्याह—एवमिति। तथा च तत्कृतभेदेऽपि तस्यानपेक्षितस्य तत्त्वसत्त्वाल्लडन्तपाठे न दोष इत्युक्तं युक्तमेवेति भावः। प्रतीति। यमुनागभीरजलमध्ये प्रतिबिम्बितश्चन्द्र

मधुसूदनी

सिद्धान्तात् पूर्वोत्तरभावेन उद्देश्यविधेयभूतपदार्थयोः विन्यसनात् प्रतीतं भवति। प्रार्थनाभूतभविष्यद्भवद्वाचक लोट् लुङ् लिट् लट् लडादि प्रत्ययेभ्य इव विधेयत्वोद्देश्यत्ववाचकाभ्यां काभ्यामपि तयोर्निवेदनं नास्ति इति शब्देनानिवेदिताभ्यामित्युक्तम्। उदासीनैर्धर्मवाचकशब्दानिवेदितैः। विशेषणानां धर्मवाचकशब्दैर्निवेदन एव तद्विशिष्टधर्मस्योभयसाधारण्यलाभ इत्यभिमानः। एवं तादृशविशिष्टधर्मस्य साधारण्यापेक्षायाम्। प्रकृतेऽपि इति धर्मस्य त्राणस्य राजकर्षकनिष्ठतयोद्देश्यत्वकृतस्य भवनिष्ठतया विधेयत्वकृतस्य भेदस्य सत्वेऽपि तदनपेक्षणात्, अपेक्षितस्य विशिष्टधर्मस्य त्रायते पदेनोपस्थापितत्वाल्लडन्त पाठेऽपि न दोष इति भावः।

नीलाञ्चलेनेति। नीलेनाञ्चलेनावगुण्ठनेन संवृतमाच्छादितं हरिणनयनसदृशनयनाया आननम्, यमुनाया गंभीरस्य गह्वरतां प्राप्तस्य नीरस्यान्तः प्रतिबिम्बित-

बालक्रीडा

जैसे उद्देश्यत्व और विधेयत्व धर्म किसी शब्द से नहीं कहा जाता है वह तो उद्देश्यभूत पदार्थ का पूर्व में और विधेयभूत पदार्थ का उत्तर में विन्यास करन से ही प्रतीत होता है। अतः ऐसे उदासीन शब्दों से अप्रतिपाद्य विशेषणों से विशिष्ट धर्म का साधारणत्व अपेक्षित नहीं है। किन्तु शब्द प्रतिपाद्य विशेषणों से विशिष्ट धर्मों का ही साधारण्य अपेक्षित है।

इस प्रकार अरविन्दमिव सुन्दरं मुखम् इस वाक्य में सुन्दरत्व के उपमान में अनुवाद्य और उपमेय मुख में विधेय होने पर भी साधारण्य में जैसे कोई हानि नहीं है उसी तरह प्रकृत पद्य में भी त्राण के साधारण्य में कोई विवाद नहीं है।

नील अञ्चल अर्थात् नीलवसन के प्रान्त से ढंका हुआ हरिणनयना का आनन ऐसा शोभायमान हो रहा है जैसे यमुना के (गभीर) गहरे पानी के भीतर प्रतिबिम्बित हुआ चन्द्र।

यहां पण्डितराज विचार करते हैं कि एक उपमेय या तदंश पदार्थ बिम्ब मुख्य होता

इत्यत्रोपमाने चन्द्रे योगमर्यादया भासमान एणरूपोऽङ्क आनन-रूपोपमेयविशेषणस्वबिम्बाभावात्कस्य प्रतिबिम्बः स्यात्। अत आधिक्यापादकतया दोषः। न च हरिणनयनसदृशस्य नयनस्योपादानात्तस्यैव बिम्बस्य प्रतिबिम्बः स्यादिति वाच्यम्। तादृशनयनस्य बहुव्रीह्यर्थकान्ताविशेषणतया

### मर्मप्रकाशः

इवेत्यर्थः। योगेति। बहुव्रीहीत्यर्थः। स्वेति। अङ्केत्यर्थः। तादृशेति। हरिण-नयनसदृशेत्यर्थः। एवमग्रेऽपि। इष्टे इति। नयनस्याननमात्रसंबन्धित्वादिति भावः।

### मधुसूदनी

श्चन्द्र इवाभाति। इत्यत्र पद्ये। योगमर्यादया एणः अंको यस्येति अवयवसीमया। आननरूपस्योपमेयस्य विशेषणं यत्स्वस्यांकस्य बिम्बं मुख्यभूतं तस्याभावात्। यदा मुख्यभूतं वस्तु नास्ति तदा कस्य प्रतिबिम्बः प्रतिनिधिः स्यात् न कस्यापीति। यत्र उपमेये बिम्बस्थानीयस्य तादृशविशेषणस्याभाव उपमाने च प्रतिबिम्बस्थानीयस्य तस्य सद्भावः स एव तत्राधिक्यमापादयति। एवमाधिक्यापादकतया स दोषः। तस्यैव नयनस्यैव।

### मर्मप्रकाशः

है। दूसरा उपमान या तदंश उसका प्रतिविम्ब प्रतिनिधि होता है। इसलिए जब विम्ब रहे तब प्रतिविम्ब रहेगा। प्रकृत में चन्द्र उपमान है। उसमें एण (मृग) है अंक जिसमें इस बहुव्रीहिसमास रूप योग (अवयव)की मर्यादा (सीमा) से एक रूप अंक मालूम पड़ता है। जो कि उपमान का विशेषण हैं अतः प्रतिविम्ब स्थानीय है। इसपर प्रश्न होता है कि यह अंक किसका प्रतिबिम्ब है। क्योंकि आनन रूप उपमेय में (स्व) प्रतिबिम्बका जोड़ीदार बिम्ब कोई नहीं है। जब विम्ब रहेगा तव प्रतिद्वन्द्वी प्रतिबिम्ब रहेगा। अतः उपमानगत विशेषण के अधिक होने से यह आधिक्य दोष हो गया।

प्रश्न=अगर कहें कि हरिण नयन सदृश नयन का उपादान है अतः वह नयन ही बिम्ब हो गया और उसी का यह अंक प्रतिबिम्ब है। यह भी ठीक नहीं है। क्योंकि हरिणनयना यह बहुव्रीहि समास का अर्थ अन्य पदार्थ कान्ता का विशेषण है। आनन का विशेषण नहीं है अतः हरिणनयन सदृश नयन बिम्ब नहीं बन सकता है।

उत्तर—नहीं ऐसा नहीं कह सकते हैं। क्योंकि शब्द से भले ही उस नयन का आनन के विशेषण के रूप में प्रतिपादन नहीं किया गया हो किन्तु कान्ता के विशेषण होने से आनन में भी उसकी स्थिति सिद्ध ही है। क्योंकि वह नयन जब तक आनन का विशेषण नहीं बनेगा तब तक कान्ता का विशेषण नहीं बन सकता है। यह अनुभव सिद्ध है। यदि आनन के विशेषण बने विना वह कान्ता का विशेषण बन जाता है तो यह अनुभव विरुद्ध होगा।

आननाविशेषणत्वेन विम्बत्वाभावादिति चेत्, मैवम् । शब्देनाननविशेषणत्वेन तादृशनयनस्याप्रतिपादनेऽपि कान्ताविशेषणत्वेनैवाननवृत्तित्वस्यापि प्रतिपत्तेः । नह्याननमविषयीकृत्य कान्तां विशेष्टुमीष्टे नयनम् । अनुभवविरोधात् । तथापि समभिव्याहारविशेषमापन्नेन शब्देनाप्रतिपादनाच्छाब्दे

## मर्मप्रकाशः

तदाह—अनुभवेति । शङ्कते—तथापीति । तद्वृत्तित्वस्यार्थिकप्रतिपत्तावपीत्यर्थः । समभीति । नयनरूपेत्यर्थः । शब्देन हरिणनयनशब्देन । अप्रतीति । नयने आननवृत्तित्वस्येत्यादिः । विषयता त्रिविधा—प्रकारता, विशेष्यता, सांसर्गिकी च । तत्राद्ययोरभावे-

## मधुसूदनी

हरिणनयनाशब्दः कान्तारूपार्थप्रतिपादकतया यदा मुख्यं कान्तावयवं मुखमेव न प्रतिपादयति तदा अवयवस्य (मुखस्य) अवयवं नयनं कथं प्रतिपादयेत् । तथा च हरिणनयनसदृशं नयनमाननस्य विशेषणमित्येवमाननविशेषणत्वेन तादृशनयनस्य हरिणनयनाशब्देन अप्रतिपादनेऽपि । कान्तायाः विशेषणं मुखं तद्विशेषणं नयनमिति स्वविशेषणविशेषणस्यापि स्वविशेषणत्वमिति नीत्या कान्ताविशेषणत्वेनैव नयने आननवृत्तित्वस्यापि आननसम्बद्धत्वस्यापि नयनमाननवृत्ति आननसम्बन्धि इत्यस्यापि वस्तुनः अर्थात् प्रतिपत्तेः । हि यतः नयनम्, आननमविषयीकृत्य आननसम्बन्धमकृत्वा कान्तां विशेष्टुं स्प्रष्टुं न ईष्टे न समर्थः । असामर्थ्यं वदति—अनुभवेति । अनुभव एव तथा न भवति ततस्तद्विरोधः स्पष्टः । तथापि नयने आननसम्बन्धित्वस्यार्थात्प्रतिपत्तावपि । समभिव्याहारः समीपोच्चारणम् । तद्विशेषं विलक्षणानुपूर्वीमापन्नेन हरिणनयनाशब्देन नयनमाननसम्बन्धीत्यस्य प्रतिपादनं नास्ति । तदभावात् हेतोः शाब्दे बोधे हरिणनयनाशब्दजन्ये ज्ञाने नयनविशिष्टमाननमित्येवं विषयो नहि भवति । अर्थात् नयनविशिष्टमाननमिति नयनस्य प्रकारतया, आनने नयनमिति नयनस्य विशेष्यतया भानं स्यात् । किन्तु "हरिणनयना" इति विलक्षणानुपूर्वीवशात् एतादृशबोधे प्रकारताख्या विशेष्यताख्या वा विषयता नास्ति । अथापि आननमन्तरा नयनं साक्षात् कान्तां न स्पृशतीत्यतो नयनाननयोः संसर्गोऽवश्यं वर्त्तते । एवं संसर्गताख्यायां विषयतायां बाधकाभावात् । स्वविशिष्टाननसंसर्गेण (स्वं नयनम्) आननमाधारः नयनं तद्वृत्ति इति तयोराधारा-

## बालक्रीड़ा

तथापि नयन आनन का सम्बन्धी है इस विषय की अर्थापत्ति से प्रतीति होने पर भी समभिव्याहार विशेष समीपोच्चारण रूप विलक्षण आनुपूर्वी को प्राप्त हरिणनयना शब्द से "नयन आनन का सम्बन्धि है" ऐसा प्रतिपादन नहीं है । अतः शाब्दबोध अर्थात् हरिणनयन शब्द से होने वाले ज्ञान में आनन नयन से युक्त है इस रूप में नयन आनन का विषय नहीं होता है ।

बोधे नाननस्य नयनविशिष्टत्वेन विषयत्वमिति चेत्, संसर्गत्वे बाधकाभावा-त्स्वविशिष्टाननसंसर्गेण तादृशनयनस्य कान्ताविशेषणत्वात्, यथाकथंचिदुप-

## मर्मप्रकाशः

ऽप्यन्त्या सुवचेत्याह—संसर्गत्व इति। आननस्येत्यादिः। तदेवाह—स्वविशिष्टेति। नयन-विशिष्टेत्यर्थः। नन्वेवमपि प्रकारतया विशेष्यतया वा उपमेयवृत्तित्वज्ञानस्य बिम्बताप्रयोज-कत्वात्तदभावात् कथं बिम्बत्वमत आह–यथाकथंचिदिति न तूक्तरीत्यैव। तथा च संसर्गतया तत्त्वसत्त्वात्तत्त्वं सुवचम्। नन्वेवमप्यतिप्रसङ्गापत्तिः। नहि संसर्गतया भासमानस्य शाब्द-

## मधुसूदनी

धेयभावसम्बन्धः संसर्गः। तेन सम्बन्धेन। हरिणनयनसदृशस्य नयनस्य कान्ता सम्बन्धित्वमायातम्। अर्थात् धर्मिणो मुखस्य कान्तया सह सम्बन्धेन मुखवृत्तेर्नय-नस्य धर्मस्यापि कान्तया सह सम्बन्धोऽस्त्येव। एवं चन्द्रे मृगः प्रतिबिम्बस्थानीयः उपमेये आनने नयनं बिम्बस्थानीयमिति नाधिक्यं दोषः।

ननु प्रकारतया विशेष्यतया वा उपमेयवृत्तित्वज्ञानं बिम्बताप्रयोजकं भवति प्रकृते तयोरभावात्कथं नयनं बिम्बस्थानीयमित्यत आह=यथाकथंचिदिति। ननु नायं नियमो यत्ताभ्यामेव तत्त्वज्ञानं बिम्बतायाः प्रयोजकम्। यथाकथंचिदपि तज् ज्ञानमावश्यकम्। तथा च संसर्गतया तत्त्वज्ञानात् तत्ताप्रयोजकत्वं सुलभमेवेति भावः।

ननु यत्प्रकारकयद्विशेष्यकोपस्थितिः तत्प्रकारकतद्विशेष्यकः शाब्दो बोधः। संसर्गस्तु आकांक्षाभास्यः। न तूपस्थितिविषयः संकेताभावात्तथा च आननस्य नयनविशिष्टतया शाब्दबोधे भावाभावात्कथं तत्वज्ञानं तत्प्रयोजकमित्यरुचेराह=

## बालक्रीड़ा

नयन से युक्त आनन है इस बोध में नयन का प्रकारतया और आनन में नयन है इस बोध में नयन का विशेष्यतया भान होगा किन्तु यहाँ तो हरिणनयना इस आनुपूर्वी से कहा गया है अतः इस शब्द से होने वाले बोध में प्रकारताख्या एवं विशेष्यताख्या विषयता नहीं है। इस पर भी आनन के विना, नयन साक्षात् कान्ता को स्पर्श नहीं करसकता है इसलिए नयन एवं आनन का संसर्ग अवश्य है। अतः संसर्गताख्या विषयता के होने में कोई बाधक भी नहीं है। इस तरह स्वनयन से विशिष्ट आनन है इस संसर्ग से उक्त नयन कान्ता का विशेषण हो जाता है। विशेषण का विशेषण भी विशेषण ही होता है।

प्रश्न—दोनों प्रकार की विषयताओं में से किसी एक के द्वारा नयन का उपमेय-वृत्तित्वज्ञान बिम्बता का प्रयोजक है उसके अभाव में बिम्बता कैसी ?

उत्तर—यह कोई नियम नहीं है दोनों विषयताओं से ही वह ज्ञान उसका प्रयोजक होता है क्योंकि संसर्गता से भी वह ज्ञान उसका प्रयोजक होता है। इसलिये कहते हैं कि यथा कथञ्चित् उपमेय मुख में नयन की स्थिति का ज्ञान बिम्बता का प्रयोजक है। जैसे धर्मी

मेयवृत्तिताज्ञानस्य बिम्बताप्रयोजकत्वात्। यद्वा कान्ताविशेषणतया तादृश-नयनयोः शाब्दे बोधे वृत्ते पश्चादाननस्य तद्विशेष्यतया वैयञ्जनिके मानसे वा बोधे बाधकाभावात्। एवं च तादृशवाक्यप्रयोज्ये ज्ञाने उपमेय विशेषणतया भातस्य तादृशनयनस्य बिम्बस्य सत्त्वात्तदर्थं च चन्द्रगतस्यैण-रूपस्याङ्कस्य प्रतिबिम्बतयोपादानमावश्यकमेवेति नाधिक्यं दोषः। कवि-

## मर्मप्रकाशः

त्वमत आह—यद्वेति। तादृशेति। हरिणीयत्वनायकीयत्वविशिष्टेत्यर्थः। तद्विशेष्येति। नयनविशेष्येत्यर्थः। तादृशेति। कान्ताविशेषणत्वेन नयनबोधकेत्यर्थः। साक्षात्तज्जन्य-त्वाभावादाह—प्रयोज्ये इति। ज्ञाने वैयञ्जनिकादौ। तदर्थं तत्प्रतिबिम्बाकाङ्क्षा-शान्त्यर्थम्। एवमाधिक्यदोषं परिहृत्य नीलाञ्चलेनेत्यत्र लिङ्गभेददोषमुद्धरति—कवीति। एवमन्यत्राप्यपवादमाह—एवं चेति। तदभावसिद्धौ चेत्यर्थः। तत्रादौ कविसमयसिद्धतये-त्यस्य लक्ष्यमाह—यथेति। ननु किं तत्प्रकारान्तरं येनादुष्टत्वमत आह—शेषमिति। परमं प्रकृतमुपसंहरति—इत्युपमेति। चन्द्रालोके तु 'अनेकस्यार्थयुग्मस्य सादृश्ये स्तबकोपमा। श्रितोऽस्मि चरणौ विष्णोर्भृङ्गस्तामरसौ यथा॥ स्यात्संपूर्णोपमा यत्र द्वयोरपि विधेयता। पद्मानीव विनिद्राणि नेत्राण्यासन्नहर्मुखे॥' इति भेदद्वयमधिकमुक्तम्॥ इति

## मधुसूदनी

यद्वेति। तद्विशेष्यतया नयनविशेष्यतया। बाधकेति। आननस्य नयनविशिष्टतया शाब्दबोधेऽविषयत्वरूपस्य बाधकस्य अभावात्।

लिंगभेदोऽपि नात्रोपमायां दोषः। तदुक्तम्-इष्टं पुन्नपुंसकयोः प्रायेणेति वाम-नेन। पुन्नपुंसकयोरुपमानोपमेययोर्लिंगभेदः प्रायेण बाहुल्येन इष्टो न दुष्टो यत्र विशे-षणमुभयान्वयि स्यात्। काव्यडाकिन्यामपि समर्थितमेतत्।

## बालक्रीड़ा

मुख का जब कान्ता के साथ सम्बन्ध है। तब मुखवृत्ति नयन धर्म का भी कान्ता के साथ सम्बन्ध है ही फलतः उपमान चन्द्र में एण मृग प्रतिबिम्ब स्थानीय है और उपमेय मुख में नयन बिम्ब स्थानीय है अतः आधिक्य दोष नहीं है। अथवा कान्ता के विशेषण के रूप में उन नयनों की शब्द से अभिधा के द्वारा जानकारी हो गई। बाद में व्यञ्जना या मन के द्वारा उन नयनों की मुख के विशेषण के रूप से जानकारी होने में कोई बाधक नहीं है। अर्थात् पहिले शाब्दबोध में कान्ता विशेषणतया नयन और नयन विशेष्यतया कान्ता की प्रतीति हुई। दूसरे वैयञ्जनिक या मानस बोध में आनन विशेषणतया नयन और नयन विशेष्यतया आनन की प्रतीति हुई। इस तरह उस वाक्य से प्रयोज्य ज्ञान में उपमेय आनन के विशेषण के रूप में भात ज्ञात वह नयन जब बिम्ब हो गया तब चन्द्र के विशेषण अंक का प्रतिबिम्ब रूप से उपादान आवश्यक है अतः आधिक्य दोष नहीं है। और कवि प्रसिद्धि के कारण अर्थात् जिन तथ्यों की कविसम्प्रदाय में जिस रूप में प्रसिद्धि है उस प्रसिद्धि के कारण काव्य

समयसिद्धतया चमत्कारापकर्षकत्वाभावेन लिङ्गभेदोऽपि नात्र दोषः। एवं च कविसमयसिद्धतया प्रकारान्तरेण वा प्रागुक्तानां दोषाणां चमत्कारापकर्ष-कत्वे नास्त्येव दोषत्वम्।

यथा—

'नवाङ्गनेवाङ्गणेऽपि गन्तुमेष प्रकम्पते।
इयं सौराष्ट्रजा नारी महाभट इवोद्भटा॥'

## मधुसूदनी

श्लेषमर्यादया यत्र पदं (१) साधर्म्यवाचकम्। उभयान्वपि यत्रापि २, नास्य दोषस्य संस्थितिः। अतएव "चन्द्रमिव मुखं पश्यामि" इति न दुष्टम्।

"छायेव तां भूपतिरन्वगच्छत्" इति रघौ न दोषः। "लौकिक्यां समासामि-हितायामुपमाप्रपञ्चे च"।

इति वामन सूत्रम्। तत्र लौकिक्यामुपमायां लिंगभेदो न दुष्टः यथा—

नवेति। "एष नवाङ्गनेव" इत्यत्र "महाभट इव सौराष्ट्रजा नारी" इत्यत्र।

समासाभिहितायामुपमायां "भुजलता नीलोत्पलसदृशी" इत्यत्र नीलोत्पलं नपुंसकं भुजलता स्त्री। परं समासपिहितत्वात् लिंगभेदो न दोषः। उपमाप्रपञ्चे च प्रतिवस्तूपमायां यथा शुद्धान्तदुर्लभमिदं वपुराश्रम वासिनो यदि जनस्य। दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः। इत्यत्र आश्रमवासिजनस्य लतानाञ्च लिंग भेदो वचनभेदश्च न दोषौ।

अपन्हुतौ यथा—"नेदं नभोमण्डलमम्बुराशिः" इत्यत्र च लिंगभेदो न दोषः। प्रशंसनीयस्य तिरस्कारप्रतीतौ जातिहीनत्वादि दूषकता बीजम्।

निन्दायामेव तात्पर्ये जातिहीनत्वादि बीजाभावान्न दोषः।

चाण्डालश्च दरिद्रश्च द्वावेव सदृशौ तव। न स्पर्शनीयश्चाण्डालो दरिद्रो न प्रयच्छकः इति न्यूनप्रमाणप्रत्यायनतात्पर्ये प्रमाणहीनत्वमुपमानस्य न दुष्टत्वम्—

दिव्यहरेर्मुखकुहरे विस्तीर्णे पर्णति व्योम। अत्र पर्णस्योपमानस्य व्योमापेक्षया हीनपरिणामत्वेऽपि नृसिंहमुखस्यातिविस्तीर्णतायां तात्पर्यान्न दोषः। यत्र सहचरि-तत्वेन प्रसिद्धयोर्धर्मयोमध्ये एकस्यापि निर्देशेऽवश्यमन्यस्य संविद् भवति। तत्र धर्मा-धिकत्वन्यूनत्वे न दूषणे।

## बालक्रीड़ा

जनित चमत्कार में अपकर्ष नहीं होता है इसीलिए प्रकृत पद्य में आनन उपमेय में नपुंसकत्व और एणाङ्क में पुंस्त्व रूप लिंग भेद भी दोष नहीं है।

इस तरह पहिले कहे हुए सभी दोष कवि प्रसिद्धि के कारण अथवा प्रकारान्तर से चमत्कार के अपकर्षक नहीं हुए तो दोष नही हैं।

जैसे यह पुरुष आंगन में भी जाने में नवाङ्गना की तरह काँपता हैं और यह सौराष्ट्र देश की नारी महाभट की तरह उद्भट है।

एवमन्यत्रापि ज्ञेयम् । शेषं स्मरणालंकारप्रकरणे विकल्पप्रकरणे च वक्ष्यामः । इत्युपमानिरूपणसंक्षेपः ॥

## इति रसगङ्गाधरे उपमाप्रकरणम् ।

### मर्मप्रकाशः

रसगङ्गाधरमर्मप्रकाशे उपमाप्रकरणम् ॥

### मधुसूदनी

एवमेव अन्येषामपि दोषाणां दोषत्वाभावं जगदुर्दण्डयाचार्याः ।

न लिंगवचने भिन्ने न न्यूनाधिकताऽपि वा ।

उपमादूषणायाऽलं यत्रोद्वेगो न धीमताम् ।

दूषणाद् भीमतामतो ह्रीमतां श्रीमतां धीमतां यत्रोद्वेगश्चमत्कारापकर्षो न भवेत् । तत्र लिंगभेदो, वचनभेदो, न्यूनत्वमधिकत्वं धर्मस्य जातेः प्रमाणस्य च, कालपुरुषविध्यादेर्भेदाश्च दोषा उपमादूषणाय नालम् ।

काव्यप्रकाशकारास्तु=उपमायामुपमानस्य जातिगतं प्रमाणगतं च न्यूनत्वमधिकत्वम् अनुचितार्थत्वं दोषः । धर्मगतं न्यूनत्वं हीनपदत्वम्, अधिकत्वमधिकपदत्वम् ।

उपमानोपमेययोः संवन्धिनो लिंगवचनकालपुरुपविध्यादि भेदा यदि उपमानोपमेययोः सम्वन्धिनं साधारणं धर्मं भिन्नरूपं असाधारणं कुर्युस्तर्हि असाधारणस्य धर्मस्य एकत्रोपमेये एव उपमान एव समन्वयावगतौ सविशेषणस्यैवोपमानत्वमुपमेयत्वं च तत्र लिंगादिभेदस्थले प्रतीयमानेन शब्दानुक्तेन धर्मेण प्रतीयते इति प्रतीतेरेकरूपस्यार्थस्य भञ्जनादस्य सर्वस्य लिंगवचनविधिकालपुरुषादिगतस्य भेदस्य भग्नप्रक्रमत्वरूपत्वम् ।

उपमायामसादृश्यासंभवावपि अनुचितार्थतायामेव पर्यवस्यतः इति निरदिशन् ।

इति आचार्यमधुसूदनशास्त्रि विरचितायां मधुसूदन्यामुपमाविवरणं समन्वगच्छत् ।

### वालक्रीड़ा

यहां पुरुष एवं नवोढा में तथा महाभट एवं सौराष्ट्र नारी में पुंस्त्व एवं स्त्रीत्व का भेद दोष नहीं है । अवशिष्ट प्रकारान्तर स्मरण एवं विकल्प अलंकार के प्रकरण में कहेंगे ।

आचार्य मधुसूदन शास्त्री विरचित वालक्रीडा में उपमालंकार प्रकरण पूर्ण हुआ ।

अथाऽस्या एव भेद उपमेयोपमा निरूप्यते—

तृतीयसदृशव्यवच्छेदबुद्धिफलकवर्णनविषयीभूतं परस्परमुपमानोपमेयभावमापन्नयोरर्थयोः सादृश्यं सुन्दरमुपमेयोपमा ॥

'तडिदिव तन्वी भवती भवतीवेयं तडिल्लता गौरी' इत्यत्र परस्परोपमायामतिव्याप्तिवारणाय भूतान्तम्। अत्र तानवगौरिमभ्यामनुगामिधर्माभ्यां

## मधुसूदनी

## अथ उपमेयोपमा

अथ उपमनिरूपणानन्तरम्। अस्या उपमाया एव। उपमेयेन उपमा यत्र। निरूप्यते लक्षणतद्गतपदानां कृत्यं चिन्तनं तदुदाहरणप्रदर्शनञ्च क्रियते।

तयोर्द्वयोः सदृशस्तृतीयो नास्ति इत्येवं रूपेण या तृतीयसदृशस्य व्यवच्छेद-(अभाव) विषयिणी बुद्धिः। सैव फलं प्रयोजनं यस्य वर्णनस्य तद्विषयीभूतं यत् परस्परमुपमानोपमेयभावमापन्नयोरर्थयोः सुन्दरं चमत्कृतिमत् सादृश्यं सा उपमेयोपमा।

लक्षणगतानां त्रयाणां पदानां कृत्यं बुबोधयिषन्नाह=तडिदिति। तडिद्भवत्योः परस्परोपमायामिदं लक्षणमुपमेयोपमाया मातिप्रसज्येतेति लक्षणे भूतान्त पदं निवेशितम्। तदनिवेशे कथमतिप्रसक्तिरिति दर्शयति। अत्रेति। उपमाद्वयं परस्परं तडिद्भवत्योः द्वे उपमे तृतीयसदृशस्य व्यवच्छेदं न कुरुतः। ननु परस्परोपमायामपि द्वे उपमे उपमेयोपमायामपि द्वे उपमे इति समानम्। तत्कथं पूर्वत्र ते द्वे

## वालक्रीड़ा

## उपमेयोपमा

अथ उपमा के निरूपण के वाद उपमा के ही भेद उपमेयोपमा का निरूपण करते हैं। जिस वर्णन का फल इन प्रकृत उपमान एवं उपमेय के सदृश तीसरा नहीं है ऐसी बुद्धि होती है उस बर्णन के विषयीभूत और परस्पर में उपमानोपमेयभाव को प्राप्त अर्थों में जो सुन्दर सादृश्य है उसका नाम उपमेयोपमा है। यहां उपमेय प्रतियोगिक सादृश्य भी शब्द से कहा जाता है। अब लक्षणगत तीन पदों का कार्य बतलाते हैं :

बिजली की तरह तन्वी आप हैं आप की तरह गौरी बिजली हैं इस परस्पर की उपमा जो उपमयोपमा के लक्षण की सीमा को अतिक्रान्त करती है उसमें लक्षण व्याप्त नहीं हो जाय इसलिए लक्षण में भूतान्त पद का विन्यास किया है। यहाँ तानव एवं गौरिम धर्मों से प्रयोजित दो उपमाएँ तृतीय सदृश का व्यवच्छेद नहीं करती है। जिस एक धर्म से एक प्रतियोगिक अपरानुयोगिक सादृश्य का निरूपण किया जाता है उसी धर्म से अपर प्रतियोगिक एकानुयोगिक सादृश्य भी अर्थात् सिद्ध है। ऐसा हुए विना सादृश्य याने दोनों की समानता हो नहीं सकती हैं। अतः उस अर्थात् प्राप्त सदृश्य को यदि शब्द से कह दिया जाय तो वह

प्रयोजितमुपमाद्वयं न तृतीयं सदृशं व्यवच्छिनत्ति। एकेन धर्मेणैकप्रतियोगिकेऽपरानुयोगिके सादृश्ये निरूपितेऽपरप्रतियोगिकस्यैकानुयोगिकस्यापि तेन धर्मेण सादृश्यस्यार्थतः सिद्धतया शब्देन पुनस्तदुक्तिः स्वनैरर्थक्यपरिहाराय तृतीयसदृशव्यवच्छेदमाक्षिपति। प्रकृते चैकेन तानवरूपेण धर्मेण तडित्प्रतियोगिके कामिन्यनुयोगिके सादृश्ये निरूपिते तेनैव धर्मेण कामिनीप्रतियोगिकस्य तडिदनुयोगिकस्य सादृश्यस्यार्थतः सिद्धावपि न गौरत्वेन धर्मेण सिद्धिरिति तदर्थमुपात्तस्य द्वितीयसादृश्यवचनस्य न तृतीयसदृशव्यवच्छेदफलकत्वम्।

'सदृशी तव तन्वि निर्मिता विधिना नेति समस्तसंमतम्।
अथ चेन्निपुणं विभाव्यते मतिमारोहति कौमुदी मनाक्॥'

मर्मप्रकाश

उपमाद्वयमिति। यतोऽतः पुनर्वर्ण्यमानमिति शेषः। एकेनेत्यस्य यत इत्यादिः। तदर्थं तेन धर्मेण सादृश्यसिद्धयर्थम्। सदृशीति। व्यक्तिरित्यर्थः। समस्तेति। सर्वेत्यर्थः। विभाव्यते विभावनाविषयीक्रियते। मतिमिति। तदेत्यादिः। तदैवं बुद्धयारूढं

मधुसूदनी

तदभावं न कुरुत। उत्तरत्र कुरुत इति स्पष्टयति—एकेनेति। तेनेति। येन एकेन धर्मेण। तेनैव एकेन धर्मेण। अर्थतः अर्थापत्त्या सिद्धस्य सादृश्यस्य शब्देन वाक्येन पुनर्द्वितीयवारं तदुक्तिः सादृश्यकथनं निरर्थकम्। इति स्वस्यास्तदुक्तेः। नैरर्थक्यपरिहाराय निष्फलतादूरीकरणाय। आक्षिपति इत्यस्य कर्त्री तदुक्तिः स्वपदार्थः। एवमुत्तरत्र तृतीयसदृशव्यवच्छेदो भवतीति।

परस्परोपमायां स न भवतीति दर्शयति-प्रकृते चेति। तडिदिवेत्यत्र च। गौरत्वेन धर्मेण न सादृश्यसिद्धिः। तदर्थं गौरत्वेन धर्मेण सादृश्यसिद्धये। उपात्तस्य प्रतिपादितस्य।

बालक्रीड़ा

कथन उन दोनों के सदृश तृतीय कोई नहीं है इस अभाव का आक्षेपक हो जाता है। क्योंकि यदि ऐसा आक्षेप उस कथन से नहीं होगा तो वह कथन निरर्थक हो जायगा। अतः वह अपनी निरर्थकता के परिहार के लिए ऐसा करता है।

प्रकृत पद्य तडिदिव में एक तानव रूप धर्म से तडित्प्रतियोगिक कामिन्यनुयोगिक सादृश्य के निरूपण करने पर भी उसी धर्म से कामिनीप्रतियोगिक सादृश्य भी अर्थात् सिद्ध हो गया किन्तु गौरत्व धर्म से उक्त सादृश्य सिद्ध नहीं हुआ। इसके लिए अर्थात् गौरत्व धर्म से सादृश्य की सिद्धि के लिए उपात्त सादृश्य के बोधक द्वितीय वाक्य से तृतीय सदृश व्यवच्छेदरूप फल की सिद्धि नहीं होती है।

इति तृतीयसदृशव्यवच्छेदफलकवर्णनविषये सादृश्येऽतिव्याप्ति-वारणाय परस्परमिति। लिङ्गवचनभेदादिदुष्टसादृश्यवारणाय सुन्दरमिति।

अथेयमुदाह्रियते—

'कौमुदीव भवती विभाति मे कातराक्षि ? भवतीव कौमुदी।
अम्बुजेन तुलितं विलोचनं लोचनेन च तवाम्बुजं समम् ॥'

### मर्मप्रकाश

भवति कौमुदी ईषत्तव सदृशीतीत्यर्थः। अत्र कौमुदीभिन्ने कान्तासादृश्यनिषेधस्य शब्दतः कथनादीषत्सादृश्यस्य चन्द्रिकायां कथनात्तृतीयसदृशव्यवच्छेदः फलितस्तदाह—तृतीयेति। परस्परमिति। कौमुदीसादृश्योक्तेस्तत्राभाव इति भावः। दुष्टेति। घट इव पटः, पट इव घटः, इत्यादेस्तु सामान्यप्राप्तालंकारत्वेनैव निरास इति भावः। तवाम्बुजं सममिति।

### मधुसूदनी

सदृशीति। यद्यपि समेषां सिद्धान्तः। तद्यपि निपुणं विभाव्यते प्रावीण्येन भावनाविषयीक्रियते तदा मनाङ् ईषत् न तु पूर्णतः न च वस्तुतः।

अत्र तन्वीकौमुद्यौ द्वे एव परस्परं सदृश्यौ तृतीया सदृशी नास्ति इति फलति इति भूतान्तपदविन्यासेऽपि न निस्तारोऽतः परस्परमित्युपन्यस्तम्।

भेदादीत्यत्र आदिपदाद् जातिप्रमाणादिगतन्यूनत्वाधिकत्वादि बोध्यम्।

अम्बुजेनेति। अत्र विलोचनं, लोचनेन, इत्येकवचनं दुष्टं नायिकाया एका-क्षीत्वप्रतिपत्तेः। तथा एकत्र व्युपसृष्टं परत्रानुपसृष्टं तदिति। एवं तुलितमिति

### बालक्रीड़ा

हे तन्वि ? तुम्हारी जैसी (दूसरी) नायिका को विधि ने नहीं बनाया यह तथ्य सभी के सम्मत है किन्तु यदि निपुणता से गवेषणा करते हैं तो थोड़ी बहुत कौमुदी ही तुम्हरी जैसी बुद्धि में आती है।

यहां तीसरा कोई आपलोगों के सदृश नहीं है यही जिसका फल है उस वर्णन माने (कोइ भी तुम्हारा जैसा विश्व में नहीं है फिर भी "यदि निपुणता से गवेषणा करते हैं" तो थोड़ी बहुत कौमुदी केवल मति में आती है" इस शब्द प्रयोग के विषय सादृश्य में अर्थात् कौमुदी से अतिरिक्त जगत् में कान्ता के सदृश नहीं ह इस तरह निषेध को शब्द से कह कर फिर कौमुदी में ईषत् सादृश्य का प्रतिपादन किया इससे स्वतः तृतीय सदृश व्यवच्छेद फलित होता है ऐसी उपमा में उपमेयोपमा के लक्षण की अतिव्याप्ति के वारण के लिए लक्षण में परस्परम् पद का विन्यास किया है।

लिंग भेद, वचन भेद, जातिप्रमाणादिगत न्यूनता एवं अधिकता प्रभृति दोषों के वारण के लिए सुन्दरम् पद की विन्यास किया है।

अब इसके लक्षण का निरूपण करके इसके उदाहरण दिखाते हैं। हे कातराक्षि ?

इयं च तावद्द्विविधा—उक्तधर्मा व्यक्तधर्मा च। उक्तधर्मा तावदनुगाम्यादिभिः प्रागुक्तैर्धर्मैरनेकधा।

अनुगामी धर्मो यथा—

'निखिले निगमकदम्बे लोकेष्वप्येष निर्विवादोऽर्थः।
शिव इव गुरुर्गरीयान्गुरुरिव सोऽयं सदाशिवोऽपि तथा॥'

बिम्बप्रतिबिम्बभावमापन्नो यथा—

'रमणीयस्तबकयुता विलसितवक्षोजयुगलशालिन्यः।
लतिका इव ता वनिता वनिता इव रेजिरे लतिकाः॥'

### मर्मप्रकाश

अत्र तुलितं सममित्युपमावाचकवैलक्षण्यं वक्ष्यमाणक्विप्क्यङादिवैलक्षण्यमिव दुष्टमिति चिन्त्यमिदम्। व्यक्तेति। व्यञ्जितेत्यर्थः। निगमेति। वेदसमूहे इत्यर्थः। तथा

### मधुसूदनी

सममिति च वैलक्षण्यं दोषाधायकम्। तथा तवाम्बुजमित्युक्त्या त्वत्सम्बन्धि अम्बुजमिति प्रतिभाति। विवक्षितं च त्वत्सम्बन्धिलोचनम्। अतः="अम्बुजेन तुलितं स्वमीक्षणं स्वेक्षणेन तुलितं तथाम्बुजम्" इति पाठः साधीयान्।

### बालक्रीड़ा

कौमुदी की तरह आप और आपकी तरह कौमुदी मालूम पड़ती है और अम्बुज की तरह तुम्हारा लोचन तथा तुम्हारे लोचन की तरह अम्बुज मालूम पड़ता है।

यहां नायिका कानी मालूम पड़ती है क्योंकि कवि ने लोचन में एक वचन का उपन्यास किया है। यह एक दोष है। विलोचनं में विका लगाव है "लोचनेन" में नहीं है। एक वार तुलित कहते हैं दूसरी वार समम् कहते हैं। लोचनेन चकार निरर्थक है। तवाम्बुजं कहने से "तुम्हारा अम्बुज" मालूम पड़ता है किन्तु "तुम्हारा" पद का सम्बन्ध लोचन के साथ विवक्षित है। इतने सब वैलक्षण्य सहृदयोद्वेजक होने से दोष हैं।

यह उपमेयोपमा दो प्रकार की है एक उक्तधर्मा दूसरी व्यक्तधर्मा। उक्तधर्मा भी पहले कहे हुए अनुगामी आदि धर्मों के कारण अनेक प्रकार की है।

अनुगामी धर्म जैसे—सम्पूर्ण वेदों में तथा तीनों या सातों लोकों में भी यह निर्विवाद तथ्य है कि शिवकी तरह गुरु गरीयान् है गुरु की तरह शिव गरीयान् है। यहां सोऽयम् तथा अपि पद व्यर्थ हैं। पूर्वोक्त उदाहरणों में ऐसे किसी पदों के विन्यास के विना भी सौन्दर्य निर्बाध प्रतीत होता है। अतः

शिव इव गुरु र्गरीयान् गुरुरिव शिवो गरीयांस्तथा भाति। यह पाठ साधु है।

बिम्ब प्रतिबिम्ब भावापन्न धर्म जैसे—रमणीय स्तवकों से युत लतिकाओं की तरह विलसितवक्षोजयुगल शालिनी वे वनिताऐं और उन वनिताओं की तरह वे लतिकाएं

अत्र रमणीयत्वविलसितत्वाभ्यां विशेषणाभ्यां युतत्वशालित्वाभ्यां च विशेष्याभ्यां परस्परं वस्तुप्रतिवस्तुभावमापन्नाभ्यां पुटितः स्तवकस्तनरूपः परस्परं बिम्बप्रतिबिम्बभावापन्नो धर्मः ।

उपचरितो यथा—

'कुलशमिव कठिनमसतां हृदयं जानीहि हृदयमिव कुलिशम् ।
प्रकृतिः सतां सुमधुरा, सुधेव हि प्रकृतिरिव च सुधा ॥'

केवलशब्दात्मको यथा—

'अविरतचिन्तो लोके वृक इव पिशुनोऽत्र पिशुन इव च वृकः ।
भारतमिव सच्चित्तं, सच्चित्तमिवाथ भारतं सकृपम् ॥'

### मर्मप्रकाशः

गरीयान् । विशेषणेति । स्तबकवक्षोजयुगलेत्यादिः । एवमग्रेऽपि । वस्त्विति । वस्तुतस्तयोरेकत्वादिति भावः । पुटितः संपुटितः । कुलिशमिति । अत्र कुलिशनिष्ठकठिनत्वस्य मनसि सुधानिष्ठमाधुर्यस्य प्रकृतावुपचारः । अवीति । निरन्तरचिन्तत्वस्य पिशुनवृत्तित्वेऽपि वृकावृत्तित्वात्सकृपत्वस्य साधुचित्तवृत्तित्वेऽपि भारतग्रन्थावृत्तित्वाच्छब्द एव समानोऽत्र धर्मः । न चोपचरितत्वं शक्यम् । एकनिष्ठस्यान्यत्रारोपे तत्त्वेऽपि प्रकृते

### मधुसूदनी

अविरेति । अविषु मेषेषु रता लग्ना चिन्ता ध्यानं यस्य स वृको व्याघ्रः । न विरता अविरता निरन्तरा चिन्ता यस्य स पिशुनः कर्णेजपः ।

### बालक्रीड़ा

शोभायमान है । यहां वनिताओं के विशेषण विलसितेत्यादि में युगलपद अधिक है । और ता वनिता इस तरह वनिता में तो ताः विशेषण दिया किन्तु लतिका में ताः विशेषण नहीं दिया इसलिए इस अधिक पदत्व दोषके निराकरण के लिए यहां ऐसा पाठ होना चाहिए—

रमणीयस्तबकयुगा विलसितवक्षोजयुगलकाः स्वच्छाः ।
लतिका इव ता वनिता वनिता इव भान्ति ता लतिकाः ॥

प्रत्युत इस पाठ में लताओं में स्वच्छत्व सुन्दरत्व है और वनिताओं में भी वही है । अतः काव्य सौन्दर्य भी बढ गया है ।

उपचरित लक्षणा से व्यवहृत धर्म जैसे दुष्टों के हृदय को कुलिश की तरह कठिन और उनके हृदय की तरह कुलिश को कठिन समझो । सज्जनों की प्रकृति (स्वभाव) सुधा की तरह और सुधा उनकी प्रकृति की तरह सुमधुर है ।

यहाँ कुलिशगत कठिनता का हृदय में और सुधानिष्ठ माधुर्य का प्रकृति में उपचार है लक्षणा है ।

केवल शब्दात्कक धर्म जैसे—यहाँ लोक में वृक की तरह अविरत चिन्ता वाला पिशुन

व्यक्तधर्मो यथा—

'वारिधिराकाशसमो वारिधिसदृशस्तथाकाशः ।
सेतुरिव स्वर्गङ्गा स्वर्गङ्गेवान्तरा सेतुः ॥'

अत्रापारत्वादिर्व्यज्यमानो धर्मः । एषा सर्वापि स्फुटे वाक्यभेदे प्रपञ्चिता ।

आर्थे तु वाक्यभेदे—

'अभिरामतासदनमम्बुजानने नयनद्वयं जनमनोहरं तव ।
इयति प्रपञ्चविषयेऽपि वैधसे तुलनामुदञ्चति परस्परात्मना ॥'

अत्र परस्परात्मना तुलनामुदञ्चतीति संक्षिप्ताद्वाक्यादिदमेतेनैतच्चानेन

## मर्मप्रकाशः

तत्त्वेनाप्रसिद्धत्वात् । अन्तरा आकाशमध्ये, समुद्रमध्ये च । आदिना दुर्घटत्वं सेतुस्वर्गङ्ग्योः संगृह्यते । व्यक्तपदार्थं सूचयितुमाह—व्यज्येति । वाक्यभेद इति । उदाह्रियत इति शेषः । वैधसे विधातृनिर्मिते । उदञ्चति प्रकाशयति । परस्परात्मना परस्पररूपतया ।

## मधुसूदनी

सतां चित्तम् । सकृपं सदयं कृपाचार्यसहितं च । मेषेषु लग्नध्यानत्वस्य वृकवृत्तित्वेऽपि पिशुनावृत्तित्वात् । कृपाचार्यसहितत्वरूपसकृपत्वस्य भारतग्रन्थनिष्ठत्वेऽपि सतां चित्तेऽवर्तमानत्वाच्छब्द एव साधारणो धर्मः । अन्तरा आकाशमध्ये सेतुरिव स्वर्गंगा । समुद्रमध्ये स्वर्गंगेव सेतुरिति । पूर्वार्द्धेऽपारत्वमुत्तरार्द्धे दुर्घटत्वम् व्यज्यते ।

अभिरामतेति । हे अम्बुजसदृशानने ? अभिरामतायाः सुन्दरतायाः सदनं गृहं तत एव जनमनसो हरं तव नयनद्वयं वैधसे इयति प्रपञ्चविषयेऽपि परम्परात्मना तुलनां सादृश्यमुदञ्चति अधिरोहति ।

## बालक्रीड़ा

चुगलखोर है और पिशुन की तरह अविरत चिन्ता वाला वृक है । पिशुन की चिन्ता चुगलखोरी से विरत नहीं होती है । वृक की चिन्ता अवि माने मेषों के विषय में रत माने लगी हुई है । भारत की तरह सत्पुरुषों का चित्त सकृप है दया सहित है । और सत्पुरुषों के चित्त की तरह भारत सकृप है याने कृपाचार्य के सहित है । यहाँ केवल शब्दों के स्वरूप में समानता है । अर्थ उनके भिन्न २ हैं । अर्थ बतला दिया है ।

व्यक्त धर्म जैसे—आकाश के समान वारिधि है और वारिधि के सदृश आकाश है दोनों का ओर छोर नहीं मालूम पड़ता है । और सेतु की तरह स्वर्गंगा है और स्वर्गंगा की तरह सेतु है दोनों भगवान् के कर एवं चरणों के सम्बन्ध से पवित्र हैं ।

इसके दो भेद और भी हैं जहाँ वाक्य भेद स्फुट है और अस्फुट है अर्थात् आर्थ है ।

तुलनामुदञ्चतीति वाक्यद्वयं विवारकमुल्लसते। एवं पूर्णालुप्तादयोऽप्यस्या उपमाया इव प्रायशः सर्वेऽपि भेदाः संभवन्ति। ते चामुयैव दिशा सुबुद्धिभिरुन्नेतुं शक्या इति नेह निरूप्यन्ते।

चित्रमीमांसाकृतस्तु प्राचीनं लक्षणमव्याप्त्यतिव्याप्त्यादिभिर्दूषयित्वा

'अन्योन्येनोपमा बोध्या व्यक्त्या वृत्त्यन्तरेण वा।
एकधर्माश्रया या स्यात्सोपमेयोपमा मता॥'

### मर्मप्रकाशः

इदं नयनम्। एतेन नयनेन। एवमग्रेऽपि। विवारकमिति। विवरणरूपमित्यर्थः। एवमनुगाम्यादिधर्मभेदवत्। अस्या उपमेयोपमायाः। असंभावितभेदवारणाय प्रायश इति। दिशा रीत्या। प्राचीनमिति। उपमानोपमेयत्वं द्वयोः पर्यायतो यदि। उपमेयोपमा सा स्याद् द्विविधैषा प्रकीर्तिता॥' इत्यर्थः। अव्याप्तीति। 'तद्वल्गुना युगपदुन्मिषितेन

### मधुसूदनी

अत्र पद्ये संक्षिप्तादेकस्माद्वाक्यात् "इदं नयनम् एतेन नयनेन, एतन्नयनमनेन नयनेन तुलनां समधिरोहति इति वाक्यद्वयं विवारकं विवरणकारकमुदञ्चति।

अन्योन्येनेति। अन्योन्यम् परस्परम् प्रतियोगि यस्यामुपमायां सा अन्योन्यप्रतियोगिका। सर्वं वाक्यं सावधारणं भवतीति न्यायात् अन्योन्यावेव प्रतियोगिनौ न तु अन्योन्याभ्यामतिरिक्तस्तृतीयः कश्चित्साद‍ृश्ये प्रतियोगी भवितुमर्हति। एवं तृतीय सदृशस्याभावो व्यवच्छेदः सुतरां फलति। इदं रहस्यम्। अत्र अन्यपदेन वर्ण्याद्भिन्नो न ग्राह्यः। किन्तु वर्ण्य एव। उपमानाद्भिन्न इति कृत्वा उपमेय अन्यः कथ्यते।

### बालक्रीड़ा

उनमें स्फुट वाक्य भेद वाली सभी पहिले बतलाई हुई हैं। आर्थ वाक्य भेद वाली तो जैसे—हे अम्बुजानने ? ये तुम्हारे दोनों नयन जो कि अभिरामता के सौन्दर्य के सदन हैं घर हैं अतएव जनता के मन को हरने वाले हैं इनकी तुलना इतनी विशाल विधि की सृष्टि में यदि किसी से हो सकती है तो परस्पर में ही हो सकती है। यहाँ परस्पर में तुलना हो सकती है इस संक्षिप्त वाक्य से यह इसके समान है। इसके समान यह है ये दो वाक्य विवारक विवरण करने वाले उद्भूत हैं।

इसके बाद पूर्णा एवं लुप्ता उपमा की तरह इसके भी प्रायः सभी भेद हो सकते हैं। उनको हमारे कहे हुए प्रकार से बुद्धिमान् लोग समझ सकते हैं इसलिए यहाँ इनका निरूपण नहीं करते हैं।

चित्रमीमांसाकार ने तो प्राचीन लक्षण को अव्याप्ति और अतिव्याप्ति आदि से दूषित कर के अपना लक्षण स्वयं कहा है। वह यह है अन्योन्येन। इसका अर्थ पदकृत्य के सहित उन्हीं की कही हुई रीति से सहृदययों को सुगमता से जानकारी हो जाय इसलिए संक्षेप में कहते हैं।

इति स्वयं लक्षणमाहुः। अस्यार्थः संक्षेपेण सपदकृत्यस्तदुक्तरीत्या सहृदयानां सौकर्यायोच्यते—अन्योन्येनेति। अन्योन्यप्रतियोगिकत्वविशिष्टा व्यक्त्या व्यञ्जनाव्यापारेण वृत्त्यन्तरेण शक्त्या वा बोध्या वेद्या एकधर्माश्रया एकधर्मप्रयोज्या या उपमा सा उपमेयोपमा मतेत्यन्वयः। अन्योन्येनेति विशेषणादिदं तच्च सममित्युभयविश्रान्तोपमाया निरासः। अत्रान्योन्यप्रतियोगिकत्वस्य व्यञ्जनव्यापारमात्रगम्यत्वेनोपमायाश्च शक्ति-

### मर्मप्रकाशः

तावत्' इत्यत्रातिव्याप्तिरिति भावः। तृतीयार्थः प्रतियोगित्वमित्याशयेनाह—अन्योन्यप्रतीति। लक्षणाया असंभवादाह—शक्त्येति। इवादिसत्त्वे इति भावः। विश्रान्तेति। उभयत्र पर्यवसिता न श्रौती तस्यामित्यर्थः। शक्तीति। समपदेत्यादिः। ननु

### मधुसूदनी

अत एव वर्ण्येन उपमेयेन उपमा उपमेयोपमेति व्यवहारः। अन्योन्येन अत्र तृतीयार्थः प्रतियोगित्वं तेन अन्योन्यप्रतियोगिकम् उपमेयप्रतियोगिकं सादृश्यं लभ्यते उपमानप्रतियोगिकं सादृश्यं तु प्रसिद्धमेव। प्रीतपालंकारं विहाय सर्वत्रालंकारे उपमेयं सादृश्ये

अनुयोग्येव। उपमानं प्रतियोग्येव। किन्तु यत्राऽलंकारे उपमानं तु सादृश्ये प्रतियोगी अस्त्येव उपमेयमपि सादृश्ये प्रतियोगि स्यात् सोपमेयोपमा बोध्या। ननु उपमेयोपमा, उपमैव बोध्या। कुत इति चेच्छृणु। चन्द्रसदृशं मुखं तदैव कथनीयं यदा मुखसदृशश्चन्द्रः स्यात् अन्यथा चन्द्रस्य मुखसदृशत्वाभावे चन्द्रसदृशत्वं मुखस्य न स्यात्। अतः पूर्वं चन्द्रस्य मुखसदृशत्वमभिप्रायणीयम्। एवं तु आगतं सादृश्ये उपमेयमपि प्रतियोगि भवतीति चेत्सत्यम्।

मनसा, व्यञ्जनया वा तथा बोधो न तु शब्देन अभिधया। एवञ्च उपमानोपमेययोः सादृश्यप्रतियोगिताया सादृश्यस्य च उभयोरभिधया व्यञ्जयया वा बोधेऽयमलंकारः तथा च तयोरभिधया बोधः स्पष्टे वाक्यद्वये, व्यञ्जनया तु आर्थे वाक्यद्वये भवति। इति ज्ञेयम्।

पदकृत्यमाह—अन्योन्येनेति। लक्ष्णे अन्योन्येति पददानात्, तच्च इदञ्च

### बालक्रीड़ा

अन्योन्य परस्पर में जहां प्रतियोगिता रहे' जो व्यंजना या अभिधा के द्वारा जानी जाय और जो एक धर्म से प्रयोज्य हो ऐसी जो उपमा वह उपमेयोपमा मानी गई है। यह अन्वय है। अन्योन्येन इस विशेषण के उपन्यास से "यह और वह सम है" इस उभय में विश्रान्त होने वाली उपमा का निरास हो गया।

यहां का तत्त्व यह है कि इदं तच्च समम् इस वाक्य में उपमा तो समम् शब्द से

वेद्यतया परस्परनिरपेक्षेणैकेन व्यापारेणान्योन्यप्रतियोगिकत्वविशिष्टायास्तस्या अबोधनात्, परस्परनैरपेक्ष्यस्यात्र वाकोरेणाभिधानात्, एकधर्माश्रयेति विशेषणात् 'रजोभिर्भूरिव द्यौर्घनसंनिभैर्गजैश्च द्यौरिव भूः' इति कस्यचित्पद्यस्यार्थे परस्परोपमायां नातिव्याप्तिः। तत्रोपमाप्रयोजकधर्मैक्याभावाद्भूतलोपमानिकायां प्रयोजकस्य रजसामनुगामिधर्मस्य नभस्तलोपमानिकायां

## मर्मप्रकाशः

मिथो निरपेक्षत्वं न निविष्टमत आह—परस्परेति। अन्यथा पक्षान्तरकथनासंगतेरिति भावः। अर्थे इति। अर्थरूपायां तस्यामित्यर्थः। रजसामिति। प्रयोजकीभूतरजोऽ-

## मधुसूदनी

सममिति उभयविश्रान्तोपमाया निरासः परिहारः। यतोऽत्र इदंप्रतियोगिकसादृश्याश्रयस्तत्, तत्प्रतियोगिकसादृश्याश्रय इदमित्येवमंशद्वयम्। एकः सादृश्यनिरूपकांशः प्रतियोगिरूपः, द्वितीयः प्रतियोगिनिरूप्यः सादृश्यांशः। तत्र इदमिति तदिति सममिति त्रयाणां समानविभक्तिकत्वात्। इदमर्थे तदर्थे चोभयत्र विश्रान्ता उपमा समपदोपस्थाप्यतया वाच्या इति प्रतियोगिनिरूप्यः सादृश्यांशः समपदशक्तिवेद्यः। अनेन समं तत्, तेन सममिदमिति स्फुटं वाक्यभेदाभावात् सादृश्यनिरूपकेदंतद्रूपप्रतियोगिभूतांशो व्यक्तिवेद्यः। ततश्च वृत्त्यन्तरनिरपेक्षव्यक्तिव्यापारेण, व्यक्तिनिरपेक्षवृत्त्यन्तरव्यापारेण एकेनेत्युभयान्वयि। तस्या उपमायाः। अत्र उपमेयोपमालक्षणे वाकारेण परस्परप्रतिक्षेपकविकल्पार्थेनेत्यर्थः।

एकधर्माश्रयेति सादृश्यप्रयोजको धर्म एकः समान एवात्रापेक्षितः। धर्मभेदे हि उपमैव स्यान्नत्वियमिति विवेकः। तेन हि—

रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः। भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम्

## बालक्रीड़ा

अभिधा के द्वारा बोध्य है। और अन्योन्य प्रतियोगिकत्व अर्थात् यह उसके समान है। वह इसके समान है इस तरह सादृश्य के प्रतियोगी पारी २ से दोनों होते हैं यह बात व्यंजना के द्वारा प्रतीत होती है फलतः उभयविश्रान्त उपमा में शक्ति एवं व्यंजना दोनों का ही उपयोग होता है याने दोनों रहेंगी तभी उपमा का बोध होगा अन्यथा नहीं अतः परस्पर निरपेक्ष एक व्यापार से उपमा का बोध नहीं होता है। यह स्थिति उपमेयोपमा में नहीं है। उसमें तो वाक्य भेद जब स्फुट रहेगा तब अभिधा से वह बोध्य होगी और वाक्यभेद जब अस्फुट याने आर्थ रहेगा तब वह व्यंजना सें अर्थात् एक समय में एक ही शक्ति का जहां उपयोग रहे वह उपमेयोपमा है। इसी परस्पर निरपेक्षता को वाकार बतलाता है।

"एकधर्म से प्रयोज्य" इस विशेषण से—

रजोभिः स्यन्दनोद्धूतैः गजैश्च घनसन्निभैः।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम्॥

प्रयोजकस्य घनसदृशगजानां बिम्बप्रतिबिम्बभावापन्नधर्मस्य च भेदात्। व्यक्त्येति च विशेषणं व्यङ्ग्योपमेयोपमासंग्रहार्थमितीदमुपमेयोपमात्वप्रयोजकं लक्षणमिति, तन्न।

'अहं लतायाः सदृशीत्यखर्वं गौराङ्गि ! गर्वं न कदापि यायाः।
गवेषणेनालमिहापरेषामेषापि तुल्या तव तावदस्ति ॥'

मर्मप्रकाशः

भिन्नानुगामीधर्मस्येत्यर्थः। समानविभक्तिकत्वस्येव समानवचनत्वस्याभेदान्वये न तन्त्रत्वमिति भावः। एवमग्रेऽपि। घनगजयोर्भेदेन साधारणत्वं कथमत आह—बिम्बेति। प्रयोजकमिति। अनुगतानतिप्रसक्तलक्षणमात्रं तु 'सदृशस्य तृतीयस्य व्यवच्छेदाय यद्वयोः। अन्योन्येनोपमेयत्वमुपमेयोपमा मता ॥' इति द्रष्टव्यम्। अत्रान्योन्येनेति विशेषणम् 'अहमेव गुरुः सुदारुणानाम्' इति प्रतीपविशेषव्यावृत्त्यर्थमिति भावः। अहमिति। लतानुयोगिकसादृश्यसयाश्रयाहमित्यर्थः। अखर्वं महान्तम्। एषापीति। त्वदनुयोगिकसादृश्यप्रति-

मधुसूदनी

भूतलम्। इत्यत्रोपमाप्रयोजकधर्मयोरेकत्वाभावान्नातिप्रसक्तिर्लक्षणस्य। अहमिति। हे गौराङ्गि ? अहं लतायाः सदृशी इति अखर्वं महान्तं गर्वं कदापि काले न यायाः न प्राप्नुयाः। यतः इह स्थले अपरेषां सदृशवस्तूनां गवेषणेनालम्। एषाऽपि तावत् तव तुल्या अस्ति।

इदं पद्यं परस्परोपमाया लक्ष्यमस्ति। किन्तु लताया इत्यत्र तव इत्यत्र च षष्ठ्यर्थः प्रतियोगित्वमिति मनसि निधाय "लताप्रतियोगिकसादृश्यवती अहम्। त्वत्प्रतियोगिकसादृश्यवती एषेति" अन्योन्यप्रतियोगिकत्वविशिष्टोपमायाः शक्त्या बोधनादुपमेयोपमात्वस्यापत्तिः समुत्थापिता। तनुत्वादीत्यत्र आदि पदार्थो विक-

बालक्रीड़ा

किसी के रचित इस पद्य के अर्थों में रहने वाली परस्पर उपमा में अतिव्याप्ति नहीं हुई। क्योंकि यहां उपमा का प्रयोजक धर्म एक नहीं है। भूमि के सदृश द्यौ है इस भूमिके उपमान स्थल में सादृश्य का प्रयोजक अनुगामी धर्म रज है और द्यौ के सदृश भूमि है इस नभ के उपमान स्थल में सादृश्य प्रयोजक बिम्ब प्रतिबिम्बभावापन्नधर्म घन सदृश गज है। इस तरह धर्मों में भेद है।

व्यक्त्या यह विशेषण व्यंग्य उपमेयोपमा के संग्रह के लिए है। इस तरह यह लक्षण उपमेयोपमा का प्रयोजक है साधक है। इस पर पण्डितराज कहते हैं कि यह ठीक नहीं है। इसको एक उदाहरण से स्पष्ट करते हैं।

हे गौराङ्गि ? मैं लता के सदृश हूं ऐसा महान् गर्व कभी भी नहीं करो। औरों के खोजने की जरूरत नहीं है यही लता तुम्हारे सदृश है।

अत्रान्योन्यप्रतियोगिकत्वविशिष्टाया उपमायास्तनुत्वादिरूपैकधर्माश्रयाया वृत्त्यन्तरेण शक्त्या बोधनादुपमेयोपमात्वापत्तेः। न चात्रान्योन्यप्रतियोगिकत्वमुपमायां न प्रतीयते। लतादिसंबन्धिसादृश्याश्रयत्वस्यै-

### मर्मप्रकाश

योगिकेत्यर्थः। अत्रेत्यस्य इतीत्यादिः। तनुत्वेत्यस्य अनुपात्तेत्यादिः। लतादीति। लताद्यनुयोगिकसादृश्यप्रतियोगिकत्वस्यैवेत्यर्थः। एवेन सादृश्यव्यवच्छेदः। सदृशादिपदानां धर्मिबोधकत्वात्। एवं च सादृश्यस्य तत्रान्वये इयं न तु तत्रेति भावः।

### मधुसूदनी

सितत्वादिः। स च उक्तो न, किन्तु व्यक्तः। एकधर्मेत्यत्र एकत्वं संख्या न गृह्यते किन्तु समानत्वम्। अत एव तनुत्वादीति आदिपदोल्लेखः पण्डितराजस्य संगतः। अन्यथा संख्याया एकत्वस्य ग्राह्यत्वे तु सोल्लेखः असंगत एव स्यात्। आदिपदग्राह्यस्य द्वित्वसंख्यानुस्यूतत्वात्। आश्रयत्वमनुयोगित्वम्।

ननु यथा लताया इति पद्ये सगर्वे ? इति सम्बोधनाशयेन "अहं लताया उपमानमस्मि इति गर्वं मा विदध्याः एषा लतापि तवोपमानमस्ति" इति यथा व्याख्यातं तथैव गर्वं न याया इति प्रकृतपद्येऽपि वर्त्तते। तथा च सम्बन्धसामान्ये षष्ठी वर्तते ततः लतासम्बन्धिसादृश्याश्रया अहमिति रूपेण तदाश्रयत्वस्य अस्मत्पदार्थेऽन्वयात् अन्योन्यानुयोगिकत्वमेव प्रतीयते न तु अन्योन्यप्रतियोगिकत्वमुपमायां प्रतीयते। इति चेन्न। न च वाच्यमित्यन्वयः। एवं हि लताया इति तवेति च सम्बन्धसामान्ये षष्ठी तदर्थमनुयोगीति च मनुषे तर्हि "मुखस्य सदृशश्चन्द्रः" "चन्द्रस्य सदृशं मुखम्" इत्यत्रापि सैव कथा स्यात्तथा चात्रोपमेयोपमाया लक्षणस्य व्याप्तिर्न भविष्यति। इति महान् दोषः स्यात्।

### बालक्रीड़ा

यह परस्परोपमा का उदाहरण है। किन्तु विशेषता यह है कि यहां सादृश्य का प्रयोजक साधारण धर्म गौरत्व स्वच्छत्व एक है। और एक अभिधा शक्ति से यह बोध्य है अतः इस उदाहरण में उपमेयोपमा है न कि उपमा। इतनी बात जरूर जानने की है कि पण्डितराज का तनुत्वादि रूप एकधर्माश्रया कहना चिन्तनीय है। पहले तो तनुत्व धर्म यहाँ बन ही नहीं सकता है। क्योंकि तनुत्व माने क्षीणत्व, लता का क्षीण होना माने सूखना है सूखी हुई लता क्या उपमान बनेगी। सौन्दर्य नही होगा। यद्यपि तनुत्व धर्म वाच्य नहीं है तद्यपि व्यंग्य मानकर यहां शंका समाधान है। हे गौराङ्गि ? से स्पष्ट अतिस्पष्ट गौरत्व स्वच्छत्व धर्म यहां है। दूसरी बात है कि यहाँ आदि पदका विन्यास है उसका आशय है कि एक तनुत्व धर्म तो है ही और भी धर्म हैं। तब अनेक धर्माश्रया हुई न कि एक धर्माश्रया। जब अनेकधर्माक्षया है तब तो प्रश्न को अवसर ही नहीं है।

प्रश्न—यहां उपमा में अन्योन्यप्रतियोगिकत्व प्रतीत नहीं हो रहा है। यहां लतायाः औ र तव ये दोनों सम्बन्ध सामान्य में षष्ठी हैं। अतः लता सम्बन्धी सादृश्य की आश्रय

वास्मत्पदार्थेऽन्वयादिति वाच्यम्। 'मुखस्य सदृशश्चन्द्रश्चन्द्रस्य सदृशं मुखम्' इत्युपमेयोपमायामव्याप्तेः। नह्यहं लताया इत्यत्रोपमेयोपमा भवितुमर्हति। गर्वमात्रनिरासपरत्वेनोत्तरार्धोपमायास्तृतीयसदृशव्यवच्छेदाप्रतिपत्तेः। अत एव अन्यान्यपि तव सदृशानि सन्त्येव तेषां गवेषणेन किं फलमित्येतदर्थकं

## मर्मप्रकाश

मुखस्येति। अत्रापि सदृशपदसत्त्वेन तत्तुल्ययोगक्षेमत्वादिति भावः। नन्वेवं तथा दुर्वचमिति यथैतत्संग्रहस्तथाह—लताया इति। अस्यापि संग्रह इष्ट एवेति अतिव्याप्तिर्नात अ ह— नह्यहमिति। ननु तन्मात्रपरत्व एव किं बीजमत आह—अत एवेति। तत्परत्वेन

## मधुसूदनी

ननु नातिव्याप्तिः दोषोऽत्र। यतो हि सादृश्यं सम्बन्धः' तस्य एकोऽनुयोगी परः प्रतियोगी इति द्वौ अंशौ। ताभ्यां विना तस्य स्थितिरेव दुर्लभा। ततः अन्योन्यप्रतियोगिकत्वविशिष्टोपमा वा अन्योन्यानुयोगिकत्व'वशिष्टोपमा वा उच्यताम्। नास्ति कश्चिद् व्यामोहः। एकस्य प्रतीतौ परस्यापि प्रतीतिरस्त्येव अतो लतासम्बन्धिसादृश्याश्रयत्वस्यास्मत्पदार्थेऽन्वयादपि अन्योन्यप्रतियोगिकत्वमुपमायां प्रतीयत एव। ततश्चाहं लताया इत्यत्र पद्ये तादृशप्रतीतावतिव्याप्तिः स्यादुपमेयोपमात्वापत्तेरिति चेदाह—नहीति। ननु कुतो नासौ भवितुमर्हतीत्याह—गर्वेति। "एषापि तावत् तव तुल्या अस्ति" इत्युत्तरार्द्धे पद्यस्य उत्तरभागे निर्दिष्टया उपमया कथयति नायिका, गर्वो नाप्यते मया गवेष्यतां लोके अहमद्वितीया तनुत्वगौरत्वविकसितत्वधर्मेभ्यः। तदुत्तरति। अन्यत्र गवेषणेनाऽलमेषापि तव तुल्येति गर्वस्य केवलं निरासः प्रतीयते न तु तृतीयसदृशस्य व्यवच्छेदः प्रतीयते। तदेतदुक्तं=व्यच्छेदाप्रतिपत्तेरिति।

अतएव उपमायास्तत्परत्वेन तद्व्यवच्छेदाप्रत्तिपत्तेरेव। उत्तरार्द्धमिति "वा

## बालक्रीड़ा

में हूँ और मत्सम्बन्धी सादृश्य की आश्रय लता है यही अन्वय यहाँ है। किन्तु एकप्रतियोगिक अपरानुयोगिक एवं एकानुयोगिक अपरप्रतियोगिक सादृश्य का अन्वय यहाँ नहीं है।

उत्तर—ऐसा नहीं कहना चाहिए। यदि ऐसा कहेंगे तो मुखस्य सदृशश्चन्द्रश्चन्द्रस्य सदृशं मुखम् में भी मुखसम्बन्धी सादृश्य का आश्रय चन्द्र है और चन्द्र सम्बन्धी सादृश्य का आश्रय मुख है यही अन्वय होगा और अन्योन्यप्रतियोगिकत्व एवं अन्योन्यानुयोगिकत्व की प्रतीति नहीं होगी फलतः उपमेयोपमा के लक्ष्य में लक्षण व्याप्त नहीं होगा अव्याप्ति रूप दोष लग जायगा।

तब कहते हैं। अच्छा। लताप्रतियोगिक सादृश्य की अनुयोगिनी मैं नायिका और मत्प्रतियोगिक सादृश्य की अनुयोगिनी लता इस तरह अन्योन्यप्रतियोगिकत्व की प्रतीति होने से यह उपमेयोपमाका ही लक्ष्य है।

इस पर सिद्धान्त करते हैं कि अहं लताया इसमें उपमेयोपमा हो ही नहीं सकती है।

गवेषणेनेत्युत्तरार्धं संगच्छते। तृतीयसब्रह्मचारिव्यवच्छेदो ह्युपमेयोपमा-जीवितमित्यालंकारिकसिद्धान्तः। अन्यथा 'भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम्' इत्यत्राप्युपमेयोपमात्वनिवारणप्रयासवैयर्थ्यापत्तेः। न च

## मर्मप्रकाशः

तस्याः साफल्यादेवेत्यर्थः। उत्तरार्धं तदेकदेशः। अन्यथा तुर्यचरणेनैवेष्टार्थलाभे मध्ये एतत्कथनानर्थक्यं स्पष्टमेवेति भावः। नन्वेवमपि तृतीयसदृशव्यवच्छेदप्रतीतावेवेयमित्यत्र किं विनिगमकमत आह—तृतीयेति। सब्रह्मेति। सदृशेत्यर्थः। एवमग्रेऽपि बोध्यम्। 'सिद्धान्त' इति पाठः। 'सिद्धान्तात्' इत्यपपाठः। अन्यथा तस्य तज्जीवितत्वानङ्गीकारे।

## मधुसूदनी

पुंस्यर्धः" इत्यमरोक्तेः उत्तरार्द्ध इति वक्तव्ये क्लीबत्वमपि संगच्छते। अन्यथा तादृशालंकारिकसिद्धान्तस्वीकाराभावे। प्रयासेति। गगनस्य भूतलेन सादृश्ये रजोव्याप्तत्वं अनुगामी साधारणधर्मः। भूतलस्य गगनेन सादृश्ये गजानां मेघानां च बिम्बप्रतिबिम्बभाव इत्यत्यन्तविलक्षणत्वात्। अत एवात्र तृतीयसब्रह्मचारिव्यवच्छेदरूपं फलमपि न सिद्धयति। एकधर्माश्रयेण परस्परं साम्ये वर्ण्यमाने हि अनयोरस्मिन् विषये तृतीयः सब्रह्मचारी नास्तीति फलति। कस्यचित् केनचित् सादृश्ये वर्णिते तस्याप्यन्येन सादृश्यमर्थतः सिद्धमपि मुखतो वर्ण्यमानं तृतीयसदृशव्यवच्छेदाय भवतीति तत्फलकत्वं बीजम्। न चैतद् धर्मसाधारण्य इव धर्मभेदेऽपि लभ्यते। रजोभिर्गगनस्य भूतलसादृश्यवर्णनेन भूतलस्य मेघाकारैर्गजैर्गगनसादृश्यस्यार्थतः सिध्यभावादिति प्रयासस्य।

## बालक्रीड़ा

क्योंकि जो गौराङ्गी अखर्ग गर्व करती थी कि मेरी जैसी विश्व में कोई नहीं है। मैं अद्वितीय हूं उस पर कहा कि हे गौराङ्गि ? कभी भी गर्व नहीं करना तुम्हारी जैसी यह भी है इस तरह नायिका के गर्व के निरास करने में उत्तरार्द्ध तत्पर हैं अतएव उपमेयोपमा के प्राण तृतीय सदृशव्यवच्छेद की प्रतीति नहीं होती है। और उत्तरार्द्ध में उपात्त गवेषणेन इस पद की भी संगति बैठ जाती है कि और भी तुम्हारी जैसी हैं ही उनके खोजने का कोई फल नहीं है। तृतीय सदृश व्यवच्छेद ही उपमेयोपमा का जीवातु है इस आलंकारिक सिद्धान्त को नहीं मानने पर तो "भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम्" इस लक्ष्य में उपमेयोपमा के निवारण करने का प्रयास फिर व्यर्थ ही हो जायगा।

कहते हैं कि जिस फलको आप उपमेयोपमा का जीवातु बतलाते हैं उसका हमने लक्षण में उपन्यास ही नहीं किया। और जिस विशेषण का हमने लक्षण में उपन्यास किया है वह विशेषण अन्योन्यप्रतियोगिकत्व अहं लतायाः और भुवस्तलमिव व्योम इन दोनों में संगत है। इस पर कहते हैं कि नहीं-नहीं। जीवातु भूत विशेषण को भी यहां देना चाहते हैं। अतः उपमा विशेषण के रूप में उसका भी उपन्यास करिये।

तृतीयसदृशव्यवच्छेदफलकत्वमुपमाविशेषणं वाच्यम्। विशेषणान्तर-वैयर्थ्यापत्तेः। विशेषणव्यावर्त्यानामाधुनिकविशेषणेनैव वारणात्। अन्योन्य-प्रतियोगिकत्वविशिष्टा उपमा एकवृत्तिमात्रवेद्येत्यप्ययुक्तमेव। 'खमिव जलं

### मर्मप्रकाशः

वाच्यमिति। 'अहं लतायाः' इत्यत्रातिव्याप्तिवारणायेदानीं वक्तव्यमित्यर्थः। विशेषणान्तरेति। अन्योन्येनेत्यादीत्यर्थः। नन्वेवं कथमुक्तदोषनिरासोऽत आह—विशेषणेति। विशेषणान्तरे-त्यर्थः। तदुक्तमन्यद् दूषयति—अन्योन्येति। प्रतियोगित्वस्येति। अनुयोगित्वविशिष्टे-

### मधुसूदनी

ननु तृतीयसदृशव्यवच्छेदो हि फलमुपमेयोपमाजीवितं भवतोच्यते। परं लक्षणे तन्नोपन्यासि। यदुपन्यासि अन्योन्यप्रतियोगिकत्वं तत् "अहं लतायाः सदृ-शीत्यत्र" "भूतलमिव व्योम, व्योमेव भूतलमित्यत्र" च वर्त्तते। अथ तदपि अपेक्ष्यते चेत्, तर्हि, उपमाविशेषणत्वेन तदुपन्यस्यतामिति चेन्न। तथा विशेषणं न च वाच्यम्। कुत इति चेदाह—विशेषेति। विशेषणान्तरस्य दास्यमानविशेषणापेक्षया भिन्नस्य एकधर्माश्रयेति विशेषणस्य वैयर्थ्यं स्यात्। नहि धर्मभेदे एतत्फलं लभ्यते। धर्मस्य एकत्वे एवैतल्लभ्यते। अत एकधर्माश्रयेत्यनेनैव विशेषणेन एतल्लाभेऽपि तत्फलकत्वमुपमाया विशेषणमुच्यते चेत्तस्य वैयर्थ्यं सुतरां सिद्धमिति भावः।

दास्यमानविशेषणेन व्यावर्त्यानां निराकरणीयानाम्। आधुनिकेन वर्त्तमानेन।

अन्योन्येति अन्योन्यप्रतियोगिकत्वविशिष्टोपमा विषयिणी या एका वृत्तिः व्यक्तिरभिधा वा तन्मात्रवेद्या इत्यपि यदुच्यते तदपि अयुक्तमेव। ननु कुतोऽयुक्त-

### बालक्रीड़ा

इसपर उत्तर देते हैं कि यह ठीक नहीं है कि तृतीय सदृशव्यवच्छेद फलकत्व को विशेषण के रूपमें रखना चाहिए। क्योंकि उपमा में ऐसा यह उच्यमान विशेषणान्तर अर्थात् दास्यमान विशेषण व्यर्थ हो जायगा। क्योंकि दास्यमान तृतीयेत्यादि विशेषण के द्वारा व्यावर्त्य निराकणणीय तत्त्वों का आधुनिक (वर्त्तमान) विशेषण एकधर्माश्रया से ही वारण हो जायगा। धर्मों के भेद में यह तृतीय सदृशव्यवच्छेद फल नहीं मिल सकता है वह तो उपमा के एक धर्म से प्रयोज्य होने पर ही मिल सकता है क्योंकि धर्मों के भेद में अलग २ उपमाएँ होगी। उस के प्रतियोगी भी भिन्न २ होंगे अन्योन्य नहीं होंगे। अतः जो फल एक धर्माश्रया कहने से मिल जाता है उसी फल को यदि शब्द से पुनः कहेंगे तो वह विशेषण अवश्य व्यर्थ हो जायगा।

और अन्योन्य प्रतियोगिकत्वविशिष्टा उपमा का किसी भी केवल एक ही वृत्ति अभिधा या व्यंजना से बोध होना चाहिए यह भी कहना ठीक नहीं है। क्योंकि खमिव जलं जलमिव खम्" इसमें ख और जल का सादृश्य के साथ अन्वय करने में जो प्रतियोगित्व अंश प्रतीत होता है वह आकांक्षादिभास्य है अतः संसर्ग होता है जो संसर्ग है वह वृत्ति अभिधादि से वेद्य नहीं

जलमिव खम्' इत्यादौ खजलयोः सादृश्यान्वये प्रतियोगित्वस्य संसर्गत्वेन वृत्त्यविषयत्वात्। वृत्तिवेद्यानां पदार्थानां संसर्गो वृत्त्यवेद्य इत्यभ्युपगमात्। अन्यथा प्रकारतापत्तेः।

यदप्यलंकारसर्वस्वकृतोक्तम् 'द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा।

मर्मप्रकाशः

त्यादिः। ननु तस्य वृत्तिविषयत्वं कुतो नेत्याह—वृत्तीति। उक्तग्रन्थस्यैकवृत्तिमात्रवेद्यत्वे न तात्पर्यं किं तु वृत्तिद्वयवेद्यत्वाभावे। यद्वा तज्जन्यप्रतीतौ यथाकथंचिद्भासमानत्वमेव तन्मात्रवेद्यत्वम्। अस्ति च 'खमिव जलम्' इत्यादौ। नास्ति च तत्रेति तन्निरास इत्याशयेनादोषाच्चिन्त्यमिदम्। द्वयोरिति। द्वयोः पर्यायेण तस्मिन् सतीत्यर्थः। अत्रेत्यस्यात

मधुसूदनी

मित्याह—खजलयोः। न च वृत्त्यन्तरावेद्यत्वे सति तद् वृत्तिवेद्यत्वमेव मात्रपदार्थः। संसर्गस्य वृत्त्यन्तरावेद्यत्वेन मात्रपदसार्थक्यादिति वाच्यम्। खमिव इत्यत्र जलमिव इत्यत्र च खस्य जलस्य च इवार्थसादृश्येनान्वये बुभुत्सिते प्रतियोगित्वं संसर्गः, संसर्गश्च आकांक्षादिभास्य एव न तु वृत्तिवेद्यः। तदेतदुच्यते—प्रतियोगित्वस्य संसर्गत्वेन आकाक्षांदिभास्यत्वेन वृत्तेरभिधाया व्यञ्जनाया वा अविषयत्वादिति। अन्यथा संसर्गस्य वृत्त्यवेद्यत्वास्वीकारे अर्थात् वृत्तिवेद्यत्वस्वीकारे प्रतियोगित्वस्य खत्व जलत्ववत् प्रकारता स्यात् न तु संसर्गत्वम्। "द्वयोरुपमानोपमेययोः पर्यायेण क्रमेण तस्मिन् उपमेयोपमानत्वे उपमेयोपमा" इति लक्षणार्थः।

द्वयोरिति। कमलेव मतिः, मतिरिव चेष्टा, चेष्टेव भणितिरिति रशनोपमायां द्वयोरतिव्याप्त्यात्र परस्परमुपमानोपमेयत्वं विवक्षितव्यम्। न पुनर्द्वित्वसंख्याकयोः।

बालक्रीड़ा

होता है। क्योंकि नियम है कि वृत्ति से वेद्य पदार्थों का संसर्ग प्रतियोगित्व और अनुयोगित्व प्रभृति, वृत्ति से वेद्य नहीं होते हैं यही अभ्युपगम है स्वीकृति है। यदि ऐसी स्वीकृति उनको नहीं मिलेगी तो वह संसर्ग, संसर्ग न होकर प्रकार कहलायेगा।

यहां का भाव यह है कि ख का अर्थ आकाश और इव का अर्थ सादृश्य है। और बोध होता है ख प्रतियोगिक सादृश्य इसमें जो प्रतियोगित्व अर्थ प्रतीत होता है वह कहां से आया। वह तो आकांक्षादि संसर्गमर्यादा से मिलता है अतः वह संसर्ग वृत्ति से वेद्य नहीं है।

जो तो अलंकार सर्वस्वकार ने कहा कि दोनों के पदार्थों में पर्याय से दोनों अर्थों के उपमानत्व और उपमेयत्व हों वह उपमेयोपमा है। और यहाँ तस्मिन् पद के द्वारा उपमानोपमेयत्व का ग्रहण करना है। पर्याय का अर्थ है [illegible] नहीं किन्तु दोनों पदों के उपमानोपमेयत्व मात्र होना। [illegible] होने चाहिए।

तच्छब्देनोपमानोपमेयात्वप्रत्यवमर्शः। पर्यायो यौगपद्याभावः। अत एवात्र वाक्यभेदः' इति, तन्न। अत्र द्वयोरिति व्यर्थम्। एकस्योपमानोपमेयात्मकत्वे 'गगनं गगनाकारम्' इत्यादौ वाक्यभेदाभावेन पर्यायाभावादेवाप्रसक्तेः। यदि च स्फुटत्वार्थमुपमानोपमेयत्वयोग्यतासंपादकलिङ्गवचनभेदराहित्यप्रत्तिपत्त्यर्थं कविसमयप्रसिद्धिस्फोरणार्थं वा द्वयोरिति ग्रहणं स्यात्। अथापि प्रागुदीरिते 'अहं लतायाः सदृशीत्यखर्वम्' इति पद्ये प्रतिपाद्यायामुपमायामतिव्याप्तेः।

### मर्मप्रकाशः

इत्यादिः। ननु स्फुटार्थत्वेऽन्येषामपि निवेशः कुतो नात आह—उपमेति। तद्भेदेऽपि तद्योग्यतायाः सत्त्वादाह—कवीति। इष्टापत्त्या नातिव्याप्तिरत आह—तदिति।

### मधुसूदनी

तेन कान्ताननस्य, कमलस्य, सुधाकरस्य पूर्वं परस्परमभूदुपमानभावः। सद्यो जगत्तुङ्गनराङ्कुसराङ्कुतानामन्यः परस्परसमावरणः प्रसृतः। इत्यत्र त्रयाणामपि परस्परमुपमानोपमेयभावादुपमेयोपमात्वं वर्तते। तच्छब्देन तस्मिंस्त्रिस्यनेन। यौगपद्याभावः क्रमेण विन्यासात्। अत एव यौगपद्याभावादेव। अत्रोपमेयोपमायाम्। गगनं गगनाकारं सागरः सागरोपमः। रामरावणयोर्युद्धं रामरावणयोरिव। युद्धं युद्धमिवेत्यन्वयः

नन्वत्र लक्षणवाक्ये। तस्मिंस्त्रिति तच्छब्देन उपमेयोपमानत्वयोः परामर्शः। तथा च उपमेयत्वं उपमानत्वं च विधेयम्। तत्र प्रश्नो जागर्ति किमुद्देश्यानयोर्विधेयत्वं, तत उद्देश्यपदार्थनिरूपणार्थं द्वयोरिति पदमावश्यकं न तु तद् व्यर्थम्। एवं द्वयोः परस्परमुपमानोपमेययोः उपमानस्य उपमेयत्वम्, उपमेयस्योपमानत्वं विधेयत्वमिति चेदाह—अथापीति प्रतिपाद्यायां निरूपणीयायाम्।

युगपदिति। उक्तं पर्यायेणेत्युक्त्या यौगपद्याभावो विवक्षितः किन्तु यथा परस्परतुल्यमित्युक्त्या युगपदेवात्र चक्षुःपद्मयोरुपमेयोपमानभावः समुदीतः। अतो

### बालक्रीडा

इसपर कहते हैं कि यह ठीक नहीं है। यहाँ 'द्वयोः' यह पद व्यर्थ है। क्योंकि जहाँ एक ही उपमान भी है और उपमेय भी है वहाँ 'गगनं गगनाकारम्' इत्यादि में दो वाक्य नहीं होने से पर्याय का अभाव है इसलिए उसकी व्याप्ति नहीं होगी।

अगर स्फुटता के लिए या उपमानोपमेयत्व की योग्यता सम्पादक लिंग वचन भेद के अभाव की प्रतिपत्ति के लिए या कवि समय प्रसिद्धि के स्फोरण के लिए, द्वयोः पद का ग्रहण किया हो तो सम्भव है व्यवस्था हो सकती है।

'पहले [illegible] 'अहं लतायाः [illegible]' इस [illegible]
[illegible]

'तद्वल्गुना युगपदुन्मिषितेन तावत्सद्यः
परस्परतुलामधिरोहततां द्वे ।
प्रस्पन्दमानपुरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥'

इति कालिदासपद्ये प्रतिपाद्यायामुपमानोपमेययोर्युगपदुपमेयोपामानभावायामुपमेयोपमायां वाक्यभेदाभावादव्याप्तेश्च । न चात्रापाततः शब्दैक्येऽपि पर्यवसितो वाक्यभेदोऽस्तीति वाच्यम् । तथापि—

## मर्मप्रकाशः

भावायामिति । उपमेयोपमानात्मिकायामित्यर्थः । विधवतीत्यादीन्याचारक्विबन्तानि । यथासंख्यमन्वयः । न चेति । नहीत्यर्थः । तथा च लक्ष्यत्वान्नातिव्याप्तिरिति भावः ।

## मधुसूदनी

वाक्यभेदाभावादव्याप्तिर्लक्षणस्य । आपातत इति । अयं भावः । सकृदुपात्तस्य वस्तुनस्तदैव काले उपमेयता वा उपमानता वा वक्तुमशक्येति । यद्यपि आपातत एकवाक्यत्वं तद्यपि पर्यवसाने वाक्यभेदोऽस्ति इति । अत्र वल्गुत्वं युगपदुन्मिषितत्त्वं चानुगामी । प्रस्पन्दमानत्वप्रचलितत्वयोर्वस्तुप्रतिवस्तुभावः । तारभ्रमरयोर्बिम्बप्रतिबिम्बभावः । तथापि पर्यवसाने वाक्यभेदेन अव्याप्तेरभावेऽपि ।

## बालक्रीड़ा

अब प्रश्न होता है कि विधेयत्व साकांक्ष है उद्देश्य में तो वह उद्देश्य कौन ? अतः इस आकांक्षा की पूर्ति के लिए द्वयोः इस उद्देश्यभूत अर्थ की आवश्यकता है । तदनुसार यह द्वयोः पद व्यर्थ नहीं है । इस पर कहते हैं कि अथापि । तब भी पहिले कहे हुए "अहं लतायाः सदृशीत्यखर्वम्" पद्य की प्रतिपाद्य उपमा में अतिव्याप्ति हो जायगी । तब कहते हैं कि यह तो उपमेयोपमा का ही लक्ष्य है अलक्ष्य नहीं है अतः अतिव्याप्ति नहीं हैं । तब दूसरा लक्ष्य बतलाते हैं ।

अनन्य शरणा लक्ष्मी के परिग्रहण से मनोज्ञ युगपदुन्मेष से दो पदार्थ सद्यः परस्पर तुलना को प्राप्त करें । एक तो चक्षु जिसके भीतर की कनीनिका हिल रही है और दूसरा पद्म जिसके अन्दर भौंरा घूम रहा है ।

इस कालिदास के पद्य में प्रतिपाद्य उपमेयोपमा जिसमें उपमान एवं उपमेय का उपमेयोपमान भाव युगपत् कहा गया है । उसमें इस लक्षण की व्याप्ति नहीं होगी । क्योंकि वाक्यभेद नहीं है । यह नहीं कह सकते हैं क्योंकि आपाततः एक वाक्य होने पर भी पर्यवसान में तो वाक्यभेद है ही । तब भी अर्थात् पर्यवसान में वाक्य भेद होने से अव्याप्ति के नहीं होने पर भी

मन जब सुख एवं दुःख के वशीभूत हो जाता है तब भीष्म ग्रीष्म की ज्वालाओं से परिवृत सूय भी शीतल चन्द्रमा सा हो जाता है । शीतल अमृत मय चन्द्र भी ज्वालाओ से कराल सूर्यसा मालम पड़ता है । रात्रियाँ दिनस्वरूप हो जाती हैं । और दिन रात्रि की तरह हो जाती है ।

'सविता विधवति विधुरपि सवितरति दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥'

इति कस्यचित्कवेः पद्ये परस्परोपमायामतिव्याप्तेः। न चेयमुपमेयोपमेति शक्यते वक्तुम्। सुखसमये दुःखदोऽपि सुखयति। दुःखसमये च सुखदोऽपि दुःखयति इत्येतावन्मात्रस्यार्थस्य विवक्षितत्वात्तृतीयसदृशव्यवच्छेदाप्रतिपत्तेः।

एवम्—

'रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः ।
भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥'

मर्मप्रकाशः

मात्रपदव्यवच्छेद्यं स्फुटत्वायाह—तृतीयेति ।

मधुसूदनी

सुखदुःखवशीकृते मनसीति उपलक्षणम्। रोगाक्रान्तस्य वा धीरस्य कृतप्रतिज्ञस्य वा कृते उष्णः शीतो भवति। शीत उष्णो भवति। उष्ण उष्ण एवेति। शीतः शीत एवेति व्यवस्था नास्तीत्यर्थः।

अंगणवेदी वसुधा, कुल्या जलधिः, स्थली च पातालम्।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य धीरस्य ।

इति वृषस्थभान्वातपः भीष्मग्रीष्मज्वालाजटिलोऽपि धीरस्य कृते शीतलो भवति। रात्रियुद्धे द्रोणपर्वणि यामिन्यो दिनन्ति। अन्धकारोऽपि युद्धावरोधको नाभूदिति रीत्या तृतीयसदृशव्यवच्छेदो नास्ति। किन्तु सुखदुःखादिवशीकृतमनसां कृते पदार्थस्वरूपव्यवस्था नास्तीति विवक्षितमतः उपमेयोपमाया अभावः एवेति पण्डितराजाशयः।

एवं सवितेति पद्यवत्। रजोभिरित्यत्रापि अतिव्याप्तिः। भूतलप्रतियोगिकव्योमानुयोगिकोपमायां रजोव्याप्तत्वमनुगामी धर्मः। व्योमप्रतियोगिकभूतलानुयोगि-

बालक्रीड़ा

इस किसी कवि के पद्य में कही गई परस्परोपमा में लक्षण अतिव्याप्त हो जायगा। नहीं-नहीं लक्षण की अतिव्याप्ति नहीं हुई। यह भी उपमेयोपमा ही है। ऐसा आप नहीं कह सकते हैं। क्योंकि यहाँ तृतीय सदृशव्यवच्छेद की प्रतीति नहीं होती है। यहाँ तो सुख के समय में दुःखद भी सुख देता है और दुःख के समय में सुखद भी दुःखदायी हो जाता है। यही विवक्षित है।

इस प्रकार रथ के पहियों से उठीहुई धूलियों से आकाश को पृथ्वी के सदृश। मेघों के से काले २ और विशालकाय हाथियों से भूतल को आकाश तुल्य करता हुआ रघु युद्ध यात्रा में प्रस्थान करता है।

इत्यत्र परस्परोपमायामतिव्याप्तिः। सदृशान्तरव्यवच्छेदफलकत्वेन विशिष्यमाणे तु तस्मिन्नस्मदुक्त एव पर्यवसानम्।

यच्च विमर्शिनीकारेणोक्तम् "स च वाक्यभेदः शाब्द आर्थश्च। तत्र शाब्दो यथा—'रजोभिः स्यन्दनोद्धूतैः' इत्यादि। अस्याश्चोपमानान्तरतिरस्कार एव फलम्। अत एवोपमेयेनोपमेत्यन्वर्थाभिधत्वम्" इति तत्तुच्छम्। न हि 'रजोभिः स्यन्दनोद्धूतैः' इत्यत्रोपमानान्तरतिरस्कारः प्रतीयते।

### मर्मप्रकाशः

सदृशान्तरेति। तृतीयसदृशेत्यर्थः। विशीति। विशेषविषयीकृते त्वित्यर्थः। तस्मिन्नुपमानोपमेयत्वे। अस्मदिति। तृतीयसदृशव्यवच्छेदेत्याद्युक्ते एवेत्यर्थः। विमर्शिनीति। अलंकारसर्वस्वव्याख्याकारेणेत्यर्थः। स चेति। मूलीयत्वेन प्रागुक्त इत्यर्थः। अस्या उपमेयोपमायाः। उपमानान्तरेति। तृतीयसदृशेत्यर्थः।

### मधुसूदनी

कोपमायां गगने गजानां, भूतले घनानामभावात् उभयोर्बिम्बप्रतिबिम्बभावाङ्गीकारेण घनसन्निभगजः साधारणधर्मः। इति पूर्वोत्तरोपमायां धर्मयोर्भेदात् तृतीयसदृशव्यवच्छेदाभावेन उपमेयोपमा नास्तीति।

अत्र केचिदाहुः। घनसन्निभैरिति पदं रजोगजोभयान्वयि। ततश्च घनसदृशानां रजोगजानां बिम्बप्रतिबिम्बभावेन (गगने रजोगजानां भूतले घनगजानामभावः) द्वयोरुपमयोरेकधर्मकत्वादत्र पद्येऽपि उपमेयोपमा भवितुमर्हेति।

तत्र पूर्वोपमायामुपमेये गगने वर्तमानानां घनगजानां बिम्बत्वम्। भूतले उपमाने वर्तमानानां रजोगजानां प्रतिबिम्बत्वम्। द्वितीयोपमायामुपमाने गगने वर्तमानानां घनगजानां प्रतिबिम्बत्वम्। भूतले उपमेये वर्त्तमानानां रजोगजानां बिम्बत्वम्। इति वैपरीत्यम्। यत उपमेयवृत्तीनां धर्माणां विम्बत्वम्।

उपमानवृत्तीनां तेषां प्रतिबिम्बत्वमिति सिद्धान्तात्। अमुमेव बिम्बप्रतिबिम्बभावमाश्रित्य रत्नाकर विमर्शिनीकौस्तुभकाराः रजोभिरिति पद्ये उपमेयोपमामनुवभूवुः। अनुपरीतो वा विपरीतो वा भवतु बिम्बप्रतिबिम्बभावो घनगजानां रजोगजानां वर्त्तते।

### बालक्रीड़ा

इस परस्परोपमामें अतिव्याप्ति हो ही गई। सदृशान्तर व्यवच्छेद फलकत्व विशेषण का उपन्यास करते हैं तब उस हमारे कहे हुए में ही आपके लक्षण की परिसमाप्ति हो गई।

जो तो विमर्शिनी कारने कहा है कि वह वाक्य भेद शाब्द तो होता ही है आर्थ भी होता है। उसमें शाब्द जैसे "रजोभिः स्यन्दनोद्धूतैः" इत्यादि। इसका भी उपमानान्तर तिरस्कार ही फल है। वह सब तुच्छ है। क्योंकि "रजोभिः स्यन्दनोद्धूतैः" में उपमानान्तरतिरस्कार कतई नहीं प्रतीत होता है। उसका कारण है दोनों उपमाओं में एक धर्म

द्वयोरुपमयोरेकधर्मकत्वाभावात्, आद्याया उपमाया अनुगामिधर्मप्रयोज्यत्वात्, द्वितीयायाश्च विम्बप्रतिबिम्बभावापन्नधर्मप्रयोज्यत्वात् ।

यदपि 'परस्परमुपमानोपमेयत्वमुपमेयोपमा' इति लक्षणं विधाय 'सविता विधवति–' इत्यादि प्रागुक्तपद्यं रत्नाकरेणोदाहारि, तच्च तदीयेनैव 'स चोपमानान्तरनिषेधार्थः' इति ग्रन्थेन विरुद्धम् । न ह्यस्मिन्पद्ये उपमानान्तरनिषेधः प्रतीयत इति प्रागेवावेदनात् । प्रतीयत एवेति चेत्, पुनरपि पृच्छ हृदयमेव स्वकीयम् । इत्यलं विवादेन ।

### मर्मप्रकाश

हि यतः । अनुगामीति । रजोरूपेत्यर्थः । विम्बेति । घनगजेत्यर्थः । स च मिथ उपमानोपमेयभावश्च । हिः पूर्वहेतुत्वपरामर्शकः । इतीति । अस्य बोध्यमिति शेषः । अतिमात्रे-

### मधुसूदनी

इति तत्त्वम् । प्रकृते रजोगजानां भूतलवृत्तित्वमेव घनगजानां गगनवृत्तित्वमेव । भूतले घनगजानामभावः । गगने रजोगजानामभावः । इति निश्चप्रचम् ।

एकधर्मकत्वाभावात् । एकधर्मप्रयोज्यसादृश्ये हि उपमेयोपमा भवतीत्यभिमानः । आद्यायामुपमायां रजोरूपोऽनुगामी धर्मः । द्वितीयायामुपमायां घनसदृशगजरूपो विम्बप्रतिबिम्बभावमापन्नो धर्मः । इति तयोरेकधर्मकत्वं नास्ति । इति पण्डितराजाशयः ।

परस्परमिति । यत्र परस्परमुपमानोपमेयत्वं भवति यथा सवितुर्विधुरुपमानं विधोश्च सवितेति, तत्र अनयोरेव परस्परमुपमानत्वमुपमेयत्वं वा तृतीयस्य तु तादृशी कथा नास्ति इति सुतरां फलितमिति मनसि निधायैव रत्नाकरकारेण सविता विधवति इति पद्यमुदाहारि । पण्डितराजः कथयति सवितुर्विधोरिवाचरणे मनसः सुख-दुःखवशीकृतत्त्वावस्था हेतुः । तामेव उल्लिख्य तथा वर्णनात् कवितामतो नेदमुदाहरणमिति तदेतदुच्यते=पुनरपि पृच्छ हृदयमेव स्वकीयमिति ।

### बालक्रीड़ा

नहीं हैं । आद्या उपमा अनुयायी धर्म से प्रयोज्य है और दूसरी विम्वप्रतिविम्वभावापन्न धर्म से प्रयोज्य है ।

जो भी, परस्पर में उपमानोपमयत्व ही उपमेयोपमा है ऐसा लक्षण बनाकर सविता विधवति" इत्यादि प्रागुक्त पद्य को उदाहरण के रूप में रत्नाकर ने रक्खा वह सब उसीके वह तो "उपमानान्तर के निषेध के लिए ही है" इस ग्रन्थ से विरोध करता है । इसपद्य में कहीं भी कैसे भी उपमानन्तर का निषेध नहीं मालूम पड़ता है । अगर कहें कि मालूम पड़ता ही है तो पुनरपि एक बार फिर अपने हृदय को पूछो । वस करो, अधिक विवाद से क्या फायदा है ।

इयं चोपमेयोपमा यदि कस्याप्यर्थस्योत्कर्षाधायिका तदालंकारः। अन्यथा तु स्ववैचित्र्यमात्रपर्यवसितेति। एवमलंकारान्तरेऽपि ज्ञेयम्।

अथ ध्वन्यमानेयमुदाहियते—

'गम्भीर्येणातिमात्रेण महिम्ना परमेण च।
राघवस्य द्वितीयोऽब्धिरम्बुधेश्चापि राघवः॥

द्वितीयशब्दस्य सादृश्यविशिष्टे शक्त्यभावाद्व्यक्तिरेव।

यदि तु लक्षणा तदेदमुदाहरणम्—

'सुधासमुद्रं तव रम्यवाणी वाचं क्षमाचन्द्र ? सुधासमुद्रः।
माधुर्यमध्यापयितुं दधाते खर्वेतरामान्तरगर्वमुद्राम्॥

### मर्मप्रकाश

णातिशयितेन। व्यक्तिरेव ध्यञ्जनैव। इदं वक्ष्यमाणम्। सुधेति। राजानं प्रति कव्युक्तिः। हे क्षमाचन्द्र ? तव रम्यवाणी सुधासमुद्रं माधुर्यमध्यापयितुं संक्रामयतुं सुधासमुद्रश्च तव वाचं माधुर्यमध्यापयितुं च महतीं मानसिकगर्वसूचकाकारव्यक्तिं धत्त इत्यर्थः। लक्षणयेत्यस्याध्यापयितुमिति यदेत्यादिः। एवं मुख्यार्थंबाधतद्योगावुक्त्वा प्रयोजनवतीत्वमाह

### मधुसूदनी

"कौमुदीव भवती विभाति मे" इति पण्डितराजोदाहरणेऽपि इयमेव सुखावस्था हेतुः। अन्यथा पाकिस्तानस्य चीनस्य वा आक्रमणसमये मनसो विप्लवे को वा नायिकां प्रति "भवती मे कौमुदीव विभाति" इति कथयितुं पारयेत्। तथापि पण्डितराजः परमेव न तु स्वं समालोचयति। एकत्र वाच्या। अपरत्र व्यंग्या सावश्यमिति अन्यदेतत्। परं वर्त्तते तु तथा कथा। तच्च उदाहरणप्रदर्शनञ्च। स च परस्परमुपमानोपमेयभावश्च। नहीति हिपदं प्रागुक्तमनुदाहरत्वप्रयोजकं वस्तु परामृशति।

### बालक्रीड़ा

यह उपमेयोपमा यदि किसी अर्थ में उत्कर्ष का आधान करती है तब अलंकार है नहीं तो इसकी अपने ही वैलक्षण्य में परिसमाप्ति है। यह सिद्धान्त इसी के लिए केवल लागू नहीं है किन्तु सभी अलंकारों के लिए लागू है।

अब उपमेयोपमाध्वनि का उदाहरण देते हैं अतिशय कोटि के गाम्भीर्य एवं पराकाष्ठा की महिमा से राघव के विकल्प में समुद्र दूसरा हो सकता है और समुद्र के विकल्प में राघव दूसरा हो सकता है तीसरा नहीं। यहाँ द्वितीय शब्द की सादृश्य में शक्ति नहीं है अतः व्यक्ति ही है। यदि तो उसमें उस शब्द की लक्षणा है तब तो यह उदाहरण है।

हे क्षमाचन्द्र ? पृथिवीपते ? तुम्हारी रमणीय वाणी सुधासमुद्र को और सुधासमुद्र तुम्हारी रमणीय वाणी को मिठास सिखाने के लिए अपने २ मन में महान् गर्व का अनुभव करते हैं।

अत्र वागादिकर्तृकस्य परस्पराध्यापनस्य बाधान्माधुर्यसंक्रान्तिविशेषस्य लक्षणया बुध्यमानस्य प्रयोजनं स्वप्रयोज्यान्योन्योपमानोपमेयभावः ।

अथ दोषाः—

तत्र तावत्प्रागुक्ता यावन्त उपमाया दोषाः, अनुक्ताश्च विस्तृतिभयात्, ते सर्वेऽप्युपमात्वाक्रान्तत्वादस्यामपि बोध्याः । अयं पुनरन्योऽपि दोषः—यदेकोपमावैलक्षण्यमपरस्यामुपमायाम् । यथा—'कमलमिव वदनमस्या वदनेन समं तथा कमलम्' अत्र श्रौत्यार्थीकृतं वैलक्षण्यम् । 'कमलति

मर्मप्रकाशः

प्रयोजनमिति । स्वं लक्षणा । तत्प्रतीतिश्च वैयञ्जनिवयेवेति भावः । दोषा इति । अस्या इत्यादि उच्यन्त इति शेषः । तत्र वक्तव्यानां तेषां मध्ये प्रागुपमायामुक्ता यावन्तो दोषा इत्यन्वयः । न तत्परिगणनमित्याह—अनुक्ताश्चेति । ननूपमादोषा अत्र कथमत आह— उपमात्वेति । अत एवास्या एव भेद इति प्रतिज्ञावाक्ये उक्तम् । तदवृत्त्यत्र

मधुसूदनी

वागादीति । अत्र आदिपदार्थः समुद्रः । वाक्समुद्रयोः परस्परं मिथः । उपामानस्य निन्दायामयोग्यत्वं विशेषतः । प्रशंसा योपमेयस्य सोपमेयोपमाऽपरा । इत्येवमपरापीयमशिक्षि । तदुदाहरणं चापि । स्वप्रयोज्यस्येत्यत्र स्वं लाक्षणिकमध्यापयितुमिति पदं तत्प्रयोज्यः अन्योन्योपमानोपमेयभावः । प्रयोजनप्रतिपिपादयिषया लक्षणया शब्दप्रयोगस्तत्र नान्यतस्तस्य प्रयोजनस्य प्रतीतिरपि तु तस्मादेव शब्दादिति

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥ इति च काव्यप्रकाशोक्तेः

बालक्रीड़ा

यहाँ वाणी एवं समुद्र का अचेतन होने के कारण परस्पराध्यापन बाधित है अतः लक्षणा से माधुर्य विशेष की संक्रान्ति की प्रतीति होती है । उसका फल है लक्षणा प्रयोज्य परस्पर में उपमानोपमेय ।

अब इसके बाद दोषों का निरूपण करते हैं । इसमें वे सब दोष हैं जिनका कथन उपमा में कर दिया गया है और विस्तार के भय से जिनका कथन नहीं किया जा रहा है । उन सबको इसमें भी समझें । क्योंकि उपमेयोपमा भी तो उपमा ही है । उपमात्व धर्म दोनों में समान है । यह फिर दूसरा भी एक दोष है । जो बातें एक उपमा में बतलाई हैं उनकी अपेक्षा दूसरी में कुछ विलक्षणता कर दी जाय जैसे "कमलमिव वदनमस्या वदनेन समं तथा कमलम्" इसमें इव के विन्यास से श्रौती और समं के विन्यास से आर्थी उपमा है । "कमलति वदनं तस्याः कमलं वदनायते जगति" यहाँ कमलति में क्विप् प्रत्यय और वदनायते में क्यङ प्रत्यय के कारण वैलक्षण्य है । दोनों प्रत्यय कर्त्ता में हुए हैं । इस प्रकार यहीं पर वदनं

वदनं तस्याः कमलं बदनायते जगति । क्रिप्क्यङ्कृतमत्र वैलक्षण्यम् । एवमत्रैव 'पद्मं वदनायते' इति निर्माणे 'वक्त्रायते इति वा उपमानोपमेयवाचकवैलक्षण्यम् । एवं प्रकारैरनेकैर्वैलक्षण्यं यदि सहृदयोद्वेजकं तदा दोषः ।

इति रसगङ्गाधरे उपमेयोपमाप्रकरणम् ।

### मर्मप्रकाशः

दोषमाह—अयं पुनरिति । इति वेति । कमलमित्यादिः । निर्माणे इत्यस्यानुषङ्गः उपसंहरति—एवमिति । यदीत्यनेन तदभावेऽदुष्टत्वमेवेति सूचितम् ।। इति रसगङ्गाधरमर्मप्रकाश उपमेयोपमाप्रकरणम् ।।

### मधुसूदनी

इदमिहावधेयमलंकारावलेह्मास्वादयद्भिर्यत् उपमानोपमेयसादृश्यवाचकधर्माणामुभयत्र वाक्ये समानरूपता अवश्यमेषणीया । अन्यथा दोषः स्यात् । एषां वैलक्षण्ये ।

इति मधुसूदनीविवृतिरुपमेयोपमायाम् ।

### बालक्रीड़ा

की जगह पर पद्मं कर देवें और वदनायते के स्थान पर वक्त्रायते कर देवें तो उपमान एवं उपमेय वाचक पदों में विलक्षणता हो जाती है । इस प्रकार के अनेक हेतुओं से हुए वैलक्षण्यों से यदि सहृदयों को उद्वेग होता है तब अवश्य दोष होते हैं ।

आचार्य श्री मधुसूदन शास्त्री विरचित बालक्रीडा में उपमेयोपमा प्रकरण समाप्त हुआ ।

---

अथानन्वयः—

द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतं यदेकोपमानोपमेयकं सादृश्यं तदनन्वयः ॥

स च कस्याप्युपस्कारत्वेऽलंकारः । अन्यथा तु शुद्धः ।

'लोहितपीतैः कुसुमैरावृतमाभाति भूभृतः शिखरम् ।
दावज्वलनज्वालैः कदाचिदाकीर्णमिव समये ॥

### मर्मप्रकाशः

शुद्ध इति । स्ववैचित्र्यमात्रविश्रान्त इत्यर्थः । भूभृतः पर्वतस्य । कदाचित्समये

### मधुसूदनी

अथानन्वयः ।

अथ स्वातिरिक्तेन (चन्द्रेण) वर्ण्यमानं स्व (मुख) स्य सादृश्यं, स्वेनापि (मुखेनापि) अन्य (चन्द्र) सादृश्यमर्थात्सिध्यत् शब्देनोच्यते चेदुपमेयोपमा उपमाया एव भेद इति उपमानिरूपणानन्तरं सा निरूपिता तदनन्तरं स्वेनापि स्वस्य सादृश्यं वर्ण्यमानं अन्वयाभावेऽपि चमत्कृतिं जनयति इत्याशयवान् ग्रन्थकारः अनन्वयं निरूपयति—अनन्वय इति ।

द्वितीयः सदृशो नास्तीति एवंरूपो व्यवच्छेद एव अभाव एव फलं यस्य वर्णनस्य तत् तत्फलकवर्णनम् , तद्विषयीभूतम् , । एकमेव न तु द्वितीयम् उपमानमुपमेयं यस्मिन् सादृश्ये, तदेवं विशेषणद्वयावच्छिन्नं यत्सादृश्यं तदनन्वयः । स च उक्तरूपानन्वयश्च कस्याप्यलंकारणीयस्योपस्कारकत्वेऽलंकारः । अन्यथा उपस्कारत्वाभावे शुद्धः वस्तुमात्रम् स्ववैचित्र्यमात्रविश्रान्तम् । वनवह्निः । ज्वलनो जातवेदा इत्यमरः ।

दावज्वलनो वह्निस्तस्य ज्वालैः शिखाभिः । कदाचित्समये आकीर्णं व्याप्तमित्यन्वयः । उपमीयत इति । अद्यतनीनं भूभृतः शिखरं कादाचित्केन भूभृतः शिखरेण उपमीयते । अत्र भेदः ।

### बालक्रीड़ा

अथ अनन्वय

यहाँ वर्णन शब्द का अर्थ शब्दप्रयोग है । जिस वर्णन का फल इसके सदृश दूसरा नहीं है ऐसा हो । उस वर्णन का विषय जहाँ एकोपमानोपमेयक सादृश्य हो वह सादृश्य अनन्वय है । वही एक उपमान भी है और उपमेय भी है अर्थात् दूसरा नहीं है ।

वह अनन्वय किसी का उपस्कारक शोभाधायक हो तब वह अलंकार है । अन्यथा यदि शोभाधायक नहीं हो तो शुद्ध है अर्थात् अलंकार नहीं है केवल वस्तु है ।

लाल पीले पुष्पों से घिरा हुआ पर्वत का शिखर किसी समय की दावाग्नि की ज्वालाओं से घिरा हुआ जैसा मालूम पड़ रहा है ।

अत्र लोहितपीतकुसुमावृतं भूभृतः शिखरं स्वेनैव कस्मिंश्चित्समये दावज्वालकीर्णेनोपमीयते । इति तत्सादृश्यवारणाय भूतान्तम् ।

इदं वा प्रत्युदाहरणम्—

'नखकिरणपरम्पराभिरामं किमपि पदाम्बुरुहद्वयं मुरारेः ।
अभिनवसुरदीर्घिकाप्रवाहप्रकरपरीतमिव स्फुटं चकासे ॥'

## मर्मप्रकाश

तैराकीर्णं खमिवेत्यर्थः । स्फुटत्वाय प्रत्युदाहरणान्तरमाह—इदं वेति । अत एवाह—

## मधुसूदनी

कल्पद्रुमे स्थावरता, दृढत्वं चिन्तामणौ, कामगवीषु गोत्वम् ।
स्वभक्त संकल्पविधेर्विधाने हे नाथ ? कृष्ण ? त्वमिव त्वमेव ।

अत्रोपमानस्य निन्दा ।

इन्दीवरं वा ललिताञ्जनं वा नवाम्बुदो वा मघवन्मही वा ।
कृष्णस्य धाम्नः सदृशं न किञ्चित्तदीयधामेव तदीयधाम ।

अत्रायोग्यत्वे निषेधः । इत्यधिकमाचिन्वन्त्याचार्याः । वस्तुतः भिन्नयोस्तु सादृश्यं भवत्येवेति तत्सादृश्यवारणाया भिन्नधर्मिप्रतियोगिकस्यसादृश्यस्य परिहाराय भूतान्तं प्रथमं सादृश्यविशेषणमुपन्यस्तम् ।

नन्वेवं कालभेदेन वस्तुभेदमुररीकृत्यानन्वयास्वीकारे रामरावणयोर्युद्धं रामरावणयोर्युद्धमिवेत्यत्रापि अद्यतनीनं युद्धम्, ह्यस्तनीनयुद्धमिवेति कालभेदादेव युद्धभेदोऽस्त्येव तथा चानन्वयो नेत्यत आह—इदं वा प्रत्युदाहरणम् ।

सुरदीर्घिका सुरनदी गंगा । प्रकरः समूहः । परीतं एवं वेष्टितम् । णूस्तवन इत्यस्य

## बालक्रीड़ा

यहाँ लाल-पीले पुष्पों से आवृत भूभृत् के शिखर की किसी समय में वनवन्हि की लपटों से आकीर्ण व्याप्त अपने से ही (भूभृत के शिखर से ही) उपमा की जा रही है । अतः इस तरह के सादृश्य के वारण करने के लिए भूतान्त विशेषण का लक्षण में विन्यास किया है । यहाँ भूभृत् का शिखर उपमान भी है और उपमेय भी है अतः एकोपमानोपमेयक सादृश्य है अर्थात् स्व का स्व के साथ सादृश्य होने से अनन्वय होना चाहिए था किन्तु यहाँ (कदाचित् समय) किसी समय में ऐसा विशेषण दिया है अतः आज के भूभृत् के शिखर की कालान्तरीय शिखर से उपमा दी गई है । ऐसा प्रतीत होता है अतः कालभेद से वास्तुभेद हैं और भिन्न पदार्थों में सादृश्य अन्वित ही है समन्वय नहीं है इसलिए यथा वेति से दूसरा प्रत्युदाहण देते हैं ।

नखकिरण परम्पराओं से अभिराम मुरारि का कोई पदाम्बुरुहद्वय अभिनव सुरदीर्घिका प्रवाह प्रकर से परीत की तरह स्पष्ट शोभायमान है ।

अत्रापि नखकिरणपरम्पराभिरामं हरेः पदाम्बुजं स्वात्मनैव सुरदीर्घिकाप्रवाहप्रकरपरीतेनोपमीयते। संप्रति सुरदीर्घिकाप्रवाहेण भगवत्पादाम्बुरुहस्य संबन्धाभावात्सुरनिम्नगोत्पत्तिकालावच्छिन्नस्य तस्योपमानतावगमायाभिनवेति प्रवाहविशेषणम्। नह्यत्र सादृश्यवर्णनस्य फलं द्वितीयसब्रह्मचारिव्यवच्छेदः तस्याप्रतिपत्तेः।

मर्मप्रकाशः

अत्रापीति। स्वात्मनैव पदाम्बुजद्वयेनैव। सम्प्रति वर्णनकाले। तस्य प्रवाहस्य। अत्र प्रत्युदाहरणद्वये। द्वितीयसब्रह्मेति। द्वितीयसदृशेत्यर्थः। अनन्वयार्थनिबन्धनवशाद्धि द्वितीयसदृशव्यवच्छेदः फलति। नहि धर्मान्तरावच्छिन्नत्वस्य धर्मान्तरावच्छिन्नत्वेन

मधुसूदनी

नवः स्तुतः। देवैरभितो नवेन स्तुतेन तत्प्रवाहेण वेष्टितमित्यर्थः। स्वात्मनैव हरेः पदाम्बुजेनैव। संप्रति किरणैरभिरामताधानसमये। सम्बन्धः सुरदीर्घिकाप्रवाहेण साकं भगवत्पदाम्बुरुहस्य संयोगः। तस्याभावात्। सुरनिम्नगायाः उपत्तिकालिकः सम्बन्धोऽत्र गृहीतोऽतः तदुत्पत्तिकालावच्छिन्नप्रवाहपरीतस्य तस्य पदाम्बुरुहस्य उपमानताया अवगमाय ज्ञानाय। प्रवाहे अभिनवविशेषणं दत्तम्।

अथवा तदवच्छिन्नस्य तस्य प्रवाहस्य उपमानताया उपमानांगतायाः। प्रवाहस्तु उपमानं नास्ति। भगवत्पादाम्बुरुहमुपमानं तच्च उपमानं तदैव स्यात् यदा तत्पादाम्बुरुहं तादृशप्रवाहेण परीतं स्यादत उच्यते तस्य प्रवाहस्य उपमानांगता द्योतनायेति। तस्य द्वितीयसब्रह्मचारिव्यवच्छेदस्याप्रतिपत्तेरज्ञानात्।

बालक्रीड़ा

यहाँ पर भी नखकिरणों की परम्परा समूह से अभिराम हरि के चरणकमल की सुरदीर्घिका सुरनदी गंगा जी के प्रवाह से परीत चरणकमल से ही उपमा की गई है। अतः अपने में ही अपने सादृश्य के वर्णन का फल द्वितीय (सब्रह्मचारी) सदृश व्यवच्छेद होना चाहिए इस आशंका को वारण करने के लिए कहते हैं कि संप्रति जिस समय भगवान् के पदाम्बुरुह में नखकिरणों से प्राप्त हुई अभिरामता सुन्दरता का साक्षात्कार भक्त कर रहा है उस समय गंगा के प्रवाह से भगवान् के चरणकमल का संयोग सम्बन्ध नहीं है। इस लिए सम्बन्ध को बनाने के लिए उस समय के चरणकमल को उपमान बनाया है। जिस समय भगवान् के चरणों से गंगाजी की उत्पत्ति हो रही है इसी को प्रस्तुत करने के लिए प्रवाह में अभिनव विशेषण दिया है। फलतः इधर गंगाजी के उदीयमान प्रवाह से युक्त चरण के साथ उधर उद्गच्छन् नखकिरणों से सम्पन्न चरणकमल की उपमा की गई। इस तरह उपमान एवं उपमेय के एककालावच्छिन्न होने से कालभेदकृत वस्तुभेद की परिस्थिति नहीं आई। अतएव एकरूपता के कारण द्वितीय सदृश व्यवच्छेद की प्रतीति नहीं हुई। जो कि अनन्वय के लिए आवश्यक थी।

'स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः ।
सुधांशुबिम्बतो मेरौ लम्बमान इवोरगः ॥'

इति कल्पितोपमानिकायामुपमायामतिप्रसङ्गवारणायैकोपमानोपमेयकमिति । अत्रासत उपमानस्य कल्पनया सदुपमानं नास्तीति द्वितीयसदृशव्यवच्छेद स्यास्ति प्रतीतिः ।

उदाहरणममृत(पीयूष)लहार्याख्ये मदीये गङ्गास्तवे—

'कृतक्षुद्राघौघानथ सपदि संतप्तमनसः
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः ।
अपि प्रायश्चित्तप्रसरणपथातीतचरिता-
न्नरानूरीकर्तुं त्वमिव जननि ! त्वं विजयसे ॥'

### मर्मप्रकाशः

साधर्म्यमनन्वयि । अत एवोपमेयतावच्छेदकोपमानतावच्छेदकयोर्भेद एव साधर्म्यघटकः । न तु धर्मिणोः इत्युक्तं प्राक् । एवं चानन्वय्यर्थनिबन्धनप्रयोज्यद्वितीयसदृशव्यवच्छेदफलक-सादृश्यवर्णनमनन्वयः । एकोपमानोपमेयकत्वविशेषणं चात्रैवार्थे तात्पर्यग्राहकम् । अन्यथा धर्मिभेदादेव तत्र वारणेन तद्वैयर्थ्यं स्पष्टमेवेति भावः । तदाह—तस्येति । तद्व्यवच्छे-दस्येत्यर्थः । असत इति । तथा च धर्मिभेदः स्पष्टोऽत्र । नास्तीति । अन्यथा तावत्पर्यन्तधावनं व्यर्थं स्यादिति भावः । अथ अल्पपापकरणानन्तरम् । सपदि तत्कालमेव ।

### मधुसूदनी

ननु द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतं सादृश्यमनन्वय इत्येवास्तु किमेकोपमेति विशेषणेनेत्याह—स्तनेति । स्पष्टमन्यत् ।

कृतेति । कृताः क्षुद्रा अघौघाः पापसमूहा यैस्तान् । सपदि अघौघकरणो-त्तरमेव अहो अस्माभिः बहूनि पापानि कृतानि किं फलमस्माभिरेषां भोक्ष्यते इत्येवं

### बालक्रीड़ा

कपोल से स्तनाभोग पर फैला हुआ कुटिल अलक ऐसा शोभायमान हो रहा है जैसे सुधांशुबिम्ब से मेरु पर लम्बमान उरग । इस उपमा में जहाँ उपमान को कल्पना से खड़ा किया गया है । क्योंकि साधारण वातावरण में चन्द्रमा से साँप का सुमेरुपर्वत पर लम्बमान होना संभव नहीं है । वहाँ अतिव्याप्ति नहीं हो जाय इसलिए एकोपमानोपमेयक कहा है । क्योंकि यहाँ असत् उपमान की कल्पना से मालूम पड़ता है कि सत् उपमान नहीं है अतः द्वितीय सदृश व्यवच्छेद की प्रतीति हो जा सकती है ।

मेरे बनाये हुए अमृतलहरी नामक गंगास्तव में उदाहरण जैसे—छोटे-छोटे पापों को किया किन्तु मानसी दशा में सन्तप्त हो गये अतः अर्धशुद्ध ऐसे मनुष्यों का उद्धार करने के

यथा वा—

'इयति प्रपञ्चविषये तीर्थानि कियन्ति सन्ति पुण्यानि ।
परमार्थतो विचारे देवी गङ्गा तु गङ्गेव ॥'

पूर्वपद्ये वाच्योऽनुगामी धर्मः। इह तु व्यङ्ग्य इति विशेषः। तु शब्दोऽयं तीर्थान्तरेभ्यो वैलक्षण्यं प्रतिपादयँस्तत्प्रयोजकं भगवद्वासुदेवात्मकत्वं धर्मं

### मर्मप्रकाशः

न तु कालान्तरे। प्राक्तनसुकृतोद्रेकादिति भावः। अपीति। प्रायश्चित्तप्राप्तिविषयत्वातिक्रान्ताचरणकानपीत्यर्थः। नरानिति पूर्वार्धेऽपि विशेष्यम्। निष्पापपत्वेन स्वीकर्तुम्। जननि? गङ्गे? उदाहरणान्तरदाने बीजमाह—पूर्वेति। विजयसे इति वाच्यःस वोंत्कर्षरूप इत्यर्थः। इह तु इति। स एवानुगामीति शेषः। पूर्ववदत्र स्पष्टवैलक्षण्याभावादाह—तुशब्दोऽयमिति। 'तुशब्दोऽत्र' इति पाठान्तरम्। रतीति। कविनिष्ठेत्यादिः। अत्र

### मधुसूदनी

न तु कालान्तरे संतप्तानि मनांसि येषां तान् प्राणिनः समुद्धर्त्तुं सन्तारयितुं त्रिभुवन तले कृतिपये तीर्थनिवहाः सन्ति। प्रायो नाम तपः प्रोक्तं चित्तं निश्चयं कर्तुं यः पथोगमनम्। पथगतौ। ततोऽतीतानि दूरंगतानि चरितानि येषां तान्। इयन्ति दुष्टानि चरितानि तेषां वर्त्तन्ते येन दोषाणां ध्वंसनार्थं क कियत् किमात्मकं तप आवश्यमाचरणीयमिति निश्चयाय दैशिकसन्निधौ गमनमपि न संभवि। तान् नरान् ऊरीकर्त्तुं युष्माकं पापानां ध्वंसनमहं करिष्यामीति स्वीकर्त्तुं हे जननि? त्वमिव त्वं विजयसे सर्वोत्कर्षेण वर्त्तसे।

पूर्वेति। पूर्वस्मिन् कृतक्षुद्रेति पद्ये अनुगामिधर्मो विजयरूपो वाच्यः विजयसे इति पदेन उक्तः। इह तु इयति पद्ये तु व्यंग्यस्वरूपं तम् दर्शयन्नाह—तुशब्दोऽयमिति। भगवती गंगा भगवद्वासुदेवस्वरूपा। अत एव तादृशपापनिवारणे समर्था। भगवद्विषये यथोच्यते—

### वालक्रीड़ा

लिए हे मातः गंगे? इस त्रिभुवन में वहुतेरे तीर्थ हैं। किन्तु जिस पाप का प्रायश्चित्त ही नहीं हो सकता है इस प्रकार प्रायश्चित्त के प्रसार के मार्ग से अतीत जिनके चरित हैं उन नरों के पापों को दूर करने के लिए स्वीकार हेतु तुम्हारी तरह तुम ही सवसे वढ़ी चढ़ी हो।

इतने बड़े ब्रह्मा के प्रपंच में कितने ही पुण्य तीर्थ हैं किन्तु परमार्थतः विचार करने पर तो देवी गंगा गंगा ही है दूसरी उसकी जोड़ी नहीं है।

यहाँ पहिले पद्य में अनुगामी धर्म वाच्य है और द्वितीय पद्य में वह धर्म व्यंग्य है। यही इन दोनों का वैलक्षण्य है। "गंगा तु गंगेव" में तु शब्द तीर्थान्तरों से गंगा का वैलक्षण्य वतलाता हुआ वैलक्षण्य के प्रयोजक "धर्म भगवती गंगा भगवद्वासुदेवमयी है"

श्रीगङ्गायां व्यनक्ति । उभयत्रापि श्रीगङ्गाविषयकरत्युपस्कारकत्वादलंकारोऽयम् । बिम्बप्रतिबिम्बभावापन्नो धर्मस्त्वत्र नास्ति । तस्मिंश्च सति किंचिद्धर्मावच्छिन्नेन स्वेन सादृश्यस्य धर्मान्तरावच्छिन्ने स्वस्मिन्नन्वये बाधकाभावात्सदृशान्तरव्यवच्छेदाप्रतिपत्तेश्चानन्वयः एव न स्यात् ।

स च पूर्णो लुप्तश्चेति तावद्द्विविधः । पूर्णस्तूपमावत्षड्विधोपि संभवति ।

### मर्मप्रकाशः

उभयत्र । बाधकाभावादिति । चो वाक्यालंकारे, हेतौ वा । सदृशान्तरव्यवच्छेदाप्रतिपत्तावन्वये बाधकाभावे हि हेतुः । स च अनन्वयश्च । षड्विधोऽपीति । श्रौतार्थयो-

### मधुसूदनी

हरिर्हरति पापानि कल्पकोटिकृतान्यपि । इति
नाम्नोऽस्य यावती शक्तिः पापनिर्हरणे हरेः ।
तावत्कर्तुं न शक्नोति पापी पापानि जीवने । इति च ।

धर्मस्त्वत्रेति । अत्रानन्वयालंकारे धर्मः अनुगामी एव । बिम्बप्रतिबिम्बभावापन्नस्तु धर्मो नास्ति तदभावे हेतुमाह—तस्मिंश्चेति । बिम्बप्रतिबिम्बभावमापन्ने धर्मे सति । अन्वये संगतौ । बाधकाभावादिति । न केवलमस्मिन्नेव धर्मे । अनुगामिनि अपि धर्मे । तद्देशकालावस्थादिवृत्तित्वविशिष्टेन स्वेन सादृश्यस्य एतत्कालादिवृत्ति विशिष्टे स्वस्मिन् प्रतीतौ बाधकस्याभावात् । सर्वे भावा विपरिणामिनः ऋते चितिशक्तेरिति नयात् पूर्वकालदेशादिवृत्तित्वविशिष्टाच्चैत्रात् उत्तरकालादिवृत्ति विशिष्टस्य चैत्रस्य भेदप्रतीतेरानुभविकत्वात् ।

### बालक्रीड़ा

को व्यक्त करता है । इन दोनों जगहों में यह अनन्वय श्रीगंगाविषयक कविनिष्ठ रति का उपस्कारक है अतः अलंकार है ।

यहां अनन्वय में विम्बप्रतिविम्बभावापन्न धर्म नहीं होता है । क्योंकि विम्बप्रतिबिम्बभावापन्न धर्म के रहने पर किसी धर्म से अवच्छिन्न स्वके साथ किये गये सादृश्य का धर्मान्तर से अवच्छिन्न स्व में अन्वय संगति हो जाने में कोई बाधक नहीं है । अतः सदृशान्तर व्यवच्छेद के ज्ञान के नहीं होने से अनन्वय ही नहीं होगा ।

वह अनन्वय पूर्ण एवं लुप्त दो प्रकार का है उनमें पूर्ण तो उपमाकी तरह छ प्रकार का भी हो सकता है । जैसे गंगा की तरह हृद्य गंगा है । गंगा की तरह पावनी गंगा है हरिके जैसा बन्धु हरि है और हरि के तुल्य उत्कृष्ट हरि ही है । गुरु की तरह आराध्य गुरु है और गुरु की तरह गौरव गुरु का है । लुप्त अनन्वयों में भी धर्मलुप्त अनन्वय पांच

यथा—

'गङ्गा हृद्या यथा गङ्गा गङ्गा गङ्गेव पावनी ।
हरिणा सदृशो बन्धुर्हरितुल्यः परो हरिः ॥
गुरुवद्गुरुराराध्यो गुरुवद्गौरवं गुरोः ॥'

लुप्तेष्वपि धर्मलुप्तः पञ्चविधोऽपि संभवति । प्रागुक्ते सार्धपद्ये धर्मवाचकपदमपहाय पदान्तरदाने । तथा वाचकलुप्तः ।

'रामायमाणः श्रीरामः सीता सीतामनोहरा ।
ममान्तःकरणे नित्यं विहरेतां जगद्गुरू ॥'

इत्यत्र क्यङ्समासयोः ।

### मर्मप्रकाशः

स्तयोः प्रत्येकं वाक्यसमासतद्धितगामित्वेनेति भावः । गङ्गेति । अत्राद्यपादे श्रौतो वाक्यगः पूर्णः । द्वितीयपादे समासगः श्रौतः पूर्णः । तृतीयपादे आर्थो वाक्यगः पूर्णः । तुर्यपादे समासग आर्थः पूर्णः । पञ्चमपादे 'तेन तुल्यं— इति वतेः सत्त्वादार्थः स तद्धितगः पूर्णः । षष्ठपादे 'तत्र तस्येव' इति वतेः सत्त्वाच्छौतस्तद्धितगः पूर्ण इति ध्येयम् । 'लुप्तेष्वपि' इति पाठः । भेदेष्विति शेषः । निर्धारणे एकवचनासंगतेः । पञ्चविधोऽपाति । श्रौतो वाक्यगः, आर्थो वाक्यगः, श्रौत समासगः, आर्थः समासगः, आर्थस्तद्धितगश्चेत्येवमित्यर्थः । पूर्वं तेषामेवोदाहृतत्वादिति भानः । पदान्तरेति । 'गङ्गा राजन्यथा गङ्गा गङ्गा गङ्गेव

### मधुसूदनी

लुप्तेष्वपीति । लुप्तोपमास्विव लुप्तानन्वयेष्वपि भेदेषु । हृद्यत्वपावनत्वबन्धुत्व-परत्वाराध्यत्वगौरवरूपधर्माणां लोपे धर्मलुप्तः । श्रौतस्य तद्धितगतत्वेनाभावात् । "तत्र तस्येव" इति सूत्रेण विहितो वतिः साधारणधर्मे एव स्वार्थान्वयं बोधयति इति नियतमेव साधारणधर्मे साकांक्षः । तेन तुल्यमिति विहितो वतिरपि साधारणधर्मे रूपायां क्रियायामेव साकांक्ष इति तदुपादानं विना वतेरसंभव एव इति धर्मलोपे श्रौतस्तद्धितगोऽनन्वयो न हि भवितुमर्हति । आर्थस्तु कल्पबादौ तद्धिते भविष्यति । तथा च कथं तदुदाहरणं संभवतीत्याह—प्रागुक्ते समनन्तरोक्ते गंगेत्यादि सार्धपद्ये

### बालक्रीड़ा

प्रकार का है जैसे पहले कहे सार्ध पद्य में धर्मवाचक हृद्य, पावनी, बन्धु एवं पर पदों को हटाकर धर्म वाचकत्व रहित दूसरे २ पदों के विन्यास करने पर हो सकता है ।

धर्मलुप्त अनन्वय की तरह वाचक लुप्त अनन्वय जैसे—राम के सदृश आचरण करने वाले श्रीराम है। सीता की तरह मनोहर सीता है । ये दोनों गजद्गुरु मेरे अन्तः करण में नित्य विहार करें ।

यहाँ प्रथम पाद के क्यङ प्रत्यय स्थल में केवल आचार वाचकत्व मत में और द्वितीय-पाद के समास संज्ञक पद में लुप्तवाचक अनन्वय है ।

एवम्—

'लङ्कापुरादतितरां कुपितः फणीव
निर्गत्य जातु पृतनापतिभिः परीतः ।
क्रुद्धं रणे सपदि दाशरथिं दशास्यः
संरब्धदाशरथिदर्शमहो ददर्श ॥'

एवं कर्तृणमुलादावप्यूह्यम् ।

'अम्बरत्यम्बरं यद्वत्समुद्रोऽपि समुद्रति ।
विक्रमार्कमहीपाल तथा त्वं विक्रमार्कसि ॥'

### मर्मप्रकाशः

सर्वदा । हरिणा सदृशो विष्णुर्विष्णुतुल्यः सदा हरिः ॥ गुरुवद्गुरुरास्तेऽस्मिन्मण्डले गुरुवद्गुरोः ॥' इति न्यास इत्यर्थः । कर्मणमुलगतमुदाहरति—एवं लङ्केति । ईदृशो दशास्यो रणे क्रुद्धं सपदि दाशरथिं संरब्धदाशरथितुल्यं ददर्शेत्यर्थः । संरब्धदाशरथिरिव दृश्यते इति कर्मणि णमुल् । धर्मवाचकलुप्तमुदाहरति– अन्वेति । अत्र सर्वत्राचारे क्विप् ।

### मधुसूदनी

गंगा काश्यां यथा गंगा १ गंगा गंगेव सर्वतः २ ।
विष्णुना सदृशो विष्णु३ विष्णुर्विष्णुसमो४ मम ।
गुरुवद् गुरुरस्तीह सन्निधौ गुरुवद् गुरोः ।

इत्येवं हृद्यत्वादिधर्मवाचकहृद्यादिपदमपहाय काश्यादिपदान्तरविन्यासे संभवति ।

संरब्धेति । संरब्ध उत्साहसम्पन्नो दाशरथिरिव दृश्यते दाशरथिदर्शम् कर्मणि णमुल् ।

अम्बरतीत्यत्र वाक्यार्थस्य यद्वत्तथाभ्यामवष्टब्धार्थस्य मालोपमारूपस्य अवयवभूतेषु अनन्वयेषु="अम्बरम् अम्बरति", "समुद्रः समुद्रति" महीपाल ? विक्रमार्क ? त्वं विक्रमार्कसि" इत्येवं त्रिषु धर्माणां विस्तृतत्वगहनत्वतेजस्वित्वानां, वाचकस्य इवस्य च लोपः ।

### बालक्रीड़ा

इस प्रकार कदाचिद् एकदिन सर्प की तरह अत्यन्त कुपित दशास्य रावण ने लंकापुर से सेनाओं के साथ निकलकर तत्काल, रण में कुद्ध दाशरथि को संरब्ध दाशरथि की तरह देखा । यह कर्मणमुल् का उदाहरण है ।

इस कर्मणमुल् की तरह कर्तृणमुल् आदि में भी उदाहरण समझें । अम्बर (आकाश) अम्बर सदृश, समुद्र समुद्रकी तरह आचरण करता है । हे विक्रमार्क ? महीपाल ? तुम विक्रमार्क की तरह हो ।

अत्र वाक्यार्थावयवेष्वनन्वयेषु धर्मवाचकयोर्लोपः। मुखवाक्यार्थस्त्वनन्वयफलेन निरुपमत्वेन समानधर्मेण प्रयोजितो मालोपमैव। एषा च ज्ञानसौकर्यायात्रैव निरूपिता।

'एतावति प्रपञ्चेऽस्मिन्सदेवासुरमानुषे।
केनोपमीयतां तज्ज्ञै रामो रामपराक्रमः ॥'

### मर्मप्रकाशः

अम्बरमाकाशम्। ननु कोऽसौ वाक्यार्थो यदवयवास्त्रयोऽप्यनन्वया अत आह—मुख इति। मुख्य इत्यर्थः। 'मुख्य' इति पाठस्तूचितः। ननु मालोपमा नैवास्ति पूर्वमनुक्तत्वादत आह—एषा चेति। मालोपमा चेत्यर्थः। अत्रैव अनन्वयप्रकरण एव। वाचकधर्मोपमानलुप्तमुदाहरति—एतेति। तज्ज्ञै रामस्वरूपज्ञैः। न्यूनतां निराचष्टे—

### मधुसूदनी

ननु एकतिङ् वाक्यमित्युक्तेः अम्बरति, समुद्रति, विक्रमार्कसि इत्येवं त्रीण्यपि वाक्यानि पृथक्२ एकतिङन्तघटितानि वर्त्तन्ते ततः किमिति अवयवेत्युच्यते इत्यत आह—मुखेति। इमानि अवयवभूतानि वाक्यानि। मुखं मुख्यम्। मुखं निःसरणे वक्त्रे मुख्यप्रारम्भयोरपीति कोशात् मुख्यार्थकोऽपि मुखशब्दः। तथा च मुखं वाक्यं यद्वत्तथाभ्यामवष्टब्धम्। तदर्थस्तु प्रयोजितः सन् मालोपमा। अत्रैवेति एवकारः अप्यर्थः। मालोपमाया बहून्युदाहरणानि आल्हादिनीति, कलेवेति, मृगतामिति सरोजतामित्यादीनि प्राग् दर्शितानि। अतः अत्रापि अनन्वयप्रकरणेऽपि ज्ञानसौकर्याय-शिष्यबुद्धिवैशद्याय एवमपि मालोपमा भवतीति बोधनाय निरूपिता।

रामो रामस्य पराक्रम इव पराक्रमो यस्य सः। इति बहुव्रीहिणापि राम इव बुध्यते। राम इव शत्रुषु आक्रामति इति विग्रहे तु परविषयकाक्रमणकर्त्तृत्वं साधारणधर्मः। अतः सप्तमी उपमानपूर्वपदे बहुव्रीहिरिति वार्तिकेन समासे एवेदमुदाहरणं त्रयाणामिति बोध्यम्।

### बालक्रीड़ा

यहां मुख्य वाक्यार्थ मालोपमा है जो अनन्वय के फल निरूपमत्व रूप समानधर्म से प्रयोजिता है। उस वाक्यार्थ के अवयव तीन अनन्वय हैं। इनमें विस्तृतत्व गहनत्व एवं तेजस्वित्व धर्मों तथा इव पद का लोप है।

प्रश्न—मालोपमा का अनन्वय के निरूपण में कौन प्रसंग है। उत्तर। समझने की सुविधा के लिए यहाँ भी इसका निरूपण कर दिया है। एव अप्यर्थक है

देव, असुर एवं मानुष से व्याप्त इतने बड़े प्रपञ्च में रामके पराक्रम के सदृश महनीय पराक्रमवाले रामकी उपमा विद्वान् लोग किससे करें।

अत्र वाचकधर्मोपमानानां लोपः। अत्र चोपमानलुप्तादयोऽन्ये भेदा असंभवादहृद्यत्वाच्च नोदाहृताः।

यत्तु—"तेन तदेकदेशेनावसितभेदेन वा उपमानतया कल्पितेन सादृश्यमनन्वयः। उपमेयेनैवोपमानतया कल्पितेनोपमेयस्यामुखावभासमानसाधर्म्यापादनमेकोऽनन्वयः। उपमेयैकदेशस्य तथैवोपमानताकल्पनमपरः। उपमेयस्यैव प्रतिबिम्बत्वादिनाभेदेनावसितस्य तत्त्वकल्पनं तृतीयः।

### मर्मप्रकाशः

अत्र चेति। संभवेऽप्याह—अहृद्येति। तेनेत्यस्यार्थमाह—उपेति। अमुखेति। अमुख्यत्यर्थः। तदेकदेशेनेत्यस्यार्थमाह—उपेति। तथैव उपमेयवत्। अवसितभेदेनेत्यस्यार्थमाह—उपेति। प्रतिबिम्बोऽत्र लौकिकः। अवसितस्य निश्चितस्य। तत्त्वेति।

### मधुसूदनी

यत्तु तेनेति। "तेन, तदेकदेशेन, अवसितभेदेन वा अनन्वयः" इति रत्नाकर सूत्रम्। उपमानेनेत्यादि कल्पितेनेति चानुषक्तम्। उपमेयेनैव उपमानतया कल्पितेन उपमेयस्य आमुखेऽवभासमानसाधर्म्यापादनमेकोऽनन्वयः अमुख्यरूपेण अवभासमानस्य साधर्म्यस्यापादनमिति नागेशः। उपमेयमेवोपमानं कल्पयित्वा पश्चात्तेन उपमेयेन उपमेयस्यैव नतूपमानस्य, तथात्वे तु प्रतीपः स्यात्। आमुखे पर्यवसानं तु उपमेयतावच्छेदकोपमानतावच्छेदकयोर्भेदे सत्येव। सचात्र नास्तीति न पर्यवसानम् अवभासमानमापाततः प्रतीयमानं यत्साधर्म्यं तस्य आपादनं प्रतिपादनमेकः प्रथमोऽनन्वयः। यदुपमानं तदेवोपमेयमिति नास्ति। यतो हि उपमानं तु नावश्यमपि भवति। इह तु वर्ण्यमेव उपमानम्, वर्ण्यं भवत्येव उपमेयम्। अतः प्राप्तं स्वेन स्वस्य सादृश्यम्। सादृश्यं भेदे एव भवति। अभेदे सादृश्यमनन्वितमिति अनन्वयः

### बालक्रीडा

यहाँ वाचक (सदृश शब्द) धर्म (महनीयत्व) और उपमान (पराक्रम) तीनों का लोप है। यहां उपमान लुप्तादि अन्य भेद नहीं हो सकते हैं। यदि हो भी तो अहृद्य हैं। अतः उनके उदाहरण नहीं दिखाये हैं।

जो तो रत्नाकर नें उपमानतया कल्पित उपमेय के साथ (वर्णित) सादृश्य अनन्वय है या उपमान के रूपमें कल्पित उपमेय के एकदेश के साथ (वर्णित) सादृश्य अनन्वय है। या उपमान के रूपमें कल्पना किये गये यानें किसी तरह प्रतिविम्बके रूप में उपमान से भिन्न समझे गये पदार्थ के साथ (वर्णित) सादृश्य अनन्वय है।

इनका खुलासा यों है। उपमानतया कल्पित उपमेय ही के साथ उपमेय का साधर्म्य किया जाना पहला अनन्वय है। इसमें इतना समझना आवश्यक है कि यहाँ साधर्म्य का मुख्य रूप से या आमुख में ही न कि पर्यवसान में अवभास है।

आद्यो यथा—'युद्धेऽर्जुनोऽर्जुन इव प्रथितप्रतापः' इत्यादि ।

## मधुसूदनी

अस्य फलमुपमानान्तराभावः । हृद्यत्वेऽयमलंकार इति रहस्यम् । उपमेयैकदेशस्य तथैव प्रथमवत् उपमानताकल्पनम्, आमुखावभासमानसाधर्म्योऽऽपादनं द्वितीयः अपरोऽनन्वयः । उपमेयस्यैव प्रतिबिम्बत्वादिना अर्थात् प्रतिबिम्बादिविधया भेदेन भिन्नतया अवसितस्य ज्ञातस्य तत्त्वकल्पनम् उपमानताकल्पनं तदापादनं तृतीयोऽनन्वयः । प्रतिबिम्बादिनेत्यत्र आदिपदार्थः आलेख्याकारत्वं तुल्यदेहितुल्यत्वम् । किञ्चिद्धि काव्यवस्तु प्रतिबिम्बकल्पम्, अन्यदालेख्यप्रख्यम्, अपरं तुल्येन देहिना सदृशमिति त्रिधा व्यवस्थितम् ।

आद्योऽनन्वयो यथा मुदाह्रियते ।
युद्धेऽर्जुनोऽर्जुन इव प्रथितप्रतापो
भीमोऽथ भीम इव वैरिषु भीमकर्मा ।
न्यग्रोधवर्त्तिनमथाधिपतिं कुरूणा
मुत्प्रासनार्थमधिजग्मतुरादरेण । इति पूर्णं पद्यम् ।

युद्धे इति । अर्जुनः मध्यमपाण्डवः, युद्धे प्रथितः प्रख्यातः प्रतापः । स प्रभावः प्रतापश्च यत्तेजः कोशदण्डयोः इत्यमरोक्तेः कोशदण्डोत्थं तेजो यस्य सः अर्जुन इव मध्यमपाण्डव इव । भीमोऽपि भीमसेनोऽपि वैरिषु भीमकर्मा भीम इव भीमसेन इव उभावपीमौ । न्यग्रोधो वटवृक्षः । अथवा न्यग्रोधः नवोग्रसेनस्य सुतास्तेषां-कंसन्तु पूर्वजः । न्यग्रोधश्च सुनामा चेत्युक्तेः । उग्रसेनस्य नवपुत्रेष्वन्यतमः कंसभ्राता । तत्समीपवर्त्तिनमपि कुरूणामधिपतिं धृतराष्ट्रं प्रति आदरेण अधिजग्मतुः प्रापुः । किमर्थं प्रापुरित्याह=उत्प्राशनार्थम् । उत्कृष्टं प्राशनं भोजनं तदर्थम् उत्प्रासनमुपहासो वा ।

अत्र तस्यैव अर्जुनशब्दस्य भीमशब्दस्य च पुनः श्रवणात्, एकार्थताया वाधाच्च अर्जुनादन्यो युद्धे प्रथितप्रतापो नास्तीति भीमसेनातिरिक्तो वैरिषु भीमकर्मा नास्तीति द्वितीयसदृशराहित्ती जीवितभूता प्रतीयत एव । ननु अर्जुनो मध्यमपाण्डवः कार्त्तवीयार्जुन इव । भीमो भीम इव हिंसकजन्तुरिवेत्यर्थान्तरवृत्तिता भीमार्जुन-

## बालक्रीड़ा

यह इतना अंश तीनों में बराबर है । यह लक्षण के अन्तर्गत नहीं है । उपमानतया कल्पित उपमेय के एकदेश के साथ साधर्म्य किया जाना द्वितीय अनन्वय है । प्रतिबिम्ब या आलेख्यप्रख्य या तुल्यदेहितुल्य के रूप में कल्पना के द्वारा भिन्न समझे गये उपमेय के साथ साधर्म्य का किया जाना तीसरा अनन्वय है ।

उनमें आद्य जैसे—युद्ध में अर्जुन अर्जुनकी तरह प्रताप में प्रसिद्ध है । यहां अर्जुन को उपमान एवं उपमेय दोनों बनाया है ।

द्वितीयो यथा—

'एतावति प्रपञ्चे सुन्दरमहिलासहस्रभरितेऽपि ।
अनुहरति सुभग ? तस्या वामार्धं दक्षिणार्धस्य ॥'

तृतीयो यथा—

'गन्धेन सिन्धुरधुरंधर ? चक्रमैत्री-
मैरावणप्रभृतयोऽपि न शिक्षितास्ते ।

## मर्मप्रकाशः

उपमानत्वेत्यर्थः । महिला स्त्री । दक्षिणार्धस्येति कर्मणः शेषत्वविवक्षायां षष्ठी । अत्रोपमेयं समुदिता नायिका । गन्धेनेति । हे

## मधुसूदनी

शब्दयोरस्तीति चेत्, सत्यम् । तथापि खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधो जनः इत्यादाविव व्यंग्योऽनन्वयो भवेत् न तु सर्वथा तदभाव इति ।

व्यंग्योऽनन्वय इति कथनस्यायमाशयः । खलता आकाशवल्ली असती अविद्यमाना । तामिव खलतां दुष्टताम् असतीं नीचां बुधो जनः कथं प्रतिपद्येत स्वीकुर्यात् । इत्यत्र यथा खलताशब्दयोः अर्थान्तरवाचकतया मुखं चन्द्र इवेत्यादिवदुपमानोपमेयभावनिबन्धनादस्त्येव सुसंगता शाब्दी सादृश्यप्रतीतिः । तथैव प्रकृतेऽपि अर्जुनशब्दयोः भीमशब्दयोश्च अर्थान्तरवाचकतया तन्निबन्धना सादृश्यप्रतीतिर्वाच्या । यतो हि उपमेयं विशेष्यम् । उपमानं तूपमेयविशेषणमेव । तस्य उपमेयं प्रति उपमितिक्रियायां विशेषणत्वादऽवच्छेदकत्वात् । तथा चोपमानोपमेयभावः सुसंगतः । प्रकृते तु उपमेयेन उपमेयस्य सादृश्यम् उपमेये उपमानत्वं; कल्पितं । तस्मात् द्वयोर्विशेष्ययोरुपमानोपमेयभावे कथमन्वयः । अर्थादनन्वय एव । तस्य च वाच्यत्वाभावाद् व्यंग्यतैव । व्यंग्यतादशायां कार्त्तवीर्यहिंस्रकसत्वयोरप्रतीतेरिति ।

एतावतीति । इदमुपमेयभूता या नायिकाया एकदेशं दक्षिणार्धं उपमानत्वं कल्पयित्वा दक्षिणार्धसदृशं वामार्द्धमिति द्वितीयानन्वयोदाहरणम् अत्रोपमेयं समुदिता नायिकेतिनागेशस्य दक्षिणार्धवामार्धसमुदायघटितैति भ्रान्तिरेव अग्रे ग्रन्थकारेण तस्या अनुपमेयत्वादिति निरस्यमानत्वात् ।

## बालक्रीड़ा

दूसरा जैसे—इतना बड़ा विशाल प्रपञ्च जो हजारहों महिलाओं से भरा हुआ है उसमें हे सुभग ? उसका वामार्ध उसी के दक्षिणार्ध का अनुहरण करता है अर्थात् वामार्ध दक्षिणार्ध के सदृश है। यहाँ नायिका के एक देश वामार्ध का उसी के एकदेश दक्षिणार्ध के साथ सादृश्य है । यहां दक्षिणार्ध वामार्ध समुदायवती नायिका उपमेय है यह नागेशाशय अमान्य है। आगे ग्रन्थ कार वह नायिका उपमेय नहीं है ऐसा खण्डन करेंगे ।

तत्त्वं कचत्त्रिनयनाचलरत्नभित्ति-
स्वीयप्रतिच्छवि‌षु यूथपतित्वमेषि ॥'

एषूपमानान्तरविरहस्त्रिष्वपि भेदेषु गम्यते । इत्यनन्वयस्त्रिविधः । इति रत्नाकरेणोक्तम् । तन्न । उपमानान्तरविरहप्रतीतिमात्रादेवानन्वयत्वे

## मर्मप्रकाशः

सिन्धुरधुरंधरवक्त्र गजश्रेष्ठमुख गणपते, ऐरावणप्रभृतयोऽप्यैरावतादयोऽपि ते त्वया गन्धेन सुगन्धेन मैत्रीं न शिक्षिताः । यद्वा गन्धेन संबन्धेन लेशेन गर्वेण वा । अपिर्गन्धपदोत्तरं मैत्रीपदोत्तरं वा योज्यः । ततस्तस्मात्कारणात् त्वं कैलासाचलरत्नखचितभित्त्याधारकस्वप्रतिबिम्बेषु यूथपतित्वं दिग्गजत्वं कथमेषीत्यर्थः । उपमानान्तरविरह इति । तत्राद्ये स्फुट एव ।

## मधुसूदनी

गन्धेनेति । हे सिन्धुरधुरन्धर ? भो गजराज ? ऐरावणप्रभृतयोऽपि अष्टौ दिग्गजा अपि किमुत साधारणागजपदाभिधेयाः वराकाः । ते तव गन्धेन आमोदेन गर्वेण वा । गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोरित्यमरः । चक्रमैत्रीम् एकसार्थवर्त्तित्वं न शिक्षिताः दिशां गजा अपि यस्य तव सहयोगिभावमाप्तुं नार्हन्ति किमुतान्ये । स त्वं यूथपतित्वमेषि । कुत्रेत्याह कचदिति । कचदिति कचदीप्तौ इत्यस्य शत्रन्तं रूपम् । कचन्त्यो देदीप्यमानाः याः त्रिनयनाचलस्य कैलाशस्य रत्नभित्तयस्तासु याः स्वीया प्रतिच्छवयः तासु । अथवा कचन्ति यानि तद्रत्नानि । तद्रूपासु भित्तिषु ।

अत्र तृतीयोऽनन्वयप्रकारः । प्रतिबिम्बत्वादिना भेदेनेत्यादिरूपः । एषु त्रिष्वपि भेदेषु उपमानान्तरविरहो गम्यते । द्वितीयसदृशव्यवच्छेदो व्यज्यते ।

तन्नेत्यनेन रत्नाकरोक्तं खण्डयितुमाह उपमेति । उपमानान्तरविरहप्रतीतिमात्रत्वमनन्वयशरीरमुत तत्प्रतीतिफलकैकोपमानोपमेयकसादृश्यं तदिति । तत्राद्ये

## बालक्रीड़ा

तीसरा जैसे—हे सिन्धुरधुरन्धर के समान वक्त्र वाले गणपते ? वे ऐरावण प्रभृति दिग्गज भी जब तुम्हारी गन्ध लेशभर भी मैत्री तुलना करना नहीं सीखे तब और गजोंके साथ तुम्हारी तुलना के विषय में चर्चा भी करना कैसे सम्भव है । किन्तु ऐसी स्थिति में भी आप गणपति गजों के झुण्ड के पति कैसे कहलाते हैं । इसलिए सम्भावना होती है कि त्रिनयन शिवजी के अचल कैलाश पर्वत की रत्नमयी दिवालों पर पड़ी हुई अपनी ही प्रतिच्छवियों में आप यूथपतित्व का अनुभव करते हैं ।

इन तीनों भेदों में उपमानान्तर का अभाव प्रतीत होता है । इसलिए अनन्वय तीन प्रकार का है" ऐसा कहा; वह ठीक नहीं है । अपने सिवाय अन्य उपमान के अभाव की प्रतीति मात्र से अनन्वय मानेंगे तो "स्तनाभोगे पतन् भाति" इसमें उपदर्शित उपमा को भी अनन्वय कहना पड़ेगा । और यद्यर्थातिशयोक्ति में भी अतिव्याप्ति हो जायगी ।

'स्तनाभोगे पतन्भाति–' इत्यत्रोपदर्शितायाः कल्पितोपमाया अपि तथात्वापत्तेः। यद्यर्थातिशयोक्तावतिप्रसक्तेश्च। तादृशप्रतीतिफलकैकोपमानोपमेयकसादृश्यस्य तत्त्वे पुनः कथं नाम वामार्धदक्षिणार्धयोर्भिन्नयोः सादृश्ये तद्भेदत्वोपन्यासः। न च स, तदेकदेशस्तत्प्रतिबिम्बश्चेत्येतदन्यतमप्रतियोगिक-

### मर्मप्रकाशः

द्वितीये तदवयवस्य तदवयवान्तरोपमया तस्यां निरुपमत्वं सिद्ध्यति। अन्यथा तत्सदृशपदार्थावयवेनैवैतदवयवस्योपमां दद्यात्। तृतीयेऽपि प्रतिबिम्बस्योपमानत्वकल्पनयान्यस्योपमानस्याभावो गम्यते। तथात्वेति। अनन्वयत्वेत्यर्थः। इष्टापत्तावाह—यद्यर्थेति। तादृशेति। उपमानान्तरविरहेत्यर्थः। सादृश्यविशेषणमुभयत्र। तत्त्वे अनन्वयत्वे। पुनः शब्दस्तुशब्दार्थे। भिन्नयोरिति। तथा च द्वितीयविशेषणाभाव इति भावः। तद्भेदत्वेति। अनन्वयविशेषत्वेत्यर्थः। सेति। उपमेयेत्यर्थः। इदानीमाद्यविशेषणं न देयम्। तद्विरहस्य

### मधुसूदनी

"स्तनाभोगे"। इत्यत्र कल्पितोपमायां तत्प्रसक्तिः केन वार्येत। उपमानान्तरविरहादेव तथोपमानं कल्प्यते इति तद्विरहप्रतीतेः सत्वादनन्वयापत्तिर्दुष्परिहरा। अथ च राकायामकलंकश्चेदमृतांशुस्तदोपमीयेत नायिकामुखेन, परं तथा स्थितिर्नास्तीति प्राप्तो विरह उपमानान्तरस्येत्येवं यद्यर्थोक्तौ च कल्पनरूपातिशयोक्तौ प्रसक्तिः। अपि च द्वितीये "एतावति प्रपञ्चेऽस्मि"न्नित्यत्र कथमनन्वयः उपमानान्तरविरहाप्रतीतेरेकोपमानोपमेयकसादृश्याभावाच्च। प्रत्युत वामार्धदक्षिणार्धयोः वस्तुतो भिन्नयोः सादृश्यनिरूपणे अन्येनोपमानेन अन्यस्य उपमीयमानतया उपमैवास्ति।

ननु भवत्प्रदर्शितकोटिद्वयावच्छिन्नशरीरमनन्वयं न किन्तु सः, तदेकदेशः, तत्प्रतिबिम्बश्चेत्येतेषु अन्यतमप्रतियोगिकं सादृश्यमनन्वयः। तथा च तस्या नायिकाया एकदेशभूतार्धरूपावयवप्रतियोगिकसादृश्यमनन्वयः। तथा च तस्या नायिकाया एकदेशभूतार्धरूपावयवप्रतियोगिक सादृश्यस्य सद्भावादस्त्येवान्वय क्वाति-

### बालक्रीड़ा

यदि अर्थ वाले शब्दों के उपादानस्थल में, अतिशय की कलना रूप अतिशयोक्ति को मानने वाले काव्य प्रकाशकार के उदाहरण" पूर्णमासी के रात में यदि चन्द्रमा निष्कलंक हो तब तुम्हारे मुख की शोभा को वह दवा सके तो शायद दवा सके। वरना नहीं। इत्यादि में पूर्णमासी के चन्द्रमा का निष्कलंक होना सम्भव नहीं है। फलतः तुम्हारे मुख का जोड़ीदार नहीं है इस तरह उपमानान्तर के विरह की प्रतीति होने से यहाँ भी अनन्वय की प्रसक्ति हो जायगी।

और यदि तृतीय सदृशव्यवच्छेदफलक एकोपमानोपमेयक सादृश्य को अनन्वय कहते हैं तब फिर कैसे एक दूसरे से भिन्न वामार्ध एवं दक्षिणार्ध के सादृश्य को अनन्वय का भेद कहा जाय।

## साद्दश्यमनन्वयः इति क्वातिव्याप्तिरव्याप्तिर्वेति वाच्यम् । नास्त्यन्वयोऽस्येति योगार्थविरहेण तदेकदेशसाद्दश्यस्यानन्वयपदार्थत्वासंभवात् । अपि चानन्वये

### मर्मप्रकाशः

नान्तरीयकत्वादिति भावः । विरहेणेति । अबाधितत्वादिति भावः । ननु रूढमेवानन्वयपदमत आह—अपि चेति । अत्र द्वितीयभेदे च । निरुपमत्वं एषूपमानान्तरेत्यादिना

### मधुसूदनी

व्याप्तिरिति चेन्न । न च एतद्वाच्यमित्यन्वयः । ननु कुतो न वाच्यमित्याह-नास्त्यन्वय इति । इदं हृदयम् । "न अस्ति अन्वयोऽस्य" इत्यर्थे "नञोऽस्त्यर्थानां वाच्यो, वा च उत्तरपदलोपः" नञः परेषामस्त्यर्थवाचिनां पदानां पदान्तरेण बहुव्रीहिर्व्याख्येयः, तत्र उत्तरपदभूतानामस्त्यर्थवाचिनां लोप इत्यर्थकेन वार्तिकेन बहुव्रीहौ कृते अस्तिपदलोपः । तथा च "अन्वयाभाव इति योगमर्यादया लभ्योऽर्थः । प्रकृते च नायिकार्धावयवस्य वामत्वेन दक्षिणत्वेनेत्यवच्छेदकभेदात् अवच्छेद्यभेदोऽतो वामार्धात् भिन्नस्य साद्दश्यप्रतियोगिनः दक्षिणार्धस्य उपमानत्वेन अन्वय एव न तु अन्वयाभाव इति अन्वयाभावरूपयोगार्थस्य विरहेण अर्थादन्वयसद्भावेन एष्वन्यतमतदेकदेशप्रतियोगिकसाद्दश्यस्य अनन्वयपदार्थत्वस्यासंभव एव । तस्मान्न च एतद्वाच्यमित्यन्वयः ।

ननु भवता "आम्रान् पृष्टः कोविदारानाचष्टे' इति न्यायोऽत्रानुसंहितः । वयमेष्वन्यतमप्रतियोगिकसाद्दश्यत्वमनन्वयत्वमिति रूढमेवानन्वयपदमत्रेति व्यवतिष्ठामहे । भवान् कथयति योगार्थविरहेणेत्यत आह-अपि चेति । ननु अनन्वयपदं रूढमेवास्तु । तथापि "गगनं गगनाकारम्" इत्यादावनन्वये उपमेयस्य गगनस्यैव उपमानत्वेनोपन्यासात् उपमेयमेव उपमानं भवितुमर्हति किन्तु उपमेयातिरिक्तमुपमानं भवितुं नार्हति इति तद्विरहप्रतीतिद्वारा उपमेयगतं निरूपमत्वं सिध्यति फलति । प्रकृते एतावतीत्यत्र तु वामत्वदक्षिणत्वाभ्यां भिन्नयोरर्धयोरुपमानोपमेयग्रथनेन निरुपमत्वमसम्भवाद्विरुद्धमेव । तस्या इति । तस्याः कान्तायाः प्रकृते अनुपमेयत्वात् उपमेयत्वाभावात् । वामार्धस्यैवोपमेयत्वमिति । तद्वत निरुपमत्वस्यैवानन्वयफलत्वकल्पनस्य । न तु कान्तागतनिरुपमत्वस्येति ।

### बालक्रीड़ा

वह, तदेकदेश और तत्प्रतिविम्ब एतदन्यतम प्रतियोगिक सादृश्य अनन्वय है । ऐसा मानने पर कहाँ अतिव्याप्ति है यह आप नहीं कह सकते हैं । क्योंकि जहाँ अन्वय संगति नहीं हो इस योगार्थ के अभाव में उपमेय के एक देश के साथ सादृश्य में अन्वय हो जाने से अनन्वय की संभावना ही नहीं है ।

और भी वात है कि गगन गगन के आकार वाला है इत्यादि अनन्वय में उपमेय का ही उपमानत्वेन विन्यास किया है अतः उपमेय से अतिरिक्त उपमान के अभाव की प्रतीति के

'गगनं गगनाकारम्' इत्यादावुपमेयस्यैवोपमानत्वेनोपन्यासादुपमेयातिरिक्तो-पमानविरहप्रतीतिद्वारा निरुपमत्वमुपमेयगतं सिद्धयति। अत्र च वामार्ध-स्योपमेयस्य दक्षिणार्धरूपोपमानकथनेन निरुपमत्वं विरुद्धमेव। कान्तागत-निरुपमत्वप्रत्ययस्तु नानन्वयस्य फलं भवितुमर्हति। तस्या अनुपमेयत्वात्।

यदपि चालंकारसर्वस्व(टीका)कृता' अनन्वयध्वनित्वमत्र भविष्यति अन्यथालंकारध्वनेर्विषयापहारः स्यात्' इत्युक्तम्, तदपि तुच्छम्। अस्य ह्युप मानिनिषेधफलकमभिन्नोपमानोपमेयकं सादृश्यं स्वरूपमित्युक्तम्। प्रकृते च

## मर्मप्रकाशः

प्रतिपादितम्। ननु तेन ग्रन्थेन कान्तायां निरूपमत्वं प्रतिपादितं न तत्रात आह—कान्तेति। अनन्वयध्वनित्वमिति। तद्वामार्धं दक्षिणार्धमनुहरतीत्युच्यतां सोऽनुहरतीति व्यङ्ग्यमिति भावः। एवं चास्य हीत्यादिना किमुच्यते तद्विचार्यं सहृदयैः। ईदृशव्यङ्ग्यव्यञ्जने उपायाभाव इत्यपि कश्चित्। अत्र द्वितीयं लक्ष्यते। हि यतः। अस्यानन्वयस्येदं स्वरूप-मित्युक्तमतस्तत्तुच्छमित्यर्थः। तदुपपादयति—प्रकृते चेति। तत् अभिन्नोपमानोपमेयक

## मधुसूदनी

यदपीति। अलंकारसर्वस्वटीकाकृता विमर्शिनीकारेणेत्यर्थः। अयं वक्ष्य-माणोऽर्थस्तट्टीकाकृतैवोक्तो न तु अलंकारसर्वस्वकृतेति बोध्यम्। टीकाक्षराणि इमानि "अस्य हि उपमानान्तरनिषेधपर्यवसायि अभिधीयमानमेकस्यैवोपमानोपमेयत्वं स्वरू-पम्। न च तत्स्वरूपमत्र शब्देनोच्यतेऽपि तु व्यज्यते इति प्रतीयमानतैव युक्ता इति। न वाच्यत्वमस्येति न वाच्यम्। एवं हि अलंकारध्वनेर्विषयापहारः स्यादिति। निषेधफलकं निषेधपर्यवसायि अभिन्नमेकम्। प्रकृते च "एतावति प्रपञ्चे" इति पद्ये च। तत् स्वरूपम् उपमान्तरनिषेधपर्यवसायि एकोपमानोपमेयकमित्येवं रूपम्। बाधितं वामार्धदक्षिणार्धयोर्भेदात् असंगतम्।

अनेति। अत्र पद्ये अनुहरतीति पदस्य सादृश्ये शक्त्यभावाद् व्यक्तिरेव। तदेतदुच्यते अनन्वयध्वनित्वमत्र भविष्यतीति। ननु तयोस्तत्स्वरूपस्य बाधितत्वेऽपि

## बालक्रीड़ा

द्वारा उपमेय में निरुपमत्व सिद्ध होता है किन्तु प्रकृत में वामार्ध उपमेय की तुलना में दक्षिणार्ध को उपमान कह देने से निरुपमत्व विरुद्ध हो गया अर्थात् उपमा ही सिद्ध हो गई।

अगर कहें कि कान्ता इतनी शानदार है इतनी बेजोड़ है कि उसकी जोड़ी की कल्पना करना तो दूर की बात है उसके अवयवों की भी उपमा आपुस में ही एक दूसरे से हो सकती है अन्य के अवयवों से नहीं : इस तरह भी कान्ता में निरुपमत्व की प्रतीति अनन्वय का फल नहीं हो सकता है। क्योंकि वह कान्ता प्रकृत में उपमेय ही नहीं है।

और भी जो अलंकारसर्वस्व के टीकाकार ने कहा कि इस प्रकृतपद्य में अनन्वय वाच्य तो नहीं

वामार्धदक्षिणार्धयोस्तद्बाधितमित्युक्तमेव। कान्तायाः पुनरुपमाननिषेधस्य व्यङ्ग्यत्वेऽपि अभिन्नोपमानोपमेयकसादृश्यस्य स्वरूपस्याप्रत्ययात्। नहि निरुपमत्वप्रतीतिषु सर्वास्वभिन्नोपमानोपमेयकसादृश्यप्रतीतिपूर्वकत्वमिति नियमोऽस्ति। कल्पितोपमातिशयोक्त्योरसमालंकारध्वनौ च व्यभिचारात्। तस्मान्नास्त्येवात्रानन्वयगन्धोऽपि।

यच्च 'अयमनन्वयो व्यङ्ग्योऽप्यस्ति।

मर्मप्रकाश

सादृश्यं तयोर्भेदात्। ननु कान्तागतनिरुपमत्वस्य व्यङ्ग्यत्वेन तस्या एवोपमेयाया उपमानत्वकल्पनेन तादृशसादृश्यप्रतीतिस्तयोस्तस्य बाधितत्वेऽस्त्येवात आह—कान्ताया इति। सादृश्येऽप्यन्वयः। कल्पितोपेति। स्तनाभोगे इत्यत्रेत्यर्थः। अतीति। यद्यपीतीत्यर्थः। उपसंहरति—तस्मादिति। सैव तदागमनप्रभवैव।

मधुसूदनी

कान्ताया एव तदस्तु इत्यत आह=कान्ताया इति। स्वरूपस्य तादृशानन्वयलक्षणस्य अप्रत्ययात् अज्ञानात्।

ननु यदि कान्तायां तादृशस्वरूपस्याप्रत्ययस्तर्हि उपमाननिषेधरूपं फलं कथं व्यज्येत इति चेदाह—नहीति। कल्पितोपमायां स्तनाभोगे इत्यत्र। उपमानस्य कल्पिततया उपमेयाद् भिन्नत्वमेव। यद्यर्थोक्तौ च कल्पनात्मिकायामितिशयोक्तौ च राकायामकलंकं चेदिति चेत्पदानुस्यूतस्य उपमानस्योपस्थापनादुपमेयाद् भेद एव। असमालंकारध्वनौ च सदसद्विवेकेत्यत्र पूर्णमसुरैरित्यत्र च उपमेयस्य तुलायां कचिदुपमानस्य निषेधात् कचित्तुलाया एव निषेधात् भेद एव। एवं च उपमानोपमेययोरभिन्नत्वं नास्ति, कुतः तत्पूर्वकं निरुपमत्वमिति। तस्मादुक्ताद् हेतोरत्र "एतावति" इति पद्ये अनन्वयस्य गन्धोऽपि नास्ति।

बालक्रीड़ा

है किन्तु अनन्वय ध्वनि है। अन्यथा अनन्वयालंकार ध्वनि का विषय ही कोई नहीं होगा। वह सब कथन तुच्छ है। क्योंकि कहा है कि इस अनन्वय का स्वरूप उपमान निषेधफलक एकोपमानोपमेयक सादृश्य है। वह स्वरूप प्रकृत वामार्ध एवं दक्षिणार्ध में बाधित है। यह बतलाया ही जा चुका है। हां कान्ता का कोई जोड़ी दार नहीं है उपमान नहीं है इस निषेध के व्यंग्य होने पर भी अभिन्नोपमानोपमेयक सादृश्यात्मक स्वरूप की प्रतीति नहीं होती है। क्योंकि यह कोई नियम नहीं है कि सभी निरुपमत्व प्रतीतियाँ अभिन्नोपमानोपमेयक प्रतीति पूर्वक ही होंवे। इसका कल्पितोपमा यद्यर्थातिशयोक्ति एवं असमालंकार ध्वनि में व्यभिचार है। उनमें निरूपमत्व प्रतीतियाँ तो होती है किन्तु अभिन्नोपमानोपमेयक सादृश्य नहीं है। इसलिए यहां पर अनन्वय की गन्ध भी नहीं है।

यथा—

'अद्य या मम गोविन्द ? जाता त्वयि गृहागते ।
कालेनैषा भवेत्प्रीतिस्तवैवागमनात्पुनः ॥'

अत्र गृहागतं श्रीकृष्णं प्रति विदुरवाक्ये इयं त्वदागमनप्रभवप्रीतिर्बहुकालव्यवहितेन पुनरपि त्वदागमनेनैव भवेत् नान्येन, इत्युक्तिभङ्ग्या त्वदागमनप्रभवप्रीतेः सैव सदृशी न त्वितरप्रभवा इति व्यज्यते" इत्यप्पय्य दीक्षितैरभिहितम्, तदपि न । अमुष्यास्त्वदागमनप्रभवायाः प्रीतेर्वारान्तर

मर्मप्रकाशः

अमुष्या इति । यत इत्यादिः ।

मधुसूदनी

अद्येति । हे गोविन्द ? त्वयि गृहागते सति या मम प्रीतिरद्य जाता वर्त्तते, कालेन अर्थात् बहोः कालादनन्तरं पुनर्वारान्तरस्मिन् तवैवागमनात् सा भवेत् ।

अत्र दीक्षिताः । त्वदागमनप्रभवप्रीतेः सदृशी त्वदागमनप्रभवा प्रीतिरिति व्यञ्जनादनन्वयो ध्वन्यते । इति कथयन्ति । तत्र पण्डितराजाः एका सामान्या प्रीतिरवयविनी या कदापि श्रीकृष्णागमनेन प्रभवा । द्वितीया एतत्कालिकत्वदागमनजन्या प्रीतिः, वारान्तरत्वदागमनजन्या प्रीतिश्चेति विशेषभूते द्वे प्रीत्यौ कालभेदेन भिन्ने इति भिन्नयोस्तयोरुपमानोपमेयभावे "साधर्म्यमुपमा भेदे" इत्युक्तेः सादृश्यस्यान्वय एव । अभिन्नोपमानोपमेयकसादृश्यस्थले स्वस्मिन् स्वसादृश्यस्यान्वयाभावादनन्वय इति तल्लक्षणाप्रसक्तेरनन्वयगन्धोऽपि नास्तीति कथयति ।

अन्येन त्वदागनाद्भिन्नेन हेतुना जायमाना न । अमुष्याः साम्प्रतमनुभूयमानायाः । वारान्तरेति कालान्तरेत्यर्थः सामान्यायाः प्रीतेरवयवयोरंगयोः । अबाधितत्वात् समन्वयात् । योगलभ्यस्य अर्थस्य "नास्ति अन्वयो यत्रे"त्यस्य । अभावेन

बालक्रीड़ा

जो तो—यह अनन्वय व्यंग्य भी है जैसे—हे गोविन्द ? आज जो आनन्द मुझे आपके पधारने से प्राप्त हुआ है वह आनन्द फिर कभी आपही के पधारने पर मिलेगा ।

यहां गृहागत श्रीकृष्ण के प्रति विदुर के वाक्य में "यह आपके आने से होने वाली प्रीति फिर कभी आपही के आगमन से होगी अन्य से नहीं" इस तरह के कथन की शैली से त्वदागमन प्रभवप्रीति के सदृश त्वदागमनप्रभवा प्रीति ही है इतरप्रभवा प्रीति नहीं है यह व्यक्त होता है । ऐसा अप्पय्य दीक्षित जी ने कहा वह भी ठीक नहीं है ।

आज के इस तुम्हारे आगमन से होने वाली प्रीति के सदृश फिर कभी तुम्हारे ही आगमन से होने वाली प्रीति है यह प्रतीति सर्वजन सिद्ध है । ये दोनों विशेष प्रीतियाँ

त्वदागमनप्रभवा प्रीतिः सदृशीति प्रत्ययस्य सर्वजनसिद्धतया श्रीकृष्णागमनजन्यप्रीतिसामान्यावयवयोर्द्वयोः प्रीतिव्यक्त्योः सादृश्यस्याबाधितत्वाद्योगार्थाभावेनानन्वय एव नायं भवितुमर्हति। 'स्वस्मिन् स्वसादृश्यस्यान्वयाभावादनन्वयः' इत्युपमाप्रकरणे स्वयमेवाभिधानात्। उपमेयस्य प्रीतिव्यक्तिविशेषस्य सदृशान्तरव्यवच्छेदे बाधात्तादृशप्रीतिसामान्यस्य चावय-

मर्मप्रकाशः

व्यक्त्योरितरभेदेनेति शेषः। योगार्थेति। अनन्वयपदयोगार्थेत्यर्थः। ननु रूढमेवानन्वयपदमभिमतमत आह—स्वस्मिन्निति। व्यवच्छेदे बाधादिति। तस्य व्यवच्छेदकरणेऽसामर्थ्यादित्यर्थः कालान्तरस्थप्रीतिव्यक्तिविशेषस्य सदृशस्य सत्त्वादिति भावः।

मधुसूदनी

विरहेण। प्रीतिव्यक्तिविशेषस्य वारान्तरकालिकत्वदागमनप्रभवप्रीतिरूपवस्तुविशेषस्य। एतत्कालिकतादृशप्रीतिः वारान्तरकालिकतादृशप्रीतिश्चेति इमे द्वे विशेषभूते प्रीत्यौ। इति द्वयोस्तयोर्भिन्नतया उपमानोपमेयभावस्य अन्वय एव नतु अनन्वयः। ननु कुतो न अनन्वय इत्याह—सदृशेति। प्रीतिसदृशान्तरस्य वारान्तरकालिकतादृशप्रीतिव्यक्तिविशेषस्य उपमेयस्य उक्तप्रीतिद्वयदिशा सद्भावात् सदृशान्तरं नास्ति इत्येवंरूपे व्यवच्छेदे अभावे बाधोऽप्रतीतिः। यथा तदभाववत्ताबुद्धिः तद्वत्ताबुद्धेः प्रतिबन्धिका, तथा तद्वत्ताबुद्धिरपि तदभाववत्ताबुद्धिं प्रतिबध्नाति।

ततश्च सदृशाया अन्यस्या विशेषप्रीतेः सद्भावज्ञानेन सदृशान्तरव्यवच्छेदे विषयतया प्रीतिव्यक्तिविशेषस्य उपस्थितौ बाधात् अवरोधात् हेतोः। ननु विशेषप्रीत्योस्तुलनासमये सामान्यप्रीतेस्तु चर्चाऽनर्हेति प्रीतित्वेन सदृशायाः सामान्यायाः प्रीतेस्तस्मिन् समये व्यवच्छेद एव तर्हि सदृशान्तरव्यवच्छेदे बाधादित्युक्तिः कथमित्यत आह—तादृशेति। अयं भावः। द्वितीयसदृशव्यवच्छेदबुद्धौ विषयतया उपस्थितौ यस्य बाधः स प्रीतिविशेषः उपमेयम्। यस्य च बाधो नास्ति तत्प्रीति सामान्यम् अनुपमेयम्। एवञ्च निरुपमतया प्रतीयमानस्य अवयविनः तादृशस्य

बालक्रीड़ा

श्रीकृष्ण के आगमन से होने वाली सामान्य प्रीति के अवयव हैं। अतः इन दोनों प्रीतियों के सादृश्य में कोई बाधा नहीं है अर्थात् अन्वय हो जाता है। फलतः जहाँ अन्वय नहीं होता है वह अनन्वय है इस योगार्थ के अभाव में यहां अनन्वयालंकार नहीं हो सकता है। अपने में अपने सादृश्य का अन्वय संगत नहीं होने से अनन्वय होता है यह आपने उपमा प्रकरण में कहा है। प्रकृत में प्रीतिव्यक्तिविशेषरूप उपमेय के सदृश दूसरी प्रीतिव्यक्तिविशेष नही है इसमें बाधा है अर्थात् ऐसा आप कह नहीं सकते हैं क्योंकि विशेष प्रीतियाँ परस्पर में भिन्न हैं अतः सादृश्य है और निरुपमतया प्रतीयमान अंगीभूत सामान्य प्रीति उपमेय नहीं है अतः तुम्हारे दक्षिणार्ध के सदृश तुम्हारा वामार्ध है इस उदाहरण के तुल्य ही इसकी भी गति है।

विनो निरुपमतया प्रतीयमानस्यानुपमानस्यानुपमेयत्वात्पूर्वोदाहरणतुल्यमेवैतत्। क्वचिदवयवयोरुपमाप्यवयविगतनिरुपमत्वव्यञ्जिकेति स्थिते सामान्यस्य श्रीकृष्णागमनजन्यप्रीतेः सैव सदृशीति मध्ये स्वसादृश्यप्रत्ययकल्पनं पुनर्न सहृदयहृदयमारोढुमीष्टे। रत्नाकरोक्तस्यैवानन्वयप्रकारस्यात्र व्यङ्ग्यते-

## मर्मप्रकाशः

तादृशेति। श्रीकृष्णागमनजन्येत्यर्थः। पूर्वोदाहरेति। अनुहरतीत्युदाहरणेत्यर्थः। नन्वयविनो निरुपमत्वप्रतीतिवन्मध्ये सादृश्यप्रतीतिरप्यस्तु अत आह—क्वचिदिति। पूर्वोदाहरण इत्यर्थः। सैव श्रीकृष्णागमनजन्यप्रीतिरेव। मध्ये वाच्यव्यङ्ग्यार्थयोर्मध्ये। ननूक्तरीत्या न व्यङ्ग्यत्वं किं तु रत्नाकरोक्तरीत्येति नोक्तदोषोऽत आह—रत्नेति। तस्त प्रकारस्य

## मधुसूदनी

श्रीकृष्णागमनजन्यस्य प्रीतिसामान्यस्य अनुपमेयत्वात्। एतत् "अद्य या मम गोविन्द ?" उदाहरणम्। पूर्वोदाहरणेन "एतावति" इत्यात्मकेन तुल्यमेव। कान्ताया अनुपमेयत्वात्, कान्तागतानिरुपमत्वप्रतीतिर्नानन्वयस्य फलं भवितुमर्हति। वामार्धदक्षिणार्धयोश्च सादृश्यस्य समन्वयात् यथा पूर्वोदाहरणेऽनन्वयो निरस्तस्तथा अद्येत्यस्मिन् प्रकृतोदाहरणेऽपि सामान्यप्रीतेरनुपमेयत्वात्, सामान्यप्रीतिगता निरुपमत्वप्रतीतिर्नानन्वयस्य फलं भवितुमर्हति। विशेषप्रीत्योश्च सादृश्यस्य समन्वयात् अनन्वयो निरस्त इति वेदनीयम्।

कान्ताया निरुपमत्वप्रत्ययस्य कारणं कान्ताया अवयवयोः वामार्धदक्षिणार्धयोस्तोलनं, सामान्यप्रीतेर्निरुपमत्वप्रत्ययस्य कारणं सामान्यप्रीतेरवयवयोः विशेषप्रीत्योस्तोलनम्। एतेन सिद्धयति यत् अवयवयोरुपमा अवयविनो निरुपमत्वं व्यञ्जयति। इति स्थितेऽपि सिद्धेऽपि मध्ये तयोरुपमाया अनन्तरं तत्वव्यंजनायाः प्राक्। एवमुपमाव्यञ्जनयोरन्तरकाले सामान्यायाः प्रीतेः सदृशी सैव सामान्या प्रीतिरेव इत्याकारकं स्वसादृश्यप्रययकल्पनं तु। स्वं सामान्यप्रीतिः। पुनस्त्वर्थे। सहृदयहृदयमारोढुं स्वानुभवगम्यं भवितुं नष्टे न समर्थम्।

## बालक्रीड़ा

कहीं पर अवयवों की उपमा भी अवयवी के निरुपमत्व की व्यञ्जिका है इस सिद्धांत के मान लेन पर भी श्रीकृष्णागमनजन्यप्रीति के सदृश श्रीकृष्णागमनजन्य प्रीति है इस प्रकार मध्य में स्व सादृश्य की कल्पना अपने में अपनी समानता को करना सहृदयों के हृदय पर आरूढ़ नहीं हो सकती है। आपके निर्दिष्ट लक्षण के अनुसार यहाँ अनन्वय व्यंग्य नहीं हो सकता है। ठीक है। किन्तु रत्नाकर प्रोक्त लक्षण के अनुसार तो यहाँ अनन्वय का प्रकार व्यंग्य है यह भी तो आप नहीं कह सकते हैं। क्योंकि वह अनन्वय का प्रकार नहीं हो सकता है यह सब पहिले ही दूषणों से दूषित कर दिया है। अतःप्रकृत में वह प्रकार कथनीय नहीं है। और स्वयं अप्पय्यदीक्षित जी ने अनन्वय के प्रकरण में उसका प्रतिपादन नहीं किया है।

त्यपि न युक्तम् । तस्य प्रागेव दूषितत्वात् , प्रकृतेऽवाच्यत्वात्स्वयमनन्वय-प्रकरणे तस्य प्रतिपादनविरहाच्च ।

इदं पुनरनन्वयध्वन्युदाहरणम्—

'पृष्टाः खलु परपुष्टाः, परितो दृष्टाश्च विटपिनः सर्वे ।
भेदे तु भुवि न पेदे साधर्म्यं ते रसाल ? मधुपेन ॥'

अत्र भेदे इत्युक्त्याभेदे सादृश्यमनन्वयात्मकं तु पेदे इति ध्वन्यते ।

मर्मप्रकाशः

प्रकृतेऽवाच्यत्वात् । अवाच्यत्वे हेतुः प्रागेव दूषितत्वादिति । ननु त्वया दूषितोऽपि न मया दूषितस्तत्राह—स्वयमिति । 'अन्यथालंकारध्वनेर्विषयापहारः स्यात्' इति रत्नाकरोक्ति खण्डयितुमाह—इदं पुनरिति । परपुष्टाः कोकिलाः । हे आम्रवृक्ष ? भुवि भेदे तु

मधुसूदनी

तस्येति । प्रकारस्य प्रागेव "एतावति" इत्युदाहरणविचारे पूर्वमेव दूषित-त्वाद्धेतोः प्रकृते अद्येत्यादिविचारे अवाच्यत्वात् कथयितुमयोग्यत्वात् ।

ननु तस्य प्रकारस्य त्वया पण्डितराजेन दूषितत्वेऽपि मयाप्यप्पदीक्षितेन तु न दूषितः स प्रकार इत्याह—स्वयमिति । स्वयं भवता । तस्य प्रकारस्य अप्रतिपादनात् । तथाप्रतिपादने तु एवं कथयितुं शक्यत्वात् ।

ननु विमर्शिनीकारोक्तं दीक्षितोक्तं च अनन्वयध्वन्युदाहरणं खण्डयतो भवतः क आशयः किमनन्वयध्वनेरुदाहरणमेव नास्ति तत्राह—इदं पुनरिति ।

पृष्टा इति । हे रसाल! आम्र! मधुपेन परितः समन्तात् परपुष्टाः, ये परैःकाकैः आम्रादिभिः । तत्फलान्युपभुज्य पुष्टिमाप्नुवन्ति अतः परान् जानन्ति ते पक्षिणः कोकिलाः खलु वारं वारम् पृष्टाः । स्वयमपि सर्वे विटपिनो दृष्टाः । तु किन्तु भुवि कुत्रापि भेदे ते तव साधर्म्यं सादृश्यं न पेदे । अत्र पद्ये भेदे तु साधर्म्यं न पेदे इत्युक्त्या तुपदस्वारस्यात् अभेदे सादृश्यं पेदे इत्यर्थः । तेन तादृशं सादृश्यमनन्वय-स्वरूपं "रसालो रसाल इव" इति ध्वन्यते । अत्र "भेदे" "तु" इति मूलवृत्त्योः पाठः ।

बालक्रीड़ा

तब फिर क्या अनन्वय ध्वनि हो ही नहीं हो सकती है । इस पर कहते हैं कि नहीं यह बात नहीं है अनन्वय ध्वनि का उदाहरण हो सकता है । हे रसाल ? मधुप ने कोयलों से पूछा और इधर-उधर सभी पेड़ों को खोजा । किन्तु पृथ्वी पर उसने भेद में अर्थात् तुमसे भिन्न में तुम्हारा साधर्म्य नहीं पाया । अर्थात् अभेद में तुम्हारे में तुम्हारा साधर्म्य जो कि अनन्वय स्वरूप है उसको पाया । यह ध्वनित होता है । यहाँ "भेदेन" पाठ नहीं है "भेदे तु" पाठ है ।

यथा वा—

'नगेभ्यो यान्तीनां कथय तटिनीनां कतमया
पुराणां संहर्तुः सुरधुनि ? कपर्दोऽधिरुरुहे ।
कया वा श्रीभर्तुः पदमितरयाक्षालि सलिलै-
स्तुलालेशो यस्यां तव जननि ? दीयेत कविभिः ॥'

अत्र कतमया त्वरितरया पुराणां संहर्तुः कपर्दोऽधिरुरुहे । कया वा त्वदितरया श्रीभर्तुः पदं सलिलैरक्षालि यस्यामितरस्यां कविभिस्तव तुलालेशोऽपि दीयेतेत्यर्थेन त्वयि पुनरधिरूढत्रिपुरहरकपर्दायां, सलिलक्षालित-

### मर्मप्रकाशः

सादृश्यं भ्रमरेण न पेदे । न गृहीतमित्यर्थः । नगेभ्यः पर्वतेभ्यः । कपर्दो जटाजूटः । अत्र पूर्वार्धे तादृशव्यञ्जकाभावादाह—अत्र कया वेति । पूर्वोदाहरणे भेदे तु नेत्युक्त्या

### मधुसूदनी

नगेभ्य इति । हे सुरध्वनि ! गंगे ! ममोक्ति न श्रद्धत्से तर्हि त्वमेव निर्धार्य कथय नगेभ्यो यान्तीनां पर्वतेभ्यो निःसृत्य गच्छन्तीनां तटिनीनां मध्ये कतमया सरिता पुराणां संहर्तुः भगवतस्त्रिपुरारेः कपर्दो जटाजूटोऽधिरूरुहे आक्रान्तः । त्वां विहाय न कतमयाऽपि इति निर्धारणेन सामान्येन निषेध एव । तदाह वा कयाऽपीति । कया वा सरिता श्रीभर्त्तुर्मधुसूदनस्य पदकमलं सलिलैरक्षालि । यस्यां सरिति हे जननि ! मातः ! तव तुलाया लेशोऽपि पूर्णोपमायास्तु सम्भावनैव नास्ति । कविभिः दीयेत । अत्र कतमया त्वदितरया पुराणां संहर्तुः कपर्दोऽधिरुरुहे । इति । अधिरूढत्रिपुरहरकपर्दायामित्यपि च पाठः । श्री गंगागते निरुपमत्वे पर्यवसातुं शीलमस्येति पर्यवसायी अनन्वयस्य आत्मा स्वरूपम् व्यज्यते । इतरपदमहिम्ना ।

### बालक्रीड़ा

यह भी उदाहरण है—हे सुरधुनि ? मातंगंगे ? आप ही कहिये कि पहाड़ों से निकलने वाली नदियों में से कौन-सी नदी ने पुरों के संहारकर्त्ता त्रिपुरारि के कपर्द में अधिरोहण किया : और किसने अपने जलों से श्रीपति मधुसूदन के चरणकमल को धोया जिसमें तुम्हारा कुछ भी सादृश्य कवि लोग (बतलावें) देवें ।

यहाँ तुम्हारे सिवाय कौन सी नदी ने त्रिपुरारि के कपर्द पर अधिरोहण किया और किसने श्रीपति के चरण को जल से धोया जिस दूसरी नदी में कवि लोग तुम्हारी तुलना का लेश भी देवें । इस अर्थ से अधिरूढत्रिपुरारिकपर्दा एवं सलिलक्षालितश्रीरमणचरणा तुम्हारे साथ तुलना की जा सकती है ऐसा अनन्वय स्वरूप अर्थ—जिसमें गंगागतनिरुपमत्व का

श्रीरमणचरणायां च तत्र तुला दीयेतैवेत्यर्थोऽनन्वयात्मा श्रीगङ्गागतनिरुपमत्वपर्यवसायी इतरपदमहिम्ना व्यज्यते ॥

इति रसगङ्गाधरेऽनन्वयप्रकरणम् ।

### मर्मप्रकाशः

तादृशव्यङ्ग्यस्य स्फुटं प्रतीतिः । अत्रत्वस्फुटा । अतएवोदाहरणान्तरदानं ध्वनयन्नाह—इतरपदमहिम्नेति ॥ इति रसगङ्गाधरमर्मप्रकाशेऽनन्वयप्रकरणम् ॥

### मधुसूदनी

इदं तु बोध्यम् प्राचां भामहादीनाम् अर्वाचां मम्मटादीनाञ्च अनन्वय इति संज्ञा । "अनन्वय ससंदेहौ" उपमास्वेव दर्शितौ" इति आचार्यदण्डिनः । एषां सर्वेषां प्रतिवस्तूपमायाश्चोपमाप्रपञ्चत्वमिति कुन्तकस्य वक्रोक्तिजीवितकारस्य । "एकस्यैवोपमानोपमेयत्वेऽनन्वयोपमा। एकवाक्ये" इत्युक्त्यालंकारकौस्तुभस्य अनन्वयोपमेति संज्ञा ।

त्रिचतुःपञ्चादिवाक्येषु उपमेयस्योपमानत्वे रशनोपमा (१) वाक्ययोर्द्वयोस्तथात्वे उपमेयोपमा (२) एकस्मिन् वाक्ये तथात्वे अनन्वयोपमा (३) इत्येकः प्रकारः । उपमानोपमेययोः क्रमेण विन्यासे उपमा ।१ यथा चन्द्र इव मुखमिति । तयोरक्रमेण विन्यासे अर्थात् तयोर्विपर्यासे चत्वारो भेदाः । एकवाक्ये विपर्यासात् मुखमिव चन्द्र इति प्रतीपोपमा १, वाक्यद्वये विपर्यासात् चन्द्र इव मुखम् , मुखमिव चन्द्र इति उपमेयोपमा २, उत्तरोत्तरं त्रिचतुःपञ्चादि वाक्येषु विपर्यासात् । चन्द्र इव मुखम् , मुखमिव कमलम् , कमलमिव नयनम् , नयनमिव खञ्जनम् , खञ्जनमिव नीलाम्भोजमिति रशनोपमा ३, स्वस्मिन् विपर्यासात् धर्मो धर्म इव अर्थ इव अर्थः चन्द्र इव चन्द्रः । मुखमिव मुखमिति अनन्वयः ४ इति द्वितीयः प्रकारो वर्णनस्य ।

क्वचिदेकस्मिन् सादृश्यनिषेधो व्यतिरेकः "तवाननस्य तुलनां दधातु जलजं कथम्" इति रीत्या १ द्वितीयस्मिन् सादृश्यनिनिषेधोऽनन्वयः २ तृतीयस्मिन् सादृश्यनिषेध उपमेयोपमा ३ । सर्वथैव सादृश्यनिषेधोऽसमालंकार ४ । क्वचित्कः सादृश्यनिषेध उपमानलुप्ता ५ । इदं तु बोध्यम् । अनन्वयोपमेयोपमयोः सादृश्यनिषेधो व्यंग्यः । व्यतिरेके, असमालंकारे, उपमानलुप्तायां च स वाच्यः । इति वैलक्षण्यम् । इति त्रयः प्रकाराः सादृश्यस्य ।

इति रसगंगाधरेऽनन्वयप्रकरणे मधुसूदनीविवृतिः ।

### बालक्रीड़ा

पर्यवसान होता है—वह कतमया और कया पदों के साथ २ इतर पद के माहात्म्य से व्यक्त होता है ।

इति बालक्रीड़ा में अनन्वयप्रकरण समाप्त हुआ ।

---

## अथासमालंकारः

**सर्वथैवोपमानिषेधोऽसामाख्योऽलंकारः ॥**

अयं चानन्वये व्यङ्ग्योऽपि तच्चमत्कारानुगुणतया रूपकदीपकादावुपमेव न पृथगलंकारव्यपदेशं भजते। वाच्यतायां तु स्वातन्त्र्येण चमत्कारितया पृथग्व्यपदेशभाक्।

यथा—

'भूमीनाथ ? शहाबदीन ? भवतस्तुल्यो गुणानां गणै-
रेतद्भूतप्रभवप्रपञ्चविषये नास्तीति किं ब्रूमहे।
धाता नूतनकारणैर्यदि पुनः सृष्टिं नवां भावये
न्न स्यादेव तथापि तावकतुलालेशं दधानो नरः ॥'

### मर्मप्रकाश

उपमानिषेध इति। साक्षात्परम्परया वेत्यादिः। तच्चमत्करोति। तन्निषेधकृतचमत्कारपरिपोषकतयेत्यर्थः। पृथगिति। पृथगलंकारेत्यर्थः। शहाबदीनेति राज्ञो नाम। एतद्भूतेति। अनन कारणान्तरस्याप्यादौ निर्माणेन तेनाग्रिमसृष्टिकरणयोग्यता

### मधुसूदनी

#### अथासमालंकारः

इदानीमसमालंकारं निरूपमितुमाह सर्वथैवेति। सर्वथा सर्वतोभावेन उपमायाः सादृश्यस्य निषेधः। असमः आख्या यस्येति सोऽलंकारः। अत्र "असमे" परेषां विवादः।

असमालंकारो नास्तीत्येके, असमालंकारोऽस्तीति परे। अनन्वय एव स्वीकार्यः, असमो न। असमः स्वीकार्यः, अनन्वयो न। एकेन परस्य गतार्थत्वादित्यन्ये। इति विवादपरीहाराय स्वाशयस्पष्टतायै च आख्या इति अलंकार इति द्वयोः पदयोः समावेशः कृतः। रूपकदीपकादौ यथा उपमाव्यंग्याऽपि दीपकादिस्वरूपसम्पादने व्यग्रा तद्गत-

### बालक्रीड़ा

#### अथ असम का आरम्भ होता है

जहां सर्वथा ही उपमा का निषेध रहता है वह असम नामक अलंकार है।

यह अलंकार अनन्वय स्थल में व्यंग्य होता है किन्तु वहाँ अनन्वय के ही चमत्कार का उत्कर्षक वह होता है अतः उपमा को जैसे रूपक एवं दीपक आदि में नामतः उनसे पृथक् अलंकार नहीं कहा जाता है उसी तरह असम को भी अनन्वय से पृथक् अलंकार नहीं कहते हैं। हाँ वाच्यावस्था में तो स्वतन्त्ररूप से चमत्कारी होने पर पृथक् नाम से व्यपदेश किया जाता है। जैसे—

हे भूमीनाथ ! शहावदीन ? पंच महाभूतों से वने इस प्रपंच (जगत्) में गुणगण से आपके तुल्य कोई नहीं है इस बात को क्या कहें। वह तो सिद्ध ही है कि आपके तुल्य

यथा वा—

'भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः ।
न भविष्यति नास्ति नाभवन्नृप ! यस्ते भजते तुलापदम् ॥'

मर्मप्रकाशः

सूचिता । अन्यथा तेषामेवासत्त्वादसंगतिः स्पष्टैव । तदाह – नूतनेति । प्रसिद्धपञ्चभूतातिरिक्तस्वनिर्मितिकारणैरित्यर्थः । अत एव सृष्टेरपि न तत्त्वम् । न स्यादेवेत्यर्थ इतीति शेषः । नृपेति संबोधनम् । पदं स्थानं चिह्नं वस्तु वा । आद्ययोर्भेदेन संबन्धः । अन्त्ये-

मधुसूदनी

चमत्काराधायकतयाऽप्रधानत्वात् पृथगलंकारव्यपदेशं न भजते तथा अयमुपमानिषेधोऽसमोऽनन्वये व्यंग्योऽपि तथाभूतत्वात् पृथक् स्वतन्त्रतया अलंकारव्यपदेशमसम इत्याख्यां न भजते न लभते ।

अयं भावः । आगत्य संप्रति वियोग विसंष्ठुलांगीमित्यादौ रविकमलिनीवृत्तान्तो वाच्यः नायकनायिकावृत्तान्तो व्यंग्यः । तत्र वाच्यस्योक्तवृत्तान्तस्योत्कर्षाधायकतया स्थितोऽपि अपरांगेतिनामा गुणीभूतव्यंग्यो यथा समासोक्तिरलंकार इति पृथक् व्यपदेशं लभते तथा तद्रूपेण स्थितो व्यंग्योऽयमसमः पृथगलंकाराख्यां न लभते किन्तु वाच्यः सन् तदाख्यां लभते इति ।

हे भूमीनाथ ? शहावदीन ? एतेभ्यो वर्त्तमानेभ्यो भव उत्पत्तिर्यस्य स प्रपञ्चस्तस्य विषये भवतो गुणानां गणैस्तुल्यो नास्तीति किं ब्रूमहे । पुरातनैः कारणैः निर्मितायां पुरातन्यां सृष्टौ भवत्सदृशो नास्तीति किं वक्तव्यं। धाता ब्रह्मा नूतनैः कारणैर्यदि नवां सृष्टिं भावयेत् तथापि तावकतुलायाः लेशमपि लवमपि दधानो नरो न स्यादेव । अत्र "तुलायाः लेशमपि" इति अप्यर्थोऽवश्यं वाच्यः । अन्यथा तुलाया महत्वं दधानः स्यादिति लेशनिषेधे महत्वप्रतीतिप्रसंगादनभिहितवाच्यत्वे प्रकृतविरुद्धमेव प्रतीयेतातोऽत्रानमिहितयाच्यत्वं दोषः ।

तुलापदमपि । तुलायाः पदं लक्ष्म । "पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु" इत्यमरः । अत्रापि पूर्ववद्दोषः । तुलाया एकमपि लक्ष्म यो भजते स नेति वक्तव्यम् ।

बालक्रीड़ा

कोई नहीं है । किन्तु कहना तो यह है कि धाता यदि नूतन-नूतन कारणों से पुनः नूतन सृष्टि का निर्माण करे तब भी आपकी तुलालेश को भी प्राप्त करनेवाला नहीं ही होगा ।

और भी जैसे—तीनों भुवनों में भी – जो मानव, दानव एवं देवताओं से परिपूर्ण हैं—न ऐसा हुआ और न ऐसा है तथा न ऐसा होगा जो हे नृप ? आपके तुला पद को प्राप्त करे ।

राजस्तुत्युत्कर्षकत्वादत्रासमालंकारः। आत्यन्तिकः क्काचित्कश्च सदृशनिषेधोऽसमोपमानलुप्तयोर्विषयः। सर्वथैवोपमाननिषेधेन सादृश्यस्याप्रतिष्ठानान्नोपमागन्धोऽपि।

यत्तु—

"ढुण्ढुलन्तो मरीहसि कण्टककलिआइं केअइवणाइं।
मालइकुसुमसरिच्छं भमर ? भमन्तो न पावहिसि॥' इति।

### मर्मप्रकाश

ऽभेदः। कालत्रयासत्त्वमुक्तोदाहरणाद्विशेषः। ननूदाहरणद्वयेऽपि निषेधस्य प्राधान्यात्कथमलंकारत्वमत आह—राजेति। अत्र उदाहरणद्वये। ननूपमानलुप्तयैव गतार्थोऽयमत आह—आत्यन्तिक इति। यथासंख्यमन्वयः। नन्वात्यन्तिकनिषेधेऽपि कुतो नोपमानलुप्तात

### मधुसूदनी

ननूपमानलुप्तया उपमयैवात्र भाव्यमित्याह–आत्यन्तिक इति। आत्यन्तिकः सदृशनिषेधोऽसमस्य विषयः। क्काचित्कनिषेध उपमानलुप्ताया विषयः। सादृश्यस्याप्रतिष्ठानेन चमत्काराभावादुपमाया गन्धोऽपि लेशोऽपि नास्ति। अतः उपमानलुप्तया उपमया गतार्थता असमालंकारस्य न चिन्तनीयेति।

ढुढुण्णन्त इति। ढुंढुलायमानो मरिष्यसि कण्टककलितानि केतकीवनानि। मालतीकुसमसदृसं भ्रमर ? भ्रमन्नपि न प्राप्स्यसि। इति संस्कृतम्। अत्र काव्यप्रकाशकारो धर्मोपमानलुप्तामार्थीमुपमामुदाजहार। तत्र अलंकाररत्नाकरकारोऽस-

### बालक्रीड़ा

इन दोनों उदाहरणों में यद्यपि साम्य के निषेध की प्रधानता है तद्यपि राजा की स्तुति का उत्कर्षक प्रशंसा को बढ़ाने वाला यह निषेध है अतः यहाँ असम अलंकार है। प्रश्न—उपमान लुप्ता में ही इसको गतार्थ मान लिया जाय, क्या हर्ज है। उत्तर। इन दोनों असम एवं उपमानलुप्ता का स्थल भिन्न-भिन्न है। जहाँ आत्यन्तिक निषेध है वहाँ असम अलंकार होता है और जहाँ क्वाचित्क निषेध है वहाँ उपमानलुप्ता होती है। प्रश्न—निषेधत्वेन दोनों निषेधों का ग्रहण होता ही है अतः सर्वथा सदृशनिषेध स्थल में भी उपमान लुप्ता मान लीजिए। उत्तर। उपमान के सर्वथा निषेध करने पर सादृश्य की प्रतिष्ठा नहीं होती है और सादृश्य की अप्रतिष्ठा में उपमा का गन्ध भी लेश भी नहीं होता है तब उपमान लुप्ता कैसे मान ली जाय।

इस निर्णय के बावजूद भी जिन्होंने उपमान लुप्ता के उदाहरणों को असमालंकार के लक्ष्य बतलाया है उनका खण्डन करने की भूमिका बनाते हैं जो तो। "ढुण्ढुलन्तो" को कहते हैं यहाँ उपमान लुप्ता का लक्ष्य नहीं है अपितु असमालंकार का है। क्योंकि जहाँ उपमान का संभव है किन्तु शब्द से उसका उपादान नहीं किया जाय ऐसा स्थल उपमानलुप्ता का

नेयमुपमानलुप्तोपमा। तस्याः संभवदुपमानानुपादानविषयत्वात्। अपि त्वसमालंकारः" इति रत्नाकरेणोक्तम्, तदसत्। मालतीकुसुमसदृशं भ्रमर? भ्रमन्नपि न प्राप्स्यसीत्युक्त्या वर्ततां नाम तत्सदृशं क्वापि त्वया तु दुष्प्रापमेवेति प्रत्ययादात्यन्तिकोपमाननिषेधाभावादुपमानलुप्तोपमैवेयं भवितुमर्हति, नासमालंकारः। अन्यथा मालतीकुसुमसदृशं नास्तीत्येव ब्रूयात्, न तु प्राप्स्यसीति।

### मर्मप्रकाशः

आह—सर्वथैवेति। निषेधाभावादित। संभवदुपमानत्वाच्चेत्यपि बोध्यम्। अन्यथा तस्येष्टत्वे। एवं वाच्यतायां निषेधस्यासमालंकारे सिद्धेऽनन्वये निषेधस्य व्यङ्ग्यत्वे वासमालंकारस्य ध्वननाङ्गीकारे चमत्कारस्तत एवास्तु नानन्वयकृत इत्यनेनैव गतार्थः स

### मधुसूदनी

मालंकारं मेने। तथाहि—अत्र मालतीकुसुमसदृशमन्यन्नास्ति इति उपमानासंभवः प्रतीयते। तेनोपमानानुपादानाल्लुप्तोपमेयमिति न वाच्यम्। उपमानस्य संभवतोऽनुपादाने लुप्तोपमा। अत्र चोपमानस्यासंभव एव उपनिबद्धः।

यत्रोपमानस्य न संभवोऽस्ति तत्रासमः स्यादुपमा न लुप्ता।
संभाव्यमानस्य सतः समानधर्मादिकस्य त्वनुदीरणे सा। इति!
सा लुप्तोपमेति इति संक्षेपः। इति तदक्षराणि।

किन्तु पण्डितराजोऽत्र लुप्तोपमां पुनर्व्याघुटय प्रसिषेध काचित्कनिषेधरूपाम्। तदाशय उपरिनिर्दिष्ट एव।

### बालक्रीड़ा

विषय होता है। इस प्रकार रत्नाकरकार ने जो कहा है वह सब असत् है। क्योंकि हे भ्रमर? खोजकर के भी मालती के पुष्प के सदृश पुष्प को नहीं पाओगे इस कथन से उसके जैसा पुष्प कहीं होवे किन्तु तुम उसे नहीं पा सकते हो ऐसी प्रतीति के कारण उपमान का आत्यन्तिक निषेध नहीं हुआ अतः उपमान लुप्ता ही यह हो सकती है न कि असमालंकार। अन्यथा नहीं तो मालती के पुष्प के सदृश पुष्प है ही नहीं यही कहते न कि नहीं पाओगे। क्योंकि है ही नहीं का भाव है सर्वथा सद्भाव का निषेध। और नहीं पाओगे के माने सर्वथा निषेध नहीं है किन्तु तुम्हारे सामर्थ्य के बाहर की वस्तु है। भ्रमरः कामुके भृंगे इति मेदिनी।

जो हो। अच्छा ऐसा मानिये कि असम का अर्थ है साम्य का अभाव और निरुपमत्व का भी अर्थ है उपमा (साम्य) का अभाव। अतः निरुपमत्व की ध्वनि माने असाम्य की ध्वनि होने से गतार्थ हुआ अनन्वय पृथक् अलंकार नहीं है। क्योंकि अनन्वय में चमत्कार की उपपत्ति निरुपमत्व असाम्य की ध्वनि से ही होती है।

अथासमालंकारध्वननेनैव चमत्कारोपपत्तेरनन्वयस्य पृथगलंकारता कथमिति चेत्, सत्यम्। दीपकादेरप्युपमाभिव्यक्त्यैव चमत्कारोपपत्तौ कथं

## मर्मप्रकाशः

इत्याशयेन शङ्कते—अथेति। प्रतिबन्द्या समाधत्ते—सत्यमिति। अत एव पूर्वं दृष्टा-

## मधुसूदनी

अथेत्यनेन असमविषये विचारचतुष्कं प्रस्तौति। असमालंकारध्वननेनैव गतार्थत्वादनन्वयस्य, अनन्वयध्वनिनैव गतार्थत्वादसमस्य वा पृथगलंकारता कथम्। अर्थात् एकेनापरस्य गतार्थत्वात् असमश्चेदनन्वयो मास्तु। अनन्वयश्चेदसमो मास्तु। सदृशनिषेधो जीवातुः पुनरुभयोस्तुल्यः। असमे स वाच्यः। अनन्वये स व्यंग्य इत्यन्यदेतत्। अलंकारविभाजकोपाधेरेकत्वादेक एव स्वीकार्यः। इत्येको विचारः।

उपमा वाच्या व्यंग्या च। वाच्या सा उपमालंकारः। व्यंग्या सा रूपकं, दीपकः, अपह्नुतिरित्येवम्; "आगत्य संप्रति" इत्यपरांगगुणीभूतव्यंग्यकाव्ये नायकवृत्तान्तो व्यंग्यः समासोक्तिरलंकारो वाच्यस्तद्वत् पृथक् पृथक् अलंकारव्यपदेशभागिनी। एवमेव सदृशनिषेधो वाच्यः असम इति, व्यंग्यः स अनन्वय इति पृथक् पृथक् अलंकार व्यपदेशभाक्। अन्यथा पृथगलंकारास्वीकारे हि दीपकादेरपि उपमायामेवान्तर्भावः स्यात्। किन्तु सिद्धान्ते तथा नास्ति। ते पृथगेवालंकाराः अत इदमपि सिद्धं यद् व्यज्यमानोऽलंकारोऽलंकारान्तरं नापवदति। यथोपमा दीपकादीन्। तथा असमोऽनन्वयम्, अनन्वयो वाऽसमम्। इति द्वितीयो विचारः।

उपमा सर्ववादिप्रतिवादिसिद्धा अलंकृतिः। वाच्या तथा अलंकृतिः व्यंग्या सा तथा अलंकृतिरिति व्यवस्थीयते। सदृशनिषेधस्तु उभयसिद्धः कश्चिदलंकारो नास्ति प्रत्युत अनन्वय एव उभयवादिसिद्धः। अन्यच्च सदृशनिषधो वाच्य एव असमोऽलंकारः। व्यंग्योऽयमनन्वयोऽलंकारो न। ततस्तथा व्यवस्थातुमशक्यम्। इति तृतीयो विचारः।

स्वेन स्वस्य सादृश्यमनन्वयस्य स्वरूपम्, तस्य फलं सजातीयविजातीयभेदशून्यत्वम्। स्वगतभेदस्तु अस्त्येव। स्वगतभेदं मत्वैव स्वेन स्वस्य सादृश्यमित्युक्तिः। सर्वथैव सादृश्यनिषेधः असमस्य स्वरूपम। तस्य फलं सजातीयविजातीयस्वगतभेदत्रयशून्यत्वम्। इति स्वरूपभेदात्, फलभेदात्, वाच्यव्यंग्ययोः पौर्वापर्येण कालभेदाच्च असमानन्वययोः पृथगेवालंकारत्वम्। इति चतुर्थो विचारः। इदानीमक्षरार्थः।

## बालक्रीड़ा

हाँ, ठीक तो कहते हैं। परन्तु यह तो बतलाइये कि दीपक एवं रूपक वगैरह में भी तो उपमा की अभिव्यक्ति से ही चमत्कार की संगति बैठती है। तब दीपक एवं रूपक वगैरह को अलग-अलग अलंकार क्यों मानते हैं। स्थिति तो दोनों विषयों में तुल्य है।

नाम पृथगलंकारत्वमिति तुल्यम्। न च दीपकादावुपमाया व्यङ्ग्यत्वेऽपि गुणीभावात्प्रकृते तु स्वसादृश्यस्य स्वस्मिन्नतितमां तिरस्कारेणासमालंकारस्यैव मुख्यतया ध्वननाद्वैषम्यमिति वाच्यम्। यथा हि दीपकसमासोक्त्यादौ गुणीभूतव्यङ्ग्यसत्त्वेऽप्यलंकारत्वं न हीयते एवमनन्वये प्रधानव्यङ्ग्यसत्त्वे-

## मर्मप्रकाश

न्तोक्तिः। दीपकादेरित्यस्य पृथगलंकारत्वमित्यत्रान्वयः। हि यतः। सत्त्वेऽपीति।

## मधुसूदनी

तुल्यमिति। यथा उपमाया अभिव्यक्तिं तया चमत्कारं चानुभूयाऽपि दीपकादेः पृथगलंकारत्वम्। तथैव असमस्यापि तां तं चानुभूय अनन्वयस्य तथात्वम्। इत्यनयोस्तुल्यत्वम्। दीपकादावुपमा गुणीभूतव्यंग्या अपरांगनाम्नी। असमो ध्वनिः प्रकृते अनन्वये। इति अनयोर्वैषम्यम्। तन्न वाच्यमित्यन्वयः। यथा तेषूपमाया गुणीभूतव्यंग्यत्वेऽपि अलंकारत्वं न हीयते तथा अनन्वयेऽसमस्य प्रधानव्यंग्यत्वेऽपि-तत्त्वं न हीयते इति। अतः किञ्चिद् विरुद्धं वैषम्यं नास्ति। स्वस्य स्वेन केवलं सादृश्यमनन्वयशरीरं, तस्य शरीरस्य वाच्यत्वेन अनन्वयो वाच्यालंकार इति सुस्थो व्यपदेशः। न तत्र कापि हानिः। स्वेन स्वस्य सादृश्यमात्रमिति मात्रपदेनैतदाह—यत् तावदेव वाच्यभूतमनन्वयशरीरं न तु व्यंग्यमुपमानव्यावर्त्तनमपीति। दीपकादौ अलंकारे व्यंग्यस्य उपमारूपस्य गुणीभूतत्वादस्तु गुणीभूतव्यंग्यत्वम्। पुनस्त्वर्थे। किन्तु क्वापि अलंकारप्रधान काव्य व्यंग्यस्य ध्वनित्वं प्रधानत्वं न दृष्टमित्यन्वयः। इति चेत्। पर्यायोक्तादिपदैर्व्यवह्रियमाणेषु काव्येषु व्यंग्यस्य ध्वनित्वं प्रधानत्वं स्फुटम्। इदन्तु बोध्यम्। पण्डितराजस्य क्वचित् २ विलक्षणो लेखः, द्वयोः सख्योः पारस्परिकं वार्तालापं स्मारयति। एका कथयति—

सखि ! मे चतुरो भर्ता यस्यालिखितं न वाचयितुमर्हः कश्चित्

तत्र अपरा कथयति। तव भर्तुरेतदेव चातुर्यं यदस्यालिखितमन्यः कश्चिद्वाचयितुमनर्हः। परं शृणु।

## बालक्रीड़ा

यह नहीं कह सकते कि दृष्टान्त (दीपकादि) और दार्ष्टान्तिक (अनन्वय) में वैषम्य है। जहाँ दृष्टान्त दीपकादि में उपमा के व्यंग्य होने पर भी उपमा का गुणीभाव है वहाँ प्रकृत दार्ष्टान्तिक अनन्वय में तो अपने में अपनी तुलना करना अत्यन्त असंभव है अतः उपमा की ध्वनि है और गुणीभूत एवं प्रधानीभूत व्यंग्य में अवश्य कुछ अन्तर है।

जैसा कि समझिये दीपक समासोक्ति प्रभृति में गुणीभूत व्यंग्य के रहने पर भी अलंकारत्व की हानि नहीं है इसी तरह अनन्वय में भी असम के प्रधान रूप से व्यंग्य होने पर कोई विरोध नहीं होगा अर्थात् अनन्वयालंकार होगा। क्योंकि स्व में स्व का सादृश्य रूप अनन्वय के शरीर के वाच्य होने से वाच्यालंकार व्यपदेश भी सुस्थ है ठीक है।

ऽपीति न किंचिद्विरुद्धम्। अनन्वयशरीरस्य स्वसादृश्यमात्रस्य वाच्यत्वेन वाच्यालंकारव्यपदेशोऽपि सुस्थ एव। दीपकाद्यलंकारकाव्ये गुणीभूतस्य व्यङ्ग्यस्य सत्त्वादस्तु नाम गुणीभूतव्यङ्ग्यत्वम्। ध्वनित्वं पुनर्न क्वाप्यलंकृतिकाव्ये दृष्टमिति चेत्, पर्यायोक्तसादृश्यमूलाप्रस्तुतप्रशंसादिकाव्ये ध्वनित्वस्य स्फुटत्वात्। प्राञ्चस्तु नेदमलंकारान्तरमित्यप्याहुः।

### मर्मप्रकाश

अलंकारत्वं न हीयते इत्यस्यानुषङ्गः। एवमलंकारत्वव्यपदेशे साधिते वाच्यालंकारव्यपदेशं तस्य साधयति—अनन्वयेति। शङ्कते--दीपकाद्यलंकारेति। बहुव्रीहिः। अलंकृतीति। तद्युक्तकाव्य इत्यर्थः। तथा चैवमित्याद्युक्तिरयुक्तेति भावः। अप्रस्तुतप्रसंसाया अनेकविधत्वादाह—सादृश्येति। अलंकारान्तरमिति। अत्रोपपत्तिर्व्यतिरेकालंकारप्रकरणे स्फुटीभविष्यति। त्वदिति। त्वदुपमावर्णनविषये। वाचंयमे मौनव्रतवति। पदं चरणम्।

### मधुसूदनी

अयमपरोऽस्य विशेषः स्वयमपि लिखितं स्वयं न वाचयति।

तथैव प्रकृतेऽपि पण्डितराजः स्वयं लिखितं स्वयं न स्मरति। "अलङ्कारा हि प्राधान्येन चमत्काराधायकाः स्वां स्वामभिख्यां लभन्ते। त एव परोपकारकतया वर्त्तमानास्तां त्यजन्ति। यथा—रराज भूमौ वदनं मृगाक्ष्या, नभोविभागे हरिणाङ्कबिम्बम्" इत्यत्र प्रकृताप्रकृतात्मनां राजनरूपैकधर्मसम्बन्धो दीपकाख्यां भजते। त्यजति च "राजते वदनं तन्व्यां नभसीव निशाकरः" इत्यत्र स एव सम्बन्धस्तामाख्याम्। अत्र उपमया वर्ण्यपुष्टिः अत एव प्राधान्येन व्यपदेशा भवन्ति। इति श्लेषप्रकरणे समुल्लेखम्;

अस्मिंश्च पर्यायोक्तालंकारे व्यंग्यं वाच्यपरम्। तेनायं पर्यायोक्तालंकारो वाच्यसिद्ध्यंगगुणीभूतव्यंग्य भेद इति च

समासोक्तिव्याजस्तुत्यप्रस्तुतप्रशंसाद्यलंकारनिरूपणेन कियन्तोऽपि गुणीभूतव्यंयभेदास्तैरपि निरूपिता इति च

प्राधान्यादलंकार्यो हि ध्वनिरलंकारस्य पर्यायोक्तस्य कुक्षौ कथंकारं निविशतामिति तु विचारान्तरम्। इति च पर्यायोक्तप्रकरणे समुल्लेखं न स्मरति। यतोऽसमप्रकरणेऽत्र लिखति—ध्वनित्वं पुनर्न क्वाप्यलंकृतिकाव्ये दृष्टमिति चेत्। पर्या-

### बालक्रीड़ा

प्रश्न = ठीक है किन्तु दीपकालंकार युक्त काव्यों में सादृश्यरूप गुणीभूत व्यंग्य के रहने पर गुणीभूतव्यंग्य काव्य होता है तो होवे किन्तु ऐसा काव्य कहीं नहीं देखा है जो ध्वनि काव्य भी है वह अलंकार काव्य भी हो। उत्तर। पर्यायोक्त एवं सादृश्यमूल अप्रस्तुतप्रशंसा आदि घटित काव्यों में ध्वनि भी है और उनमें पर्यायोक्त प्रभृति अलंकार भी हैं। प्राचीन लोग तो इस असम को अनन्वय से भिन्न नहीं मानते हैं।

अयं चासमालंकारो व्यज्यमानो यथा—

'मयि त्वदुपमाविधौ वसुमतीश ! वाचंयमे
न वर्णयति मामयं कविरिति क्रुधं मा कृथाः।
चराचरमिदं जगज्जनयतो विधेर्मानसे
पदं नहि दधेतरां तव खलु द्वितीयो नरः ॥'

अत्र य एतावन्तं समयं विधातुर्मानसं नाधिरूढः, सोऽग्रेऽपि मानाभावान्नारोहेत्, अतः सर्वथैव नास्तीति गम्यते। एवं च व्यज्यमानोऽप्यसमोऽत्र प्रधानीभूतराजस्तुत्युत्कर्षकतयालंकार एव।

### मर्मप्रकाश

द्वितीयः सहायः। सदृश इति यावत्। ननु निषेधस्य वाच्यत्वेन कथं तस्य व्यङ्ग्यत्वम्, किं च लिटा भूतनिषेधप्रतिपादनेनात्यन्तिकनिषेधाप्रतीत्या कथमयमत आह—अत्रेति। पद्ये इत्यर्थः। एवं च पदधारणनिषेधस्य शाब्दत्वेऽप्युपमाननिषेधस्य व्यङ्ग्यत्वमेवेति भावः।

### मधुसूदनी

योक्तसादृश्यमूलाप्रस्तुतप्रशंसादिकाव्ये ध्वनित्वस्य स्फुटत्वादिति। मन्ये=पर्यायोक्तेऽपि यदि प्राधान्येन व्यंग्यत्वं तद्भवतु नाम तस्य ध्वनावन्तर्भावः। इति। यदा तु सारूप्यमात्रवशेनाप्रस्तुतस्य सरूपस्याभिधीयमानस्य प्राधान्येनाविवक्षायां ध्वनावेवान्तः पातः इति प्रथमोद्योतीयं ध्वनिकारोल्लेखं ध्वनावन्तर्भावः ध्वनावेवान्तः पात इति केवलं हृदये दधानः समुल्लिलेख पूर्वापरविचारमकृत्वैव वहिः सिद्धान्तम्। इति।

पदं स्थानम्। द्वितीय इति। द्वितीयशब्दस्य सादृश्यविशिष्टे शक्त्यभावाद् व्यक्तिरेव एव द्वितीयो नरो नेत्यस्य सदृशो नरो नेति व्यज्यते। ननु सादृश्यस्य व्यंग्यत्वेऽपि नहीत्यनेन निषेधस्य वाच्यत्वे कथं तस्यासमस्य व्यज्यमानत्वम्। अथ च दधे इति लिटा परोक्षभूतनिषेधेऽपि वर्तमाने भविष्ये वा द्वितीयो नरः स्थानं लभेतेत्येवमपि असमस्य कथं व्यज्यमानत्वमतस्तं साधयितुमाह—अत्रेति। भूतकाले नासीत्।

### बालक्रीड़ा

यह असम अलंकार व्यज्यमान भी होता है जैसे—हे वसुमतीश ? मेरे को आप की तुलना करने में चुप समझकर गुस्सा मत करियेगा कि यह कवि मेरा वर्णन नहीं करता है। क्योंकि चराचर विश्व का निर्माण करने वाले विधि के मानस पटल में ऐसा कोई भी मानव नहीं आ रहा है। जो तुह्मारी अपेक्षा द्वितीय हो अर्थात् आप अद्वितीय हैं।

यहाँ इतने समय तक जब विधाता के मानस पटल में अधिरूढ़ नहीं हुआ तो आगे भी उसमें आरूढ़ होगा इसमें कोई प्रमाण नहीं है अतः सर्वथा द्वितीय पुरुष नहीं है यही प्रतीत होता है। इस तरह व्यज्यमान भी यह असम यहाँ प्रधानीभूत राजस्तुति का उत्कर्षक है अतः अलंकार ही है।

मुख्यतया ध्वन्यमानोऽयं यथा—

'सदसद्विवेकरसिकैरालोक्य समस्तलोकमथ कविभिः।
गणिता गगनलतादेर्गणनायां तन्वि ! तव सदृशी ॥'

अयं क्वचिदुपमानस्य निषेधात्क्वचिच्च साक्षादुपमाया एव। आद्यस्तूपदर्शितः।

द्वितीयो यथा—

'पूर्णमसुरै रसातलममरैः स्वर्गो वसुन्धरा च नरैः।
रघुवंशवीर ! तुलना तथापि खलु जगति निरवकाशैव ॥'

## मर्मप्रकाश

प्राग्वदाह—एवमिति। अथ अनन्तरम्। हे तन्वि, तव तुल्या असत्पदार्थगणनायां गणिता। एवं च त्वत्तुल्या असतीति प्राधान्येन ध्वन्यते। इति ध्वनिरयम्। नालंकारः। निरवेति। निष्प्रसरेत्यर्थः। निराधारेति यावत्।

## मधुसूदनी

वर्तमाने तु अस्त्येव नहि। भविष्येऽपि तत्सत्तायां मानाभाव इति सर्वथैव नास्तीति गम्यते। वस्तुतस्तु "पदं किमु विधास्यते तव खलु द्वितीयो नरः" इति पाठः साधीयान्।

सदसदिति। अत्राऽपि सदृशीति स्थाने "सहजा" इति पाठः साधीयान्। तथा—पूर्णमिति। अत्रापि तुलनापदस्थाने कलनेति अथवा रचनेति पाठः साधीयान्। कलिवली कामधेनुः। अग्रे विद्वांसः प्रमाणम्। पूर्वस्मिन् उत्तरस्मिन् च सादृश्यविशिष्टस्य सादृश्यस्य च वाच्यतया कथं "सर्वथैव उपमानिषेधस्य

## बालक्रीड़ा

इस तरह गुणीभूत व्यंग्यता में असमालंकार को दिखाकर प्रधानतया व्यज्यमान अत एव ध्वन्यमान असम को दिखाते हैं जैसे—

अच्छे और बुरे की पहिचान करने में रसिक कवियों ने तुम्हारी जैसी को प्राप्त करने के लिए समस्त विश्व को देखा। किन्तु हे तन्वि ? तुम्हारी जैसी को उन्होंने गगनलता, आकाश पुष्प, वन्ध्यापुत्र आदि की गणना में गिना। जैसे खपुष्प प्रभृति वस्तु विश्व में हैं नहीं उसी तरह तुम्हारी जसी भी विश्व में नहीं ही है अर्थात् तुम्हारी जैसी हो सकती है तो तुम हो। यह यहाँ प्रधान ध्वनि है।

यह कहीं पर उपमान के निषेध से होता है और कहीं पर साक्षात् सादृश्य के ही निषेध से। पहला तो दिखा दिया है दूसरा जैसे—

रसातल असुरों से, स्वर्ग देवताओं से एवं वसुधा मानवों से परिपूर्ण है। तथापि हे

एवं पूर्णतया लुप्ततया चास्यापि यथासंभवं भेदा उन्नेयाः ॥

इति रसगङ्गाधरेऽसमालंकारप्रकरणम् ।

### मर्मप्रकाशः

एवं उक्तभेदवत् । अस्याप्यसमालंकारस्यापि ॥ इति रसगङ्गाधरमर्मप्रकाशेऽसमालंकारप्रकरणम् ॥

### मधुसूदनी

व्यंग्यत्वं कथयितुं कोऽपि समर्थः स्यात् ।

इति मधुसूदन्यामसमालङ्कारप्रकरणम् ।

### वालक्रीड़ा

रघुवंशवीर ? जग में तुम्हारी तुलना निरवकाश ही है । अर्थात् तुम्हारे जैसा विश्व में कोई नहीं है आप बेजोड़ हैं । यह व्यक्त होता है ।

इस प्रकार पूर्ण एवं लुप्त असम के भेदों का यथासंभव विद्वान् लोग उन्नयन करें ।

इति वालक्रीड़ा में असम अलंकार सम्पूर्ण हुआ ।

---

## अथोदाहरणालंकारः

सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोरवयवावयविभाव उच्यमान उदाहरणम् ॥

अर्थान्तरन्यासवारणायोच्यमान इति । वचनञ्च वा-इव-यथा-निदर्शन-

### मर्मप्रकाशः

सुखेति । द्रुततरं बुद्ध्यारूढत्वाय । तयोः सामान्यैकदेशयोः । अवयवावयविभावस्व-

### मधुसूदनी

॥ अथोदाहरणालङ्कारः ॥

सामान्येनेति । सामान्येन साधारणतया निरूपितस्य अभिहितस्य अर्थस्य वस्तुनः सुखप्रतिपत्तये प्रतीतिविशदीकरणार्थं तदेकदेशं तस्य सामान्येन निरूपितस्य अर्थस्य एकदेशं विशेषं निरूप्य निर्दिश्य तयोः सामान्यविशेषयोवयवावयविभावः उच्यमान उदाहरणनामालङ्कारः ।

महतामाश्रयात्तुच्छः स्वच्छं प्राप्नोति गौरवम् ।
ताम्बूलीदलसंसर्गात्पलाशो धार्यते नृपैः ।

इत्यत्र विशेषेण समान्यसमर्थनरूपेऽर्थान्तरन्यासेऽतिव्याप्तिवारणाय उच्य-

### बालक्रीड़ा

अथ उदाहण अलंकार का आरंभ करते हैं।

सामान्य तरीके से किसी अर्थ का निरूपण किया किन्तु विना विशेष पदार्थ के निरूपण किये उसका जानना कठिन है अतः उसको सुख पूर्वक जानने के लिए उसी के किसी एकदेश का निरूपण करके उन सामान्य एवं विशेष पदार्थों के अवयवावयविभाव का शब्द से कहा जाना ही उदाहण है।

पण्डितराज ने यह उदाहरण का लक्षण इतना लम्बा बना दिया कि व्यर्थ आडम्बर मालूम पड़ता है सूत्ररूप इसका नहीं रह पाया। शोभाकरमित्र के बनाये हुए अलंकार रत्नाकर से इसको लिया है। वहां का यह सूत्र है।

सामान्योद्दिष्टानामेकस्य निदर्शनमुदाहरणम्। और इसकी व्याख्या भी दो पद्यों में है। जो वतलाते हैं कि उपमा अलग पदार्थ है और उदाहरण अलग है उपमा में उसका अन्तर्भाव नहीं है। जैसे—

उपमानोपमेयत्वं भिन्नयोरुपमेत्यतः
सामान्यस्यास्फुटत्वेन ज्ञातस्य स्फुटसंविदे ॥
तदंशस्य विशेषस्य क्रियते यन्निदर्शनम्।
तदुदाहरणं तस्यामन्तर्भावोऽस्य किंकृतः।

अव इसका पदकृत्य और विशेषकृत्य वतलाते हैं। लक्षण में उच्यमान पद का विन्यास, अर्थान्तरन्यास में लक्षण की अतिव्याप्ति को वारण करने के लिए किया है। वह

दृष्टान्तादिशब्दैः काव्येषु स्फुटम्। न च इवयथाशब्दयोः सादृश्यवचनयोरवयवावयविभावे विशेषसामान्यात्मके नास्ति वृत्तिरिति वाच्यम्। लक्षणायाः साम्राज्यात्। अन्यथा ह्युत्प्रेक्षाबोधकतापि दुर्घटा स्यात्।

### मर्मप्रकाशः

रूपमाह—विशेषेति। अन्यथा लक्षणानङ्गीकारे। अनुल्लासादिति। मिथो भेदाभावेन स्फुटमप्रतीतेरित्यर्थः। तथात्वे तु सादृश्योल्लासे तु। अस्योपपत्तिरग्रेऽत्रैव स्फुटीभविष्यति।

### मधुसूदनी

मानत्वमवयवावयविभावे विवक्षितम्। अत्र महदाश्रयत्वरूपस्य् सामान्यस्य, तदेकदेशस्य ताम्बूलीदलसंसर्गस्य विशेषस्य सामान्यविशेषस्वरूपोऽवयवावयविभावः कैरपि इव–यथा—निदर्शनादिशब्दैरुच्यमानो नास्तीति नातिव्याप्तिर्लक्षणस्य।

न चेति शंकते। वृत्तिः प्रतिपादकत्वं नास्तीति न च वाच्यम्। लक्षणाया इति। अमुख्यार्थबोधनायेति शेषः। अभिधाप्रच्छभूता लक्षणा" इत्युक्तेः विशेषसामान्यात्मकेऽवयवायविभावेऽर्थे अभिधा यदा सादृश्यवाचकेवयथाशब्दयोर्नास्ति तदा लक्षणाऽपि मुख्यार्थबाधे सति प्रवर्त्तमाना कथं स्यादतो लक्षणायाः साम्राज्यादित्यस्य स्थाने व्यञ्जनायाः साम्राज्यादिति वक्तव्यम्।

अन्यथा व्यंजनानंगीकारे। दुर्घटा कठिना। तथात्वे तु सादृश्योल्लासे तु।

सामान्येति। इवशब्दप्रयोगे, आदि पदात् यथा शब्दप्रयोगे सामान्यभूतस्य अर्थस्य प्राधान्यम्। विशेषभूतस्य अर्थस्य अप्रधानत्वम्। वाक्यस्य ऐक्यमेकत्वञ्च।

### बालक्रीड़ा

उच्चमानता अर्थात् कथन इव यथा, निदर्शन, दृष्टान्त एवं उदाहरण शब्दों से होता है। जैसा कि काव्यो में स्फुट है।

प्रश्न—इव और यथा सादृश्य के वाचक हैं अतः विशेष (अवयव) एवं सामान्य (अवयवी) के वाचक नही हैं। क्योंकि उस अर्थ में उनकी शक्ति नहीं है। उत्तर—कोई हर्ज नहीं है लक्षणा का फर्ज है कि इस मर्ज को हल करे ऐसी स्थिति में अर्थ को बतलावें। इसीलिए लिखते हैं कि लक्षणा का साम्राज्य है। अन्यथा यदि लक्षणा के द्वारा अर्थ की उपस्थिति होना नहीं मानेंगे तो इन शब्दों में उत्प्रेक्षा बोधकता भी दुर्घट ही है। यहाँ "लक्षणायाः साम्राज्यात्" इत्यादि पण्डितराज का लेख विसंष्ठुल है। इसके विषय में विशेष देखना हो तो हमारे "साहित्यशास्त्रीय तत्त्वों का आधुनिक समालोचन" ग्रन्थ के १३७वें पृष्ठ में देखें।

उदाहरणम्—

'अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।
निखिलरसायनराजो गन्धेनोग्रेण लशुन इव ॥'

न चात्र पदार्थलशुनयोरुपमा शक्या वक्तुम् । तयोः सामान्यविशेषभावेन सादृश्यस्यानुल्लासात् । तथात्वे तु इवादिशब्दानामिव सदृशादिशब्दानामप्यलंकारेऽस्मिन्प्रयोगः स्यात् ।

यथा वा—

### मर्मप्रकाशः

इवयुतोदाहरणमुक्त्वा यथाघटितमुदाहरणमाह—यथा वेति । गुणेति । कुत्सितमतितद्वि-

### मधुसूदनी

तद्यथा =

"उग्रेण गन्धेन निखिलरसायनराजो लशुन इव एकेन दोषेण अमितगुणोऽपि पदार्थो निन्दितो भवति" इत्येवं वाक्यस्यैकत्वम् । एकदोषहेतुकस्य निखिलरसायनराजलशुनस्याप्रधानत्वं स्फुटं वर्त्तते ।

### बालक्रीड़ा

अमित गुणों वाला भी पदार्थ एक दोष से निन्दित हो जाता है जैसे निखिलरसायनों का राजा होता हुआ भी लहशुन उग्र गन्ध से ।

यहाँ सामान्य रूप से "अच्छा भी पदार्थ एक दोष से निन्दनीय हो जाता है" यह कह तो दिया किन्तु बिना विशेष को जाने चमत्कार नहीं मिलता है और उत्सुकता बनी रहती है आकांक्षा की निवृत्ति नहीं होती है कि कौन पदार्थ है क्या दोष है इत्यादि । इसलिए सुखप्रतिपत्ति के वास्ते विशेष पदार्थ के साथ लहसुन को बतलाया । इव उसका विस्फोटन करता है ।

प्रश्न = यहाँ सामान्य पदार्थ अमितगुण की विशेष पदार्थ लहशुन से उपमा है अतः उदाहरण कैसे । उत्तर । ऐसा नही कह सकते हैं । क्योंकि सामान्य विशेष भाव से कहे हुए पदार्थों में सादृश्य का उल्लास नहीं हो सकता है । यदि विशेषसामान्यात्मक पदार्थों में भी सादृश्य का उल्लास हो सकता हो तो इवादि शब्दों की तरह सदृश सम तुल्यादि शब्दों का भी प्रयोग इस अलंकार में होने लगेगा । वस्तुतः इसका उत्तर यह है कि विशेष पदार्थ सामान्य रूप ही है सामान्य से भिन्न नहीं है । एक ही वस्तु है दो नहीं है । जैसे आम्रवृक्ष । जो आम है वृक्ष वही है अतः उपमानोपमेयभाव एक में नहीं हो सकता है ।

'अतिमात्रबलेषु चापलं विदधानः कुमतिर्विनश्यति ।
त्रिपुरद्विषि वीरतां वहन्नवलिप्तः कुसुमायुधो यथा ॥'

अत्र त्रिपुरद्विड्वीरते अतिमात्रबलचापलयोर्विशेषौ । अवलेपकुसुमायुधौ च कुमतिरित्यत्र गुणप्रधानयोः (विशेषौ) ।

यथा वा—

'उपकारमेव कुरुते विपद्गतः सद्गुणो नितराम् ।
मूर्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥'

दृष्टान्तो वा । इवादिशब्दप्रयोगे सामान्यार्थप्राधान्यं वाक्यैक्यम्,

मर्मप्रकाश

शेष्ययोरित्यर्थः । विशेषावित्यस्यानुषङ्गिकनिदर्शनपदघटितमाह—यथा वेति । सद्गुणो विपद्गतोऽपीत्यर्थः । दृष्टान्तपदघटितस्यापीदमेवोदाहरणमिति ध्वनयितुं निदर्शनपदस्थाने पदान्तरमाह—दृष्टान्तो वेति । वाशब्द एवार्थे । इवेत्यस्य तत्रेत्यादिः । सामान्यार्थ-

मधुसूदनी

त्रिपुरं द्वेष्टि इति तस्मिन् त्रिपुरद्विषि भगवति शिवे । वहन् कुर्वन्नित्यर्थः । अवलिप्तो गर्वितः "कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये" इति गर्वोक्तिं ब्रुवन् । अतिमात्रबलः सामान्यम् । तस्य विशेषः त्रिपुरद्विट् । चापलं

बालक्रीड़ा

और भी जैसे—प्रबल के साथ चपलता करने वाला दुर्बुद्धि नष्ट हो जाता है जैसे भगवान् त्रिपुरारि के साथ वीरता करने वाला घमण्डी कामदेव ।

यहाँ कुसिता मति बुद्धि गुण है जो सामान्य है । उसका विशेष है अवलेप गर्व, यह भी बुद्धि विशेष है । अतः गुण है । वह कुत्सिता मति जिसकी हो ऐसा कोई भी हो सकता है अतः सामान्य है किन्तु गुणी है प्रधान है । उसका विशेष है कामदेव :

अतिमात्रबल वाला कोई भी हो सकता है अतः सामान्य है उसका विशेष त्रिपुरारि शिव । चपलता सामान्य है वीरता उसका विशेष है । चपलता दुर्गुण है और वीरता उत्तम गुण है । किन्तु भगवान् के विषय में वीरता चपलताविशेष दुर्गुण ही है । गुण नहीं है ।

और भी जैसे—भले आदमी विपत्ति में पड़कर भी अत्यन्त उपकार ही करते हैं । मूर्च्छित या मृत पारद ही इसमें निदर्शन है दृष्टान्त है ।

इवादि शब्दों के योग में सामान्यभूत अर्थ प्रधान होता है और एक वाक्य होता है । निदर्शनादि शब्दों के योग में विशेषभूत अर्थ प्रधान रहता है और वाक्यभेद याने सामान्य का अलग वाक्य तथा विशेष का अलग वाक्य होता है ।

अब एक वाक्य एवं वाक्य भेद का फल कहते हैं "अमितगुणः" इस पद्य में, क्रिया

निदर्शनादिशब्दप्रयोगे तु विशेषप्राधान्यं वाक्यभेदश्चेति विशेषः। तत्र तावत् 'अमितगुणः–' इति पद्ये क्रियाप्रधानमाख्यातमिति नयेऽमितगुणपदार्थकर्तृकमेकदोषहेतुकं निन्दाविषयीभवनं निखिलरसायनराजलशुनकर्तृकोग्रगन्धहेतुकनिन्दाविषयीभवनावयवकमिति धीः। प्रथमान्तविशेष्यकबोधवादिनां

### मर्मप्रकाशः

प्राधान्यमिति। तस्यापि प्राधान्यमित्यर्थः। तमेव विशेषं प्रदर्शयति—तत्रेत्यादिना। तत्र तेषां मध्ये। तादृशेति। निखिलरसायनराजेत्यर्थः। तादृशेति। अमितगुणेत्यर्थः। एवमग्रेऽपि धीरित्यस्यानुषङ्गः। ननु निन्दितो भवतीत्यादेरेकत्रैवोपादानात्कथमुभयत्र

### मधुसूदनी

सामान्यम्। तस्य विशेषः वीरता। कुत्सितामतिः कुमतिरिति गुणः गुणं विशेषणं सामान्यम्। तस्य विशेषः अवलेपो गर्वः। कुत्सिता मतिर्यस्येति बहुव्रीहिसमाससिद्धं प्रधानं दुर्बुद्धिपुरुषः सामान्यम्। तस्य विशेषः कुसुमायुधः कामदेवः।

निदर्शन शब्दप्रयोगे आदिपदात् दृष्टान्तपद प्रयोगे तु विशेषभूतस्य अर्थस्य प्रधानत्वं सामान्यभूतस्य अर्थस्याप्रधानत्वं वाक्यस्य भेदो द्वित्वञ्चेति। विशेषो वैलक्ष्ण्यम्। सामान्यं दर्शयितुमुपक्रमते-तत्रेति। तत्र उद्दिष्टकोटिद्वयमध्ये। तावदादौ सामान्ये। क्रियाप्रधानं भावप्रधानम्। आख्यातं तिङन्तम्। इति वैयाकरणानां नये। निन्दाविषयीभवनावयवकमिति धीरिति।

अयमाशयः। निन्दाविषयीभवनमवयवो यस्येति बहुव्रीहिः। सामान्यं तत्कर्तृकं तद्धेतुकं निन्दाविषयीभवनमवयवी प्रधानम्। बहुव्रीहिघटकं तत्कर्तृकं तद्धेतुकं निन्दाविषयीभवनमवयः गुणः तथा च इति धीः एतादृशः शाब्दबोधः इत्यर्थः।

प्रथमान्तार्थमुख्यविशेष्यक बोधवादिनां सर्वेषां कारकाणां व्यापाराश्रये कर्तरि प्रथमान्तार्थेऽन्वय इति वादिनां नैयायिकानां नये सिद्धान्ते तु। इति पदस्याग्रे धीरित्यत्रानुषज्यते।

विशेषवाक्यार्थ इति। अयं भावः। प्रधानता अप्रधानता वा सापेक्षः पदार्थः। अप्रधानापेक्षया प्रधानता भवति तथैव प्रधानापेक्षया अप्रधानता भवति।

### बालक्रीड़ा

(भाव) में आख्यात प्रधान है ऐसा मानने वाले वैयाकरणों के मतानुसार निखिल रसायनों का राजा लहशुन जिसमें कर्ता है उग्रगन्ध जिसमें हेतु है ऐसा निन्दाविषयीभवन; वह जिसमें अवयव हो ऐसा अवयवी अनन्तगुणविशिष्टपदार्थ कर्तृक एकदोषहेतुक निन्दाविषयीभवन है। यह अन्वय का प्रकार है।

प्रथमान्तार्थमुख्यविशेष्यकबोधवादी अर्थात् सभी कारकों का व्यापाराश्रय कर्ता प्रथमान्तार्थ मे ही अन्वय होता है ऐसा मानने वाले नैयायिकों के मत के अनुसार उग्रगन्ध के

तूग्रगन्धहेतुकनिन्दाविषयीभवनाश्रयतादृशलशुनावयवकस्तादृशपदार्थ एकदोषहेतुकनिन्दाविषयीभवनाश्रय इति। तत्रापि विशेषवाक्यार्थे क्रियान्वयो मृग्यते हेत्वन्तरान्वयार्थम्। अन्यथा तादृशलशुनावयवके तादृशपदार्थ

### मर्मप्रकाशः

दोषोऽत आह—तत्रापीति। हेत्वन्तरान्यतमेति। उग्रगन्धादिरूपहेत्वन्तरेत्यर्थः। अन्यथा

### मधुसूदनी

एवञ्च प्रधानपदार्थसद्भावे अप्रधानस्याऽपि सत्ता तत्रापेक्ष्यते। तथा च प्रधानस्य सामान्यवाक्यार्थस्य सद्भावे अप्रधानस्य विशेषवाक्यार्थस्याऽपि सद्भावः एवमेव प्रधानस्य विशेषवाक्यार्थस्य सद्भावे अप्रधानस्य सामान्यवाक्यार्थस्य सद्भावोऽपि प्रकृतेषु लक्ष्येषु वर्त्तते। तत्र एकतिङ् वाक्यमिति महाभाष्यकाराः। आख्यातं सविशेषणं वाक्यमिति वार्त्तिककाराः। उभयथाऽपि वाक्ये एकस्यैव तिङन्तार्थस्य स्थितिर्मुख्यतया बोधश्च। तथा च सामान्यार्थस्य प्राधान्ये तत्रैव एकस्यास्तस्याः अन्वये सति निराकांक्षत्वं गतायाः क्रियायाः विशेषवाक्यार्थेऽन्वयो मृग्यते। ननु प्रधानाप्रधानयोरंगागीभावः। प्रधानानुपातिनो हि गुणा भवन्तीति नयानुसारेण प्रधानस्यान्वये सति अप्रधानस्यान्वयोऽथात्प्राप्त एवेत्यत आह—हेत्वन्तरेति। प्रकृते च "अमितगुणः" इति पद्ये निन्दाविषयीभवनं क्रिया तस्या अमितगुणे पदार्थे अवयविनि सामान्यवाक्यार्थे एकदोषहेतुकतया अन्वयो भवति। तस्यैव अवयवभूते निखिलरसायनराजे लशुनेऽपि विशेषवाक्यार्थगते उग्रगन्धरूपस्य हेत्वन्तरस्य अन्वयार्थं तस्याः निन्दाविषयीभवनक्रियायाः अन्वयो मृग्यते, प्रधानेऽन्वयेन निराकांक्षायास्तस्या अप्रधाने कथमन्वयः स्यात्, अपेक्ष्यते तु तत्रापि, किं करणीयमिति गवेष्यते। ननु प्रधानेन सह तस्याः क्रियाया अन्वयो जातश्चेत्तर्हि अप्रधानेऽन्वयो मास्तु का हानिरित्यत आह—अन्यथेति। अन्यथा अप्रधानेन सह क्रियाया अनन्वये तादृशलशुनावयवके तादृशपदार्थे प्रधानेन एव क्रियाया अन्वये सति उपपत्तिर्न पदार्थ संगतिर्न स्यात्। निखिलरसायनराजलशुनावयवकोऽमितगुणपदार्थो दोषेण एकेन निन्दितो भवति" इत्येवमन्वये उग्रेण गन्धेनेति हेतोरन्वयस्य अभाव एव।

### बालक्रीड़ा

कारण निन्दनीय निखिलरसायनों का राजा लशुन जिसका अवयव है वह अवयवी एक दोष के वदौलत निन्दा का पात्र अनन्तगुणविशिष्ट पदार्थ है। ऐसा शाब्दवोध मानने में पण्डितराज कहते हैं कि निन्दितो भवति क्रिया का यदि प्रधान अवयवी सामान्य पदार्थ में अन्वय कर देते हैं तो निराकांक्ष हुई क्रिया का विशेष पदार्थ अप्रधान अवयव लशुन में कैसे अन्वय होगा। इसी को लिखते हैं कि हेत्वन्तर उग्रगन्धरूप दूसरे हेतु का अन्वय करने के लिए क्रिया को खोजना पड़ेगा अर्थात् उसकी आवृत्ति करनी पड़ेगी। अन्यथा हेत्वन्तर में क्रिया के अन्वय नहीं होने पर और लशुनावयवक अमितगुणपदार्थ में क्रिया के अन्वय होने पर वाक्यार्थ की उपपत्ति नहीं होगी।

एव क्रियान्वये नोपपत्तिः स्यात्। एवं यथाशब्दस्थलेऽपि। उपकारमेवेत्यत्र तु त्रिपद्गताभिन्नः सद्गुण उपकारानुकूलकृतिमानिति पूर्ववाक्यार्थः। अत्रास्मिन्नर्थे मूर्छां गतो मृतो वा पारदो निदर्शनमेकदेश इत्युत्तरवाक्यार्थे गुण

## मर्मप्रकाशः

तदन्वये। नोपपत्तिरिति। उपपत्तिर्न स्यादित्यर्थः। पद्यस्यात्रेत्यस्यार्थमाह—अस्मिन्निति।

## मधुसूदनी

एवमिवशब्दस्थलवत् यथाशब्दस्थलेऽपि परिस्थितिर्बोध्या इति शेषः।

इवादिस्थलीयां दशामवगमय्य निदर्शनादिशब्दप्रयोगस्थलीयां दशां बुबोधयिषुराह—उपकारमेवेत्यत्रत्विति। अत्र क्रियाद्वयं तत एव वाक्यद्वयम्। निदर्शनं पारदोऽत्र रस इत्यत्र पद्योत्तरार्द्धे यत् "अत्रेति पदं वर्त्तते तस्यार्थमाह—अत्र अस्मिन् सामान्येन निरूपितेऽर्थे निदर्शनं निदर्शनरूपो दृष्टान्तरूपः पारद एकदेशः इत्यन्वयः। पूर्ववाक्यार्थः सामान्यभूतः उत्तरवाक्यार्थे विशेषभूते प्रधाने। निदर्शनादिशब्दप्रयोगे तु विशेषस्यप्राधान्यमिति प्रदर्शितनयानुसारं गुणः अवयवः अप्रधानमित्यन्वयः। इति केषांचित् नैयायिकानाम्। इतरेषां वैयाकरणानां तु। तादृशकर्त्तृका तादृशक्रिया विपद्गतसद्गुणकर्त्तृका उपकारक्रिया इति सामान्ये पूर्ववाक्यार्थे मूर्छां गतो मृतो वा पारद एकदेश इति धीरिति शेषः।

निर्विशेषं न सामान्यः, सामान्यं वस्तु घटादि नीलपीतघटादिरूपं विशेषवस्तु रहितं नास्तीति नयानुसारं सद्गुणः यत्किञ्चित्समीचीनगुणशाली यः कोऽपि पदार्थो ग्रहीतुं शक्यते। इति सद्गुणपदेन सामान्यः पदार्थो निर्दिष्टः। जराव्याधिविनाश-

## बालक्रीड़ा

यह सब पण्डितराज ने क्यों किया जब कि आम्र वृक्ष है इसमें जो आम्र है वही वृक्ष है जो वृक्ष है वही आम्र है याने निर्विशेष सामान्य नहीं होता है किन्तु सामान्य पदार्थ व्यहार्य नहीं होते हैं अतः वे विशेष ही के उपस्थापक होते हैं यह सिद्धान्त है तब अभेदेन अन्वय के द्वारा समन्वय हो जायगा है। जैसे एक दोषरूप उग्रगन्ध के कारण अमितगुणशाली अतएव रसायनों का राजा लशुन पदार्थं निन्दनीय है। यह वाक्य जैसे हिन्दी में हो जाता है वैसे एक दोषरूपोग्रगन्धहेतुकनिन्दाविषयीभवनाश्रयः अमितगुणशालिपदार्थावयवभूतो निखिलरसायनराजो लशुनः यह वाक्य संस्कृत भाषा में भी हो जाता है। व्यर्थ ही सब किया मस्तिष्क को वे बुनियाद दौड़ाया।

यही प्रक्रिया यथा शब्द स्थल में भी समझना। उपकारमेव इसमें तो विपत्ति में पड़ा हुआ उत्तम पुरुष उपकार ही करता है यह पूर्व वाक्य का अर्थ है। यह अर्थ मूर्छित या मृत पारद निदर्शन है एकवेश है इस उत्तर वाक्य के अर्थ में गुण है अप्रधान है ऐसा किन्हीं नैयायिकों का मत है। वहां विशेष अर्थ प्रधान होता है और वाक्य भेद होता है जहां निदर्शनादि शब्दों का प्रयोग होता है इस मत का संकेत पहले कर चुके हैं।

इति केषांचित् । इतरेषां तु तादृशकर्तृका तादृशक्रियेति पूर्ववाक्यार्थे तादृशः पारद एकदेश इति । प्रधानावयवस्येव गुणावयवस्यापि विशिष्टार्थावयवत्वात् ।

### मर्मप्रकाशः

केषांचिन्नैयायिकानाम् । इतरेषां च वैयाकरणानाम् । तादृशेति । विपद्गताभिन्नसद्गुण-कर्तृकोपकारक्रियेत्यर्थः । पद्यस्यात्रेत्यस्यार्थमाह—पूर्ववाक्यार्थ इति । मूर्छां गतादिरूपः पारदः पूर्ववाक्यार्थस्यावयव इत्यर्थः । ननु क्रियारूपस्य पूर्ववाक्यार्थस्य कथं द्रव्यरूपः पारदोऽवयव इत्यत आह—प्रधानेति ।

### मधुसूदनी

कत्वरूपविशेषगुणशाली पारदः इति पारदपदेन विशेषः पदार्थो निर्दिष्टः । इति पारदरूपविशेषपदार्थरहितः सद्गुणः सामान्यपदार्थो नेति भवति अवयवावयविभावः । इति सामान्येन निरूपितस्यार्थस्य (सद्गुणस्य) एकदेशं (पारदं) निरूप्येति लक्षण-समन्वयो भवति । इति नैयायिकानां मतेन शाब्दबोधे । परं वैयाकरणनां क्रिया-प्रधानवादिनां नये सद्गुणकर्तृका उपकारक्रिया । तत्र तादृशाक्रियाया एकदेशः पारद इति बोधे उपकारक्रियापारदयोः सामान्यविशेषभावाभावात् द्रव्यक्रिययोरवयवावय-विभावो न संजाघटीति कथं सामान्येन निरूपितस्यार्थस्य (उपकारक्रियायाः) एक-देशं (पारदं) निरूप्येति लक्षणसमन्वयः स्यादित्यत आह=प्रधानेति । अयमाशयः । विशेषणस्य विशेषणमपि विशिष्टस्य विशेषणं भवतीति नयेन अवयस्य अवयवोऽपि विशिष्टस्यावयवो भवति । ततश्च सद्गुणनिष्ठा क्रिया सामान्या क्रिया, विशेषगुण-शालिपारदनिष्ठा क्रिया विशेषभूता क्रियेति भवति तयोः क्रिययोः सामान्यविशेष भावेन अवयवावयविभावः तत्र सद्गुणनिष्ठायाः सामान्याया अवयविभूताया उपकार-क्रियाया अवयवः पारद्गता विशेषोपकारक्रिया । तस्या अवयवः कारकाणां क्रिया-न्वयित्वात् पारदः प्रथमाकारकभूतः । अक्षरार्थस्तु=विशिष्टो विशेषणैर्घटितः । मुख्यः प्रधानभूतोऽर्थः । तस्यावयवोऽमुख्योऽप्रधानभूतोऽर्थः मध्यकोटिगतः एकस्या-पेक्षया अप्रधानः । अपरस्यापेक्षया प्रधानः । तस्यावयवो गुणीभूतः पदार्थः । एवञ्च प्रधानावयवो यथा विशिष्टार्थस्य अवयवस्तथा गुणावयवोऽपि विशिष्टार्थस्यावयव इति । एवं क्रियाविशेषणद्वारा पारदोऽपि एकदेश इति भावः ।

### बालक्रीड़ा

वैयाकरणों के मत के अनुसार तो तादृश कर्तृक तादृशक्रिया रूप पूर्ववाक्यार्थ में तादृश पारद एक देश है अवयव है ।

प्रश्न—नैयायिक के मत में उत्तम गुण वाला कोई भी व्यक्ति सद्गुण पद से समझा जा सकता है अतः सद्गुण पद से सामान्य पदार्थ का निर्देश किया । और जरा एवं व्याधि का विनाशकरनेवाला विशेषगुणशाली पारद होता है अतः पारद पद से विशेष पदार्थ का निर्देश किया । इस प्रकार पारदरूप विशेष पदार्थ रहित सद्गुण सामान्य पदार्थ नहीं है

घटमानयेत्यत्र नीलघटवत् ।

### मर्मप्रकाश

घटमानयेति । कर्मणः सर्वमते गुणत्वादित्यर्थः । नीलघटवदिति चिन्त्यमिति कश्चित् । अत्रोदाहरण एकवाक्यतासत्त्वेऽपि वाक्यैकवाक्यता पूर्वस्माद्विशेषः । पूर्वत्र तु पदैकवाक्यतैवेति बोध्यम् । स दधीचिः । नन्वेवं कथमलंकारत्वमत आह—तत्र चेति ।

### मधुसूदनी

किंवदिति प्रश्ने नीलघटवदिति उत्तरति । अदो हृदयम् । घटमानयेत्युक्तौ रूपरहितं सामान्यं घटमानेतुमशक्नुवन् सर्वोऽपि जनोऽनुयायी रक्तं पीतं नीलं वा विशेषमेव घटमानयति । तत्रानयनक्रियायां घटमिति कर्मकारकभूतो घटो विशेषणम् तत्र च समवेतो नीलो गुणो विशेषणम् । एवं विशेषणविशेषणं नीलगुणोऽपि तस्यां क्रियायां विशेषणं भवत्येव ।

### बालक्रीड़ा

अतः सद्गुण पारद का सामान्य विशेष भाव होने से अवयवावयवी भाव हो सकता है जिसके कारण सामान्येन निरूपित सद्गुण अर्थ के एकदेश पारद का निरूपण करके इत्यादि रूप में लक्षण का समन्वय हो जाता है । नैयायिकों के अनुसार शाब्दबोध की प्रक्रिया में संगति बैठ जाती है । किन्तु वैयाकरणों के यहां क्रिया प्रधान शाब्द बोध होता है । उनके मत में सद्गुणकर्तृक उपकारक्रिया । उस क्रिया का एक देश प्रकृत में पारद है । इस प्रक्रिया में उपकार रूप क्रिया और पारद रूप द्रव्य का सामान्यविशेषभाव नहीं होता है अतः अवयवावयवी भाव का संघटन नहीं होता है तब कैसे सामान्य से निरूपित अर्थ उपकार क्रिया के एकदेश पारद का निरूपण करके इत्यादि रूप में लक्षण का समन्वय होगा ।

इसपर कहते हैं कि सुनिये जैसे विशिष्ट अर्थ का अवयव प्रधान का अवयव होता है उसी तरह वह गुण का भी अवयव होता है । इसका आशय यह है कि विशेषण का विशेषण भी विशिष्ट का विशेषण होता है इस न्याय के अनुसार अवयव का अवयव भी विशिष्ट का अवयव होता है । इस प्रकार सामान्यभूत सद्गुण में रहने वाली क्रिया सामान्य क्रिया है और विशेषगुणशाली पारद निष्ठा क्रिया विशेष क्रिया है । इन दोनों क्रियाओं का सामान्य विशेषभाव होने से अवयवावयवी भाव होता है । उनमें सद्गुण निष्ठ सामान्य अवयवी भूत उपकार क्रिया की अवयव पारदगत विशेष क्रिया है । उस पारदगत विशेष क्रिया का अवयव कारकों का क्रिया में अन्वय होता है इस नय के अनुसार प्रथमाकारकभूत पारद है । इस तरह विशेष क्रिया के द्वारा पारद भी एक देश हो गया । फलतः सामान्यरूप से निरूपित अर्थ उपकार क्रिया के एकदेश पारद का निरूपण करके इत्यादि लक्षण समन्वय हो गया ।

यह कैसे होता है, तब उत्तर देते हैं कि जैसे घटमानय इसमें नीलघट अवयव होता है । यहाँ का हृदय यह है कि उत्तमवृद्ध से कहा कि घड़ा लावो । तब लानेवाला सेवक मध्यमवृद्ध सामान्य घड़े को ला नहीं सकता है । लावेगा तो किसी काले पीले लाल

'अर्थिभिश्छिद्यमानोऽपि स मुनिर्न व्यकम्पत ।
विनाशेऽप्युन्नतः स्थैर्यं न जहाति, द्रुमो यथा ॥'

अत्र दधीच्यालम्बनायां तदीयलोकोत्तरचरितस्मरणोद्दीपितायामेतत्पद्यप्रयोगानुभावितायामेतत्पद्यनिर्मातृगतायां रतौ प्रधानीभूतायाम्; अर्थ्यालम्बनस्तत्कृतयाच्ञाश्रवणोद्दीपितो गात्रच्छेदाभ्यनुज्ञानानुभावितो धृत्या संचारिभावेन पोषितो मुनिगत उत्साहो गुणः। तत्र चाध्यर्धतृतीयचरणगतस्यार्थान्तरन्यासस्योत्कर्षकतया स्थितस्य विवेचनद्वारालंकरणं चतुर्थचरणशकलगतमुदाहरणम्।

## मर्मप्रकाशः

रतावित्यर्थः । उत्कर्षकतयेत्यत्रास्यान्वयः । अध्यर्धेति । अर्धाधिकस्तृतीयचरणो यस्मिंस्तद्गतस्येत्यर्थः । अत एव वक्ष्यति—शकलेति । विवेचनेति । बुद्ध्यारोहणेत्यर्थः । यस्य हिमाचलस्य । कुमारसंभवस्थं पद्यम् । नन्वेवं सांकर्येण तद्वि-

## मधुसूदनी

अर्थिभिरिति । अर्थिभिः वज्रारूपास्त्रनिर्माणाय जत्रुगतस्य अस्थ्न इच्छुकैरिन्द्रादिदेवैः छिद्यमानोऽपि द्वैधीक्रियमाणोऽपि स मुनिर्दधीचिः । न व्यकम्पत न चचाल । उन्नतो महान् पुरुषः विनाशेऽपि स्थैर्यं निश्चलचित्तत्वं न जहाति इति दधीचि वृत्तविशेषसमर्थनाय सामान्यस्यार्थान्तरस्य न्यासः कृतः । तत्र दृष्टान्तो यथा द्रुमो वृक्षः ।

अत्र पद्यनिर्मातरि गता रतिः प्रधानीभूता । तस्यां मुनिगत उत्साहो गुणः । तत्र रतौ दधीचिरालम्बनविभावः । तदीयलोकोत्तरचरितस्य पूर्वमंसास्थ्नश्छेदनानुज्ञा ततश्छेदनेऽपि कम्पनस्यास्मरणमुद्दीपनविभावः अर्थिभिरित्येतत्पद्योच्चारणमनुभावः । मतिहर्षौ संचारिभावौ । उत्साहे याचका अर्थिनो देवा आलम्बन-

## बालक्रीड़ा

या नीले घड़े को ही । उस जगह आनयन क्रिया में घड़ा कर्म कारक है अतः विशेषण है और उस घड़े में समवाय से रहने वाले नीलादि गुण विशेषण है इस तरह विशेषण घट का विशेषण नीलादि गुण भी उस आनयन क्रिया में विशेषण हो जाता है ।

इन्द्रादि याचकों के द्वारा काटा गया या चीरा गया मुनि दधीचि कम्पित नहीं होता है । ठीक ही है महान् पुरुष विनाश के समय में भी अपने धैर्य से च्युत नहीं होते । जैसे द्रुम ।

यहाँ इस पद्य के निर्माता कवि की रति में मुनि का उत्साह गुणीभूत है । यहाँ कविगत रति स्थायीभाव है प्रधान है । दधीचि ऋषि जिसमें आलम्बन है । दधीचि के लोकोत्तर चरितों का श्रवण उद्दीपन भाव है । इस तरह के पद्य का प्रयोग अनुभाव है । मति हर्ष व्यभिचारी भाव है । मुनिगत उत्साह में अर्थी याचक लोग आलम्बन विभाव है

एवमेव—

'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥'

इति कालिदासपद्येऽपि बोध्यम् । अस्मिंश्चालंकारेऽवयवावयविभावबोधकस्येवशब्दादेः प्रयोगः सामान्यविशेषयोरेकरूपविधेयान्वयश्चार्थान्तरन्यासभेदाद्वैलक्षण्याधायक इति तत्प्रकरणे निपुणतरमुपपादयिष्यामः ।

### मर्मप्रकाश

शेषत्वस्यैवात्र संभवेन कथमलंकारान्तरत्वमत आह—अस्मिंश्चेति । भेदाद्विशेषात् । तत्प्रकेति । अर्थान्तरन्यासप्रकरण इत्यर्थः । अयमुदाहरणरूपः । नन्वेवमप्यत्रेवादीनां सामान्य-

### मधुसूदनी

विभावः । इन्द्रादिदेवकृताया याच्ञायाः श्रवणमुद्दीपनविभावः । गात्रच्छेदनार्थमनुज्ञा छेदेप्यकम्पनं चानुभावः । धृतिर्हर्षो मतिश्च संचारिभावाः । रतौ उदाहरणमलंकरणम् । कथमिदमलंकरणमित्याह--विवेचनेति । तत्र अर्धांशः अधिको यत्र तृतीयचरणे स अध्यर्धतृतीयचरणः । पदंघ्रिश्चरणोऽस्त्रियामित्यमराच्चरणः पुंसि । तद्गतः । उत्कर्षतया रतेरुत्कर्षहेतुतया स्थितः । तस्य विवेचनमित्यन्वयः । द्रुमो यथा छिद्यमानोऽपि स्थैर्यं न जहाति निश्चलतामेवगाहते तथा मुनिरपि । इत्येवं यद् तथा स्थितस्य तस्यार्थान्तरस्य विवेचनं तद्द्वारा चतुर्थचरणस्य शकले खण्डे गतमुदाहरणमलंकरणम् ।

एवमेव अर्थिभिरितिपद्यवदेव । अनन्तरत्नेति प्रथमसर्गस्थे कुमारसंभवस्य कालीदासीयस्य पद्येऽपि उदाहरणमलंकरणं बोध्यमित्यन्वयः । अमितगुणोऽपीत्यत्र

### बालक्रीड़ा

याचकों की याच्ञा का श्रवण उद्दीपन विभाव है । गात्रच्छेदन की अनुज्ञा अनुभाव है और धृति, मति, हर्ष संचारी भाव हैं । अर्धांश अधिक है जिसमें ऐसे तृतीय चरण में रति के उत्कर्षक के रूप में स्थित अर्थान्तरन्यास को चतुर्थ चरण के अन्तिम खण्ड में रहनेवाला उदाहरण अलंकृत करता है । किन्तु सीधे नहीं विवेचन के द्वारा ही ।

इसी तरह अनन्त रत्नों की उत्पत्ति के स्थान जिस हिमालय का हिम वर्फ उसके सौन्दर्य का सौभाग्य का विलोप्ता नहीं हुआ । क्योंकि जैसे चन्द्र की किरणों में उसका कलंक छिप जाता है उसी तरह हिमरूपी एक दोष अनन्तरत्न रूपी गुणों के समूह में डूब जाता है ।

इस कालिदास के पद्य में भी यही समझना चाहिए ।

प्रश्न—उदाहरण अलंकार को पृथक् क्यों मानते हैं अर्थान्तरन्यास का ही भेद विशेष क्यों नहीं मान लेते हैं ।

प्राञ्चस्तु "नायमलंकारोऽतिरिक्तः। उपमयैव गतार्थत्वात्। न च सामान्यविशेषयोः सादृश्यानुल्लासात्कथमुपमेति वाच्यम्। 'निर्विशेषं न सामान्यं—' इति सामान्यस्य यत्किंचिद्विशेषं विना प्रकृतत्वायोगात्तादृश-विशेषमादाय विशेषान्तरस्य सादृश्योल्लासे बाधकाभावादिवादिभिरामुखे

## मर्मप्रकाशः

विशेषभावात्मकावयवावयविभावबोधकत्वेन कथं तदुल्लासोऽत आह—इवेति। आमुखे आदौ ॥ इति रसगङ्गाधरमर्मप्रकाश उदाहरणप्रकरणम् ॥

## मधुसूदनी

सामान्यार्थप्राधान्ये। सामान्यविशेषयोर्द्वयोरपि एकस्मिन्नेव विधेये निन्दाविषयी-भवनेऽन्वयः। उपकारमेवेत्यत्र विशेषार्थप्राधान्येऽपि तयोर्द्वयोरेकस्मिन् उपकार-करणे विधेये एवान्वयः। अर्थान्तरन्यासे तु हनूमानब्धिमतरद् दुष्करं किं महात्म-नामित्यत्र, विशेषस्थले अतरदिति तरणं विधेयम्। सामान्यस्थले दुष्करं किमिति दुष्करणाभावो विधेयः। इत्येवमेकरूपे वियेऽन्वयो नास्ति।

प्राञ्चः अलंकाररत्नाकरात्प्राचीना आलंकारिकाः। सामान्यविशेषयोः वृक्षाम्रयोः, य एव वृक्षः स एवाम्रः इत्येकरूपता। सादृश्यस्य तु भेदघटिततया-ऽनेकरूपताऽपेक्षिता। ततश्चैकरूपयोस्तयोः सादृश्यस्यानुत्थानादुपमा नास्तीति न च वाच्यम्। यः कोऽपि किमपि निरूपयितुं कमपि बोधयितुं वा प्रवर्त्तते। तत्र तन्निरूपणं बोधनं वा विशेषमन्तरा न हि स्फुटमनुभवितुं शक्यमिति तदर्थं यत्किंचिद्वि-

## बालक्रीड़ा

उत्तर। इस उदाहरण अलंकार में अवयवावयवी भाव के बोधक इवादि का प्रयोग रहता है और सामान्य और विशेषों का एक रूप विधेय में ही अन्वय रहेगा। जैसे अमित-गुणोऽपि इसमें सामान्य अर्थ के प्रधान होने पर भी सामान्य और विशेष दोनों का अन्वय एक रूपविधेय निन्दाविषयीभवन में ही होता है। उपकारमेव कुरुते इसमें विशेष अर्थ के प्रधान होने पर भी सामान्य और विशेष दोनों का उपकार करणरूप एक ही विधेय में अन्वय है। अर्थान्तिरन्यास में तो हनुमान् जी समुद्र को पार कर गये इस विशेष में पार करना विधेय है। महात्माओं के लिए दुष्कर क्या है इस सामान्य में दुष्करणाभाव विधेय है अतः एक रूप विधेय में दोनों का अन्वय नहीं है।

प्राचीन आलंकारिक तो कहते हैं कि यह अतिरिक्त अलंकार नहीं है उपमा में ही इसका अन्तर्भाव है। किन्तु यह नहीं कह सकते क्यों कि सामान्य एवं विशेष में सादृश्य का उल्लास ही नहीं हो सकता है तब उपमा कैसी और फिर अन्तर्भाव उसमें कैसा। उत्तर। निर्विशेष सामान्य नहीं होता है। फलतः सामान्य का किसी विशेष रूप अंश के विना प्रकृत में

प्रतीयमानस्यापि सामान्यविशेषभावस्य परिणामे सादृश्य एव विश्रान्तेः ॥"
इत्यप्याहुः ॥

इति रसगङ्गाधर उदाहरणप्रकरणम् ।

## मधुसूदनी

शेषान्तरेण विशेषान्तरस्य सादृश्योल्लासे किमपि बाधकं नास्ति । आमुखे आरम्भे । परिणामे अन्ते । परिणतिरवधार्या यत्नतः पण्डितेनेति नयादुपमैवेति आहुः ।

इति मधुसूदन्यामुदाहरणप्रकरणम् ।

## बालक्रीड़ा

कोई भी उपयोग नहीं होता है । इसलिए ऐसे किसी विशेष को लेकर अन्य किसी विशेष के साथ सादृश्यका उल्लास हो जायगा कोई बाधक नहीं होगा । यद्यपि आरम्भ में इवादि के द्वारा सामान्य विशेष की प्रतीति होगी तद्यपि परिणाम में सादृश्य में ही विश्रान्ति होगी । अतः उपमा में इसका अन्तर्भाव करना उचित है ।

इति बालक्रीड़ा में उदाहरण अलंकार सम्पूर्ण हुआ ।

———

अथ स्मरणालङ्कारो निरूप्यते।

साद्दश्यज्ञानोद्बुद्धसंस्कारप्रयोज्यं स्मरणं स्मरणालंकारः ॥

यथा—

'दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डध्वनि-

मधुसूदनी

साद्दश्यज्ञानेन उद्बुद्धो यः संस्कारः। तत्प्रयोज्यं वाक्यार्थोपस्कारकं सुन्दरं स्मरणं स्मरणालङ्कारः। वाक्यार्थोपस्कारकत्वे प्रति सुन्दरत्वं तु सर्वालंकारसाधारणं विशेषणं प्राप्तमेवातः पण्डितराजेन नोदटंकि। इदन्तु बोध्यम्।

लक्षणे साद्दश्यज्ञानेत्यत्र साद्दश्यस्थाने सद्दशं पदमुचितम्। जात्याकृतिव्यक्तयः पदार्थ इति सूत्रे पदार्थ इत्येकवचनं (जातिः साद्दश्यम्, व्यक्तिः सद्दशः आकृतिः तयोः सम्बन्धः समवाय इति) समुदायाभिप्रायम्। अर्थात्पदार्थतावच्छेदकं त्रिषु एकरूपम्। ततश्च सद्दशपदेन साद्दश्यस्यापि स्वत एवोपस्थितिः। किंच "सद्दशाद्दृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः" इत्यत्र स्मृतेर्बीजस्य संस्कारस्योद्बोधकत्वं सद्दशे वस्तुन्येवोक्तिश्च संगच्छेत। तथा ग्रन्थकारात्प्रागुत्तरवर्त्तिभिः सर्वैराचार्यैः सद्दशेतिपदोपन्यासाच्चेति। अत एव केचित्तु इति प्राचीनमतनिर्देशसमये सद्दशज्ञानोद्बुद्धेत्यत्र सद्दशपदोपन्यासः।

येन केनचिदाकारेण नियतो यः कोऽपि पदार्थः यदा कदाचित् केनाऽपि प्रमाणेन अनुभवविषयीकृतः स ताद्दश एव पदार्थः कालान्तरे स्मर्यते, इति अनुभवसमानाकारा स्मृतिः। तथापि अनुभवो न साक्षात्स्मृतिं जनयति। अन्यमनस्कस्य द्दष्टश्रुतपदार्थास्मरणात् किन्तु संस्कारद्वारा। तदेष सिद्धान्तो दार्शनिकानां संस्कारजन्यं ज्ञानं स्मृतिरिति। संस्कारोऽपि उद्बुद्ध एव नतु अनुद्बुद्धः सुप्तप्रायः स्मृतिं जनयति। अतएव संस्कारस्य सर्वदा सत्त्वेऽपि न सर्वदा स्मृतिप्रसंगः। संस्कारस्योद्बोधश्च "सद्दशाद्दष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः" (स्मृतिबीजं संस्कारः) इत्युक्तेः सद्दश वस्तुनो दर्शनात्, श्रवणात्, स्मरणात्, अद्दष्टात्, चिन्तायाः, आद्यपदात् एकसम्बन्धिज्ञानात्, इत्यादिबहोः कारणाद्भवति; तत्र उद्बोधकान्तरवारणाय सद्दशेति। तत्रापि दर्शनादि साधारणसंग्रहाय ज्ञानेति। उपलब्धिमात्रार्थकं ज्ञानपदम्। ताद्दशसंस्काराक्षिप्ताऽपि न केवलं तज्जनितैवेति जन्यपदं विहाय उभयसाधारण्याय प्रयोज्यपदमुपात्तम्। अयमालंकारिकसम्प्रदाये यथार्थमौपम्यं निदर्शनालंकारः, तद्वत् तत्प्रयोज्यं स्मरणं स्मरणालंकारः।

दोर्दण्डेति। दण्डाकारौ दोषौ दोर्दण्डौ। तयोर्द्वयं तेन कुण्डलीकृतम् कुण्डला-

बालक्रीड़ा

अथ स्मरण अलंकार का प्रारंभ करते हैं

सादृश्य के ज्ञान से उद्भूत संस्कार के द्वारा प्रयोज्य स्मरण को स्मरण अलंकार कहते हैं। जैसे युद्धस्थल में रणभूमि में दोनों भुजदण्डों के द्वारा कुण्डल के आकार में

ध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम् ।
वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डव-
भ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ।।'

यथा वा—

'भुजभ्रमितपट्टिशोद्दलितदृप्तदन्तावलं
भजन्तमरिमण्डलक्रथन ! पश्यतः संगरे ।
अमन्दकुलिशाहतिस्फुटविभिन्नविन्ध्याचलो
न कस्य हृदयं झगित्यधिरुरोह देवेश्वरः ।।'

### मर्मप्रकाश

त्वां प्रकृतं राजानम् । मध्येरणमिति । रणमध्ये इत्यर्थः । वल्गन्मनोहरम् । पाण्डवमर्जुनम् । दन्तावलो हस्ती । अरिमण्डलक्रथनेति संबोधनम् । अमन्देति । तीक्ष्णेत्यर्थः । 'कराल' इति द्विः पाठः (?) झगिति झटिति । देवेश्वर इन्द्रः । रतेर्भावस्य ।

### मधुसूदनी

कारेण वर्त्तुलीकृतं यत्कोदण्डं धनुः । तस्य चण्डेन भीषणेन ध्वनिना टंकारेण ध्वस्तं विनाशितमुद्दण्डानामुद्वृत्तानां विपक्षाणां शत्रूणां मण्डलं येन तम् । त्वां राजानं मध्येरणम् रणमध्ये । पारे मध्ये षष्ठ्या वेति समासः । वीक्ष्य दृष्ट्वा । कः क्षितीशः कः पृथ्वीपतिः । रुष्टं पाण्डवमर्जुनं न स्मरेत् । रोषस्वरूपमाह - वल्गदिति वल्गता संचलता गाण्डिवेन धनुषा मुक्तस्य काण्डवलयस्य बाणव्यूहस्य ज्वालावलीनां ताण्डवेन भ्रश्यत् खाण्डवं वनं येन सः । स चासौ रुष्टश्च पाण्डण्डवश्चेति तम् । हे अरिमण्डलक्रथन ? हे शत्रुसूदन ?

भुजेति । भुजाभ्यां भ्रमितः संचालितो यः पट्टिश आयुधविशेषस्तेन दलिताश्चूर्णिता दृप्ता मदगर्विता दन्तावला येन तं भवन्तं संगरे युद्धे पश्यतः दर्शकस्य कस्य हृदयं स्वान्तं झगिति झटिति देवेश्वर इन्द्रो नारुरोह । कीदृशो देवेश्वरः इत्याह—

### बालक्रीड़ा

परिणत अतएव शोभायमान धनुष की कठोर टंकार से (चण्डध्वनि से) उद्दण्ड विपक्षमण्डल को ध्वस्त करने वाले आप को देखकर कौन ऐसा राजा है जो चमकते हुए गाण्डीव के द्वारा मुक्त छोड़े गये शरों की ज्वालावली के ताण्डव से नष्ट हो रहे खाण्डव वन में रुष्ट पाण्डव अर्जुन को याद न करता हो ।

हे अरिमण्डल के क्रथन नाशक ? राजन् ? भुजाओं से घुमाये हुए पट्टिश आयुध से गर्वीले हाथियों का दलन करने वाले आप को युद्ध में देखकर तत्काल किसके हृदय में कुलिश के जबर्दस्त आघातों के द्वारा विन्ध्याचल के टुकड़े २ कर देने वाले देवेश्वर नहीं आरूढ हुए ।

अनयोः पद्ययोः प्रधानीभूताया राजविषयकविनिष्ठरतेरुत्कर्षकतया स्मरणमलंकारः। आद्ये वाच्यम्, द्वितीये तु लक्ष्यमिति विशेषः। वीर-रसोऽपि चात्र प्रधानोत्कर्षकतयालंकार एव।

'एकीभवत्प्रलयकालपयोधिकल्प-
मालोक्य संगरगतं कुरुवीरसैन्यम्।
सस्मार तल्पमहिपुंगवकायकान्तं
निद्रां च योगकलितां भगवान्मुकुन्दः ॥'

मर्मप्रकाशः

लक्ष्यद्वयदाने बीजमाह—आद्ये इति। स्मरणमित्यस्यानुषङ्गः। लक्ष्यमिति। अधिरो-हतेर्लक्ष्यमित्यर्थः। नन्वेवमपि वीररसस्यानयोः प्राधान्येन राजनिष्ठस्य सत्वाद्ध्वनित्वमेवात आह—वीरेति। प्रधानोत्कर्षेति। कविनिष्ठरत्युत्कर्षेत्यर्थः। अलमिति। रसवदलंकार

मधुसूदनी

अमन्देति। अमन्दं यथा स्यात्तथा कुलिशस्य वज्रस्याहतिः प्रहारः। तेन स्फुटं यथा स्यात्तथा विभिन्नो भेदं गमितो विन्ध्याचलो येन सः। अन्तर्भावितण्यर्थो भिदिरत्र।

उदाहरणद्वयोल्लेखं सप्रयोजनं प्रदर्शयति—आद्ये उदाहरणे। दोर्दण्डद्वयेत्यत्र स्मरेदिति स्मरणं वाच्यम्। द्वितीये भुजभ्रमितेत्यत्र उदाहरणे हृदयाधिरोहतेर्लक्ष्यम्। ननु राज्ञः शूरत्वस्य प्राधान्येन वर्ण्यत्वाद्वीरो रसोऽत्र प्रकाशते इत्यत आह—वीर-रस इति। वर्त्तमानोऽपि वीरो रसः प्रधानाभूताया राजस्तुतेरुत्कर्षकतया उपस्कारकतया अलंकार एव रसवदलंकार एव।

एकीभवदिति। प्रलयकाले। सर्वे समुद्राः सरितः सरांसि सलिलानि यत्। एकत्वं भुवने यान्ति प्रलयः स निगद्यते इत्येवंरूपे समये। एकीभवन्तो मिलिता ये पयोधयः जलराशयः। तत्कल्पं तत्सदृशं संगतगतं कुरुवीरसैन्यं तेषां सैनिकसमूहमव-लोक्य भगवान् मुकुन्दः श्रीकृष्णः। अहिपुंगवस्य कायो देह एव कान्तं तल्पम्।

वालक्रीड़ा

इन दोनों पद्यों में स्मरण अलंकार है। जो प्रधानीभूत राजविषय कविनिष्ठरति को उत्कृष्ट करता है। प्रथम पद्य में वह स्मरेत् पद से वाच्य है और दूसरे पद्य में हृदयमारु-रोह से वह स्मरण लक्ष्य है। वीर रस भी प्रधानीभूत रति का उत्कर्षक है अतः रसवत् अलंकार ही है।

युद्ध भूमि में इकठ्ठी हुई कुरु वीर सेना को ऐसा देखा कि जैसे प्रलयकाल के समुद्र उमड़ २ कर आ रहे हैं और उसको देखकर भगवान् मुकुन्द को शेषनाग के शरीररूपी मनोहर शय्या और उस पर की निद्रा दोनों याद पड़ गईं।

अत्र तल्पनिद्रयोः स्मरणं यद्यपि न तल्पनिद्रासादृश्यदर्शनोद्बुद्धसंस्कार-प्रयोज्यम्, तथापि सैन्यगतपयोधिसादृश्यदर्शनोद्बुद्धपयोधिविषयकसंस्कार-जन्यपयोधिस्मरणाधीनत्वाद्भवत्येव यत्किंचित्सादृश्यदर्शनोद्बुद्धसंस्कार-प्रयोज्यम्। नहि सादृश्ये स्मर्यमाणसंबन्धित्वं विवक्षितम्। एवं वाच्य-योस्तल्पनिद्रास्मरणयोरेतत्कारणतया आक्षिप्तस्य पयोधिस्मरणस्य चाविशेषेण

## मर्मप्रकाशः

इत्यर्थः। विवक्षितं लक्षणे इति शेषः। एवमिति। वैधर्म्ये दृष्टान्त एतदिति। तल्प-

## मधुसूदनी

योगेन कलितां अभिन्नतां गतां योगरूपां निद्रां च सस्मार। कलिवली कामधेनुरित्युक्तेः कलितामित्यस्य तथार्थः।

तल्पेति। प्रकृते तल्पस्य निद्रायाश्च सदृशं वस्त्वन्तरं नावलोक्यते। ततश्च तदु-भयविषयकसंकारोद्बोधाभावात् यद्यपि तयोः स्मरणं न तल्पनिद्रासदृशवस्त्वन्तरदर्श-नोद्बुद्धसंस्कारप्रयोज्यम्। यद्यपीत्यनेन अर्धस्वीकृतिरभावस्य। तथापीत्यनेन तस्य निराशः।

सैन्यगतस्य पयोधिसादृश्यस्य दर्शनेन उद्बुद्धो यः पयोधिविषयकः संस्कारः। तज्जन्यं यत्पयोधिस्मरणं तदधीनं तल्पनिद्रयोः स्मरणं; तदधीनत्वात्; तयोः स्मरण-मपि यत्किंचित्सादृश्यस्य यत्र कुत्रचिद् गतस्य सादृश्यस्य दर्शनेन उद्बुद्धसंस्कारा-ज्जातम्।

ननु स्मरणं सादृश्यमूलकमलंकारः। सादृश्यमुभयनिष्ठम्। तत्रोभयोः

## बालक्रीड़ा

यहाँ पर तल्प और निद्रा का स्मरण यद्यपि तल्प और निद्रा के समान किसी पदार्थ को देखकर उद्बुद्ध हुए संस्कार से प्रयोज्य नहीं है तद्यपि सेना में पयोधि की समानता के देखने से जो पयोधि विषयक संस्कार उद्बुद्ध हुए उन संस्कारों से पयोधि का स्मरण हो आया। उसके वाद एक सम्वन्धि का ज्ञान अपर सम्वन्धी का स्मारक होता है इस नियम के अनुसार पयोधि के स्मरण होने पर पयोधि गत शय्या फिर शय्या में निद्रा का स्मरण हो आया। इस तरह जिस किसी पयोधि की समानता को देखने से तल्प और निद्रा के संस्कारों के उद्वोधन होने से और उन संस्कारों से प्रयोज्य तल्प और निद्रा का स्मरण होना स्वाभाविक है यद्यपि सादृश्य में स्मर्यमाण वस्तु के सम्वन्धित्व की विवक्षा नहीं है तद्यपि सादृश्य होना चाहिए चाहे वह स्मर्यमाण वस्तु का सम्बन्धी हो या नहीं भी हो।

इसलिए इन उक्त वाच्य तल्प एवं निद्रा के स्मरण और उनके कारणों के समानरूप से संग्रह करने के लिए लक्षण में जन्यत्व पद को न रखकर प्रयोज्यत्व पद का उपादान किया है।

संग्रहाय लक्षणे जन्यत्वमपहाय प्रयोज्यत्वमुपात्तम्। केचित्तु सदृशज्ञानोद्बुद्ध-संस्कारजन्यं सदृशविषयकमेव स्मरणमलंकारः। भुजगेन्द्रनिद्रादिस्मृतिस्तु नालंकार इत्याहुः।

'इत एव निजालयं गताया वनिताया गुरुभिः समावृतायाः।
परिवर्तितकंधरं नतभ्रु स्मयमानं वदनाम्बुजं स्मरामि॥'

### मर्मप्रकाशः

निद्रास्मरणकारणतयेत्यर्थः। संग्रहाय एतल्लक्ष्यत्वाय। केचित्त्विति। अत्र मते जन्यत्व-निवेशसादृश्ये स्मर्यमाणसंबन्धिनिवेशश्चेति पूर्वतो भेदः। भुजगेन्द्रेति। एकसंबन्धीति न्यायेन तल्पादिस्मरणस्य पयोधिस्मरणजन्यत्वेऽपि तादृशसंस्कारजन्यत्वादसदृशविषयकत्वाच्च पयोधिस्मरणं तु तथेति भवति स इति भावः। अत्रारुचिबीजं तु सादृश्ये स्मर्यमाणसंबन्धित्व-निवेशस्यैवं सति फलाभावः। नहि तादृशसंस्कारजन्यं स्मरणं विसदृशविषयकं संभवति। तथा पयोधिस्मरणस्य सदृशज्ञानत्वेन तेन तल्पादिस्मरणानुकूलसंस्कारस्योद्बोधनसंभवेन तज्जन्यत्वसत्त्वादलंकारत्वमेव तस्येति। सादृश्यज्ञाननिवेशफलमाह—इत एवेति।

### मधुसूदनी

सदृशयोर्मध्ये एकं सदृशं स्मर्यमाणमपरमनुभूयमानम्। तत्र कदाचित्स्मर्यमाणेन अनुभूयमानस्य सादृश्यं भवति। तदुक्तम्—

यथा दृश्येन जनिता साम्यधीः स्मर्यमाणगा।
स्मर्यमाणकृताप्यस्ति तथेयं दृश्यगामिनी। इति

दृश्यमनुभूयमानम्। इयं साम्यधीः। अन्यत्स्पष्टम्। प्रकृते च अवान्तरस्मर्य-माणेन पयोधिना अनुभूयमानस्य कुरुवीरसैनिकसमूहस्य पारावारयोरलक्ष्यत्वहेतुकं सादृश्यं पयोधिकल्पपदेन उपात्तम्। किन्तु सस्मारेति मुख्यतः स्मर्यमाणाभ्यां तल्प-निन्द्राभ्यां कस्यापि सादृश्यं नास्ति। अनुभूयमानस्य वस्तुनोऽभावात् अतः सादृश्य-मूलकत्वाभावादत्र पद्ये स्मरणालंकारो नास्ति। किन्तु अहिरूपतल्पपयोध्योराधारा-धेयभावः सम्बन्धः। तल्पनिद्रयोश्च प्रयोज्ययोजकभावः सः। अतः एकसम्बन्धि-ज्ञानमपरसम्बन्धिनः स्मारकमिति न्यायस्य प्रसरः। इति केचिदाहुरित्यस्वरसः। स्मर्यमाणेन अनुभूयमानसम्बन्धिसादृश्यं लक्षणे न विवक्षितमिति पण्डितराजस्योत्तरम्।

इत एवेति। इतो मत्सकाशतः। गुरुभिः श्वश्रूप्रभृतिभिस्ताभिः समावृतायाः गच्छन्त्याः गुरुभिः सहभूयेत्यर्थः। गुरुभिरिति वोतो गुणवचनादिति सूत्रेण विक-

### बालक्रीड़ा

कोई तो कहते हैं सदृशवस्तु विषयक ज्ञान से उद्बुद्ध हुए संस्कार से जन्य सदृश वस्तु विषयक स्मरण को अलंकार कहते हैं। अतः भुजगेन्द्ररूप तल्प एवं निद्रा की स्मृति अलंकार नहीं है।

गुरुजनों से घिरी हुई वनिता मेरे यहाँ से ही अपने घर को गई है। किन्तु जाते २

अत्र स्मरणं चिन्तोद्बुद्धसंस्कारप्रयोज्यत्वान्नालंकारः। व्यङ्ग्यत्वविरहाच्च न भावः।

एवम्—

'दरानमत्कंधरबन्धमीषन्निमीलितस्निग्धविलोचनाब्जम्।
अनल्पनिःश्वासभरालसाङ्ग्याः स्मरामि सङ्गं चिरमङ्गनायाः॥'

इहापि स्मृतिर्न भावो नाप्यलंकारः। व्यङ्ग्यस्यैव व्यभिचारिणो भावत्वात्। यथा 'सा वै कलङ्कविधुरा मधुराननश्रीः'। अयं चालंकारिकाणां

### मर्मप्रकाश

गुरुभिः श्वश्र्वादिभिः। परिवर्तितेत्यादिद्वयं स्मर्यमाणाक्रियाविशेषणम्। इहापि इत्यत्रापि। ननूक्तरीत्यानलंकारत्वेऽपि भावत्वं कुतो न। अव्यङ्ग्यत्वस्याप्रतिबन्धकत्वात्। अत आह—व्यङ्ग्येति।

### मधुसूदनी

त्पेन ङीषो विधानात् गुर्वीभिः गुरुभिर्वेति समानः प्रयोगः। निजालयं मातृगृहं गतायाः वनितायाः। वनिता जातरागा स्त्रीति कोषः। वदनाम्बुजं स्मरामि। वदनाम्बुजमित्यत्रोपमितिसमासः। परिवर्तितकन्धरत्वादीनां विशेषणानामम्बुजसदृशे वदनेऽनुकूलत्वात्। अत्र द्वयोर्बहुव्रीहिः।

अत्र पद्ये सादृश्यमूलकत्वाभावात्। चिन्तया उद्बुद्धेन संस्कारेण प्रयोज्यत्वात्स्मरणं स्मरामीतिपदार्थो न स्मरणालंकारः, स्मरामीतिपदवाच्यतया व्यंग्यत्वस्य विरहाद् भावोऽपि न। अत्र विरहाच्चेति चकारोऽप्यर्थः। न तु समुच्चयार्थकः समुच्चेतव्यविरहात्।

सा वै कलंकविधुरेत्यत्र सेति पूर्वं वहुशोऽनुभूता स्मरतिपथमागच्छन्तीदानी-

### बालक्रीड़ा

उसने मेरी तरफ ग्रीवा को घुमाकर जो हँस दिया उस हँसते हुए नतभ्रु वदन कमल को याद करता हूँ उसको नहीं भूल सकता हूँ।

यह स्मरण है किन्तु चिन्ता से उद्वुद्ध हुए संस्कारों से प्रयोज्य है अतः अलंकार नहीं है। स्मरामि पद से स्मरण के वाच्य होने से उसमें व्यंग्यत्व नहीं है अतः भाव भी नहीं है।

इस प्रकार—अधिक निःश्वासभर से अलस अंगों वाली अंगना के चिरकालीन संग को याद कर रहा हूँ। जिस संग में ग्रीवा ईषत् झुकी हुई है और स्नेहपूर्ण नयनकमल अल्प निमीलित है। यहाँ पर भी प्रतिपाद्य स्मृति वाच्य होने से व्यंग्यत्व के अभाव में न भाव है और न चिन्तोद्वुद्ध संस्कार प्रयोज्य होने से अलंकार है। व्यंग्य हुआ ही व्यभिचारी, भाव कहलाता है। जैसे "वह कलंक रहित और मधुर आनन की शोभा" यहाँ स्मृति व्यंग्य होने से भाव है। यह आलंकारिकों का सम्प्रदाय है कि सादृश्यमूलक होने पर ही स्मरण, निदर्शनादि

संप्रदायो यत्सादृश्यमूलकत्वे स्मरणं निदर्शनादिवदलंकारः। तस्याभावे व्यङ्ग्यतायां भावः। तयोरभावे तु वस्तुमात्रम्।

अप्पय्यदीक्षितास्तु—

"स्मृतिः सादृश्यमूला या वस्त्वन्तरसमाश्रया।
स्मरणालंकृतिः सा स्याद्व्यङ्ग्यत्वविशेषिता॥"

यथा—

'अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः॥'

## मर्मप्रकाश

तस्य सादृश्यमूलकत्वस्य। तयोर्व्यङ्ग्यत्वसादृश्यमूलकत्वयोः। अपीति। रघुवंशे दशरथमृगयावर्णनम्। स दशरथः। सादृश्यबोधकं केशपाशस्य विशेषणद्वयम्।

## मधुसूदनी

मिति स्मृतिर्व्यज्यते तस्य सादृश्यमूलकालंकारस्याभावे। तयोः सादृश्यमूलकालंकारस्य व्यंग्यस्य च अभावे।

स्मृतिरिति। वस्त्वन्तरेति अन्यवस्तुविषयिणी। अव्यंग्यत्वेन व्यंग्यत्वाभावेन विशेषिता युक्ता।

अपीति। चित्रैर्नानावर्णैर्माल्यैरनुकीर्णे युक्ते। रत्यां रतिसमये विगलितः त्रुटितः बन्धो रचना यस्य। तस्मिन् केशपाशे। सपदि सद्यः। गतमनस्कः सन् न बाणलक्ष्यीचकार।

## बालक्रीड़ा

की तरह अलंकार है। सादृश्य मूलकता के अभाव में व्यंग्यता की दशा में भाव है और भाव एवं अलकार के अभाव में केवल वस्तु है।

अप्पय्य दीक्षित जी ने तो=कहा कि वस्त्वन्तर विषयक जो सादृश्यमूला अव्यंग्या स्मृति है वह स्मरण अलंकार है।

जैसे=उस राजा ने अपने घोड़े के पास से उड़कर जाते हुए सुन्दर पिच्छ वाले मयूर को बाण का लक्ष्य नहीं किया। क्यों कि उसको देखते ही झटपट उस का मन रंग बिरंगी मालाओं से गुंथे किन्तु रति काल के संघर्ष से खुल गये प्रिया के केशपाश में चला गया अर्थात् मयूर के रुचिर कलाप को देखकर प्रिया का केश पाश उसे याद पड़ गया। यहाँ केशपाश की स्मृति व्यंग्य है।

यथा वा—

'दिव्यानामपि कृतविस्मयां पुरस्तादम्भस्तः स्फुरदरविन्दचारुहस्ताम्।
उद्वीक्ष्य श्रियमिव कांचिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य शौरिः॥'

एकत्र सदृशदर्शनात्तत्सदृशकर्मिका स्मृतिः। इतरत्र सदृशदर्शनात्तत्सदृशलक्ष्मीसंबन्धिनो जलनिधिमन्थनस्य स्मृतिः। उभयत्रापि सादृश्यमूलकत्रस्त्वन्तरस्मृतित्वमविशिष्टम्। अत एव सदृशासदृशसाधारण्यार्थतयालक्षणे वस्त्वन्तरग्रहणमर्थवत्।

### मर्मप्रकाश

दिव्यानामिति। माघे जलक्रीडावर्णनम्। अम्भस्तो जलात्। मन्थनस्येति 'अधीगर्थ—' इति कर्मणि षष्ठी। लक्ष्यद्वयदाने बीजमाह—एकत्रेति। आद्य इत्यर्थः। इतरत्र अन्त्ये। सदृशेति। लक्ष्मीसदृशनायिकेत्यर्थः। लक्षणं संगमयति—उभयत्रेति। तथा च द्वितीयलक्ष्यसंग्रह एव। वस्त्वन्तरसमाश्रयेति विशेषणफलमित्याह—अत एवेति। द्वितीयस्य लक्ष्यत्वादेवेत्यर्थः। सदृशासदृशेति। स्मृतेः सदृशासदृशान्यतरविषयकत्वला-

### मधुसूदनी

दिव्येति। कृतो जनितो विस्मया यया ताम्। पुरस्तात्समक्षम्। अम्भस्तः तटाकस्य नद्या वा। श्रियमिव उत्तरन्तीं निःसरन्तीम्। जलनिधिमन्थनस्यास्मार्षीदिति स्मरतेर्योगे अधोगर्थदयेशामिति कर्मणि मन्थनस्येति षष्ठी।

एकत्र अपि तुरगेत्यत्र। इतरत्र दिव्यानामित्यत्र। सदृशदर्शनात् लक्ष्मीसदृशनायिकावलोकनात्। उभयत्र द्वयारुदाहरणयोः।

### बालक्रीड़ा

और भी जैसे स्वर्गीय पुरुषों को भी आश्चर्य में डालने वाली और जिसके हाथ खिले हुए कमल के धारण से सुन्दर हैं ऐसी किसी नायिका का अपने समक्ष जल से लक्ष्मी की तरह निकलती हुई देखकर भगवान् कृष्ण को समुद्र मन्थन का याद पड़ गई।

पहले अपि तुरगसमीपात् पद्य में सदृश वस्तु के देखने से उसके सदृश वस्तु की स्मृति हो गई दूसरे दिव्यानामपि पद्य में जलाशय से निकलती हुई नायिका को देखकर समुद्र से निकलती हुई लक्ष्मी की स्मृति हो गई उससे समुद्र मन्थन की स्मृति हो गई। यहाँ जलाशय और समुद्र नायिका और लक्ष्मी दानों का सादृश्य है अतः स्वसदृश वस्तु के दर्शन से स्वसदृश वस्तु का स्मरण ठीक है। किन्तु समुद्र से निकलती हुई लक्ष्मी के स्मरण से समुद्र मन्थन का जो स्मरण है उसमें कोई सादृश्य नहीं है। इसलिए यह असदृश वस्तु का स्मरण है। किन्तु इन दोनों के मूल में सादृश्य समान रूप से मौजूद है। अतः यहाँ सादृश्य मूलक वस्त्वन्तर की स्मृति है इसीलिए सदृश और असदृश की साधारणता के लिए लक्षण में वस्त्वन्तर पद का विन्यास किया।

'सौमित्रे ? ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते ? चन्द्रोऽयमुन्मीलति ।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि ? हा कुरङ्गनयने ? चन्द्रानने ? जानकि ?॥'

अत्र श्रुतकुरङ्गसंबन्धिनस्तन्नयनस्य स्मरणात्तत्सदृशसीतानयनस्मृति-

## मर्मप्रकाश

भार्थतयेत्यर्थः । अव्यङ्ग्यत्वविशेषणफलमाह—सौमित्रे इति । हनुमन्नाटके सीतावियोगे श्रीरामचन्द्रस्य लक्ष्मणं प्रत्युक्तिरियम् । ननु निश्चयेन । चण्डांशुः सूर्यः । तन्नयनेति । कुरङ्गनयनेत्यर्थः । तत्सदृशेति नयनविशेषणम् । इतिर्भूता चेत्यग्रे योज्यः । एषा सीतास्मृतिः ।

## मधुसूदनी

सदृशासदृशेति । कुत्रचित् वस्त्वन्तरमवलोक्य वस्त्वन्तरसदृशवस्तुनः स्मरणम् । कुहचन वस्त्वन्तरसदृशवस्तुनः सम्बन्धी यः पदार्थस्तस्य असदृशस्यापि कस्यचित् स्मरणम् । उभयत्र स्मरणस्य मूले सादृश्यमनुस्यूतम् । सादृश्यलब्धं वस्तु सदृशासदृशसाधारणमत एव एतल्लाभार्थमेव वस्त्वन्तरस्मरणं कृतमित्याशयः ।

सौमित्र इति । धत्ते कुरंगं यतः इति श्रुतिमनुभूय कुरंगपदवाच्यव्यक्तिनयन-स्मरणं, तेन तत्सदृशसीतानयनस्मरणं, सीतानयनस्मरणेन सीतास्मरणम् । एतत्स्मरणं व्यंग्यमलंकार्यं च । एतस्य व्यंग्यस्य निरासार्थमेव अव्यंग्यत्वविशेषणमुपात्तम् । इदं बोध्यम् । धत्ते कुरंगं यत इति श्रुत्वा हा कुरंगनयने ? इति शब्दः हे जानकि ! इति शब्दश्च प्रोच्यते ततः कथमेतत्स्मरणं व्यंग्यं किन्तु मध्ये सीतानयनस्मरणं व्यंग्यम् ।

इति स्मरणालंकार निरूपणे मधुसूदनी ।

## बालक्रीड़ा

अब लक्षण में अव्यंयग्त्व विशेषण की सार्थकता बतलाते हैं—हे सौमित्रे ? लक्ष्मण ? (यहाँ रूढ़ ही अर्थ लेना है । योगार्थ सुमित्रा के बेटे यह अर्थ नहीं लेना है । इस अर्थ में रूक्षता है । दूसरे मर्यादा पुरुषोत्तम राम की उक्ति है सुमित्रा कोई उपेक्षित महिला या दासी नहीं थी और लक्ष्मण भी कोई सामान्य व्यक्ति नहीं थे जो कहें कि अरे ओ फलानी के बेटे । सुमित्रा महारानी थी आदरणीया थी) आप पेड़ के नीचे छाया में चलो । क्यों महाराज ? देखो चण्डांशु तीक्ष्ण किरणों वाला सूर्य उदित हो रहा है । हे रघुपते ? अर्द्धरात्र में चण्डाशु की क्या कथा है । यह तो चन्द्रोदय हो रहा है । हे वत्स ? तुमने यह कैसे समझा । क्योंकि यह कुरंग को धारण किया है । हा कुरंग नयने ? चद्रानने ? प्रेयसि ? जानकि ? तुम कहाँ पर हो ।

यहाँ कुरंग शब्द को सुना । उसके बाद कुरंग सम्बन्धी कुरंग के नयनों का स्मरण हुआ । इससे कुरंग सदृश सीता के नयनों की स्मृति हुई उस नयन स्मरण से नयन सम्बन्धी

स्तत्संबन्धिसीतास्मृतिश्चेति । किं त्वेषा व्यङ्ग्या अलंकार्यभूता च । तद्व्या-वृत्त्यर्थमव्यङ्ग्यत्वविशेषणम् ।

'अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न श्रान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिनां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥'

अत्र स्तूयमानभूसंबन्धिनो भूभृतः स्मृतिर्न सादृश्यमूलेति न स्मरणालंकारः । किं तु स्मृतेः संचारिभावस्य भूभृद्विषयरतिभावाङ्गत्वात्प्रेयोलंकारः । एतद्व्यावृत्तये सादृश्यमूलेति विशेषणम् ।" इत्याहुः ।

तदेतत्सर्वमरमणीयम् । यत्तावदुच्यते सदृशासदृशयोः केशपाशजल-

### मर्मप्रकाशः

अलंकारसामान्यलक्षणमपि नास्तीत्याह—अलमिति । सीतास्मृतेः प्राधान्यादिति भावः । अत्युच्चा इति । भुवं प्रत्युक्तिरियम् । प्रस्तौमि करोमि । इमां भुवम् । न सादृश्येति । किं त्वेकसंबन्धीति रीत्येति भावः । रतिभावेति । कविनिष्ठेत्यादिः । अरमणीयमिति । वक्ष्यमाणदोषादिति भावः । तमेव दार्ढ्यायानूद्याह—यत्तावदिति । तत्र उच्यमाने

### बालक्रीडा

सीता की याद पड़ गई । किन्तु यह याद व्यंग्य है और अलंकार्य है । अतः इस व्यंग्य के निरास के लिए अव्यंग्यत्व विशेषण दिया है ।

इतना अवश्य समझना है कि यह कुरंग शब्द के सुनने के बाद कुरंग के नयनों की स्मृति व्यंग्य है । उस स्मृति के बाद उन नयनों के सदृश सीता के नयनों की स्मृति भी व्यंग्य है कहा है ; किन्तु कुरंग के नयनों के सदृश नयनों वाली में नयन और सीता दोनों कुरंगनयने एवं जानकी पदों के वाच्य हैं । व्यंग्य नहीं है ।

'बड़े ऊँचे-ऊँचे पहाड़ चमक रहे हैं तथा विशाल समुद्र है इन सबको भी धारण करती हुई हे पृथ्वि ? तुम श्रान्त नहीं होती हो तुम को नमस्कार है । इस प्रकार आश्चर्य से बार-बार भूमि की स्तुति कर रहे हैं कि तब तक इस पृथ्वी को भी धारण करनेवाले आपके भुजाओं की याद पड़ी तो वाणी मौन हो गई ।

यहाँ भूमि की स्तुति से भूमि के धारण करनेवाले की स्मृति के मूल में सादृश्य नहीं हैं अतः स्मरण अलंकार नहीं है किन्तु भूभृत् की स्मृति रूप संचारी भाव कवि निष्ठ भूभृद्विषयक रति भाव का अंग होंने से प्रेय अलंकार है । इसकी व्यावृत्ति के लिए सादृश्य मूला यह विशेषण दिया है ।

पण्डितराज कहते हैं कि यह सब जो कहा है वह सब सुन्दर नहीं है । जो तो कहते हैं कि सदृश केशपाश और असदृश जल निधि मन्थन के संग्रह के लिए वस्त्वन्तरपद

निधिमन्थनयोः संग्रहाय लक्षणे वस्त्वन्तरग्रहणमर्थवदिति। तत्र सादृश्यमूला स्मृतिः स्मरणालंकार इत्येतावतैव केशपाशस्मरणस्येव जलनिधिमन्थनस्मरणस्यापि संग्रहाद्वस्त्वन्तरसमाश्रयत्वविशेषणमनर्थकम्। एकत्र सादृश्यदर्शनोद्बुद्धसंस्कारजन्यत्वेन, अपरत्र च सादृश्यदर्शनोद्बुद्धसंस्कारजलक्ष्मीस्मरणोद्बुद्धसंस्कारजन्यत्वेन च सादृश्यमूलत्वस्याविशेषात्। नहि सादृश्यमूलेत्युक्ते सदृशविषयेति लभ्यते, येन जलनिधिमन्थनस्मृतेरसंग्रहः स्यात्। यदपि 'सौमित्रे ? ननु सेव्यतां–' इत्यत्र स्मृतिर्व्यङ्ग्या अलंकार्यभूता च। तद्व्यावृत्तयेऽव्यङ्ग्यत्वविशेषणमित्युक्तम्। तत्र नेयं स्मृतिरलंकार्यभूता किंतु जानक्यालम्बनो निशासमयोद्दीपितः संतापादिनानुभावित उन्मादेन

मर्मप्रकाशः

तस्मिन्। ब्रूम इति शेषः। तदाह—सादृश्येति। एवमग्रेऽपि। केशेति। तस्य सदृशत्वेन दृष्टान्तत्वमिति भावः। स्यादिति। इतीति शेषः। सादृश्यपदस्य नितसंबन्धिकतया संबन्ध्याकाङ्क्षायामुपस्थितस्मर्यमाणस्यैवान्वयापत्तिः। नहि "जनकत्वमूला पूजा" इत्युक्ते पुत्रजनकत्वेन भार्या पूज्यते। अतो वस्त्वन्तरसमाश्रयेत्यावश्यकमिति चिन्त्यमिदम्। नेयं स्मृतिरलंकार्यभतेति। अत्र स्मृतेः हा क्वासीत्यादि पदगम्यत्वेन विवहनप्रवृत्तराजानुगम्यमानभृत्यवत्। 'शठेन विधिना निद्रादरिद्रीकृतः' इत्यादौ शठादिपदगम्यासूया बुद्धा। तस्या एव प्राधान्यादलंकार्यत्वम्। अनुपस्कारकत्वाच्च विप्रलम्भस्यैव तत्त्वाच्चेति चिन्त्यम्।

बालक्रीड़ा

का लक्षण में उपन्यास सार्थक है। उसमें सादृश्यमूल स्मृति स्मरण अलंकार है इतने ही लक्षण से केशपाश स्मरण की तरह जलनिधिमन्थन स्मरण का भी संग्रह हो जायगा अतः वस्त्वन्तर पद का विन्यास लक्षण में अनर्थक है। क्योंकि एक जगह सादृश्य के दर्शन से उद्बुद्ध संस्कार के द्वारा जन्य जो लक्ष्मी स्मरण उससे उद्बुद्ध संस्कार से जन्य होने के कारण सादृश्यमूलकत्व दोनों जगह समान है।

यह कोई बात नहीं है कि सादृश्य मूला कहने से स्मृति सदृशविषया ही ली जाय जिससे जलधि मन्थन स्मृति का संग्रह नहीं होने पावे।

और जो भीं "सौमित्रे ? ननु सेव्यताम् इस पद्य में स्मृति व्यंग्य है और अलंकार्य है। अतः इसके व्यावर्तन के लिए अव्यंग्यत्व विशेषण है "यह कहा है। उसमें यह स्मृति अलंकार्य नहीं है। किन्तु जानकी विषयक विप्रलंभ प्रधान है अतः वह अलंकार्य है। जिस विप्रलंभ में जानकी आलम्बन विभाव है निशासमय उद्दीपन विभाव है। संतापादि अनुभाव हैं। उन्माद संचारी भाव है। इससे वह विप्रलम्भ पुष्ट किया गया है। उस विप्रलम्भ को उत्कृष्ट करने के कारण स्मरण अलंकार ही है। अतः उसकी व्यावृत्ति के लिए अव्यंग्यत्व विशेषण देना नितराम् अनुचित है।

संचारिणा परिपोषितो विप्रलम्भः प्रधानत्वेनालंकार्यः। तस्य च स्मृतिरुत्कर्षहेतुत्वादलंकार एव। अतो नितरां तद्व्यावृत्त्यर्थमव्यङ्ग्यत्वविशेषणदानमनुचितम्। नहि व्यङ्ग्यत्वालंकारत्वयोर्विरोध इति वक्तुं शक्यम्। नित्यव्यङ्ग्यानां रसभावादीनामपि पराङ्गतायामलंकारत्वाभ्युपगमात्। प्रधानव्यङ्ग्यव्यावृत्त्यर्थं पुनरुपस्कारकत्वं सर्वेष्वलंकारलक्षणेषु देयमिति प्रागेवावेदितम्। यदप्युक्तम् 'अत्युच्चाः परितः स्फुरन्ति गिरयः' इत्यत्र स्मृतेः संचारिभावस्य भूभृद्विषयरतिभावाङ्गत्वात्प्रेयोलंकार इति, तन्न, भावस्य हि भावाद्यङ्गतायां प्रेयोलंकारत्वम्। नह्यत्र स्मृतिर्भावः तस्याः स्मरतिना वाचकेनाभिधानात्। नहि वाच्यस्य व्यभिचारिणो भावत्वं वक्तुं युक्तम्। 'व्यभिचार्यञ्जितो भावः' इति सिद्धान्तविरोधात्। तथा चोक्तं सर्वस्वकृता—

## मर्मप्रकाशः

विप्रलम्भः श्रीरामचन्द्रनिष्ठः। नितरामित्यस्यानौचित्येऽन्वयः। तदाशयं खण्डयति—नहीति। नित्येति। सर्वथेत्यर्थः। कदाप्यवाच्यलक्ष्येति यावत्। नन्वेवं प्राधान्येऽप्यलंकारत्वापत्तिरत आह—प्रधानेति। सर्वेषु न त्वत्रैव। तथा चालंकारसामान्यलक्षणप्राप्तत्वात्तस्य नातिप्रसङ्ग इति भावः। सिद्धान्तेति। मम्मटभट्टादीनामिति शेषः। तद्ग्रन्थमाह—

## बालक्रीड़ा

यह आप नहीं कह सकते कि व्यंग्यत्व और अलंकारत्व का विरोध है। क्योंकि नित्य व्यंग्य रस आदिकों को भी अपर के अंग होने पर रसवत्, प्रेय, ऊर्जस्वी एवं समाहितादि अलंकार माना गया है। प्रधानीभूत व्यंग्य की व्यावृत्ति के लिए फिर उपस्कारकत्व रूप विशेषण का उपन्यास सभी अलंकार लक्षणों में देना ही चाहिए यह पहले ही कहा जा चुका है।

और जो भी कहा कि "अत्युच्चाः परितः स्फुरन्ति गिरयः" इस पद्य में स्मृति संचारी भाव कविनिष्ठ भूभृद् विषयक रतिभाव का अंग है अतः प्रेयः अलंकार हैं वह भी ठीक नहीं है। भाव का अंग जब भाव होता है तब प्रेयः अलंकार होता है। एक बात है। दूसरी बात है कि यहाँ स्मृति भाव नहीं है क्योंकि इस का स्मृति के वाचक स्मृत पद से अभिधान है। इसलिए वाच्य व्यभिचारी को भाव कहना युक्त नहीं है। क्योंकि अञ्जित हुआ ही व्यभिचारी, भाव होता है इस सिद्धान्त से विरोध होता है।

जैसा कि अलंकार सर्वस्वंकार ने कहा है कि प्रेयोऽलंकार की तो वही स्मृति विषय होती है जो सादृश्य से अतिरिक्त किसी निमित्त से उत्थापिता हो। उसमें भी वह विभावादि से आगूरित हो उद्भ्रान्त हो। जैसे कोप में भी नायिका का मुख कान्त था अहो आश्चर्य है। इसमें स्मृति है। स्मृति शब्द से निगदित स्मृति तो कभी भी प्रेयः अलंकार नहीं बन सकती है।

"प्रेयोलंकारस्य तु सादृश्यव्यतिरिक्तनिमित्तोत्थापिता स्मृतिर्विषयः। तत्रापि विभावाद्यागूरितत्वे यथा 'अहो कोपेऽपि कान्तं मुखम्' इति। न तु स्वशब्दनिवेदितत्वे।

यथा—

'अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम्॥'

इत्यादाविति।" ननु भावाद्यङ्गीभूतभावत्वं न प्रेयोलंकारलक्षणम्। अपि तु भावाद्यङ्गीभूतसंचारित्वमात्रम्। तथा च प्रकृते स्मरणस्य स्वशब्दनिवेदितत्वेन भावत्वविरहेऽपि संचारित्वानपायात्प्रेयोलंकारत्वमविरुद्धमेवेति चेत्, एवं

मर्मप्रकाशः

प्रेयोलमित्यादि। इतीत्यन्तेन। तत्रापि तदुत्थापितायामपि। आगूरितत्वे आविष्कृतत्वे। अत्रेति। पुष्पकेण लङ्कातोऽयोध्यां गच्छतः श्रीरामस्य सीतां प्रत्युक्तिरियं रघुवंशे। अनुगोदं गोदासमीपे। वानीरेति। वेतसस्य। सुप्तं स्वापः। इष्टापत्तिं परिहरति—

बालक्रीड़ा

जैसे—यह रघुवंश महाकाव्य का श्लोक है। यहाँ भगवान् रामचन्द्र जी लंका से पुष्पक विमान के द्वारा अयोध्या को लौट रहे हैं। उसी समय सीता से कह रहे हैं कि यहाँ गोदावरी के तीर पर मृगया से लौट कर गोदानदी के तरंगों से मिश्रित वायु से श्रमजनित खेद से थकावट से रहित हुआ वानीर के घर में एकान्त में तुम्हारे उत्संग में मस्तक को रख कर सोता था उसको मैं याद करता हूँ।

इत्यादि लक्ष्यों में स्मरामि पद से स्मृति वाच्य है अतः भाव नहीं है।

प्रश्न—भावादि का अंग हुआ भाव प्रेयोऽलंकार है ऐसा प्रेयोऽलंकार का लक्षण नहीं है। किन्तु भावादि का अंग हुआ संचारी प्रेयोऽलंकार है बस इतना मात्र उसका लक्षण है। अतः प्रकृत में स्मरण शब्द से निवेदित होने से अव्यक्त स्मरण में भावत्व नहीं है तथापि संचारित्व तो है ही अतः प्रेयोऽलंकार होने में कोई विरोध नहीं होना चाहिए। यहाँ का रहस्य यह है कि—व्यंजित संचारी को भाव कहते हैं और व्यक्त नहीं हुआ वह निर्वेदादि संचारी मात्र है। अतः भाव का अर्थ है व्यंजित संचारी। वह व्यंजित संचारी भावादि का अंग हुआ प्रेयोलंकार है ऐसा लक्षण नहीं करते हैं। किन्तु अव्यंजित निर्वेदादि संचारी, भावादिका अंग हुआ प्रेयालंकार है तब कोई विरोध नहीं है।

उत्तर। ऐसा यदि व्यंजित और अव्यंजित का निवेश करेंगे तो इतराङ्गीभूत रत्यादि स्थायिमात्र रसवदलंकार कहलायेगा। न कि व्यज्यमानत्व विशिष्ट रत्यादि। यह भी सुवच है अर्थात् कहा जा सकता है।

तर्हीतराङ्गीभूतस्थायित्वमात्रं रसालंकारत्वम्, न तु व्यज्यमानत्वविशिष्टम्, इत्यस्यापि सुवचत्वात्।

एवं च—

'चराचरोभयाकारजगत्कारणविग्रहम्।
कल्पान्तकालसंक्रुद्धं हरं सर्वहरं नुमः॥'

इत्यत्र क्रोधस्य स्वशब्दनिवेदितत्वेऽपि देवताविषयकरतिभावाङ्गीभूतस्थायित्वानपायाद्रसालंकारता स्यात्। न चेष्टापत्तिः। अपसिद्धान्तात्। तस्माद्व्यज्यमानस्यैव स्थायिनः पराङ्गत्वे यथा रसालंकारत्वमेवं व्यज्यमानस्यैव संचारिणो भावाद्यङ्गतायां प्रेयोलंकारत्वमिति नात्र स्मृतिमादाय प्रेयोलंकारता वाच्या। किं तु भूविषयकरतेः पूर्वार्धव्यङ्ग्याया उत्तरार्धव्यङ्ग्यभूभृद्विषयरतिभावाङ्गत्वाद्युक्ता प्रेयोलंकारता वक्तुम्। उक्तं च मम्मटभट्टैः—'अत्र भूविषयो रत्याख्यो भावो राजविषयरतिभावस्य' इति। अपि च महदिदमाश्चर्यं यत्स्वेनैव निर्मितः कुवलयानन्दाख्यः संदर्भो विस्मृतः। उक्तं च तत्र—

### मर्मप्रकाशः

एवं चेति। तथा सुवचत्वे चेत्यर्थः। स्वशब्देति। क्रुद्धमितीत्यर्थः। रतिभावेति। कविनिष्ठेत्यादि। स्मृतिमादायेत्युक्तिफलमाह—किं त्विति। एवं च प्रेयोऽलंकारसत्त्वेऽपि त्वत्कृतं तदुपपादनं चित्रमीमांसास्थमयुक्तमिति भावः। भावस्येति।

### बालक्रीड़ा

इस प्रकार व्यज्यमानत्व विशेषण को स्थायिभावों में यदि देवेंगे तो चर और अचर उभयाकार जगत् के कारण शरीर और कल्पान्त प्रलय काल में संक्रुद्ध अतएव सब को हरण करने वाले हर को मैं नमस्कार करता हूँ।

यहाँ पर क्रोध के क्रोधवाचक शब्द से निवेदित होने पर भी देवता विषयक कवि निष्ठ रतिभाव के अंग होने से रसवदलंकारता हो ही जायगी। अगर कहें कि इष्ट ही है हो जाय रसवदलंकार। तब कहते हैं कि अपसिद्धान्त हो जायगा। सिद्धान्त भंग हो जायगा इसलिए व्यज्यमान स्थायिभाव ही जैसे पर का अंग हुआ रसवदलंकार बनता है उसी तरह व्यज्यमान ही संचारी, भावादि का अंग हुआ प्रेयोऽलंकार बनता है यह सिद्धान्त ठीक है। अतः प्रकृत में स्मृति प्रेयोऽलंकार नहीं है। किन्तु पूर्वार्द्ध में व्यक्त हुई भूमि विषयक रति को उत्तरार्ध में व्यक्त हुई भूभृद् विषयक रति भाव के अंग होने पर प्रयोऽलंकार कहा जा सकता है।

मम्मट भट्ट जी ने कहा भी है कि यहाँ भूविषयक रतिभाव राजविषयक रतिभाव का अंग है। और भी बात है कि यह बड़ा भारी आश्चर्य है कि अपने ही बनाये हुए कुवलया-

'विभावानुभावाभ्यामभिव्यञ्जितो निर्वेदादिर्भावः स यत्रापरस्याङ्गं स प्रेयोलंकारः' इति।

यदपि 'सदृशानुभवाद्वस्त्वन्तरस्मृतिः स्मरणम्' इत्यलंकारसर्वस्वरत्नाकरयोः स्मरणालंकारलक्षणमुक्तम्, तदपि न। सदृशस्मरणादुद्बुद्धेन संस्कारेण जनिते स्मरणे अव्याप्तेः।

यथा—

'सन्त्येवास्मिञ्जगति बहवः पक्षिणो रम्यरूपा-
स्तेषां मध्ये मम तु महती वासना चातकेषु।
यैरध्यक्षैरथ निजसखं नीरदं स्मारयद्भिः
स्मृत्यारूढं भवति किमपि ब्रह्म कृष्णाभिधानम्॥'

अत्र च चातकदर्शनादेकसंबन्धिज्ञानादुत्पन्नेनापरसंबन्धिनो जलधरस्य भगवत्सदृशस्य स्मरणेन जनितं भगवतः स्मरणं भगवद्विषयरतिभावाङ्गम्। यदि च 'सदृशानुभवात्' इत्यपहाय 'सदृशज्ञानात्' इति लक्षणे निवेश्यते तदा भवत्यस्यापि संग्रह इति दिक्।

## मर्मप्रकाश

अङ्गमिति शेषः। स्वेनैव अप्पय्यदीक्षितेनैव। तत्र कुवलयानन्दे। निर्वेदादिस्त्रयस्त्रिंशत्। अपरस्य भावादेः। [अलंकारसर्वस्वरत्ना] करयोर्ग्रन्थयोः। अध्यक्षैः प्रत्यक्षैः। अथ

## बालक्रीड़ा

नन्द नामक संदर्भ को भूल गये। वहाँ कहा है कि विभाव एवं अनुभावों से अभिव्यंजित निर्वेदादि, भाव हैं। वह जहाँ अपर का अंग हो तब वहाँ प्रेयोलंकार होगा।

और जो भी सदृश वस्तु के अनुभव होने पर दस्त्वन्र की स्मृति स्मरणालंकार है। यह अलंकार सर्वस्व और रत्नाकर ग्रन्थों में स्मरणालंकार का लक्षण कहा है वह भी ठीक नहीं है सदृश स्मरण से उद्बुद्ध हुए स्मरण में लक्षण नहीं जाने से अव्याप्ति हो जायगी। जैसे—

इस जगत् में बहुत से रमणीय रूप वाले पक्षी हैं। किन्तु उनके बीच में मेरी तो वासना भावना चातकों में अधिक है, क्योंकि जो चातक के दिखाई पड़ते ही अपने घन की याद करा देते हैं जिससे कोई अलौकिक (घनश्यामाभिधान) ब्रह्म स्मृति पर आरूढ हो जाता है।

यहाँ चातक के देखने से एक सम्बन्धि ज्ञान से अपर सम्बन्धी भगवत्सदृश जलधर का स्मरण उत्पन्न हुआ। उस स्मरण से जनित भगवान् का स्मरण भगवद्विषयक रतिभाव का अंग है। इसमें आप लोगों का लक्षण नहीं जायगा। अव्याप्ति दोष लग जायगा।

अगर इस दोष को वारण करने के लिए सदृशानुभवात् हटाकर सदृशज्ञानात् पद का

अथास्य ध्वनिः ।

यथा—

'इदं लताभिः स्तवकानताभिर्मनोहरं हन्त वनान्तरालम् ।
सदैव सेव्यं स्तनभारवत्यो न चेद्युवत्यो हृदयं हरेयुः ॥'

अत्र स्तबकानताभिर्लताभिः स्तनभारवतीनां युवतीनां स्मरणमलंकार्यस्यान्यस्याभावादनुपसर्जनम्, स्तनस्तबकरूपस्य विम्बप्रतिबिम्बभावमापन्नस्य साधारणधर्मस्य वाच्यत्वेऽपि तत्प्रयोजितसादृश्यमूलकस्य स्वस्य शब्दवाच्यत्वविरहाद्व्यङ्ग्यं च। युवत्य इति च 'सर्वतो क्तिन्नर्थात्' इति ङीषि साधुः ।

यथा वा—

'इदमप्रतिमं पश्य सरः सरसिजैर्वृतम् ।
सखे ! मा जल्प नारीणां नयनानि दहन्ति माम् ॥'

मर्मप्रकाशः

प्रत्यक्षानन्तरम् । अनुपसर्जनमिति । प्रधानमित्यर्थः । एवमलंकारत्वं निरस्य ध्वनित्वमुपपादयितुमाह—स्तनेति । स्वस्य स्मरणस्य । व्यङ्ग्यं च स्मरणमिति पूर्वत्रान्वयः । ङीषि साधुरिति यौतेः शत्रन्तात् ङीप्यपि साधुत्वं भवति । 'सर्वत—' इत्येतत्पर्यन्तानुधावनं

बालक्रीड़ा

लक्षण में निवेश कर देते हैं तब इसका भी संग्रह हो सकता है। यह एक विचार का मार्ग है ।

अब यहाँ इसकी ध्वनि, को बतलाते हैं जैसे यह स्तवकों से झुकी हुई लताओं से मनोहर वनान्तराल सदैव सेव्य है। अगर ये स्तनभारवाली युवतियाँ मन को हरण न कर लेवें ।

यहाँ स्तवकानत लताओं से स्तनभारवती युवतियों का स्मरण अन्य अलंकार्य के अभाव में अनुपसर्जन है। जो स्मरण स्तन और स्तबक रूप बिम्वप्रतिबिम्ब भावापन्न साधारण धर्म के वाच्य होने पर भी साधारण धर्म प्रयोजित सादृश्यमूलक स्व (स्मरण) के शब्द वाच्य नहीं होने से व्यंग्य है। प्रश्न युवति शब्द का प्रथमा का बहुवचन युवतय बनता है युवत्यः कैसे बना ।

उत्तर—युवत्यः यह पद( सर्वतोऽक्तिन्नर्थात्) इस वार्तिक से ङीष् होने पर दीर्घ ईकारान्त युवती शब्द के प्रथमा के बहुवचन में साधु है : और भी जैसे—हे सखे ? कमलों से भरे हुए इस अप्रतिम तलाव को जरा देखो। सखा उत्तर देता है हे सखे ? मत बोलो। औरतों के नयन मुझे जलाते हैं ।

अत्रापि सरसिजज्ञानाधीनतत्सदृशनयनस्मृतिः प्राधान्येन ध्वन्यते ।

अथास्मिन्स्मरणालंकारे उपमादोषाः प्रायशः सर्व एव दोषाः । विशेषतश्च नियमेनास्मिन् व्यज्यमानसादृश्यके सादृश्यस्य शब्दवाच्यतायां दोषः ।

यथा—

'उपकारमस्य साधोर्नैवाहं विस्मरामि जलदस्य ।
दृष्टेन येन सहसा निवेद्यते नवघनश्यामः ॥'

अत्र स्मृत्यैव घनसादृश्यं भगवतः प्रतीयमानं वाच्यवृत्त्या कदर्थितं निवेद्यते । देवकीतनय इति तु साधुः ।

अत्र सादृश्यप्रयोजकस्य साधारणधर्मस्य साक्षादुपादानानुपादानयोरुपमायामिऽव व्यवस्था । तथा हि उपमायां तावत्क्वचिद्धर्मो नियमेन प्रतीयमानः साक्षान्नोपादेय एव । यथा 'शङ्खवत्पाण्डुरच्छविः' इत्यत्र

मर्मप्रकाशः

व्यर्थं दुष्टं चेति प्रपञ्चितमन्यत्र । अत्रापि स्मरणालंकारेऽपि । व्यज्येति । अर्थात् प्रतीयमानसादृश्यक इत्यर्थः । अत्र स्मरणालंकारे । अस्योपादानादावेवान्वयः । दानयोः सतोरिति शेषः । स्पष्टत्वाय पुनरुक्तिः । प्रतीयमानो गम्यमानः । साक्षादुपमानोपमेयविशेषणत्वेन । यथेति । उपमेयविशेषणच्छविविशेषणतयोपस्थितपाण्डुरत्वस्यैव प्रत्यासत्त्या तत्र

बालक्रीड़ा

यहाँ पर भी सरसिज के ज्ञान के द्वारा सरसिज सदृश नयन की स्मृति प्रधानतया ध्वनित होती है ।

इसके बाद इस स्मरण अलंकार में प्रायः वे सब दोष है जो दोष उपमा में कहे हैं । विशेष रूप से दोष यह है कि इस स्मरण अलंकार में इव यथा आदि शब्दों के अभाव में सादृश्य नियम से व्यज्यमान ही रहता है । इस अवस्या में सादृश्य को शब्द से कह दिया जाय तो दोष ही है । जैसे

इस साधु परोपकारी जलद के उपकार को मैं नहीं भूल सकता हूँ । जिसके देखने मात्र से नवघन के सदृश श्याम कृष्ण प्रतीत हो जाते हैं ।

यहाँ स्मरण से ही घन का सादृश्य भगवान् में प्रतीत होता है उसको फिर वाच्य वृत्ति से कदर्थित करके निवेदन करना दोष है अतः देवकीतनय पाठ ठीक है ।

यहाँ (अत्र कहने के बाद फिर अत्रापि कहना पुनरुक्ति दोष है । वैयर्थ्य भी है) सादृश्य प्रयोजक साधारण धर्म के साक्षात् उपादान या अनुपादान के विषय में उपमा की तरह व्यवस्था है । जैसे उपमा में कहीं पर जो धर्म नियमेन प्रतीयमान है वहीं उस प्रतीयमान धर्म का साक्षात् उपादान नहीं होता है । जैसे "शंखवच्छविमानयम् ।" शंख की तरह

पाण्डुरत्वम् । 'शङ्खवत्पाण्डुरोऽयम्' इत्यादौ तु नानाविधेषु धर्मेष्वनेनैव धर्मेण सादृश्यमित्यस्य दुरवगमत्वात् । सर्वत्रोपमानोपमेयसाधारणस्य श्लिष्टशब्दात्मकस्यान्यस्य वा स्वानभिप्रेतस्य साधारणधर्मस्योपमाप्रयोजकत्वसंभवात्तद्वारणाय पाण्डुरत्वादिधर्मो वाच्यतां नीयते । यथा वा 'अरविन्दमिव सुन्दरं मुखम्' इत्यादौ सुन्दरत्वादिः । न नीयते च क्वचित् । वक्तुरन्यस्यानुपस्थानात्प्रसिद्धेः प्राबल्यात् । यथा 'अरविन्दमिव मुखम्' इत्यादौ स एव । अप्रसिद्धश्च धर्मोऽवश्यं साक्षादुपादेयः । अन्यथा तस्याप्रतिपत्तौ कवेस्तदुपमानिर्माणप्रयासवैयर्थ्यापत्तेः । यथा 'नीरदा इव ते भान्ति बलाकाराजिता भटाः' इत्यादौ श्लिष्टशब्दात्मकः । इत्थं च कश्चित्सा-

## मर्मप्रकाश

गम्यमानत्वादिति भावः । ननु धर्मान्तरस्योपमाप्रयोजकत्वाभावदनेनैव सादृश्यं स्ववगतमत आह—सर्वत्रेति । अस्य द्वितीयमुदाहरणं विशेषं वक्तुमाह—यथा वेति । न नीयते चेति । वाच्यतामित्यस्यानुषङ्गः । अनुपस्थितौ हेतुमाह—प्रसिद्धेरिति । स एवेति । सुन्दरत्वादिरित्यर्थः । बलाकाराजिता इति । बलाका बकपङ्क्तिस्तया राजिताः । बलाकाराभ्यामजिता इत्यर्थः । उपसंहरति—इत्थं चेति । यथोपमायामिति शेषः । जीवातुर्जीवनौषधम् : तत्र

## बालक्रीड़ा

छविवाला है । यहाँ पाण्डुरत्व धर्म नियमेन प्रतीत होता है अतः पाण्डुरत्व का साक्षात् उपादान नहीं किया है । और शंखवत् पाण्डुरोऽयम् में तो नानाप्रकार के धर्मों में इसी धर्म से सादृश्य है यह जानना मुश्किल है और सभी स्थलों में उपमान तथा उपमेय में श्लिष्ट शब्द रूप या और कोई अनभीष्ट साधारण धर्म उपमा का प्रयोजक हो सकता है उस दोष को वारण करने के लिए पाण्डुरत्वादि धर्म को वाच्य कर देते हैं । जैसे अरविन्दमिव सुन्दरं मुखम् इस वाक्य में सुन्दरत्व धर्म को वाच्य कर दिया है । अन्यथा अरविन्दमिव विमलं मुखम् । इत्यादि रूप में विमलत्वरूप अनभीष्ट धर्म उपमा का प्रयोजक हो सकता है । कभी २ साधारण धर्म को वाच्य नहीं भी करते हैं जहाँ पर वक्ता ने अन्य किसी धर्म का उपस्थापन नहीं किया है और प्रसिद्धि प्रबल है । यहाँ वक्तुः यह षष्ठी कर्तृकर्मणोः कृति के द्वारा कर्त्ता में हैं । पहले रस्व इस प्रकरण में भी (नाश्यश्च तन्नाशस्य) तन्नाशेन नाश्यः की जगह पर तन्नाशस्य षष्ठी की है । अस्तु । जैसे "अरविन्दमिव मुखम्" में वही सुन्दरत्व धर्म साक्षात् उपात्त नहीं है । प्रसिद्धि ही इसका कारण है ।

अप्रसिद्ध धर्म का तो अवश्य ही साक्षात् उपादान करना चाहिए । अन्यथा उस धर्म के प्रतीत नहीं होने पर कवि का वैसी उपमा के निर्माण करने का प्रयास ही व्यर्थ हो जायगा। जैसे बल और आकार से अजेय योद्धा बलाका बकपंक्ति से राजित शोभित मेघ की तरह मालम पड़ते हैं । यहाँ श्लिष्ट शब्द ही साधारण धर्म है ।

इस प्रकार कोई साधारण साक्षात् अनुपादेय ही है । कहीं पर उपादेय एवं अनु-

धारणो धर्मः साक्षादनुपादेय एव कश्चिदुपादेयानुपादेयएवकश्चिदुपादेय एवेति सहृदयसंमतः समयः। एवमेवोपमाजीवातुकेऽस्मिन्स्मरणालंकारेऽपि बोध्यम्। तत्रानुगामिनि धर्मे 'स्मृत्यारूढं भवति किमपि' इत्यादौ पद्ये निवेदितमेव स्मरणम्। बिम्बप्रतिबिम्बभावापन्नेऽपि धर्मे 'भुजभ्रमितपट्टिश—'इत्यादि पद्ये निरूपितम्। कुलिशपट्टिशयोर्भूधरदन्तावलयोश्च बिम्बप्रतिबिम्ब-भावात्।

उपचरितं यथा—

'क्वचिदपि कार्ये मृदुलं, क्वापि च कठिनं विलोक्य हृदयं ते।
को न स्मरति नराधिप ? नवनीतं किं च शतकोटिम्॥'

यथा वा—

'अगाधं परितः पूर्णमालोक्य स महार्णवम्।
हृदयं रामभद्रस्य सस्मार पवनात्मजः॥'

अत्र मृदुलत्वादयो धर्मा हृद्युपचरिताः। इयांस्तु विशेषः—यदेकत्रा-

मर्मप्रकाशः

अनुपादेयादिधर्माणां मध्ये। स्मृत्यारूढमिति। अत्रानुगामी श्यामत्वधर्मोऽनुपात्तः। निरूपितं स्मरणमित्यस्यानुषङ्गः। एवमग्रेऽपि। अत्रोक्तहेतोस्तस्योपादानमित्याह—कुलिशेति। स पवनात्मज इत्यन्वयः। अत्रानयोः। आदिना कठिनत्वागाधत्वादिपरिग्रहः। द्वितीयो-

बालक्रीड़ा

पादेय दोनों परिस्थितियाँ हैं कहीं पर उपादेय ही है। यह सहृदय सम्मत समय है आचार है। इस उपमा की कहानी की तरह उपमा प्राणात्मा इस स्मरणालंकार की भी कहानी को समझिये। उसमें अनुगामी धर्म के स्थल "स्मृत्यारूढ़ं भवति किमपि" इस पद्य में स्मरण का निवेदन कर ही दिया है। इसमें कृष्ण और जलद का श्यामत्व धर्म अनुपात्त है। विम्ब प्रतिविम्ब भावापन्न धर्म के स्थल "भुजभ्रमित पट्टिश" इस पद्य में स्मरण का निरूपण कर दिया है। यहाँ कुलिश और पट्टिश का तथा भूधर एवं दन्तावल का विम्ब प्रतिविम्ब भाव है।

उपचरित लाक्षणिक धर्म स्थल में जैसे—हे नराधिप ? किसी कार्य में कोमल तथा किसी कार्य में कठिन तुम्हारे हृदय को देख कर कौन नहीं मक्खन एवं वज्र को याद करता है।

यहाँ नवनीत की कोमलता एवं वज्र की कठोरता का हृदय में उपचार है।

और भी जैसे—उन हनुमान जी को रामचन्द्र का हृदय याद पड़ गया जब कि उन्होंने परितः भरे हुए एवं अगाध महार्णव को देखा।

यहाँ पूर्णत्व एवं अगाधत्व धर्म उपचरित हैं। इन दोनों उदाहरणों में यह विशेषता है कि पहले में अनुभूयमान हृदय में स्मर्यमाण नवनीतादि के सादृश्य की सिद्धि है। दूसरे

नुभूयमाने हृदये स्मर्यमाणनवनीतादेः सादृश्यस्य सिद्धिः, अपरत्र तु स्मर्यमाणे हृदयेऽनुभूयमानसमुद्रस्येति। सादृश्यस्योभयाश्रयत्वात्।

केवलशब्दात्मके यथा

'ऋतुराजं भ्रमरहितं यदाहमाकर्णयामि नियमेन।
आरोहति स्मृतिपथं तदैव भगवान्मुनिर्व्यासः॥'

अत्र भ्रमरहितशब्दो व्यासवसन्तयोः साधारणः। एवमन्येऽपि प्रभेदाः सुधीभिरुन्नेयाः। इह पुनर्दिङ्मात्रमुपदर्शितम्।

इति रसगङ्गाधरे स्मरणालंकारनिरूपणम्।

अथाभेदप्रधानेषु रूपकं तावन्निरूप्यते—

उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकम्। तदेवोपस्कारकत्वविशिष्टमलंकारः॥

उपमेयतावच्छेदकपुरस्कारेणेति विशेषणादपह्नुतिभ्रान्तिमदतिशयोक्तिनिदर्शनानां निरासः। अपह्नुतौ स्वेच्छया निषिध्यमानत्वात्, भ्रान्तिमति च

## मर्मप्रकाशः

दाहरणदाने बीजमह—इयानिति। एकत्र आद्ये। अपरत्र द्वितीये। समुद्रस्येतीति। सादृश्यस्य सिद्धिरित्यस्यानुषङ्गः। उभयाश्रयत्वादुभयनिरूप्यत्वात्। ऋतुराजं वसन्तम्। भ्रमराणां हितम्। नानापुष्पविकासद्वारा मधुप्रापकत्वात्। व्यासपक्षे भ्रमेण रहितमित्यर्थः। नियमेनेत्युत्तरान्वयी। इति स्मरणम्॥ इति रसगङ्गाधरमर्मप्रकाशे स्मरणालंकारनिरूपणम्॥

प्रधानेष्वलंकारेषु। एवं च पूर्वं भेदाभेदोभयप्रधाना निरूपिताः, इदानीं बह्वलंकारव्यापित्वेन प्रसिद्धतया प्राधान्येन च रूपकनिरूपणमितिभावः। उपमेयतावच्छेदकमात्रप्रकारकप्रतीतिजनकशब्दबोध्ये विषये इत्यर्थः। तेनातिशयोक्तौ चन्द्रादिपदान्मुखत्वादिना मुखोपस्थिति-

## बालक्रीड़ा

में स्मर्यमाण हृदय में प्रत्यक्ष देखकर अनुभूयमान समुद्र के सादृश्य की सिद्धि है। क्योंकि सादृश्य के आश्रय दोनो हैं।

केवल शब्द रूप धर्म जैसे—जब मैं भ्रमरों के लिए हितकारी वसन्त को सुनता हूँ तभी नियमेन भ्रम से रहित भगवान् व्यासमुनि मेरे स्मृति पथ में आरोहण करते हैं।

यहाँ भ्रमरहित शब्द व्यास और वसन्त के लिए समान है। ऐसे अन्य भेदों को सुधी लोग समझें। यह केवल मार्ग प्रदर्शन किया है।

इति बाल क्रीडा में स्मरणालंकार समाप्त हुआ।

तज्जनकदोषेणैव प्रतिबध्यमानत्वात्, अतिशयोक्ति(निदर्शनयोश्च?) साध्यवसानलक्षणामूलकत्वात्, उपमेयतावच्छेदकस्य नास्ति पुरस्कारः। शब्दादिति

### मर्मप्रकाश

रिति मतेऽपि नातिव्याप्तिरिति बोध्यम्। तज्जनकेति। भ्रान्तिजनकेत्यर्थः। उपमेयतेति।

### मधुसूदनी

अथ भेदाभेदप्रधानानामुपमादिस्मरणान्तानामलंकाराणां निरूपणानन्तरमभेदप्रधानानां तेषां निरूपणावसर इति तेषु च आरोपाध्यवसायगर्भानलंकारान्निरूपयिष्यन् अभेदे हि आरोपापेक्षया अध्यवसायः प्रकृष्यते इति पूर्वापरीभावेऽपि पूर्वं गौणसारोपामूलं रूपकं निरूप्यते। उपेति। उपमेये उपमानतादात्म्यं रूपकमित्यन्वयः उपमेयविशेष्यकोपमानाभेदस्यैव रूपकत्वप्रसिद्धेः। मुखं चन्द्र इत्यत्र मुखत्वस्य उपमेयतावच्छेदकस्य पुरस्कारेण स्वीकारेण उपस्थिते मुखे उपमेये शब्दात् मुखं चन्द्र इत्युच्चारणविषयीभूतान् निश्चीयमानमाहार्यनिश्चयगोचरीक्रियमाणमुपमानतादात्म्यं चन्द्राभेदो रूपकम्।

निषिध्येति। उपमेयतावच्छेदकस्य नायं सुधांशुरितिरीत्या निषिध्यमानत्वान्न तत्पुरस्कारेण उपमेयोपस्थितिरिति भावः। तज्जनकदोषेण भ्रान्तिजनकदोषेण एव प्रतिबध्यमानत्वात् उपमेयतावच्छेदकप्रकारकोपमेयभानाभावात्। अतिशयोक्तौ

### बालक्रीड़ा

अब यहाँ से अभेदप्रधान अलंकारों में रूपक का निरूपण करते हैं। उपमेयतावच्छेदक अर्थात् मुखत्व रूप से उपस्थित उपमेय मुख में शब्द से जो उपमान के तादात्म्य अभेद का निश्चय होता है उसे रूपक कहते हैं। वही अभेद किसी का उपस्कारक सजानेवाला हो जाय तब अलंकार कहाता है।

यहां लक्षण में पांच विशेषण दिये हैं उनका क्रमशः फल बतलाते हैं। उपमेयतावच्छेदक का पुरस्कार इस विशेषण से अपन्हुति भ्रान्तिमान् एवं अतिशयोक्ति का निरास हो गया। क्योंकि इनमें उपमेयतावच्छेदक का पुरस्करण नहीं है। उसका हेतु है कि अपन्हुति में स्वेच्छा से उपमेय का निषेध किया जाता है। तब उपमेयतावच्छेदक का सुतरां निषेध किया गया। भ्रान्तिमान् में भ्रान्ति जनक दोष से ही वह उपमेय प्रतिबद्ध हो जाता है। अतिशयोक्ति में साध्यवसाना लक्षणा होती है अतः उपमानतावच्छेदक चन्द्रत्व के द्वारा मुख की उपस्थिति होती है। एक मत है कि चन्द्र पद ही लक्षणा के द्वारा मुखत्वेन मुख का उपस्थापक होता है उस मत में भी चन्द्र रूप अर्थ का ही पुरस्कार है। अतः अतिव्याप्ति नहीं है। निदर्शना में साध्यवसाना लक्षणा मूल है यह चिन्तनीय है।

शब्दात् इस विशेषण से निदर्शना का निरास हो गया। क्योंकि निदर्शना में आर्थ ही अभेद होता है। उपात्तयोरर्थयोरार्थाभेदो निदर्शना। यह उसका लक्षण है। और यहां रूपक में शाब्द भी अभेद होता है। जब कि एक देशविवर्ती रूपक में (शाब्दा आर्थश्च

विशेषणात् 'मुखमिदं चन्द्रः' इति प्रात्यक्षिकाहार्यनिश्चयगोचरचन्द्रतादात्म्य-व्यवच्छेदः। निश्चीयमानमिति विशेषणात्संभावनात्मनो 'नूनं मुखं चन्द्रः' इत्याद्युत्प्रेक्षाया व्यावृत्तिः। उपमानोपमेयविशेषणाभ्यां सादृश्यलाभात्

## बालक्रीडा

मध्यमणिन्यायेनोभयत्रान्वयोऽस्य। संभावनात्मनस्तद्रूपायाः उत्प्रेक्षाया वस्तूत्प्रेक्षायाः। उपमानोपमेयेति। एतद्रूपविशेषणाभ्यामित्यर्थः। उपमानत्वोपमेयत्वयोः सादृश्यनियत-

## मधुसूदनी

चन्द्रोऽयमित्यत्र साध्यवसानलक्षणामूलकत्वेन विषयस्य मुखस्य निगरणात् इदन्त्वेन मुखत्वरूपोपमेयतावच्छेदकस्योपस्थितेरभावात्। न तत्पुरस्कारः।

न च उपमेयतावच्छेदकमुखत्वप्रकारकमुखप्रतीत्यभावेऽपि इदंपदोपस्थिते मुखे चन्द्रतादात्म्यं प्रतीयत एवेति वाच्यम्। अत्र उपमेयतावच्छकमुखत्वादिधर्मितावच्छेदके चन्द्रतादात्म्यं न, अपितु उपमेयतावच्छेदकेदन्त्वादिधर्मितावच्छेदके चन्द्रतादात्म्यम्।

प्रात्यक्षिकेति। प्रात्यक्षिकाहार्यनिश्चयोऽत्र नापेक्षितोऽपितु शाब्दिकः सेति तत्त्वम्।

व्यावृत्तिरिति। सम्भावनारूपायामुत्प्रेक्षायामुपमानतादात्म्यकोटेरेवोत्कट-त्वमध्यवसायगर्भत्वात्। रूपके तु आरोपगर्भतया भिन्नयोः सामानाधिकरण्येन निर्देशात्समकोटिकतया उत्कटत्वादिरूपविशेषविरह इति भावः। सादृश्यलाभादिति।

## बालक्रीड़ा

ते यस्मिन्नेकदेशविवर्त्ति तत्) इस लक्षण के अनुसार शाब्द एवं आर्थ दोनों होते हैं। वहां निदर्शना में आर्थाभेद भी उपमान एवं उपमेय में परस्पर में होता है। और यहाँ रूपक में केवल उपमेय में उपमान का अभेद होता है। अतः उपमेयतावच्छेदकपुरस्कारेण पद से निदर्शना का निरास हो गया यह लेख सम्पातायात समझना चाहिए।

यह एक फल हुआ। दूसरा फल ग्रन्थकार लिखते हैं कि शब्दात् इस विशेयण से (प्रत्यक्ष में ग्लोब या मैप पृथ्वी के गोलाकार चित्र में एशिया, यूरोप और अमेरिका आदि का जो आहार्य अभेद निश्चय होता है उसका व्यवच्छेद हो गया। यहाँ शाब्द ही आहार्य अभेद निश्चय का ग्रहण करना है।

निश्चीयमान विशेषण से संभावनास्वरूप उत्प्रेक्षा की व्यावृत्ति हो गई। क्योंकि उत्प्रेक्षा में निश्चय नहीं है। संभावना भर है।

उपमेय में उपमान का अभेद रूपक होता है इस तरह उपमेय और उपमान इन दो विशेषणों से सादृश्य का लाभ हो गया। क्योंकि उपमेयत्व और उपमानत्व सादृश्य मूलक ही होता है। अतः सादृश्येतर मूलक शुद्ध सारोपाविषयक अभेदका निरास हो गया। जिसके

'सुखं मनोरमा रामा इत्यादिशुद्धारोपविषयतादात्म्यनिरासः। सादृश्य-मूलकमेव च तादात्म्यं रूपकमामनन्ति।

तथा चाहुः—

'तद्रूपकमभेदो य उपमानोपमेययोः।'

'उपमैव तिरोभूतभेदा रूपकमुच्यते।' इति।

तच्च यत्र विषयविषयिणोरेकविभक्त्यन्तत्वेन निर्देशस्तत्र संसर्गः, अन्यत्र तु शब्दार्थतया क्वचिद्विशेषणं विशेष्यं चेति विवेचयिष्यते।

यत्तु सादृश्यप्रयुक्तः संबन्धान्तरप्रयुक्तो वा यावान्भिन्नयोः सामानाधि-

मर्मप्रकाशः

त्वादिति भावः। आहुरिति। मम्मटभट्टादय इत्यर्थः। अत्रार्धं मम्मटीयम्। अर्धमन्यदीयम्। तथा च भिन्नं लक्षणद्वयमिदम्। तच्चेति। उक्तरूपतादात्म्यं चेत्यर्थः। संसर्ग इति। अपदार्थत्वादिति भावः। विनिगमकाभावादाह—क्वचिदिति। भिन्नयोरिति।

मधुसूदनी

उपमानत्वमुपमेयत्वं सादृश्यमूलमित्यभिमान इति तत्त्वम्। गौणसारोपग्रहणमत्र विवक्षितम्। शुद्धसारोपविषयस्य तादात्म्यस्य निरास इत्युक्तेः।

आहुः तद्रूपकमिति मम्मटार्याः। उपमैवेति दण्डिनः। तच्च सादृश्यमूलकं तादात्म्यं च भिन्नयोः सामानाधिकरण्येन एकविभक्त्यन्तत्वेन यत्र निर्देशः तत्र संसर्गः आकांक्षादिभास्यः। अन्यत्र यत्र तयोः वैयधिकण्येन निर्देशः, यथा-याताः कणादतां केचिदपरे विन्ध्यवासिताम्। शवराचार्यतामन्ये शास्त्रकारास्तवारयः"। द्विर्भावः पुष्पकेतोरित्यादिषु तत्र तादात्म्यस्य शब्दार्थत्वम्।

यत्त्विति रत्नाकरोक्तमालोचयितुं प्रवर्त्तते। रत्नाकरे तस्माद् दुराग्रह एवाऽयं प्राचामित्यादिं न दृश्यते। तदक्षराणि तु।

बालक्रीड़ा

फल स्वरूप "सत्यं मनोरमा रामा" इत्यादि में रूपक नहीं है। इसलिए सादृश्य मूलक ही तादात्म्य को रूपक कहते हैं जैसा कि कहा है—

वह रूपक है जो उपमान का उपमेय में अभेद है। यह मम्मट सम्मत पथ है। जिसमें से भेद का तिरोधान हो जाता है वह उपमा ही रूपक कहलाती है। दण्डि सम्मत पथ है।

वह अभेद जहाँ विषय एवं विषयी में एक विभक्ति का निर्देश है वहां संसर्ग है आकांक्षादि भास्य सम्बन्ध है। और जहां उपमान उपमेय में समान विभक्तियां नहीं है वहाँ वह अभेद किसी भी शब्द का अर्थ है अतः कहीं पर वह विशेषण होगा और कहीं पर वह विशेष्य होगा। इसकी विवेचना आगे करेंगे।

जो तो रत्नाकर ने कहा कि चाहे सादृश्य प्रयुक्त हो या सम्बन्धान्तर प्रयुक्त हो

करण्यनिर्देशः स सर्वोऽपि रूपकम्। सारोपलक्षणामूलकत्वस्य तुल्यत्वेन सादृश्यप्रयुक्तस्य तादात्म्यस्येव संबन्धान्तरप्रयुक्तस्यापि तादात्म्यस्य संग्रहीतुमौचित्यात्। तस्मात् "दुराग्रह एवायं प्राचाम्—'उपमानोपमेययोरभेदो रूपकम्, न तु कार्यकारणयोः" इति रत्नाकरेणोक्तं तन्न। अपह्नुत्यादौ भिन्नयोः सामानाधिकरण्यस्य सत्त्वात्तत्रातिव्याप्तेः। किं च सादृश्यमूलकं

## मर्मप्रकाशः

न तूपमानोपमेययोरित्यर्थः। किं चेति। यत इति शेषः।

## मधुसूदनी

"इहान्ये सादृश्यनिमित्त एवारोपो रूपकं न सम्बन्धान्तरनिमित्तकोऽपि। तेन सम्बन्धान्तरपूर्वक आरोपो वैचित्र्यमात्रं नत्वलंकारः कश्चिदिति मन्यन्ते" इति। अतएव आरोपो रूपकमिति सामान्येन सूत्रितम्। न च सादृश्यमित्यनुषक्तम्। इति च।

तुल्यत्वेनेति। उभयप्रयुक्ते तादृशनिर्देशे सारोपा लक्षणा मूलं तुल्यम्। तन्न यद् रत्नाकरेण उक्तं तन्, न। कुत इत्याह-अपह्नुत्यादौ अतिव्याप्तेः। अत्र हेतुमाह-भिन्नयोरुपमेयोपमानाभ्यामतिरिक्तयोः न तु उपमेयोपमानयोरेव सामानाधिकण्यस्य सत्वात्।

अत्र चोद्यम् नन्वपह्नुतौ कार्यकारणयोः सामानाधिकरण्यस्य सत्ता कस्य मतेन प्रोच्यते। न च स्वमतेनेति वाच्यम्। तत्रापन्हुतेर्द्वौ भागौ उपमेयनिषेधः उपमानारोपश्चेत्येवमपन्हुतौ निषिध्यमानस्य उपमेयत्वम्। आरोप्यमाणस्य उपमानत्वं ब्रुवता भवता अपन्हुतिः सादृश्यस्थले एव स्वीक्रियते न तु कार्यकारणभावादिघटितस्थलेऽपि। अतः रत्नाकरोक्तं ज्यायः। भवन्मते अपह्नुतौ तयोः सामानाधिकरण्यस्य असत्वान्नातिव्याप्तिरिति।

अत्र खिन्नः सन् पक्षान्तरमाह-किंचेति।

## बालक्रीड़ा

जितना भी भिन्न २ पदार्थों का सामानाधिकरण्येन निर्देश है वह सभी रूपक है। क्योंकि सारोपालक्षणा समान रूप से दोनों के मूल में है अतः सादृश्य से होने वाले तादात्म्य के संग्रह की तरह सम्वन्वान्तर से होनेवाले तादात्म्य का भी संग्रह करना उचित है। इसलिए प्राचीनों का यह दुराग्रह ही है कि उपमान एवं उपमेय का ही अभेद रूपक है कार्य कारण का अभेद रूपक नहीं है। वह सब ठीक नहीं हैं।

क्यों कि भिन्न पदार्थों के किसी भी कारण से होनेवाले सामानाधिकरण्य को लेंगे तो अपन्हुति में रहने वाले सामानाधिकरण्य को भी लेना होगा तब तो लक्षण की अति व्याप्ति हो जायगी। और भी वात है कि "सादृश्य मूलक स्मरण ही स्मरणालंकार है चिन्तादि मूलक वह अलंकार नहीं है" इस वात को आपही ने पूर्व में कहा है। उसमें

स्मरणं स्मरणालंकारः, न तु चिन्तादिमूलम्' इति भवतैव पूर्वमुदितम्। तत्र यदि सादृश्यामूलकस्यापि कार्यकारणादिकयोः कल्पितस्य तादृूप्यस्य रूपकत्वमभ्युपेयते तदा सादृश्यामूलकस्य चिन्तादिमूलकस्य स्मरणस्याप्यलंकारत्वमभ्युपेयताम्। न च स्मरणस्य भावत्वमुच्यमानं निर्विषयं स्यादिति वाच्यम्। तस्य व्यज्यमानविषयत्वेनोपपत्तेः।

अप्पय्यदीक्षितास्तु—

'विम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते।
उपरञ्जकतामेति विषयी रूपकं तदा॥'

## मर्मप्रकाश

निर्विषयमिति। सर्वस्यैवालंकारत्वेन तदन्यत्वाभावादिति भावः। व्यज्यमानेति। व्यज्यमानस्मरणविषयत्वेनेत्यर्थः। नखरत्नानामिति रूपकम्। विम्बेति। अयं भावः—यथा चन्द्रः स्वतः शुभ्रत्वादनासञ्जनीयधावल्यस्तथा नखाः स्वतोऽरुणत्वादनासञ्जनीयारुण्या इति

## मधुसूदनी

ननु भावस्य व्यज्यमानस्मरणविषयत्वेन उपपत्तेः स्वीकारे व्यज्यमानं स्मरणं भावः, उच्यमानं स्मरणमलंकारस्तर्हि स्मरणालंकारध्वनिर्निर्विषयः स्यात्। यतस्तत्र स्मरणालंकारस्य व्यज्यमानविषयत्वमेव। तस्मादुभयमपि भवदुक्तमसमीचीनम्। "अप्पय्यदीक्षितास्तु"इति विवेचयितुमाह-विम्वेन अविशिष्टे इति। विषयस्य अस्मात्प्रथमविशेषणात् त्वत्पादेत्यत्रत्याया निदर्शनालंकृतेर्निरासः। यत् स्वत अरुणानां नखानां मार्जनमलक्तकेन, तत् स्वतः शुभ्रस्य विधोः श्रीखण्डस्य चन्दनस्य लेपेन पाण्डुरीकरणमिति दिशा विषयस्य मार्जनस्य अलक्तकरूपबिम्वविशिष्टत्वम्। विषयिणः पाण्डुरीकरणस्य चन्दनरूपप्रतिविम्बविशिष्टत्वम्।

## वालक्रीड़ा

यदि कार्य कारण में रहने वाले सादृश्य मूलक कल्पित सादृप्य को भी रूपक मान लेंगे तव सादृश्य मूलकेतर चिन्तादिमूलक स्मरण को भी अलंकार मान लीजिए। यह आप कह नहीं सकते कि सादृश्य असादृश्य चिन्तादि यावन्मूलक स्मरण को अलंकार मान लेंगे क्योंकि स्मरण को जो भाव भी कहा जाता है वह निर्विषय होजायगा अर्थात् सभी स्मरण अलंकार कहलायेगा तव उससे अलग वचा क्या जिसे भाव कहेंगे। क्योंकि व्यज्यमान स्मरण को भाव कहेंगे और अव्यज्यमान को अलंकार कहेंगे। (पण्डितानां राजा) राजपण्डित का सह कहना जमा नहीं। यदि व्यज्यमान स्मरण को भाव कहेंगे तो स्मरणध्वनि भी तो व्यज्यमान है वह भी व्यभिचारी भाव कहलायेगा। यह दूसरे तरह की अतिव्याप्ति हो गई, उपपत्ति नहीं हुई।

अप्पयच दीक्षित जी ने तो कहा है कि यदि जहाँ विम्व प्रतिविम्वभाव नहीं रहे, और विषय जहाँ अनिन्हुत याने छिपा न रहकर स्पष्ट निर्दिष्ट हो। ऐसी स्थिति में जव विषयी

अत्र बिम्बाविशिष्ट इति विषयविशेषणात्

'त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥'

इति निदर्शनाया निरासः। तत्र विषयस्य मार्जनस्यालक्तकादिरूपबिम्ब-विशिष्टत्वात्। निर्दिष्ट इति विशेषणान्निगीर्णविषयायाम् 'कमलमनम्भसि' कमले च कुवलये, तानि कनकलतिकायाम्' इत्याद्यतिशयोक्तौ नातिव्याप्तिः। अनिह्नुते निषेधास्पृष्ट इति विशेषणादपह्नुतौ नातिव्याप्तिः। उपरञ्जकता-माहार्यताद्रूप्यनिश्चयगोचरतामेतीत्यनेन ससंदेहोत्प्रेक्षासमासोक्तिपरिणाम-

## मर्मप्रकाश

सादृश्येन नखानां चन्द्रस्य च बिम्वप्रतिविम्बभावः अलक्तकचन्दनयोरन्यत्र स्ववर्णासञ्जकत्वेन सः। तथा च बिम्बप्रतिबिम्बभावापन्ननखालक्तकविशिष्ट एव रञ्जने तत्प्रतिबिम्बभूत चन्द्रचन्दनविशिष्टं पाण्डुरीकरणमुपरञ्जकमिति। निर्दिष्ट इति। उच्चारित इत्यर्थः। तत्र

## मधुसूदनी

निर्दिष्टे उक्ते इति विषयविशेषणात् निगीर्णविषयायां कमलमित्यादौ मुखाद्युपस्थापकपदप्रयोगविरहितायां नातिव्याप्तिः। अपन्हुतौ मुखादेर्निषेधेन निह्नवात्। नातिप्रसक्तिः। उपरंजकताम् आहार्यविषयिताद्रूप्यनिश्चयगोचरताम्। तस्य भ्रमस्य आहार्यत्वविरहात्। इत्याहुस्तत् न सम्यक्। यदि अत्र त्वत्पादनखरत्नानामित्यत्र सत्यपि मुखं चन्द्र इत्यादि रूपके इव श्रौतारोपे इदं प्रागुक्तलक्षणलक्षितं रूपकं न, किन्तु निदर्शना। तर्हि रूपकलक्ष्यमपि मुखं चन्द्र इति निदर्शनालक्ष्यमुच्यताम्।

## मधुसूदनी

उपमान उपरञ्जक होजाय माने आहार्य ताद्रूप्य निश्चय का गोचर वनजाय तव रूपक होता है। यहां विम्ब से अविशिष्ट विषय को होना चाहिए इस तरह के कथन से "हे प्रिये ? तुम्हारे पैर के नखरूपी रत्नों को महावर से जो रंगना है वह चन्द्रमा को चन्दन के लेप से श्वेत करना है। इस निदर्शना का निराकरण हो गया। क्योंकि इसमें विषय उपमेय मार्जन; अललकादि रूप विम्ब से विशिष्ट ही है अविशिष्ट नहीं है। "निर्दिष्टे" इस विशेषण से निगीर्ण विषया "विना जल के कमल. फिर उस कमल में दो कुवलय, वे तीनों कनकलता में" इत्यादि अतिशयोक्ति में अतिव्याप्ति नहीं होगी। उपरंजकता को आहार्य ताद्रूप्य-निश्चयगोचरता को प्राप्त करता है इससे सन्देह, उत्प्रेक्षा, समासोक्ति तथा परिणाम में विषयों का ताद्रूप्य नहीं होता है। समासोक्ति में विषयी के व्यवहार का ही केवल समारोप होता है और परिणाम में विषयी में विषय का ताद्रूप्य होता है। भ्रान्तिमान् में वह ताद्रूप्य अनाहार्य होता है क्यों कि सत्य या कल्पित कैसा भी भ्रम रहे वहां प्रवृत्ति स्वारसिक ही

भ्रान्तिमत्स्वतिव्याप्तिनिरासः। ससंदेहोत्प्रेक्षयोर्निश्चयस्यैवाभावात्। समासोक्तिपरिणामयोर्विषयीताद्रूप्यस्यागोचरत्वात्। समासोक्तौ व्यवहारमात्रसमारोपात्। परिणामे चारोप्यमाणस्यैव विषयताद्रूप्यगोचरत्वात्। भ्रान्तिमति च सतः कल्पितस्य वा प्रवृत्त्यादिपर्यन्तिकस्वारसिकभ्रमस्यैव निबन्धनेन तस्यानाहार्यत्वात्।" इत्याहुः। तन्न। 'त्वत्पादनखरत्नानां' इत्यादिनिदर्शनाव्यावृत्त्यर्थं बिम्बाविशिष्टत्वं विषयविशेषणं तावदयुक्तमेव। यद्यत्र 'मुखं चन्द्रः' इत्यादिरूपकान्तर इव सत्यपि श्रौतारोपे नेदं रूपकमपि तु निदर्शनेत्युच्यते तदा 'मुखचन्द्रः' इत्यपि निदर्शनेत्युच्यताम्। निरस्यतां च रूपकदाक्षिण्यकौपीनम्।

### मर्मप्रकाशः

येन यस्य व्यावृत्तिस्तत्क्रमेणाह—ससमिति। अगोचरत्वे क्रमेण हेतू आह—समेति। अत्र त्वत्पादेत्यत्र। दाक्षिण्येति। रूपकमुखसंकोचरूपकौपीनमित्यर्थः। निर्लज्जत्वादिति भावः।

### मधुसूदनी

रूपकविषये यद् दाक्षिण्यमनुकूलत्वं कुशलत्वं वा तद्रूपं कौपीनमवगुण्ठनं निरस्यताम्। दक्षिणा गाथकाः कुशला गाथका इति सिद्धान्तकौमुदी। रूपकविषयेऽहं विज्ञ इति एवंरूपं यत् कौपीनं वेष्टनमावरणं तद् दूरीकुरु मूर्खत्वं प्रकाशयेत्यर्थः। बिम्बप्रतिबिम्बभावमापन्नैः पदार्थैः नखालक्तकचन्द्रचन्दनैर्घटितयोः युक्तयोः विशिष्टार्थयो वाक्यार्थयोरेव न तु पदार्थयोरत्र अभेदप्रतीतिः। अतः वाक्यार्थभेदप्रतीतौ वाक्यार्थनिदर्शना न तु पदार्थनिदर्शनेति तत्वम्।

### बालक्रीड़ा

होती है अतएव वहां प्रवृत्ति के स्वारसिक होने से भ्रम भी स्वारसिक माना जाता है। यह, ठीक नहीं है।

त्वत्पादनखरत्नानाम्" इत्यादि निदर्शना की व्यावृत्ति के लिए बिम्बाविशिष्टत्व विषय का विशेषण देना ठीक नहीं है। यदि यहाँ "त्वत्पादनखरत्नाम्" में "मुखं चन्द्रः" इत्यादि स्थल की तरह श्रौत आरोप के रहने पर भी रूपक नहीं है किन्तु निदर्शना है ऐसा कहते हैं तब "मुखं चन्द्रः" इसको भी निदर्शना कहिये। और रूपक के विषय में जो कुशलता रूप कौपीन है उसको हटा दीजिए। रूपक के बारे में मैं कुशल हूँ इस कौपीन को अर्थात् रूपक के विषय के अज्ञान को छिपाने वाले अभिमान को दूर करो मूर्खता को प्रकाशित करो। और भी बात है कि त्वत्पाद में पदार्थ निदर्शना है या वाक्यार्थनिदर्शना। उनमें पहली नहीं है। क्योंकि यहाँ बिम्ब प्रतिबिम्ब भावापन्न पदार्थों से घटित विशिष्ट अर्थों का अभेद प्रतीत होता है। कुवलयानन्द के निदर्शना प्रकरण में तुम्हारे कहने के अनुसार अन्यतर के धर्म भूत पदार्थं का भेदभाव से आरोप नही है। दूसरी भी नहीं है। क्योंकि ऐसा

किं च 'त्वत्पाद—' इत्यत्र किं पदार्थनिदर्शना आहोस्विद्वाक्यार्थनिदर्शना। नाद्यः। बिम्बप्रतिबिम्बभावापन्नपदार्थघटितविशिष्टार्थयोरेवात्राभेदप्रतीतेः। कुवलयानन्दगतनिदर्शनाप्रकरणे त्वयोक्तमार्गेण धर्मिणि अन्यतरस्मिन् पदार्थे अन्यतरधर्मस्य पदार्थस्य भेदेनारोपस्याभावाच्च। न द्वितीयः। वाक्यार्थरूपकोच्छित्त्यापत्तेः। इष्टापत्तौ वैपरीत्यस्य सुवचत्वाच्च। अस्माभिर्निदर्शनाप्रकरणे वक्ष्यमाणया सरण्या अभेदस्य श्रौतत्वार्थत्वाभ्यामुद्देश्यविधेयभावालिङ्गनानालिङ्गनाभ्यां च रूपकनिदर्शनयोर्वैलक्षण्येन सकलव्यवस्थोपपत्तेः। तस्मादत्र वाक्यार्थरूपकमेव, न वाक्यार्थनिदर्शना।

### मर्मप्रकाशः

विशिष्टार्थयोः वाक्यार्थयोः। त्वदुक्तपदार्थनिदर्शनालक्षणमपि नास्तीत्याह—कुवलयेति। वैपरीत्यस्य वाक्यार्थनिदर्शनोच्छित्तेः। स्वमते न कस्याप्युच्छेद इत्याह—अस्माभिरिति। श्रौतत्वेति। यथासंख्येनान्वयः। नन्वेवं तर्हि तस्याः किमुदाहरणमत आह—तस्याश्चेति।

### मधुसूदनी

इष्टापत्तौ वाक्यार्थरूपकस्योच्छित्तिर्भवतु इति स्वीकारे वैपरीत्यस्य वाक्यार्थनिदर्शनाया उच्छित्तिर्भवतु इति रूपकविरोधे सुवचत्वात्।

### बालक्रीड़ा

मानने पर वाक्यार्थरूपक ही उच्छिन्न हो जायगा। अगर कहें कि इष्टापत्ति है हो जाय वाक्यार्थरूपक का उच्छेद। तब उलटा भी कहा जा सकता है। अर्थात् वाक्यार्थ निदर्शना का ही उच्छेद हो जाय। इसकी अपेक्षा निदर्शना के प्रकरण में हम जिस सारणि को बतलायेंगे कि जहाँ अभेद श्रौत रहे और उद्देश्य विधेयभाव हो वह रूपक है और जहाँ अभेद आर्थ रहे और उद्देश्य विधेयभाव नहीं रहे वह निदर्शना है। इस सरणी की विलक्षणता से सकल व्यवस्था की उपपत्ति हो जायगी।

भगवन्! यह व्यवस्था या उपपत्ति नहीं हुई प्रत्युत अव्यवस्था बढ़ गई। जैसे रूपक में यह कोई नियम नहीं है कि श्रौत ही अभेद रहता है वहाँ आर्थ भी अभेद रहता है। श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत्' और निदर्शना में उद्देश्यविधेयभाव नहीं रहता है यह कहना अपदार्थ है अवस्तु है। आपही के उदाहरण में देखिये—

त्वत्पादनखरत्नानि यो रञ्जयति यावकैः।
इन्दुं चन्दनलेपेन पाण्डुरी कुरुते हि सः॥

यहां जो तुम्हारे पैंर के नखरत्नों को महावर से लाल करता है वह चन्द्रमा को चन्दन से श्वेत करता है। इस तरह जो लाल करता है वह श्वेत करता है। इस वाक्य में यच्छब्द से प्रतिपाद्य, वाक्य में पहले कहा हुआ और सिद्ध मालूम पड़ने वाला अंश उद्देश्य है। तथा तत् शब्द से प्रतिपाद्य, वाक्य में बाद में कहा हुआ और अपूर्व कहा गया अंश विधेय है। जैसा कि कुमारिल भट्ट के तन्त्रवार्तिक में कहा है—

तस्याश्चैवमुदाहरणं निर्माणीयम्—

'त्वत्पादनखरत्नानि यो रञ्जयति यावकैः ।
इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः ॥'

अत्र कर्त्रोरभेदस्य शाब्दत्वेऽपि क्रिययोरभेदस्याशाब्दत्वात्तस्यैव च समग्रभरसहिष्णुत्वान्निदर्शनैव । ननु यदीदमुदाहरणं निदर्शनायां न स्यात्तदा कथमलंकारसर्वस्वकृता तत्प्रकरण उदाहृतमिति चेत् , आम् , भ्रान्तेनैव प्रतारितोऽसि । नहि प्रमाणिकेन भवता कदापि परेणानुक्तं किंचिदुच्यते ।

### मर्मप्रकाशः

वाक्यार्थनिदर्शनाया इत्यर्थः । यावकैः अलक्तकरसैः । ननु कर्त्रोरभेदमादाय वाक्यार्थरूपकमेवास्त्वत्यत आह—तस्यैव चेति । क्रिययोरभेदस्यैव चेत्यर्थः । समग्रेति । मुख्यत्वादित्यर्थः ।

### मधुसूदनी

तस्या वाक्यार्थनिदर्शनाया इत्यर्थः । कर्त्रो यत्तदर्थयोः । क्रिययोः रञ्जयति पाण्डुरीकुरुते इत्यनयोः । तस्यैव क्रिययोरभेदस्यैव । समग्रेति वाक्यार्थयोः सदृशयोरित्युक्तस्य क्रिया वा कारकान्वितेति दिशा वाक्यलक्षणस्य क्रियायामेव समाप्तत्वादिति दिशा क्रिययोरभेद एव समग्रभारस्य निदर्शनास्वरूपस्य सहिष्णुः सम्पादक इति यावत् । आम् ओम् । स्वीकृतिं करोति । तेनैव अलंकारसर्वस्वकारेणैव प्रतारितो वञ्चितोऽसि । मूढः परप्रत्ययनेयबुद्धिरस्ति । इति भावः ।

### वालक्रीड़ा

यच्छब्दयोगः, प्राथम्यं, सिद्धत्वं चाप्यनूद्यता ।
तच्छब्दयोग, औत्तर्यं, साध्यत्वं च विधेयता ॥

अतः लाल करने वाले को उद्देश्य करके श्वेत करने वालों का विधान किया है । फलतः निदर्शना में उद्देश्य विधेय भाव का अनालिंगन हैं यह कथन निःसार है ।

उपसंहार करते हैं कि इसलिए यहां वाक्यार्थ रूपक ही है वाक्यार्थनिदर्शना नहीं है । इसका उदाहरण इस तरह बनाना चाहिए । "त्वत्पादनखनत्नानाम्" में कर्त्ता यत् एवं तत् में श्रौत अभद होने पर भी क्रिया रंजन एवं पाण्डुरीकरण में अभेद आर्थ ही है और वही समग्र भार को सहन करने वाला है अतः निदर्शना ही है ।

प्रश्न—यदि यह उदाहरण निदर्शना का नहीं होता तो अलंकारसर्वस्वकार निदर्शना के प्रकरण में इसको उदाहरण के रूप में कैसे लिखते । उत्तर । हां हां किसी भ्रान्त ही ने आपको ठगा है । आप तो स्वयं बड़े प्रामाणिक है । कभी भी किसी अंश को जब तक कोई दूसरा नहीं लिख दे या कह दे तव तक आप कुछ कहते सुनते नहीं । कौन जिम्मेदारी लेवें । उसने कहा है अतः हमने भी कह दिया है । अर्थात् अपनी सूझ बूझ कुछ नहीं है । और जो भी कहा कि रूपक में विम्बप्रतिविम्बभाव नहीं है वह भी भ्रान्ति से ही कहा है । क्योंकि अलंकारसर्वस्वकी टीका विमर्शिनी में रूपक का उदाहरण विम्बप्रतिविम्बभावापन्न लिखा है ।

यदपि रूपके बिम्बप्रतिबिम्बभावो नास्तीत्युक्तं तदपि भ्रान्त्यैव। तथा च सर्वस्वटीकायां विमर्शिन्यामुदाहृतं बिम्बप्रतिबिम्बभावेन रूपकम्—

'कंदर्पद्विपकर्णकम्बु मलिनैर्दानाम्बुभिर्लाञ्छितं
संलग्नाञ्जनकालिमकलं गण्डोपधानं रतेः।
व्योमानोकहपुष्पगुच्छमलिभिः संछाद्यमानोदरं
पश्यैतच्छशिनः सुधासहचरं बिम्बं कलङ्काङ्कितम्॥'

अत्र कलङ्कस्य दानाम्ब्वादिभिः प्रतिबिम्बनम्, लाञ्छितत्वाङ्कितत्वयोः

मर्मप्रकाश

इदं दीक्षितोक्तम्। भ्रान्तेनैवेति। भ्रान्तेनैवेति मुख्यः पाठः। कंदर्पद्विपेति। सर्वत्र

मधुसूदनी

कन्दर्पेति। कन्दर्प एव द्विपः। तस्य कर्णयोः कम्बु शंखः। मलिनैरसितैर्दानाम्बुभिर्मदजलैर्लाञ्छितम्। संलग्नः रतेर्गण्डोपधाने संक्रान्तो यो नेत्राञ्जनस्य कालिमा तेन कालिम्ना कलं रमणीयं रतेः गण्डोपाधानम् (राजस्थाने) गालमसूरियेति-ख्यातम्। अलिभिः सञ्छाद्यमानोदरम्। व्योम्नोऽनोकहस्य वृक्षस्य पुष्पस्य गुच्छम् स्तवकः। कलंकांकितमेतत् शशिनः सुधासहचरं बिम्बं मण्डलं पश्येत्यन्वयः।

अत्र बिम्बप्रतिबिम्बभावापन्ने शशिबिम्बे विषये कम्बुगण्डोपधानपुष्पगुच्छानां विषयिणामारोपः। तत्र शशिमण्डलरूपोपमेयधर्मस्य कलंकस्य बिम्बस्य दानाम्बु+अञ्जनालिभिः प्रतिबिम्बनम्। एवं शशिनो विषयस्य कलंकरूपबिम्बविशिष्टत्वमेव ततस्त्वदीयलक्षणोक्तस्य बिम्बाविशिष्टे इत्यस्य वैयर्थ्यम्। प्रकृते अयं श्लोकस्तथा तत्संगमार्थो वृत्तिश्च विमर्शिनीकारस्य अक्षरेषु। तत्र "अत्र कलंकस्य दानाम्ब्वादिभिः प्रतिबिम्बनम्" इत्येव प्रकृतोपयोगि। अन्यत् "लाञ्छितत्वांकितत्वयोः शुद्धसामान्यरूपत्वम्" इति न तथा। विमर्शिन्यां तदग्रे सुधासहचरत्वस्यानुगतत्वादनुगामितयेति भेदत्रयानुप्राणितत्वमित्यपि। तत्र लाञ्छितत्वांकितत्वयोर्न शुद्धसाधारणधर्मरूपत्वमपि तु वस्तुप्रतिभावापन्नधर्मरूपत्वं बोध्यम्।

बालक्रीड़ा

कामदेव रूपी हाथी के कान का शंख मलिन दानाम्बु से लाञ्छित है। आँखों के काजर की कालिमा के लगने से मनोहर यह रति का गालमसूरिया है। आकाशीय वृक्ष के पुष्पों का गुच्छा जो कि भौंरों से संच्छन्न है ढंका हुआ है। ऐसे इस पीयूष मय चन्द्रबिम्ब को जो कि कलंक से अंकित है देखो

यहां चन्द्रगत कलंक, बिम्ब स्थानीय है उसका प्रतिबिम्बन दानाम्बु, आँख के काजर एवं अलियों से किया है, लाञ्छितत्व, संलग्नत्व एवं संच्छन्नत्व का अंकितत्व के साथ वस्तु प्रतिवस्तु भाव है। इसको राजपण्डित जी ने शुद्धसामान्य रूप दिया है याने शुद्ध साधारण धर्म कहा है। वह ठीक नहीं है, छोड़िये।

शुद्धसामान्यरूपत्वमित्युक्तं चेत्यास्तां तावत्। तथा निर्दिष्टे शब्देनाभिहिते इत्यस्य येन केनचिद्रूपेण शब्देनाभिहित इत्यर्थः, उताहो उपमेयतावच्छेदक रूपेण शब्देनाभिहिते। आद्ये 'सुन्दरं कमलं भाति लतायामिदमद्भुतम्' इत्यत्रातिप्रसङ्गः। सुन्दरपदेन सुन्दरत्वेन रूपेण इदंपदेन च विषयस्याननस्य प्रतिपादनात्। न चात्र सुन्दरपदार्थस्यारोप्यमाणकमलान्वय एव, न तु वदनरूपविषयान्वय इति वाच्यम्। कमलपदेन कमलताद्रूप्येणाननस्यैव लक्षणयोपस्थानात्तत्रैव सुन्दरादिपदार्थान्वयो युक्तः, न तु विशेषणीभूते

## मर्मप्रकाशः

षष्ठीतत्पुरुषः। कम्बु शङ्खः। कलं रमणीयम्। अनोकहः वृक्षः शाखः। शुद्धसामान्येति। अनयोर्वस्तुप्रतिवस्तुभावापन्नत्वादिदं चिन्त्यम्। उक्तं चेति। चकार उदाहृतसमुच्चायकः। द्वितीयविशेषणं दूषयति—तथेति। उताहो अथवा। इत्यत्र रूपकातिशयोक्तिविषयेऽन्वय एवेति। तत एव चमत्कारात्सांनिध्याच्चेति भावः। रूपकातिशयोक्तिं ध्वनयितुमाह—कमलेति। तत्रैव आनन एव। न त्विति। पदार्थः पदार्थेनेति न्यायादिति भावः।

## मधुसूदनी

निर्दिष्टे इति। येन केनचिद्रूपेण यथाकथञ्चित् शब्देनाभिहिते इति वा अर्थः। अथवा उताहो। आद्ये प्रथमकल्पे सुन्दरं कमलमित्यतिशयोक्तौ अतिव्याप्तिः। येन केनचिद्रूपेण सुन्दरत्वेन रूपेण शब्देन इदं पदेन विषयस्याननस्याभिधानात्। सुन्दरं कमलमित्यत्रातिशयोक्तेरभावे रूपकस्यैव प्रसक्तिरिति भावः। आरोप्यमाणे कमले एव सुन्दरपदार्थस्य अन्वयः न तु आरोपविषये वदने तस्य अन्वय इति न च वाच्यम्। यतः कमलपदेन लक्षणया कमलताद्रूप्येण कमलत्वेन रूपेण आननस्यैव उपस्थापनम्। अतः आनने एव सुन्दरपदार्थस्य अन्वयः, पदार्थः पदार्थेन अन्वेति इति न्यायात्। न तु वदनविशेषणीभूते वदनपदार्थैकदेशे कमले अन्वयः।

## बालक्रीडा

और निर्दिष्टे माने शब्द से कहे गये। इसका क्या अर्थ है क्या जिस किसी शब्द से कहा गया या उपमेयतावच्छेदक का शब्द से। पहला मानने में 'लता में यह सुन्दर कमल कितना अद्भुत है' इसमें अतिव्याप्ति हो जायगी। यहाँ सुन्दर पद से सुन्दरत्व रूप से और इदं पद से विषय आनन का प्रतिपादन किया है। यह आप नहीं कह सकते हैं कि सुन्दर पदार्थ का आरोप्यमाण कमल के साथ अन्वय है, वदन रूप विषय के साथ नहीं है। क्योंकि कमल पद से लक्षणा के द्वारा कमल भिन्न आनन की उपस्थिति है अतः उसी में सुन्दर पदार्थ का अन्वय ठीक है। न कि विशेषणीभूत कमल में। अगर कहें कि यत्किञ्चित् शब्द से उपस्थापित विषय को उद्देश्य करके विषयी के ताद्रूप्य का विधान कहा

कमले। अथ तादृशं विषयमुद्दिश्य विषयितादूप्यं यत्र विधीयते इत्यपि लक्षणवाक्यार्थः। प्रकृते च सुन्दरत्वावच्छिन्नमुद्दिश्य कमलतादूप्यस्याविधानान्नातिप्रसङ्ग इति चेत्। न। 'मुखचन्द्रस्तु सुन्दरः' इत्यादि रूपके समासगतयोर्विषयविषयिणोः पृथग्विभक्तिमन्तरेणोद्देश्यविधेयभावाभावादव्याप्त्यापत्तेः। द्वितीये त्वनिह्नुत इति विशेषणवैयर्थ्यम्। अपह्नुतावुपमेयता-

## मर्मप्रकाश

तादृशं येन केनचिद्रूपेण शब्देनाभिहितम्। इत्यपि उद्देश्यविधेयभावघटितोऽपि। अविधानादिति। तादृशमाननमुद्दिश्य भानक्रियाया एव विधेयत्वादिति भावः। यद्वा सुन्दरत्वादेः कमलत्वादिविशिष्टे विशेषणत्वमेवोद्देश्यतावच्छेदकत्वम्। इयांस्तु विशेषः—यदतिशयोक्तावुपमेयधर्मस्योद्देश्यतावच्छेदकत्वाभाव एव। रूपके त्वनियम इतीति भावः। अत एवाह—मुखचन्द्रस्त्विवति। पृथगिति। उद्देश्यविधेयभावेन बोधे भिन्नविभक्तिजन्योपस्थितेस्तन्त्रत्वात्। तथा च व्यस्ते तथा प्रतीतिः, न समासे इत्यत्राव्याप्तिरिति भावः। ननूपमेयतावच्छेदकरूपेण शब्देनाभिहिते इति तदर्थेन न प्रागुक्तदोषोऽत आह—द्वितीये त्विति।

## मधुसूदनी

अथेति पक्षान्तरमुपन्यस्यति। तादृशं येन केनचिद्रूपेण शब्देन अभिहितं विषयं वदनमुद्दिश्य विषयिणः कमलस्य तादूप्यं यत्र विधीयते इत्यपि उद्देश्यविधेयभावघटितोऽपि रूपकलक्षणवाक्यार्थः स्वीक्रियते। प्रकृते सुन्दरं कमलमित्यत्र अतिशयक्तौ च सुन्दरत्वावच्छिन्नमाननमुद्दिश्य कमलतादूप्यं न विधीयते अपि तु सुन्दरमाननमुद्दिश्य भानक्रिया एव विधीयते। ततश्च अतिशयोक्तौ पदार्थयोरुद्देश्यविधेयभावो नास्ति, रूपके च सोऽस्ति किन्तु; प्रकृते तादृशोद्देश्यविधेयभावाभावान्न रूपकप्रसक्तिः। इति शंकापक्षः। उत्तरति। उद्देश्यविधेयभावबोधे पृथग्विभक्तिजन्योपस्थितेस्तन्त्रत्वात् मुखचन्द्रस्तु सुन्दर इति समस्तरूपके तयोः पृथग् विभक्त्यभावेन उद्देश्यविधेयभावो नास्ति अतो लक्षणस्याव्याप्तिः स्यात्।

द्वितीये तु उपमेयतावच्छेकरूपेण शब्देन अभिहिते इत्येवं निर्दिष्टे इत्यस्यार्थ

## बालक्रीड़ा

किया जाय यह उद्देश्यविधेयभावापन्न लक्षण वाक्य का अर्थ है और प्रकृत में सुन्दरत्वावच्छिन्न मुख को उद्देश्य करके कमल का विधान नहीं किया गया है। अतः अतिव्याप्ति नहीं है। यह भी ठीक नहीं है। क्योंकि यदि उद्देश्यविधेयभाव सम्पन्न अर्थों में ही रूपक होता है यह मानेंगे तो समास में जहां पदों में पृथग् २ विभक्तियां नहीं रहती है ऐसे "मुखचन्द्रस्तु सुन्दरः" रूपक में उद्देश्यविधेयभाव के अभाव में लक्षण की अव्याप्ति हो जायगी। क्योंकि वह भाव वाक्य में ही होता है।

दूसरे में तो "अनिह्नुते" इस विशेषण को व्यर्थ मानना पड़ेगा। क्योंकि अपह्नुति

वच्छेदकस्य । निषिध्यमानतया तेन रूपेण विषयस्यानिर्दिष्टत्वादेव लक्षणस्याप्रसक्तेः । निश्चयगताहार्यत्वविशेषणवैयर्थ्यं च । भ्रान्तिमति दोषविशेषेण प्रतिबध्यमानतया नास्त्युपमेयतावच्छेदकसंस्पर्श इति तावतैव वारणात् । अपि

## मर्मप्रकाश

अपह्नुतौ 'नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम्' इत्यत्र । अनिर्दिष्टत्वादेवेति ।

## मधुसूदनी

इति द्वितीयकल्पे तु । अनिन्हुते इति अपन्हुतिवारकविशेषणस्य वैयर्थ्यम् । अपन्हुतौ "उपमेयतावच्छेदकनिषेध सामानाधिकरण्येति लक्षणघटितायाम् अवच्छेद्यस्य मुखस्य निषेधात् उपमेयतावच्छेदकरूपेण मुखस्य विषयस्य शब्देनानभिधानात् । एव । अपह्नुतिलक्षणस्य अप्रसक्तिरनतिव्याप्तिः ।

अत्र चोद्यम् । यदा अपह्नुतौ पण्डितराजकृतलक्षणेन उपमेयतावच्छेदकनिषेधेतिरूपेण उपमेयतावच्छेदकस्य निषेधः क्रियते । निषेधश्च तत्र प्राप्तौ सत्यां भवति । तदा उपमेयतावच्छेदकरूपेण विषयस्य निर्देशः प्राप्त एवातोऽतिव्याप्तिर्जागर्त्येव । तर्हि तेन रूपेण विषयस्यानिर्दिष्टत्वादेव लक्षणस्याप्रासक्तेरिति किम् ।

अन्यच्च यर्हि तेन रूपेण विषयस्यानिर्देशस्तर्हि सुधांशौ सुधांशुत्वस्य निन्हवोऽनुपदं वक्ष्यमाणः कथं संगच्छेत । यतः सुधांशुत्वेन उपस्थितिरेव न स्वीक्रियते । इति च ।

निश्चये आहार्यत्वविशेषणस्य वैयर्थ्यम् । अयं भावः । विशेषणदाने कोऽपि लाभो न । यतो रूपके अलंकारे अहार्यं ताद्रूप्यज्ञानं मे जायतामित्याहार्यविशेषणमुपन्यासि। ततश्च उपमेयतावच्छेदकरूपेण शब्देनाभिहिते विषये इत्यर्थस्वीकारे भ्रान्तिमति दोषविशेषेण तथाभिधानस्य प्रतिबध्यमानतया उपमेयतावच्छेदकस्य स्पर्शो नास्ति । इति हेतोर्निर्दिष्टे इति विशेषणेनैव वारणसंभवात् ।

## बालक्रीड़ा

में उपमेयतावच्छेदक का निषेध किया जाता है अतः उपमेयतावच्छेक रूप से विषय का निर्देश है ही नहीं तब लक्षण की अप्रसक्ति अव्याप्ति कैसे होगी । इसके सिवाय निश्चय आहार्य ही हो यह कहना भी व्यर्थ होगा । क्योंकि मुखत्वेन मुखका ज्ञान भ्रान्तिमान् में भ्रान्तिजनक दोष से कट जाता है अतः उपमेयतावच्छेदक का स्पर्श ही नहीं है । इस तरह निर्दिष्टे का दूसरा अर्थ मान लेने से ही वारण हो जाता है । और भी बात है कि यह सुधांशु नहीं है । तब सुधांशु कौन है ? प्रश्न । प्रेयसी का मुख सुधांशु है उत्तर । इस कुवलयानन्द में तुम्हारे कहे हुए अपह्नुति के उदाहरण में रूपक का लक्षण चला जायगा । क्योंकि यहां सुधांशु में सुधांशुत्व के छिपा देने पर भी आरोप के विषय सुधांशु का अपह्नव नहीं किया है । अतः अपह्नुति नहीं है । यदि कहें कि यह रूपक ही है तब भी ठीक नहीं है । तुमने इस को अपह्नुति लिखा है । अपने कथन का अपने से निषेध करना होगा ।

च 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इति कुवलयानन्दे त्वयोक्तायामपह्नुतावतिप्रसङ्गः। अत्र सुधांशौ सुधांशुत्वनिह्नवेऽप्यारोपविषयस्यानिह्नवात्। न चेदं रूपकमेवेति वाच्यम्। त्वदुक्तिविरोधापत्तेः। यच्चाप्युक्तमव्यङ्ग्यत्वविशेषणाच्चेदमेवालंकारभूतस्य रूपकस्य लक्षणमिति, तदपि न।

### मर्मप्रकाशः

अत्र निषेधप्रतियोगिविधया निर्दिष्टत्वादिदं चिन्त्यम्। न च तथा निर्दिष्टत्वेपि पुरस्काराभावः। तर्हि तावत्पर्यन्तविवक्षाबोधनार्थमेवानिह्नुते इति विशेषणसाफल्यादिति बोध्यम्। तावतैव उक्तार्थकनिर्दिष्टे इति विशेषणेनैव। इदं चिन्त्यम्। आहार्यत्वविशेषणस्य निर्दिष्टे इति विशेषणलब्धार्थकथनतात्पर्यकत्वात्। अतिशयोक्तौ लक्षणामाहात्म्याज्जायमानज्ञानस्यानाहार्यस्यैव जायमानत्वेन तावतैव वारणात् शक्यतावच्छेदकलक्ष्यतावच्छेदकयोर्भानमिति। त्वल्लिखितमतान्तरेऽपि युगपदेवोभयोर्भानेन बाधस्यैवानुपस्थितत्वान्न तद्बुद्धेराहार्यत्वम्। किं च चन्द्रवृत्तिगुणवत्त्वलक्ष्यतावच्छेदकस्य चन्द्रत्वस्य च मिथो विरोधाभावेन न बाधप्रतिसंधानम्। मुखत्वेन मुखं लक्ष्यत इति त्वश्रद्धेयमेव। रूपके तु बाधस्य स्फुटमुपस्थितत्वेन साक्षाद्व्यञ्जनया वा जायमाना ताद्रूप्यप्रतिपत्तिराहार्यैवेति दीक्षिताशय इति दिक्। अपह्नुतौ पर्यस्तापह्नुतौ। विषयस्य सुधांशोः। इदमपि चिन्त्यम्। उपमेयोपमादीनां वैचित्र्यविशेषेणालंकारान्तरत्ववदिहाप्युपपत्तेः। मतान्तरेऽप्यभेदादिकृते चमत्कारे रूपकम्, निह्नवादिकृते तस्मिंस्तु सेति विषयविभागसंभवात्। चमत्कारित्वास्यालंकारसामान्यलक्षणप्राप्तत्वात्समुदितस्यालंकारत्वेनांशे रूपकत्वे इष्टापत्तेश्चेति दिक्। चित्रमीमांसायामप्पदीक्षितोक्तमन्यदपि खण्डयति—यच्चापीति। इदमेव प्रागुक्तं रूपकलक्षणमेव। नन्वेवं

### मधुसूदनी

नायं सुधांशुरिति दिशा इदमर्थे सुधांशौ सुधांशुत्वस्य निन्ह्वेऽपि; सुधांशुः प्रेयसीमुखम् इत्येवमारोपविषयस्य सुधांशोरनिन्ह्वात्। त्वदुक्तेः "अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः" इत्येवंरूपस्य विरोधस्यापत्तेः।

### बालक्रीड़ा

और भी जो आपने चित्रमीमांसा में कहा है कि इसीमें अव्यंग्यत्व विशेषण के विन्यास कर देने से यही अलंकारभूत रूपक का लक्षण है वह भी ठीक नहीं है। क्योंकि व्यंग्यत्व और अलंकारत्व का विरोध नहीं है। प्रधानरूप से व्यक्त होनेवाले रूपक के वारण करने के लिये तो उपस्कारकत्व विशेषण उचित है यह कई वार कह दिया गया है। एक बात और भी है जैसे प्रधानव्यंग्य रूपक अलंकार नहीं है वैसे ही प्रधानवाच्य रूपक भी अलंकार नहीं है अतः अनलंकार होने से दोनों वारणीय हैं। तव जैसे प्रधानव्यंग्य रूपक के वारण करने के लिए विशेषण देते हैं उसी तरह प्रधानवाच्य रूपक के कारण करने के लिए भी विशेषण देना चाहिए इसी के अभाव से उक्तरूपक में लक्षण की अतिव्याप्ति हो जायगी। हमारे मत में तो उपस्कारकत्व विशेषण से दोनों का वारण हो जायगा।

नहि व्यङ्ग्यत्वालंकारत्वयोर्विरोधोऽस्ति। प्रधानव्यङ्ग्यरूपकवारणाय पुनरुपस्कारकत्वं विशेषणमुचितमित्यसकृदावेदनात्। अनलंकारत्वस्य तुल्यतया प्रधानव्यङ्ग्यरूपकस्येव प्रधानवाच्यरूपकस्यापि वारणीयत्वेन तद्वारकविशेषणाभावेन तत्रापि प्रसङ्गाच्च। यच्च 'तद्रूपकमभेदो य उपमानोपमेययोः' इत्यादि प्राचीनैरुक्तं तच्चिन्त्यम्। अपह्नुत्यादावुपमानोपमेययोरभेदस्य प्रतीतिसिद्धतया तत्रातिप्रसङ्गात्। अथोपमानोपमेययोरित्युक्त्या उपमेयतावच्छेदकं पुरस्कृत्योपमानतावच्छेदकावच्छिन्नाभेद इत्यर्थलाभादपह्नुतौ चोपमेयता-

## मर्मप्रकाशः

कथमतिप्रसङ्गनिरासोऽत आह—प्रधानेति। नन्वेवमपि विनिगमनाविरहात्तथोक्तिरत आह—अनलमिति। मन्मते तु तेनैवोभयोर्वारणमिति भावः। प्रकाशोक्तिं खण्डयति—

## मधुसूदनी

अनलंकारत्वस्य तुल्यतयेति। अलंकार्यत्वात् यथा प्रधानतया व्यंग्ये रूपकेऽनलंकारत्वम्। तथा व्यंग्ये गुणे, वाच्ये प्रधाने रूपकेऽपि प्रधानत्वादनलंकारत्वम्। एवमुभयत्र अनलंकारत्वस्य तुल्यतया यथा प्रधानव्यंग्यस्य वारणाय अव्यंग्यत्वं विशेषणमुपन्यस्तं तथा प्रधानवाच्यरूपकस्य वारणाय विशेषणस्य उपन्यासोऽत्यावश्यकः। एवं तत्र प्रधानवाच्यरूपके लक्षणप्रसक्तेर्वारकस्य विशेषणस्य अभावेन अतिप्रसंगाच्च नेदं लक्षणं निर्दुष्टम्। इति। तत्र अपन्हुतिप्रभृतौ। अतिप्रसंगाद् रूपकस्येति शेषः। तथापि तथार्थस्वीकारेण अपन्हुतावतिप्रसक्त्यभावेऽपि।

## बालक्रीड़ा

और भी जो प्राचीनों ने कहा है कि "रूपक वह है जहां उपमान एवं उपमेय में अभेद हो" वह चिन्त्य है। अपह्नुति में उपमान एवं उपमेय का अभेद प्रतीति सिद्ध है अतः उसमें अतिव्याप्ति हो जायगी। अगर कहें कि उपमानोपमेय का अभेद इसका अर्थ है उपमेयतावच्छेदक को पुरस्कृत करके उपस्थित उपमेय में उपमानतावच्छेद का अभेद। इसका फल है कि अपह्नुति में उपमेयतावच्छेदक का पुरस्कार नहीं होने से अतिप्रसक्ति नहीं हुई। यह ठीक नहीं है। क्योंकि ऐसा अर्थ मानने पर भी अपह्नुति से दोष हटकर "नूनं मुखं चन्द्रः" इस उत्प्रेक्षा नें अतिप्रसंग हो गया। इस पर कहना है कि प्रकृत में अप्रकृत के अभेद रूप रूपक की प्रकृत का निषेध करके अप्रकृत की अपह्नुति और प्रकृतकी अपकृत के साथ संभावनरूप उत्प्रेक्षा वाधिका हैं अतः इन दोनों से स्वीकृत विषय से अतिरिक्त 'मुखचन्द्र इत्यादि रूपक का विषय होगा। अतः कोई आपत्ति नहीं है। जैसे और भी स्थलों में देखिये" क्षत्रियों के विवाहादि में कुशकण्डिका में वेदि के परिस्तरण के लिए वर्हिस्तोम शरमय हींता है फलतः इसके अतिरिक्त स्थल ब्राह्मणादि के विवाह में कुशमय वर्हि होता है। और भी जैसे व्याकरण में च्लि के स्थान में जहां शलन्त इगुपध एवं अनिट् होगा वहां क्स

वच्छेदकस्य पुरस्काराभावान्नातिप्रसङ्ग इति चेत्। न। 'नूनं मुखं चन्द्रः' इत्याद्युत्प्रेक्षायां तथाप्यतिप्रसक्तेः। न च—

'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः।'

'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्।'

इत्याद्यपह्नुत्युत्प्रेक्षादीनां बाधकत्वात्तत्परिगृहीतविषयातिरिक्तो रूपकस्य 'मुखं चन्द्रः' इत्यादिर्विषयः स्यात्। यथा 'शरमयं बर्हिः' इत्येतद्विषयातिरिक्तः 'कुशमयं बर्हिः' इत्यस्य। यथा वा क्सादेशविषयातिरिक्तो विषयः सिचः। लोकेऽपि यथा ब्राह्मणेभ्यो दधि देयम्, तक्रं कौडिन्याय इत्यत्र तक्रसंप्रदा-

### मर्मप्रकाशः

यच्चेति। तथापि उक्तार्थाङ्गीकारेऽपि। अत्र तस्य पुरस्कारोऽस्तीति भावः। नूनं मुखं चन्द्र इति। अत्र गमकाभावात्तदुभयं न। तत्र जैमिनीयं दृष्टांतमाह—यथा शरेति। आभिचारिके कर्मणि विशेषविहितमिदम्। व्याकरणोक्तं तमाह—यथा वा क्सेति। 'शल इग्—' इति विहितः। ग्राहयत् न त्वग्राहयत्। तस्यैव तद्बीजत्वत्। धर्मः अभेदत्वरूपः।

### मधुसूदनी

सत्यपि अभेदे अपन्हुतौ अपन्हवो रूपकस्य बाधकः; उत्प्रेक्षायां संभावनं तस्य बाधकं; ततश्च अपन्हुत्युत्प्रेक्षाभ्यां परिगृहीताभेदरूपविषयातिरिक्तोऽभेदः रूपकस्य मुखं चन्द्र इत्यादेर्विषयः।

शरः क्षत्रियया ग्राह्य इत्युक्तेः क्षत्रियया विवाहे अग्निपरिस्तरणार्थं बर्हिः शरमयं ग्राह्यम्। क्षत्रिययेति विशेषवचनात् शरमयबर्हिर्ग्रहणविषयातिरिक्तः "कुशमयं बर्हिः" इत्यस्य विषयः।

क्सेति। सेटः च्लेः सिच्। अनिटः च्लेः व-सः इति "शलः इगुपधादनिटः व-सः" इति सूत्रेण अनिट इति निर्देशात्। व-सादेशस्य विषयात् अनिटः च्लेः सकाशादतिरिक्तः सिचो विषयः।

### बालक्रीड़ा

होगा। वहां का सूत्र है शलः इगुपधादनिटः क्सः। फलतः इस से अतिरिक्त स्थल में सिच् होता है। लोक में भी जैसे ब्राह्मणों को दधि दिया जाय किन्तु कौण्डिन्य को तक्र। यहां पर तक्र सम्प्रदान से अतिरिक्त को दधि का सम्प्रदान होता है यह भी ठीक नहीं है। क्योंकि पहले तो यह वाक्य ही अशुद्ध है। इसके स्थान में ये दो तरह के वाक्य होने चाहिए। या तो ब्राह्मणों को दही दिया जाय और ब्राह्मणके अतिरिक्त को तक्र। या फिर कौण्डिन्य को तक्र दिया जाय और कौण्डिन्य से अतिरिक्त को दही। ब्राह्मणेभ्यो दधि दीयताम्। तदितरेभ्यस्तक्रम्। कौण्डिन्याय तक्रं दीयताम्, कौण्डिन्येतरेभ्यो दधि। दूसरे यहां दृष्टान्त और दार्ष्टान्तिक में वैषम्य है भेद है।

नातिरिक्तं दध्नः संप्रदानमिति वाच्यम् । वैषम्यात् । विशेषशास्त्रं हि स्वविषयातिरिक्तं विषयं ग्राहयत्सामान्यशास्त्रस्य बाधकमित्युच्यते । प्रकृते च रूपकस्य लक्षणं धर्मः । स यद्युत्प्रेक्षादिवृत्तिः स्यात् । कस्तमस्माद्विषयान्निरस्य विषयान्तरं ग्राहयेत् । नहि घटत्वं स्वाधिकरणात्पृथिवीत्वं द्रव्यत्वं

## मधुसूदनी

वैषम्यादिति । शास्त्रे लोके च यो बाध्यबाधकभावो निर्दिष्टः सोऽलंकारेषु न घटते स्थितेर्वैषम्यादिति सारम् । सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् । इति नयेन विशेषशास्त्रं बलवदपवादः । सामान्यशास्त्रमुत्सर्गः । तत्र द्वितीयो न्यायः प्रकल्प्य चापवादविषयमुत्सर्गोऽभिनिविशते इति । अयं बोधयति यद् दुर्बलः संधित्सुर्भवति । अतो दुर्बलमुत्सर्गशास्त्रं बलवदपवादशास्त्रस्य कृते विषयं (अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैरित्युक्तेः) प्रकल्पयति । अयं तव विषयस्तदतिरिक्तो ममेति । परं पण्डितराजः कथयति विशेषशास्त्रं (बलवत्) स्वविषयातिरिक्तं विषयं ग्राहयत् सामान्यशास्त्रस्य (दुर्बलस्य) बाधकमुच्यते इति ।

रूपकस्य अभेदा लक्षणं धर्मः । असाधारणधर्मो हि लक्षणमिति सिद्धान्तात् । स धर्मः अभेदः । तं धर्ममभेदम् । अस्माद्विषयादुत्प्रेक्षादिरूपात् ।

नहि घटत्वमिति । अत्र चोद्यम् । घटत्वं सुवर्णघटत्वं स्वस्य सुवर्णघटत्वस्य अधिकरणात् सुवर्णघटात् सुवर्णस्य तेजस्त्वात् पृथिवीत्वं निरस्य विषयान्तरं

## बालक्रीड़ा

नियम है कि सामान्य शास्त्र से विशेष शास्त्र बलवान् होता है । सामान्य शास्त्रतो नूनं विशेषो बलवान् भवेत् । अपवाद शास्त्र के स्थल की कल्पना करके अर्थात् उसके विषय को छोड़कर उत्सर्ग शास्त्र प्रवृत्त होता है । प्रकल्प्य चापवादविषयमुत्सर्गोऽभिनिविशते । इसमें उत्सर्ग सामान्य होता है और अपवाद विशेष होता है । अतः विशेष के लिए स्थान की कल्पना करके उत्सर्ग प्रवृत्त होता है। किन्तु राजपण्डित कहते हैं कि विशेषशास्त्र अपने विषय से अतिरिक्त विषय को ग्रहण कराता हुआ सामान्य शास्त्र का बाधक होता है। याने सामान्य शास्त्र के लिए विषय का निर्देश कराकर विशेषशास्त्र प्रवृत्त होता हैं । अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः । जैसे अपवादों के द्वारा उत्सर्गों का व्यावर्तन कर दिया जाता है वैसे ही दुश्मनों ने उनका व्यावर्त्तन कर दिया। प्रकृत में समन्वय करते हैं। (असाधारणधर्मो हि लक्षणम्) वस्तु का असाधारण धर्म ही उसका लक्षण होता है। प्रकृत में रूपक का असाधारण धर्म अभेद है। वह अभेद यदि उत्प्रेक्षा एवं अपह्नुति में भी रहेगा तो कौन उस अभेद को इस अपह्नूयमान एवं उत्प्रेक्ष्यमाण विषयों से हटाकर विषयन्तर का ग्रहण करा सकता है। घटत्व अपने अधिकरण घट से पृथिवीत्व या द्रव्यत्व को हटाकर विषयान्तर को ग्रहण कराने में समर्थ नहीं हो सकता है। इसलिए अतिव्याप्ति इस लक्षण में दोष है।

किन्तु भगवन् ! राजपण्डित ? घटत्व सभी घटों में रहेगा। अतः सुवर्णघट में भी रहेगा। जहाँ घटत्व से सुवर्ण घटत्व को लेते हैं। वहाँ घटत्व अपने अधिकरण सुवर्ण घट

वच्छेदकस्य पुरस्काराभावान्नातिप्रसङ्ग इति चेत्। न। 'नूनं मुखं चन्द्रः' इत्याद्युत्प्रेक्षायां तथाप्यतिप्रसक्तेः। न च—

'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः।'

'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्।'

इत्याद्यपह्नुत्युत्प्रेक्षादीनां बाधकत्वात्तत्परिगृहीतविषयातिरिक्तो रूपकस्य 'मुखं चन्द्रः' इत्यादिर्विषयः स्यात्। यथा 'शरमयं बर्हिः' इत्येतद्विषयातिरिक्तः 'कुशमयं बर्हिः' इत्यस्य। यथा वा क्सादेशविषयातिरिक्तो विषयः सिचः। लोकेऽपि यथा ब्राह्मणेभ्यो दधि देयम्, तक्रं कौडिन्याय इत्यत्र तक्रसंप्रदा-

## मर्मप्रकाशः

यच्चेति। तथापि उक्तार्थाङ्गीकारेऽपि। अत्र तस्य पुरस्कारोऽस्तीति भावः। नूनं मुखं चन्द्र इति। अत्र गमकाभावात्तदुभयं न। तत्र जैमिनीयं दृष्टांतमाह—यथा शरेति। आभिचारिके कर्मणि विशेषविहितमिदम्। व्याकरणोक्तं तमाह—यथा वा क्सेति। 'शल इग्—' इति विहितः। ग्राहयत् न त्वग्राहयत्। तस्यैव तद्बीजत्वत्। धर्मः अभेदत्वरूपः।

## मधुसूदनी

सत्यपि अभेदे अपन्हुतौ अपन्ह्वो रूपकस्य बाधकः; उत्प्रेक्षायां संभावनं तस्य बाधकं; ततश्च अपन्हुत्युत्प्रेक्षाभ्यां परिगृहीताभेदरूपविषयातिरिक्तोऽभेदः रूपकस्य मुखं चन्द्र इत्यादेर्विषयः।

शरः क्षत्रियया ग्राह्य इत्युक्तेः क्षत्रियया विवाहे अग्निपरिस्तरणार्थं बर्हिः शरमयं ग्राह्यम्। क्षत्रियेयेति विशेषवचनात् शरमयबर्हिर्ग्रहणविषयातिरिक्तः "कुशमयं बर्हिः" इत्यस्य विषयः।

क्सेति। सेटः च्लेः सिच्। अनिटः च्लेः व-सः इति "शलः इगुपधादनिटः व-सः" इति सूत्रेण अनिट इति निर्देशात्। व-सादेशस्य विषयात् अनिटः च्लेः सकाशादतिरिक्तः सिचो विषयः।

## बालक्रीड़ा

होगा। वहां का सूत्र है शलेः इगुपधादनिटः क्सः। फलतः इस से अतिरिक्त स्थल में सिच् होता है। लोक में भी जैसे ब्राह्मणों को दधि दिया जाय किन्तु कौण्डिन्य को तक्र। यहां पर तक्र सम्प्रदान से अतिरिक्त को दधि का सम्प्रदान होता है यह भी ठीक नहीं है। क्योंकि पहले तो यह वाक्य ही अशुद्ध है। इसके स्थान में ये दो तरह के वाक्य होने चाहिए। या तो ब्राह्मणों को दही दिया जाय और ब्राह्मणके अतिरिक्त को तक्र। या फिर कौण्डिन्य को तक्र दिया जाय और कौण्डिन्य से अतिरिक्त को दही। ब्राह्मणेभ्यो दधि दीयताम्। तदितरेभ्यस्तक्रम्। कौण्डिन्याय तक्रं दीयताम्, कौण्डिन्येतरेभ्यो दधि। दूसरे यहां दृष्टान्त और दार्ष्टान्तिक में वैषम्य है भेद है।

नातिरिक्तं दध्नः संप्रदानमिति वाच्यम् । वैषम्यात् । विशेषशास्त्रं हि स्वविषयातिरिक्तं विषयं ग्राहयत्सामान्यशास्त्रस्य बाधकमित्युच्यते । प्रकृते च रूपकस्य लक्षणं धर्मः । स यद्युत्प्रेक्षादिवृत्तिः स्यात् । कस्तमस्माद्विषयान्निरस्य विषयान्तरं ग्राहयेत् । नहि घटत्वं स्वाधिकरणात्पृथिवीत्वं द्रव्यत्वं

### मधुसूदनी

वैषम्यादिति । शास्त्रे लोके च यो बाध्यबाधकभावो निर्दिष्टः सोऽलंकारेषु न घटते स्थितेर्वैषम्यादिति सारम् । सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् । इति नयेन विशेषशास्त्रं बलवदपवादः । सामान्यशास्त्रमुत्सर्गः । तत्र द्वितीयो न्यायः प्रकल्प्य चापवादविषयमुत्सर्गोऽभिनिविशते इति । अयं बोधयति यद् दुर्बलः संधित्सुर्भवति । अतो दुर्बलमुत्सर्गशास्त्रं बलवदपवादशास्त्रस्य कृते विषयं (अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैरित्युक्तेः) प्रकल्पयति । अयं तव विषयस्तदतिरिक्तो ममेति । परं पण्डितराजः कथयति विशेषशास्त्रं (बलवत्) स्वविषयातिरिक्तं विषयं ग्राहयत् सामान्यशास्त्रस्य (दुर्बलस्य) बाधकमुच्यते इति ।

रूपकस्य अभेदो लक्षणं धर्मः । असाधारणधर्मो हि लक्षणमिति सिद्धान्तात् । स धर्मः अभेदः । तं धर्ममभेदम् । अस्माद्विषयादुत्प्रेक्षादिरूपात् ।

नहि घटत्वमिति । अत्र चोद्यम् । घटत्वं सुवर्णघटत्वं स्वस्य सुवर्णघटत्वस्य अधिकरणात् सुवर्णघटात् सुवर्णस्य तेजस्त्वात् पृथिवीत्वं निरस्य विषयान्तरं

### बालक्रीड़ा

नियम है कि सामान्य शास्त्र से विशेष शास्त्र बलवान् होता है । सामान्य शास्त्रतो नूनं विशेषो बलवान् भवेत् । अपवाद शास्त्र के स्थल की कल्पना करके अर्थात् उसके विषय को छोड़कर उत्सर्ग शास्त्र प्रवृत्त होता है । प्रकल्प्य चापवादविषयमुत्सर्गोऽभिनिविशते । इसमें उत्सर्ग सामान्य होता है और अपवाद विशेष होता है । अतः विशेष के लिए स्थान की कल्पना करके उत्सर्ग प्रवृत्त होता है । किन्तु राजपण्डित कहते हैं कि विशेषशास्त्र अपने विषय से अतिरिक्त विषय को ग्रहण कराता हुआ सामान्य शास्त्र का बाधक होता है । याने सामान्य शास्त्र के लिए विषय का निर्देश कराकर विशेषशास्त्र प्रवृत्त होता हैं । अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः । जैसे अपवादों के द्वारा उत्सर्गों का व्यावर्तन कर दिया जाता है वैसे ही दुश्मनों ने उनका व्यावर्त्तन कर दिया । प्रकृत में समन्वय करते हैं । (असाधारणधर्मो हि लक्षणम्) वस्तु का असाधारण धर्म ही उसका लक्षण होता है । प्रकृत में रूपक का असाधारण धर्म अभेद है । वह अभेद यदि उत्प्रेक्षा एवं अपह्नुति में भी रहेगा तो कौन उस अभेद को इस अपह्नूयमान एवं उत्प्रेक्ष्यमाण विषयों से हटाकर विषयन्तर का ग्रहण करा सकता है । घटत्व अपने अधिकरण घट से पृथिवीत्व या द्रव्यत्व को हटाकर विषयान्तर को ग्रहण कराने में समर्थ नहीं हो सकता है । इसलिए अतिव्याप्ति इस लक्षण में दोष है ।

किन्तु भगवन् ! राजपण्डित ? घटत्व सभी घटों में रहेगा । अतः सुवर्णघट में भी रहेगा । जहाँ घटत्व से सुवर्ण घटत्व को लेते हैं । वहाँ घटत्व अपने अधिकरण सुवर्ण घट

वा निरस्य विषयान्तरं ग्राहयितुमोष्टे । तस्मादतिप्रसक्तिर्लक्षणेऽस्मिन्दोषः । ननु संभावनात्मिकोत्प्रेक्षा, कथं तस्यामभेदत्वात्मकरूपकलक्षणातिप्रसक्तिरिति चेत् । न । विनिगमकाभावेन संभाव्यमानाभेदस्याप्युत्प्रेक्षास्वरूपत्वात् । विषयसंभावनाभ्यामुत्प्रेक्षायामलंकारद्वयव्यवहारापत्तेश्च । निश्चीयमानत्वेनाभेदो विशेषणीय इति चेदस्मदुक्त एव तर्हि पर्यवसितिरिति दिक् ।

## मर्मप्रकाशः

संभावनैवोत्प्रेक्षेति पक्षे आह—विषयेति । अलंकारद्वयेति । रूपकोत्प्रेक्षेतीत्यर्थः । नहि

## मधुसूदनी

पार्थिवघटरूपं ग्राहयितुमीष्टे । एवमेव मृन्मयो घट इतिवत् स्नेहमयो घट इत्यपि भवति । ततश्च घटत्वं स्नेहमयघटत्वं स्वस्य स्नेहमयघटत्वस्य अधिकरणात् स्नेहमयघटात् स्नेहस्य गुणत्वात् मृद्घटत्वं निरस्य पार्थिवघटरूपं विषयान्तरं ग्राहयितुमीष्टे एव, नहि ग्राहयितुमीष्टे इति कथम् । ननु अभेदो रूपकलक्षणात्मकः चेदुत्प्रेक्षादिवृत्तिः कस्तमस्मान् निरस्यतीति रीत्या सम्भावनमथोत्प्रेक्षेति रीत्या च संभावनारूढोऽभेद अथवा अभेदाधिबला संभावनोत्प्रेक्षा इति लक्षणं पर्यवसितम् । ततश्च विषयसंभावना इत्येकोऽलंकारः । विषयाभेद इति द्वितीयोऽलंकार इत्येवमलंकारद्वयापत्तिः कथं पण्डितराजः समुवादेति चोद्यमेव ।

ननु दीक्षितैराहार्यताद्रूप्यनिश्चयगोचरतामेतीत्यनेन दिशा निश्चीयमानमाहार्यताद्रूप्यमित्युक्तमेव यतः निश्चीयमानमाहार्यताद्रूप्यमभेद अर्थात् आहार्यस्य ताद्रूप्यस्य

## बालक्रीड़ा

से पृथिवीत्व को हटाकर (क्योंकि (सुवर्णस्य तेजस्त्वात्) सुवर्ण तेज है पृथिवी नहीं है) विषयान्तर पार्थिवघट को ग्रहण करा सकता है । इसी तरह जैसे मृन्मय घड़ा होता है उसी तरह स्नेहमय घट भी होता है घी को जमाकर घड़ा बना लिया जाता है । तब घटत्व माने स्नेहमय घटत्व भी हुआ । अतः वह स्नेहमय घटत्व अपने अधिकरण स्नेहमय घट से द्रव्यत्व और पृथिवीत्व को हटा कर (क्योंकि स्नेह गुण है न पृथ्वी है और न द्रव्य है अतः) विषयान्तर पार्थिवघट को या द्रव्यत्व व्याप्यपार्थिवत्वविशिष्ट घट को ग्रहण करा सकता है नहीं करा सकता है यह कैसे । इसलिए अपह्नुति में जब विषय का निषेध कर दिया फलतः उपमेय है ही नहीं तब उपमान का अभेद किसमें होगा । और जो वस्तु सम्भावना का ही विषय है अर्थात् वस्तु सत्ता ही जिसकी नहीं है उस उपमेय में उपमान का अभेद कैसे होगा ।

प्रश्न—उत्प्रेक्षा संभावना रूप है । तब उसमें अभेदात्मक रूपक के लक्षण की अतिप्रसक्ति कैसे होगी । उत्तर । यह नहीं कह सकते हैं । क्योंकि कोई विनिगमक नहीं है कि संभावना ही उत्प्रेक्षा है अतः संभाव्यमान का अभेद भी उत्प्रेक्षा का स्वरूप हो सकता है । इस अवस्था में विषयसंभावना और अभेद इन दोनों के कारण उत्प्रेक्षा में दो अलंकारों

तदिदं रूपकं सावयवं निरवयवं परम्परितं चेति तावत्त्रिविधम्। तत्राद्यं समस्तवस्तुविषयमेकदेशविवर्ति चेति द्विविधम्। द्वितीयमपि केवलं मालारूपकं चेति द्विविधम्। तृतीयं च श्लिष्टपरम्परितं शुद्धपरम्परितं चेति द्विविधं सत्प्रत्येकं केवलमालारूपत्वाभ्यां चतुर्विधमित्यष्टविधमाहुः।

तत्र—

परस्परसापेक्षनिष्पत्तिकानां रूपकाणां संघातः सावयवम् ॥

## मर्मप्रकाशः

प्रधानत्वं तद्विशेषणम्। तत्त्वस्यैव भङ्गापतेः। तावत् आदौ। आहुः प्रकाशकारादयः।

## मधुसूदनी

अभेदस्य निश्चय इत्येव। ततश्च निश्चीयमानत्वेन अभेदो विशेषणीय इति चेदस्मदुक्त एव तर्हि पर्यवसितिरिति अपि चोद्यमेव।

परस्परं सापेक्षा निष्पत्तिर्येषां तेषां संघातः समुदायः सावयवम्। अवयवैः सहितोऽयवयवी यत्र तत् अर्थात् अवयवरूपकं विना अवयविरूपकं नो सिध्यतीत्याशयः। "समस्तवस्तुविषयम्" इत्यत्र समस्तपदं शब्दोपात्तार्थकं, वस्तुपदमारोप्यमागार्थकं, विषयपदमारोपविषयार्थकम्। तेन सम्यगस्तानि उपन्यस्तानि शब्दोपात्तानि इत्यर्थः। वस्तूनि आरोप्यप्राणानि। विषया आरोपविषयाश्च यत्र तत् तथा।

## बालक्रीड़ा

के व्यवहार की आपत्ति लगजायगी। यदि अभेद में निश्चीयमानत्व विशेषण जोड देते हैं तब तो हमारे ही मत में पर्यवसान आपके मत का होगया।

वह अभेद रूपक का लक्षण स्वरूप यदि उत्प्रेक्षादि में रहता है इसके अनुसार और सम्भावनमथोत्प्रेक्षा" इस काव्यप्रकाशीय लक्षण के अनुसार सम्भावनारूढ अभेद या अभेदाविवला सम्भावना यह लक्षण हुआ तब अलंकार द्वय की आपत्ति कैसे हुई। क्योंकि विशिष्टाभाव जैसे विशेषण के विना होता है वैसे ही विशेष्य के भी विना होता है तब एक ही तो लक्षण हुआ। एक बात हुई।

दूसरी बात है कि दीक्षित जी ने स्वयं ही आहार्यताद्रूप्यनिश्चयगोचरतामेति इस तरीके से निश्चीयमान आहार्य ताद्रूप्य रूप अभेद कह ही दिया है तब निश्चीयमानत्व को अभेद में विशेषण दे दिया जाय तो हमारे ही कथन का अनुसरण होगा। इसमें कौन तुक है।

इस तरह का यह रूपक सावयव, निरवयव एवं परम्परित भेद से तीन प्रकार का है। उनमें पहला सावयव समस्तवस्तु विषय और एकदेशविवर्ति नाम से दो प्रकार का है। दूसरा निरवयव भी केवल और मालारूप दो प्रकार का है। तृतीय श्लिष्ट परम्परित दो प्रकार का होकर भी केवल एवं मालारूप भेदों से ४ प्रकार का होता है तथा पहले वाले चार भेदों को जोड़ देने से ८ आठ प्रकार का रूपक हो गया।

उसमें जिनकी निष्पत्ति परस्पर सापेक्ष हो उन रूपकों के संघात को सावयव कहते

तत्रापि—

समस्तानि वस्तून्यारोप्यमाणानि शब्दोपात्तानि यत्र तत्समस्तवस्तुविषयम्।

यत्र च क्वचिदवयवे शब्दोपात्तमारोप्यमाणं क्वचिच्चार्थसामर्थ्याक्षिप्तं तदेकदेशे शब्दानुपात्तविषयिके अवयवरूपके विवर्तनात्स्वस्वरूपगोपनेनान्यथात्वेन वर्तनादेकदेशविवर्ति ॥

यद्वा—

एकदेशे उपात्तविषयिके अवयवे विशेषेण स्फुटतया वर्तनादेकदेशविवर्ति ॥

## मर्मप्रकाशः

एतत्सूचितारुचिस्त्वग्रे स्फुटीभविष्यति। यत्र च यत्र तु संघातात्मकसाययवरूपके। अवयवरूपके इति। रूपकसंघातस्यावयविनोऽवयवे कस्मिंश्चिद्रूपक इत्यर्थः। विवर्तनादिति। विरुद्धतया वर्तनादित्यर्थः। विरुद्धत्वमेवाह—स्वेति। विनिगमनाविरहादाह—यद्वेति। अवयवे अवयवरूपके। अवयवानां मुक्तनक्षत्रवस्त्रज्योत्स्नामुखचन्द्रनायिकापूर्णिमारूपाणाम्।

## मधुसूदनी

देशनं देशः कथनम्। एको देशः कथनं यत्र स एकदेशः तस्मिन् एकदेशे। एकत्र कथनमित्युक्तेऽन्यत्र अकथनमार्थमित्यर्थः। तदेतदुच्यते क्वचिदवयवे शब्दोपात्तमारोप्यमाणं क्वचिच्च अर्थसामर्थ्याक्षिप्तमिति। एवं च एकदेशे इत्यस्य शब्दोपात्तविषयिके शब्दानुपात्तविषयिके इति द्विरूपोऽर्थः। तत्र पूर्वं शब्दानुपात्तविषयिके इत्येतदर्थं मनसि निधाय व्याख्याति विवर्त्तनादिति। सतत्त्वतोऽन्यथा प्रथा विवर्त्त इत्युदीर्यते इत्युक्तेः स्वस्वरूपगोपनेन अन्यत्वेन वर्त्तनादिति।

इदानीं शब्दोपात्तविषयिके इति तदर्थं स्वीकृत्य व्याख्याति विशेषेण कथनाद्धेतोः स्फुटतया वर्त्तनादिति।

## बालक्रीड़ा

हैं। उसमें भी जहाँ समस्त वस्तु याने आरोप्यमाण शब्दोपात्त रहें वह समस्तवस्तुविषय नामक रूपक है।

जहाँ किसी अवयव में आरोप्यमाण शब्दोपात्त रहें और किसी अवयव में आरोप्यमाण अर्थ सामर्थ्य से आक्षिप्त रहें इस तरह विषयी का शब्द के द्वारा उपादान नहीं रहने पर भी एकदेश अवयव में विवर्तन अर्थात् अपने स्वरूप को छिपाकर अन्य के रूप में रहने के कारण वह रूपक एकदेश विवर्त्ति कहाता है। अथवा उपात्तविषयिक एकदेश अवयव में विशेष याने स्फुट रूप से रहने के कारण एकदेशविवर्त्ति रूपक कहाता है।

समस्तवस्तुविषयं सावयवं यथा—

'सुविमलमौक्तिकतारे ? धवलांशुकचन्द्रिकाचमत्कारे ?
वदनपरिपूर्णचन्द्रे ? सुन्दरि ? राकासि नात्र संदेहः ॥'

अत्र समुदायात्मकस्य सावयवरूपकस्यावयवानां सर्वेषामपि वस्तुतः समर्थ्यसमर्थकभावस्य परस्परं तुल्यत्वेऽपि कवे राकारूपस्यैव समर्थ्यत्वेनाभिप्रेतत्वात्समर्थकतयोपादानमितरेषामिति गम्यते । एवं स्थिते समर्थकरूपकाणां विषयविषयिणोः पृथग्विभक्तेरश्रवणादनुवाद्यत्वेऽपि सर्थ्यरूपकस्य तयोः पृथग्विभक्तिश्रवणाद्विधेयतया तदादाय संघातात्मकस्य सावयवरूप-

### मर्मप्रकाशः

अभिप्रेतेति । विधेयत्वेन वर्ण्यत्वादिति भावः । तयोर्विषयविषयिणोः । तदादाय तदीय-

### मधुसूदनी

सुविमेति । सुन्दरि ? त्वं राका पूर्णिमासी असि नात्र तव पूर्णिमात्वविषये कोऽपि सन्देहः । किं भूते हे सुन्दरि ? सुविमलानि मौक्तिकान्येव तारा यत्र, धवलमंशुकं वसनमेव चन्द्रिका । सैव चमत्कारो यत्र व्यधिकरणबहुव्रीहौ तु तया चमत्कारो यत्रेति । वदनमेव परिपूर्णश्चन्द्रो यत्र । ताराभिन्नमौक्तिकवति ? चन्द्रिकाभिन्नधवलांशुकवति ? पूर्णचन्द्राभिन्नवदनशालिनि ? इत्यर्थः ।

अवयवानां मुक्तातारधवलांशुकचन्द्रिकावदनचन्द्रनायिकाराकाणाम् । राकारूपकस्यैव हे सुन्दरि ? त्वं राका असि इत्यस्य समर्थ्यत्वम् । इतरेषामवयवरूपकाणां समर्थकत्वम् । विभक्तेः पृथगश्रवणात् पदानां समस्तया तदुत्तरविभक्तेर्लोपादिति शेषः । तयोरुपमानोमेययोः राकासुन्दर्योः विभक्तेः विभक्त्योरित्यर्थः । पृथक् श्रवणादिति । ननु सुन्दरि इत्यत्र सम्बुद्धिलोपे "राका" इत्यत्र हल्ङ्याभ्य इति सुलोपे, कथं पृथग् विभक्तेः श्रवणम् । न चात्र सूत्रकृतो लोप इति वाच्यम् । मौक्तिकम् तारा इत्यादावपि सुपो धातुप्रातिपदिकयोरिति शास्त्रकृत एव लोपः । इति चेत्यत्यम् । एकत्र समासः । अपरत्र वाक्यम् समासाभावः । समासे हि नियतं

### बालक्रीड़ा

समस्त वस्तु विषय सावयव रूपक जैसे—हे सुन्दरि ? तुम पूर्णिमा हो इसमें सन्देह नहीं है । तुम्हारे हार के सुविमल मौक्तिक तारे हैं । धवल अंशुक साड़ी चमत्कारपूर्ण चन्द्रिका है और वदन ही परिपूर्ण चन्द्र है ।

यहाँ समुदायात्मक सावयव रूपक के सभी अवयवों में परस्पर में समथर्थ्य समर्थक भाव के तुल्य होने पर भी कवि को राकारूपक ही समर्थ्यत्वेन अभिप्रेत है । इसलिए अन्य रूपकों का उपादान समर्थक के रूप में किया है । ऐसा मालूम पड़ता है । ऐसी स्थिति में समर्थक रूपकों के विषय मौक्तिक, धवलांशुक एवं वदन में विभक्ति की पृथक्२ श्रुति नहीं

कस्यापि विधेयत्वमत्र व्यपदिश्यते। यथा भटसंघातान्तर्गतस्य मुख्यस्य कस्यापि भटस्य जयपराजयाभ्यां भटसंघातो जितः पराजितश्चेत्युच्यते।

'व्योमाङ्गणे सरसि नीलिमदिव्यतोये
तारावलीमुकुलमण्डलमण्डितेऽस्मिन्।
आभाति षोडशकलादलमङ्कभृङ्गं
स्वराभिमुख्यविकचं शशिपुण्डरीकम्॥'

अस्य तु सावयवरूपकस्यानुवाद्यत्वमेव। अत्र वर्ण्यस्य पूर्णचन्द्रस्य

## मर्मप्रकाश

विधेयत्वमादाय। अत्र पद्ये। अन्यधर्मेणान्यत्र व्यपदेशे मानमाह—यथेति। लक्ष्यान्तरमाह—व्योमेति। लक्ष्यान्तरदाने विशेषमाह—अस्य त्विति। अत्र क्वापि पृथग्विभक्तेरश्रवणान्मिथ

## मधुसूदनी

विभक्तेर्लोपादश्रवणमिति बुद्ध्या तथोक्तम्। अपरत्र वाक्ये नियतं विभक्तेर्लोपाभावाच् श्रवणमपीति बुद्ध्या तथोक्तम्। हे सुन्दरि त्वं श्रीरसि। अत्र श्रीरिति सुविभक्तेर्लोपो नास्ति। इति।

उद्देश्यत्वेऽपि पृथक् विभक्तेरश्रवणं, विधेयत्वे पृथग्विभक्तेः श्रवणमिति असम्यक्। उभयत्राप्यत्र विभक्तेः पृथक् श्रवणम्। अत्र उद्देश्यविधेयभावो हि द्वयोर्दलयोर्वर्तते। समासेन तत्र ऐकपद्याद् द्वित्वमर्थात् उद्देश्यबोधकमेकं दलं पृथक् विधेयबोधकं द्वितीयं दलं पृथगिति नास्ति। वाक्ये तु विभक्तेरश्रवणश्रवणयोः समानेऽपि पूर्वोपात्तमुद्देश्यमुत्तरोपात्तं विधेयमिति राद्धान्तः। तदादाय समर्थ्यरूपकनिष्ठविधेयत्वमादाय।

व्योमेति। अत्र व्योम्नोऽङ्गणत्वे सरस्त्वं कस्येति चिन्त्यम्। व्योमैव सरः। तत्रैव नीलिमा जलं, तारा मुकुलं, शशी पुण्डरीकं च। ततः विष्णोः पदे सरसीति पाठः साधीयान्। आभातेः क्रियाया विधेयत्वादनुवाद्यत्वं रूपकस्य।

## बालक्रीड़ा

रहने से अनुवाद्यत्व का अभाव है, किन्तु विषयी तारे, चन्द्रिका एवं चन्द्र में पृथक् २ रहने से अनुवाद्यत्व है जिससे समर्थ्य रूपक के विषय सुन्दरी एवं विषयी राका में विभक्ति के पृथक् पृथक् श्रवण से विधेयत्व है। इसको लेकर संघातात्मक सावयव रूपक विधेय है यहाँ कहा जाता है। जैसे भटसमूह के अन्तर्गत मुख्य किसी भट के जय से भटसंघ विजयी कहा जाता है और उसी के पराजय से वह संघ पराजित कहा जाता है।

प्रधानतया निर्देश का जो विषय होता है वह विधेय होता है। जिसके फल स्वरूप उक्त कथन ठीक है।

व्योम को अंगण कहा तो सर कौन होगा। अतः व्योमाङ्गण के स्थान पर विष्णोः पदे पाठ ठीक है। जहाँ नीलिमा ही दिव्यजल है और जो तारावली रूपी मुकुलमण्डल से

सूर्याभिमुख्यं ज्योतिःशास्त्रसिद्धम्। तेन सूर्याभिमुख्ये चन्द्रस्य कथं विकास इति न शङ्कनीयम्।

एकदेशविवर्त्ति सावयवं यथा—

'भवग्रीष्मप्रौढातपनिवहसंतप्तवपुषो
बलादुन्मूल्य द्राङ् निगडमविवेकं व्यतिकरम्।

मर्मप्रकाश

उद्देश्यविधेयाभावेन सर्वमुद्दिश्याभाया एव विधेयत्वादितिभावः। स्पष्टत्वादितरदुपेक्ष्याह—

मधुसूदनी

सूर्याभिमुख्ये एव चन्द्रस्य विकासः। इदं तत्वम्। सूर्यस्तेजःपिण्डः। चन्द्रो जलपिण्डः। जले अभास्वरत्वमदेदीप्यमानत्वम्। तेजसि भास्वरत्वं देदीप्यमानत्वं प्रसिद्धम्। तत्र अमायां सूर्येन्द्वोः "दर्शः सूर्येन्दुसंगम" इत्युक्तेः साहचर्यम्। ततः साहचर्यात् एकराशौ स्थितत्वात् सूर्यप्रकाशेन प्रकाशमानचन्द्रस्योपरि सूर्यतेजसोऽसंक्रमणात् प्रकाशहीनत्वम्। पूर्णिमायां तु सूर्येन्द्वो राशिषट्कस्य व्यवच्छेदात् सूर्यकक्षातः चन्द्रकक्षाया अधोभावाच्च सूर्याचन्द्रमसोः पूर्णं सामुख्यात् सूर्यतेजसः संक्रमणाच्चन्द्रस्य पूर्णतया प्रकाशमानतेति ज्योतिःशास्त्रराद्धान्तः। पुण्डरीकं सूर्यसामुख्याद्विकसतीति लोकसिद्धमेव। व्योमांगणे सरसीति विभक्तेः पृथक् श्रवणात् अत्र कापि पृथग् विभक्तेरश्रवणादिति लिखन् नागेशमहाशयः शेते, मन्ये। यतो न शृणोति।

भवेति। भव एव ग्रीष्मर्त्तुः। तस्य प्रौढातपस्य निवहेन सतप्तं वपुर्येषां ते।

बालक्रीड़ा

मण्डित है ऐसे इस व्योमरूपी तालाव में शशी रूपी पुण्डरीक शोभायमान है। जिसमें षोडश कलायें दलस्वरूप है, अंक भौंरा है और जो सूर्य के अभिमुख होने पर विकाश को प्राप्त करता है। यहाँ आभाति का अर्थ भान विधेय है और शशिपुण्डरीक उद्देश्य है। यहाँ वर्ण्य चन्द्रमा का सूर्याभिमुखीभाव ज्योतिः शास्त्र में प्रसिद्ध है। पूणिमासी में सूर्य से चन्द्रमा का ६ राशियों का अन्तर होता है। उसी समय वे दोनो आमने-सामने रहते हैं। अमाको उन दोनों का साहचर्य बराबरी रहती है अतः प्रकाश नहीं फैला सकता है। और पूर्णिमासी को उनका सम्मुखी भाव होता है। जिससे जल पिण्ड चन्द्रमा तेजः पिण्ड सूर्य से पूर्ण प्रकाश को पाता है और जलमय होने से ठण्डी रोशनी फैलाता है। इसलिए सूर्य के सामुख्य में चन्द्र का विकास कैसा यह शंका नहीं करना।

एक देश विर्वत्ति सावयव रूपक जैसे—संसाररूपी ग्रीष्म ऋतु के प्रौढ आतपनिवह से जिनके शरीर संतप्त हो गये हैं और व्यतिकर विनाशकारी अविवेक रूपी निगड फांसा को वलपूर्वक झटिति उन्मूलन कर देने से जिनके कलुष संघ दूर हो गये हैं ऐसे सुकृति हस्ती, विशुद्ध दोषसंघ के दूर हो जाने से निर्मल, नैराश्य विषयपराङमुखीभाव रूप शिशिरता से युक्त आत्मा रूपी अमृत के सरोवर में मज्जन करते हैं। यहां अविवेक में निगड रूपक से सुकृतियों में गजरूपक का आक्षेप करते हैं।

विशुद्धेऽस्मिन्नात्मामृतसरसि नैराश्यशिशिरे
विगाहन्ते दूरीकृतकलुषजालाः सुकृतिनः ॥'

अत्र सहचरैर्निगडादिरूपकैः सुकृतिषु गजरूपकमाक्षिप्यते ।

यथा वा—

'रूपजला चलनयना नाभ्यावर्ता कचावलीभुजगा ।
मज्जन्ति यत्र सन्तः सेयं तरुणीतरङ्गिणी विषमा ॥'

### मर्मप्रकाशः

अत्रेति । प्रौढातपेत्यत्र कर्मधारयः । व्यतिकरः संबन्धः । सहचरैरित्यनेनाक्षेपकत्वयोग्यता,

### मधुसूदनी

अविवेकमेव बुद्धिशून्यत्वमेव निगडं वन्धनशृंखला । बुद्धिनाशात्प्रणश्यतीति स्मृतेः व्यतिकरो विनाशकः अविवेकः । व्यतिकरो विनाशस्तत्कारणमविवेकः । एवं व्यतिकराविवेकयोः कार्यकारणभावेऽपि अभेदोपचाराद् व्यतिकरमविवेकमुन्मूलयेति ।

व्यतिकरो विनाशार्थक इति भागवते स्कन्धे ७ अ० ३२ श्लो० प्रजोपद्रवमालक्ष्य लोकव्यतिकरं च तम् । इति । विगाहन्ते गाहू आलोडने इत्यस्माल्लटि । बहुत्वे ।

नैराश्यशिशिरे । सन्तोषो नैराश्यं तदेव शिशिरत्वम् । आत्मा अमृतं जलं, सरो जलमेव नान्यत् । ततः आत्मरूपे सरसि । अत्र सुकृतिषु गजत्वमाक्षिप्यते । इदं समर्थ्यरूपकम् ।

रूपेति । अत्र चले नयने यस्याः सा । चलनयना इति नयनयोर्मीनत्वमाक्षिप्यते । इदं समर्थकरूपकम् । ननु सावयवरूपकमपि समूहात्मकं, मालारूपकमपि समूहात्मकं तत एकेन परस्य गतार्थतायां पृथग् गणनायास्तयोः को हेतुरिति चेच्छृणु । सावयवरूपकं नियतमेकविषयकं परस्परसापेक्षञ्च, मालाया यथा एकरूपैः पुष्पैर्निर्मितिस्तथा विभिन्नैरपि तैरत एकविषयकत्वमनेकविषयकत्वञ्च । एवमेव परस्परं

### बालक्रीड़ा

व्यतिकर शब्द का यथापि विनाश अर्थ है । तथापि अविवेक का विशेषण है । और बुद्धिनाशात् प्रणश्यति के अनुसार अविवेक विनाशकारी होता है अतः प्रकृत में व्यतिकर का विनाशक अर्थ लिया है ।

और भी जैसे—रूप ही जिसमें जल है । जिसके नयन अर्थात् मीन चंचल है नाभी जिसमें आवर्त्त भोंरी है । कचावली जहाँ भुजगस्वरूप है और विषमा गहरी या समता रहित यह तरुणी है जिस में सज्जन मज्जन करते हैं । इन पद्यों में पहले में कवि को समर्थ्यत्वेन अभिमतगज रूपक का आक्षेप है । दूसरे में समर्थकत्वेन अभिमत नयनों में मीनरूपक का, इतनी विशेषता है ।

पूर्वं तु कवेः समर्थ्यत्वेनाभिमतस्य रूपकस्याक्षेपः, इह तु समर्थकत्वेनाभिमतस्य नयनयोर्मीनरूपकस्येति विशेषः। अत्र च चमत्कारविशेषजनकतया रूपकसंघातात्मकमपि सावयवरूपकं रूपकालंकृतिभेदगणनायां गण्यते। यथा मौक्तिकालंकृतिभेदगणनायामेकं नासामौक्तिकमिव संघातात्मकमौक्तिकमञ्जर्यादयोऽपि गण्यन्ते। अन्यथा मालारूपस्योपमादेस्तद्भेदगणनेऽगणनप्रसङ्गात्। एतेन गवां संघातो गोभेदानां कपिलादीनां गणनायां यथा न गण्यते तथा रूपकभेदगणनाप्रस्तुतौ न तत्संघातात्मकं सावयवं गणनीयम्' इति परास्तम्। एवमस्मात्संघातात्मकात्सावयवान्मालारूपकस्य संघातात्मकत्वेनाविशेषेऽप्येकविषयकत्वपरस्परनिरपेक्षत्वाभ्यामस्ति महान्विशेषः।

### मर्मप्रकाशः

गजरूपकस्य प्राधान्यं च सूचितम्। लक्ष्यान्तरदाने बीजमाह—पूर्वं त्विति। रूपकस्य गजेत्यादिः। मीनेति। सन्त इत्यस्य तु साधवः सुहृदश्चेत्यर्थद्वयमिति भावः। जनकतयेति गणनायां हेतुः। गण्यत इति। पृथगिति शेष। लोकदृष्टान्तेन सिद्धमर्थं प्रतिपाद्य व्यतिरेकमुखेन द्रढयति—तद्भेदेति। उपमालंकारभेदेत्यर्थः। प्रस्तुतौ प्रस्तावे। एवम्; अस्य पृथग्गणनवत्। एकविषयत्वेति। एतौ च मालारूपकनिष्ठो धर्मौ। सावयवानेकविषयकं परस्परसापेक्षं

### मधुसूदनी

सापपेक्षत्वं निरपेक्षत्वञ्च। सप्तविंशतिमुक्तामणिभिर्ग्रथिता नक्षत्रमालेति गीयते एकस्यापि मणेर्हीनत्वे तन्मालात्वमपि हीयते इति परस्परं सापेक्षत्वम्। इत्यस्ति विशेषः।

### बालक्रीड़ा

यहाँ रूपक संघातात्मक सावयव रूपक की रूपकालंकार के भेदों में गणना करते हैं क्योंकि वह चमत्कार जनक है। संघातात्मक मुक्तामंजरी मुक्ताहार भी एक नासानौक्तिक की तरह मुक्ताघटित अलंकारों के भेदों में गिना जाता है। यदि ऐसा नहीं मानेंगे तो उक्तमालोपमा की उपमा के भेदों में गणना नहीं होगी। इस सिद्धान्त के अनुसार जैसे गायों का समूह गायों के भेद कपिलादि में नहीं गिना जाता है उसी तरह रूपक के भेदों की गणना के प्रसंग में रूपकसंघातात्मक सावयव रूपक की गणना नहीं होनी चाहिए। यह कथन परास्त हो गया। इस प्रकार मालारूपक और सावयवरूपक संघातात्मकता में समान हैं किन्तु माला एकविषयक और परस्पर निरपेक्ष होती है, सावयव अनेक विषयक और सापेक्ष है। अतः दोनों भिन्न भी है।

निरवयवं केवलं यथा—

'बुद्धिर्दीपकला लोके यया सर्वं प्रकाशते।
अबुद्धिस्तामसी रात्रिर्यया किंचिन्न भासते ॥'

अत्र रूपकद्वयमपि सापेक्षरूपकसंघातात्मकत्वविरहान्निरवयवम्। मालात्मकत्वविरहाच्च केवलम्।

निरवयवं मालारूपकं यथा—

'धर्मस्यात्मा, भागधेयं क्षमायाः, सारः सृष्टेर्जीवितं शारदायाः।
आज्ञा साक्षाद् ब्रह्मणो वेदमूर्तेराकल्पान्तं राजतामेष राजा ॥'

एकविषयकनानापदार्थारोपरूपत्वान्मालारूपमिदम्। परस्परसापेक्षत्वविरहाच्च निरवयवम्।

यत्र चारोप एवारोपान्तरस्य निमित्तं तत्परम्परितम्। तत्रापि समर्थकत्वेन विवक्षितस्यारोपस्य श्लेषमूलकत्वे श्लिष्टपरम्परितम् ॥

### मर्मप्रकाशः

चेति बोध्यम्। शारदायाः सरस्वत्याः। साक्षादिति। अप्रतिहतशक्तिकत्वादिति भावः।

### मधुसूदनी

रूपकद्वयं बुद्धौ दीपकलात्वारोपरूपमेकम्। अबुद्धौ तामसीरात्रित्वारोपरूपं द्वितीयम्। एकस्मिन् राज्ञि विषये नानापदार्थानां धर्मस्यात्मेत्यादीनामारोपः।

### बालक्रीड़ा

निरवयव केवल जैसे—संसार में बुद्धि एक दीपक की कला है जिससे सब कुछ प्रकाशित होता है और अज्ञान अन्धकारमयी रात्रि है जिससे सब कुछ आवृत हो जाता है। यहाँ दोनों रूपक अपेक्षा रहित एवं समूहात्मक नहीं है अतः निरवयव हैं। और मालारूप भी नहीं है अतः केवल है।

निरवयव मालारूपक जैसे—यह राजा धर्म की आत्मा है, क्षमा का भाग्य है, सृष्टि का सार है, शारदा का जीवित है और साक्षात् वेदमूर्ति ब्रह्मा की आज्ञा है अतः प्रलय पर्यन्त विराजमान रहे। यह मालारूपक है क्योंकि एक राजा में नाना पदार्थों का आरोप किया गया है। और निरवयव है क्योंकि परस्परसापेक्ष नहीं है।

जहाँ एक आरोप दूसरे आरोप का निमित्त कारण हो जाय वह परम्परित रूपक है। उसमें भी समर्थक आरोप यदि श्लेषमूलक हो तो श्लिष्ट परम्परित होता है। जैसे—

यथा—

'अहितापकरणभेषज ! नरनाथ ! भवान्करस्थितो यस्य ।
तस्य कुतोऽहिभयं स्यादखिलामपि मेदिनीं चरतः ॥'

अत्र द्वयोरप्यारोपयोः समर्थ्यसमर्थकभावस्य वस्तुतस्तुल्यत्वेऽप्यहितानामपकरणमेवाहीनां तापकरणमिति श्लेषमूलकेनारोपेण राजनि भेषजतादात्म्यारोपस्य समर्थनीयतायां कवेरभिप्रायः। अत एव भङ्गश्लेषनिवेदितोऽहिभयाभावोऽपि संगच्छते।

इदमेव मालारूपं यथा—

'कमलावासकासारः क्षमाधृतिफणीश्वरः ।
अयं कुवलयस्येन्दुरानन्दयति मानवान् ॥'

### मर्मप्रकाशः

एकेति। राजेत्यर्थः। द्वयोरपीति। अहिसम्बन्धितापकरणभेषजारोपयोरित्यर्थः। 'समर्थनीयतायाम्' इति पाठः। कवेरिति। प्राधान्यादिति भावः। अत एव तस्य तात्पर्यविषयत्वेन समर्थनीयत्वे तद्वेद्यत्वादेव। भङ्गेति। पदच्छेदेत्यर्थः। इदमेव श्लिष्टपरम्परितमेव। कमलेति। कमलानामावासः। कमलाया वासः। पृथ्वीधृतिः। क्षान्तिधृतिः। पृथ्वीमण्डलस्य कुमुदस्य च। अयं वर्ण्यो राजा। अत्र समर्थककमलावासाद्यारोपस्य

### मधुसूदनी

अहीति। नरनाथे भेषजारोपः समर्थ्यः। अहितानां खलानामपकरणमेवाहीनां तापकरणमिति श्लेषमूलकारोपः समर्थकः। अत्र सभंगः श्लेषः। अहितापकरणपदस्य अहितानामपकरणमिति अहीनां तापकरणमित्येवं भेदनात्।

कमलाया लक्ष्म्या यो वासः स्थितिरेव कमलानां पद्मानां स्थितिः। तत्र कासारः सरः। क्षमा परापराधसहनं, धृतिः धैर्यम्। त एव क्षमायाः पृथ्व्याः धारणम्।

### बालक्रीड़ा

शत्रुओं के उच्छेदकरण रूप सर्पों को ताप पहुंचाने में औषध हे नरनाथ ? आप जिसके हाथ में रहे उस को अखिल मेदिनी पर घूमने में किससे भय होगा। यहाँ दोनों आरोपों में समर्थ्य समर्थक भाव वस्तुतः तुल्य है तथापि अहितों का अपकरण ही सर्पों का तापकरण है इसतरह श्लेषमूलक आरोप से राजा में भेषजतादात्म्यारोप समर्थनीय है इसी में कवि का अभिप्राय है। इसीलिए सभंगश्लेष से प्राप्त अहिभयाभाव भी संगत हो जाता है।

यही मालारूप जैसे—कमलों का आवास ही कमला का वास है उसके लिए कासार तालाब। पृथिवी का धारण ही क्षमा का धारण है उसके लिए शेषनाग तथा पृथिवीमण्डल ही कुमुद है उसका चन्द्र मानवोको आनन्दित करता है।

शुद्धपरम्परितं केवलं यथा—

'देवाः के पूर्वदेवाः समिति मम नरः सन्ति के वा पुरस्ता-
देवं जल्पन्ति तावत्प्रतिभटपृतनावर्तिनः क्षत्रवीराः।
यावन्नायाति राजन्! नयनविषयतामन्तकत्रासिमूर्ते!
मुग्धारिप्राणदुग्धाशनमसृणरुचिस्त्वत्कृपाणो भुजङ्गः॥'

अत्रापि भुजङ्गारोपो दुग्धारोपसमर्थ्यत्वेनाभितः।

तदेव मालारूपं यथा—

'प्राची संध्या समुद्यन्महिमदिनमणेर्मानमाणिक्यकान्ति-
ज्वालामाला कराला कवलितजगतः क्रोधकालानलस्य।

### मर्मप्रकाश

श्लेषमूलकस्य चन्द्रारोपे निमित्तत्वाद्राज्ञि कासाराद्यनेकपदार्थारोपरूपत्वाच्च मालाश्लिष्टपरम्परितरूपकता। पूर्वदेवा दैत्याः। के 'क इति' इति द्विः पाठः। व्याख्यातमिदम्। दुग्धारोपेति। अनेन परम्परितत्वमुक्तम्। श्लेषमालयोरभावाच्छुद्धकेवलत्वे। तदेव शुद्धपरम्परितमेव। प्राचीति। अपिना मालारूपकपरिग्रहः। 'तत्र सावयवे सिद्धिः' इति पाठः।

### मधुसूदनी

कोः पृथिव्या वलयं मण्डलमेव कुवलयं कुमुदस्तस्येन्दुः। इदं परम्परितं मालारूपम्। अत्र राज्ञि कासाराद्यनेकारोपात्।

देवा इति। समिति युद्धे मम पुरस्तात्। पूर्वदेवाः सुरद्विषः। इत्यमरः। प्रतिभटस्य शत्रोः पृतनासु वर्तिनः वर्तमानाः। अन्तकं त्रासयितुं भीषयितुं शीलं यस्यास्तादृशी मूर्तिर्यस्य राज्ञस्तत्सम्बुद्धौ। मुग्धारीणां प्राणा एव दुग्धं तस्याशने भोजने मसृणा चिक्कणा रुचिर्यस्य कृपाणस्य। अत्र कृपाणे भुजंगत्वारोपः। प्राणेषु दुग्धत्वारोपेण समर्थ्यः। इदं श्लेषाभावाच्छुद्धं मालाभावात्केवलं परम्परितं रूपकम्।

तदेव शुद्धपरम्परितमेव। प्राचीति। समुद्यतः उदयं गच्छतो महिम्न एव

### बालक्रीड़ा

शुद्धपरम्परित केवल जैसे—युद्ध में हमारे समक्ष देव, दानव एव मानव क्या हैं कुछ भी नहीं है ऐसा दुश्मन के सैनिक तभी तक कहते हैं जब तक हे राजन्? यम को भी डराने वाला आप का कृपाण रूपी भुजंग दिखाई नहीं पड़ता है। जो तलवार, मुग्धारियों के प्राणरूपी दुग्ध के पीने के लिए मसृण रुचि रखता है अर्थात् चिकनी अतएव फिसलनें वाली रुचि वाला है। यहां भी भुजंग का आरोप दुग्धारोप के द्वारा समर्थ्यत्वेन अभिमत है।

वही मालारूप जैसे—हे पृथ्वीचन्द्र? युद्ध में आपके नेत्रों की उद्भट लाल २ कान्ति

आज्ञा कान्तापदाम्भोरुहतलविगलन्मञ्जुलाक्षारसाभा
क्षोणीन्दो ? संगरे ते लसति नयनयोरुद्भटा शोणिमश्रीः ॥'

यद्यपि सावयवेऽप्यारोप आरोपान्तरस्योपायस्तथापि तत्रारोपातिरिक्तेन कविसमयसिद्धसादृश्येनाप्यारोपान्तरसिद्धिः संभवति। यथा प्रागुक्ते 'सुन्दरि राकासि नात्र संदेहः' इत्यत्र मौक्तिकादीनां तारात्वाद्यारोपं विनाप्यौज्ज्वल्यमात्रेणापि सुन्दर्यां राकारोपसिद्धेः, इह तु नयनशोणिम्नि ज्वालाद्यारोपोऽनलसमारोपं नियमेनापेक्षते।

एवं 'कारुण्यकुसुमाकाशः खलः' इत्यत्राकाशखलयोः सादृश्यास्याप्रसिद्धतयारोपसिद्ध्यर्थमारोप एवोपाय इति वैलक्षण्यम्।

मधुसूदनी

दिनमणेः सूर्यस्य प्राची संध्या। मान एव माणिक्यं तस्य कान्तिः। क्रोध एव कालानलस्तस्य ज्वाला। कान्तायाः पदादम्भोरुहसदृशात्तलात् विगलन्तः क्षरन्तो मञ्जवः सुन्दरा ये लक्षारसाः लाक्षाद्रवास्तेषमाज्ञा। अत्र राज्ञो नयनयोः शोणिमनि संध्यात्वारोपः तस्य कारणं राज्ञो महिमनि प्रतापे सूर्यत्वारोपः। राज्ञः क्रोधे कालानलसमारोपः। एवं सर्वत्र बोध्यम्। लाक्षारसानामाज्ञेत्यत्र किमपि स्वारस्यं नास्ति। अस्ति चेदनुभवन्तु रसिकाः।

यद्यपीति। प्रश्नः -यथा परम्परितरूपके एक आरोप आरोपान्तरस्योपायः तथा सावयवेऽपि कथा। ततश्च एकेनापरस्य गतार्थत्वमास्ताम्। किं पृथगलंकारेण। उत्तरम्। यमारोपम्, आरोपान्तरस्योपायं मनुषे तमन्तरापि कविसमयप्रसिद्धसादृश्येनैव तस्य सिद्धिः। यथा सावयवरूपकोदाहरणेषु "सुन्दरि ? राकासि नात्र सन्देह" इत्यादिषु। यत्र तु तादृशी कविसमयप्रसिद्धिर्नास्ति आरोपस्तु कविभिरा-

बालक्रीड़ा

शोभायमान हो रही है। जो उदीयमान आपके महिमा रूपी सूर्य की प्राची सन्ध्या है। मान रूपी माणिक्य की आभा है। जगत का कवलन करने वाले क्रोधरूपी कालानल प्रलयाग्नि की कराल ज्वाला है। और जो कान्ता के चरण रूपी कमल से वह रहे महावर के रस से भी आढय अर्थात् अधिक लाल है। यद्यपि सावयव आरोप भी आरोपान्तर का उपाय है तद्यपि वहां आरोप के विना भी कविसमय सिद्ध सादृश्य से अन्य आरोप की सिद्धि हो सकती है। जैसे—पहले कहे हुए "सुन्दरि ? तुम पूर्णिमा हो इसमें सन्देह नहीं है" पद्य में मुक्ता आदि में तारात्व आदि के आरोप के विना भी केवल उज्वलता के आरोप से सुन्दरी में पूर्णिमा का आरोप हो सकता है। यहां तो नयन शोणिमा में ज्वालारोप, अनल समारोप की नियम से अपेक्षा रखता है। इस प्रकार खल दयारूपी पुप्प के लिए आकाश है। यहां आकाश और खल सें सादृश्य अप्रसिद्ध है अतः एक आरोप की सिद्धि के लिए

कश्चित्तु बह्वारोपात्मकात्सावयवादारोपद्वयात्मकत्वमेवास्य वैलक्षण्ये बीजमित्याह।

'काव्यं सुधा रसज्ञानां, कामिनां कामिनी सुधा।
धनं सुधा सलोभानां, शान्तिः संन्यासिनां सुधा॥'

अत्र विषयमालाकृतो न कश्चिच्चमत्कारविशेष इति न पृथग्भेदगणनायां गण्यते। आरोप्यमाणमाला तु चमत्कारविशेषशालित्वाद्गण्यत एव।

### मर्मप्रकाशः

अनलसमारोपमिति। राज्ञीति शेषः। कश्चित्त्विति। अत्रारुचिबीजं तु प्रागुक्तरीत्या निर्वाह इति। विषयमालाकृत इति। एकस्योपमेयस्य नानोपमानकृत इत्यर्थः। या माला। तस्यैकत्रान्यारोपस्य नानुपपत्तिरिति। अत्रेदं चिन्त्यम् – कमलावासेनायं राजा कासार इत्यादौ यथा श्लेषमूलकाभेदाध्यवसानेनैनं साधारणधर्ममादाय राजकासारयो रूपकस्य गाम्भीर्येण समुद्रोऽयमित्यादाविव संभवस्तद्वत्कमलावासकासार इत्यादावपि संभवात्किमर्थोऽयं क्लेशः। साधारणधर्मज्ञानस्य चाभेदारोपप्रयोजकत्वात्। इदमेव चास्योपायत्वमारोपे एतन्मूलीभूतसाधारणधर्मसंपत्तिः। साधारणधर्मसंपत्तिः आरोपेणैवेत्यत्र न किंचिन्मानम्। समर्थके रूपकत्वव्यवहारस्तु भाक्तः तथापि श्लिष्टेषु सादृश्यमूलकत्वाभावादावश्यकः। एवं च 'कारुण्यकुसुमा-

### मधुसूदनी

द्रियते तत्र आरोपान्तरसिद्ध्यर्थमुपायभूत आरोपो नियमेन आश्रयणीयः इति तयोः सावयवपरम्परितयोर्वैलक्षण्यस्य बीजम्।

कश्चित्तु तयोर्वैलक्षण्ये भिन्नं बीजं कथयति यतः सावयवे बहव आरोपा अपेक्ष्यन्ते परम्परिते तु द्वावेव आरोपौ अपेक्ष्येते इति।

काव्यमिति। अत्र काव्यकामिनीधनशान्तिरूपाणामारोपविषयाणां माला बहुत्वम्। आरोप्यमाणा सुधैकैव। प्रश्नः—मालाकेवले द्विविधे रूपके स्वीकृते। तत्र मालापदेन आरोपविषयाणां मालात्मकोऽपि भेदः। आरोप्यमाणानां मालात्मकोऽपि भेदः। तत्र उभावपि गणनीयौ रूपकभेदेषु अथवा कश्चिदेकः। उत्तरम्। स्पष्टं निगदव्याख्यातम्।

### बालक्रीड़ा

दूसरा आरोप ही उपाय है। यह सावयव एवं परम्परित में विलक्षणता है। कोई तो इनकी विलक्षणता में बीज कहते हैं कि जिसमें बहुत आरोप हो वह सावयव है और जिसमें दो हों वह परम्परित है।

रसिकों के लिए काव्य अमृत है। कामियों के लिए कामिनी अमृत है। लोभियों के लिए धन अमृत है और सन्यासियों के लिए शान्ति ही अमृत है। यहां विषयों उपमेयों (काव्य, कामिमी, धन एवं शान्ति) की माला है इसमें कोई भी चमत्कार नहीं है। अतः इसकी

अथ कथं नाम श्लिष्टपरम्परिते 'कमलावासकासारः' इत्यादावेकस्यारोपस्यारोपान्तरोपायत्वम्। यतः श्लेषेण कमलानामावासस्य कमलाया वासस्य चाभेदमात्रमत्र प्रतीयते। नैकत्रान्यारोपः। तस्य स्वतन्त्रविषयनिर्देशापेक्षत्वात्। न च शुद्धाभेदप्रत्यय एवारोपः। विषयनिगरणात्मिकायामतिशयोक्तावपि तत्प्रसङ्गात्। न च शुद्धाभेदप्रत्ययेनात्रार्थः यत्संबन्धिनि यत्संबन्ध्यभेदस्तस्मिंस्तदभेद इति 'कमलावासकासारः' इत्यादौ

## मधुसूदनी

अथेति कश्चन विचारः प्रस्तूयते श्लिष्ट परम्परित स्थले। कमेति। अत्र एक आरोपः अन्यस्य आरोपस्य उपायः सिद्धिहेतुः। स एव कथम्। न भवितुं शक्नोति इत्यर्थः। अभवने हेतुमाह—यत इति। एकत्र कमलाया वासे अन्यस्य कमलानामा वासस्य आरोपो न। ननु कुतो नारोप इत्यत आह—तस्येति। तस्य आरोपस्य स्वतन्त्रं यथा स्यात्तथा विषयविषयिणोः निर्देशे सापेक्षत्वम्। ननु अभेदो वा आरोपो वा अनर्थान्तरम्। तन्नेत्याह—न चेति। आरोपो न अर्थात् आरोपप्रत्ययो न। तस्य आरोपस्य प्रसंगात् प्रसक्तेरतिव्याप्तेरित्यर्थः। अयमाशयः। यदि आरोपः अभेद एक एव, न तयोर्भेदस्तर्हि रूपकस्य अतिशयोक्तेश्च परस्परं भेदो नेति।

अभेदः सादृश्यमूलक एकः। सादृश्यामूलको द्वितीयः। तत्र द्वितीयः शुद्धाभेदप्रत्ययः इमावभिन्नावित्याकारः। न तु इमौ सदृशौ सन्तावभिन्नाविति।

अत्र प्रसंगे "यस्य सम्बन्धिनि यत्प्रतियोगिकसम्बन्धशालिनि यस्य सम्बन्धिनः यत्प्रतियोगिकसम्बन्धवतोऽभेदः तस्मिन् एकसम्बन्धप्रतियोगिनि तस्य द्वितीय-

## बालक्रीड़ा

अलग भेदों में गणना नहीं है। आरोप्यमाणों उपमानों की माला चमत्कारविशेषशाली है अतः उसकी गणना की जाती है।

अब यहाँ एक विचार प्रस्तुत करते हैं कि श्लेषमूलक परम्परा के नहीं बनने से श्लिष्ट परम्परित रूपक नहीं हो सकता है। इस तरह प्रश्न लिखकर समाधान लिखेंगे। अस्तु।

"कमलावासकासारः" इत्यादि श्लिष्ट परम्परित रूपक में एक आरोप दूसरे आरोप का उपाय कैसे हो सकता है। क्योंकि यहाँ श्लेष के द्वारा कमलों का आवास याने कमलों के रहने की जगह ही कमला के रहने की जगह इनमें केवल अभेद प्रतीत होता है किन्तु एक में दूसरे का आरोप प्रतीत नहीं होता है। आरोप के लिए विषय एवं विषयी का स्वतन्त्र अर्थात् पृथक्-पृथक् निर्देश अपेक्षित है। यह मान नहीं सकते कि शुद्ध अभेद प्रतीति ही आरोप है। ऐसा माने जाने पर अर्थात् विषय एवं विषयी का पृथक्-पृथक् निर्देश किये बिना अभेद प्रतीति होना ही आरोप है तब तो विषय की निगरणात्मिका अर्थात् जहाँ विषय का पृथक् निर्देश नहीं किया गया है ऐसी अतिशयोक्ति में भी आरोप की प्रसक्ति हो जायगी।

राजनि कासारारोपो राजसंबन्धिनि लक्ष्म्याश्रयत्वे कासारसंबन्धिसरोजाश्रयत्वाभेदारोपेण समर्थयितुं शक्यः। श्लेषेण तु पुनर्लक्ष्म्याश्रयत्वसरोजाश्रयत्वयोरभिन्नत्वेन प्रत्ययादभिन्नधर्मनिबन्धनो राजकासारयोरप्यभेदप्रत्ययः स्यात् न तु राजविषये कासारविषयिकस्यारोपस्य प्रकृतस्य सिद्धिः। इमावभिन्नावित्याद्याकारस्य शुद्धाभेदप्रत्ययस्याप्रकृतत्वात्प्रागुक्त आरोपो मृग्यः। स च न श्लेषसाध्य इति सत्यम्। श्लेषेण शुद्धाभेदप्रतीतौ सत्यां प्रकृतारोपसमर्थनायान्तरा मानसस्य राजसंबन्धिनि कासारसंबन्ध्य-

## मधुसूदनी

सम्बन्धप्रतियोगिनोऽभेदः" इत्यर्थः शुद्धाभेदप्रत्ययेन शुद्धाभेदप्रत्ययपदेन विवक्षितः। इत्यतः। लक्ष्म्याश्रयत्वे लक्ष्म्या आश्रयः कमलम्। लक्ष्मीः पद्मालया पद्मेत्यमरकोषात्। लक्ष्म्याश्रयत्वं कमलत्वं नाम कमलरूपाश्रयनिष्ठा लक्ष्मीरेव सा च राजसम्बन्धिनी। एवमेव कासारसबम्धि सरोजम्। तस्य आश्रयः कासारः। कासाररूपाश्रयनिष्ठं सरोजमेव कमलमेव तच्च कासारसम्बन्धि एव। ततश्च लक्ष्मीः कमलमिति कमलाभिन्ना लक्ष्मीरित्यभेदारोपेण राजनि कासारारोपः समर्थयितुं शक्यः न च शक्य इत्यन्वयः। ननु नात्रान्यारोपस्य प्रसरः अत्र तु श्लेषः। श्लेषे पुनरिति स्पष्टार्थः। अन्तरा शुद्धाभेदस्य राजनि कासारारोपस्य च मध्ये। मानसः सम्बन्धिनोरभेदारोपः कल्पनीयः।

ननु श्लिष्टपरम्परितरूपके तथा सादृश्यमूलकत्वस्य कल्पनान्नानुपपत्तिश्चेत्तर्हि

## बालक्रीड़ा

अगर कहें कि शुद्ध अभेद प्रत्यय पद का यहाँ यह अर्थ है कि जिसके सम्वन्धी का जिसके सम्वन्धी में अभेद होता है उसका उसमें अभेद होता है। अतः "कमलावासकासारः" इसमें राजा में कासार के आरोप का समर्थन राजा की प्रिया लक्ष्मी के आवास में कासार के (उत्पद्यमानत्वेन) सम्वन्धी सरोज के आवास के आभेदारोप से किया जा सकता है। इस पर कहते हैं कि इस तरह समर्थन नहीं किया जा सकता है। क्योंकि श्लेष से तो लक्ष्मी का वास और कमलों का आवास ये दोनों अभिन्न है यह प्रतोति होती है। अतः इस अभिन्न प्रतीति रूप अभिन्न धर्म के वदौलत राजा और कासार में अभेद की एकता की प्रतीति हो सकती है न कि विषय उपमेय राजा में विषयी उपमान कासार का आरोप–जो कि प्रकृत है–की सिद्ध हो सकती है। क्यों कि शुद्धाभेद प्रत्यय का आकार है यह दोनों एक हैं अर्थात् इन दोनों में अभेद है। और यह अभेद अप्रकृत होन से प्रागुक्त अपेक्षित आरोप मृग्य है। इसलिए कहा कि एक में दूसरे के आरोप का समर्थन श्लेष साध्य नहीं है।

उत्तर देते हैं कि सत्य है। इतना तो आप मानते हैं कि श्लेष से शुद्ध अभेद की प्रतीति होती हैं। तव उसके हो जाने पर प्रकृत आरोप के समर्थन के लिए समर्थक एवं समर्थ्य के वीच में मानस राजसम्वन्वी में कासार सम्वन्धी के अभेदारोप की कल्पना की जा सकती है अतः कोई अनुपपत्ति नही है। इस पर प्रश्न होता है कि यदि ऐसी कल्पना

भेदारोपस्य कल्पनान्नानुपपत्तिः। कथं तर्हि परम्परितरूपके 'सौजन्य-चन्द्रिकाचन्द्रो राजा' इत्यादौ रूपकत्वम्। अभेदारोपस्य सत्त्वेऽपि तस्य सादृश्यमूलकत्वाभावात्। इति चेत्, न। समर्थकारोपेण धर्मैक्यसंपादने सादृश्यस्य निष्प्रत्यूहत्वात्। स्यादेतत्। सौजन्यचन्द्रिकाचन्द्र इत्यत्र तत्पुरुषावयवे समानाधिकरणतत्पुरुषे चन्द्रिकायामभेदसंसर्गेण सौजन्यस्य विशेषणत्वात्प्रतीयमानश्चन्द्रिकागतः सौजन्याभेदो न राजनि चन्द्राभेदात्मकं रूपकं समर्थयितुं प्रभवति। यत्संबन्धिनि यत्संबन्ध्यभेद इत्यादि प्रागुक्त-न्यायात्। अपि तु सौजन्ये विषये चन्द्रिकाभेदः। यथा—'सौजन्यं ते

### मधुसूदनी

अश्लिष्टपरम्परितरूपके "सौजन्ये" इत्यादौ कथं रूपकत्वम्। मध्ये तथा कल्पयितु-मशक्यत्वात्। इति प्रश्नः। उत्तरति-समेति। समर्थकारोपेण धर्मैक्यसम्पादने एकधर्मेण प्रयोज्यस्य सादृश्यस्य सम्पत्तौ उक्तरूपकस्य निष्प्रत्यूहं सिद्धिः। एतत् रूपकं स्यात्। चेत् य-सम्बन्धिनीति न्यायात् चन्द्रिकागतः सौजन्याभेदो राजनि चन्द्रा-भेदात्मकं रूपकं समर्थयितुं प्रभवेत्। स एव न प्रभवति। अपि तु सौजन्ये विषये चन्द्रिकाभेदः तादृशं रूपकं समर्थयितुं प्रभवति। यथा सौजन्यं ते इत्यत्र।

स च सौजन्ये विषये चन्द्रिकाभेदश्च तत्पुरुषावयवे समानाधिकरणतत्पुरुषे चन्द्रिकायां पदार्थेऽभेदसंसर्गेण पूर्वपदार्थस्य सौजन्यस्य विशेषणत्वात् उपपादयितुं दुःशक एव।

ननु चन्द्रिकायां सौजन्याभेदबोधे सौजन्ये चन्द्रिकाभेदोऽपि भासते स्वस्य स्वाभिन्नाभिन्नत्वात्। ततश्च अनयोरभेदयोः समानवित्तिवेद्यत्वात् एकेन ज्ञानेन ज्ञेयत्वात्। इति न च वाच्यम्। उभयत्र स्वं पदार्थः सौजन्ये चन्द्रिकाभेदः। स्वस्मात् सौजन्ये चन्द्रिकाभेदात् अभिन्नः चन्द्रिकायां सौजन्याभेदः। ततः अस्मादभेदात् अभिन्नः सौजन्ये चन्द्रिकाभेदोऽपि। इति संगतिः। कुतो न वाच्यमित्यत्र हेतुमाह—

### बालक्रीड़ा

करेंगे तब "सौजन्य चन्द्रिका चन्द्रः" इस अश्लिष्ट परम्परित रूपक में रूपकत्व का मूल क्या। क्योंकि जैसे मुखं चन्द्रः इस रूपक में रूपकत्व का कारण सादृश्य है उसी तरह राजा कासारः इस रूपक में भी रूपकत्व का मूल सादृश्य अपेक्षित है। मुखं चन्द्रः में तो सादृश्य का प्रयोजक आह्लादकत्व रूप साधारण धर्म प्रसिद्ध है अतः तत्प्रयोज्य सादृश्य सिद्ध है किन्तु यहाँ प्रकृत में वह सब नहीं है। उत्तर। समर्थक आरोप से साधारण धर्म की सम्पत्ति हो जाने पर तत्प्रयोज्य सादृश्य निर्विघ्न मिल जाता है। इस पर कहते हैं कि यह हो सकता है यदि जिसके सम्बन्धी में जिसके सम्बन्धी का अभेद इस न्याय से चन्द्रिकागत सौजन्याभेद; राजा में चन्द्राभेदात्मक रूपक के समर्थन करने में प्रभु हो सके। वह अभेद ही प्रभु नहीं हो रहा है। राजा में चन्द्राभेद के समर्थन में प्रभु यदि हो सकता है तो सौजन्य विषय में चन्द्रिका का अभेद

धराधीश ! चन्द्रिका त्वं सुधानिधिः ।' स च दुरुपपाद एव । न चानयोः समानवित्तिवेद्यत्वान्नानुपपत्तिरिति शक्यं वक्तुम् । प्रात्यक्षिके हि सामग्र्या-स्तुल्यत्वात्तत् । न तु शाब्दबोधे व्युत्पत्तिवैचित्र्यनियन्त्रिते । एवमन्य-

## मर्मप्रकाशः

काशः खलः' इत्यादौ वक्ष्यमाणान्योन्याश्रयोऽपि न । खलाकाशरूपकोपयुक्तकारुण्यकुसुमयो-रभेदप्रत्ययस्येच्छाधीनाहार्यस्य संभवेन तावतैवोपपत्तेः । न तु समर्थकारोपे सादृश्यमूलकत्व-मावश्यकमित्यनुपदमेवोक्तम् । एतेन स्यादेतदित्यादिना सौजन्यचन्द्रिकाचन्द्र इत्यत्रत्यपूर्व-पक्षसमाधाने परास्ते । अस्मदुक्तरीत्या पूर्वपक्षस्यैवाभावादिति । समर्थकारोपेण चन्द्रिकायां सौजन्याभेदारोपेण चन्द्रिकाभेद इति । तदात्मकरूपकं समर्थयितुं प्रभवतीत्यस्यानुषङ्गः । स च स तु सौजन्यचन्द्रिकेत्यत्र । अनयोरभेदयोः । तत्तुल्यवित्तिवेद्यत्वम् । अन्यत्रापि उदाहृताति-

## मधुसूदनी

प्रात्यक्षिके इति । प्रात्यक्षिके हि ज्ञाने विषयसामग्र्या इन्द्रियसन्निकर्षादेः । तत् समान-वित्तिवेद्यत्वम् । अस्तु नाम । व्युत्पत्तेराकांक्षादिकस्य वैचित्र्येण नियन्त्रिते शाब्द-बोधे तु न समानवित्तिवेद्यत्वनियमः । एवं सौजन्येतिवत् । अन्यत्र समुद्यन्महिम-दिनमणेः प्राचीसंध्येत्यादिषु । शुद्धे अश्लिष्टे ।

अत्र वदन्तीति । तत्पुरुषावयवभूते कर्मधारये समासे पूर्वपदार्थस्य अभेद संसर्गेण उत्तरपदार्थविशेषणत्वे उपमेये उपमानाभेदो न संभवति । किन्तु अत्र कर्मधारये समासे अभेदो विशेषणस्य संसर्गः । स चाभेदः । स्वमभेदः । अभेदे प्रतियोगी चन्द्रः अनुयोगि मुखम् । एवं च वाक्ये समासे च उभयत्रापि । वाक्ये मुखं चन्द्र इत्यादौ प्रतियोगित्वमुखः । समासे मुखचन्द्र इत्यादौ अनुयोगित्वमुखः । वाक्ये उद्देश्यं मुखं विशेष्यम् । विधेयः चन्द्रो विशेषणम् । विधेयं तु विशेषणमित्युक्तेः ।

## बालक्रीड़ा

जैसे "हे वराधीश ? तुम्हारा सौजन्य चन्द्रिका है अतः तुम चन्द्र हो" इसमें होता है । इसलिए तत्पुरुष के एक भद कर्मधारय तत्पुरुष में सौजन्यरूप पूर्वपदार्थ, चन्द्रिकारूप उत्तर पदार्थ में अभेद संसर्ग से विशेषण है जिसके फलस्वरूप सौजन्य विषय में चन्द्रिका के अभेद की उपपत्ति करना कठिन है ।

प्रश्न—यदि चन्द्रिका में सौजन्य का अभेद मालूम पड़ता है तो समान ज्ञान से ज्ञेय होने के कारण सौजन्य में भी चन्द्रिका का अभेद मालूम हो ही जाता है । क्योंकि स्वाभिन्न से अभिन्न ही स्व होता है । दोनों जगहों में स्व पदार्थ है सौजन्य में चन्द्रिका भेद । जब सौजन्य गत चन्द्रिकाभेद से चन्द्रिकागतसौजन्याभेद अभिन्न है । तब सौजन्यगतचन्द्रिकाभेद भी चन्द्रिकागतसौजन्याभेद से अभिन्न है । उत्तर । ऐसा आप नहीं कह सकते हैं । क्योंकि प्रत्यक्ष स्थल में ज्ञान के साधन इन्द्रियसन्निकर्षादिसामग्री तुल्य होते हैं । किन्तु व्युत्पत्ति आकांक्षा, योग्यता, सन्निधि एवं तात्पर्य से नियन्त्रित शब्दबोध में ज्ञान के साधन तुल्य नहीं

त्रापि कथं समासगतशुद्धपरम्परिते द्वयोरारोपयोर्निर्वाह्यनिर्वाहकभावः। कथं च शशिपुण्डरीकमित्यादौ पुण्डरीकरूपकमुच्यते। पुण्डरीकाभेदात्मकस्य पुण्डरीकताद्रूप्यस्याभानात्। शश्यभेदप्रत्ययाच्च पुण्डरीकं शशीत्यत्रेव शशिरूपकमुच्यताम्। एवं नीलिमदिव्यतोये, तारावलीमुकुलमण्डलमण्डिते; षोडशकलादलमङ्कभृङ्गमित्यत्राप्युत्तरपदार्थे पूर्वपदार्थाभेदस्यैव भानात्पूर्व-पदार्थरूपकापत्तिः।

तथा—

'सुविमलमौक्तिकतारे ? धवलांशुकचन्द्रिकाचमत्कारे ?।
वदनपरिपूर्णचन्द्रे ? सुन्दरि ? राकासि नात्र संदेहः॥'

इत्यत्र सुन्दर्यां विषयभूतायां राकातादात्म्यावगमात्स्फुटमेव तावद्राकारूपकम्। तत्र चरणत्रयगतानि रूपकाणि राकारूपकानुगुणतयोपात्तान्यपि

### मर्मप्रकाशः

रिक्तस्थलेऽपि। उदाहृतस्थल एव शङ्कते—कथं चेति। चस्त्वर्थे।

### मधुसूदनी

समासे पुनरुक्तप्रकारेण पूर्वपदार्थः मुखं विशेषणम्। उत्तरपदार्थः चन्द्रो विशेष्यम्। एतदेव विशेष्यविशेषणभावस्य वैचित्र्यम्। तस्मात्कारणात् कदाचित्तन्मुखः। कदाचिदेतन्मुख इत्युक्तम्। एतत्सर्वमस्ति तथापि समासे मुखचन्द्र इत्यत्र मुखाभेदस्तु न संसर्गः। अपितु चन्द्राभेद एव संसर्गः। अन्यथा चन्द्ररूपकानापत्तिः।

### बालक्रीड़ा

होते हैं। इस प्रकार समासगत अश्लिष्ट परम्परित में कैसे दो आरोपों में निर्वाह्य निर्वाहक भाव हो सकता है। अतः कैसे शशिपुण्डरीक में पुण्डरीक रूपक कहते हैं। क्योंकि पुण्डरीक के अभेद रूप पुण्डरीकताद्रूप्य का भान यहाँ नहीं होता है। प्रत्युत शशि के अभेद प्रत्यय से पुण्डरीकं शशी इस वाक्य की तरह शशिरूपक कहना चाहिए। इस तरह "नीलिम दिव्यतोयें, तारावलीमुकुलमण्डलमण्डिते, षोडशकलादलमङ्कभृङ्गम्" इन सभी जगहों में भी उत्तर पदार्थ में पूर्व पदार्थ का ही अन्वय मालूम पड़ता है अतः पूर्वपदार्थरूपक की आपत्ति लग जाती है। और

हे सुविमलभौक्तिकरूप तारों वाली ? हे धवलांशुकरूप चन्द्रिका के चमत्कार से युक्त ? हे वदनरूप पूर्णचन्द्र विशिष्ट सुन्दरि ? तुम पूर्णिमा हो इसमें कोई सन्देह नहीं है।

यहाँ विषयभूत सुन्दरि में राकातादात्म्य की अवगति होती है अतः राकारूपक स्पष्ट ही प्रतीत होता है। यहाँ तीन चरणों के रूपक, राकारूपक के अनुकूल उपात्त होने पर भी

नानुगुण्यमाचरन्ति। ताराचन्द्रिकापूर्णचन्द्राणां मौक्तिकधवलांशुकवदनाभिन्नत्वे सिद्धेऽपि न सुन्दर्यां राकातादात्म्यं सेद्धुमीष्टे। प्रत्युत विपरीतं राकायां सुन्दरीताद्रूप्यम्। तेषां राकासंबन्धित्वात्सर्वमेव व्याकुलमिति।

अत्र वदन्ति—अभेदस्तावद्विशेषणस्य संसर्गो भवति। स च क्वचिदनुयोगित्वमुखः क्वचिच्च प्रतियोगित्वमुखः। विशेषणविशेषभावस्य वैचित्र्यात्। तेन यथा मुखं चन्द्र इत्यादौ वाक्यगते रूपके स्वप्रतियोगिनश्चन्द्रस्य स्वानुयोगिनि मुखे विशेषणताया निर्वाहकस्तथैव समासगते मुखचन्द्र इत्यादौ रूपके स्वानुयोगिनो मुखस्य स्वप्रतियोगिनि चन्द्रे विशेषणतायाः। अतः स्वप्रतियोगिकाभेद इव स्वानुयोगिकाभेदोऽपि विशेषणस्य संसर्गः। एवं च स्वप्रतियोगिकाभेद एव विशेषणसंसर्गो न तु स्वानुयोगि काभेद इति तु दुराग्रहः इति। किन्तूभयत्रापि वस्तुतश्चन्द्राभेद एव संसर्गः। न तु मुखचन्द्र इत्यत्र मुखाभेदः संसर्गः। तथासति चन्द्ररूपकानापत्तेः, मुखरूपकत्वापत्तेश्च। मुखाभेदे हि संसर्गे परिणाम एव।

### मर्मप्रकाश

इष्टे तदभिन्नत्वमिति शेषः। सुन्दरीताद्रूप्यं तदभिन्नत्वं सेद्धुमीष्टे इत्यस्यानुषङ्गः। क्वचित्समासगते। क्वचिच्च वाक्यगते। एवव्यावर्त्यमाह – न त्विति। इत्यत्र समासगते।

### मधुसूदनी

तथासति मुखाभेदरूपसंसर्गसद्भावे सति। दुराग्रहो निर्बीजत्वाद्धेतोरिति शेषः। स्वं चन्द्रः प्रतियोगी यस्याभेदस्य। स्वं मुखमनुयोगी यस्येति बहुव्रीहौ कप्।

### बालक्रीड़ा

अनुकूल नहीं हो रहे हैं। उसका कारण है कि तारा, चन्द्रिका एवं पूर्णचन्द्र के मौक्तिक, धवलांशुक एवं वदन से अभिन्न होने पर भी सुन्दरी में राका रूपक को सिद्ध करने में उनकी सामर्थ्य नही है। प्रत्युत इसके विपरीत राकासम्बन्धी होने से राका में सुन्दरी ताद्रूप्य ही को सिद्ध करने की उनमें सामर्थ्य है। फलतः ऐसा सिद्धान्त मानने पर सभी सिद्धान्त व्याकुल हो जायँगे।

यहाँ पर कहते हैं कि अभेद, विशेषण का ही संसर्ग होता है। वह अभेद संसर्ग विशेषण विशेष्य भाव के वैचित्र्य के कारण कहीं पर अनुयोगी मुख से प्रतीत होता है और कहीं वह प्रतियोगी मुख से। जैसे वह अभेद संसर्ग मुखं चन्द्रः इस वाक्यगत रूपक में अभेदानुयोगी मुख में अभेद प्रतियोगी चन्द्र की विशेषणता का निर्वाहक है वैसे ही मुख चन्द्रः इस समासगत रूपक में भी अभेदप्रतियोगी चन्द्र में अभेदानुयोगी मुख की विशेषणता का निर्वाहक

एवं च सौजन्यचन्द्रिकेत्यादौ वस्तुतः सौजन्याभेदो न सौजन्यस्य चन्द्रिकाविशेषणस्य संसर्गः, अपि तु चन्द्रिकाभेद एव। तथा च सौजन्यनिष्ठाभेदप्रतियोगिनी चन्द्रिकेति पर्यवसितेऽर्थे भङ्ग्यन्तरेण सौजन्ये चन्द्रिकाभेदसिद्धौ जातायां राजनि चन्द्राभेदोऽपि निष्पद्यत इति परम्परिते नानुपपत्तिः। शशिपुण्डरीकमित्यादावपि शशिनिष्ठाभेदप्रतियोगि पुण्डरीकमिति

मर्मप्रकाशः

मुखाभेदो मुखप्रतियोगिकाभेदः। नानुपपत्तिरिति। रूपकत्वस्येत्यादिः।

मधुसूदनी

ननु न विद्मो वयं किमर्थमयम्; अथ कथमित्यादिः सर्वं सुस्थमित्यन्तः क्लेशः राजपण्डितेन सोढः। अस्तु। चिन्त्यते। यथा चन्द्रो मुखमिति नीलो घट इति च प्रयोगो दुष्ठु उद्देश्यविधेयनियमभञ्जनात् किन्तु मुखं चन्द्र इत्येव घटो नील इत्येव प्रयोगः सुष्ठु। तथैव चन्द्रमुख इति प्रयोगस्तत्पुरुषावयवे कर्मधारये समासेऽसाधुः पूर्वनिपातनियमभञ्जनात्। (बहुव्रीहौ तु साधुरेव स प्रयोगः) किन्तु मुखचन्द्र इत्येव प्रयोगः साधुः। एवमेव प्रयोगविषयकनियमवदेष अलंकारविषयकनियमोऽपि अस्ति। तथाहि—ययोरेव इव यथा तुल्यसदृशसुहृदादिशब्दप्रयोगे उपमा तयोरेव इवादि निरासे एकत्रान्यारोपे रूपकमिति नियमः। अन्यच्च यथा उपमायां वाक्ये वा समासे वा ययोरेव सादृश्यनिरूपितानुयोगिप्रतियोगिभावः तथैव रूपकेऽपि व्यस्ते वा समस्ते वा तयोरेव अभेदनिरूपितानुयोगिप्रतियोगिभावः। न स्वल्पोऽपि विपर्यासः। नायमनयोरलंकारयोरेव, अपितु सर्वत्रालंकारे लोके शास्त्रे च। अनयोर्नियमयोरिव

बालक्रीड़ा

है। अतः स्वप्रतियोगिक अभेद की तरह स्वानुयोगिक अभेद भी विशेषण का संसर्ग है। क्योंकि वाक्य में उद्देश्य विधेय भाव रहता है। तदनुसार उद्देश्य मुख है जो विशेष्य है। "विधेयं तु विशेषणम्" इस न्याय से विधेय जो चन्द्र है वह विशेषण है। समास में पूर्व पदार्थ मुख विशेषण है। उत्तर पदार्थ चन्द्र विशेष्य है। यही यहां विशेष्य विशेषण भाव का वैचित्र्य है। प्रति दशा में प्रतियोगी चन्द्र ही रहेगा और अनुयोगी मुख ही। यह सिद्धान्त स्थिर है। किन्तु इसमें प्रतियोगी के द्वारा मिला हुआ ही अभेद विशेषण का संसर्ग है और अनुयोगी के द्वारा मिला हुआ अभेद विशेषण का संसर्ग नहीं है यह तो दुराग्रह है। यह कहना आपाततः ठीक है किन्तु वास्तव में दोनों जगहों वाक्य एवं समास में प्रतियोगी चन्द्र चन्द्र का ही अभेद विशेषण का संसर्ग है। समास में मुखाभेद संसर्ग नहीं है। यदि समास में मुखाभेद स्वानुयोगिकाभेद को संसर्ग मानेंगे तो चन्द्र रूपक नहीं होगा मुख रूपक होगा। मुखाभेद में तो परिणाम होता है रूपक नहीं। अतः सौजन्य चन्द्रिका इत्यादि में वस्तुतः सौजन्याभेद चन्द्रिका के विशेषण सौजन्य का संसर्ग नहीं है अपितु चन्द्राभेद ही उसका संसर्ग है।

पर्यवसितेऽर्थे पुण्डरीकाभेदस्य भानात्पुण्डरीकरूपकमव्याहतम् । एवमन्येष्व प्यवयवरूपकेषु बोध्यम् । एवं सुविमलमौक्तिकतारे इत्यादावपि ताराद्यभेद एव मौक्तिकादिगतो मौक्तिकादीनां तारादिविशेषणानां संसर्गीभवन्राकारूपकस्य समर्थको भवतीति सर्वं सुस्थम् ।

## मर्मप्रकाश

सर्वं सुस्थमिति । अन्ये तु "तुल्यवित्तिवेद्यतया चन्द्राभेदस्यापि मुखे प्रतीतेरार्थं चन्द्ररूपकम् । शाब्दं व्यस्ते । एवं मुखाभेदस्य समासशास्त्रप्रवृत्त्युपयोगितयाङ्गीकारेऽप्यतात्पर्यविषयत्वान्न तमादाय मुखरूपकव्यवहारः । किं चात्र पूर्वपदार्थप्रधानमयूरव्यंसकादिसमासेन चन्द्रपुण्डरीकाद्यभेदस्यैव मुखशयादौ भानान्न दोषः । अत एव 'विशेष्यस्य पूर्वनिपातार्थमिदम्' इति भाष्यकृतः ।

## मधुसूदनी

विधेयं गुणः विशेषणमिति; उद्देश्यं प्रधानं विशेष्यमित्यपि नियमः । अथ च उद्देश्यभूतम् उपमेयं विशेष्यमेव, विधेयभूतमुपमानं विशेषणमेव । एवं बहुभिर्नियमैः तथा अभेदस्तावद्विशेषणस्यैव संसर्ग इति स्वप्रतियोगिकाभेद एव विशेषणसंसर्गो न तु स्वानुयोगिक इति । यथा मुखमनुयोगि एव चन्द्रः प्रतियोगी एव इति नियमाच्च । मुख प्रतियोगिकाभेदस्य भानमेव न, ततश्च मुखाभेद रूपकापत्तिरपि नेति सिद्धान्त आचार्याणाम् ।

ततश्च कचित्समासेऽनुयोगित्वमुखः कचिच्च वाक्ये प्रतियोगित्वमुख इति दुराग्रह इति चोक्तेरलंकारशास्त्रीयाचार्यसिद्धान्तेषु व्याकुलीभावसम्पादने दुराग्रह एव फलं नात्यत्किंचिदिति ।

अन्यच्च भगवन् ? "कथं च शशिपुण्डरीकमित्यादावित्यारभ्य तेषां राकासम्बन्धित्वात् सर्वमेव व्याकुलमिति" पर्यन्तलेखे कोऽयं व्यामोहः । तथा हि—उपमायाम्=उपमितं व्याघ्रादिभिरिति समासः विशेष्यस्य पूर्वनिपातार्थ; रूपके मयूर

## बालक्रीडा

इसलिए सौजन्यनिष्ठ अभेद की प्रतियोगिनी चन्द्रिका है इस अर्थं के सम्पन्न होने पर भी प्रकारान्तर से अर्थात् (समारोप्यस्य रूपेण विषयो रूपवान् भवेत् । विषयस्य तु रूपेण समारोप्यं न रूपवत्) समारोप्य के रूप से ही विषय रूपवान् होता है विषय के रूप से समारोत्य रूपवान् नहीं होता है इस सिद्धान्त से सौजन्य में चन्द्रिका के अभेद की सिद्धि होने पर राजा में चन्द्राभेद भी निष्पन्न हो जाता है । तब कोई अनुपपत्ति नहीं है । "शशिपुण्डरीकम्" इत्यादि में भी शशिनिष्ठाभेदप्रतियोगी पुण्डरीक है इस अर्थ के सम्पन्न होने पर पुण्डरीक का अभेद ही मालूम होता है अतः पुण्डरीकरूपक अव्याहत है । यही प्रकार अन्य अन्य अवयव रूपकों में भी समझना चाहिए । इस तरह सुविमल मौलिकतारें इत्यादि में भी मौक्तिकादिगत ताराद्यभेद ही तारादि के विशेषण मौक्तिकादि का संसर्ग बनकर राका रूपक का समर्थक होता है । अतः सब ठीक है ।

सोऽयमभेदो यत्रानुयोगित्वमुखस्तत्र रूपकस्य विधेयता। यत्र च प्रतियोगित्वमुखस्तत्रानुवाद्यत्वमिति दिक्।

### मर्मप्रकाशः

एवं च वाच्यतापि चन्द्ररूपकस्य" इत्याहुः। अपरे तु "चन्द्रनिष्ठाभेदश्चन्द्रप्रतियोगिकाभेदश्च रूपकम्। अत एव 'तद्रूपकमभेदो य उपमानोपमेययोः' इत्युक्तं प्रकाशे। यद्वा विषयिनिष्ठाभेदप्रतियोगितया यत्र विषयस्य रञ्जनमित्येव लक्षणार्थः। एवं च मुखप्रतियोगिकाभेदवांश्चन्द्र इत्येवं बोधेऽपि न क्षतिः" इत्याहुः। तत्र पदार्थरूपकाणां मध्ये।

### मधुसूदनी

व्यंसकादयश्चेति समासोऽपि तथैव। एवं च शशिपुण्डरीकमिति नीलिमेति तारेति षोडेति सुविमेति प्रभृतिषु सर्वत्र पूर्वपदार्थे विशेष्य एव उत्तरपदार्थरूपविशेषणाभेदस्यैव भानात् उत्तरपदार्थरूपकमेव प्रसिध्यति न तु भवदुक्तं संगतिरहितम् "उत्तरपदार्थे पूर्वपदार्थाभेदस्यैव भानात् पूर्वपदार्थरूपकमिति" शास्त्रव्यवहाराभ्यां विरोधात्।

सोऽयमभेदो यत्रानुयोगित्वमुखस्तत्र रूपकस्य विधेयता यत्र प्रतियोगित्वमुखस्तत्रानुवाद्यत्वमिति कोक्तिः। किमत्र विनिगमकम्। एवं हि वाक्ये क्वचिदपि

### बालक्रीड़ा

वह अभेद जहाँ अनुयोगी के द्वारा उपस्थित होता है वहाँ रूपक विधेय है और जहाँ प्रतियोगी के द्वारा उपस्थित होता है वहाँ रूपक अनुवाद्य है। यह एक विचार का मार्ग है।

यहाँ हमारे समझ में नही आया कि अथ कथमित्यादि से सर्वं सुस्थं पर्यन्त क्लेश (पण्डितों के राजा) राजपण्डित ने क्यों सहन किया जब कि नियम सब बने हुए हैं। खैर। हम भी विचार करते हैं। जैसे चन्द्रो मुखम्, नीलो घटः ये प्रयोग उद्देश्य विधेय भाव के नियम के टूट जाने से दुष्ट माने जाते हैं और मुखं चन्द्रः घटो नीलः ये प्रयोग निर्दुष्ट हैं। उसी तरह चन्द्रमुखः यह प्रयोग भी तत्पुरुषावयव कर्मधारय समास में असाधु है क्योंकि इसमें पूर्वनिपात के नियम का भंग हो रहा है। किन्तु मुखचन्द्रः यही साधु है। इस प्रयोग विषयक नियम की तरह अलंकार विषयक नियम भी हैं। जैसे जिन दो अर्थों में इव, यथा, तुल्य, सदृश एवं सुहृदादि शब्दों के प्रयोग से उपमा होती है उन्हीं दो अर्थों में इवादि के निरास होने पर एक में दूसरे के आरोप स्थल में रूपक होता है यह नियम है। और जिस प्रकार उपमा बोधक वाक्य एवं समास में जिन दो अर्थों में सादृश्य निरूपित अनुयोगि प्रतियोगिभाव होता है उसी तरह रूपक बोधक वाक्य एवं समास में उन्हीं दो अर्थों में अभेदनिरूपित अनुयोगिप्रतियोगिभाव होता है। थोड़ा सा भीं विपर्यय नही है। तथा ये नियम इन्हीं दो अलंकारों में है यह बात नहीं है। अपितु क्या अन्य शास्त्र, क्या लोक, क्या अलंकारशास्त्र सभी जगह यह नियम है। इनकी तरह विधेय अप्रधान है विशेषण है; उद्देश्य प्रधान है विशेष्य है यह भी नियम है और उद्देश्यभूत उपमेय विशेष्य ही होता है। विधेयभूत उपमान विशेषण ही होता है। इस प्रकार इन बहुत से नियमों तथा अभेद विशेषण का ही संसर्ग होता है इस नियम से भी विशेषण का संसर्ग अभेद, विशेषणीभूत प्रतियोगी से ही उत्थाप्य होता है। विशेष्य अनुयोगी से उत्थाप्य

## मधुसूदनी

रूपकस्य विधेयता न स्यादेव। तत्राभेदस्य प्रतियोगिद्वारोपस्थितेरनुवाद्यत्वमेवेति अथ च अनुयोगित्वमुखेऽभेदे परिणाम एव न तु रूपकमिति च।

## बालक्रीड़ा

नही होता है। यही सिद्धान्त आचार्यों का है। तब कहीं पर समास में अभेद की उपस्थिति के लिए अनुयोगित्व ही मुख है द्वार है और कहीं पर वाक्य में उसके लिए प्रतियोगित्व ही मुख है द्वार है। कहने और विशेषण संसर्ग अभेद प्रतियोगि से ही, समुत्थाप्य होता है अनुयोगी से नही यह प्राचीनों का दुराग्रह है कहने का भी अलंकार शास्त्रीय आचार्यों के सिद्धान्तों में व्याकुलीभाव समझाने में दुराग्रह ही फल है और कुछ नही है।

और भी एक बात है कि "कथं च शशिपुण्डरीकमित्यादौ यहां से लेकर तयां राका सम्बन्धित्वात् सर्वथैव व्याकुलम्" यहां तक लिखने के लिए कौन व्यामोह हुआ है।

उपमा में उपमितं व्याघ्रदिभिः के द्वारा जो समास होता है वह विशेष्य के पूर्व निपात के लिए होता है। रूपक में मयूर व्यंसकादि समास भी उसी तरह का है। इस तरह शशिपुण्डरीकं, नीलिमतारा, षोडश, सुविमल वगैरह जगहों में भी विशेष्य पूर्व पदार्थ में उत्तर पदार्थ रूप विशेषण का ही अभेद प्रतीत होता है 'अतः उत्तर पदार्थ रूपक ही सिद्ध है।

यहाँ अत्र वदन्ति के बाद की कुछ पंक्तियाँ मुद्रण दोष से इधर उधर हो गई हैं। उनकी व्यवस्था इस प्रकार है।

अभेद स्तावद्विशेषणस्य संसर्गः। स च क्वचित्प्रतियोगित्वमुखः क्वचिदनुयोगित्व मुखः। विशेष्यविशेषणभावस्य कामचारात्। तेन यथा मुखं चन्द्र इत्यादौ वाक्यगते रूपके स्वप्रतियोगिनश्चन्द्रस्य स्वानुयोगिनि मुखे विशेषणताया निर्वाहकस्तथैव समासगते मुख चन्द्र इत्यादौ रूपके स्वानुयोगिनो मुखस्य स्वप्रतियोगिनि चन्द्रे विशेषणतायाः। अतः स्वप्रतियोगिकाभेद इव स्वानुयोगिकाभेदोऽपि विशेषणस्य संसर्गः। एवं च स्वप्रतियोगिकाभेद एव विशेषणसंसर्गो न तु स्वानुयोगिकाभेद इति तु दुराग्रहः। इति चेत्सत्यम्। किन्तु उभयत्रापि वस्तुतश्चन्द्राभेद एव संसर्गः, न तु मुखचन्द्र इत्यत्र मुखाभेदः संसर्गः। तथासति चन्द्ररूपकानापत्तेः मुखरूपकापत्तेश्च। मुखाभेदे हि संसर्गे परिणाम एव।

इस तरह के पाठ में ही एवं च सौजन्यचन्द्रिकेत्यादि आगे के पाठ की संगति हो सकती है। वह यह अभेद जहां अनुयोगित्व मुख है वहां रूपक विधेय है और जहां प्रतियोगित्व मुख है वहां अनुवाद्य है। यह क्या आपने कहा। ऐसा मानने पर यहां दो दोष हो जाते है। एक तो यह दोष है कि जहां प्रतियोगित्वमुख अभेद है वहां यदि रूपक को अनुवाद्य ही मानेंगे तो वाक्य में कहीं भी रूपक विधेय नहीं होगा। क्योंकि वहां अभेद की उपस्थिति प्रतियोगी के द्वारा ही होती है अतः सर्वथा अनुवाद्य ही होगा। विधेय कभी होगा ही नहीं। दूसरा दोष है कि अनुयोगित्व मुख अभेद में परिणामलंकार ही माना गया है न कि रूपक। अतः संगति रहित आपका यह कथन है कि उत्तर पदार्थ में पूर्व पदार्थ का ही अभेद प्रतीत होता है अतः पूर्व पदार्थ रूपक होता है। क्यों कि ऐसी स्थिति में शास्त्र एवं व्यवहार दोनों का विरोध होता है।

तत्र 'प्राचीसंध्यासमुद्यन्महिमदिनमणेः' इत्यत्रारोप्यमाणयोः परस्पर-सारोपविषययोश्चानुकूल्ये रूपकयोरनुग्राह्यानुग्राहकभावो दर्शितः प्रातिकूल्ये यथा—

'आनन्दमृगदावाग्निः शीलशाखिमदद्विपः ।
ज्ञानदीपमहावायुरयं खलसमागमः ।।'

यथा वा—

'कारुण्यकुसुमाकाशः शान्तिशैत्यहुताशनः ।
यशः सौरभ्यलशुनः पिशुनः केन वर्ण्यते ।।'

एकत्र नाश्यनाशकभावरूपमपरत्र चात्यन्तिकसंसर्गशून्यतारूपं प्रातिकूल्यमुपमानयोस्तथैवोपमेययोश्च । अनुग्राह्यानुग्राहकभावः पुनरारोपयोरविशिष्ट एव ।

### मर्मप्रकाशः

परस्परमित्यस्य मध्यमणिन्यायेनोभयत्रान्वयः । लक्ष्यान्तरदाने बीजमाह—एकत्रेति ।

### मधुसूदनी

परस्परमिति । आरोप्यमाणानुकूल्यमारोपविषययोः, आरोपविषयानुकूल्यमारोप्यमाणयोः ।

आनन्देति कारुण्येति च । अत्र दावाग्निप्रभृतिर्नाशकः मृगादेश्च नाश्यत्वम् । आकाशादौ कुसुमादेरात्यन्तिकसंसर्गरहितत्वम् ।

अनुग्राह्येति । आनन्दादिषु मृगादिरूपकैरेव दावाग्निप्रभृतिषु खलसमागमः समर्थ्यते । इति आरोपविषययोरारोप्यमाणयोरनुग्राह्यानुग्राहकभावः अविशिष्ट एव समान एव ।

### बालक्रीड़ा

यहाँ "प्राची संध्या समुद्यन्महिमदिनमणे:" इसमें आरोप्यमाण और आरोपविषय दोनों में परस्पर में आनुकूल्य है आरोप्यमानों की अनुकूलता आरोप विषयों में है और आरोपविषयों की अनुकूलता आरोप्यमानों में है । अतः यहाँ रूपकों में अनुग्राह्य अनुग्राहक भाव दिखाया है ।

प्रातिकूल्य में जैसे—यह खलों का समागम आनन्द रूपी मृगों के लिए दावानल है । शीलरूपी शाखी के लिए हाथी है । ज्ञान रूपी दीप के लिए महावायु है । यहाँ दोनों में प्रातिकूल्य स्पष्ट है ।

आनन्देति में दावाग्नि प्रभृति नाशक है और मृगादि नाश्य है । और कारुण्येति में आकाशादि में कुसुमादि के आत्यन्तिक संसर्ग का अभाव है । अतः नाश्यनाशकभावरूप

तथा—

'अयं सज्जनकार्पासरक्षणैकहुताशनः ।
परदुःखाग्निशमनमारुतः केन वर्ण्यते ॥'

अत्र रक्षणशमनपदे विरोधिलक्षणया विपरीतार्थबोधके । एवं पदार्थ-रूपकं लेशतो निरूपितमेव ।

वाक्यार्थे विषये वाक्यार्थान्तरस्यारोपे वाक्यार्थरूपकम् । यथाहि विशिष्टोपमायां विशेषणानामुपमानोपमेयभाव आर्थस्तथात्रापि वाक्यार्थ-घटकानां पदार्थानां रूपकमर्थावसेयम् ।

'आत्मनोऽस्य तपोदानैर्निर्मलीकरणं हि यत् ।
क्षालनं भास्करस्येदं सारसैः सलिलोत्करैः ॥'

## मर्मप्रकाश

आद्ये इत्यर्थः । अयं पिशुनः । अर्थावसेयमार्थिकम् । एतल्लक्ष्यमाह—आत्मन इति ।

## मधुसूदनी

तथेति । यथा प्रातिकूल्ये अनुग्राह्यानुग्राहकभावस्तथा विपरीतार्थबोधकेऽपि सः । रक्षणविपरीतं शमनमर्थः पूर्वार्धे, शमनविपरीतं रक्षणमर्थ उत्तरार्धे विपरीतलक्षणया बोध्यते । एवमुक्तदिशा एतावत्पर्यन्तं पदार्थमनुरुध्य निर्दिश्यमानं रूपकं निरूपितम् ।

यथाहीति दृष्टान्तेन समर्थयति वाक्यार्थरूपकम् ।

## बालक्रीड़ा

तथा आत्यन्तिकसंसर्गाभावरूप प्रातिकूल्य जैसे उपमानों में है वैसे ही उपमेयों में भी है । आनन्दादि में मृगादिरूपकों के द्वारा ही दावानल प्रभृति में खलसमागम का समर्थन किया जाता है अतः आरोपविषय एवं आरोप्यमाण में अनुग्राह्य अनुग्राहक भाव समान ही है ।

यह सज्जन रूपी कार्पास की रक्षा करने में एकमात्र हुताशन और दूसरे के दुःखरूपी अग्नि के शमन करने में वायु है इसका कौन वर्णन कर सकता है ।

जैसे प्रातिकूल्य में अनुग्राह्य अनग्राहक भाव होता है वैसे ही विपरीत अर्थो में भी होता है । रक्षण के विपरीत शमन अर्थ पूर्वार्ध में है और शमन के विपरीत रक्षण अर्थ उत्तरार्ध में है जो विपरीत लक्षणा से जाना गया है । इस प्रकार यहाँ तक पदार्थरूपक का निरूपण किया गया है ।

वाक्यार्थ रूपक विषय में वाक्यार्थान्तरका आरोप वाक्यार्थ रूपक है । जैसे विशिष्ट उपमा में विशेपणों का उपमानोपमेयभाव आर्थ है उसी तरह यहाँ भी वाक्यार्थघटक पदार्थों में रूपक अर्थात् जाने गये हैं । जैसे—

अत्रात्मनि तपोदानेषु चारोपविषयविशेषणतया विम्बभूतेषु भास्करस्य सारससलिलानां च विषयिविशेषणत्वेन प्रतिविम्बानां रूपकं गम्यमानं प्रधानीभूतविशिष्टरूपकाङ्गम्। 'नेदं रूपकम्, रूपके च बिम्बप्रतिविम्बभावो नास्ति' इति केनाप्यालंकारिकंमन्येन प्रतारितस्य दीर्घश्रवस उक्तिरश्रद्धेयैव। ययोरिवादिशब्दप्रयोगे उपमा तयोरेकत्रान्यारोपे रूपकमिति नियमात्। अत्र यदि रूपकं नाङ्गीकुरुषे मैवाङ्गीकुरु, तर्हि तत्रेवयथादिशब्दप्रयोगे उपमामपि।

## मर्मप्रकाशः

सारसैः सरः संबन्धिभिः। 'सलिलोत्करादीनां च' इति पाठः। नेदमिति। किं तु निदर्शनेत्यर्थः। चोऽप्यर्थे। दीर्घश्रवसो लम्बकर्णस्य द्रविडस्याप्पदीक्षितस्य। तयोरिति।

## मधुसूदनी

आत्मन इति। अत्र प्रधानीभूतं विशिष्टं रूपकं यत् निर्मलीकरणं (विषयः) क्षालनं (विषयि)। तत्र विषयनिर्मलीकरणस्य आत्मतपोदानानि विशेषणानि विम्वभूतानि। विषयिणः क्षालनस्य भास्करसलिलानि विशेषणानि प्रतिविम्वभूतानि। एभिर्गम्यमानं रूपकं प्रधानीभूतस्य विशिष्टस्य रूपकस्याङ्गम्।

## बालक्रीड़ा

इस आत्मा का तप एवं दान से जो निर्मलीकरण है वह तालाब के जलों से सूर्य का क्षालन है।

यहाँ प्रधानीभूत विशिष्टरूपक है 'जो निर्मलीकरण है वह क्षालन है" यहाँ निर्मलीकरण विषय है और क्षालन विषयी है। इस आरोप के विषय निर्मलीकरण में आत्मा, तप एवं दान विशेषणतया विम्बभूत हैं और आरोप्यमाण विषयी क्षालन में भास्कर एवं सरोवर का जलसमूह विशेषणत्वेन प्रतिविम्ब है। इन विम्बप्रतिविम्ब भावापन्न विशेषणों से गम्यमान रूपक विशिष्टरूपक का अंग है। यहां "सलिलक्षालनादीनाम्" यह पाठ अपपाठ है। क्योंकि क्षालन तो स्वयं विषयी है वह अपने में विशेषण कैसे होगा। और आदि पद का भी यहाँ क्या प्रयोजन है। भास्कर एवं सरोवर का जलसमूह ये दो ही तो पदार्थ यहाँ उपात्त हैं। और तीसरा कोई पदार्थ गम्य भी नही है। अतः सारससलिलानां यही पाठ है।

यह रूपक नहीं है, क्योंकि रूपक में विम्वप्रतिविम्वभाव नही होता है यह किसी आलंकारिकंमन्य के द्वारा ठगे गये वैल की उक्ति तो अश्रद्धेय ही है। क्योंकि जो नियम है कि "जिनमें इवादि शब्दों के प्रयोग में उपमा होती है उन्हीं में एक में दूसरे के आरोप होने पर रूपक होता है" उसका अनुसरण यहाँ है। इस पर भी यदि यहाँ रूपक नहीं मानते हो तब वहाँ उनमें इवादि शब्दों के प्रयोग में उपमा को भी मत मानो। जैसे "हे राजन्! तुम्हारे में कोप ऐसे मालूम पड़ता है जैसे चन्द्रमा में अग्नि।" इन स्थलों में विशिष्ट तुम रूप विशेषण से युक्त धर्मी कोप में स्वकल्पित एवं विशिष्ट सुधांशुरूप विशेषण से युक्त धर्मी पावक के

एवं 'त्वयि कोपो महीपाल ? सुधांशाविव पावकः' इत्यादौ स्वकल्पितेन विशिष्टेन धर्मिणा सादृश्यस्य प्रत्ययादुपमां ब्रूषे, ब्रूहि तर्हि; तत्रैवेवस्य निरासे 'त्वयि कोपो महीपाल सुधांशौ हव्यवाहनः' इत्यादौ रूपकमपि।

तथा—

'कुङ्कुमद्रवलिप्ताङ्गः काषायवसनो यतिः।
कोमलातपबालाभ्रः संध्याकालो न संशयः॥'

इत्यादावपि विशिष्टरूपकं बोध्यम्। त्वयि कोप इत्यत्र विषयिणः स्वबुद्धिकल्पितत्वात्कल्पितं विशिष्टरूपकम्। इह तु न तथेति विशेषः।

न चैवमादौ प्रतीयमानोत्प्रेक्षा वक्तुं शक्या, अभेदस्य निश्चीयमानत्वात्,

## मर्मप्रकाशः

तदभावे इति शेषः। युक्त्यन्तरमाह—एवमिति। बालाभ्रः। शोणाभ्र इत्यर्थः। विषयिणश्चन्द्राधिकरणकाग्निरूपोपमानस्य। इह तु कुङ्कुम इवेत्यत्र तु। एवमादौ आत्मनोऽस्येत्यादौ। इवाद्यप्रयोगादाह—प्रतीयेति। अन्यथा तस्य संभाव्यमानत्वे इष्टा-

## मधुसूदनी

कुंकुमेति। यतिर्विषयः सन्ध्याकालो विषयी। यतेर्विशेषणयोः कुंकुमद्रवलिप्ताङ्गत्वकाषायवसनत्वयोर्बिम्बत्वम्। सन्ध्याकालविशेषणयोः कोमलातपत्वशोणाभ्रत्वयोः प्रतिबिम्बत्वम्। विषयिणः सुधांशौ हव्यवाहनस्योपमानस्य। इह कुंकुमेत्यत्र तु तथा स्वबुद्धिकल्पितत्त्वाभावात् कल्पितं विशिष्टरूपकं न। यथा आत्मन इति त्वयीति चात्र। आदिपदग्राह्या एभ्योऽतिरिक्ताश्च।

## बालक्रीड़ा

साथ सादृश्य के प्रतीत होने पर उपमा को कहते हो तब हे महीपाल ? तुम्हारे में कोप मानों सुधांशु अमृतमय किरणों वाले में पावक है। यहाँ इवादि के हटा देने पर रूपक को भी कहो। और

कुंकुम का जिसने अपने अंगों में लेप कर रक्खा है वह काषाय वसनधारी यति, कोमल घाम और बाल मेघों से विशिष्ट सन्ध्याकाल है इसमें कोई संशय नहीं है। ऐसे स्थलों में विशिष्ट रूपक समझना चाहिए। त्वयि कोपः इसमें विषयी, पावक अपनी बुद्धि से परिकल्पित है अतः कल्पित विशिष्ट रूपक है। कुंकुम इसमें तो वैसी बात नहीं है अतः वैलक्षण्य है।

यह आप नहीं कह सकते हैं कि ऐसे उदाहरणों में प्रतीयमान उत्प्रेक्षा है। क्योंकि इन उदाहरणों में अभेद निश्चीयमान है। और उत्प्रेक्षा होने पर तो वह सम्भाव्यमान हो जायेगा। अन्यथा उत्प्रेक्षा होने पर भी सम्भाव्यमानता को नहीं मानोंगे तो मुखं चन्द्रः इत्यादि में प्रतीयमानोत्प्रेक्षा होने लगेगी और रूपक विलुप्त हो जायगा।

उत्प्रेक्षायां च सत्यां संभाव्यमानता स्यात् । अन्यथा मुखं चन्द्र इत्यादावपि प्रतीयमानोत्प्रेक्षापत्त्या रूपकविलोपापत्तेः ।

अथ बोधो विचार्यते—

तत्र प्राञ्चः—"विषयिवाचकपदेन विषयिवृत्तिगुणवतो लक्षणया सारोपयोपस्थितौ विषये तस्याभेदेन संसर्गेण विशेषणतयान्वयः । एवं च मुखं चन्द्र इत्यत्र चन्द्रवृत्तिगुणवदभिन्नं मुखमिति धीः । अत एवालंकारभाष्यकारः 'लक्षणापरमार्थं यावता रूपकम्' इत्याह । न च चन्द्रसदृशं मुखमित्युपमातोऽस्य को भेदः । बोधवैलक्षण्याभावेन विच्छित्तिवैलक्षण्याभावात् ।

### मर्मप्रकाशः

पत्तौ । तत्र बोधविषये । द्वयोरुपादानादाह – सारोपेति । उपस्थितौ सत्यामिति शेषः । विषये तस्याभेदेनेति । विषयतावच्छेदकावच्छिन्नविषये पूर्वोपस्थितस्येत्यर्थः । वृत्तीति ।

### मधुसूदनी

सम्भाव्यमानता अभेदस्य स्यादित्यन्वयः । अन्यथा अभेदे निश्चीयमानत्वविशेषणादाने संभाव्यमानत्वास्वीकारे च ।

मुखं चन्द्र इत्यादौ विषयविषयिणोः स्वशब्दाभ्यां पृथङ् निर्देशे सारोपा लक्षणा प्रवर्त्तते । विषये तस्य लक्षणया उपस्थितस्य विषयिवृत्तिगुणवतः । चन्द्रसदृशमिति । चन्द्रः स्ववृत्तिगुणवान्, मुखमपि चन्द्रवृत्तिगुणवत् । पूर्वत्र अभिधया । उत्तरत्र

### बालक्रीड़ा

अब यहाँ बोध के विषय में विचार का आरम्भ करते हैं । उसमें प्राचीन कहते हैं कि मुखं चन्द्रः यहाँ पर सारोपा लक्षणा के द्वारा विषयी उपमान वाचक चन्द्रपद से विषयी चन्द्र में रहने वाले गुणों से युक्त की उपस्थिति होती है और उपस्थित अर्थ का अभेद सम्बन्ध से विषय मुख में विशेषण के रूप में अन्वय हो जायगा । जिसके फलस्वरूप मुखं चन्द्रः इसमें चन्द्रवृत्तिगुणवदभिन्न मुख है यह बुद्धि होगी । इसीलिए अलंकार भाष्यकार ने कहा कि वस्तुतः रूपक में लक्षणा परम तत्त्व है ।

प्रश्न—चन्द्रसदृशं मुखं इस उपमा से मुखं चन्द्रः इस रूपक में क्या भेद है । क्योंकि बोध में कोई विलक्षणता नहीं है अतः चमत्कार में भी कोई विलक्षणता नहीं है । दोनों जगहों में चन्द्र, चन्द्रवृत्तिगुण वाला है और मुख चन्द्रवृत्तिगुण वाला है इस तरह बोध में कोई विलक्षणता नहीं है । यदि कोई कहे कि यद्यपि बोध में विलक्षणता नही है तद्यपि एक जगह अभिधा से वैसा अर्थ मिलता है दूसरी जगह लक्षणा से । उस पर कहते हैं कि केवल वृत्तियों की विलक्षणता कोई मतलब नहो रखती है ।

वृत्तिमात्रवैलक्षण्यस्याप्रयोजकत्वादिति वाच्यम् । लाक्षणिकबोधोत्तरं जायमानेन प्रयोजनीभूतेनाभेदबोधेनैव वैलक्षण्यात् । निरूढलक्षणातिरिक्ताया लक्षणायाः प्रयोजनवत्तानियमात् । अभेदबुद्धेश्च वृत्त्यन्तरवित्तिभाव्यत्वेन न बाधबुद्धिप्रतिबध्यत्वम्" इत्याहुः ।

नव्यास्तु—"नामार्थयोरभेदसंसर्गेणान्वयस्य व्युत्पत्तिसिद्धत्वाच्चन्द्राभिन्नं मुखमिति लक्षणां विनैव बोधः । फलस्यान्यथैवोपपत्तेर्लक्षणाकल्प-

### मर्मप्रकाशः

शक्तिलक्षणान्यतरेत्यर्थः । वृत्त्यन्तरवित्तीति । व्यञ्जनाज्ञानेत्यर्थः । आहुरिति । एतन्मते ह्येवं रूपकलक्षणम्—अनिह्नुतविषयकं पुरस्कृतविषयतावच्छेदकं वा आहार्याभेदप्रतीतिफलकोपमानबोधकपदजन्यप्रतीतिविषयीभूतं साधर्म्यमिति । फलस्याभेदबुद्धेः । अन्यथैवोक्तप्रकारेण । न तथा न चन्द्रः । सदृश इति । मुखपदार्थ इति शेषः । ननु स्वमते बाधसत्त्वेन

### मधुसूदनी

लक्षणया । वृत्त्योर्वैलक्षण्यं भेदे प्रयोजकं नास्ति । भेदे प्रयोजकं वैलक्षण्यमाह-लाक्षणिकेति ।

मुखं न चन्द्र इति बाधबुद्धेरस्तित्वे कथं चन्द्राभेदो मुखे स्यादित्याह-वृत्त्यन्तरेति । वृत्यन्तरं शक्तिलक्षणाभ्यां भिन्ना व्यञ्जना । तस्य वित्तिर्ज्ञानन्ततया भाव्यत्वेन साध्यत्वेन ।

नामेति । घटो नीलः, देवः पण्डित इत्यादिष्विव मुखं चन्द्रः, माणवकः सिंह इत्यादावपि नामार्थयोरभेदः । व्युत्पत्तेः अभेदश्च विरूपोपस्थितयोः समानविभक्तिकयोरेवेत्यस्याः । फलस्य अभेदबुद्धेः । अन्यथैव लक्षणां विना व्युत्पत्त्यैव ।

### बालक्रीड़ा

उत्तर । यह ठीक नहीं है । लाक्षणिक एवं आभिधिक बोधों में विलक्षणता नहीं है किन्तु लाक्षणिक बोध के बाद होने वाले वैयञ्जनिक अभेद बोध से तो विलक्षणता हो ही जायगी । जो अभेद बोध प्रयोजनवती लक्षणा का फल है प्रयोजन है । और यह भी नियम है कि निरूढा लक्षणा से अतिरिक्त लक्षणाओं में प्रयोजन होना ही चाहिए ।

प्रश्न – वह अभेदबोध होगा कैसे ? क्योंकि बाध बुद्धि प्रतिबन्धक होती है । उत्तर—वह अभेद बोध अभिधा एवं लक्षणा से भिन्न वृत्ति व्यञ्जना के ज्ञान से भाव्य है साध्य है अतः वह बोध बाधज्ञान से रूकेगा नहीं ।

नवीन तो कहते हैं कि नामार्थों में अभेद सम्बन्ध से अन्वय होना मुखं चन्द्रः इत्याकारक आकांक्षाज्ञानरूप व्युत्पत्ति से सिद्ध है । अतः चन्द्राभिन्न मुख है यह बोध लक्षणा के विना ही होजायगा । क्योंकि जब अभेदबोधरूप फल लक्षणा के विना व्युत्पत्ति से ही उपपन्न हो जाता है तब लक्षणा की कल्पना करना अन्याय ही है ।

नस्यान्याय्यत्वात् । किं च यदि च रूपके लक्षणा स्यान्मुखचन्द्र इत्यत्रोपमितविशेषणसमासयोरुत्तरपदस्य लाक्षणिकत्वाविशेषादेकस्योपमात्वमन्यस्य रूपकत्वमिति व्याहतं स्यात् । अपि च मुखं न चन्द्रसदृशमपि तु चन्द्र इत्यादौ सादृश्यव्यतिरेकमिश्रिते सादृश्यबुद्धेरयोगात् । एवं देवदत्तमुखं चन्द्र एव, यज्ञदत्तमुखं तु न तथा अपि तु चन्द्रसदृसमित्यादौ नञर्थस्य लक्ष्यमाणचन्द्रसदृशान्वयित्वान्न चन्द्रसदृशश्चन्द्रसदृश इति बोधकदर्थनापत्तेश्च । नहि नञः फलीभूतज्ञानविषयेणाभेदेनान्वयो युक्तः । एतदन्वयवेलायां तस्या-

## मर्मप्रकाशः

कथमभेदधीरत आह—तादृशेति । इदं च शाब्दे तस्याः प्रतिबन्धकत्वमूरीकृत्य वस्तुतस्तदेव

## मधुसूदनी

अस्तु वा लक्षणा तथापि नेष्टसिद्धिरिति बोधयितुमाह–किं चेति । मुखचन्द्रः माणवकसिंहः माणवकाग्निरित्यादौ सर्वत्र उपमितं व्याघ्रादिभिरित्युपमेयसमासो मयूरव्यंसेति विशेषणसमास उभयत्र उत्तरपदानि चन्द्रसिंहाग्निपदानि लाक्षणिकानि इति तयोः समासयोः समेषां पदानां समानत्वमविशेषः । अर्थात् चन्द्रसदृशं मुखं, सिंहसदृशो माणवक इत्यात्मको बोधः समानः । तत्कोऽस्य हेतुरेकस्य उपमात्वमन्यस्य रूपकत्वं प्रत्युत तथाकथनं व्याहन्येतैव ।

अत्रैवाधिकं बोधयितुमाह—अपि चेति । सादृश्यव्यतिरेकमिश्रिते सादृश्यतदभावसम्वलिते स्थले । न तथा न चन्द्रः । नञर्थस्य व्यतिरेकस्य । एतदन्वयवेलायामिति । एतस्य नञोऽन्वयसमये तस्याभेदस्य (फलीभूतं ज्ञानमभेदविषयकं ज्ञानं तस्य विषयोऽभेदस्तस्य) ।

## बालक्रीड़ा

और भी बात है कि अस्तु लक्षणा। तथापि तुम्हारी इष्ट सिद्धि नहीं होगी। क्योंकि यदि रूपक में लक्षणा मानेंगे तब मुखचन्द्रः इस में उपमितं व्याघ्रादिभिः से उपमित समास एवं मयूरव्यंसकादि से विशेषण समास वाली दोनों जगहों में उत्तर पद चन्द्र का लाक्षणिक होना समान है। तब क्या हेतु है कि एक में उपमा दूसरे में रूपक। प्रत्युत यह कथन व्याहत हो जायगा। और भी कारण है कि मुख चन्द्रसदृश नहीं है अपितु चन्द्र है यहां सादृश्य एवं उस के अभाव स्थल में सादृश्य बुद्धि ही नहीं होगी। इसी प्रकार देवदत्त का मुख चन्द्र ही है किन्तु देवदत्त का मुख चन्द्र नहीं है अपितु चन्द्र के सदृश है ऐसे स्थलों में नञर्थ अभाव का लक्ष्यमाण चन्द्रसदृश के साथ अन्वय होगा तब चन्द्र सदृश नहीं है और चन्द्रसदृश है इस बोध की कदर्थना ही होगी। जब कि फलीभूत जो अभेदविषयक ज्ञान है उस ज्ञान के विषय अभेद के साथ नञ् का अन्वय करना युक्त नहीं है। क्योंकि नञ् के अन्वय की वेला में अभेद की उपस्थिति ही नहीं होती है।

नुपस्थितेः। तादृशाभेदबोधस्य चाहार्यत्वान्न बाधबुद्धिप्रतिबध्यत्वम्। यद्वा आहार्यान्यत्वस्येव शाब्दान्यत्वस्यापि बाधनिश्चयप्रतिबध्यताकोटौ निवेशः। सति च बाधनिश्चये तद्वत्ताशाब्दबुद्धेरनुत्पादः। योग्यताज्ञानविरहात्। सति च क्वचिदाहार्ये योग्यताज्ञाने तद्बुद्धेरिष्टत्वात्। अत एव योग्यताज्ञानस्य बाधनिश्चयपराहतस्यापि शाब्दधीहेतुत्वम्। तस्मादेतदन्यतरप्रकारेण काव्ये सर्वत्र बोधोपपत्तिः। अपि च तद्गतधर्मवत्त्वबुद्धेः कथं तदभेदबुद्धिः फलं

## मर्मप्रकाशः

नेत्याह—यद्वेति। नन्वेवं सति बाधनिश्चये तदभावो नोपपद्येतात आह—सति चेति। बुद्धेरनुत्पाद इति। इदं तु चिन्त्यम्। शाब्दबोधो हि भवत्येव। अत एव वह्निना-सिञ्चतीति वाक्यप्रयोक्तुरद्रवेण वह्निना कथं सेकं ब्रवीषीत्युपहासः सगच्छते। अबोधे हि एतदर्थकद्रविडभाषाश्रवणोत्तरं पाश्चात्यस्येव मूकतैव स्यात्। ननु पदार्थस्मरणमेव, न शाब्दबोध इति चेत्, किमनेन श्रद्धाजाडचेन। बाधज्ञानादीनां च तद्बोधेऽप्रामाण्यज्ञानजननद्वारा

## मधुसूदनी

आहार्यत्वादिति। प्रात्यक्षिको बोधो बाधबुद्धेः प्रतिबध्यः। आहार्यस्तु न प्रतिबध्यः। स न प्रतिबध्यस्तत्र को हेतुरिति हेत्वभावे पक्षान्तरमुपन्यस्यति। यद्वेति। बाधनिश्चयेन प्रतिबध्यः। तन्निष्ठा प्रतिबध्यता तदवच्छेदकमाहार्यान्यत्वं तत्कोटौ तद्वर्गे तस्येव शाब्दान्यत्वस्यापि निवेशः।

एतदन्यतरप्रकारेण। शाब्दबोधो बाधबुद्धेरप्रतिबध्यः एकः प्रकारः। अथवा आहार्ययोग्यताज्ञानेन शाब्दबोधो द्वितीयः प्रकारः। एतयोरन्यतरेणेत्यर्थः। तद्गत-धर्मवत्वबुद्धेः चन्द्रवृतिगुणवत्वज्ञानस्य चन्द्राभेदज्ञानं फलं कथं स्यात्।

## बालक्रीड़ा

प्रश्न—तब लक्षणा न मानने वाले के मत में बाधबुद्धि के प्रतिबन्धक रहते कैसे शाब्दबोध होगा। उत्तर। चन्द्राभिन्न मुख है यह अभेद बोध आहार्य है। अतः बाधबुद्धि से प्रतिबध्य होनेवाले प्रात्यक्षिक सत्य ज्ञानों में रहने वाली प्रतिबध्यता के अवच्छेदक धर्मो की कोटि में श्रेणि मे आहार्यान्यित्व का जैसे निवेश करते हैं। वैसे ही शाब्दान्यत्व का भी निवेश करदेंगे। फलतः शब्दजन्य अभेदबोध होजायगा। कोई प्रतिबन्धक नही होगा। तद्वत्ता वुद्धि (घटवत्ता ज्ञान) के प्रति तदभाववत्ता (घटाभाववत्ता) वुद्धि प्रतिबन्धक होती है यह नियम प्रकृत में लागू नहीं हुआ। फिर भी कहीं पर बाधवुद्धि के सद्भाव में तद्विषयक शाब्दवुद्धि नहीं हुई उसका कारण है योग्यताज्ञान का अभाव विरह। और कहीं पर आहार्य योग्यताज्ञान से वह तद्वत्ता शाब्दवुद्धि भी इष्ट है अर्थात् होती है। अतएव म.ना जाता है कि बाधनिश्चय से पराहत हुआ भी योग्यताज्ञान शाब्दबोध का कारण होता है। इस लिए इन दोनों में से किसी एक प्रकार से भी काव्यों में सर्वत्र बोध की उपपत्ति होती है।

स्यात्। नहि साधारणधर्मावच्छिन्नाभेदज्ञानस्य तत्तदसाधारणधर्मावच्छिन्नाभेदज्ञाने हेतुत्वं क्वाप्यवगतम्। घटपटयोर्द्रव्यत्वेनाभेदग्रहेऽपि घटत्वादिना भेदग्रहात्। तदभिन्नत्वेन ज्ञानस्य पुनस्तद्धर्मप्रतिपत्तिः फलं स्यात्। प्रवाहाभिन्नज्ञानस्येव शैत्यपावनत्वादिप्रतिपत्तिः।

अतएव—

'कृपया सुधया सिञ्च हरे ! मां तापमूर्छितम्।
जगज्जीवन ! तेनाहं जीविष्यामि न संशयः॥'

### मर्मप्रकाश

प्रवृत्तिप्रतिबन्धकत्वम्, योग्यताज्ञानादीनां च तज्जनकत्वमेव नेति रमणीयः पन्थाः। अभेदग्रहेऽपीति। अन्ये तु चमत्कारिसाधारणधर्मरूपसादृश्यज्ञान एव फलबलात्तथाशक्तिकल्पने

### मधुसूदनी

साधारणधर्मः शोभाशालित्वं ( शोभा ) तदवच्छिन्नं मुखं तदवच्छिन्नश्चन्द्रः। असाधारणधर्मः चन्द्रत्वं मुखत्वं च। शोभावच्छिन्नयोर्मुखचन्द्रयोरभेदज्ञानं चन्द्रत्वाच्छिन्नचन्द्रस्य मुखत्वावच्छिन्नमुखस्य अभेदज्ञाने क्वापि हेतुर्नास्ति यथा घटोऽपि द्रव्यं, पटोऽपि द्रव्यं, द्रव्यत्वेन तावभिन्नौ। किन्तु पटत्वेन घटत्वेन तौ भिन्नौ।

तटः प्रवाहाभिन्नः। एवं च प्रवाहे ये धर्माः शैत्यपावनत्वादयस्ते प्रवाहाभिन्ने तटेऽपि प्रतीयन्ते अतएव प्रवाहाभिन्नत्वेन तटविषयकज्ञानस्य तटे प्रवाहगतधर्माणां शैत्यपावनत्वादीनां प्रतिपत्तिः फलमिति स्वीकारादेव। कृपयेत्यत्र अमृताभिन्नत्वेन कृपायाः सेके क्रियायां करणत्वेन अन्वयः। तादृशेति। सुधाभिन्नकृपाकरणकसेकस्य जीवने हेतुत्वेनान्वयः।

### बालक्रीड़ा

उन में एक प्रकार है शाब्दबोध बाधबुद्धि से प्रतिबध्य नहीं है। दूसरा प्रकार है आहार्य योग्यता ज्ञान से शाब्दबोध हो जाता है।

और भी बात है कि चन्द्रगत धर्मवाला मुख है इस बुद्धि से चन्द्र से अभिन्न मुख है यह बुद्धि कैसे हो सकती है। क्योंकि साधारण धर्मों से अवछिन्न युक्त पदार्थों का अभेदज्ञान असाधारण धर्मावच्छिन्न पदार्थों के अभेदज्ञान में कारण होता है ऐसा कहीं भी देखा सुना नहीं गया है। जैसे घट और पट को द्रव्यत्वेन एक समझकर भी घटत्वेन पटत्वेन अलग अलग समझते ही हैं हाँ तदभिन्नत्वेन ज्ञान का फल (मुखं चन्द्र से अभिन्न है इस ज्ञान का फल) तद्धर्मप्रनिपत्ति (चन्द्रगतधर्मवाला मुख है यह ज्ञान) हो सकती है। जैसे तट को प्रवाहाभिन्न समझने पर तट में प्रवाहीय शैत्य एवं पावनत्व की प्रतिपत्ति होती है। वैसे ही प्रकृत में भी होगी। अत एव।

हे हरे ? संसार ताप से मूर्छित मुझको सुधारूप कृपा से सुधाभिन्न कृपासे सींचिये। हे जगज्जीवन ? इस सेक से मैं अवश्य जी जाऊँगा इसमें कोई सन्देह नहीं है।

इत्यादावमृताभिन्नत्वबोधे सत्येव कृपायाः सेके करणत्वेनान्वयः। तादृश-सेकस्य च जीवने हेतुत्वेनेति दिक्।

अथ कथं 'गाम्भीर्येण समुद्रोऽयं सौन्दर्येण च मन्मथः' इत्यत्र बोधः। शृणु—प्राचां तावल्लक्ष्यमाणैकदेशे सादृश्ये प्रयोज्यताया अभेदस्य वा तृतीयार्थस्यान्वयाद् गाम्भीर्यप्रयोज्यसमुद्रसादृश्यवदभिन्नोऽयं गाम्भीर्याभिन्नसमुद्रवृत्तिधर्मवदभिन्नोऽयमिति वा धीर्लक्षणां विनैव। अभेदसंसर्गेणान्वयवादिनां पुनरित्थम्—कविना स्वेच्छामात्रादुपकल्पिता असन्तोऽप्यन्तःकरणपरिणामात्मका अर्था उपनिबध्यन्ते मुखचन्द्रादयः। तेषु च साधारण-

### मर्मप्रकाश

चायं दोष इत्याहुः। सेके करणत्वेनेति। न तु सदृशत्वेनेत्यर्थः। ज्ञाने तत्सदृशात्त-

### मधुसूदनी

लक्ष्यमाणः गाम्भीर्येण समुद्र इत्यत्र समुद्रपदाल्लक्षणया बुद्धः समुद्रसदृशः। तस्य एकदेशः अवयवः सादृश्यं तत्र। गाम्भीर्यस्य प्रयोज्यतया अन्वयात् गाम्भीर्यप्रयोज्यसमुद्रसादृश्यवदभिन्नोऽयम्। अथवा सादृश्यं समानधर्मरूपमिति मते गाम्भीर्याभिन्नेत्यादिः। एतल्लक्षणावादिमते। तदवादिमतेऽपि सैव धीर्नास्ति

### बालक्रीड़ा

यहाँ पर कृपाको अमृत से अभिन्न समझने पर ही कृपा का सेक में करणरूप से ही न कि सादृश्य से अन्वय होता है। क्योंकि सदृशपदार्थ से सदृशपदार्थ के कार्य की उत्पत्ति नहीं होती है। और उस सेक का जीवन में हेतुत्वेन अन्वय। यह एक लक्षणा के विना भी अभेद बोध का मार्ग प्रदर्शित कर दिया है।

प्रश्न = अच्छा। गम्भीरता में यह समुद्र है और सुन्दरता में यह मन्मथ है। यहाँ कैसे बोध होगा। (पूरा श्लोक यह है गाम्भीर्येण समुद्रोऽसि सौन्दर्येणाऽसि मन्मथः। अहार्यो गौरवेणाऽसि कल्पद्रुः स्वेष्टपूरणत्। यहाँ एक पुरुष में हेतुभेद से अनेक रूप से उल्लेख है अतः उल्लेख अलंकार है। रूपक नहीं है। किन्तु ग्रन्थकार ने रूपक माना है।) उत्तर। सुनो। प्राचीनों के मत में समुद्र पद की समुद्रसदृश में लक्षणा करते हैं। वहाँ लक्ष्यमाण समुद्रसदृश के एक देश अवयव सादृश्य में गाम्भीर्येण एवं सौन्दर्येण इस तृतीया के अर्थ (एक मत में) प्रयोज्यता का (द्वितीय मत में) अभेद का अन्वय हुआ है अतः गाम्भीर्य से प्रयोज्य जो समुद्रनिरूपित सादृश्य तद्वदभिन्न राजा है या गाम्भीर्य से अभिन्न जो समुद्रवृत्ति धर्म तद्वदभिन्न वह है। यह बोध हुआ। लक्षणा के विना ही अभेद सम्बन्ध से नामार्थो का परस्पर अन्वय होता है कहने वालों के मत में इस प्रकार अन्वय होता है। लोक में जिन पदार्थों की सत्ता नहीं रहने पर भी कवि लोग केवल अपनी इच्छा से उन अन्तः करण के परिणामभूत मुखचन्द्रादि अर्थों की कल्पना करते हैं और काव्यों में उनका उपनिबन्धन करते हैं।

धर्माणामस्त्येव प्रयोजकत्वम् तद्दर्शनाधीनत्वात्तन्निर्मितेः। एवं च गाम्भीर्यादिप्रयोज्यसमुद्राद्यभिन्न इति बुद्धिरप्रत्यूहेति। यद्वा ज्ञानजन्यज्ञान-प्रकारत्वं तृतीयार्थः। वह्निमान्धूमादित्यादौ पञ्चम्यर्थतया तस्य कल्पनात्। एवं च गाम्भीर्यज्ञानजन्यज्ञानप्रकारसमुद्राभिन्न इत्यादिर्बोधः। तदिदं रूपकं विषयविषयिणोः सामानाधिकरण्ये अपदार्थतया संसर्गः। यथा 'बुद्धिर्दीपकला—' इत्यादौ। वैयधिकरण्ये च शब्दार्थतया क्वचिद्विशेष्यम्।

### मर्मप्रकाशः

त्कार्योत्पत्तेरनुभवविरुद्धत्वादिति भावः। नन्वेवमन्धकवेस्तन्निर्मितिर्न स्यादत आह—यद्वेति। यद्वा तज्ज्ञानस्य प्रयोजकत्वेऽपि तस्यातत्त्वादाह—तस्येति। ज्ञानजन्यज्ञानप्रकारत्वस्यान्यैः कल्पितत्वादित्यर्थः। क्वचिद्विशेष्यमिति। वाक्यार्थमुख्यविशेष्यमित्यर्थः। आयातीति

### मधुसूदनी

भेदः। यतः तद्दर्शनाधीनत्वात् साधारणधर्मज्ञानाधीनत्वात्। तन्निर्मितेः सादृश्य-निर्मितेः।

ज्ञानजन्यज्ञानप्रकारत्वं धूमादिति पञ्चम्या अर्थः। तेन धूमज्ञानेन जन्यं यज् ज्ञानं वह्निमान् पर्वत इत्याकारकं, तज्ज्ञाने प्रकारो वह्निः (पर्वतो विशष्यम्) एवमेव तत्त्वं गाम्भीर्येणेति तृतीयायाः अर्थ इति स्वीकारेऽपि। गाम्भीर्यज्ञानेन जन्यं यज् ज्ञानं समुद्राभिन्नोऽयमित्याकारकं तज्ज्ञाने प्रकारः समुद्रः (इदमर्थो विशेष्यम्)।

सामानाधिकरण्ये एकविभक्तिकतया "बुद्धिः दीपकला" इति निर्देशे। अनयोः द्वयोः पदयो कस्याप्येकस्यापि अर्थः रूपकं नास्ति अतस्तयोः संसर्गो रूपकम्। वैय-धिकरण्ये भिन्नविभक्तिकतया निर्देशे।

### बालक्रीड़ा

वहां उन काव्योपनिबद्ध पदार्थों में साधारणधर्म प्रयोजक होते हैं अतएव प्रयोजक-धर्मों को देखकर ही प्रयोज्यभूत पदार्थों की निर्मिति होती है। प्रश्न=ऐसी स्थिति में अन्धकवि वैसा निर्माण नहीं कर सकेगा। क्योंकि प्रयोजकों को देखना अन्ध के लिए असंभव है। उत्तर=अथवा तृतीया का अर्थ यहां पर ज्ञान जन्य ज्ञान प्रकारत्व है। "वह्निमान् धूमात्" ऐसे स्थलों में ज्ञान जन्य ज्ञान प्रकारत्व धूमात् इस पंचमी का अर्थ माना है। इस प्रकार गाम्भीर्येण समुद्रः इस रूपक में जो गाम्भीर्य पद से गाम्भीर्य का ज्ञान है उस ज्ञान से जन्य जो समुद्राभिन्नोऽयम् इत्याकारक ज्ञान है उस ज्ञान में प्रकार समुद्र है उससे अभिन्न राजा है ऐसा बोध हुआ। वह यह रूपक जहां विषय एवं विषयी का समान विभक्तिकतया निर्देश हे वहां रूपक अभेद किसी पद का अर्थ नहीं है अतः संसर्ग है आकांक्षादि भास्य है। जैसे "बुद्धिर्दीपकला" इत्यादि में। और जहां भिन्न २ विभक्तियों से विषयी एवं विषय का

यथा—

'कैशोरे वयसि क्रमेण तनुतामायाति तन्व्यास्तना-
वागामिन्यखिलेश्वरे रतिपतौ तत्कालमस्याज्ञया।
आस्ये पूर्णशशाङ्कता नयनयोस्तादात्म्यमम्भोरुहां
किं चासीदमृतस्य भेदविगमः साचिस्मिते तात्त्विकः ॥'

अत्र शशाङ्कतातादात्म्यभेदविगमशब्दैरभिधीयमानं रूपकं प्रथमान्तविशेष्यतावादिनां मते विशेष्यम्। क्रियाविशेष्यतावादिनां तु तत्रैव किंचिद्व्यत्यासेन निष्ठान्तक्रियादाने।

### मर्मप्रकाशः

सप्तम्यन्तं वयोविशेषणम्। तन्व्यास्तनाविति। आगामीति। शक्त्या लक्षणया वेति भावः। 'किं चासीत्' इत्यस्य स्थाने 'संपन्नो हि' इति पाठ इत्यर्थः। विभवेनेति प्रख्याने

### मधुसूदनी

तत्रैव आसीदित्यत्रैव। किंचिद्व्यत्यासेन। किंचेतिपदस्य निरासेन हिपदस्य विन्यासेन च निष्ठान्तरूपायाः क्रियाया सम्पन्नमित्यात्मिकायाः दाने स्थापने। नपुंसकमनपुंसकेनेति क्लीबता। लिंगव्यत्ययेनान्वयः। सम्पन्नो ह्यममृतस्येति।

### बालक्रीड़ा

निर्देश नहीं है वहां वह अभेद किसी शब्द का अर्थ होता है अतः वह अभेद कहीं पर विशेष्य है और कहीं पर विशेषण रहता है। क्रमशः उदाहरण देते हैं विशेष्य जैसे—

अखिलेश्वर रतिपति के आने की परिस्थिति में अर्थात् रतिपति आयेंगे इसलिए तत्काल ही उसकी आज्ञा से नायिका के शरीर में क्रमशः धीरे २ बचपन वीतने लगा मुख पूर्ण चन्द्र वन गया, नयनों और कमलों में अभेद हो गया और वक्र हास्य में अमृत का वास्तविक भेद हट गया याने अभेद हो गया।

वहाँ शशांकता, तादात्म्य एवं भेद विगम शब्दों से अभिधीयमान रूपक, प्रथमान्तार्थ विशेष्यता वादी नैयायिक के मत में वाक्यार्थ में मुख्य विशेष्य हैं। आधेयता संवन्ध से मुखविशिष्ट भूतकालिक पूर्ण शशांकाभेद विशेष्य है। क्रिया विशेष्य वादी के मत में उसी जगह अर्थात् आसीत् इस क्रिया के स्थान में कुछ व्यत्यास करके अर्थात् किंच पद को हटाकर हिं पद को रख कर निष्ठाक्तप्रत्ययान्त सम्पन्न क्रिया के स्थापन करने पर रूपक विशेष्य होता है। पूर्ण शशांकता सम्पन्ना, तादात्म्यं सम्पन्नम्, भेदविगमः सम्पन्नः इस तरह लिग का व्यत्यय करके अन्वय करना है। आधेयत्वसम्वन्धावच्छिन्न मुखत्वखाच्छिन्न मुख निष्ठ प्रकारता निरुपिता सती सम्पन्नत्वावच्छिन्नसम्पन्ननिष्ठप्रकारता निरूपिताय शशांकत्वनिष्ठा विशेष्यता तादृशविशेष्यताको बोधः। यह क्रिया प्रधानवादियों का बोध है। विशेषण जैसे=हे सुन्दरि ? अविचिन्त्यं शक्ति रूप विभव के बदौलत जगत् में प्रसिद्ध शम्बररिपु काम

क्वचिच्च विशेषणम् । यथा—

'अविचिन्त्यशक्तिविभवेन सुन्दरि ? प्रथितस्य शम्बररिपोः प्रभावतः ।
विधुभावमञ्चतितमां तवाननं, नयनं सरोजदलनिर्विशेषताम् ॥

इह द्वितीयार्थे विशेषणीभूतं विधुत्वादि विध्वभेदात्मकतया रूपकम् ।

एवं मुखचन्द्र इत्यादावुपमितसमासे तावदुपमैव । विशेषणसमासे तु रूपकम् । बोधश्च शशिपुण्डरीकमित्यादाविव प्राक्प्रतिपादितदिशा बोध्यः ।

'मीनवती नयनाभ्यां, करचरणाभ्यां प्रफुल्लकमलवती ।
शैवालिनी च केशैः, सुरसेयं सुन्दरीसरसी ॥'

इत्यादौ तृतीयाया अभेदार्थकत्वात्तस्य च प्रागुक्तदिशा प्रतियोगित्वमुख-

## मर्मप्रकाशः

हेतुः । शम्बररिपोः कामस्य । द्वितीयार्थे कर्मणि । विध्वभेदेति । लक्षणयेति भावः । विशेषणसमासे त्विति । चिन्त्यमिदम् । चन्द्रमुखमित्यस्यापत्तेः । परिणामालंकारोदाहरणे

## मधुसूदनी

द्वितीयाया अम् रूपद्वितीयाविभक्तेरर्थे । विध्वभेदात्मकतया रूपकं तद्रूपकमभेदो य इत्युक्तेः । विभवेन हेतुना प्रथितस्य प्रसिद्धस्य । अञ्चति प्राप्नोति । निर्विशेषतां समानत्वम् ।

तृतीयायास्तृतीयाणां नयनाभ्यामिति करचरणाभ्यामिति केशैरिति तिसृणाम् ।

## बालक्रीड़ा

देव के प्रभाव से तुम्हारा मुख विधुभाव और नयन कमलदल की समानता को प्राप्त कर रहा है ।

यहां अम् रूप द्वितीया विभक्ति के अर्थ कर्मत्व में विद्युत्वादि विशेषणी भूत है । अतः विशेषण रूपक कहाता है । विधुत्व एवं सरोजदलनिर्विशेषत्व क्रमशः विध्वभेद स्वरूप एवं सरोजदलनिर्विशेषात्मक होने से रूपक हो गया है । इस प्रकार मुखचन्द्र इत्यादि में उपमित समास होने पर उपमा होती है और विशेषण समास होने पर तो रूपक होता है । यहाँ पर शशिपुण्डरीकम्" इत्यादि की तरह पहिले बतलायी हुई दिशा के अनुसार बोध समझना ।

नयनों से मानवती, कर चरणों से प्रफुल्ल कमलवती और केशों से शैवालिनी यह सुन्दरी सुरस सरसी है ।

यहाँ पर तृतीया का अर्थ अभेद है । जो पहले बतलाये हुए मार्ग के अनुसार प्रतियोगित्वमुख है । उसका अर्थ के वश से अर्थात् सरसी रूपक के अनुरोध से अन्वय होने पर नयन निष्ठं जो अभेद उसका प्रतियोगी जो मीन तद्वती सरसी है ऐसा बोध हुआ ।

स्यार्थवशादन्वये नयननिष्ठाभेदप्रतियोगिमीनवतीति बोधः। मीनवत्त्वं च स्वाभिन्नद्वारकम्। एतत्स्फोरणायैव नयनाभ्यामित्युक्तम्। मीनाभिन्ननयनवतीति तु पर्यवसितम्। नयनाभेदे तु मीनेषु गृह्यमाणे सरसीरूपकापोषणादित्युक्तमेव।

साधारणधर्मश्चात्राप्युपमायामिव क्वचिदनुगामी, क्वचिद्बिम्बप्रतिबिम्बभावमापन्नः, क्वचिदुपचरितः, क्वचिच्च केवलशब्दात्मा। सोऽपि क्वचिच्छब्देनोपात्तः। क्वचित्प्रतीयमानतया नोपात्तः।

उपात्तोऽनुगामी यथा—

## मर्मप्रकाशः

तु विशेषणसमास उचितः अत्र तु मयूरव्यंसेति समासे त्वित्युचितम्। प्रतीति। मीनप्रतियोगिकाभेदस्य नयने अर्थवशात्सरसीरूपकानुरोधेनान्वये इत्यर्थः। स्वाभिन्नेति। मीना-

## मधुसूदनी

मीनवत्वं कमलवत्वं शैवालवत्त्वं च सुन्दर्यां नास्ति तत्तु सरस्यां तत आह स्वेति। स्वं पदार्थः मीनः कमलं शैवालश्च तत्तदभिन्ननयनकरचरणकेशद्वारकं सरोऽभिन्नसुन्दर्यां मीनवत्वादिकमनुस्यूतमिति शेषः। एतत्स्फोरणायैव मीनवत्वं स्वाभिन्नद्वारकमित्यस्य बोधनायैव नयनाभ्यामित्युक्तम्। नयनाभ्यामिति तृतीयानुक्त्या स्वाभिन्नद्वारकं मीनवत्वं न स्यात्।

## बालक्रीड़ा

प्रश्न—सरसी में तो मीन स्वभावतः रहते हैं किन्तु यहाँ तो सुन्दरी सरसी है उसमें मीन कैसे ?

उत्तर—नायिका के नयन हैं और वे नयन मीनाभिन्न हैं अतः मीनाभिन्न अर्थात् मीन रूप नयन के द्वारा सुन्दरी (सरसी) भी मीनवती है। इसी को स्पष्ट करने के लिए नयनाभ्याम् यह तृतीया विभक्ति यहां कही है। जिसका पर्यवसान मीनाभिन्न नयनवती के रूप में हुआ। यदि यथाश्रुत मीनों में नयनाभेद ग्रहण करेंगे तो सरसी रूपक पुष्ट नहीं होगा। यह कह ही दिया गया है।

साधारण धर्म भी यहाँ उपमा की तरह कहीं पर अनुगामी, कहीं पर बिम्ब प्रतिबिम्ब भावापन्न कहीं पर उपचरित और कहीं पर केवल शब्द रूप होता है। वह भी कहीं पर शब्द से उपात्त है और कहीं पर प्रतीयमान होने से शब्दोपात्त नहीं होता है।

शब्दोपात्त अनुगामी जैसे—प्रकृति याने स्वभाव से ही जड़, अन्ध, बहरे, गूंगे, हैं और ग्रहों से ग्रस्त हैं तथा पापों से उद्धार पाने के लिए जिनके सभी मार्ग अवरुद्ध हो गये हैं और जो देवताओं के द्वारा छोड़ दिये गये हैं ऐसे नरक में पड़े हुए तथा पड़ने जा रहे प्राणियों की रक्षा

'जडानन्धान्पङ्गून्प्रकृतिबधिरानुक्तिविकला-
न्ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन् ।
निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपततो
नरानम्ब ! त्रातुं त्वमिह परमं भेषजमसि ॥'

अत्र त्रातुमिति तुमुन्नन्तेन शब्देनोपात्तं जडान्धादित्राणं भेषजभागीरथ्योः ।

अयमेवानुक्तो यथा—

'समृद्धं सौभाग्यं सकलवसुधायाः किमपि त-
न्महैश्वर्यं लीलाजनितजगतः खण्डपरशोः ।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां
सुधासाम्राज्यं ते सलिलमशिवं नः शमयतु ॥'

## मर्मप्रकाश

भिन्ननयनेत्यर्थः । नयनाभेदे तत्प्रतियोगिकाभेदे । निलिम्पा देवाः । निरयो नरकः । अम्ब गङ्गे । भेषज भागीरथ्योः अनुगामी धर्म इति शेषः । समृद्धमिति । गङ्गास्तुतिरेव ।

## मधुसूदनी

जडानिति । अत्र भागीरथ्यां भेषजारोपः । जडादीनां ग्रहग्रस्तानां भेषजद्वारा-त्राणं भवितुमर्हम् । किन्तु येषां नराणां दुरितनिस्तारे अखिलाः सरण्योऽस्ताः ये च निरये नरके न केवलं पतिताः किन्तु पतिष्यमाणास्तेषां त्राणं भेषजद्वारा असम्भवम् । प्रत्युत तेषां त्राणं भागीरथीद्वारैव । तस्माद् भेषजरूपकं मधुरमपि अपूर्णम् ।

## बालक्रीड़ा

करने के लिए हे मातः ? तुम परम औषध हो । यहाँ जडादिका त्राण भेषज से हो सकता है किन्तु पापी एवं देवत्यक्त नारकीय लोगों का त्राण भेषज से होना असंभव है अतः भेषज रूपक अधूरा है ।

यहाँ त्रातुम् यह तुमुन्नन्त शब्द से उपात्त जडान्धादि त्राण भेषज एवं भागीरथी में अनुगामी धर्म है । यही धर्म शब्द से अनुपात्त जैसे—

यहाँ सकलवसुधा पद में विशेषण स्वरूप सकल पद अपुष्टार्थक है अतः दोष है । हे मातः ? जो वसुधा का कुछ विलक्षण परिपूर्ण सौभाग्य है । जो लीला से जगत् को पैदा करने वाले भगवान् खण्डपरशु शिव का महान् ऐश्वर्य है । जो वेदों का सर्वस्व है । जो देवताओं का मूर्तिमान् पुण्य है और जो सुधा का साम्राज्य है ऐसा तुम्हारा सलिल हमारे पापों की शान्ति करें ।

अत्र सौभाग्यभागीरथ्योः स्वाभावव्यापकदौर्भाग्यकत्वपरमोत्कर्षाधायकत्वादिरनुपात्तः प्रतीयमानो धर्मः। एवमीश्वरासाधारणधर्मत्वपरमगोप्यत्वनिरतिशयसुखजनकत्वान्यापामरसकलजनजरामृत्युहरणक्षमत्वं चोत्तरोत्तरारोपेष्वनुगामीति।

बिम्बप्रतिबिम्बभावमापन्नो विशिष्टरूपकप्रसङ्गे निरूपितः।

उपचरितो यथा—

'अविरतं परकार्यकृतां सतां मधुरिमातिशयेन वचोऽमृतम्।
अपि च मानसमम्बुनिधिर्यशो विमलशारदचन्दिरचन्द्रिका॥'

अत्रामृतरूपके विषये वचस्युपचरितो मधुरिमातिशयः शब्देनोपात्तः। अम्बुनिध्यादिरूपके च गाम्भीर्याद्यनुपात्तम्।

### मर्मप्रकाशः

सौभाग्यभागीरथ्योः सौभाग्यभागीरथीजलयोः स्वपदेन विषयविषयिपरामर्शः। सुधासाम्राज्यमित्यत्राह—आपामरेति। निरूपित इति। 'कुङ्कुमद्रवलिप्ताङ्गः काषायवसनो यतिः। कोमलातपशोणाभ्रः संध्याकालो न संशयः॥' इत्यादाविति भावः। चन्दिरेति। चन्द्रेत्यर्थः। उपेति। वस्तुतो मधुरिमातिशयस्य तत्रासत्त्वात्। एवमग्रेऽपि। अनुपात्तमिति।

### मधुसूदनी

स्वाभावेति। सौभाग्याभावे दौर्भाग्यं व्याप्नोति। भागीरथ्या अभावे तदेवेति अनुगामी धर्मः।

### बालक्रीड़ा

यहाँ प्रथम पद में सौभाग्य और भागीरथी में स्वाभावव्यापक दौर्भाग्यकत्व और परमोत्कर्षाधायकत्व धर्म प्रतीयमान है अतः शब्दोपात्त नहीं है। सौभाग्य एवं भागीरथी के अभाव में जगत् में वसुधा पर दौर्भाग्य का व्याप्त होना स्वतः सिद्ध है। इस प्रकार ईश्वरासाधारणधर्म, परमगोप्यत्व, निरतिशयसुखजनकत्व एवं आपामरसकलजनजरामृत्युहरणक्षमत्व उत्तरोत्तर आरोपों में अनुगामी है। बिम्बप्रतिबिम्बभावापन्नधर्म का निरूपण विशिष्ट रूपक के प्रसंग में कर दिया गया है।

निरन्तर परोपकार में लगे हुए सन्तों का वचन मधुरिमातिशय से अमृत है। और उनका मानस गम्भीरतातिशय से समुद्र है तथा यश विमलता से शरदऋतु के चन्द्रमा की चाँदनी है।

यहाँ अमृतरूपक में विषय वचन में मधुरिमा लाक्षणिक है जो शब्द से उपात्त है। अम्बुनिधि एवं चन्द्रिका रूपक में गम्भीर्य एवं विमलता शब्द से अनुपात्त है। यहाँ यद्यपि विमल शब्द का उपादान है तद्यपि वह चन्द्र का विशेषण है।

केवलशब्दात्मको यथा—

'अङ्कितान्यक्षसंघातैः सरोगाणि सदैव हि ।
शरीरिणां शरीराणि कमलानि न संशयः ॥'

अत्र अक्षसरोगशब्दावुपात्तावेव प्रतीयेते न लुप्तौ । आद्यो ह्यभग्नो द्वितीयस्तु भग्नः ।

अयमेव साधारणो यत्र युक्तिरूपेणोपन्यस्यते तद्धेतुरूपकम् ।

यथा—

'पञ्चशाखः प्रभो ? यस्ते शाखा सुरतरोरसौ ।
अन्यथानेन पूर्यन्ते कथं सर्वमनोरथाः ॥'

एवम्—

### मर्मप्रकाशः

उपचरितमिति शेषः । अङ्कितानीति । व्याख्यातमिदम् । उपात्त एवेति । एवं चैक एव भेदोऽस्य । तदाह—लुप्त इति । अनुपात्त इत्यर्थः । अभग्नः पदावान्तरभङ्गशून्यः । भग्नस्तद्युक्तः । अस्य भेदान्तरमाह अयमेवेति । केवलशब्दात्मक एवेत्यर्थः । यथेति । राजानं प्रत्युक्तिः । हे राजन् ? ते पञ्चशाखः पञ्चाङ्गुलिर्हस्तोऽसौ कल्पवृक्षस्य शाखैवेत्यर्थः ।

### मधुसूदनी

अंकितानीति । द्वितीयानने एकाशीत्युत्तरैकशततमे पृष्ठे व्याख्यातमिदम् ।

पञ्चेति । हे प्रभो ? यस्ते पंचशाखः पञ्चाङ्गुलिर्हस्तः । असौ सुरतरोः शाखा । अन्यथा हस्तस्य सुरतरुशाखात्वाभावे अनेन हस्तेन याचकानां समेषां सर्वे मनोरथाः कथं पूर्यन्ते । शाखात्वादेव पूर्यन्ते इति युक्त्या विन्यासे एतद्धेतुरूपकम् ।

### बालक्रीड़ा

केवल शब्दात्मक जैसे—इस पद्य का व्याख्यान द्वितीयानन के १८१ पृष्ठ कर दिया गया है । यहाँ अक्ष और सरोग शब्दरूप धर्म उपात्त है प्रतीत है । अतः लुप्त नहीं है । इन में आद्य अभग्न है और द्वितीय भग्न है ।

इसी साधारण धर्म को जहाँ युक्तिरूप से उपन्यास किया गया हो वहां वह हेतु रूपक होता है जैसे—हे प्रभो ? यह तुम्हारा पञ्चशाखाओं वाला हस्त सुरतरु की शाखा है । यदि यह शाखा नहीं होता तो जनता के मनोरथ इस से कैसे पूरे होते । अतः सुरतरु की शाखारूप यह हस्त है । यहाँ हस्त का सुरतरु की शाखा होना मनोरथ पूरण में हेतु है ।

इस प्रकार और भी जैसे—हे सुन्दरि ? तुम प्राणेश के विरह से मनोभव मदनसम्वन्धी

'प्राणेशविरहक्लान्तः कपोलस्तव सुन्दरि ! ।
मनोभवव्याधिमत्त्वान्मृगाङ्कः खलुः निर्मल ॥'

इह श्लेषेण रसचन्द्रयोः कपोले ताद्रूप्यप्रत्ययाद् द्विरूपकं निरवयवम् । हेतुस्तु त्रिषु श्लिष्ट एव । एवमन्येऽपि प्रकारा ज्ञेयाः ।

'उल्लासः फुल्लपङ्केरुहपटलपतन्मत्तपुष्पंधयानां
निस्तारः शोकदावानलविकलहृदां कोकसीमन्तिनीनाम् ।
उत्पातस्तामसानामुपहतमहसां चक्षुषां पक्षपातः
संघातः कोऽपि धाम्नामयमुदयगिरिप्रान्ततः प्रादुरासीत् ॥'

### मर्मप्रकाशः

मृगाङ्कः श्लेषेण चन्द्रो रसविशेश्च । तदाह—इहेति । निरवयवमिति । मिथोऽवयवावयविभागाभावादिति भावः । हेतुर्मनोभवेत्यादि बोध्यः । त्रिषु उपमानद्वये उपमेये चेत्यर्थः । श्लिष्ट एवेति । मनसिजातमदनसंवन्धिविशिष्टाधिमत्त्वं दयितायां, मनोभवराजयक्ष्मरूप व्याधि मन्थकत्वं रसे, मनोभवसंवन्धि क्षयव्याधिमत्त्वं चन्द्रे इति भावः । उल्लास इति । तद्धेतुरित्यर्थः । सूर्योदयवर्णनम् ।

### मधुसूदनी

प्राणेशेति । हे सुन्दरि ! प्राणेशविरहे क्लान्तस्तव कपोलः मनोभवव्याधिमत्वात् निर्मलो मृगाङ्कः आनन्ददायकश्चन्द्रः व्याधिनिरासकमौषधञ्च ।

प्राणेशविरहे सति मनोभवव्याधिमत्वं कामदेवजनितक्लान्तिमत्वं कपोले उपमेये, मनसिजातक्षयरूपविशिष्टाधिमत्वं चन्द्रे उपमाने, मनः सम्बन्धेन शरीरनिष्ठ राजयक्ष्मरूप व्याधिमन्थकत्वं रसे उपमाने । अस्मिन्नर्थे मथ्नातीति मत् यस्याहुः शशिमच्छिर इतिवद् बोध्यम् । इति मनोभवव्याधिमत्वं हेतुः श्लिष्टः त्रिषु अर्थेषु ।

उल्लास इति । प्रथमानने सप्ताधिकनवतितमे पृष्ठे व्याख्यातमिदं पद्यम् । प्रागुक्तं स्वेन रूपकस्य हेत्वलंकारस्यचेति, अत्रोच्यते रूपकं न भवति । उच्छृंखलाः पुना रूपकमाचक्षते इति च ।

### बालक्रीड़ा

व्याधि से ग्रस्त हो अतएव क्लान्ति से युक्त तुम्हारा कपोल, मनमें उत्पन्न क्षय व्याधि से युक्त चन्द्रमा है और मनः सम्वन्ध से जायमान शरीर निष्ठ राजयक्ष्मरूप रोगों का शामक पारद है। यहाँ श्लेष के कारण पारद एवं चन्द्रमा का कपोल में ताद्रूप्य प्रत्यय होता है अतः द्विरूपक है जो निरवयव है । और मनोभवव्याधिमत्व हेतु तीनों में श्लिष्ट ही है । इस तरह और प्रकारों को भी समझना चाहिए ।

जैसे—उल्लास । इस पद्य का व्याख्यान प्रथम आनन के ९७ पृष्ठ में कर दिया

अत्रोपमेय उपमानस्य नारोपः । अपि तु कारणे कार्यस्येति रूपकं न भवतीति प्राञ्चः । एतन्मतानुसारेणैवास्माभिरपि लक्षितम् । उच्छृङ्खलाः पुनरारोपमात्रं रूपकं वदन्त इहापि रूपकमेवाचक्षत इति प्रागेव निरूपितम् ।

ननु—

'यशःसौरभ्यलशुनः शान्तिशैत्यहुताशनः ।
कारुण्यकुसुमाकाशः पिशुनः केन वर्ण्यते ॥'

इत्यत्र लशुनहुताशनाकाशैः पिशुनस्य किं साधर्म्यम्, येन तेषामस्मिन्रूपकमुच्यत इति चेत्, यशःसौरभ्ययोः शान्तिशैत्ययोः कारुण्यकुसुमयोश्च ताद्रूप्ये शब्दादुपस्थापितेऽनन्तरमुपस्थितं यशोरूपशौरभ्याद्यभाववत्त्वमेतत् । एवमपि लशुनखलयोस्ताद्रूप्यसिद्धौ सत्यां लशुनरूपखलावृत्तित्वेन यशःसौरभ्ययोस्ताद्रूप्यं सिद्येत्, यशःसौरभ्ययोस्ताद्रूप्यसिद्धौ च यशोरूपसौर-

## मर्मप्रकाशः

तेषां लशुनादीनाम् । अस्मिन्पिशुने । चस्त्वर्थे ।

## मधुसूदनी

किं साधर्म्यमिति । साम्यं सादृश्यम् । येन सादृश्येन । तेषां लशुनहुताशनाकाशानाम् । अस्मिन् पिशुने रूपकमभेदः । सौरभ्याभाववान् लशुनः । यशोऽभाववान् पिशुनः । यशोरूपसौरभ्याभाववत्वं लशुने पिशुने समानं तेन लशुनत्वं खले आराप्यते । नाशंकनीय इति । अन्योन्याश्रयाणि कार्याणि शास्त्रे न प्रथन्ते । कल्पनामये जगति तु तादृशानि प्रथन्ते एवेत्याशयः ।

## बालक्रीड़ा

है । यहाँ उपमेय में उपमान का आरोप नहीं है किन्तु कारण में कार्य का अभेद है । अतः रूपक नहीं है यह प्राचीनों का मत है । प्राचीन मत के अनुसार ही इस को उदाहरण के रूप में रखा है । उच्छृंखल लोग जो आरोप मात्र को रूपक कहते हैं वे यहाँ भी रूपक ही कहते हैं इस चर्चा को हम पहिले ही कर चुके हैं ।

प्रश्न—यशोरूपी सौरभ्य के लिये लहसुन, शान्तिरूपी शैत्य के लिये अग्नि और कारुण्य रूपी कुसुम के लिए आकाश स्वरूप चुगल का वर्णन कौन कर सकता है ।

यहाँ पर लशुन, हुताशन एवं आकाश के साथ पिशुन का क्या साधर्म्य है । जिस से पिशुन में उनका रूपक कहा जाय । उत्तर । सुनिये । यश एवं सौरभ्य में शान्ति एवं शैत्य में और कारुण्य तथा कुसुम में ताद्रूप्य, पहले शब्द से उपस्थित हुआ । बाद में यहाँ यशोरूप सौरभ्याभाववत्व, शान्तिरूपशैत्याभाववत्व और कारुण्यरूपकुसुमाभाववत्व साधर्म्य इस ताद्रूप्य मे उपस्थित हुआ । ठीक है किन्तु इस तरह भी लशुन खल में ताद्रूप्य की सिद्धि

भ्यशून्यत्वेन लशुनखलयोस्ताद्रूप्यम्, इत्यन्योन्याश्रयो नाशङ्कनीयः। सकलसिद्धेः कल्पनामयत्वेन। कल्पनायाश्च स्वप्रतिभाधीनत्वात्। शिल्पिभिः परस्परावष्टम्भमात्राधीनस्थितिकाभिः शिलेष्टकाभिर्गृहविशेषनिर्माणाच्च।

अथास्य ध्वनिः—

तत्र शब्दशक्तिमूलो यथा—

'विज्ञत्वं विदुषां गणे सुकवितां सामाजिकानां कुले
माङ्गल्यं स्वजनेषु गौरवमथो लोकेषु सर्वेष्वपि।

### मर्मप्रकाशः

नन्वन्योन्याश्रयोत्पत्ताविव ज्ञानेऽपि प्रतिबन्धकत्वात्कथं (तथास्वप्रतिबन्धकत्वात्कथं) तथा स्वप्रतिभाऽत आह—शिल्पिभिरिति विज्ञेति। अत्र विज्ञादयः पण्डितानामिव बुधादी-

### मधुसूदनी

विज्ञत्वमिति। विज्ञसुकविताशनिपदानि न श्लिष्टानि। अतोऽत्र बौधं विज्ञ गणे कवित्वममलतिति पाठः चेत् श्लिष्टं स्याद्। दुर्वृत्तेऽशनितामित्यत्र अकारः

### बालक्रीड़ा

होने पर लशुनरूप खल में नहीं रहने रूप साधर्म्य से यश और सौरभ्य में ताद्रूप्य की सिद्धि होवे और यश और सौरभ्य में ताद्रूप्य की सिद्धि होने पर यशोरूपसौरभ्य शून्य साधर्म्य से लशुन खल में ताद्रूप्य सिद्ध होवे फलतः यहाँ अन्योन्याश्रयदोष हो रहा है। जोकि अच्छा नहीं है। इस पर कहते हैं कि ऐसी आशंका नहीं करना। क्योंकि यहाँ काव्य में सकल सिद्धियाँ कल्पना प्रसूत हैं और कल्पना अपनी प्रतिभा के अधीन है। लोकमें भी देखा जाता है कि शिल्पी कारीगर लोग, एक शिला दूसरी शिला के सहारे पर ठहरी हुई है और एक ईंट दूसरी ईंट के सहारे ठहरी हुई है; इस तरह एक दूसरे के सहारे ठहरने वाली शिला और ईंटों से घरों का निर्माण करते हैं। इसी तरह प्रकृत में भी एक रूपक दूसरे रूपक सहारे रह सकता है। यह प्रतिभाप्रसूत कल्पना का विलक्षण माहात्म्य है।

अब यहाँ इसकी ध्वनि का निरूपण करते हैं। उसमें शब्दशक्तिमूल जैसे—यहाँ "बौधं विज्ञगणे कवित्वममलं सामाजिकानां कुले" ऐसा पाठ होना चाहिए। अन्यथा शक्ति नियन्त्रणेऽपि लिखना व्यर्थ हो जायगा। क्योंकि विज्ञ एवं सुकविता पद श्लिष्ट नहीं है अनेकार्थक नहीं हैं। तब शक्ति का नियन्त्रण अभिधा का नियमन कैसा। बुध्यते जानातीति बुधः) जानता है यह बुध विज्ञ है और बुध ग्रह भी हैं बुधस्य भावो बौधं में गुरोर्भावः गौरवं की तरह अण् प्रत्यय भाव अर्थ में हुआ। दुवृत्ते शनितां में अशनितां भी अर्थ है। कवेः कर्म कवित्वं काव्यं भार्गवत्वं च। उशना भार्गवः कविः यह कोशकार का उल्लेख है। अतः उक्त पाठ उचित है मुद्रित पाठ अपपाठ है।

विज्ञों के समुदाय में बौध वैदुष्य एवं बुधग्रहत्व, सामाजिकों के कुल में अमल दोष

दुर्वृत्ते शनितां नृलोकवलये राजत्वमव्याहतं
मित्रत्वं च वहन्नकिंचनजने देव ? त्वमेको भुवि ॥'

अत्र शक्तिनियन्त्रणेऽपि बुधत्वशुक्रत्वादीनि बुधाद्यभेदरूपाणि राजनि व्यज्यन्ते ।

यथा वा—

'अविरलविगलद्दानोदकधारासारसिक्तधरणितलः ।
धनदाग्रमहितमूर्तिर्देव ? त्वं सार्वभौमोऽसि ॥'

### मर्मप्रकाशः

नामपि वाचकाः । नानार्थत्वात् । विज्ञत्वं पण्डितत्वं बुधत्वं च । सुकवितां काव्यकर्तृत्व शुक्रत्वं च । माङ्गल्यं शोभनत्वमङ्गारकत्वं च । गौरवं श्रेष्ठत्वं बृहस्पतित्वं च । दुर्वृत्ते अशनितां शनितां च । वज्रत्वं मन्दत्वं चेत्यर्थः । राजत्वं नृपत्वं चन्द्रत्वं च । मित्रत्वमाप्तत्वं सूर्यत्वं च । नियन्त्रणेति । प्रकरणादिति भावः । धारासारेत्यत्र 'स कीचकैः' इतिवदासारपदं संपातमात्रपरम् । व्याख्यातमिदम् । पूर्वे विशेषणेष्वेव ध्वनिः, अत्र तु विशेष्येऽपीति पूर्वतो भेदः । सार्वभौम-

### मधुसूदनी

संहितस्ततः श्लिष्टं तत्स्यात् । एवं च मांगल्यं, च शोभनत्वम् मंगलग्रहत्वं च । गौरवं श्रेष्ठत्वं गीष्पतित्वं च । दुर्वृत्ते खले अशनित्वं वज्रत्वं शनिग्रहकार्यकर्तृत्वं च । राजत्वं चन्द्रत्वं नृपत्वं च । मित्रत्वं सुहृत्त्वं सूर्यत्वं च ।

बुधशुक्राभेदरूपे बुधत्वशुक्रत्वे गुर्वाद्यभेदरूपाणि गुरुत्वादीनि राजनि व्यज्यन्ते । एवमत्र विज्ञपदस्य बुधरूप एवार्थो ग्राह्यः । बुधश्च ग्रहोऽपि इति कथंचिन्नेयः स्यात् । सुकवितामित्यतः सुपदं निसृतं चेत्तर्हि कवितां भार्गवतां काव्यं च अर्थः स्यात् । उशना भार्गवः कविरिति अमरकोषात् । सुपदस्थाने हिपदं निवेश्यम् ।

अविरलेति । द्वितीयानने एकाशीतितमे पृष्ठे किंचिदक्षरविनिमययुतः श्लोकोऽयं

### बालक्रीड़ा

रहित कवित्व काव्य एवं भार्गवत्व, स्वजनों में माङ्गल्य मंगलाय हितं इस अर्थ में ष्यञ् प्रत्यय हुआ है । अतः मंगलकारी मंगल के लिए हितावह और मंगल ग्रहत्व, सभी जनता में गौरव श्रेष्ठत्व एवं गुरुग्रहत्व, दुराचारियों में अशनिता वज्रत्व एवं शनिग्रहकार्यकतृत्व, मानवमण्डल में राजत्व नृपत्व एवं चंद्रत्व, अकिंचन जन पर मित्रत्व मैत्री एवं सूर्यत्व को अव्याहृत रूप से धारण करने वाले हे देव ! विश्व में आप एक ही है ।

यहाँ शक्ति के नियत्रण होने पर बुधाद्यभेदरूप बुधत्व एवं शुक्रत्व आदि राजा में व्यक्त होते हैं ।

और भी जैसे अविरल । यह पद्य द्वितीय आनन में ८१ पृष्ठ में व्याख्या के द्वारा स्पष्ट कर दिया है ।

अर्थशक्तिमूलो यथा—

'कस्तूरिकातिलकमालि ! विधाय सायं
स्मेरानना सपदि शीलय सौधमौलिम् ।
प्रौढिं भजन्तु कुमुदानि मुदामुदारा-
मुल्लासयन्तु परितो हरितो मुखानि ॥'

अत्र त्वदीयमाननं कलङ्कचन्द्रिकाविशिष्टचन्द्राभिन्नमिति रूपकं कुमुदविकासादिना ध्वन्यते न तु भ्रान्तिमान् । कुमुदानां हरितां चाचेतनत्वात् । न चाचेतनेषु मुदामसंभवादवश्यं कुमुदादिषु चेतनत्वारोपेण भाव्यम्, तेन च भ्रान्तिसिद्धिरिति वाच्यम् । मुत्पदस्य विकासे लाक्षणिकत्वात् ।

### मर्मप्रकाशः

इचक्रवर्ती दिग्गजश्च सौधमौलिं गृहशिखरम् । मुदां विकासानाम् । उदारामतिशयिताम् । हरितो दिशः कर्त्र्यः ।

### मधुसूदनी

व्याख्यातः प्राक् । आसारपदार्थो धारासंपातः । पुनर्धारापदविन्यासात् आसारपदस्य विशेषणवाचकपदसमवधाने विशिष्टवाचकानां पदानां विशेष्यमात्रपरत्वात् संपातमात्रपरत्वम् । स कीचकैरिति कालीदासीयपद्यवत् । अचेतनत्वादिति । भ्रान्तिर्ज्ञान विशेषः । स च चेतनानामेव धर्मः । मुदां हर्षाणाम् । तेन चेतनत्वारोपः । मुत्पदे लक्षणा ततो मुदां विकासानाम् । मुद्रयन्ति असंकोचं यन्ति धातूनामनेकार्थत्वात् ।

### बालक्रीड़ा

अर्थशक्तिमूल जैसे—हे आलि ! भाल में कस्तूरी का तिलक लगाकर हँसती हुई शीघ्र ही सायंकाल में महल की चोटी पर बैठो । जिसके फलस्वरूप रात्रिकमल विकास की उदार प्रौढ़ि को प्राप्त करें और चारों तरफ दिशाएँ अपने मुखों को उल्लासित करें । अर्थात् दिशाओं के प्रथम भाग में उल्लास होवे ।

यहां भाल में कस्तूरी के तिलक का धारण, कुमुदों के विकास एवं दिशाओं के उल्लास से यह ध्वनित होता है कि हे आलि ? तुम्हारा मुख, कलंक और चन्द्रिका से विशिष्ट चन्द्र से अभिन्न है । अतः रूपकालंकार है न कि भ्रान्तिमान् । क्योंकि भ्रान्ति ज्ञान विशेष है जो चेतन का धर्म है । अतः चेतन को ही भ्रान्ति हो सकती है किन्तु कुमुद एवं दिशाएँ अचेतन हैं अतः उन को भ्रान्ति नहीं हो सकती है फलतः भ्रान्तिमान् अलंकार नहीं हो सकता है । यह आप कह नहीं सकते हैं कि अचेतन कुमुद एवं दिशाओं में मुद हर्ष का रहना असंभव है अतः उन में चेतनत्व का आरोप करना पड़ेगा जिस से भ्रान्ति की सिद्धि हो सकती है । क्योंकि मुत् पद यहाँ विकास अर्थ में लाक्षणिक है ।

इदं वा विविक्तमुदाहरणम्—

'तिमिरं हरन्ति हरितां पुरः स्थितं तिरयन्ति तापमथ तापशालिनाम् ।
वदनत्विषस्तव चकोरलोचने ? परिमुद्रयन्ति सरसोरुहश्रियः ॥'

इहापि वदनं चन्द्र इति गम्यते ।

आनन्दवर्धनाचार्यास्तु—

''प्राप्तश्रीरेष कस्मात्पुनरपि मयि तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसहो नैव संभावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते विकल्पानिति दधत इवाभाति कम्पः पयोधेः ॥'

## मर्मप्रकाशः

विविक्तं भ्रान्तिमदमिश्रितम् ।

## मधुसूदनी

प्राप्तश्रीरिति । अत्र आचार्या रूपकध्वनिसिद्धान्तं व्यवास्थापयन् । राजपण्डितस्तु तं चिन्वितुमाह—तच्चिन्त्यमिति । श्रियः प्राप्तये मन्थं करिष्यति किमित्येकः । निद्रातुमागच्छति किमिति द्वितीयः । द्वीपान्तरीयराजविजयाय सेतुं भन्त्स्यति किमिति तृतीयो विकल्पः । तच्च तादृशकल्पनं च । राजविशेष्यिकां राजा विष्णुरिति ज्ञाने भ्रान्तिनामके राजा विशेष्यः । तस्य रूपकस्य जीवातोः प्राणस्य । वैयधिकरण्यात् कम्पस्य जलधिगतत्वेन आहार्यतादात्म्यनिश्चयस्य कविगतत्वेन विभिन्नस्थानत्वान् न रूपकमित्यन्वयः । यः कोऽपि बिभेति स भयजनकं वस्तु ज्ञात्वैव, अत उच्यते, अज्ञातं तादात्म्यं भयहेतुके कम्पे । तस्या एव भ्रान्तेरेव ।

## बालक्रीड़ा

अथवा यह विविक्त भ्रान्तिमान् से अमिश्रित उदाहरण लीजिए ।

हे चकोर के समान लोचन वाली आलि ? तुम्हारे मुख की कान्तियाँ पुरः स्थित दिशाओं के अन्धकार को दूर करें। संतप्तों के ताप की शान्ति करें। और कमलों की शोभा को दवा दें ।

यहाँ भी तुम्हारा वदन चन्द्र है यह ध्वनित होता है ।

आनन्द वर्द्धनाचार्यजी जो कहते हैं कि—यह राजा लक्ष्मी को पा चुके हैं अतः लक्ष्मी के लिए मुझे मन्थन जनित खेद क्यों देंगे । पहली जैसी निद्रा की भी संभावना इस आलस्य रहित अत एव कर्मठ के लिए नहीं की जा सकती है । सेतु भी पुनः क्यों बनायेगा जब कि सकल द्वीपों के अधिकारी भी इस के अनुयायी हैं । इस तरह हे राजन् ? तुम्हारे आने पर विकल्प करता हुआ समुद्र मानों काँप रहा है ।

अत्र रूपकाश्रयेण काव्यचारुत्वव्यवस्थापनाद्रूपकध्वनिः” इत्याहुः। तच्चिन्त्यम्। अत्र च जलधिकम्पहेतुत्वेन विकल्पत्रयं कल्प्यते। तच्च प्रकृते राजविशेष्यिकां जलनिधिगतामनाहार्यविष्णुतादात्म्यज्ञानरूपां भ्रान्तिमेवाक्षिपति, न रूपकम्। तज्जीवातोराहार्यविष्णुतादात्म्यनिश्चयस्य कम्पाजनकत्वात्। कविजलधिगतत्वेन वैयधिकरण्याच्च। अज्ञातमेव केवलं विष्णुतादात्म्यं जलधेः कम्पेऽनुपयुक्तमेव। चमत्कारिण्यपि चात्र भ्रान्तिरेवेति ध्वनिरपि तस्या एव युक्तः।

## मर्मप्रकाशः

तज्जीवातो रूपकजीवातोः। वैयधीति। कवौ जलधौ। आहार्यविष्णुतादात्म्यनिश्चयस्तु कवाविति न तस्य तज्जनकत्वम् सामानाधिकरण्याभावात्। केवलमित्यस्यैव व्याख्याऽज्ञातमेवेति। चन्द्रालोके तु—‘यत्रोपमानचित्रेण सर्वथाप्युपरज्यते। उपमेयमयी भित्तिस्तत्र रूपकमिष्यते॥ समानधर्मयुक्तस्यारोपात्सोपाधिरूपकम्। उत्सिक्तक्षितिभृल्लक्षपक्षच्छेदपुरंदरः॥’ साधारणधर्मविशिष्टोपमानस्य यत्रारोप इत्यर्थः। पृथक्कथितसादृश्यं दृश्यसादृश्यरूपकम्। उल्लसत्पञ्चशाखोऽयं राजते भुजभूरुहः॥ स्यादङ्गयष्टिरित्येवंविधमाभा-

## मधुसूदनी

भगवन्! पण्डितानां राजन्? परालोचने निमग्नः स्वं नालोचयसि। समर्थोऽसि। कस्तूरिकातिलकमालि विधाय सायमित्यत्र भवता किमवोचि। “अत्र रूपकं कुमुदविकासादिना ध्वन्यते, न भ्रान्तिमान्; कुमुदानां ह्रितां चाचेतनत्वात्” इति। अत्र किमुच्यते “तच्च प्रकृते राजविशेष्यिकां जलधिगतां भ्रान्तिमेवाक्षिपति, अर्थात् जलधिर्भ्रान्तोऽतो न रूपकम्” इति। तत्र को हेतुस्तत्र रूपकं ध्वन्यते अत्र तन्न।

## बालक्रीड़ा

इस काव्य में रूपक के सहारे सुन्दरता व्यवस्थित है अतः रूपक ध्वनि है। वह चिन्त्य है। यहाँ समुद्र के काँपने के हेतु तीन विकल्प है। श्री की प्राप्ति के लिए मन्थन करेगा क्या। एक। सोने के लिए आरहा है क्या। द्वितीय। द्वीपान्तरीय राजाओं को जीतने के लिए पुल बाँधेगा क्या। तीसरा। ये तीनों विकल्प प्रकृत पद्य में समुद्र की राजा के विषय में यह राजा विष्णु हैं इस तरह की निश्चित विष्णु सम्बन्धी ज्ञान रूपा भ्रान्ति को ही व्यक्त करते हैं। न कि रूपक को। क्योंकि रूपक का प्राण है विष्णु के सम्बन्ध में आहार्य कृत्रिम तादात्म्यज्ञान, और कृत्रिम ज्ञान से समुद्र कापेगा क्यों। दूसरी बात है कि समुद्र जड है अतः आहार्य या अनाहार्य कैसा भी तादात्म्य ज्ञान उसको नहीं होगा वह होगा कवि को और कम्प हो रहा है समुद्र को अतः कार्य कारण में वैयधिकरण्य है। अज्ञात विष्णु विषयक तादात्म्यज्ञान जलधि के कम्प में अनुपयुक्त है। तीसरी बात है कि यहां चमत्कार भी भ्रान्ति से ही हो रहा है अतः ध्वनि भी उसी भ्रान्ति ही की युक्त है।

भगवन्! पण्डितों के राजन् या राजाओं के पण्डित! आप दूसरों के आलोचन करने में प्रवृत्त हुए अपनी आलोचना नही करते हैं। आप समर्थ हैं। अस्तु। “कस्तूरी का

**अथास्यापि कविसमयविरुद्धतया चमत्कारापकर्षका लिङ्गभेदादयो दोषाः संभवन्ति ।**

### मधुसूदनी

तत्र भ्रान्तिमान्न, अत्र भ्रान्तिमान् ध्वन्यते । ननु भ्रान्तिश्चेतनधर्मः कुमुदानि दिशश्चाचेतनानि । इति चेत्, तर्हि समुद्रः कः । किं चेतनः । न हि । सोऽप्यचेतनः । एवं तत्र रूपकं चेदत्रापि रूपकं, तत्र चेद् भ्रान्तिमान्न तर्हि अत्रापि भ्रान्तिमान्नेति

### बालक्रीड़ा

तिलकमालि ! विधाय सायम्, में आपने क्या कहा कि यहाँ कुमुदविकसादि से रूपक ही ध्वनित होता है न कि भ्रान्तिमान् । और यहाँ क्या कहते हैं कि वे विकल्प जलधि की "राजा विष्णु हैं" इस भ्रान्ति (अर्थात् समुद्र भ्रान्त है ) का ही आक्षेप करता है न कि रूपक का । उसमें कौन हेतु है कि वहां रूपक ध्वनि है यहाँ नहीं है । और वहाँ भ्रान्तिमान् नहीं है यहाँ भ्रान्तिमान् है । सुनो भाई विगड़ो मत । कुमुद एवं दिशाएँ अचेतन हैं । अचेतन में भ्रान्ति ज्ञान नही हो सकता है । वह चेतन को ही होता है । हाँ ठीक है । किन्तु समुद्र क्या चेतन है । नहीं नहीं । वह अचेतन है । तब वहाँ अचेतन में भ्रान्ति नहीं होगी और यहाँ अचेतन में भ्रान्ति होगी यह कौन तुक है । यदि वहाँ रूपक है भ्रान्ति नहीं है तब यहाँ भी रूपक ही है भ्रान्ति नहीं है । अरे भाई सुनो भी तो । रूपक का ज्ञान आहार्यज्ञान है जो कल्पित मिथ्या ही होता है । मिथ्याज्ञान से कम्पा नहीं होती है कम्पा होती है सत्यज्ञान से । हे पण्डितराज ? राजाओं के पण्डित आप हैं उन को जैसा आप समझावें ठीक है । किन्तु याद करिये । नव्यमत के अनुसार रस निरूपण में आपने क्या लिखा है । सत्य शोकादि से ही दुःख पैदा होता है कल्पित शोक से नहीं यही सिद्धान्त है और वह सत्य शोकादि नायक के ही हैं अतः उसी को दुःख होगा सहृदयों में कल्पित हैं अतः वे उनसे दुःखी नहीं होंगें । यह आप नहीं कहसकते हैं क्यों कि ऐसा मानने पर कल्पित मिथ्या रज्जु में सर्पज्ञान से भय एवं कम्पा का होना अनुपन्न हो जायगा । जिसका उल्लेख एवं मान्यत्व सभी आचार्यों ने किया है । इस आपके लेख के अनुसार क्या मानना चाहिए । भगवन् ? रज्जु में कल्पित सर्पज्ञान भय एवं कम्पा का जनक है और राजा विष्णु है यह कल्पित मिथ्या ज्ञान कम्पा का जनक नहीं है । क्यों । क्या तुक है । और भगवन् ? "वैयधिकरण्य से भी" यह कथन तो धूलिप्रक्षेप है । विकल्प कौन करता है और काँपता कौन है । समुद्र करता है और वह काँपता है । (विकल्पों का आकार पहले वतलाया जा चुका है ) उससे क्या प्रतीत होता है । राजा विष्णु है यही ज्ञान । यह ज्ञान किसके हृदय में होता है । जो विकल्प करता है उस समुद्र के हृदय में । तब वैयधिकरण्य कैसा । चेतनत्व के आरोप से सव ठीक है । इस से अज्ञात तादात्म्य कम्पा में अनुपयुक्त है यह कथन भी परास्त हुआ । यहाँ अज्ञात तादात्म्य इतना ही लेख पर्याप्त है अतः एव और केवल पद का विन्यास निरर्थक है । इस तरह यहाँ कुछ भी क्षोद क्षम नहीं है ।

इस रूपक में भी कविसमय के विरुद्ध होने से लिंग भेद एवं वचन भेद चमत्कार के अपकर्षक दोष होते हैं । जैसे—

यथा—

'बुद्धिरर्चिर्महीपाल ? यशस्ते सुरनिम्नगा ।
कृतयस्तु शरत्कालचारुचन्दिरचन्द्रिका ॥'

अत्र विषयविषयिणोर्लिङ्गादिकृतं वैलक्षण्यं तयोस्ताद्रूप्यबुद्धौ प्रतिकूलम्। क्वचित्कविसमयसिद्धतया चमत्कारहानिराहित्ये तु नामी दोषाः। यथा 'संतापशान्तिकारित्वाद्वदनं तव चन्द्रमाः' इत्यादौ हेतुरूपके ।

इति रसगङ्गाधरे निरूपितं रूपकप्रकरणम् ।

### मर्मप्रकाशः

सरूपकम् । अङ्ग्यष्टिधनुर्वल्लीत्यादि रूपितरूपकम् ॥' इत्यपि दृश्यते ॥ इति रसगङ्गाधरे मर्मप्रकाशे रूपकप्रकरणम् ॥

### मधुसूदनी

सिद्धम्। ननु रूपकजीवातुराहार्यज्ञानं तच्च कल्पितं मिथ्यैव। अथ च सत्यज्ञानस्य कम्पजकत्वं मिथ्याभूतस्य कल्पितस्य न तज्जनकत्वमिति चेत्, स्मर, नव्यमतेन रसनिरूपणावसरे किम्वुक्तम्। न च सत्यस्य शोकादेर्दुःख जनकत्वं क्लृप्तं न कल्पितस्येति नायकानामेव दुःखं न सहृदयस्येति वाच्यम्। रज्जुसर्पादेर्भयकम्पाद्यनुत्पादकतापत्तेरिति। कल्पितं रज्जौ सर्पज्ञानं भयकम्पजनकं, राजा विष्णुरिति कल्पितं तन्न तथेति कस्य हेतोः। वैयधिकरण्याच्चेत्यपि धूलिप्रक्षेपः। को विकल्पान् धत्ते कः कम्पते ? समुद्रः। (विकल्पानामाकारः पूर्वमुक्तः) तेन किं ज्ञायते। राजा विष्णुरिति। एतत् कस्य हृदये ज्ञानम्, यो विकल्पान् धत्ते तस्य हृदये। तर्हि कुतो वैयधिकरण्यम्। विकल्पान् दधतः पयोधेः कम्पः। यतः स विकल्पान् धत्ते ततः स कम्पते। चेतनत्वारोपेण सर्वं सुस्थम्। एतेन अज्ञातं तादात्म्यं कम्पेऽनुपयुक्तमिति परास्तम्। अत्र अज्ञातं तादात्म्यमित्येवालम्। एवकेवलपदयोर्विन्यासे किं स्वारस्यम्। क्षोदक्षमं नास्ति सर्वमेतत्।

इति मधुसूदन्यां रूपकप्रकरणम्।

### बालक्रीड़ा

हे महीपाल ? तुम्हारी बुद्धि समुद्र है, तुम्हारा यश गंगा है और तुम्हारी कृतियाँ शरत्काल की सुन्दर चाँदनी हैं।

यहाँ विषय बुद्धि में स्त्री लिंगत्व है विषयी समुद्र में पुलिंगत्व हैं। विषय यश नपुंसक है और विषयी गंगा स्त्रीलिंग है। उत्तरार्द्ध में वचन भेद है। कृतियाँ बहुत हैं चन्द्रिका एक है। इस तरह लिंग एवं वचन कृत वैलक्षण्य विषय और विषयी के ताद्रूप्यज्ञान में प्रतिकूल है। कहीं कविसमय से सिद्ध होने पर चमत्कार की हानि नहीं होती है अतः ये दोष नहीं होते है। जैसे संताप की शान्ति करने के कारण तुम्हारा वदन चन्द्रमा है इस हेतु रूपक में। यह रसगंगाधर में बालक्रीड़ा में रूपक प्रकरण समाप्त हुआ।

अथ परिणामः—

विषयी यत्र विषयात्मतयैव प्रकृतोपयोगी न स्वातन्त्र्येण स परिणामः ॥ अत्र च विषयाभेदो विषयिण्युपयुज्यते । रूपके तु नैवमिति रूपकादस्य भेदः । अयमुदाह्रियते—

'अपारे संसारे विषमविषयारण्यसरणौ
मम भ्रामं भ्रामं विगलितविरामं जडमतेः ।

## मर्मप्रकाशः

परिणामं लक्षयति—अथेति । विषयी उपमानम् । विषयेति । उपमेयेत्यर्थः । एवव्यावर्त्यमाह—न स्वातन्त्र्येणेति । स्वस्वरूपेणेत्यर्थः । तत्रेति शेषः । स विषयाभेदः । अत्र च परिणामे च । नैवमिति । किंतु विपरीतमिति भावः । रूपकादस्य भेद इति । वयं तु ब्रूमः—उपमानप्रतियोगिकाभेदो रूपकम् । उपमेयप्रतियोगिकाभेदः परिणामः प्रतीपवत् । तत्राभेदे उपमेयप्रतियोगिकत्वतात्पर्यग्राहकं प्रकृतकार्योपयोगः । न तु तच्छरीरेऽस्य प्रवेशः । एवं च यत्रोपमानस्य स्वात्मनैव प्रकृतकार्योपयोगो यत्र चोदासीनता तत्र रूपकमेव । एवं च परिणामो विशेषणसमासायत्तः । रूपकं मयूरव्यंसकादि समासायत्तं मुखचन्द्र इत्यादौ । यदि तु चन्द्रमुखमिति प्रयुज्यते तदा विशेषणसमासायत्तमपि रूपकमिति । परे तु "उपमानोपमेयपदानामुपमानप्रतियोगिकाभेदसंसर्गेण बोधकानां 'मयूरव्यंसकादयश्च' इति समासेन विशेषणसमासबाधाच्चन्द्रमुखमिति प्रयोग एव न" इत्याहुः । भ्रामं भ्रामं भ्रान्त्वा । एवमग्रेऽपि । विगलितेति क्रिया-

## मधुसूदनी

### अथ परिणामः

यत्र विषयी उपमानम् स्वातन्त्र्येण विषयमुपमेयं विहाय स्वात्मना प्रकृत कार्योपयोगी न, अपितु विषयात्मतयैव विषयस्वरूपमनुसन्धायैव तथा स विषयिणो विषयस्वरूपेणैव प्रकृतकार्योपयोगः परिणामः । एवं हि "तत्राभेदे उपमेयप्रतियोगिकत्व तात्पर्यग्राहकं प्रकृतकार्योपयोगः । न तु तच्छरीरेऽस्य प्रवेशः । इति नागेशोक्ति श्चिन्तनीया । प्रकृतकार्योपयोगित्वपर्यन्तस्य परिणामशरीरत्वम् । अतएव तिरयतुपदस्यासमस्तत्वादस्य वाक्यगत्वमिति स्वोक्त्यैव निरसनात्, भगवदात्मतयैव तमालस्य संसारतापनिर्तनक्षमत्वमिति व्यवहाराच्च ।

## बालक्रीड़ा

### "अथ परिणाम अलंकार"

जहाँ विषयी, विषय के रूप में ही न कि स्वतन्त्र रूप से अर्थात् विषय स्वरूप में प्रकृत कार्य का उपयोगी हो वहाँ वह विषयरूपता विषयाभेद परिणाम है। वही हृद्य होने पर अलंकार होता है । यहाँ परिणाम में विषयाभेद विषयी में उपयुक्त होता है । रूपक में तो ऐसा नहीं है, वहाँ तो विषयी का अभेद विषय में होता है अतः रूपक से इसका भद है ।

परिश्रान्तस्यायं तरणितनयातीरनिलयः
समन्तात्संतापं हरिनवतमालस्तिरयतु ॥'

अत्र भगवदात्मतयैव तमालस्य संसारतापनिवर्तनक्षमत्वम्। मार्ग-श्रान्तजनसंतापहारकत्वाद्रमणीयशोभाधारकत्वाच्च तमालो विषयितयोपात्तः। अयं समानाधिकरणो वाक्यगः।

समासगो यथा—

'महर्षेर्व्यासपुत्रस्य श्रावंश्रावं वचःसुधाम्।
अभिमन्युसुतो राजा परां मुदमवाप्तवान् ॥'

### मर्मप्रकाशः

विशेषणम्। हरिरेव नवतमालः। भक्तोक्तिरियम्। भगेति। अत्रेत्यादिः। ननु हरेर्विषयित्वेन रूपकमेवेदमत आह—मार्गेति। महर्षेरिति। शुकदेवस्येत्यर्थः। श्रावं श्रावं वचःसुधा-

### मधुसूदनी

अपार इति। अपारे अनवधौ इह संसारे। विषमा विषया एव अरण्यम्। तत्सम्बन्धिन्यां सरणौ मार्गे विगलितविरामं यथास्यात्तथा विराममकृत्वैव भ्रामं भ्रामम्। अतएव परिश्रान्तस्य जडमतेर्मम समन्तात् सर्वतो दिशि वर्त्तमानं सन्तापं तरणेः सूर्यस्य तनयाया यमुनाया तीरे निवासी अयं हर्यभिन्नस्तमालस्तिरयतु।

अत्र संसार एव वारं वारं गमनागमनमेव तापः। अथवा संसारसम्बन्धि-विषयारण्यभ्रमणपरिश्रान्तिसमुत्थस्तापः। तन्निर्वर्तनक्षमत्वं तमाले भगवत्स्वरूपतयैव। अतएव मार्गभ्रमणश्रान्तजनतापहारकस्तमाल उपमानतया उपात्तः।

### बालक्रीड़ा

इसका उदाहरण देते हैं। अपार संसार के विषयरूपी जंगल की ऊबड़ खावड़ राह में क्षणभर का भी विश्राम किये विना घूम-घूम करके थके हुये मुझ जड़मति के चारों तरफ के तापों को यहाँ यमुना तीर निवासी यह नूतन हरि तमाल दूर करे।

यहाँ तमाल में संसार के तापों से निवर्त्तन करने की क्षमता भगवत्स्वरूपता के ही बदौलत है। प्रश्न=जब तमाल में स्वतः ऐसी क्षमता नहीं है तब उसको उपमान क्यों बनाया। उपमान तो वह होता है जो अधिक गुणशाली हो। उत्तर। संसार के याव-त्तापों के दूर करने की क्षमता उसमें यद्यपि नहीं है तद्यपि मार्ग में चलकर थके हुए बटोहिएँ के संताप को तो दूर करता ही है और रमणीय शोभाशाली होने के कारण बटोहियों के आकर्षण करने में समर्थ भी है बस एतावान् साधर्म्य से उपमान बनाया। यह समान विभक्तिक स्थल में वाक्यगत परिणाम है।

समासगत परिणाम जैसे=व्यास जी के पुत्र महर्षि शुकदेव जी की वचन सुधा को

व्यधिकरणो यथा—

'अहीनचन्द्रा लसताननेन, ज्योत्स्नावती चापि शुचिस्मितेन।
एषा हि योषा सितपक्षदोषा, तोषाय केषां न महीतले स्यात् ॥'

अत्र सर्वेषामेव तोषाय स्यादित्यनेन विरहिजनतोषजनकत्वमपि लभ्यते। तच्चारोप्यमाणशुक्लपक्षरजन्याः स्वात्मना बाधितं योषारूपेण तु संगच्छत इति भवति परिणामः। स च परस्परसापेक्षबहुसंघातमकतया सावयवः।

मर्मप्रकाशः

मिति विशिष्टं समस्तमेकं पदम्, मयूरव्यंसकादित्वात् स्नात्वाकालक इतिवत्। प्रकृतकार्योपयोगित्वपर्यन्तस्य परिणामशरीरत्वात्, अत एव तिरयतुपदस्यासमस्तत्वात्पूर्वोक्तस्य वाक्यगत्वमित्याहुः। क्वचित्तु 'हरिरिह तमालः' इति पाठः तत्र वाक्यगत्वं स्पष्टमेव। तदा वचःसुधामित्येव श्रावं श्रावमिति भिन्नं पदमिति बोध्यम्। अभिमन्युसुतः परीक्षितः। आननेनेति च्छेदः। एषा कामिनी शुक्लपक्षयामिनीत्यर्थः। अत्र नञ् काक्वाम्। तल्लब्धमर्थमाह—अत्रेति। आरोप्येति। योषायामित्यादिः। तस्या उद्दीपकत्वेन तत्तापजनकत्वादिति भावः। नन्वेवं समानाधिकरण एवायमिति कथं विपरीतप्रतिज्ञा अत आह—स चेति। उक्तप्रधानपरि-

मधुसूदनी

अन्यथा अधिकगुणविशिष्टत्वरूपमुपमानत्वं तमाले न स्यात्। समानाधिकरणः समानविभक्तिकतया विषयविषयिणोः। एकाधिकरणः।

सितपक्षस्य शुक्लपक्षस्य दोषा यामिनी। योषा कामिनी। परस्परं सापेक्षाणां बहूनां परिणामानां संघः समूहः। आद्ये अर्धे पद्यस्य पूर्वभागे द्वौ आननेन पूर्णचन्द्रा (एकः) शुचिस्मितेन ज्योत्स्नावती (द्वितीयः) अवयवौ व्यधिकरणौ भिन्नविभक्तिकौ। एतदादायैव व्यधिकरणः परिणामः।

बालक्रीड़ा

सुन-सुन कर अभिमन्यु का सुत राजा परीक्षित आनन्द को पा गया। यहाँ "वचः सुधाम्" में समास है।

विभिन्न विभक्तिक परिणाम जैसे—शोभायमान आनन से पूर्णचन्द्रा, शुद्धहास्य से ज्योत्स्ना युक्त यह शुक्लपक्ष की यामिनी रूप कामिनी महीतल में किसको तुष्ट नहीं करती है। अर्थात् सभी को तुष्ट करती है।

यहाँ सर्वतोष कारिणी कहने से विरहिजनतोष कारिणी है यह भी मिल जाता है। वह विरहिजनों को तुष्ट करना शुक्लपक्ष की रजनी में अपने आप से बाधित है किन्तु वह तोष योषा से संगत है अतः परिणाम हो जाता है। वह परिणाम परस्पर सापेक्ष बहुसंघात्मक है। अतः सावयव है। उसमें पूर्वार्ध के दो अवयव भिन्नविभक्तिक हैं और उत्तरार्ध का एक अवयव समान विभक्तिक है।

तत्राद्यार्धगतौ द्वाववयवौ व्यधिकरणौ, द्वितीयार्धगतश्चैकः समानाधिकरणः।

यच्चाप्पदीक्षितैर्वैयधिकरण्येन परिणामे उदाहृतम्—

'तारानायकशेखराय, जगदाधाराय, धाराधर-
च्छायाधारककंधराय, गिरिजासङ्गैकशृङ्गारिणे।
नद्या शेखरिणे, दृशा तिलकिने, नारायणेनास्त्रिणे
नागैः कङ्कणिने, नगेन गृहिणे, नाथाय सेयं नतिः॥'

## मर्मप्रकाश

णामप्रकरणे। 'इदं वैयधिकरण्यं रूपकेऽपि दृश्यते' इत्युक्त्वा तारानायकशेखरायेत्याद्युदाहृतम्। तत्र को दोषः। किं च नद्या शेखरिणे इत्यंशे विषयात्मतयैव प्रकृतोपयोगाभावात्परिणामाभावेऽपि वाच्यमार्थं वा रूपकमपि न वाच्यम्। उपमानप्रतियोगिकाभेदस्योपमेयेऽभानात्। किं च शृङ्गारितोपपादकं शेखरादीत्यप्ययुक्तम्। नारायणेनास्त्रिणे इत्यस्य तदुपपादकत्वाभावात्। किं तु नमस्यतासंपादकशिवनिष्ठोत्कर्षबोधकानीमानि विशेषणानि। तदुपपादकता च शेखरस्य नदीतादात्म्यापत्त्येति परिणाम एवायम्। शेखरस्य नीचजनसाधारणत्वात्। इत एवास्वरसाद्-द्विर्भावः पुष्पकेतोरिति पद्यान्तरमुदाहृतं तैः। तस्मात् 'यच्च इत्यादि 'कुत्रास्ति परिणामः' इत्यन्तं चिन्त्यमिति बोध्यम्। तारेति। चन्द्रशेखरायेत्यर्थः। धाराधरेति। नीलग्रीवायेत्यर्थः।

## मधुसूदनी

उत्तरार्धगत एकः सितपक्षदोषा योषा इत्येवं समानविभक्तिकः अवयवः। अयमप्यस्तु किन्तु द्वाभ्यामवयवाभ्याम् व्यधिकरणत्वं प्राप्तमेव तस्य।

तारेति। चन्द्रशेखरः, इन्दुमौलिरिति प्रसिद्धिर्न तु गंगाशेखरः नदीमौलिरिति। प्रत्युत "तीर्त्वा भूतेशमौलिस्रजममरधुनीम्" इति दिशा भूतेशमौलिमालेति प्रसिद्धि गंगाविषये। ततो नद्या माल्यवते इति पाठः साधीयान्। धाराधरस्य छायां धारयन्ती कन्धरा यस्य तस्मै नीलग्रीवाय। गिरिजासंगेन एकः केवलः शृंगारो वेशभूषादिस्तद्वते। न तु शृंगारो रसोऽत्र ग्राह्यः। तथात्वे रसस्योक्तिः स्वशब्देनेति दिशा रसदोषः स्यात्। तपनः सूर्यस्तत्तनुभुवो यमस्य शत्रूणां निग्रहाय। अथवा तत्तनुभुवः कर्णस्य लोकानुग्रहाय।

## बालक्रीड़ा

जो तो अप्पय्य दीक्षित जी ने भिन्नविभक्ति स्थल में परिणाम का उदाहरण लिखा है—जिसने चन्द्र को शेखर मुकुट बनाया है, जगत् का जो आश्रय है, जिसकी ग्रीवा मेघ की शोभा को धारण कर रही है अर्थात् जो नीलग्रीव हैं, जो पार्वती के सम्पर्क ही से शृंगारी है, गंगा नदी जिसका शेखर है; तृतीय नेत्र अग्नि ही जिसका तिलक है, त्रिपुरासुर के संहार काल में नारायण जिसके अस्त्र हैं, नाग जिसके कंकण है और कैलास पर्वत जिसका घर है उस नाथ के लिए यह नति है।

यथा वा—

'द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं, विकल्प-
श्चिन्तारत्नस्य, वीप्सा तपनतनुभुवो, वासवस्य द्विरुक्तिः।
द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य, कुर्व-
न्नानन्दं कोविदानां, जगति विजयते श्रीनृसिंहक्षितीन्द्रः॥'इति।

अत्र चिन्त्यते—तारानायकशेखरायेति पद्ये गिरिजासङ्गैकशृङ्गारिणि भवे कविकर्तृका नतिः प्रक्रान्ता। शृङ्गारिता च शेखरादीनि भूषणान्यपेक्षत इति नद्या आरोप्यमाणशेखररूपतयैवोपयोगः, न स्वरूपेण। एवं दृशोऽपि तिलकरूपतयेति रूपकमेव शुद्धं भवितुमर्हति।

ननु परिणामे विषयाभिन्नत्वेन विषय्यवतिष्ठत इत्युक्तम्, प्रकृते च विषयवाचकेभ्यो नद्यादिशब्देभ्यः परस्यास्तृतीयाया अभेदार्थकत्वाच्छेखरादेश्च तदन्वयित्वात्कथं नात्र परिणाम इति चेत्, न। विषयाभिन्नत्वेन

### मर्मप्रकाशः

नद्या गङ्गया। दृशा भालचक्षुषा। नगेन कैलासेन। कोविदानां पण्डितानाम्। शुद्धं परिणामामिश्रम्। तदन्वयीति। तृतीयार्थाभेदान्वयित्वादित्यर्थः।

### बालक्रीड़ा

और भी जैसे=कामदेव का द्विधाभवन, विबुधों के विटपी कल्पवृक्ष का पुनः कथन, चिन्तामणि का विकल्प, सूर्यपुत्र यमराज की वीप्सा (शत्रुओं के दमन के लिए) अथवा सूर्यपुत्र कर्ण की वीप्सा (अनुगृहीत जनों को दान देने के लिए) इन्द्र की द्विरुक्ति और दैत्याधिप हिरण्य कशिपुप्रभृति दैत्य, दानव, राक्षसों के मथन करने में कला बहुल केलि करने वाले विष्णु का द्वैतभाव रूप श्रीनृसिंह क्षितीन्द्र विद्वानों को आनन्दमय करते हुए जगत् में सबसे बड़े हैं।

यहाँ विचार करते हैं कि तारानायक शेखराय पद्य में पार्वती के सम्बन्ध से शृंगारी भव को कवि के द्वारा नति करना प्रस्तुत है। शृंगारी बनने के लिए शेखरादि भूषणों की अपेक्षा होती है। अतः नदी गंगा का अपने जल के रूप में वहाँ कोई उपयोग नहीं है किन्तु उसका भूषण बनकर ही उपयोग हो सकता है। इसी तरह अग्निरूप तृतीय नेत्र का भी तिलक रूप से ही उपयोग हो सकता है अतः शुद्ध रूपक ही होना चाहिए।

प्रश्न=परिणाम में विषय से अभिन्न विषयी रहता है यही आपने कहा है। प्रकृत में विषय वाचक नदी आदि शब्दों के परे होने वाली तृतीया का अर्थ अभेद है और शेखर वगैरह का उस अभेद में अन्वय होता है तब क्यों नहीं यहाँ विषयाभेद रूप परिणाम होगा। उत्तर। ऐसा आप नहीं कह सकते हैं। उक्त रीति से विषय से अभिन्न विषयी के प्रतीत

विषयिणो भानेऽपि तेन रूपेण तस्यानुपयोगात्। द्विर्भावः पुष्पकेतोरिति पद्येऽपि कोविदानन्दजननजगदुत्कर्षौ कथ्येते राज्ञो नृसिंहस्य। तत्र कोविदानन्दजनकत्वमपि राज्ञ आरोपयमाणद्वितीयमन्मथादिताद्रूप्येण यथा संभवति न तथा केवलस्वरूपेण। तथाहि—अहो नयनानामस्मदीयानां साफल्यं, यदयमपरो मन्मथोऽस्माभिरालोक्यत इति मन्यमानानां तेषां नयनानन्दस्तावत्पुष्पकेतुनैवोपपाद्यते, न तु राज्ञा। एवमपरोऽयं कल्पतरुश्चिन्तामणिर्द्वितीयः कर्ण इन्द्रश्च भूगतोऽयमन्यो दारिद्र्यमस्माकं परिहरिष्यति। हरिः खल्वयं संसारं हरिष्यतीत्यभिमानाज्जायमानस्तेषामानन्दोऽप्यारोप्यमाणैः कल्पवृक्षादिभिरेवेति न विषयात्मना विषयिण उपयोगः, अपि तु स्वात्मनैवेति कुत्रास्ति परिणामः।

## मर्मप्रकाशः

कथ्येते इति। शत्रन्तलडन्ताभ्यामिति भावः। तत्र द्वयोर्मध्ये द्विर्भावः पुष्पकेतोरित्यर्थमाह—द्वितीयमन्मथेति। विबुधेति वाक्यार्थमाह—अपरोऽयं कल्पतरुरिति। विटपिनां पंचत्वाद् बहुवचनं कल्पतरुभेदाभिप्रायेण। विकल्पश्चिन्तारत्नस्येत्यस्यार्थमाह—चिन्तामणिर्द्वितीय इति। द्वितीय इत्यस्याग्रेऽप्यनुषङ्गो बोध्यः। तपनेत्यादेरर्थमाह—कर्ण इति। वासवेत्यर्थमाह—इन्द्रश्चेति। भूगत इत्यनेन प्रसिद्धेन्द्राद्व्यतिरेकः सूचितः। द्वैतं देवस्येत्याद्यर्थमाह—हरिरिति।

## मधुसूदनी

अत्र विचिन्त्यते। नात्र तथा शृंगारिणि भवे नतिः प्रक्रान्ता। निग्रहानुग्रहसमर्थस्यैव प्रणम्यत्वात्, शृंगारिणोऽतथाभूतस्यातत्त्वात्। अन्यच्च पण्डितराजस्य

## बालक्रीड़ा

होने पर भी विषयाभिन्न रूप से विषयी का प्रकृत भव की शृंगारिता में उपयोग नहीं हो सकता है। क्योंकि नदी वगैरह तो भूषण नहीं है भूषण तो शेखर आदि है। द्विर्भावः पुष्पकेतोः इस पद्य में भी नृसिंह राजा के कोविदानन्दजनन और जगदुत्कर्ष इन दो गुणों को ही कहते हैं। उनमें राजा का कोविदानन्दजनकत्व भी आरोप्यमाण द्वितीय मन्मथ प्रभृति के साथ अभेद करने पर ही संभव है न कि केवल अपने रूप में। जैसा कि अनुभव है= अहो आज हमारे नयन सफल हैं जो हम इस द्वितीय मन्मथ को देखते हैं। इस तरह नयनों की सफलता को मानने वालों को नयनानन्द अपर पुष्पकेतु से ही उपपन्न हो सकता है न कि राजा से। इसी प्रकार अपर कल्पतरु है चिन्तामणि है द्वितीय कर्ण है पृथ्वी में इन्द्र है यह हमारे दारिद्र्य को दूर करेगा। यह हरि है संसार से छुड़ा देगा। इस अभिमान से जो आनन्द उनको होने वाला है वह भी आरोप्यमाण कल्पवृक्षादि से ही होगा। अतः विषय के रूप में विषयी का उपयोग नहीं है अपितु विषयी का अपने ही रूप में उपयोग है तब कहां परिणाम है।

अलंकारसर्वस्वकारस्तु—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति सूत्रयित्वा 'आरोप्यमणं रूपके प्रकरणोपयोगित्वाभावात्प्रकृतोपरञ्जकत्वेनैव केवलेनान्वयं भजते। परिणामे तु प्रकृतात्मतयारोप्यमाणस्योपयोग इति

### मर्मप्रकाश

प्रकरणोपेति। प्रकृतोपेत्यर्थः। प्रकृतोपरञ्जकत्वेनेति। तस्य स्वोपरक्तबुद्धिविषयीकरणेनेत्यर्थः। उपयोग इति। वक्ष्यमाणार्थपदस्यात्राप्यपकर्षः।

### मधुसूदनी

"रूपकमेव शुद्धं भवितुमर्हति" इत्यारभ्य "कुत्रास्ति परिणामः" इत्यन्तं लेखने व्यमोह एव केवलः। दीक्षितैरिह परिणामो न स्वीकृतः किन्तु रूपकमेव। व्यधिकरणं परिणाममुदाहृत्य रूपकेऽपि तदतिदिशद्भिरुच्यते। तथा च तेषामक्षराणि=इदं वैयधिकरण्यं रूपकेऽपि सम्भवति यथा तारेति। यथा द्विर्भाव इति। तस्मात्सर्वं चिन्तनं किमर्थमिति न विद्म इति। नागेशमहाशयः" नद्या शेखरिणे इत्यंशे विषयात्मतयैव प्रकृतोपयोगाभावात् परिणामाभावेऽपि इत्युक्त्वा तदुपपादकता च शेखरस्य नदीतादात्म्यापत्त्येति परिणाम एवायमिति किमूचे स एव जानातु इति चिन्त्यम्।

### बालक्रीड़ा

भगवन् पण्डितराज ? जिनका गंध भी नहीं लिया, स्वप्न भी तो जिनका नहीं आया ऐसे पदार्थों के लेखन में क्या ? आपको आनन्द मिलता है। कहाँ विचारे अप्पय्यदीक्षित जी ने यहाँ परिणाम को वैयधिकरण्येन लिखा है। वहाँ की पंक्ति "इदं च वैयधिकरण्यं रूपकेऽपि सम्भवति" यह है कि यह वैयधिकरण्य परिणाम में ही केवल नहीं होता है रूपक में भी संभव है। यथा तारानायकेति यथा वा द्विर्भावः पुष्प केतोरिति। अतः यह सब अपदार्थ ही आपने लिखा है। यदि लिखने का ही शौक है तो लिखिये कि चन्द्रशेखर ? चन्द्रशेखर ? पाहि माम्, इत्यादि चन्द्रशेखर या चन्द्रमौलिके रूप में शिव जी प्रसिद्ध हैं न कि नदीशेखर के रूप में। हाँ नद्या माल्यवते कह सकते हैं। अतः प्रसिद्धि विरुद्ध यह उक्ति है। दूसरी बात है यहाँ शृंगारी पद का अर्थ शृंगार रस वाला नहीं है। उस अर्थ को मानने पर दोष" रसस्योक्तिः स्वशब्देन" है। अतः "वेषभूषा से अपने को सजाने वाला" अर्थ है। इस तरह रसिक को प्रणति प्रक्रान्त है यह भी ठीक नहीं है। रसिक प्रणम्य नहीं होता है प्रणम्य तो जगत् का आधार अर्थात् पालन करने वाला, अनुयायी जनों पर अनुग्रह करने वाला, ओंर शत्रु संहार करके विपत्ति को टालने वाला। ये गुण भगवान् में हैं अतः ऐसे गुणशाली की प्रणति प्रक्रान्त है। यह कहना चाहिए।

अलंकार सर्वस्वकारने तो "आरोप्यमाण की प्रकृतोपयोगिता में परिणाम होता है ऐसा सूत्र वनाकर रूपक में आरोप्यमाण प्रकृतोपयोगी न होकर किन्तु प्रकृत का उपरञ्जक होकर ही अन्वित होता है। परिणाम में तो आरोप्यमाण प्रकृत के स्वरूप को ग्रहण करके

प्रकृतमारोप्यमाणतया परिणमति' इति व्याख्यातवान् । अत्रापि चिन्त्यते—आरोप्यमाणस्य प्रकृतोपयोग इत्यस्य प्रकृतकार्ये उपयोग, आहोस्वित्प्रकृतविषयात्मतया उपयोगोऽर्थः । न तावदाद्यः ।

'दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि ? नास्मि दूये ।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै
र्यत्खिद्यते तव पदं ननु सा व्यथा मे ॥'

इति त्वदुदाहृतरूपकोदाहरणे आरोप्यमाणानां कण्टकानां प्रकृतखेदव्यथारूपकार्ये उपयोगेनातिप्रसङ्गात् । न द्वितीयः ।

'अथ पक्त्रिमतामुपेयिवद्भिः सरसैर्वक्त्रपथाश्रितैर्वचोभिः ।
क्षितिभर्तुरुपायनं चकार प्रथमं तत्परतस्तुरंगमाद्यैः ॥'

इत्यत्र स्वोक्तव्यधिकरणपरिणामोदाहरणासंगत्यापत्तेः । यतो राजसंघटने

## मर्मप्रकाशः

दासे इति । नायिकां प्रति सापराधस्यानुभूततत्पादप्रहारस्य नायकस्योक्तिरियम् । नायिकासंबन्धात्पुलकोदयः । पुलकाङ्कुरा एव कण्टकाग्राणीत्यर्थः । तदुदेति । अलंकारसर्वस्वकृदुदाहृतेत्यर्थः । एवमग्रेऽपि । आरोप्येति । पुलकेष्वित्यादिः । प्रकृतेति । प्रकृतो यः खेदस्तत्संबन्धिनी या व्यथेत्यर्थः । पक्त्रिमतां पक्वत्वम् । तत्परतस्तदनन्तरम् । राजसंघटने राजमेलने ।

## बालक्रीड़ा

ही प्रकृतोपयोगी होता है । आरोप्यमाण प्रकृतात्मतया परिणत होता है' ऐसी व्याख्या की है । यहाँ भी विचार करते हैं ।

"आरोप्यमाण उपमान का प्रकृत में उपयोग" यहाँ प्रकृत पद का क्या अर्थ है । क्या प्रकृतकार्य अर्थ है अयवा प्रकृतविषय रूप अर्थ है । उनमें पहला नहीं ठीक है । क्योंकि दास के अपराव करने पर मालिकों का पादप्रहार करना उचित ही है अतः हे सुन्दरि ? इस पादप्रहार का मुझे कोई कष्ट नहीं है । किन्तु तुम्हारे स्पर्श से उठे हुए मेरे कठोर पुलकांकुररूपी काँटों के अग्रभाग से तुम्हारा कोमल पैर छिद गया यही व्यथा मुझे है ।

इस तुम्हारे दिये उदाहरण में आरोप्यमाण काटों का पदच्छेद जन्य मेरी व्यथा रूप प्रकृत कार्य में उपयोग होने से अतिव्याप्ति हो जाती है । दूसरा प्रकृतविषय रूप अर्थ भी नहीं है । क्योंकि—

उन संदेशहरों ने पहिले पक्वता प्राप्त हुए अर्थात् नपे तुले जोखे परिमित किन्तु अर्थगाम्भीर्ययुक्त और श्रुतिमधर वाक्यों से राजा का उपायन किया बाद में हाथी, घोड़े एवं रुपये पैसों से ।

ह्युपायनस्यारोप्यमाणस्य स्वात्मनैवोपयोगः, न तु विषयवचोरूपतया । वचसां तु विषयाणामारोप्यमाणोपायनरूपत्वेन परमुपयोग इति प्रत्युत विपरीतम् । तस्मादस्मदुक्तमेव व्यधिकरणपरिणामस्योदाहरणं साधु । इदं तु पुनर्व्यधिकरणरूपकं भवितुमर्हति । तृतीयार्थाभेदोऽपि मीनवतीनयनाभ्या-मित्यत्रेव प्रकृत्यर्थानुयोगिको बोध्यः । केचित्तु क्वचित् केवलो विषयः स्वात्मना

## मर्मप्रकाशः

उपायनस्य 'भेंट, नजर' इत्यादिभाषाप्रसिद्धस्य । आरोप्येति । वचसीत्यादिः प्रत्युत विपरीति । अत्रेदं चिन्त्यम्—यत्किंचिद्रूपोपायनस्य राजसंघटनानुपायत्वात् । विलक्षणवचन-तुरंगमादिरूपस्यैव च तदुपायत्वात् । एवं च राजसंघटनोपयोगित्वं तुरंगमादिरूपेणैवोपायनस्यै-तदुक्तिरेव विपरीतेति । अग्रिममवधारणमिदं त्वित्याद्युक्तं च चिन्त्यमिति बोध्यम् ।

## मधुसूदनी

केचित्तु मम्मटानुयायिनस्तु । निश्चीयमानविषयिविषयान्यतरत्वस्यान्यतर तादात्म्यस्य वल्लक्षणत्वात् रूपकलक्षणत्वात् । इत्यर्थः । एवं च विषयितावच्छेदक पुरस्कारेण उपस्थिते विषयिणि निश्चीयमानविषयतादात्म्यं द्वितीयं रूपकम् । प्रथमं तु पूर्वमुक्तमेवेति ।

## बालक्रीड़ा

इस अपने ही कहे हुए व्यधिकरण परिणाम के उदाहरण की असंगति हो जायगी। यहाँ राजा को अपनी तरफ मिलाने के लिए आरोप्यमाण उपायन का अपने ही रूप में उपयोग है न कि विषय वचन रूप में । अपितु विषय वचनों का आरोप्यमाण उपायन रूप में ही अतीव उपयोग है बल्कि यह विपरीत हुआ । इसलिए हमारा कहा हुआ ही व्यधिकरण का उदाहरण साधु है । यह तो व्यधिकरण रूपक का उदाहरण हो सकता है । वचोभिः में वचः पदोत्तर तृतीया का अभेद अर्थ भी मीनवती नयनाभ्याम् की तरह प्रकृतार्था नुयोगिक ही समझना चाहिए ।

भगवन् पण्डित नरेन्द्र ? अपने बनाये हुए लक्षण एवं उदाहरणों की भी संगति मिलाइये । आपने परिणाम का लक्षण लिखा है कि जहाँ विषयी उपमान, विषय के रूप से ही न कि अपने रूप से प्रकृत कार्य में उपयोगी होता है वह परिणाम है । आपका यह लक्षण आपके निरवयव केवल रूपक के उदाहरण बुद्धिर्दीपकला में जैसा कि फिट होता है वैसा आपके परिणाम के उदाहरण "अहीनचन्द्रा" में भी फिट नहीं ही होता है । सुनिये बुद्धि दीपकला है । जिस दीपकला से सब वस्तुओं का प्रकाशन होता है । यह कथन असंगत है क्योंकि दीपकला से भौतिक सूक्ष्म पदार्थों का भी प्रकाशन नहीं हो पाता है तब सबवस्तुओं का अर्थात् अवच्छेदकावच्छेवेन यावत् पदार्थों का प्रकाशन तो सुतराम् असंभव है । ऐसा प्रकाशन तो जहाँ न जाय रवि वहाँ जाय कवि के अनुसार बुद्धि से ही हो सकता है और परम अगम्य ब्रह्म का भी प्रकाशन "ददामि बुद्धियोगं तं येन मामुपयास्यसि" के अनुसार बुद्धि से ही

न प्रकृतोपयोगीत्ययमारोप्यमाणाभिन्नतयावतिष्ठते तत्रारोप्यमाणपरिणामः। यथा—'वदनेनेन्दुना तन्वी शिशिरीकुरुते दृशौ'। अत्र वदनमिन्द्वभिन्नतयावतिष्ठते। केवलस्य वदनस्य दृक्छिशिरीकारकत्वायोगात्। क्वचिच्चारोप्यमाणः स्वात्मना न प्रकृतकार्योपयोगीत्ययं विषयाभिन्नतयावतिष्ठते। तत्र विषयपरिणामः। यथा—'वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति'। अत्रेन्दुर्वदनाभिन्नतयावतिष्ठते। केवलस्येन्दोः स्मरतापापनोदकत्वायोगात्। एवं च

### मर्मप्रकाशः

वदनस्येति। तस्य जलभिन्नत्वादिति भावः। इन्दोरिति। तस्योद्दीपकत्वेन तज्जनकत्वादिति

### मधुसूदनी

मीनवती नयनाभ्यामित्यत्र पद्ये इत्यर्थः। न तु इत्यत्र पद्यांशभूते वाक्ये। सुरसेयं सुन्दरी सरसी इत्येवं सरसीतादात्म्यारोपः सिद्धः। आरोपस्य मृग्यत्वे हेतुमाह-स चेति। स च नयनयोर्मीनाभेदारोपश्च। तृतीयाया नयनपदोत्तरं स्थिताया विभक्तेः। प्रकृत्यर्थाभेदार्थकतायां नयनप्रतियोगिकाभेदार्थकतायाम्।

### बालक्रीड़ा

होता है। अतः दीपकला विषयी, बुद्धि विषय के रूप से ही प्रकृत सब अर्थात् अवच्छेदकावच्छेदेन यावत् पदार्थों के प्रकाशन कार्य में उपयोगी होती है। अतः परिणामालंकार ही यहाँ है। आपका कहा हुआ रूपक नहीं है।

उत्तरार्ध का भी यही हाल है। "कुछ भी नहीं मालूम पड़ता" यह अंश विषयी रात्रि में संगत नहीं होता है। क्योंकि रात्रि में शब्द सुनाई पड़ता है तथा चोरों को व्यभिचारियों को सब कुछ मालूम पड़ता है। हाँ बुद्धि शून्य को तो दिन में भी नहीं मालूम पड़ता है, रात्रि में तो कहना ही क्या है।

अहीनचन्द्रा पद्य में योषा कामिनी विषय है सितपक्ष की दोषा यामिनी विषयी है। सर्वजनतोपकर्तृत्व प्रकृत कार्य है। अब विचार यह है कि सब जनों में साधु सन्यासी महात्मा सन्त भी है विरक्त गृहस्थ भी है रोगी भी है क्रमशः इनको कामिनी हेय, आकर्षण शून्य और रोगवर्द्धक होने से तोषक नहीं है और यामिनी का अपने रूप से तोषण में उपयोग है। बल्कि उलटा ही हो रहा है कि कामिनी विषय का आरोप्यमाण यामिनी के रूप में उपयोग हो रहा है। अतः परालोचन प्रवृत्त ? श्रीमन् ? अपने आपको भी देखिये।

कोई तो कहते है कि कहीं पर केवल विषय अपने स्वरूप से प्रकृतोपयोगी नहीं है अतः आरोप्यमाण से अभिन्न मिलकर रहता है। वहाँ आरोप्यमाण परिणाम है। जैसे = तन्वी, वदन रूपी इन्दु से आँखों को ठण्ढा करती है। यहाँ वदन इन्दु से अभिन्न होकर अवस्थित है। क्योंकि केवल वदन आँखों को ठण्ढा नहीं कर सकता है। कहीं पर आरोप्यमाण अपने स्वरूप से प्रकृतकार्योपयोगी नहीं हो सकता है अतः विषय से अभिन्न होकर

परिणामद्वयात्मकमिदं रूपकमेव भवितुमर्हति। विषयतावच्छेदकविषयितावच्छेदकान्यतरपुरस्कारेण निश्चीयमानविषयिविषयान्यतरत्वस्य तल्लक्षणत्वात्। अत एवोक्तम्—'तद्रूपकमभेदो य उपमानोपमेययोः' इति। तस्मान्न रूपकात्परिणामोऽतिरिच्यते'' इति वदन्ति।

अथ बोधः—

हरिनवतमाल इत्यत्र भगवदभिन्नतमाल इति निर्विवादैव धीः। तथा श्रावं श्रावं वचःसुधामित्यत्र विशेषणसमासगतपरिणामे वचनाभिन्नां सुधामिति, पायं पायं वचःसुधामिति रूपके तु वचोनिष्ठाभेदप्रतियोगिनीं सुधामिति बुद्धिः। एवं च 'वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति' इति व्यस्तपरिणामे

मर्मप्रकाशः

भावः। तल्लक्षणेति। रूपकलक्षणेत्यर्थः। तदेवाह—अत एवेति। उक्तं मम्मटेनेति भावः। केचिद्वदन्तीत्याभ्यामरुचिः सूचिता। चमत्कृतिनिदानत्वेनालंकारभेद इति सिद्धम्। तेनान्यत्रेवात्रापि भेद एवोचित इति। परिणामे वचःसुधामित्यंश इत्यर्थः। सुधामितीत्यत्र धीरित्यस्यानुषङ्गः। एवमिति। प्राग्वदित्यर्थः। बोधवैलेति। अनुयोगित्वमुखत्वप्रतियोगित्वमुखत्वकृत-

मधुसूदनी

नयनाभ्यामित्यत्रत्यतृतीयाया अभेदोऽर्थः। तत्र अभेदे च प्रतियोगितासम्बन्धेन नयनार्थस्य अन्वयो व्युत्पत्तिसिद्धः। तथा आरोपो न संभवतीत्यतो मृग्य इति भावः। यथाकथंचित् सुन्दर्यां सरसीतादात्म्यस्य मुख्यवाक्यार्थस्य अनुरोधादित्यर्थः। तेन उक्तवाच्येन हेतुना। एवं च उक्तधीस्वीकारे च। इयं मीनवतीति पद्योक्त दिशा मुख्यवाक्यार्थानुरोधात्मिका सरणिः मार्गः।

बालक्रीड़ा

अवस्थित है वहाँ विषयपरिणाम है। जैसे—तन्वी वदनरूपी इन्दु से स्मरजनित ताप कामोद्रेक को लुप्त कर देती है दबा देती है। यहाँ इन्दुवदन से अभिन्न होकर अवस्थित है। केवल इन्दु में स्मरताप के अपनोदन दूर करने की योग्यता नहीं है प्रत्युत इन्दु स्मर को बढ़ाता है अतः यह दोनों तरह का परिणाम रूपक ही होना चाहिए। क्योंकि विषयतावच्छेदक मुखत्वादि, विषयितावच्छेदक चन्द्रत्वादि के पुरस्कार से विषयिविषयान्यतरत्व ही रूपक का लक्षण है अतएव कहा भी है कि वह रूपक है जो उपमान और उपमेय में अभेद है इसलिए परिणाम रूपक से अतिरिक्त नहीं है।

अब यहां परिणाम में बोध का क्या स्वरूप है उसे लिखते हैं। हरितमाल इसमें हर्यभिन्न तमाल भगवदभिन्न तमाल है यह बुद्धि निर्विवाद है। तथा श्रावं श्रावं वचः सुधाम् इस विशेषणसमास वाले परिणाम में वचनाभिन्न सुधा। पायं पायं वचः सुधाम् इस रूपक में

'वदनेनेन्दुना तन्वी शिशिरीकुरुते दृशौ' इति व्यस्तरूपके च बोधवैलक्षण्यम्। तथा—

'शान्तिमिच्छसि चेदाशु सतां वागमृतं शृणु।
हृदये धारणाद्यस्य न पुनः खेदसंभवः ॥'

इति परिणामे शृण्विति विहाय पिबेति कृते तत्रैव रूपके,

'विद्धा मर्मणि वाग्बाणैर्घूर्णन्ते साधवः खलैः।
सद्भिर्वचोमृतैः सिक्ताः पुनः स्वस्था भवन्ति ते ॥'

इति रूपके च बोधव्यवस्थितिः। तथा 'अहीनचन्द्रा लसताननेन ज्योत्स्नावती चापि शुचिस्मितेन' इति व्यधिकरणपरिणामेऽभेदस्य तृतीयार्थत्वाल्लसदानना-

## मर्मप्रकाशः

मिति भावः। एवमग्रेऽपीत्याह—तथेति। यस्य वागमृतस्य। स्थलान्तरे बोधमाह—तथेति।

## बालक्रीड़ा

वचोनिष्ठ अभेद की प्रतियोगिनी सुधा है यह बोध है। इस तरह वदनाभिन्न इन्दु से तन्वी स्मरोद्रेक को शान्त कर देती है। इस व्यस्त वाक्यस्थ परिणाम और वदन में रहने वाले अभेद के प्रतियोगी चन्द्र से तन्वी आँखों को शीतल करती है। इस व्यस्त वाक्यस्थ रूपक में विलक्षण बोध है। तथा—

हे दोस्त ? शान्ति चाहते हो तो शीघ्र ही सज्जनों के वागभिन्न अमृत को सुनो। हृदय में जिसके धारण करने से फिर खेद नहीं हो सकता है। इस परिणाम में।

शृणु पद को हटाकर पिव पद का विन्यास करके उसी रूपक में वचन में रहनेवाले अभेद के प्रतियोगी अमृत को पीवो।

साधु लोग खलों के वाग् रूपी वाणों से मर्म में विद्ध हुए चक्कर खाते हैं। किन्तु सज्जनों के वचनरूपी अमृत से सींचे हुए वे फिर स्वस्थ हो जाते हैं। इस रूपक में भी बोध की व्यवस्था है।

तथा अहीनचन्द्रा पद्य के व्यधिकरण परिणाम में तृतीया का अर्थ अभेद है अतः लसदानन से अभिन्न हीनेतर चन्द्रमा से युक्त नायिका है यह बोध होता है। किन्तु मीनवती नयनाभ्याम् पद्य की नायिका में सरसी तादात्म्यारोप आरम्भ में सिद्ध है। क्योंकि कोई वाधक नहीं है। वाद में उसका मीनों में नयनाभेदरोप से समर्थन नहीं होने से नयनों में मीनाभेद-रोप मृग्य हो गया। क्योंकि वह आरोप तृतीया की प्रकृति नयन में रहनेवाली अभेदार्थकता से संभव नहीं है इसलिए सुन्दरी में सरसीतादात्म्यारोप रूप मुख्य वाक्यार्थ के अनुरोध से किसी प्रकार उस तृतीया का अर्थ प्रकृति के अर्थ नयन में रहने वाले अभेद का प्रतियोगी कहना पड़ेगा। उससे नयननिष्ठ अभेद के प्रतियोगी मीन से युक्ता यह बोध होता है। इस प्रकार आरोप्यमाण में विषयप्रतियोगिक अभेद का भान नहीं हुआ। फलतः परिणाम

भिन्नहीनेतरचन्द्रयुक्तेति धीः, मीनवती नयनाभ्यामित्यत्र तु सरसीतादात्म्यारोपो बाधकाभावात्तावत्सिद्धः। तस्य च मीनयोर्नयनाभेदारोपेणासमर्थनान्नयनयोर्मीनाभेदारोपो मृग्यः। स च तृतीयायाः प्रकृत्यर्थाभेदार्थकतायां न संभवतीति यथाकथंचित्तस्याः प्रकृत्यर्थनिष्ठाभेदप्रतियोगित्वार्थकत्वं वाच्यम्। तेन नयननिष्ठाभेदप्रतियोगिमीनयुक्तेति धीः। एवं चारोप्यमाणे विषयप्रतियोगिकाभेदस्याभानान्न परिणामः, अपि तु रूपकमेव। इयमेव सरणिः 'नद्या शेखरिणे दृशा तिलकिने–' इति प्रागुक्ताप्पदीक्षितदत्तोदाहरणे 'वचोभिरुपायनं चकार–' इत्यलंकारसर्वस्वोदाहरणे च बोध्या। यदि पुनरारोप्यमाणे

**मर्मप्रकाशः**

तावदादौ। तस्य च सुन्दर्यां सरसीतादात्म्यस्य प्रकृत्यर्थाभेदेति। प्रकृत्यर्थप्रतियोगिकाभेदेत्यर्थः। विभक्त्या संसर्गबोधनस्य प्रकृत्यर्थप्रतियोगिकस्यैव व्युत्पत्तिसिद्धत्वेन तदसंभवादाह —यथाकथंचिदिति। अत्र मीनवती नयनाभ्यामित्यत्र। उक्तप्रकारेणायमेव बोधोऽन्यत्रेत्याह— इयमेवेति। उदाहरणे च बोध्येति। परे तु "पूर्वपदार्थप्रधानमयूरव्यंसकादिसमासेन सुधाप्रतियोगिकाभेदवद्वच इत्येव बोधः। रूपके मीनवती नयनाभ्यामित्यत्र सुन्दर्यां सरसीतादात्म्यरूपं रूपकं

**मधुसूदनी**

परे तु इति समुल्लिख्य किञ्चिन्मतं स्वीयं, द्विरुपद्रुतं नागेशमहाशयैः। तत्रैक उपद्रवो यथा=श्रावं श्रावं वचः सुधामित्यत्र पूर्वपदार्थवचः प्रधानकमयूरव्यंसकादिसमासेन सुधाप्रतियोगिकाभेदवद्वच इत्येव बोधः इति। ननु भगवन्? इत्येव बोधो नान्यो बोध इति चेत्तर्हि श्रावं श्रावमित्यस्य का गतिः स्यात्। सुधाभिन्नवच इति बोधे तु स्वादं स्वादं वा पायं पायमिति हि पाठः स्यात्। द्वितीय उपद्रवो यथा =मीनानां नयनात्मतापत्त्या एव इति तदंशे परिणाम एव इति नयनप्रतियोगिकाभेदवन्मीनवती (सुन्दरी) इत्येव बोधः। इति। ननु भगवन्! तदंशे परिणाम एव न रूपकम्। इत्येव बोधो नान्य इति चेत्तर्हि "मानवती नयनाभ्यामिति श्लोकस्य प्रतियोगित्वमुखस्यार्थवशादन्वये इतिवृत्तेर्व्याख्याने मीनप्रतियोगिकाभेदस्य नयने अर्थवशात् सरसीरूपकानुरोधादन्वये इत्यर्थे इत्युक्तसरसीरूपकानुरोधः क गतः। तथा नयनाभेदे तु गृह्यमाणे सरसीरूपकापोषणादिति मूलकारोक्तेः का गतिः स्यात्। सुन्दर्यां मीनवत्व-

**बालक्रीड़ा**

नहीं हुआ। अपितु रूपक ही हुआ। यही सरणि "नद्या शंखरिणे" इस प्रागुक्त अप्पय्य दीक्षित द्वारा दत्त उदाहरण और वचोभिरुपायनं चकार इस अलंकार सर्वस्वकार के उदाहरण में भी समझनी चाहिए। अगर फिर आरोप्यमाण में किसी प्रकार केवल अभेद के ज्ञान से परिणाम को कहते हैं और प्रकृतोपयोग का आदर नहीं करते हैं तब "प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्" इस त्वदुदाहृत रूपक को परिणाम मानना पड़ेगा। क्योंकि

यथाकथंचिद्विषयाभेदप्रत्ययमात्रात्परिणामतोच्यते, नाद्रियते च प्रकृतोपयोगस्तदा 'प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्'' इति तदुदाहृत रूपकस्य परिणामतापत्तिः, प्रेमलतिकामिति समासे प्रेम्णो विषयस्य लतिकायामारोप्यमाणायामभेदेन विशेषणत्वादिति दिक् ।

अथ परिणाध्वनिर्विचार्यते—तत्र यत्तावदप्पदीक्षितैर्विद्याधरोक्तं ध्वन्युदाहरणमनूद्य दूषितम्—''तथाहि—

### मर्मप्रकाशः

मुख्यवाक्यार्थः । तत्र च मीनवत्त्वादिः साधारणो धर्मः । तस्य च सुन्दर्यामभावात्प्राप्तबाधबुद्धिस्थगनाय नयनाभ्यां मीनवतीति सुन्दरीविशेषणम् । सरस्यां च मीनवत्त्वं प्रसिद्धमेव । एवं च सुन्दर्या मीनवत्त्वसंपादनरूपप्रकृतकार्योपयोगिता मीनानां नयनात्मतापत्त्यैवेति तदंशे परिणाम एवेति नयनप्रतियोगिकाभेदवन्मीनवतीत्येव बोध इति दिक् । 'पादाम्बुजं भवतु नो विजयाय मञ्जु इत्यादौ रूपकोपमयोः संदेह एव'' इति प्राहुः । तदाह – दिगिति । दूषितमित्यस्य चन्द्रात्मनेतीत्यन्तेनान्वयः । अत्र प्रागुक्तपद्ये । एवं च विजृम्भमाणाक्रमणयोरुक्तरूपत्वे च ।

### मधुसूदनी

सम्पादनरूपप्रकृतकार्योपयोगिता मीनानां नयनात्मतापत्त्यैवेति कोक्तिः । प्राङ्मीनवत्त्वं च स्वामिन्नद्वारकमित्यस्य व्याख्यायां भवता मीनाभिन्ननयनेत्यर्थः, इति स्वोक्तेरपराधात् । इति ।

विशेषणत्वादिति । प्रेमा लताया विशेषणमित्यर्थः । एवमभेदस्य विशेषणसंसर्गाच्च प्रेमाभिन्ना लतेति बोधः । तेन प्रेम्णि लताया आरोपे रूपकं न, अपि तु प्रेम्णि लता एव परिणतेति परिणामः । असत्यपि प्रकृतोपयोगे । प्रकृतोपयोगस्य गवेषणे क्रियमाणे प्रकृतोपयोगाय विषयिणो विषयात्मना परिणत्यपेक्षायामेव परिणाम इत्येवं सेको लतायाः कर्त्तुं शक्यः । प्रेम्णः स नेति परिणामः कथं स्यादित्याशयः ।

अवच्छेदकीभूतम् विषयिनिष्ठायाः प्रकृतकार्योपयोगितायाः विशेषणीभूतम् विषयी विषयरूपवान् सन् प्रकृतकार्योपयोगी स्यादित्यर्थे हि विषयरूपवत्त्वं विशेषणमेवेति भावः ।

### बालक्रीड़ा

प्रेमलतिकाम् इस विशेषण समास में प्रेम रूप विषय आरोप्यमाण लतिका में अभेदेन विशेषण है । भले ही प्रकृत में उसका उपयोग नहीं है । प्रेमाभिन्ना लता इस तरह लता का प्रेमरूपतया परिणाम है यह एक बोध की दिशा है ।

अब परिणाम की ध्वनि का विचार करते हैं । वहाँ जो अप्पय्यदीक्षित जी ने विद्याधरोक्त ध्वनि के उदाहरण का अनुवाद करके खण्डन किया है तथाहि—हे नरसिंह ? धरानाथ ? उस तुम्हारे वर्णन करने में हम तुच्छ है जिसका यश राजा को दबा रहा है ।

'नरसिंह ? धरानाथ ? के वयं तत्र वर्णने ।
अपि राजानमाक्रम्य यशो यस्य विजृम्भते ॥'

अत्र राजपदेन चन्द्रे विषये निर्दिष्टे तत्रारोप्यमाणस्य नृपस्याक्रमणरूपकार्योपयोगिनः प्रतीतेः परिणामो व्यज्यते" इति, तदयुक्तम् । तत्र ह्यारोप्यमाणस्य नृपस्य नृपात्मनैवाक्रमणोपयोगः, न चन्द्रात्मनेति तदसत्, अत्र विजृम्भणं नाम न केवलं प्रागल्भ्यमात्रं कवेरभिप्रेतम्, येन यशःकर्तृकाक्रमणे नृपस्य नृपात्मनैव कर्मतारूप उपयोगः स्यात् । अपि तु निरतिशयनैर्मल्यगुणवत्तायां स्वसमानजातीयद्वितीयराहित्यप्रयुक्तः प्रौढिविशेषः । आक्रमणं तु न्यग्भाव एव । एवं चैवंविधविजृम्भणे चन्द्रकर्मकमेव क्रमणमुपयुज्यते न तु नृपकर्मकमिति विषयितया व्यज्यमानस्यापि नृपस्य चन्द्रात्मनैवाक्रमणोपयोग इति रमणीयमेव विद्याधरेणोक्तं परिणामव्यङ्ग्यतायामुदाहरणम् । यदपि तैरेव परोक्तिं दूषयित्वा स्वयं परिणामस्य व्यङ्ग्यतायामुक्तम्—

### मर्मप्रकाशः

गुणवत्तायां तद्रूपसाधारणधर्मे । रमणीयमेवेति । अत्रेदं चिन्त्यम्—राजशब्दस्यानेकार्थत्वात्, विजृम्भतेश्च प्रागल्भ्यतदुक्तार्थोभयपरत्वात्, प्रकरणादेश्च शक्तिसंकोचकस्याभावात्, तन्त्रेण शक्त्यैव तुल्यतयार्थद्वयोपस्थितौ 'सर्वदो माधवः पातु' इतिवत् श्लेष एवायं क्व परिणामः क्व वा नृपस्य व्यज्यमानतेति प्रकृतनरसिंहराजोत्कर्षस्य चन्द्रकर्मकाक्रमणेनेवेतरनृपाक्रमणेनापि सूपपादत्वात् । न च द्वयोरपि राजपदार्थयोरितरक्रियान्वये राजानाविति द्विवचनं स्यादिति वाच्यम् । 'न ब्राह्मणं हन्यात्' इतिवदुपपत्तेः । समाहारद्वन्द्वविषयेऽप्येकशेषस्य कैश्चिद्वैयाकरणैरङ्गीकाराच्च । अस्तु वारोपः, तथापि नृपस्यैवारोप्यमाणत्वं चन्द्रस्यैव विषयत्वमित्यत्र नियामकाभावः । अत्रैव च दीक्षिततात्पर्यम् । अपि च प्रागल्भ्यस्यापि विजृम्भत्यर्थत्वेन प्रकृतकार्यो-

### बालक्रीड़ा

यहाँ राजपद से निर्दिष्ट चन्द्ररूप विषय में आक्रमणरूप कार्य के उपयोगी आरोप्यमाण नृप की प्रतीति से परिणाम व्यक्त है यह सब युक्त नहीं है । यहाँ आरोप्यमाण नृप का नृप रूप से ही प्रकृत आक्रमण में उपयोग है न कि चन्द्ररूप से । यह असन् है ।

यहाँ विजृम्भण पद से कवि को केवल प्रागल्भ्य ही अभिप्रेत नहीं है । जिससे यश राजा को दबाता है इस रूप में यश के द्वारा आक्रमण करने में राजा का राजरूप में ही कर्म बनकर उपयोग हो सके । अपितु निरतिशयनैर्मल्यगुण शालिता में अपने समान दूसरा चन्द्रादि कोई नहीं है इस आशय से होने वाली यश की प्रौढ़ि विशेष ही कवि को अभिप्रेत है । आक्रमण का तो अर्थ है दबाना । वह प्रकृत अमूर्त यश के द्वारा असंभव है । ऐसी स्थिति में इस प्रकार के विजृम्भण में चन्द्र के ऊपर ही आक्रमण उपयुक्त होता है न कि नृप के । अतः विषयी के रूप में व्यक्त हुए भी नृप का चन्द्ररूप से ही आक्रमण में उपयोग है अतः विद्याधर

"चिराद्विषहसे तापं चित्त ? चिन्तां परित्यज ।
नन्वस्ति शीतलः शौरेः पादाब्जनखचन्द्रमाः ॥"

अत्र चिरतापार्तं प्रति हरिपादनखचन्द्रसद्भावप्रदर्शनेन तमेव निषेवस्व तन्निषेवणादयं तव तापः शान्तिमेष्यतीति परिणामो व्यज्यते" इति तत्तुच्छम् । 'आरोप्यमाणस्य विषयात्मकत्वेन प्रकृतकार्योपयोगे परिणामः' इति स्वयमेवोक्तम् । तत्र प्रकृतकार्योपयोगमात्रं न परिणामशरीरम्, अपि तु विषयिगतायाः प्रकृतकार्योपयोगितायाः अवच्छेदकीभूतं विषयताद्रूप्यम् । एवं चात्र नखचन्द्रसद्भावप्रदर्शनेन तन्निषेवणादयं तव तापः शान्तिमेष्यतीति प्रकृतोपगिताया व्यङ्ग्यत्वेऽपि तदवच्छेदकीभूतस्य विषयिणि विषयताद्रूप्यरूपस्य परिणामस्य

## मर्मप्रकाशः

पयोगिना नृपत्वेनापि नृपस्य संभवति । अत एव विद्याधरेणापि विषयिणः स्वरूपेण प्रकृतकार्यानुपयोगित्वे तदुपयोगाय विषयिणो विषयात्मना परिणत्यपेक्षायामेव परिणाम इत्युक्तम् । यदाह— 'तं परिणामं द्विविधं कथयन्त्यारोप्यमाणविषयतया । परिणमति यत्र विषयी प्रस्तुतकार्योपयोगाय ॥' इति । ननु तात्पर्यविषयीभूतप्रकृतकार्यानुपयोगित्वमस्त्येवेति चेत्, तस्यैव तात्पर्यविषयत्वे मानं विभावयेति । तैरेव अप्पदीक्षितैरेव ; परोक्ति विद्यानाथोक्तिम् । तापार्तं चित्तमिति शेषः

## बालक्रीड़ा

का कहा हुआ परिणाम ध्वनि का उदाहरण रमणीय है । किन्तु यश दोनों को दवावें तो श्लेष है । और जो भी दूसरे की उक्ति को दूषित करके खुद उन्होंने परिणाम की व्यंग्यता में कहा है—

हे चित्त ? चिरकाल से तुम ताप सह रहे हो किन्तु अब ताप की चिन्ता को छोड़ो जब कि भगवान् कृष्ण के कमलसदृशपाद के नखरूपी शीतल चन्द्रमा मौजूद हैं । चन्द्र और कमल का तो वैर है कैसे कमल में चन्द्र रहेगा ।

यहाँ ताप से पीड़ित को हरिपाद के नखरूपी चन्द्रमा का अस्तित्व बतलाया है कि उस नखरूपी चन्द्रमा का सेवन करो उसके सेवन से तुम्हारा ताप शान्त हो जायगा अतः परिणाम व्यक्त होता है । वह सब तुच्छ है । आरोप्यमाण का विषय के स्वरूप को धारण करके प्रकृतकार्य में उपयोग होने पर परिणाम होता हैं यह भी स्वयं आपने कहा है ।

उस कथन में विषयी का प्रकृत कार्य में केवल उपयोग ही परिणाम का शरीर नहीं है अपितु विषयी का विषय के रूप को धारण करके प्रकृतकार्य में उपयोगी होना परिणाम है । इसमें विषयी को प्रकृतकार्य में उपयोगी बनने के लिए विषयताद्रूप्य की अपेक्षा है । अतः विषयी में रहनेवाली प्रकृतकार्योपयोगिता का अवच्छेदक, विशेषण, विषयताद्रूप्य, परिणाम का शरीर है । इस तरह यहाँ शीतल नखचन्द्र की सत्ता दिखाकर उसके सेवन से तुम्हारा ताप शान्त हो जायगा । इस प्रकार व्यंग्य होने पर भी उपयोग के अवच्छेदक विषयी में विषय के ताद्रूप्य रूप परिणाम के बोधक वाक्य से वाच्य या शक्य के संसर्ग रूप होने से प्रकृतोपयोग को, सर्वथा ही व्यंग्य कहना उचित नहीं है । हाँ यह उदाहरण ठीक है ।

वाक्यवाच्यत्वात् शक्यसंसर्गत्वाद्वा सर्वथैव न व्यङ्गचत्वं वक्तुमुचितम्।

इदं तूदाहरणं युक्तम्—

'इन्दुना परसौन्दर्यसिन्धुना बन्धुना विना।
ममायं विषमस्तापः केन वा शमयिष्यते॥'

अत्र वक्तुर्विरहितया व्यज्यमानरमणीवदनाभिन्नत्वेनेन्दुरभिप्रेतः। तेन रूपेणैव तस्य प्रकृतविरहसंतापशमनहेतुत्वात्। न चात्र विषयनिगरणात्मिकातिशयोक्तिर्वक्तुं शक्या। तस्यां ह्यारोप्यमाणाभिन्नत्वेन विषयस्य प्रत्ययात् यथा 'कमलं कनकलतायाम्' इत्यादौ, कनकलताभिन्नायां वनितायां कमलाभिन्नं मुखमिति। इह तु मुखस्य चन्द्राभिन्नत्वेन प्रत्यये पुनर्विरहतापशमनरूपप्रकृतकार्यसिद्धिरिति चन्द्रस्यारोप्यमाणस्य मुखरूपविषयाभिन्नत्वं मृग्यम्।

मर्मप्रकाशः

चित्तमिति शेषः। वैयाकरणमतेनाह—वाक्येति। नैयायिकमतेनाह—शक्येति। परेति। उत्कृष्टेत्यर्थः। बन्धुना विनेति। तादृशेन्दुरूपेण बन्धुनेत्यर्थः। तेनेति। तस्योद्दीप-

मधुसूदनी

न व्यंग्यत्वमिति। आरोप्यमाणस्य विषयात्मकत्वेन प्रकृतकार्योपयोगे परिणाम इति भवदुक्तलक्षणे अंशद्वयम्। एक अंश आरोप्यमाणस्य विषयात्मकत्वम्। द्वितीयोंऽशः आरोप्यमाणस्य प्रकृतकार्योपयोगः। तत्र नखचन्द्रनिषेवणादयं तव तापः शान्तिमेष्यतीति रूपेण, आरोप्यमाणस्य चन्द्रस्य तापशमनरूपप्रकृतकार्योपयोगिताया व्यंग्यत्वेऽपि तस्य नखाभिन्नत्वं विषयताद्रूप्यं तु आकांक्षादिभास्यतया वाक्यार्थः शक्यसम्बन्ध एव, न व्यंग्य इत्यर्थः। इति आंशिकवाच्यतायाः सत्त्वात्सर्वथा एव व्यंग्यत्वमिति वक्तुं नोचितमित्याशयः इति।

तेनेति। तेन वदनाभिन्नत्वेन रूपेण तस्येन्दोः। नन्वत्र विषयो मुखं नोपात्त इति विषयनिगरणमेव। ततश्च तन्निगरणात्मिकाऽतिशयोक्तिरेवेति चेन्न। उत्तरं स्पष्टम्।

बालक्रीड़ा

उत्कृष्ट सौन्दर्य का समुद्र एवं बन्धु इन्दु के विना कौन मेरे उस विषमताप को शान्त करेगा।

यहाँ वक्ता विरही है। अतः इन्दु को इन्दुरूप से कहना इष्ट नहीं है किन्तु रमणी के वदन से अभिन्न इन्दु को कहना इष्ट है। क्योंकि उस रूप से ही वह प्रकृत-विरह जनित संताप की शान्ति में हेतु है। यहाँ विषय मुख का उपादान नहीं किया है अतः विषय-निगरणात्मिका अतिशयोक्ति है यह नहीं कह सकते हैं। क्योंकि उसमें परिणाम के विपरीत आरोप्यमाण उपमान से अभिन्न विषय की प्रतीति होती है। जैसे "कमलं कनक लतिकायाम्।" यहाँ कनकलताभिन्न वनिता में कमलाभिन्न मुख मालूम पड़ता है। परिणाम में अगर मुख को चन्द्र से अभिन्न समझने लगें तो विरह जनित ताप के शमन रूप-प्रकृत कार्य

तच्च व्यङ्ग्यतायामेव भवतीति परिणामध्वनिरेवायम्, नातिशयोक्तिः। अयं त्वर्थशक्तिमूलः।

शब्दशक्तिमूलपरिणामध्वनिर्यथा—

'पान्थ ? मन्दमते ? किं वा संतापमनुविन्दसि।
पयोधरं समाशास्व येन शान्तिमवाप्नुयाः॥'

अत्रादौ झगिति तापशमनहेतुत्वेनोपस्थिते मेघे पश्चान्मन्दपदबोधनीयपान्थविशेष्यकस्मरतापवत्तावैशिष्ट्यबुद्धौ सत्यां सहृदयस्य तादृशतापशामकरमणीस्तनरूपविषयताद्रूप्यबुद्धिर्भवति। दोषाश्चात्रापि पूर्ववदुन्नेयाः।

इति रसगङ्गाधरे परिणामप्रकरणम्!

मर्मप्रकाशः

कत्वेन स्वरूपेण तस्य तापजनकत्वादिति भावः। अयं तु इन्दुनेत्युदाहृतः। आदौ आतपादिकृतसंतापशामकमेघत्वेन तस्योपस्थितेरिति भावः। दोषाश्चेति। लिङ्गभेदादय इत्यर्थः॥ इति रसगङ्गाधरमर्मप्रकाशे परिणामप्रकरणम्॥

मधुसूदनी

पयोधरमिति। अत्र पयोधरो मेघः स्तनश्च। तत्रादौ पयोधरशब्दश्रुतौ झगिति तापशामकतया मेघ उपस्थितः। पश्चात् हे मन्दमते! पान्थ ? पयोधरं समाशास्व इत्येवं बोधनीयः पान्थः स्मरतापशाली इति विशिष्टबुद्धिरुदीते। अत्र बुद्धौ बोधनीयः पान्थो विशेष्यः, स्मरतापो विशेषणम्; वैशिष्ट्यं तयोः सम्बन्धः समवायः। एवं च तादृशबुद्धौ सत्यां सहृदयस्य मेघे तादृशतापशामकरमणीस्तनरूपविषयताद्रूप्यबुद्धिर्भवति इति। इति रसगंगाधरे मधुसूदन्यां परिणाम-प्रकरणम्।

बालक्रीड़ा

की सिद्धि नहीं होगी। अतः आरोप्यमाण चन्द्र आरोपविषय मुख से अभिन्न है यही खोजना आवश्यक है। वह अभेद व्यंग्य है अतः परिणामध्वनि का यह उदाहरण है। न कि अतिशयोक्तिका। यह अर्थशक्तिमूल ध्वनि है।

शब्द शक्तिमूल परिणामध्वनि जैसे=अरे मन्दमते पान्थ ? क्यों संताप को सह रहे हो। पयोधर का सहारा लो जिससे शान्ति को पावोगे।

यहाँ पहले तत्काल ताप की शान्ति के हेतु के रूप में पयोधर पद से शक्ति के द्वारा मेघ की उपस्थिति हुई। किन्तु पीछे मंदमति पद से बोधनीय पान्थ के स्मरोद्रेकजनिततापशाली होने का ज्ञान होने पर सहृदय को पयोधर मेघ में स्मरतापशामकरमणीस्तनरूप विषय के अभेद की प्रतीति होती है। यह अभेदप्रतीति वाचक के अभाव में व्यंजना से होती है अतः अभेद परिणाम व्यंग्य है। स्मरतापशाली पान्थ है इस विशिष्ट बुद्धि में पान्थ विशेष्य है स्मरताप विशेषण है। यहाँ के दोषों को रूपक के दोषों की तरह समझना चाहिए।

इस प्रकार रसगंगाधर के परिणामालंकार की हिन्दी टीका बालक्रीड़ा समाप्त हुई।

अथ ससंदेहः—

साद्दश्यमूला भासमानविरोधका समबला नानाकोट्यवगाहिनी धी रमणीया ससंदेहालंकृतिः ॥

'अधिरोप्य हरस्य हन्त चापं, परितापं प्रशमय्य बान्धवानाम् ।
परिणेष्यति वा न वा युवायं निरपायं मिथिलाधिनाथपुत्रीम् ॥'

अत्र मिथिलास्थजनोक्तौ तच्चिन्ताभिव्यञ्जके संशयमात्रेऽतिव्याप्तिवारणाय साद्दश्यज्ञानरूपदोषजन्येत्यर्थः । तेन 'सिंहवत्प्रान्तरं गच्छ गृहं सेवस्व

### मर्मप्रकाशः

संशयं लक्षयति—अथेति । धी रमणीयेति । तादृशधीवृत्तिसंशयत्वप्रकारकज्ञानविषया साऽलंकार इत्यर्थः । सादृश्यमूलेत्यस्य व्यावर्त्यमाह—अधीति । हन्तेति खेदे । बान्धवानां विश्वामित्रादीनाम् । निरपायं निष्प्रतिबन्धकम् । क्रियाविशेषणमेतत् । तदिति । तादृशजनेत्यर्थः । मात्रपदेनालंकारत्वव्यवच्छेदः । यद्यप्यधिरोप्येति पद्ये संशयस्य न

### मधुसूदनी

अथ ससन्देहः प्रारभ्यते ।

साद्दश्येति । ससन्देहालंकृतिरिति लक्ष्यनिर्देशः । ससन्देह इति व्यवहारो भ्रान्तिमानितिवदौपचारिकः । सन्देहस्य चेतनधर्मत्वात् । सन्देहेन सह ससन्देहः । विषयतया सन्देहविशिष्ट इत्यर्थः । साद्दश्यं मूलं यस्या इति समानाधिकरणो बहुव्रीहिः । एतेन यस्यामूलं साद्दश्यं नास्ति अर्थात् केवलः सन्देहः एव अथवा साद्दश्येतरत् चिन्तादि मूलं भवति तत्र नालंकृतिः । यथा अधिरोप्येत्यत्र केवलः सः । स्थाणुर्वा पुरुषो वेत्यत्र भयं मूलम् । प्रान्तरमिति । प्रान्तरं दूरशून्योऽध्वा" इत्यमरः । सिंहवत्प्रान्तरमित्यत्र साद्दश्यज्ञानरूपे साद्दश्यविकल्पे अतिप्रसक्तिर्मा भवेदिति

### बालक्रीड़ा

अथ ससन्देह अलंकार

सादृश्य जिसके मूल में हो, विरोध की प्रतीति जहाँ होती हो, किन्तु जिनमें विरोध है उन विरोधियों में बल समान हो, अतएव नाना कोटियों को जो अवगाहन अर्थात् विषय बनाती हो वह रमणीय बुद्धि ससन्देह नामक अलंकार होती है। इस अलंकार में बुद्धि के ५ पाँच विशेषण दिये हैं अब क्रमशः उनका फल बतलाइते हैं। छठा विशेषण उपस्कारकत्व है।

पहले सादृश्य मूल का फल कहते हैं। हन्त? यह युवा (भगवान् राम) हर के धनुष का अधिरोपण और बान्धवों के परिताप का प्रशमन करके बिना किसी उपद्रव के मिथिलाधिनाथ जनक की पुत्री सीता का परिणयन करेगा या नहीं।

इस मिथिलानिवासी जनों के कथन में जो उनकी चिन्ता का अभिव्यक्त करने वाला शुद्ध संशय है उसमें अतिव्याप्तिवारण करने के लिए सादृश्यमूला विशेषण दिया है।

वा श्ववत्' इत्युपमाविकल्पे वाकारप्रतीतविरोधकप्रान्तरगमनगृहसेवनरूप-नानाधर्मावगाहिनि सादृश्यविषयकेऽपि नातिप्रसङ्गः। तस्य सादृश्यज्ञान-रूपत्वात्। मालारूपकातिप्रसङ्गवारणाय भासमानविरोधकेति। उत्प्रेक्षा-

## मर्मप्रकाशः

सादृश्यमूलत्वमिति यथाश्रुतेनैव वारणं संभवति, तथाप्यन्यत्राप्यदोषायाह—सादृश्येति। तद्व्यावर्त्यमाह—तेनेति। तथार्थविवक्षणेनेत्यर्थः। प्रान्तरमरण्यम्। यथाश्रुतेऽतिप्र-सङ्गमाह—वाकारेति। अपिः प्रागुक्तसमुच्चायकः। तेनेत्यस्यार्थमाह—तस्येति। उपमा-विकल्पस्येत्यर्थः। मालारूपकेति। 'धर्मस्यात्मा भागधेयं क्षमायाः सारः सृष्टेः' इत्यादा-वित्यर्थः। ननु कोट्योः समबलत्वविशेषणेन कथमुत्प्रेक्षाव्यावृत्तिः, तत्रापि तयोस्तुल्यबलस्य

## मधुसूदनी

सादृश्यज्ञानरूपदोषजन्येति सादृश्यमूलेत्यस्यार्थः। प्रमातृगताः रागद्वेषादयः। प्रमाण (चक्षुरादि) गता पित्तादयः। प्रमेयगताः सादृश्यदयो दोषाः।

भासमानेति। वा किं नु इत्यादिप्राप्तविरोधेन परस्परप्रतिक्षेपकतया निबद्धा-

## बालक्रीड़ा

सादृश्यमूला का अर्थ है। सादृश्यज्ञानरूप दोष से जन्य। अर्थात् जिसके मूल में पैदाइस में सादृश्यज्ञान हो। इससे सिंह की तरह प्रान्तर में जावो या कुत्ते की तरह घर में पड़े रहो (प्रान्तरं दूरशून्योऽध्वा इस अमरकोष के अनुसार प्रान्तर उस मार्ग को कहते हैं जो दूर हो और शून्य हो) इस उपमा विकल्प में जिसमें वाकार से विरोध की प्रतीति है जो प्रान्तरगमन अथवा गृहसेवन रूप नाना धर्मों का अवगाहन करता है तथा जहाँ सादृश्य भी है—अति प्रसंग अतिव्याप्ति नहीं हुई। क्योंकि वह उपमाविकल्प सादृश्यज्ञान रूप है सादृश्यज्ञान से जन्य नहीं है।

मालारूपक (धर्मस्यात्मा, भागधेयं क्षमायाः, सारः सृष्टेर्जीवितं शारदायाः) में अति-व्याप्ति वारण करने के लिए भासमानविरोधका कहा। अन्यविशेषणों की संगति तो वहाँ है ही।

उत्प्रेक्षा की व्यावृत्ति के लिए समबला कहा। प्रश्न=बल तो शरीर का धर्म है और संशय ज्ञानरूप है। अतः इसमें समानबलत्व विशेषण की क्या संगति है। उत्तर। समबलत्व विशेषण का उपन्यास यहाँ इसलिए दिया है कि संशय की भासक उपस्थापक सामग्री कारण समान हो अधिक या अल्प नहीं हो। यदि अधिक हुई तो उत्प्रेक्षा में लक्षण चला जायगा। क्योंकि उत्प्रेक्षा सम्भावना रूप है और संम्भावना में एक कोटि उत्कट होती है। यदि अल्प हुई तो मिथ्या में लक्षण चला जायग। उत्कटैककोटि का शंका संभावना। अल्पकोटिका शंका मिथ्या। जैसे रात्रि में अन्धकार व्याप्त हो गया है। उसमें कोई शंका करे कि मालूम पड़ता है कि यह चकवा एवं चकवी की विरह की अग्नि से उठा हुआ धूआँ है। वहाँ धूएँ का ज्ञान अन्धकार के ज्ञान की अपेक्षा उत्कट है। इसी तरह तालाब

व्यावृत्तये समबलेति समानभासकसामग्रीत्वार्थकम् । एतद्विशेषणद्वयप्राप्तस्यैवानेकत्वस्य स्फुटत्वार्थे नानेति । स्थाणुर्वा पुरुषो वेति लौकिसंशयनिवृत्तये रमणीयेति । चमत्कारिणीत्यर्थः । एतच्च विशेषणं सामान्यालंकारलक्षणप्राप्तमेव । एवमुपस्कारकत्वमपि बोध्यम् । एतद्विशेषणद्वयस्य सादृश्यमूलत्वस्य

## मर्मप्रकाशः

सत्त्वादत आह—समानेति । तत्र तु विधेयांशे भासकसामग्री उत्कटेति भावः । नन्वेवं नानेतिमात्रं व्यर्थमत आह—एतदिति । भासमानेति समबलेत्येतदित्यर्थः । अनेकेति । अनेकधर्मकस्य संशयस्येत्यर्थः । एतदिति । रमणीयत्वोपस्कारकत्वद्वयेत्यर्थः । ननु संशये विरोधो न भासते । मानाभावात् । किं त्वविरोधित्वज्ञानाभावविशिष्टनानाकोटिकज्ञानमेव

## मधुसूदनी

नेककोट्यवगाहित्वमित्यर्थः । समबलेति । उभयकोट्यवगाहित्वम् । उत्कटैककोटिकायामुत्प्रेक्षायां वाकाराद्यर्थस्पर्शाभावात् संशयकोट्योः समबलत्वं नास्तीति नातिप्रसंगः । एतयोरेव फलितार्थमाह-नानेति ।

समानभासकेति । ओजः प्राणशक्तिः । सह इन्द्रियशक्तिः । बलं देहशक्तिः । एवं च देहशक्तौ समत्वं समबलेत्यस्यार्थः स्यात्तच्च प्रकृते निष्फलमेवेत्यत आह-समेति । संशयभासकसामग्रीणां समत्वमित्यर्थः ।

रमणीया रमणीयता सम्पादिका उपस्कारिकेति यावत् । कविप्रतिभोत्थापिता न तु स्वारसिका धीरित्यर्थः ।

## बालक्रीड़ा

में अग्नि है क्योंकि धूम उठ रहा है । यहाँ प्रातःकाल में जल में जो वाष्प उड़ता हुआ दिखाई देता है उसको धूम समझना कोटि दुर्बल है । क्योंकि जल में धूम का मूल ही नहीं है तब मूलं नास्ति कुतः शाखा ।

समानबला और भासमानविरोध का इन दोनों विशेषणों से अनेकत्व को स्पष्ट करने के लिए नानाकोटयवगाहिनी कहा ।

स्थाणु है यह अथवा पुरुष है इस लौकिक संशय की निवृत्ति के लिए रमणीया अर्थात् चमत्कारिणी कहा । यह विशेषण अन्य अलंकारों के समान स्थान रखता है अतः सामान्य अलंकार लक्षण से प्राप्त है । इसी तरह उपस्कारकत्व को भी समझना । इन दोनों रमणीयत्व और उपस्कारकत्व तथा सादृश्यमूलत्व के अभाव में शुद्ध केवल संशय रहेगा ।

यहाँ की संगति के लिए नागेश महाशय ने अच्छा विषय लिख दिया है । आप कहते हैं कि संशय में विरोध की प्रतीति नहीं होती है । क्योंकि प्रतीति होती है इसमें कोई प्रमाण नहीं है । वैशेषिकदर्शन का सूत्र है सामान्यप्रत्यक्षाद् विशेषस्मृतेश्च संशयः । साधारण धर्म का प्रत्यक्ष ज्ञान हुआ और विशेषधर्मों का प्रत्यक्ष नहीं हुआ किन्तु साधारणधर्म ज्ञान से

चाभावे संशयमात्रमेव । यद्वा 'सादृश्यहेतुका निश्चयसंभावनान्यतरभिन्ना धी रमणीया संशयालंकृतिः' ।

सा च शुद्धा, निश्चयगर्भा, निश्चयान्ता चेति त्रिविधा ।

'आद्या यथा—

'मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेष वा तमालः ।
रघुपतिमवलोक्य तत्र दूराद्दृषिनिकरैरिति संशयः प्रपेदे ॥'

### मर्मप्रकाशः

संशय इति कथमुक्तलक्षणमत आह—यद्वेति । अन्यतरत्रोभयभेदसत्त्वात्तथोक्तौ तत्रातिप्रसङ्गापत्तेराह – अन्यतरेति । तथा च संभावनाभिन्नत्वे सति निश्चयभिन्नत्वमित्यर्थलाभान्न रूपकोत्प्रेक्षादावतिप्रसङ्गः इति भावः । तत्रालिर्नेत्रं वेति वाक्याद्विरोधभानवादिमतेऽलित्ववानयमलित्वविरुद्धनेत्रत्ववानिति विशिष्टवैशिष्टयन्यायेन, एकत्र द्वयमिति न्यायेन वा बोधः । अलिशब्दस्य च वाशब्दसमभिव्याहारे उभयत्रान्वयः । व्युत्पत्तिवैचित्र्यात् । केचित्तु वाशब्दद्वयवलादलित्वविरुद्धनेत्रत्ववानयं नेत्रत्वविरुद्धालित्ववानिति बोधमाहुः । तदभानवादे तु अलित्ववानयं नेत्रत्ववानिति बोधः । समुच्चये त्वेतन्मतेऽविरोधभानमङ्गीकार्यमिति दिक् । मरकतेति । व्याख्यातं प्राक् । इति पूर्वार्धोक्तः । प्रपेदे प्राप्तः । तरणीति । कालिन्दीत्यर्थः ।

### मधुसूदनी

मरकतेति । अयं मरकताद्रिर्वा तमालो वेति संशयाकारः । विशालदेहत्वान्मरकताद्रिसंदेहः । विश्लिष्टावयवत्वात्तमालत्वसन्देहः । कृष्णत्वमुभयानुगामी धर्मः । निश्चयामिश्रः शुद्धः । यस्य संशय एव पर्यवसानम् ।

### बालक्रीड़ा

विशेष धर्मों की या धर्मियों की स्मृति हो गई उसी को संशय कहते हैं । अतः विरोध का ज्ञान नहीं है ऐसा अभावविशिष्ट जो नानाकोटिवाला ज्ञान वह संशय है ।

इस अवस्था में उक्त लक्षण नहीं बन सकता है। इस पर कहते हैं सादृश्यहेतुक निश्चय और संभावना अन्यतर से भिन्न रमणीय बुद्धि संशय अलंकार है । यहाँ जैसे (घटो न घटपटोभयम्) एक घट में घटपटोभय का भेद रहता है । उसी तरह केवल निश्चय में या केवल संभावना में निश्चय संभावना उभय का भेद रहता है । अतः निश्चयसंभावनाभिन्ना नहीं कह कर निश्चयसंभावनान्यतर के रूप में अन्यतर पद का निवेश किया । फलतः निश्चय से भिन्न होता हुआ संभावना से भी भिन्न ऐसा लक्षण करने से रूपक एवं उत्प्रेक्षा में अतिव्याप्ति नहीं हुई । किन्तु सिद्धान्त है कि वाकार से विरोध मालूम पड़ता है । अतः यद्वा से कहे हुए लक्षण का कोई मूल्य नहीं है उक्त लक्षण ही ठीक है ।

वह संशयालंकृति शुद्ध, निश्यगर्भ एवं निश्चयान्त भेद से तीन प्रकार की है। उनमें पहली शुद्ध जैसे=

द्वितीया यथा—

'तरणितनया किं स्यादेषा न तोयमयी हि सा
मरकतमणिज्योत्स्ना वा स्यान्न सा मधुरा कुतः ।
इति रघुपतेः कायच्छायाविलोकनकौतुकै-
र्वनवसतिभिः कैः कैरादौ न संदिदिहे जनैः ॥'

तृतीया यथा—

'चपला जलदाच्च्युता, लता वा तरुमुख्यादिति संशये निमग्नः ।
गुरुनिःश्वसितैः कपिर्मनीषी निरणैषीदथ तां वियोगिनीति ॥'

### मर्मप्रकाशः

सा तज्ज्योत्स्ना इयं तु मधुरेति भावः । वसतिर्वासः । अत्र निश्चयस्य नेति मध्ये प्रतिपादनात्तद्गर्भत्वम् । अत एव तृतीयाद्भेदः । कपिर्हनूमान् । वियोगिनीति । श्रीरामचन्द्रवियुक्ता सीतेत्यर्थः । नन्वेषूदाहरणेषु संशयस्यैव प्राधान्येनान्यानुपस्कारकत्वात्कथमलंकारत्वमत आह—एष्विति । तथा च तद्वत्तद्योग्यतामात्रेण गौणस्तद्व्यवहार इति भावः ।

### मधुसूदनी

तरणीति । इयं निश्चयगर्भा निश्चयो गर्भे यस्या इति व्यधिकरणो बहुव्रीहिः । उपमानभिन्नत्वेन उपमेयावधारणं निश्चयः । संशयोत्तरं निश्चये जातेऽपि पुनः संशयः निश्चयगर्भः । एवं हि एकोपमानभिन्नत्वेन अवधारणेऽपि उपमानान्तरसम्बन्धि संशयोदयसंभवात् तथात्वं नासंभवि । यथा यमुनायां तोयमयीत्वरूपवैधर्म्यदर्शनात् रघुपतिकायच्छायाया यमुनाभिन्नत्वावधारणेऽपि मरकतमणिज्योत्स्नारूपेण पुनः सन्देहः सम्भवत्येव । इयं संशयोपक्रमा निश्चयमध्या संशयान्तास्ति ।

चपलेति । गुरुनिःश्वसितत्वरूपवैधर्म्यदर्शनाद् वियोगिनीत्वेन वियोगिन्या

### बालक्रीड़ा

वहाँ वन में दूर से रघुपति राम को देखकर ऋषियों ने यह मरकतमणि का पहाड़ है या अत्यन्त तरुण तमाल तरु है ऐसा संशय किया । यहाँ निश्चय न गर्भ में है और न अन्त में हैं अतः शुद्धा है ।

दूसरी निश्चयगर्भा जैसे=रघुपति के शरीर की कान्ति को देखने में चाव करनेवाले किन किन वनवासियों न आरम्भ में संशय नहीं किया कि क्या यह कान्ति यमुना की है । नहीं नहीं । वह तो जलमयी है । अथवा क्या यह मरकत मणि की कान्ति है । नहीं नहीं । वह मधुर कहाँ है । आह यह कान्ति तो मधुर है ।

यहाँ नहीं नहीं से संशय का निराकरण रूप निश्चय मध्य में मालूम पड़ता है ।

तीसरी निश्चयान्ता जैसे=क्या यह मेघ से गिरी हुई बिजली है या किसी उत्तम

एषु संशयेषु मञ्जूषादिगतकटकादिष्विवालंकारव्यपदेशः । एवं च—

'तं दृष्टवान्प्रथममद्भुतधैर्यवीर्य-
गाम्भीर्यमक्षणविमुक्तसमीपजानिम् ।
वीक्ष्याथ दीनमबलाविरहव्यथार्त्तं
रामो न वायमिति संशयमाप लोकः ॥'

इत्यत्रापि सत्यपि चमत्कारे सादृश्यमूलत्वाभावान्न संशयस्यालंकारत्वम् । एवमारोपमूलोऽयं संदेहालंकारः । अध्यवसानमूलोऽपि दृश्यते ।

## मर्मप्रकाशः

एवं च उक्तरीत्या संशयलक्षणपर्यवसाने च । तं श्रीरामम् । प्रथमं संयोगदशायाम् । अद्भुतेति बहुव्रीहिः । अक्षणेति । न क्षणं विमुक्ता समीपप्रदेशाज्जाया सीता येनेत्यर्थः । अथ रावणकृतसीतापहारोत्तरम् । अस्य संशयस्य विप्रलम्भपोषकत्वादाह—सत्यपीति ।

## मधुसूदनी

निश्चये पुनः केनाऽपि रूपेण सन्देहो नास्ति । अतः निश्चयान्तालंकृतिः । अत्र उपक्रमे संशयः पर्यवसाने तु निश्चयः ।

व्यपदेश इति । भाविनि काले सन्धारणस्य संभाव्यमानत्वात् । प्रथमं विरहात् पूर्वम् । क्षणमपि न विमुक्ता समीपप्रदेशाज्जाया सीता येन । जायाया निङ्भावः । अबलायाः विरहव्यथया आर्त्तम् । रामम् ।

## बालक्रीड़ा

वृक्ष से गिरी हुई लता है । इस प्रकार आरम्भ में हनुमान् जी संशय में पड़ गये । किन्तु बाद में दीर्घ २ श्वासों से उस मनीषी कपि ने उसका निर्णय किया कि यह वियोगिनी सीता है ।

यहाँ निरणैषीत् पद से अन्त में निश्चय कर लिया प्रतीत होता है । प्रश्न—इन उदाहरणों में संशय की ही प्रधानता है । ये संशय किसी के उपस्कारक नहीं है अतः इनमें अलंकारत्व का अभाव है । उत्तर ।

किसी नायिका ने जो गहने पहिने नहीं है किन्तु जो केवल पेटी में रखे हुए हैं । जैसे उन गहनों को अलंकार कहते हैं उसी तरह केवल योग्यता से इन संशयों को गौण रूप से अलंकार कहते है ।

इस प्रकार उक्तरीति से संशय के लक्षण के सम्पन्न होने पर; जो क्षणभर के लिए भी अपने समीप से जाया जानकी को नहीं हटाते थे उन अद्भुत धैर्य, वीर्य एवं गाम्भीर्य शाली राम को पहले जिन्होंने देखा है वे ही लोग आज दीन-हीन एवं अबला की विरह व्यथा से आर्त्त राम को देखकर संशय करते हैं कि यह राम है कि नहीं ।

यहाँ पर संशय के चमत्कारी रहने पर भी मूल में सादृश्य के नहीं रहने से वह अलंकार नही है । इस प्रकार आरोप मूल यह सन्देहालंकार है । अध्यवसायमूलक भी यह होता है ।

यथा—

'सिन्दूरैः परिपूरितं किमथवा लाक्षारसैः क्षालितं
लिप्तं वा किमु कुङ्कुमद्रवभरैरेतन्महीमण्डलम् ।
संदेहं जनयन्नृणामिति परित्रातत्रिलोकस्त्विषां
व्रातः प्रातरुपातनोतु भवतां भव्यानि भासांनिधेः ॥'

अयं च संशयः सवितृविषयककविरतिपरिपोषकतया कामिनीकरगतकङ्कणादिरिव मुख्यतयालंकृतिव्यपदेश्यः । अत्र च विवक्षितविवेचने क्रिय-

### मर्मप्रकाशः

त्रिविधस्याप्यस्य द्वैविध्यमाह—एवमिति । द्वयोरुपादानादिति भावः । भासांनिधेः सूर्यस्य । पूर्वतो भेदान्तरमाह—अयं चेति । नन्वत्र महीमण्डलस्योपादानात्सारोपत्वमेवात आह—अत्र चेति । विवेति । तात्पर्यार्थेत्यर्थः । नन्वेवमपि किरणव्रातस्योपादानात्सारोपात्वमेवात आह--विषयेति । तदिति । आरोपेत्यर्थः । तथा च तत्वेनानुपादानमिति भावः ।

### मधुसूदनी

सिन्दूरैरिति । अत्र पण्डितराजः स्वयं संशयोदधौ ब्रुडित एव विमार्शिनीकारस्यालोचने प्रवृत्तः । किन्तु न ततो निःससार । तथाहि-केचितु अध्यवसायाश्रयत्वेन संशयप्रकारमाहुरिति सर्वस्वकाराक्षराणि । अनेन च सन्देहस्याध्यवसायमूलत्वमपि ग्रन्थकृतैवोक्तम् । तेनाध्यवसायाश्रयोऽप्ययं स्वरूपहेतुफलानां सन्दिह्यमानत्वेन त्रिधा भवति इति विमर्शिनीकाराक्षराणि । तत्तश्चात्र स च न सारोपः । विषयविषयिणोस्तदनुकूलविभक्तेरभावात् । इति क्वैतानि तदक्षराणि येन एतावान् संशयः ।

अन्यच्च यमनूद्य श्लोकोऽयं सिन्दूरैः परिपूरितमिति भवता निरमायि स "एतत्तर्कयेति" । तदनुकूला रचना एवं साध्वी—

### बालक्रीड़ा

जैसे=त्रिलोकी की रक्षा करनेवाले भगवान् सूर्य की किरणों का समूह प्रातःकाल में मनुष्यों को इस प्रकार का सन्देह पैदा करता हुआ आप लोगों का कल्याण करे । (अब सन्देह का स्वरूप लिखते हैं) क्या यह महीमण्डल सिन्दूर से भर दिया गया है अथवा लाही के रस से धो दिया गया है अथवा कुंकुमद्रव से लिप्त कर दिया गया है ।

यह संशय सूर्य में जो कवि का प्रेम है उसका पोषक है अतः कामिनी के द्वारा हाथ पहिने हुए कंकण की तरह मुख्य अलंकार है ।

यहाँ प्रश्न होता है कि महीमण्डल सिन्दूर से परिपूरित है इत्यादि रूप से महीमण्डल विषय और सिन्दूर पूरित विषयी का उपादान है अतः सारोप संदेह को ही मानिये । उत्तर है कि विवक्षित अर्थात् कवि की विवक्षा के विषयीभूत अर्थ का विवेचन जब करते हैं तब किरणव्रात में सिन्दूरत्वादि कोटिक संशय ही अंत में सिद्ध होता है । किरण समूह है अथवा

माणे किरणव्राते सिन्दूरत्वादिकोटिकः संशयः पर्यवस्यति । स च न सारोपः। विषयविषयिणोस्तदनुकूलविभक्तेरभावात् । अतः सिन्दूरत्वादिना संशयधर्मी किरणव्रातोऽध्यवसीयत इति । अत्र विचार्यते—सिन्दूरैः परिपूरितं किमथ-

## मर्मप्रकाश

उपसंहरति—अत इति । तावदादौ । इदं किरणजातम् । अनपेक्षत्वे हेतुमाह—व्यञ्जनेति ।

## मधुसूदनी

विश्वं कर्मसु योजयन् , फलमथो तेषां ततः प्रापयन् ।
सूर्यः प्रातरुदेति तर्कय मनागेतन्महीमण्डलम् ।
सिन्दूरैः परिपूरितं किमथवा लाक्षारसैः क्षालितं ।
कौसुम्भद्रवतो नु सिक्तमथवा श्रीचन्दनैर्लेपितम् । इति

## बालक्रीड़ा

सिन्दूर है अथवा लाक्षारस है अथवा कुंकुम है । यह संशय का आकार है । यह संशय सारोप नहीं है । क्योंकि विषय एवं विषयी में आरोप के अनुकूल विभक्तियाँ नहीं है । यहाँ का आशय यह है कि किरण समूह विषय एवं सिन्दूरादि विषयी दोनों का उपादान है अतः सारोप संशय हो सकता है किन्तु विभक्तियाँ आरोप के अनुकूल नहीं है जिससे सारोप नहीं है । और संशय वर्मी जिसमें संशय करते हैं उस संशय स्थल किरणव्रात का सिन्दूरत्वेन अध्यवसाय करते हैं । फलतः यहाँ अध्यवसायमूल संशय हैं ।

यहाँ पण्डितराज विचार करते हैं कि "सिन्दूरैः परिपूरितं किमथवा" पद्य में "सिन्दूर से जगन्मण्डल भर दिया गया क्या" इस रूप में वर्तमान सिन्दूरादिकरणकपरिपूरितत्व कोटिक जगन्मण्डधर्मिक संशय शब्द से प्रतीत होता है। उसी संशय में क्या यह सिन्दूर रज है, आहोस्वित् लाक्षारस है, उताहो कुंकुमद्रव है । इस प्रकार की सूर्यकिरणधर्मिक दूसरा संशय आनुगुण्य का आधान करता है । जैसे यह भूतल स्थाणुवाला है या पुरुषवाला है इस संशय में सामने खड़े हुए घोड़े में यह स्थाणु है या पुरुष है यह संशय अनुकूलता का आधान करता है । इस प्रकार सूर्यकिरण समूह है या सिन्दूर रज है इत्यादि रूप में वर्तमान सूर्यकिरण धर्मिक संशय, जगन्मण्डल सिन्दूर से भर दिया गया क्या इस रूप में वर्तमान संशय में गुणीभूत है और किसी शब्द से प्रतीत नहीं होने से वह व्यंजनागम्य है । अतः वह संशय विषय एवं विषयी में आरोप के अनुकूल विभक्ति की अपेक्षा नहीं करता है । हाँ वह आरोपानुकूल विभक्ति की तब अपेक्षा करता जब साक्षात् किसी शब्द से वेद्य होता । ऐसी अवस्था में कहां संशय अध्यवसानमूल है । इससे संशय में अध्यवसानमूलता का निरूपण करनेवाले विमर्शिनीकार की उक्ति अपास्त हो गई ।

भगवन् ? पण्डितों के राजाजी ? या राजाओं के पण्डित जी ? आपको यह शोभा नहीं देता कि आप अटर का पटर पदार्थ लिखें । आपकी कृतियों को पढ़कर लोग अपने को विद्वान् मानने का गर्व करते है । अस्तु ।

वेति पद्ये तावत्सिन्दूरादिकरणकपरिपूरितत्वादिकोटिको जगन्मण्डलधर्मिकः संशयः शब्दात्प्रतीयते । तस्मिंश्च संशये किमिदं सिन्दूररजो वा स्यात्, आहोस्विल्लाक्षारसः, उताहो कुङ्कुमद्रव इति सूर्यकिरणधर्मिकं संशयान्तरमानुगुण्यमाधत्ते । यथा पुरोवर्तिनि तुरगे स्थाणुर्वा पुरुषो वेति संशयो भूतलमिदं स्थाणुमत्पुरुषवद्वेति संशये । एवं च सूर्यकिरणधर्मिकः संशयो गुणीभूतो

## बालक्रीड़ा

आपने "अत्र च विवक्षित विवेचने से लेकर विमर्शिनीकारस्योक्तिरपास्ता" यह सब क्या लिखा । विमर्शिनीकार का तो (केचित्तु अध्यवसायाश्रयेण संदेहप्रकारमाहुः) कोई तो अध्यवसाय के सहारे भी संदेह के भेद को कहते हैं । इस अलंकारसर्वस्वकार की पंक्ति के व्याख्यान में यह लेख है । अत्रैव पक्षान्तरमाह केचिदित्यादि । अनेन च संदेहस्य अध्यवसायमूलत्वमपि ग्रन्थकृतैवोक्तम् । तेन अध्यवसायाश्रयोऽप्ययं स्वरूपहेतुफलानां संदिह्यमानत्वेन त्रिधा भवति । तत्र स्वरूपसंदेहो यथा=

"रञ्जिता नु विविधास्तरुशैलाः इत्याद्येव । यथा वा=
एतत्तर्कय । कैरवक्लमहरे, शृंगारदीक्षागुरौ,
दिक्कातामुकुरे, चकोरसुहृदि, प्रौढ़े तुषारत्विषि ।
कर्पूरैः किमपूरि, किं मलयजैरालेपि, किं पारदैः
रक्षालि, स्फटिकोपलैः किमघटि, द्यावापृथिव्योर्वपुः ॥

अत्र कौमुदीधवलिम्नः कर्पूरपूरणादिना अध्यवसितत्वादध्यवसायमूलत्वम् ।

इसके वाद हेतुसंदेह एवं फलसंदेह के उदाहरण विमर्शिनीकार ने लिखे हैं । कितना पवित्र एवं निर्भ्रान्त लेख है ।

इसी में सारोप संशय के वाद साध्यवसानसंशय रूप दूसरे पक्ष को कहते हैं । अध्यवसाय के सहारे भी संदेह का एकभेद हैं इस लेख के द्वारा ग्रन्थकार ने यह भी कह दिया कि अध्यवसाय मूल भी संदेह होता है । इससे अध्यवसायाश्रय भी यह संदेह स्वरूप, हेतु एवं फल में संदेह, होने के कारण स्वरूपसंदेह, हेतुसंदेह और फलसंदेह इस तरह तीन प्रकार का है । उनमें स्वरूपसंदेह जैसे विविध तरु एवं शैल रंग दिये क्या—

यह तो विचारो कि दिन भर सूर्य के ताप से क्लान्त हुए कुमुदों के क्लम को दूर करने वाले, नायिकाओं के शृगारदीक्षागुरु, दिशारूपी कामिनियों के दर्पण और चकोरों के दोस्त, तुषार सदृश कान्त चन्द्रमा के प्रौढ़ होने पर अर्थात् पूर्ण विकशित होने पर क्या यह विश्व कर्पूर से भर गया, क्या मलयचन्दन से इस पर लेप कर दिया, क्या पारद से इसको धो दिया, और क्या स्फटिक मणि से इसका निर्माण हुआ है ।

यहाँ चाँदनी की धवलिमा में कर्पूरपूरणादि का अध्यवसान किया है । अर्थात् यहाँ कौमुदीधवलिमा विषय जो शब्द से उपात्त नहीं हैं उसे कर्पूर पूरणादि विषयी के द्वारा समझा गया है । जहाँ विषय का स्ववाचक शब्द से पृथक् निर्देश नहीं रहे तब भी उसमें विषयी का अभेद ज्ञान हो वह अध्यवसान कहाता है । यही लक्षण आपने भी लक्षणा के

व्यंजनागम्यत्वाद्विषयविषयिणोरारोपानुकूलविभक्तिकतां नापेक्षते। अपेक्षते च साक्षाच्छब्दवेद्यतायामिति कुत्राध्यवसायमूलता संशयस्य। एतेनाध्यवसानमूलतां संशयस्य निरूपयतो विमर्शिनीकारस्योक्तिरपास्ता।

अप्पय्यदीक्षितास्तु—

## मर्मप्रकाशः

तर्हि कुत्र तदपेक्षा तत्राह—अपेक्षते चेति। एवं च रूपकमूल एवायमित्यध्यवसानमूलः संशयः खपुष्पायमाण इति भावः। तदाह—कुत्रेति। अस्या इति। मालतीमाधवे मालतीवर्णनमिदम्। मासो वसन्तः। वनितास्रष्टृत्वं प्रजापतिशब्दबोध्यम्। अभावादित्यव्याप्तौ हेतुः। संशयलक्षणमाह—विरोधेनेति। हि यतः। अस्या मालत्याः। तदुपपादनं

## बालक्रीडा

प्रकरण में लिखा है कि अपृङ्ङ निर्दिष्टे विषये विषय्यभेदोऽध्यवसानम्। स्ववाचक शब्द से पृथक् अनिर्दिष्ट विषय में विषयी का अभेद ज्ञान ही अध्यवसान है। और भी बात है कहाँ यहाँ विमर्शिनी में "स च न सारोपः। विषयविषयिणोस्तदनुकूलविभक्तेरभावात्" यह लिखा है। और आपने जो "एतत्तर्कय" पद्य के कपूरैः किमपूरि इस उत्तरार्ध का अनुवाद करके श्लोक बनाया है वह भी भ्रष्ट अनुवाद है। आपने त्रात व्रात एवं प्रातः इस अनुप्रास के लोभ में पड़कर और "अतः सिन्दूरत्वादिना संशयधर्मी किरणव्रातोऽध्यवसीयते" लिखकर तो विषय को और भी विकृत कर दिया। क्या कहें। जब किरण व्रात शब्द से किरण व्रात को पृथक् लिख दिया है। तब सारोप संशय क्यों नहीं होगा और साध्यवसाय संशय कैसे होगा। तथा व्यंजनागम्य क्यों होगा एवं किसमें गुणीभूत होगा। आप गुरु ही नहीं गुरुओं के गुरु हैं। आप ही समझें। अतः इस पद्य की रचना ऐसी करिये जिससे उपद्रव दूर हो जाय। और सब भाव विमर्शिनीकारोक्त पद्य के अनुसार संगत हो जाय। इसकी रचना को मधुसूदनी में देखिये। अस्तु।

आरोप के अनुकूल विभक्तियाँ यहाँ विषय और विषयी में नहीं हैं। इसका क्या मतलब है। समान विभक्तियाँ ही आरोप के अनुकूल होती हैं क्या। व्यधिकरण रूपक आस्ये पूर्णशशांकता एवं मीनवती नयनाभ्यां में कहाँ विभक्तियाँ समान हैं। और अहीनचन्द्रा लसता आननेन इस व्यधिकरण परिणाम में। और -

रञ्जिता नु विविधास्तरुशैलाः संहृता नु ककुभस्तिमिरेण इस व्यधिकरण संशय में कहाँ विषय और विषयी में विभक्तियाँ समान हैं किंतु आपने तब भी इन सभी अलंकारों के सभी उदाहरणों में आरोप माना है अतः आरोप के अनुकूल विभक्ति नहीं है यह कहना भी कोई अर्थ नहीं रखता है।

अप्पय्य दीक्षित जी ने तो—इसकी सृष्टि के विधान के समय निश्चय चन्द्रमा प्रजापति था जिसने नायिका को कान्ति प्रदान की। ऐसी अपूर्व कान्ति चन्द्रमा से ही मिल सकती है। अथवा शृंगार ही जिसका मुख्य रस है वह मदन प्रजापति था क्या, क्योंकि शृङ्गारो-

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो, मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं स विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥'

इत्यत्र चन्द्रादीनां संदेहधर्मिणामेवानेकत्वम् । प्रकारस्तु वर्णनीयवनितास्रष्टृत्वमेकमेवेत्यनेककोटिकत्वाभावाद्विरोधेन परस्परप्रतिक्षेपकतया निबद्धानेकको-

मधुसूदनी

अस्याः सर्गेति । अत्रायं विशेषः । अस्याः निर्मितिसम्पादनसमये प्रजापतिः क आसीदिति जिज्ञासा चेत्तर्हि संशयधर्मी विषयः प्रजापतिरेकः । प्रकाराणां विषयिणां चन्द्रादीनामनेकत्वमिति विरोधेन परस्परप्रतिक्षेपकतया निबद्धानेक कोट्यवगाहित्वरूपसंशयलक्षणस्य व्याप्तिरेव । यद्येवं प्रश्नः स्यात् किं भोः ? अस्याः सर्गविधौ किं चन्द्रः (विषयः) प्रजापतिरासीत्, अथवा मदनः, अथवा वसन्तः । इति । तर्हि चन्द्रादीनां विषयाणां सन्देहधर्मिणामनेकत्वं प्रकारस्य विषयिणः प्रजापतेरेकत्वमिति प्रागुक्तसंशयलक्षणस्याऽव्याप्तिरेवेति पक्षद्वयम् । तत्र व्याप्तिरेवेति पक्षः पण्डितराजस्य, अव्याप्तिरेवेति पक्षो दीक्षितस्य । तत्र चन्द्रादिधर्मिकः संशय उचित इति वक्तुमयुक्तं, तथासति प्रजापतेर्विधेयतया पश्चादुपादानं स्यात् । प्रथम मुद्देश्यविधया कथनं न स्यात् । कथनं तु तथा कृतमिति तादृशः संशयो नोचितः । इति तेषामाशयः । प्रकृतस्य सन्दिह्यमानत्वे सन्देहालंकार ः । प्रकृतः विषयः संशयधर्मी यद्भित्तित्वेनाप्रकृतः सन्दिह्यते । इति ।

वस्तुतस्तु नुपदस्योत्प्रेक्षाद्योतकत्वादत्र न संशयः । अपि तु उत्प्रेक्षैवेति राद्धान्तः ।

बालक्रीड़ा

द्दीपक ऐसे रूप एवं लावण्य की उपलब्धि मदन से ही हो सकती है । अथवा पुष्पों का आकर मास वसन्त प्रजापति था क्या, क्योंकि अधरदशनादिरूपी पुष्पों का उद्गम वसन्त से ही हो सकता है : अन्यथा वेदाभ्यास करते-करते जो जड़ हो गया है और नवीन-नवीन विषयों से जिसका मन हट गया है वह जरठ मुनि ब्रह्मा ऐसे मनोहर रूप के निर्माण में कैसे समर्थ हो सकता है ।

यहाँ दीक्षित जी ने चित्रमीमांसा के ससन्देहालंकार प्रकरण में किसी प्राचीन आचार्य के निर्मित ससन्देहालंकार के लक्षण ।

"साम्यादप्रकृतार्थस्य या धीरनवधारणा
प्रकृतार्थाश्रया तज्ज्ञैः ससन्देहः स इष्यते"

को लिखकर (अत्रेदं विचारणीयम्) यहाँ यह विचारणीय हैं के रूप में लक्षण के पदों की सफलता का विचार किया है । उस प्रसंग में लक्षण के द्वितीय विशेषण के सम्बन्ध

व्यवगाहित्वरूपस्य संशयलक्षणस्याव्याप्तिमाहुः । तन्न । अत्र हि अस्याः सर्गविधौ यः प्रजापतिरभूत्स किं नु चन्द्रः, किं नु मदनः, किं वा नु वसन्त इति संशयः प्रजापतिधर्मिकश्चन्द्रत्वादिनानाकोटिक एवेति कुत्राव्याप्तिः । न चात्र चन्द्रादिधर्मिकः संशयो युक्तो वक्तुम् । एवं च प्रथमोद्देशो न स्यात् । यदपि 'साम्यादप्रकृतार्थस्य या धीरनवधारणा' इति प्राचां लक्षणं महता प्रबन्धेन त एव दूषितवन्तः, तदपि न । साम्यनिमित्तनिश्चयसंभावनान्यतर-

## मर्मप्रकाश

खण्डयति—न चात्रेति । एवं चेति । चो ह्यर्थे । यत एवं सतीत्यर्थः । विधेयस्य पाश्चा-

## बालक्रीड़ा

में विचार प्रस्तुत किया कि (अनवधारणेति किमुच्यते) अनवधारणा पद का क्या अर्थ है। "अनवधारणा" यह क्या कहते हैं। क्या अनिश्चय अनवधारण है। तव तो संभावना भी सन्देह रूप ही है अतः उत्प्रेक्षा में लक्ष्य के वाहर लक्षण चला गया "बालेन्दुवक्राणि" में अतिव्याप्ति हो गई। अथवा विरोध के कारण परस्पर में एक दूसरे को दवाने वालों के रूप में अनेक कोटियों का उपनिवन्धन अनवधारणा है क्या। तव तो अस्याः सर्ग विधौ में ससन्देह के लक्ष्य में ही लक्षण नहीं गया। क्योंकि यहाँ सन्देह के धर्मी विषय चन्द्रादि ही अनेक हैं और प्रकार सन्दिह्यमान धर्म विषयी वर्णनीय वनितास्रष्टृत्व एक ही है। किन्तु वे होने चाहिए अनेक। अतः अव्याप्ति लक्षण दोष है। ऐसा कहा है। वह ठीक नहीं है।

क्योंकि इस वनिता के सर्ग विधि में निर्मिति में सम्पादन में प्रजापति कौन था। इस संशय का धर्मी विषय प्रजापति एक है। और क्या वह चन्द्र था, या क्या वह मदन था। या क्या वह वसन्त था इस तरह चन्द्रत्वादि धर्म विषयी अनेक हैं तव कहाँ अव्याप्ति है। यह आप कह नहीं सकते कि चन्दादि धर्मिक ही संशय उचित है। यदि ऐसा होता तो प्रजापति का प्रथम उद्देश पहले कथन नहीं होता। क्योंकि चन्द्रादि संशय में प्रजापति विधेय होता, जिसे वाद में कहते हैं।

यहाँ का आशय यह है कि इसके निर्माण के समय प्रजापति कौन था। ऐसा प्रश्न हो तव तो संशय का विषय धर्मी प्रजापति है। यदि यह प्रश्न हो कि क्या जी? इसके निर्माण के समय चन्द्रमा प्रजापति था, अथवा मदन प्रजापति था या वसन्त था तव संशय के स्थल धर्मी चन्द्रादि होते हैं। इस तरह दोनों पक्ष हो सकते हैं। किन्तु पण्डितराज का पक्ष ही उद्देश्य विधेय भाव के विचार के आधार पर उचित है। वस्तुतस्तु यहाँ नुपद के सद्भाव में उत्प्रेक्षा है। क्योंकि नुपद उत्प्रेक्षा का द्योतक है। और भी जो "साम्यादप्रकृतार्थस्य" इस प्राचीनों के संशय के लक्षण को वड़े भारी प्रवन्ध के द्वारा दूषित किया है वह भी ठीक नहीं है। क्योंकि "साम्य के कारण जो निश्चय एवं संभावना अन्यतर से भिन्न वुद्धि" ऐसा उसका अर्थ कर देने पर कोई दोष नहीं है। हाँ संशय से निश्चय को अलग ही कहना पड़ेगा। न कि संशय को निश्चय से अलग।

भिन्ना या धीरिति तदर्थकरणे दोषाभावात्। निश्चयत्वं तु संशयाघटितमेव निर्वचनीयम्। उक्तेषूदाहरणेषु सोऽयं संशयालंकारः स्वशब्दवेद्यत्वाद्वाच्यः।

लक्ष्यो यथा—

'साम्राज्यलक्ष्मीरियमृष्यकेतोः सौन्दर्यसृष्टेरधिदेवता वा।
रामस्य रामामवलोक्य लोकैरिति स्म दोला रुरुहे तदानीम् ॥'

अत्र पर्यायेणोभयकोट्यालम्बनतया दोलासादृश्यात्संशयोऽत्र दोला-शब्देन लक्ष्यते।

व्यङ्ग्योऽप्ययं यथा—

'तीरे तरुण्या वदनं सहासं, नीरे सरोजं च मिलद्विकासम्।
आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालिकिशोरमाला ॥'

### मर्मप्रकाश

त्यत्वमिति नियमादिति भावः। त एव अप्पय्यदीक्षिता एव। अनवधारणेत्यस्य तात्पर्यार्थ-माह—निश्चयेति। नन्वेवमन्योन्याश्रयापत्तिरत आह—निश्चयत्वं त्विति। ऋष्यकेतो-

### मधुसूदनी

दोलेति। दोलारूढः पुमान् वारमेकं पृष्ठतो वारमपरमग्रतो गच्छति भवति च। एवं संशयालुरपि कदाचित्तमनु, कदाचिदेनमनु धावति भवति च। तयोः स्थितिः समाना। किन्तु दोलाशब्दस्य वाच्यार्थः संशयो नास्ति। लक्ष्यार्थस्तु स्यादेवेत्याह-दोलाशब्देन लक्ष्यते इति। ऋष्यकेतोर्मदनस्य।

### बालक्रीड़ा

इसमें प्रश्न हो सकता है कि यदि संशय को निश्चयाघटित मानेगें तो निश्चयगर्भ संदेह एवं निश्चयान्त संदेह नामक संशय के भेद कैसे बनेंगे। अस्तु। इन उदाहरणों में वह संशयालंकार संशय शब्द से वेद्य होने से वाच्य है। लक्ष्य जैसे—

रामचन्द्र की रामा स्त्री को देखने के समय जनता दोला पर चढ़ गई कि क्या यह कामदेव की साम्राज्य लक्ष्मी है या सौन्दर्य सृष्टि की अधिदेवता है।

यहाँ क्रमशः उभय कोटियों का आलम्बन करने के कारण (याने एक वार, साम्राज्य लक्ष्मी की दूसरी बार अधिदेवता को समझा है इसलिए उभय कोटियाँ हुई) दोला का सादृश्य हो गया। दोला में भी झूलनेवाला एकवार पीछे को जाता है और दूसरी वार आगे को अतः दोला शब्द से संशय लक्षणावेद्य है।

व्यंग्य भी यह संशय होता है जैसे—तीर पर हासयुक्त तरुणी के मुख को और जल में खिले हुए कमल को देखकर यह भोली भ्रमरमाला मकरन्द के लोभ में दोनों तरफ दौड़ रही है।

अत्र कमलधर्मिकोऽभेदेन संसर्गेण पुरोवर्तिव्यक्तिद्वयप्रकारकः कमलमिदमिदं वेति भ्रमरगतः संशयो व्यङ्ग्यः। न च कमलाभेदबुद्धेर्भ्रमरप्रवृत्त्युपायतयापेक्षणादिदंपदार्थाभेदबुद्धिर्निरर्थिकेति वाच्यम्। एकपदार्थधर्मिकापरपदार्थाभेदबुद्धेरपरपदार्थधर्मिकैकपदार्थाभेदबोधप्रयोजकत्वेन कमलाभेदबोधसाम्राज्यात्। कमलत्वमेतद्वृत्ति तद्वृत्ति वेति संशयाकारः। सोऽयं संशयध्वनिः।

## मर्मप्रकाशः

श्चन्द्रस्य। ऋष्यः कुरङ्गः। रुरुहे आरूढा। आलम्बनतया एतद्रूपधर्मेण। तीर इति। व्याख्यातं प्राक्। मिलदिति। सविकासमित्यर्थः। इदंपदार्थेति। इदंत्वेनेदंपदार्थेत्यर्थः। तथा चेदमिदं वा कमलमित्यौचित्येनानेककोटिकत्वाभावान्नायं संशय इति भावः। ननु प्रवृत्त्यन्यथानुपपत्त्या तथा कल्प्यम्, सा चान्यथा सिद्धेत्याह—एकेति। कमलेत्यर्थः। अपरेति।

## मधुसूदनी

निरर्थिकेति। अयं भावः। कमलाभिन्नं वदनं कमलाभिन्नं सरोजमित्येवं भ्रमरो यर्हि जानीयात्तर्हि एव तदर्थमुभयत्र धावेत्। एवं हि तस्य प्रवृत्तौ हेतुः कमलाभेद बुद्धिः। तत्र संशयधर्मि कमलमेकम्। प्रकारो वदनादि द्वयम्। अतः संशयलक्षणं संगतम्। इदं वा इदं वा कमलमिति बुद्धौ संशयधर्मि अनेकं, प्रकारः कमलमेकमिति तल्लक्षणमसंगतमत उच्यते, निरर्थिका इदंपदार्थाभेदबुद्धिरिति न च वाच्यम्। इदंपदार्थाभेदबुद्धिः कमलाभेदबुद्धेः प्रयोजिका। अत एव संशयाकार एतादृशः। इति।

## बालक्रीड़ा

यहाँ कमल के बारे में दो व्यक्तियों को लेकर भ्रमर को संदेह हो रहा है कि यह कमल है कि यह कमल है। इसका कारण है अभेद सम्बन्ध याने वदन को, कमलाभिन्न और कमल को कमलाभिन्न समझना। यहाँ कमल धर्मी एक है और प्रकार धर्म दो हैं। यह संशय व्यंग्य है।

यह आपको नहीं कहना चाहिए कि कमलाभेद बुद्धि याने वदन को कमलाभिन्न और कमल को कमलाभिन्न समझना तो भ्रमर को दोनों तरफ दौड़ने के लिए उपाय के रूप में अपेक्षित है किन्तु यह कमल है कि यह कमल है यह इदंपदार्थाभेद बुद्धि अनेक कोटिक नहीं होने से संशय नहीं बन सकती है अतः निरर्थक है। क्योंकि यहाँ दो अभेद बुद्धियाँ हैं जिनमें प्रयोज्य प्रयोजक भाव सम्बन्ध है जिसके फलस्वरूप कमलाभेद का साम्राज्य होता है। एक कमलपदार्थ धर्मिक अपर इदंपदार्थप्रकारक अभेदबुद्धि की अपर पदार्थधर्मिक एकपदार्थप्रकारकबुद्धि प्रयोजक है। यह संशयध्वनि का उदाहरण है।

'आज्ञा सुमेषोरविलङ्घनीया, किं वा तदीया नवचापयष्टिः ।
वनस्थिता किं वनदेवता वा, शकुन्तला वा मुनिकन्यकेयम् ॥'

यद्यप्यत्रापि वाचकशब्दाभावाद्व्यङ्ग्य एव भवितुमर्हति संशयः, तथापि विषयनिरूपणेन स्फुटमावेदितत्वान्न ध्वनिव्यपदेशस्य हेतुः । अपि तु गुणीभूतव्यङ्ग्यप्रभेदस्य । अनुगामी चात्र प्रतिप्रकारं पृथगेव निर्दिष्टः ।

### मर्मप्रकाशः

इदंपदार्थः । पर्यवसितमाह—कमलत्वमिति । ध्वनेरुदाहरणान्तरं खण्डयति—आज्ञेति । सुमेषुर्मदनः । सुमं पुष्पम् । तदीया मदनीया । इयं सीता । विषयेति । आज्ञादीत्यर्थः । व्यङ्ग्येति । व्यङ्ग्यरूपो यः प्रभेदस्तद्व्यपदेशस्येत्यर्थः । प्रतिप्रकारं प्रतिसंदेहम् । तत्र ह्याज्ञासंदेहेऽविलङ्घनीयत्वं वनदेवतासंदेहे वनस्थितत्वं च पृथगुपात्तमिति भावः । कांचिदिति । इदं च पद्यमप्पय्यदीक्षितमूलपुरुषवक्षस्थलाचार्यकृतवरदराजवसन्तोत्सवस्यम् ।

### मधुसूदनी

आज्ञेति । सुमेषुः पुष्पबाणो मदनः । तदीया मदनसम्बन्धिनी ।

अत्र किं वेति पदघटितपद्ये वाचकशब्दाभावादिति तूपहसनीयमेव । सादृश्यमूला वाकारार्थस्पृक् बुद्धिः ससन्देहालंकृतिरिति सिद्धान्तादेव भवता असाधिषावाम् अलिर्मृगो वा नेत्रं वा यत्र किञ्चिद्विभासते। अरविन्दं मृगाङ्को वा मुखं वेदं मृगीदृशः ।

इत्यत्र वाकारघटितऽपद्ये संशयौ; यौ चाहार्यौ । इति । यदि समशेत, संशयः प्रपेदे, सन्दिदिहे इत्यादि संशयपदघटितस्थले एव संशयः स्वशब्दवेद्यत्वाद्वाच्यस्तर्हि अस्याः सर्गविधावित्यत्र अधिरोप्य हरस्य इत्यत्र च संशयपदाघटितस्थले संशयो न स्याद्भवत्स्वीकृतः । इति च ।

### बालक्रीड़ा

क्या यह सीता कामदेव की अनुल्लंघ्य आज्ञा है या यह उसकी धनुर्यष्टि है या यह वन में रहनेवाली वनदेवता है या यह मुनि की कन्या शकुन्तला है ।

यद्यपि यहाँ पर भी संशय के वाचक शब्द के अभाव में संशय व्यंग्य ही होना चाहिए। तद्यपि विषय के निरूपण कर देने के लिए उसे स्पष्ट कह दिया गया है अतः इसे ध्वनि नाम से नहीं कह सकते हैं । अपितु गुणीभूत व्यंग्य का एक प्रभेद यह है । यहाँ ४ संदेह है इनमें प्रत्येक का अनुगामी धर्म आज्ञा का अविलंघनीयत्व, चापयष्टि का नवत्व, वनदेवता का वनस्थत्व, शकुन्तला का मुनिकन्यकात्व अलग अलग कह दिया है ।

जो तो चित्रमीमांसा के संशयध्वनि के उदाहरण प्रसंग में आपय्यदीक्षितजी ने= "काञ्चन के समान गौर अंगवाली किसी नायिका को साक्षात् लक्ष्मी की जैसी देखकर संशयालु वरदजी ने अपने वक्षस्थल को देखा ।

यत्तु चित्रमीमांयासायां संशयध्वन्युदाहरणप्रसङ्गे अप्पय्यदीक्षिताः—

"कांचित्काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव श्रियम् ।
वरदः संशयापन्नो वक्षःस्थलमवैक्षत ॥"

अत्र संशयस्य शब्दोपात्तत्वेऽपि तावन्मात्रस्यानलंकारत्वात्तदलंकारताप्रयोजकस्य वक्षःस्थले स्थितैव लक्ष्मीस्ततोऽवतीर्य पुरस्तिष्ठतीत्येवं संशयाकारस्य वक्षःस्थलमवैक्षतेत्यनेन व्यङ्ग्यत्वात्संदेहालंकारध्वनिरत्रेति ।

यथा—

'दर्पणे च परिभोगदर्शिनी' पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनु बिम्बमात्मनः कानि कान्यपि चकार लज्जया ॥'

मर्मप्रकाशः

वरदः काञ्चीदेवता विष्णुः । तदिति । संशयेत्यर्थः । तत्र सामान्यज्ञाने ।

मधुसूदनी

सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि । सामान्यविशेषयोरभेदान्वय इति सिद्धान्तानुरोधात् किमियं वक्षस्थलस्थैव लक्ष्मीस्ततोऽवतीर्य पुरस्तिष्ठतीति । व्यंग्यसंशयज्ञानविषयीभूतोऽर्थः, शक्त्या अभिधया संशयशब्देन निवेदितं यत् एकस्मिन् विशेष्यपदार्थे विरुद्धनानापदार्थप्रकारकं ज्ञानं, तज्ज्ञाने विशेषणीभूतेन सामान्यार्थेन प्रकारीभूतेन विरुद्धेन नानापदार्थेन साकमभेदेन एकत्वेन पर्यवस्यति परिणमति । एकस्मिन् पदार्थे विरुद्धनानापदार्थविषयकं ज्ञानं संशयपदवाच्यं तत्र विशेषणीभूतः सामान्यार्थः विरुद्धो नानापदार्थः, स च सामान्याकरेण ज्ञातो विरुद्धो नानापदार्थश्च: कः इति जिज्ञासायां "वक्षःस्थलस्थिता यासीत् सा ततोऽवतीर्य पुरस्तिष्ठति" इति विशेषभूतोऽर्थो ज्ञाने समागच्छति । अनयोः सामान्यविशेषयोर भेदः पार्यान्तिकबोधविषयो भवति । एवं च शक्त्या ज्ञातपदार्थादतिरिक्तः व्यंग्यः पदार्थो नास्ति इति वाच्य एव स ध्वनिव्यपदेश्यः कथमिति रहस्यम् ।

बालक्रीड़ा

यहाँ संशय, शब्द से उपात्त वाच्य होने पर भी केवल शब्दोपात्त अंश अलंकार नहीं है । उस अलंकार की अलंकारता का प्रयोजक "वक्षः स्थल में बैठी हुई लक्ष्मी वहाँ से उतरकर सामने खड़ी है" इस तरह का संशय का आकार "वक्षःस्थल को देखा" इससे व्यंग्य है अतः यहाँ इस पद्य में संशयध्वनि है ।

और भी जैसे = कोई नायिका दर्पण में अपने शरीर के अवयवों को देख रही थी कि पीछे से उसका प्रणयी धीरे से आकर बैठ गया । फिर अपने विम्ब के सदृश पीछे बैठे हुए प्रणयी के विम्ब को देखकर मारे लज्जा के उस नायिका ने क्या-क्या नहीं किया ।

इत्यत्र कानि कान्यपीति सामान्यतो निर्दिष्टानुभावविशेषप्रतीत्यर्थं लज्जाशब्दप्रयोगेऽपि तस्याः स्वविभावानुभावाभ्यां रसानुगुणाभिव्यक्तिरूपो ध्वनिः" इत्याहुः, तदेतद्ध्वनितत्त्वविज्ञैरुपहसनीयमेव ।

तथाहि संशयापन्न इत्यत्र सशयपदेनैकस्मिन्पदार्थे विरुद्धनानापदार्थसंबधावगाहि ज्ञानं साक्षादेव निवेद्यते । तत्र कोऽसौ विरुद्धो नानार्थ इति विशेषाकाङ्क्षायां वक्षःस्थलावेक्षणेन वक्षःस्थलस्थैव लक्ष्मीस्ततोऽवतीर्य किं पुरस्तिष्ठतीत्यादिरर्थो व्यञ्जनाव्यापारेण बोध्यमानः शक्त्या संशयशब्द निवेदितज्ञानविशेषणीभूतेन सामान्यार्थेन साकमभेदेन पर्यवस्यति ।

### मर्मप्रकाश

अवेक्षणेनेति ।

### बालक्रीड़ा

यहाँ कानि कानि अपि इससे अनुभवों की सामान्य रूप से प्रतीति हुई किन्तु कुछ क्रियायें कुछ व्यापार उसने किये । किन्तु वे व्यापार किंमूलक ह यह विशेष प्रतीति नहीं हुई । अतः विशेष प्रतीति के लिए याने भय, त्रास, शंका आदि के वारण के हेतु लज्जाशब्द का प्रयोग किया । किन्तु लज्जा की प्रतीति वाच्य न होकर अपने विभाव एवं अनुभावों से संभोग शृंगाराख्य रस के अनुकूल पीछे से अलिंगनरूप या गोद में लेकर चुम्बन रूप अभिव्यक्ति हुई जो ध्वनि है ।" कहा है वह सब ध्वनि तत्त्व के जानकारों के हँसने की वस्तु ही है । यह कैसे है उसको दिखाते हैं तथाहि—"संशयापन्न" इसमें रहनेवाले संशय पद से एक पदार्थ में विरुद्ध नानापदार्थ विषय का ज्ञान साक्षात् मालूम पड़ता है ।

वहाँ संशय पद से साक्षात् मालूम पड़ने वाला विरुद्ध पदार्थ कौन है इस विशेष की आकांक्षा में वक्षःस्थल को बाद में देखा इस अवेक्षण से "वक्षस्थल में रहने वाली लक्ष्मी वहाँ से उतर कर क्या ? सामने खड़ी हो गई है" यह विशेष अर्थ व्यञ्जना व्यापार से जाना गया भी शक्ति के द्वारा संशय शब्द से प्रतीत ज्ञान में विशेषणीभूत सामान्य अर्थ के साथ एक होकर मिल जाता है । अर्थात् व्यंग्य अर्थ और वाच्य अर्थ दो रूप उसके नहीं रह पाते हैं । इस अवस्था में संशयमात्र अर्थात् सामान्य एवं विशेष दोनों संशयों की प्रतीति शक्ति अभिधा के द्वारा हो गई । अतः "क्या जो पहले वक्षः स्थल में थी वही बाद में वहाँ से उतर कर सामने आ गई" ये विषय भी विरुद्ध नानार्थ के रूप में सामान्य आकार से वाच्य हो जाते हैं । अतः अभिधा से प्रतीत हुए वाच्य संशय के रूप में परिणत है । तब किसी भी अंश को ध्वनि व्ययदेश का हेतु कहना बन नहीं सकता है । क्योंकि ध्वनिमार्ग के प्रवर्त्तक आचार्यो ने इसी सिद्धान्त को स्थापित किया है कि किसी भी प्रकार से जो अर्थ वाच्यवृत्ति अभिधा से चुम्बित नहीं होगा वही ध्वनि होगा । इसीलिए ध्वन्यालोक के द्वितीय उद्योत में जो अर्थ शब्द शक्ति या अर्थशक्ति से आक्षिप्त हुआ है अतएव जो व्यंग्य है उस अर्थ को

एवं च संशयमात्रस्य शक्त्या बोधनाद्वक्षःस्थलस्थितैवेत्यादि विषयभागस्यापि विरुद्धनानार्थत्वेन सामान्याकारेणावलीढतया तयैव कवलीकरणाद्वाच्यार्थसंशयपर्यवसायकत्वाच्च न कस्यापि ध्वनिव्यपदेशहेतुत्वं युक्तम् । सर्वथा वाच्यवृत्त्यचुम्बितस्यैव तथात्वमिति ध्वनिमार्गप्रवर्तकैः सिद्धान्तितत्वात् ।

तथा च द्वितीयोद्द्योते—

'शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः ।।'
यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ।।'

इति सूत्रयित्वा

''संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ।।'

## मर्मप्रकाशः

व्यञ्जनार्थवृत्तिरपीति भावः । संशयमात्रस्य सर्वस्य संशयस्य । अर्थत्वेन सामेति । एतद्रूपसामान्याकारेणेत्यर्थः । अवलीढेति । बोध्यतयेत्यर्थः । तयैव शक्त्यैव । कवलीति । बोधनादित्यर्थः । नन्वेवमपि विशेषरूपेण व्यङ्ग्यत्वमेवात आह—वाच्यार्थेति । विशेषसंशयस्येत्यादिः । तदाह—कस्यापीति । विशेषस्यापीत्यर्थः । सर्वथा केनापि प्रकारेण । तथात्वं ध्वनित्वम् । संकेतेति । को वावयो रतिकालस्तत्संकेत ब्रूहीत्यत्र दत्तचिइत्तमित्यर्थः ।

## मधुसूदनी

संशयमात्रं सामान्यं विशेषं च सर्वमपि संशयं शक्तिरभिधा बोधयति । एवं च वक्षः स्थलस्थितैव लक्ष्मीस्ततोऽवतीर्य पुरस्तिष्ठतीति विशेषः संशयः विरुद्धनानार्थरूपसामान्यसंशयादबहिर्भूत एव । अतः सामान्याकारेण अवलीढतयानुषक्ततया इत्युक्तम् । तथानुषक्तत्वाद्धेतोस्तयैव शक्त्यैव कवलीकरणाद् शक्तिबोध्यसामान्यार्थान्तर्गतत्वाद् शक्यार्थसंशये परिणतत्वादिति अक्षरार्थः ।

संकेतेति । कालस्य संकेतः स्वाभिप्रायसूचकचेष्टाविशेषः । संकेतकालः । राजदन्तादिषु परमिति सूत्रेण षष्ठ्यन्यस्य परनिपातः । आवयोरतिकालः क इति कालविषयकसंकेते चेष्टायां दत्तचित्तं विटं धूर्तमुपपतिम् । हसन्त्या विदग्धया नेत्रा-

## बालक्रीड़ा

यदि कवि तद्वाचक शब्द से आविष्कृत कर दे तो वह ध्वनि से भिन्न अलंकार ही है । ऐसा सूत्र बनाया ।

किस समय हम और आप दोनों मिलेंगे इस तरह काल विषयक संकेत को जानने के लिए चित्तवाले विट को समझकर चतुर नायिका ने लीला के लिए हाथ में लिए हुए पद्म को निमीलित करके हँसते-हँसते अपने अभिप्राय को नेत्रों से बतला दिया ।

अत्र संकेतकालमनसं ज्ञात्वा लीलापद्मं निमीलितमिति वदता कविना लीलापद्मनिमीलनस्य प्रदोषाभिव्यञ्जकत्वं स्वोक्त्यैव निवेदितमिति ध्वनिमार्गादयमपर एव गुणीभूतव्यङ्ग्यस्य मार्गः।

यथा वा—

'अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथात्र।
अस्मिन्पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥'

### मर्मप्रकाशः

हसदिति क्रियाविशेषणम्। इति वदतेति। क्त्वान्तवाक्यविशिष्टं वदतेत्यर्थः। अन्यथा क्त्वान्तवाक्येनैवार्थात्तदभिव्यञ्जकत्वे सिद्धे क्त्वान्तवाक्यानर्थक्यं स्पष्टमेव। तदाह—स्वोक्त्यैवेति। क्त्वान्तवाक्येनेत्यर्थः। अत्र गृहप्रदेशविशेषे। एवमग्रेऽपि। कुम्भेति पान्थसंबोधनमिति कश्चित्। तन्नामिका दासीत्यन्यः। जलाद्याहरणार्थं दासी, न क्रीडादासीति तु तत्त्वम्। वियोगात्पापात्वम्। कतिपयेत्यनेन द्रुतमागमनाभावः सूचितः। अवसरे समये

### मधुसूदनी

ऽभ्यामर्पितं दर्शितमाकूतमभिप्रायो यत्र पद्मे तत्। लीलायै हस्ते धृतं पद्मं लीलापद्मं निमीलितं संकोचितम्।

अम्बेति। परिणतं परिपक्वं वयोऽवस्था यासां तासामतिजरतीनाम्। श्रेष्ठा माता इत्यपि अन्वयः कर्तुं शक्यः। परिणतं वयो येषां तेषामतिजरतां वृद्धानामग्रणीर्मुख्यस्तात इति त्वन्वयोऽस्त्येव। निःशेषं यदगारस्य कर्म। तत्र श्रमेण शिथिला तनुर्यस्याः सा। कुम्भदासी जलाहरणार्थं प्रतिज्ञया गृहीते कुम्भे सततानुषक्ततया कुम्भदासीति नाम्ना संकेतिता सेविका। पापा वियोगजन्यदुःखमनुभवित्री। पुण्यं सुखस्य पापं दुःखस्य कारणमिति शास्त्रम्। कतिपयदिवसेत्यनेन एष्वेव दिवसेषु प्रवासंगतः न चिरं प्रोषितस्तेन सत्वरागमनशंका न कार्येति गम्यते।

### बालक्रीड़ा

यहाँ विषयक "काल संकेत के जानने के लिए उत्सुक विट को समझकर लीलापद्म को संकुचित कर दिया" इस बात को कहते हुए कवि ने लीलापद्म निमिलन प्रदोप का अभिव्यञ्जक है यह अपने शब्द से ही कह दिया अतः ध्वनिमार्ग से भिन्न ही यह गुणीभूत व्यंग्य का मार्ग है।

और भी जैसे—यहाँ बुढ़िया माता सोती है। यहाँ परिपक्व अवस्थावालों में अग्रणी तात पिता सोते हैं। तथा यहाँ घर का पूरा काम करने से जिसका शरीर शिथिल हो गया है

अत्र निःशङ्कं रन्तुमायाहीत्यर्थश्चरणत्रयव्यङ्ग्योऽस्वसरव्याहृतेर्व्याजत्वं ब्रुवता कविना स्फुटं स्वोक्त्या निवेदित इत्ययमपि न ध्वनेर्मार्गः'[1] इत्याहुरानन्दवर्धनाचार्याः ।

तृतीयोद्द्योते च गुणीभूतव्यङ्ग्यनिरूपणे 'व्यङ्ग्यस्यार्थस्य यदि मनागप्युक्त्या प्रकाशनं तदा गुणीभाव एव शोभते । तस्माद्यत्रोक्तिं विना व्यङ्ग्योऽर्थस्तात्पर्येण प्रतीयते तत्र तस्य प्राधान्याद् ध्वनित्वम्' इति तद्युक्तिविवेचनेऽभिनवगुप्तपादाचार्याः ।

एवं चैवंविधेषु विषयेषु व्यञ्जकत्वस्य व्यङ्ग्यस्य वा मनागुक्तिसंस्पर्शमात्रेण ध्वनित्वं कथमिव स्वीकुर्वीरन् । एतेन 'दर्पणे च परिभोगदर्शिनी' इति प्रागुक्तपद्ये लज्जाध्वनित्वं यद्दीक्षितैरभ्यधीयत तदप्यपास्तमिति दिक् ।

### मर्मप्रकाशः

उक्तेर्व्याजपूर्वमित्यर्थः । पूर्वोदाहरणाशयेनाह—व्यञ्जकेति । द्वितीयाशयेनाह—व्यङ्ग्येति ।

### मधुसूदनी

अवसरेति । रन्तुमागमनस्य कालोऽयमिति कथने यो व्याजः कपटस्तत्पुरः सरम् । स्वोक्त्या व्यंग्यं स्वं तद्वाचकशब्दस्तेन उक्त्या ।

### बालक्रीड़ा

ऐसी कुम्भदासी पानी भरने वाली कहारिन सोती है । और यहाँ अकेली मैं जिसके मालिक कुछ दिनों से परदेश गये हुए हैं । इस प्रकार अवसर कहने के बहाने तरुणी ने मुसाफिर को कहा ।

यहाँ "निःशङ्क रमण करने के लिए आवो" यह अर्थ पद्य के तीनों चरणों से व्यंग्य भी था किन्तु अवसर कहने के बहाने को कहते हुए कवि ने शब्द से स्पष्ट ही कह दिया अतः यह भी ध्वनि का मार्ग नहीं है । ऐसा आनन्दवर्द्धनाचार्यजी ने कहा है ।

इतना ही नहीं "तृतीयोद्योत में गुणीभूत व्यंग्य के निरूपण के समय" व्यंग्य अर्थ का यदि थोड़ा सा भी शब्द के द्वारा प्रकाशन कर दिया जाय तब गुणीभाव ही अच्छा लगता है । इसलिए जहाँ स्व शब्द के विना ही केवल तात्पर्य से व्यंग्य अर्थ प्रतीत होता हो वहाँ उसमें प्रधानता से ध्वनित्व है । यह उसके विषय में युक्ति का विवेचन करते समय अभिनवगुप्त पादाचार्य ने कही है ।

इस प्रकार इस तरह के विषयों में व्यंजकत्व या व्यंग्य का थोड़ी सी भी उक्ति के स्पर्शमात्र से ध्वनित्व का निराकरण करने वाले आचार्य "काञ्चित् काञ्चनगौराङ्गीम्" पद्य में—जहाँ शब्द से व्यंग्य को कह दिया है—ध्वनित्व को कैसे स्वीकार करेंगे । इस विवेचन

अस्मिंश्च संशये नानाकोटिषु क्वचिदेक एव समानो धर्मः। क्वचित्पृथक्। सोऽपि क्वचिदनुगामी, क्वचिद्बिम्बप्रतिबिम्बभावमापन्नः, क्वचिदनिर्दिष्टः क्वचिन्निर्दिष्टः। तत्र 'मरकतमणिमेदिनीधरो वा' इति प्रागुदाहृतपद्ये श्यामाभिरामत्वं धर्मिणो रामस्य, कोट्योश्च तमालमरकतभूधरयोरेक एवानुगामी धर्मः प्रतीयमानत्वादनिर्दिष्टः।

स एव निर्दिष्टो यथा—

'नेत्राभिरामं रामाया वदनं वीक्ष्य तत्क्षणम्।
सरोजं चन्द्रबिम्बं वेत्यखिलाः समशेरत॥'

अत्र नेत्राभिरामत्वरूपस्त्रिष्वेक एवानुगामी धर्मो निर्दिष्टः। पृथगनुगामी निर्दिष्टो यथा प्रागुदाहृते 'आज्ञा सुमेषोः' इत्यादौ।

### मर्मप्रकाशः

तत्र तेषां धर्माणां मध्ये। श्यामेति। तद्विशिष्टाभिरामत्वमित्यर्थः। स एव अनुगाम्येव। नेत्रेति। तयोरभिराममित्यर्थः। समेति। संशयं कृतवन्तः। एवमग्रेऽपि। पृथगिति।

### मधुसूदनी

त्रिष्विति। त्रिषु वदनसरोजचन्द्रबिम्बेषु नेत्राभिरामत्वम्। एकत्र नेत्रयोरभिरामम्, द्वितीयत्र नेत्राभ्यां सकाशादभिरामम्, तृतीयत्र नेत्रवदभिराममिति समासः। पृथगिति। अनुल्लंघनीयत्वं, नवत्वं, वनस्थितत्वं, मुनिकन्यकात्वं चेति संशयधर्मिसीतायां आज्ञादिषु कोटिषु च अनुगामी धर्मः।

### बालक्रीड़ा

से "दर्पणे च परिभोगदर्शिनी" इस पहले कहे हुए पद्य में लज्जाध्वनि है ऐसा जो अप्पय्य दीक्षितजी ने कहा था वह भी अपास्त हो गया। यह एक विवेचन का मार्ग है।

इस संशय में नानाकोटियों में कहीं एक ही समान धर्म है। कहीं अलग-अलग। वह धर्म भी कहीं अनुगामी। कहीं बिम्बप्रतिबिम्बभावापन्न। कहीं निर्दिष्ट। और कहीं अनिर्दिष्ट होता है। उनमें "मरकतमणिमेदिनीधरो वा" इस पहिले कहे हुए पद्य में श्यामाभिरामत्व धर्म, धर्मी राम और कोटियां तमाल एवं मरकतभूधर में एक ही है। वह भी अनुगामी है जो प्रतीयमान होने से अनिर्दिष्ट है।

वही धर्म निर्दिष्ट जैसे=रामा का नेत्रों से सुन्दर वदन को देखकर उस क्षण में उपस्थित सभी लोगों को संशय हुआ कि यह कमल है कि चन्द्रबिम्ब है।

यहाँ नेत्रों में अभिराम, नेत्रों से अभिराम वदन एवं नेत्र की तरह अभिराम कमल एवं चन्द्रबिम्ब में नेत्राभिरामत्व धर्म एक है अनुगामी है तथा शब्द से निर्दिष्ट है। अलग अनुगामी तथा निर्दिष्ट धर्म जैसे=पहले उदाहृत "आज्ञा सुमेषोः" में है। यहाँ धर्मी सीता और कोटियां

यथा वा—

'संपश्यतां तामतिमात्रतन्वीं शोभाभिराभासितसर्वलोकाम् ।
सौदामनी वा सितयामिनी वेत्येवं जनानां हृदि संशयोऽभूत् ॥'

अत्रातिमात्रतनुत्वं सौदामन्या, शोभाभिराभासितसर्वलोकात्वं च सितयामिन्या सह कान्तायाः पृथगनुगामी समानो धर्मः । अत्रैव पूर्वार्धगतविशेषणद्वयत्यागे स एवानिर्दिष्टः । बिम्बप्रतिबिम्बभावमापन्नो यथा 'तीरे तरुण्या वदनं सहासं—' इत्यादौ प्रागुक्ते ।

यथा वा—

'सपल्लवा किं नु विभाति वल्लरी, सफुल्लपद्मा किमियं नु पद्मिनी ।
समुल्लसत्पाणिपदां स्मिताननामितीक्षमाणैः समलम्भि संशयः ॥'

अत्र पल्लवफुल्लपद्मे पाण्याननयोः प्रतिबिम्बकोट्योः पृथङ् निर्दिष्टे ।

### मर्मप्रकाशः

उपपादितमिदं प्राक् । सौदामन्येति । सह कान्तेत्यत्रान्वेति । वल्लरी लता । पाणिपदां स्मितेति । पादप्रतिबिम्बानिर्देशान्न्यूनतात्र । अत एव पाण्याननयोरित्यग्रिमोक्तिः संगच्छते । वस्तुतस्तु फुल्लपद्मं पाणिवत्पादयोरपि प्रतिबिम्ब इति न दोषः । व्याख्यानं तूपलक्षणत्वेन योज्यमिति बोध्यम् । कोट्यो वल्लरीपद्मिन्योः । बिम्बप्रतिबिम्बभावापन्नस्य निर्दिष्ट-

### मधुसूदनी

सितयामिनी शुक्लपक्षत्रियामा । पल्लवः पाणेः, पद्ममाननस्य, फुल्लं स्मितस्य । प्रतिबिम्बभूतः, पादस्य तदनुक्त्या न्यूनत्वमिह ।

### बालक्रीड़ा

काम की आज्ञा, चापयष्टि; वनदेवता एवं शकुन्तला में क्रमशः अनुल्लंघनीयत्व, नवत्व, वनस्थितत्व तथा मुनिकन्यकात्व धर्म हैं । अपनी सुन्दरता से सभी लोगों को अभिभासित करनेवाली और अत्यन्त क्षीणकाया उस सुन्दरी को देखनेवाली जनता के हृदय में इस प्रकार का संशय हुआ कि यह (कामिनी) बिजली है या शुक्लपक्ष की यामिनी है ।

यहाँ अतिमात्रतनुत्व बिजली के साथ, और शोभाभिराभासितसर्वलोकात्व सितयामिनी के साथ कान्ता का अलग-अलग अनुगामी तथा निर्दिष्ट समान धर्म है । यहाँ पर पूर्वार्ध के दो विशेषणों के त्याग कर देने पर वही अनिर्दिष्ट पृथक् एवं अनुगामी धर्म है । बिम्बप्रतिबिम्बभावमापन्नधर्म जैसे—"तीरे तरुण्या वदनं सहासम्" इत्यादि पहिले कहे हुए पद्य में ।

और भी जैसे—हाथ और पैरों से सुशोभित हँसती हुई उस नायिका को देखनेवाले सभी लोगों ने संशय किया कि यह पल्लवों से युक्त लता है या खिले हुए पद्मों से युक्त पद्मिनी है ।

'इदमुदधेरुदरं वा नयनं वात्रेरुतेश्वरस्य मनः ।
दशरथगृहे तदानीमेवं संशेरते स्म कवयोऽपि ॥'

अत्र तदानीमिति प्रकरणसाहाय्यवशाद्दशरथगृहेण धर्मिणाक्षिप्तस्य तत्कालजातस्य भगवतो रामस्य जलध्युदरादिसंशयकोटित्रयाक्षिप्तः साधारणश्चन्द्रः प्रतिबिम्बः । इमौ च बिम्बप्रतिबिम्बनिर्दिष्टावपि प्रतीयमानौ सादृश्यं प्रयोजयतः । एतेन 'अनुगाम्येव धर्मो लुप्तः संभवति, न तु बिम्बितः' इति वदन्तः परास्ताः । इति दिक् ।

अयं च क्वचिदनाहार्यः, क्वचिदाहार्यः । यत्र हि कविना परनिष्ठः संशयो निबध्यते प्रायशस्तत्रानाहार्यः । यथा 'तीरे तरुण्याः', 'मरकतम-

### मर्मप्रकाशः

स्योदाहरणं दत्त्वानिर्दिष्टस्य तदाह—एवमिति । चन्द्रस्य त्रिधोत्पत्तिः, समुद्रादत्रिनेत्रात्परमेश्वरमनसश्चेति भावः । तदानीं रामोत्पत्तिसमये । तदानीमिति । प्रतिपाद्यप्रकरणेत्यर्थः । इमौ रामचन्द्रौ । अयं च संशयः । परनिष्ठ इति । स्वभिन्ननिष्ठ इत्यर्थः ।

### मधुसूदनी

तदानीमिति रामजन्मसमय एव प्रकरणं प्रस्तावः । दशरथगृहमुपमेयमुपमानमुदधिः, अत्रिः, परमेश्वरः । तत उदरं सारम् । क्षीरसमुद्राच्चन्द्रोत्पत्तिः प्रसिद्धा । अथ नयनसमुत्थं ज्योतिरत्रेरिति अत्रेर्नयनादिति कालिदासः । चन्द्रमा मनसो जात इति श्रुतिश्चेति त्रिधा ।

### बालक्रीड़ा

यहाँ पल्लव और फुल्लपद्म प्रतिविम्वभूत कोटियाँ हाथ और पैरों में पृथक् एवं निर्दिष्ट है । दशरथ के घर में उस समय जब कि राम जी पैदा हुए थे, कवि लोग इस तरह संशय करने लगे कि यह समुद्र का उदर है सार है अथवा अत्रि ऋषि का नयन है अथवा ईश्वर का मन है ।

यहाँ तदानीं इस प्रकरण की सहायता से धर्मी दशरथ के गृह से आक्षिप्त विम्बभूत तत्काल जात भगवान् राम का साधारण चन्द्र है, जिसका संशय की तीनों कोटियाँ जलधि के उदर आदि से आक्षेप किया है । वह चन्द्र राम का प्रतिविम्ब भूत है । और जो शब्द से अनिर्दिष्ट है अतएव प्रतीयमान विम्बभूत राम और प्रतिविम्वभूत चन्द्र ये सादृश्य के प्रयोजक हैं । इससे अनुगामी धर्म ही लुप्त हो सकता है किन्तु विम्वप्रतिविम्वभावापन्न धर्म लुप्त नहीं होता है कहनेवाले परास्त हो गये । यह भी एक दिशा है ।

यह संशय कहीं पर अनाहार्य है और कहीं पर आहार्य है । जहाँ कवि परनिष्ठ संशय का निबन्धन करता है वहाँ प्रायः अनाहार्य संशय रहता है । जैसे "तीरे तरुण्याः"

णिमेदिनीधरो वा' इत्यादिषु प्रागुदाहृतेषु पद्येषु । तत्र भ्रमरादीनां संशयानानां ग्राह्यनिश्चयाभावात् । यत्र च स्वगत एव तत्राहार्यः ।

यथा—

'अलिर्मृगो वा नेत्रं वा यत्र किंचिद्विभासते ।
अरविन्दं मृगाङ्को वा मुखं वेदं मृगीदृशः ॥'

अत्र वक्तुः कवेस्तत्त्वज्ञतया संशयावाहार्यावेव ।

परम्परितोऽपि चायं संभवति—

'विद्वद्दैन्यतमस्त्रिमूर्तिरथवा वैरीन्द्रवंशाटवी-
दावाग्निः किमहो महोज्ज्वलयशःशीतांशुदुग्धाम्बुधिः ।
किं वानङ्गभुजंगदष्टवनिताजीवातुरेवं नृणां
केषामेष नराधिपो न जनयत्यल्पेतराः कल्पनाः ॥'

## मर्मप्रकाशः

क्वचिद्व्यभिचारादाह—प्रायश इति । अनाहार्यत्वमुपपादयति—तत्रेति । 'संशयानानाम्' इति पाठः । भ्रमरादिविशेषणमेतत् । एवेन परनिष्ठत्वव्यवच्छेदः । यत्र मुखरूपवस्तुनि । इदमेवाग्रे इदंपदार्थः । प्रत्यासत्तिन्यायेनाह—कवेरिति । परम्परितोऽपीति । अत्रारोपस्यारोपमात्रोपायत्वेन परम्परितत्वम्, न तु संशयस्य संशयोपायत्वेन । दैन्यादीनां तमस्त्वादिसंदेहाविषयत्वादिति बोध्यम् । त्रिमूर्तिः ऋग्यजुःसामात्मकः सविता । वैरीन्द्रेति । वैरिश्रेष्ठा

## मधुसूदनी

अलिरिति । पूर्वार्धे यत्रेति नेत्रे । उत्तरार्धे यत्रेति मुखे । विद्वदिति । विदुषां दैन्यरूपस्य तमसो निराकरणे त्रिमूर्तिः सूर्यः । वैरीन्द्रस्य वंश एवाटवी तन्नाशको दावाग्निः । महोज्वलं यश एव शीतांशुश्चन्द्रः । तदुत्पादकः क्षीरसमुद्रः । अनंग

## बालक्रीड़ा

मरकतमणिमेदिनीधरो वा इत्यादि प्रागुदाहृत पद्यों में । वहाँ संशयाकुल भ्रमरादि का निश्चय ग्राह्य निश्चय नहीं है । अतः संशय यहाँ अनाहार्य है वास्तविक है । जहाँ तो स्वगत ही संशय है वहाँ वह आहार्य है आरोपित है । जैसे—

यह नायिका का नेत्र है कि अलि है या मृग है । और यह नायिका का मुख है कि अरविन्द है अथवा चन्द्र है । ऐसा कुछ जहाँ मालूम पड़ता है ।

यहाँ वक्ता कवि है वही कविता का निर्माता है अतः तत्त्व का जानकार है । जिससे ये संशय आहार्य ही हैं । यह संशय परम्परित भी हो सकता है अर्थात् एक आरोप का उपाय दूसरा आरोप है न कि एक संशय का उपाय दूसरा संशय है । जैसे = यह राजा क्या विद्वानों के दैन्य रूपी तम का नाशक सूर्य है । अथवा वैरियों के वंश रूपी जंगल को जलानेवाला

अत्राप्याहार्यः।

क्वचित्परनिष्ठोऽपि कविना निबध्यमान आहार्यो भवति।

यथा—

'गगनद्गलितो गभस्तिमानुत वायं शिशिरो विभावसुः।
मुनिरेवमरुन्धतीपतिः सकलज्ञः समशेत राघवे॥'

अत्र मुनेर्वसिष्ठस्य सर्वज्ञत्वेनोपात्तस्य संशय आहार्य एव। यद्यप्यत्र 'मुनीनां च मतिभ्रमः' इत्युक्त्या तस्यानाहार्य एव संशयो वक्तुं शक्यः, तथापि कोटितावच्छेदकयोः शिशिरत्वगगनगलितत्वयोरग्निसूर्यरूपकोटिद्वये

## मर्मप्रकाशः

एव वंशारण्यमित्यर्थः। जीवातुर्जीवनौषधम्। अल्पेतरा बहवः। कल्पनाः संशयाः। स्वगत एवेत्यवधारणमयुक्तमित्याह—क्वचित्परनिष्ठोऽपीति। यद्यपि विद्वद्‌न्येत्युदाहृतोऽपि परनिष्टो भवति तथापि केषामिति सामान्येन निर्देशात्स्वनिष्ठोऽपि भवतीत्यत उदाहरणान्तरमाह—गगनादिति। विभावसुरग्निः। मुनिर्वसिष्टः। समशेत संशयं कृतवान्। अत्र गगनादिपद्ये। चोऽन्यसमुच्चायकः। तस्य वसिष्ठस्य। पुरोर्वातिनि श्रीरामे। वर्तिन्यभेदेनेति चिन्त्यम्।

## मधुसूदनी

एव भुजंगः सर्पः। तेन दष्टाया वनिताया जीवातुर्जीवनम्। एवंभूता अल्पेतराः कल्पनाः। कर्म। केषां नृणाम्। हृदीति शेषः। एष नराधिपो न जनयति अर्थात् अवश्यं जनयति।

तस्येति। मुनेर्वसिष्ठस्य। अग्निरूपकोटौ कोटितावच्छेदकस्य शिशिरत्वस्य। सूर्यरूपकोटौ कोटितावच्छेदकस्य गगनगलितत्वस्य। पुरोवर्तिनि राघवे गगनाद्गलित-

## बालक्रीड़ा

वनाग्नि है। अथवा महोज्वल यशरूपी चन्द्र की जन्मभूमि क्षीरसमुद्र है। अथवा अनंग रूपी सर्प से दँशली गई वनिता का जीवातु है। इस तरह की अनल्प कल्पनाएँ किस मानव के हृदय में यह नराधिप नहीं पैदा कर देता है।

यहाँ संशय आहार्य है। कहीं पर कवि के द्वारा निबध्यमान स्वगत ही नहीं परनिष्ठ भी संशय आहार्य होता है। जैसे—

सर्वज्ञ अरुन्धतीपति वसिष्ठ मुनि राघव के विषय में इस प्रकार संशय करने लगे कि क्या यह आकाश से गिरा हुआ सूर्य है अथवा शिशिर अग्नि है।

यहाँ सर्वज्ञ वसिष्ठ मुनि का संशय आहार्य ही है। यहाँ मुनियों को भी मतिभ्रम होता है इस कथन से वसिष्ठ मुनि का संशय भी अनाहार्य ही यद्यपि कहा जा सकता है तद्यपि अग्निरूप कोटि में कोटितावच्छेदक शिशिरत्व का, सूर्यरूप कोटि में कोटितावच्छेदक गगन-गलितत्व का जब आहार्य ज्ञान ही अवश्य कहना है तब पुरोवर्ति राम में कोटिद्वय प्रकारक

आहार्यबोधस्यैवावश्यवाच्यतया पुरोवर्तिन्यभेदेन कोटिद्वयाभेदांशेऽपि तस्यैव न्याय्यत्वात्। इह च कोट्योर्धर्मिसादृश्यदार्ढ्यायोष्णत्वगगनगतत्वरूपवैधर्म्य-निरासकमविद्यमानमपि गगनगलितत्वं शिशिरत्वं चारोप्यते वक्त्रा। एव-मादयोऽन्येऽपि प्रकाराः सुधीभिः स्वयमुन्नेयाः।

इति रसगङ्गाधरे ससंदेहप्रकरणम्।

## मर्मप्रकाश

तस्यैव आहार्यबोधस्यैव। ससंदेह इति व्यवहारस्त्वौपचारिकः। भ्रान्तिमानितिवत्॥ इति रसगङ्गाधरमर्मप्रकाशे ससंदेहप्रकारणम्॥

## मधुसूदनी

त्वविशिष्टगभस्तिमत्कोटिप्रकारकाभेदांशे, शिशिरत्वविशिष्टविभावसुप्रकारकाभेदांशेऽपि तस्यैव आहार्यबोधस्यैव न्याय्यत्वादुचितत्वात्। इह पद्यवर्णितयोः कोट्योर्गभस्तिमद्विभावस्वोः क्रमशः गगनगलितत्वं शिशिरत्वं च कविना अविद्यमानमपि अवर्त्त-मानमपि आरोप्यते आरोपेण कथ्यते, श्रोत्रा ज्ञायते च। ननु किमर्थमेतत्कथ्यते ज्ञायते च तत्राह—धर्मिणि राघवे उक्तयोः कोट्योः सादृश्यस्य दार्ढ्याय स्थिरीकरणाय। उष्णत्वगगनगतत्वरूपवैधर्म्यस्य निरासकमर्थात्। वास्तवमेतद्धर्मद्वयं ताभ्यामारोपि-ताभ्यां धर्माभ्यां निरस्यते। एवमुक्तप्रकारा विशेषाः सुधीभिः स्वयं विज्ञेयाः।

इति रसगंगाधरे ससन्देहप्रकरणे मधुसूदनी समाप्तिमागच्छत्।

## बालक्रीड़ा

संशय को भी आहार्य ही कहना न्याय्य है। यहाँ दोनों अग्नि एवं सूर्य कोटियों में धर्मी राम के सादृश्य की दृढ़ता के लिए क्रमशः उष्णत्व और गगनगतत्व रूप वैधर्म्य के निरास करनेवाले असत् शिशिरत्व और गगनगलितत्व का आरोप वक्ता करता है। ऐसे-ऐसे और भेदों को सुधी लोग स्वयं समझें। इति रसगंगाधर की वालक्रीड़ा में ससन्देह प्रकरण समाप्त हुआ।

———

## अथ भ्रान्तिमान्—

सदृशे धर्मिणि तादात्म्येन धर्म्यन्तरप्रकारकोऽनाहार्यो निश्चयः सादृश्यप्रयोज्यश्चमत्कारी प्रकृते भ्रान्तिः। सा च पशुपक्ष्यादिगता यस्मिन्वाक्संदर्भेऽनूद्यते स भ्रान्तिमान् ॥

अत्र च भ्रान्तिमात्रमलंकारः। भ्रान्तिमानलंकार इति व्यवहारस्त्वौपचारिकः।

### मर्मप्रकाशः

अथ भ्रान्तिमन्तं लक्षयति—अथेति। अन्यत्र नैवमित्याह—प्रकृत इति। आदिना मनुष्यग्रहणम्। प्रतिज्ञाविरोधाभावायाह—अत्रेति। औपचारिक इति। भ्रान्तिनिष्ठालंकरत्वस्य तद्वत्यारोपात्। भ्रान्तितद्वतोरभेदारोपाद्वेति भावः। ससंदेह इति व्यवहारोऽप्येवमेवेति

### मधुसूदनी

#### अथ भ्रान्तिमान् अलंकारः

"सदृशे" इति सन्देहानन्तरं भ्रान्तिमतो निरूपणप्रसंगः। भ्रान्तिसन्देहयोर यथार्थानुभवत्वसाम्यात्। सदृशे कस्मिंश्चित्समाने धर्मिणि वस्तुनि तादात्म्येन अभेदेन। धर्म्यन्तरमन्यो धर्मी तत्प्रकारकः। तद्गतसादृश्यप्रयोज्यः समानधर्मिगतसादृश्यहेतुकः। चमत्कारी रमणीयः कविप्रतिभोत्थापितः इति यावत् अनाहर्योऽनारोप्यो निश्चयो निर्णयः प्रकृते अलंकारशास्त्रे एव नान्यत्र शास्त्रे भ्रान्तिः। सा च भ्रान्तिः पशुपक्षिहालिकादिगता यस्मिन् वाक्सन्दर्भे भणितिप्रकारे अनूद्यते अनुवाद्य प्रदर्श्यते स वाक्सन्दर्भो भ्रान्तिमान्।

ननु पूर्वं प्रकृते भ्रान्तिः साधिता उत्तरं भ्रान्तिमानिति प्रोच्यते एवमेतत् पूर्वापरविरुद्धमेव। तत्राह-भ्रान्तिमात्रमलंकारः। इहेदं रहस्यम्। भ्रान्तिरन्तः करण

### बालक्रीड़ा

#### अथ भ्रान्तिमान् अलंकार

अव ससन्देह के वाद भ्रान्तिमान् के निरूपण का प्रसंग है। क्योंकि दोनों अयथार्थानुभव रूप हैं। किसी समान धर्मी, जिसमें अभेद सम्वन्ध से अन्यधर्मी प्रकार हो ऐसे समानधर्मी में रहनेवाले सादृश्य के कारण कविप्रतिभोत्थापित अतएव रमणीय अनाहार्य निश्चय को अलंकार शास्त्र में भ्रान्ति कहते हैं। पशुपक्षी एवं हालिकादि की उस भ्रान्ति को जिस वाक्संदर्भ याने भणितिप्रकार में अनुवाद करके दिखाया जाय वह भणितिप्रकार भ्रान्तिमान् है।

प्रश्न=पहले प्रकृत में भ्रान्ति को सिद्ध किया वाद में भ्रान्तिमान् कहते हैं। इस तरह पूर्वापर में विरोध न करके संगति ही करनी चाहिए थी क्यों नहीं की। उत्तर। केवल

तथा चाहुः—

'प्रमात्रन्तरधीर्भ्रान्तिरूपा यस्मिन्ननूद्यते ।
स भ्रान्तिमानिति ख्यातो ऽलंकारे त्वौपचारिकः ॥' इति ।

## मर्मप्रकाशः

प्रागुक्तम् । प्रमेति । कविभिन्नेत्यर्थः । अलंकारे अलंकाराणां मध्ये । आर्षमेकवचनं वा अनुरो-

## मधुसूदनी

धर्मः । सा च विशेषतः पशुपक्षिहालिकादिषु वर्त्तते । तादृशी अपि यदा कवि-प्रतिभया रमणीया सती कस्याप्युपस्कारिका भवेत्तदा अलंकृतिः । अत उक्तं भ्रान्तिः केवला अलंकारः । भ्रान्तिमानलंकार इति व्यवहारस्तु औपचारिको लक्षणिकः भ्रान्तिनिष्ठालंकारत्वस्य भ्रान्तिमति वाक्सन्दर्भे आरोपात् । भ्रान्तिभ्रान्तिमतोरभेदा-रोपाद्वेति नागेशहाशयाः ।

तथाचाहुरिति औपचारिकव्यवहारे सम्मतिं प्राचीनस्य दर्शयति यस्मिन् वाक्सन्दर्भे प्रमात्रन्तरस्य कविभिन्नप्रमातुः भ्रान्तिरूपा धीरनूद्यते स वाक्सन्दर्भो भान्तिमान् इति ख्यातः । अलंकारे तु भ्रान्तिमानिति व्यवहार औपचारिक इति ।

अलंकारे इति तु जात्यभिप्रायेणैकवचनम् अलंकाराणां मध्ये इत्यर्थः । नहि लौकिककटककुण्डलादिवत् अङ्गेष्विव उपमादयः काव्येषु पृथक् स्थिताः सन्तो निवेश्यन्ते किन्तु शब्दार्थानामेव तथाभिधा यथाऽलंकारत्वेन प्रतिभायुरिति भणिति-प्रकारे प्रतिपाद्यप्रतिपादकसम्बन्धेन भ्रान्तेः सद्भावात् भ्रान्तिमानिति नायमौपचारि को व्यवहार इति मादृशाः ।

## बालक्रीड़ा

भ्रान्ति अलंकार है । यहाँ का रहस्य यह है कि भ्रान्ति अन्तःकरण का धर्म है । जो विशेष करके पशु, पक्षी एवं हालिकादि पामर मनुष्य में रहती है । वह भ्रान्ति यदि कविप्रतिभा से रमणीय हुई किसी की उपकारिका हो जाय तब अलंकार है । इसलिए कहा कि केवल भ्रान्ति अलंकार है । भ्रान्तिमान् अलंकार है यह व्यवहार औपचारिक है । लाक्षणिक है क्योंकि भ्रान्ति निष्ठ अलंकारत्व का भ्रान्तिविशिष्ट वाक्सन्दर्भ में आरोप किया है । जैसा कि प्राचीनों ने कहा है—

जिस वाक्सन्दर्भ में कविभिन्नप्रमाता की भ्रान्ति का अनुवाद किया जाय वह वाक्संदर्भ भ्रान्तिमान् इस नाम से ख्यात है अलंकार में यह भ्रान्तिमान् पद औपचारिक है ।

लोक में जैसे कटक कुण्डल वगैरह अलंकार शरीरी के अंगों से पृथक् पेटी में रखे रहते हैं और अवसर पड़ने पर उन पृथक् स्थित अलंकारों को अंगों में पहिन लेते हैं । ऐसी इन लौकिक अलंकारों के तरह की स्थिति शब्दार्थरूप काव्यों में नहीं है । यहाँ तो शब्द एवं अर्थों का ऐसा अभिधान करते ह कि वे शब्द और अर्थ ही अलंकार मालूम पड़ने लगते हैं अतः औपचारिक व्यवहार करने की आवश्यकता नहीं है । यह अलंकार शास्त्रियों का सिद्धान्त है ।

लक्षणे मीलितसामान्यतद्गुणवारणाय धर्मिद्वयग्रहणम्। रूपकवित्तिवारणायानाहार्य इति। कविभिन्नगत इति वा। संशयवारणाय निश्चय इति। इदं रजतमिति रङ्गविशेष्यकबोधवारणाय चमत्कारीति। कविप्रति-

मर्मप्रकाशः

धेनाह(?)—कवीति। ननु तत्रापि चमत्कारोऽस्त्येवात आह—कवीति। उक्तौ नायकं

मधुसूदनी

भ्रान्तेः लक्षणे "धर्मिणि" इत्येवं "धर्म्यन्तरे" त्येवं च धर्मिपदद्वयस्य ग्रहणमुपादानं मीलित-सामान्य-तद्गुणेषु लक्षणप्रवेशो भूदिति प्रवेशस्य वारणाय। तेषु हि मीलिते धर्मिगुणानां, सामान्ये गुणगुणिनोरुभयोः तद्गुणेऽपि गुणयोरेवेति न धर्मिणां भेदाग्रह इति तद्वारणं जातम्। रूपकवित्तौ रूपकज्ञानेऽनतिप्रसक्तये अनाहार्य इति। ननु स्वगता परगता वा सर्वा भ्रान्तिरनाहार्यैव। तत्किमिति निवेश एषः। इत्यत आह कवीति। कविगतो निश्चयस्तु तथा नेति भावः।

बालक्रीड़ा

प्रश्न=भ्रान्ति के लक्षण में धर्मिणि और धर्म्यन्तर के रूप में दो धर्मी पदों का ग्रहण क्यों किया। उत्तर। यदि लक्षण में दो धर्मी पदों का निवेश नहीं करते। तब वस्तु में वस्त्वन्तर प्रकारक अनाहार्य निश्चय ऐसा लक्षण करते। ऐसी अवस्था में वस्तु जैसे धर्मी है वैसे ही धर्म भी है तब मीलित, सामान्य और तद्गुण में भी भ्रान्ति लक्षण की अतिप्रसक्ति हो जाती। क्योंकि उनमें भी अनाहार्य निश्चय होता है अतः यदि धर्मिद्वय का निवेश यहाँ भ्रान्तिलक्षण में कर देते हैं तो उनका वारण हो जाता है। क्योंकि वहाँ धर्मों में न कि धर्मी में वह ज्ञान होता है। जैसे मीलित में धर्मी के गुणों में, सामान्य में गुण एवं गुणी में न कि केवल गुणियों में, तद्गुण में भी गुणों में ही वह ज्ञान होता है अतः स्वयं वारण हो गया।

रूपक ज्ञान में अतिव्याप्तिवारण करने के लिए निश्चय को अनाहार्य कहा। क्योंकि रूपक में वह निश्चय आहार्य होता है।

प्रश्न=भ्रान्ति तो स्वगत हो या परगत सभी अनाहार्य ही होती हैं। तब लक्षणवाक्य में अनाहार्य पद के निवेश की क्या आवश्यकता है। क्योंकि विशेषण सार्थक वहाँ ही होता है जहाँ कुछ अंश में संभव हो और कुछ अंश में व्यभिचार अभाव हो और कवि का याने वर्णन करने वाले का ज्ञान तो भ्रान्ति स्वरूप होता ही नहीं अतः आहार्य या अनाहार्य की गवेषणा करने का प्रसंग ही नहीं है। उत्तर। यहां अनाहार्य निश्चय कवि से भिन्न में अपेक्षित है अतः कवि भिन्न गतत्व विशेषण का निवेश करना आवश्यक है। संशय में अतिव्याप्ति का वारण करने के लिए निश्चय पद का निवेश किया है। क्योंकि संशय में भी अनाहार्य ज्ञान होता है। जैसे रंग में या शुक्ति में यह रजत है ऐसी प्रतीति होती है वह प्रतीति भी सादृश्य प्रयोज्य अनाहार्य ही होती है उसमें भ्रान्ति के लक्षण की अतिव्याप्ति न

भानिर्वर्तित इत्यर्थः। रङ्गे रजतमिति बुद्धेर्लौकिकतया न कविप्रतिभानिर्वर्तितत्वम्।

'अकरुणहृदय ! प्रियतम ! मुञ्चामि त्वामितः परं नाहम्।
इत्यालपति कराम्बुजमादायालीजनस्य विकला सा ॥'

इत्यत्र नायिकासंदेशहरस्योक्तौ व्यज्यमानोन्मादप्रयोज्यस्य अनाहार्यनिश्चयस्य वारणाय सादृश्यप्रयोज्य इति। न चात्रोन्मादस्य प्राधान्यात्सकला-

### मर्मप्रकाशः

प्रतीति शेषः। उन्मादस्येति। 'विप्रलम्भमहापदादिजन्मा अन्यस्मिन्नन्यावभास उन्मादः'

### मधुसूदनी

अकरुणेति। अत्र आलीजनं पतिं मनुते इति भ्रान्तिः। तत्र हेतुरुन्मादः। स च व्यंग्यः।=उन्मादप्रयोज्या सा न ग्राह्येत्यत आह-सादृश्यप्रयोज्यत्वमिति।

कामशोक भयोन्माद चौरस्वप्नाद्युपद्रुताः।
अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव ॥

इत्याद्यभिहितावान्तरनिमितोत्थापिता भ्रान्तिर्न ग्राह्येति बोधनाय सादृश्येति विन्यासः। व्यज्यमानोन्मादप्रयोज्यस्य अनाहार्यनिश्चयस्येति पाठः। अतश्च सादृश्य प्रयोज्यैव भ्रान्तिरलंकार इति रहस्यम्। सादृश्यमूलत्वादत्र साधारणधर्मस्य

### बालक्रीड़ा

हो जाय इसलिए चमत्कारी पद का निवेश किया है। यहाँ चमत्कारी पद का अर्थ है कविप्रतिभानिर्वर्तित। क्योंकि रंग में या शक्ति में यह रजत है ऐसी बुद्धि लौकिक है अतः कविप्रतिभानिर्वर्तित नही है।

कोई विरहिणी पगली जिसको अपने पराये की समझ नहीं रह गई है विकल है वह किसी सखी के हाथ को पकड़कर यह कहती है कि हे दया से रहित हृदय वाले प्रियतम ? आज मैंने तुमको पकड़ लिया है इसके बाद मैं तुमको नहीं छोड़ूंगी।

यह नायिका के सन्देहवाहक की उक्ति है। इसमें सखी को पति समझन। रूप नायिका की भ्रान्ति बतलाई गई है। वह भ्रान्ति सादृश्य के कारण नहीं हुई किन्तु उन्माद से हुई है। क्योंकि यह स्थिति उन्माद की द्योतक है अतः उन्मादप्रयोज्य अनाहार्य निश्चय रूप भ्रान्ति के वारण करने के लिए लक्षण में सादृश्यप्रयोज्य पदका निवेश किया है। यहाँ उन्मादप्रयोज्य भ्रान्ति का ही वारण नहीं किया गया है किन्तु सादृश्येतर काम, क्रोध, शोक, चौर्य एवं स्वप्नादि भावप्रयोज्य सभी भ्रान्तियों का वारण किया गया है। क्योंकि सिद्धान्त है कि सादृश्य प्रयोज्य ही भ्रान्ति अलंकार है अन्यप्रयोज्य नहीं।

प्रश्न=उन्मादप्रयोज्य अनाहार्य निश्चय के वारण करने के लिए सादृश्यप्रयोज्यत्व विशेषण के निवेश करने की कोई आवश्यकता नहीं है क्योंकि उन्माद तो प्रकृत में प्रधान

लंकारसाधारणेनोपस्कारकत्वविशेषणेनैव वारणमिति वाच्यम्। पार्यन्तिकविप्रलम्भोपस्कारकत्वात्। यद्वा संदेशहरात्संदेशं श्रुतवतो नायकस्य स्वमित्रं प्रति यदेदं वाक्यं 'अकरुणहृदय–' इत्यादि, तदास्मिन्नेव पद्ये सेति पदव्यङ्ग्यायाः

### मर्मप्रकाशः

इति मतेनेदम्। नन्वत्र विप्रलम्भजन्यत्वेनोन्मादस्य कथं तदुपस्कारकत्वमत आह—यद्वेति।

### मधुसूदनी

प्रकारास्त्रयः। ते च अनुगामी, शुद्धसामान्यरूपः, बिम्वप्रतिबिम्वभावमापन्नः। इति। ननु उन्मादो ध्वनिः भ्रान्तिस्तस्यालंकृतिरुपस्कारिकेति स्वत एवोऽन्मादस्य निराकरणमत आह—तस्यापीति।

ननु पार्यन्तिक विप्रलम्भोपस्कारकत्वादिति कथनमलंकारतत्त्वानभिज्ञऽत्वमेव सूचयति। आन्तरालिकव्यंग्यमादायैव हि ध्वनिगुणीभूतव्यंग्यव्यवहारो न तु पार्यन्तिकव्यंग्यमादायेति राद्धान्तात्। अतः पक्षान्तरमाह=यद्वेति। अत्र प्रसंगे विप्रलम्भजन्यत्वेनोन्मादस्य कथं तदुपस्कारकत्वमिति नागेशस्य कोक्तिः। गुणीभूत व्यंग्ये वाच्यजन्यत्वेऽपि किं वाच्योपस्कारकत्वं नास्ति। अर्थात् कार्यमपि करणस्यो परस्कारकं भवतीत्याशयः। ननु संदेशोऽयमिति चेत्, उन्मादः प्रधानम्। मित्रयो र्वार्तालाप इति चेदुन्मादो गुणभूत इति उन्मादप्रयोज्यभ्रान्तेर्वारणाय सादृश्यप्रयोज्यत्वनिवेश आवश्यक। इति बोधयितुं पक्षान्तरं यद्वेत्यनेनाह।

### बालक्रीड़ा

है। और यदि प्रधान, प्रयोजकत्व के रूप में किसी का अंग बना तो उसका प्रधानत्व ही गायब हो जायगा। फलतः सकल अलंकारों में साधारण रूप से प्राप्त उपस्कारकत्व विशेषण से ही उन्माद का वारण हो जायगा। अतः सादृश्य प्रयोज्यत्व विशेषण के निवेश करने की क्या आवश्यकता है। उत्तर। वह प्रधान रूप से व्यंग्य होनेवाला उन्माद भी पार्यन्तिक व्यंग्य विप्रलम्भ का पोषण करता है उपस्कारक है अतः अंग बन जाता है। इस पर कहते कि सिद्धान्त विरोध है। क्योंकि वाच्य एवं पार्यन्तिक व्यंग्य के बीच के व्यंग्य को लेकर ही ध्वनि और गुणीभूत व्यंग्य की व्यवस्था आचार्यों ने की है। जब कि पार्यन्तिक व्यंग्योपस्कारत्व सर्वत्र वाच्य एवं व्यंग्यो में स्वतः प्राप्त था। इस पर पक्षान्तर का उपन्यास कहते हैं "यद्वा"।

संदेशवाहक से सन्देश को सुनकर नायक अपने मित्र से जब इस अकरुण हृदय ? प्रियतम ? वाक्य को कहता है तब इसी वाक्य में "सा" इस पद से व्यंग्य होने वाली स्मृति का उपस्कारक उन्माद अंग है। फलतः इस अंगभूत उन्माद से प्रयोज्य भ्रान्ति में लक्षण की अतिव्याप्ति हो जायगी। उसके वारण करने के लिए सादृश्य प्रयोज्य विशेषण की आवश्यकता है।

स्मृतेरुपस्कारके उन्मादे तथाप्यतिप्रसङ्गापत्तेः सादृश्यप्रयोज्यत्वमावश्यकम् । लक्षणे चात्रैकत्वं विवक्षितम् । अन्यथा वक्ष्यमाणानेकग्रहीतृकानेकप्रकारकैक-विशेष्यकभ्रान्तिसमुदायात्मन्युल्लेखेऽतिप्रसङ्गापत्तेः । अत एवैकवचनमपि सार्थकम् ।

उदाहरणम्—

'कनकद्रवकान्तिकान्तया मिलितं राममुदीक्ष्य कान्तया ।
चपलायुतवारिदभ्रमान्ननृते चातकपोतकैर्वने ॥'

अत्र चातकगतहर्षोपस्कारकतया तद्गता भ्रान्तिरलंकारः । अत्रैव यदि 'परिफुल्लपतत्रपल्लवैर्मुमुदे चातकपोतकैर्वने' इत्युत्तरार्धं निर्मीयते तदायमेव भ्रान्तिध्वनिः ।

### मधुसूदनी

"सदृशे धर्मिणि" इत्यत्र लक्षणे धर्मिणि इत्येकवचनं ज्ञानपुरः सरं विनिक्षिप्तमिति बोधयितुमाह—एकत्वं विवक्षितमिति । विवक्षायाः फलमुद्दिशति—अन्यथेति एकवचनाविवक्षायाम् । अनेकैर्गृहीतृभिरनेकधर्मिप्रकारिकायामेक विशेष्यिकायां समुदितभ्रान्तावतिव्याप्तिः स्यात् । उल्लेखो भ्रान्तिसमुदाय इत्य भिमानः ।

कान्तयेति । तया मनोहरया कान्तया नायिकया । अत्र भ्रमादित्युक्तौ हर्षो व्यंग्यः । भ्रान्तिरलंकारः । मुमुदे इत्युक्तौ हर्षो वाच्यः । भ्रान्तिर्ध्वनिः ।

### बालक्रीड़ा

भ्रान्ति के लक्षण में धर्मिणि इत्यादि पदों में जो एकवचन का उपन्यास किया है वह ज्ञानपुरः सर किया गया है । अतः वह विवक्षित है । अन्यथा यदि एकवचनान्त पदों को साभिप्राय नहीं मानेंगे तो वक्ष्यमाण जहाँ अनेक ग्रहीता हैं और अनेक प्रकार हैं और एक विशेष्य है उस भ्रान्ति समुदाय स्वरूप उल्लेख में लक्षण की अतिप्रसक्ति हो जायगी । अतः एकवचन भी सार्थक है । अब भ्रान्ति का उदाहरण देते हैं । पिघले हुए सुवर्ण की कान्ति से भी मनोहर कान्ता से संगत राम को वन में देखकर विजली से युक्त मेघ के भ्रम से चातकों के वच्चे नाचने लगे ।

यहाँ चातकगत व्यज्यमान हर्ष की उपस्कारिका चातकगत भ्रान्ति है अतः अलंकार है । यहीं पर यदि "परिफुल्लपतत्रपल्लवैर्मुमुदे चातकपोतकैर्वने" इस उत्तरार्ध का निर्माण कर दें तव यह भ्रान्तिध्वनि का उदाहरण हो जायगा ।

परिफुल्ल है विकसित हैं पतत्र पक्षरूपी पल्लव पत्ते जिनके ऐसे चातकों के वच्चे वन में हृष्ट हो गये । यहाँ पांखों में पल्लवत्व का आरोप निःसार है । कोई फल नहीं है ।

यच्चाप्पय्यदीक्षितैर्लक्षणमुक्तम्—

'कविसंमतसादृश्याद्विषये पिहितात्मनि ।
आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः ॥' इति ।

'तत्र कविसंमतसादृश्यप्रयोज्ये विषये आरोप्यमाणानुभवो यत्र वाक्संदर्भे स भ्रान्तिमान्' इति भ्रान्तिमतो लक्षणं विधाय रूपकव्यावृत्त्यर्थं पिहितात्मनीत्युच्यते । न चैतद्युक्तम् । नहि रूपकवाक्ये आरोप्यमाणस्यानुभवो वर्ण्यते, किं तु तस्माज्जायते । न चात्रानुभवान्तं भ्रान्तेर्लक्षणमग्रिमं च भ्रान्तिमतः ।

### मर्मप्रकाशः

अत एव निश्चय इत्यत्रैकत्वविवक्षणादेव । उच्यत इति । अयं भावः—तद्विशेषणेनारोप्यमाणानुभवस्य स्वारसिकस्य कविप्रतिभया कल्पनं विवक्षितम् । तस्यैव विषयपिधानसामर्थ्यादिति भावः । अग्रिमं चेति । यत्रेत्याद्युक्तमित्यर्थः । तत्रेति । तद्वाक्यजानुभवस्य तत्रापि

### मधुसूदनी

कवीति । कविसम्मतसादृश्यात् पिहितात्मनि पिहितस्वरूपे विषये उपमेये । "पिहितात्मनि" इहायं भावः । रूपके गौणी लक्षणा प्रयोजिका । सा च प्रयोक्तृप्रतिपत्त्रोः सादृश्यज्ञानमूला । अत एव तत्र विषयविषयिणोः भेदप्रत्ययपुरःसरमारोपः । भ्रान्तौ च तयोर्भेदप्रत्ययः पशोः पक्षिणो वा हालिकस्य वा नास्ति । इति विषयः पिहितात्मा भवति । हालिकादीनामेव आरोप्यमाणस्यानुभवो वर्ण्यते । किन्तु एवं पशुपक्षि हालिकादीनां तथाज्ञानाभावसमये कविसम्मतसादृश्यस्य क उपयोगः । ते कविं सादृश्यं वा किं जानीयुः । रमणीयत्वं तु अलंकारतायै सहृदयानां भावुकानां कृते अपेक्षितम् । अन्यथा इदं रजतमित्यत्रापि चाकचिक्येन सर्वसम्मतेन धर्मेण सादृश्यं वर्त्तत एव भवत्वलंकारः । किन्तु नायं सर्वसम्मतः पन्थाः कविप्रतिभोत्थापितत्वेन भ्रान्तौ चमत्कारित्वम् । आरोप्यमाणस्यानुभवो यत्र वाक्सन्दर्भे स भ्रान्तिमान् मतः । इत्यन्वयः ।

अग्रिमं चेति । भ्रान्तिलक्षणोपात्ते विषये पिहितात्मनीति विशेषणं रूपकेऽति

### बालक्रीड़ा

जो तो अप्पय्य दीक्षित जी ने लक्षण कहा है कि कविसम्मत सादृश्य के कारण जिसका स्वरूप मुखत्वादि पिहित हो गया अर्थात् जिसमें भेद प्रत्यय नहीं रहा उस विपय में जहाँ आरोप्यमाण का अनुभव हो वह वाक्सन्दर्भ भ्रान्तिमान् है ।

इस प्रकार भ्रान्तिमान् का लक्षण बनाकर रूपक की व्यावृत्ति के लिए पिहितात्मा कहा है वह ठीक नहीं है । क्योंकि रूपक वाक्य में आरोप्यमाण के अनुभव का वर्णन किया जाता है न कि अनुभव उस वाक्य से पैदा होता है । अगर कहें कि अनुभव पर्यन्त भ्रान्ति का लक्षण है और आगे वाला "यत्र सः" यह भ्रान्तिमान् का है । ऐसी अवस्था में भ्रान्ति

तत्र भ्रान्तिलक्षणे रूपकेऽतिव्याप्तेर्वारणाय विषये पिहितात्मनीति विशेषणमिति वाच्यम्। अनुभवत्वघटितस्य भ्रान्तिलक्षणस्यानुभूयमानाभेदात्मके रूपके कथमप्यप्रवृत्तेः। यदि च रूपकपदं रूपकबुद्धिपरमिति ग्रन्थसामञ्जस्यं विधीयते, तदापि विषयतावच्छेदकानवगाहिनि 'मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेष वा तमालः' इति संशयेऽतिप्रसङ्गात्, कमलमिति चञ्चरीकाश्चन्द्र इति

## मर्मप्रकाशः

सत्त्वादिति भावः। ननु नाम न संशयेऽतिप्रसङ्गः। विषयस्यैवेति प्रतिपादनादत आह—कमल-

## मधुसूदनी

व्याप्तेर्वारणायेति अन्वयः। रूपके तु उपमेयतावच्छेदकपुरस्कारेण उपमेयस्य निर्देशः। अतः स पिहितात्मा नास्ति। कथमपीति। ज्ञानविषययोः क्रमेण हेतुमत्वात् हेतुत्वादभेदः। तेन भ्रान्तिज्ञानवृत्तिधर्मस्य अनुभूयमानविषये रूपके साक्षादसत्त्वादप्रवृत्तिरित्यर्थः। अनुभवो ज्ञानम् तदात्मिका भ्रान्तिः। अनुभूयमानो विषयः। रूपकलक्षणे रूपकपदस्य रूपकबुद्धिपरत्वात् ज्ञानलक्षणात्मक ग्रन्थस्यापि ज्ञानपरत्वात् ग्रन्थयोः सामञ्जस्यं समन्वयो विधीयते। तदापि ग्रन्थ सामञ्जस्य विधानेऽपि विषयतावच्छेदकस्य विषयनिष्ठधर्मस्य मुखत्वादेरवगाहनं-यथा मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेष वा तमालः" इत्यत्र नहि भवति। विषय उपमेय रघुपतिः। विषयतावच्छेदको धर्मः रघुपतित्वम्। तत्र संशयज्ञाने रघुपतित्वं न गोचरीभवति। एवं च यथा भ्रान्तौ विषयस्य आत्मा स्वरूपं विषयतावच्छेदकं पिहितं तथा संशयेऽपि विषयतावच्छेदकस्य अनवगाहः। तेन तल्लक्षणं संशयेऽतिऽसक्तम्। तदेतदुक्तं संशयेऽतिप्रसंगादिति।

## बालक्रीड़ा

के लक्षण की रूपक में अतिव्याप्ति के वारण करने के लिए विषय में पिहितात्मत्व विशेषण का विन्यास किया है वह भी नहीं कहना चाहिए। क्योंकि अनुभव घटित भ्रान्ति के लक्षण की अनुभूयमान पदार्थों में अभेद वाले रूपक में किसी भी प्रकार प्रवृत्ति नहीं होगी।

अगर कहें कि रूपकव्यावृत्त्यर्थ में रूपक पद का अर्थ है रूपकज्ञान। अतः दोनों के ज्ञान स्वरूप हो जाने से ग्रन्थ का समन्वय हो जायगा। तब भी विषयतावच्छेदक मुखत्वादि का जहाँ अवगाहन प्रत्यय नहीं होता है ऐसे "मरकतमणिमेदिनीघरो वा तरुणतरस्तरुरेष वा तमालः" इस संशय में और यह कमल है ऐसा समझकर भौंरे और चन्द्र समझकर चकोर तुम्हारे मुख की तरफ दौड़ते हैं इस प्रकार के भ्रान्तिसमुदाय स्वरूप उल्लेख में भी अतिव्याप्ति हो जायगी। यदि कहें कि यह उल्लेख भ्रान्ति से संकीर्ण है तो इससे क्या उल्लेखांश में लक्षण की अतिव्याप्ति दोष नहीं होगा। दूध बेचने वाले ग्वाले लोग जलमिश्रित दूध को ही बेचते हैं। अतः शुद्ध दुग्ध कहीं नहीं मिलता है। तो क्या दुग्धभाग एवं जलभाग के

चकोरास्त्वन्मुखमनुधावन्ति' इति भ्रान्तिसमुदायात्मन्युल्लेखेऽतिव्याप्तेश्च। अत्र भ्रान्त्या संकीर्ण उल्लेख इति चेत्, नह्येतावतोल्लेखांशातिव्याप्तिर्न दोषः। नहि दुग्धभागजलभागानां व्यामिश्रतास्तीति दुग्धलक्षणं जलांशातिव्याप्तिकं कर्तुं युक्तम्। यच्चापि भिन्नकर्तृकोत्तरोत्तरभ्रान्तावुदाहृतम्—

'शिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकै-
स्तत्त्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः।
तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकै-
रित्थं चोलेन्द्रसिंह ! त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ॥' इति।

### मर्मप्रकाश

मिति। अत एव वक्ष्यति भ्रान्त्या संकीर्ण इति। अतिव्याप्तेश्चेति। उल्लेखत्वभ्रान्तित्वयोरत्र संकीर्णत्वम्। बाधकाभावात्। भूतत्वमूर्तत्वयोरिव। नरैर्वरगतिप्रदेत्यत्रोल्लेखत्वस्य, कनक द्रवेत्यत्र भ्रान्तित्वस्य सावकाशत्वादिति कश्चित्। वनितेति वदन्त्येतां लोका इति त्वदुदाहृतापह्नुतिसंकीर्णोल्लेखे उपमेयताच्छेदकनिषेधसामानाधिकरण्येनोत्थाप्यापह्नुतिलक्षणातिव्या-

### मधुसूदनी

एतावता संकीर्णतायाः सद्भावेन भ्रान्तिलक्षणस्य उल्लेखांशेऽतिव्याप्तिर्नास्ति इति वक्तुं न शक्यते। गोपाला दुग्धविक्रेतारो जलमिश्रितमेव दुग्धं विक्रीणन्ति। अतः शुद्धं दुग्धं कुत्रापि न मिलति। तेन किं जलभागसम्पृक्तमेव दुग्धं दुग्धस्य-लक्षणम्। तदेतदुक्तं नहि दुग्धलक्षणं जलांशातिव्याप्तिकं कर्त्तुं युक्तमिति।

शिञ्जानैरिति। शिञ्जानैः गुञ्जद्भिः चंचरीकैः भ्रमरैः स्तनकलशयुगं मंजरीति बुद्ध्या चुम्बितम्। तेषां भ्रमराणां त्रासाय तेभ्यस्त्रासं भयं दातुं ये पाणीनामुल्लासा कम्पनानि तद्भिन्ना लीलाः क्रिया येषु ते पाणयः कीरैः। किसलयमनसा पल्लवानि इति धिया दष्टा दंशनकर्मीकृताः। तेषां कीराणां लोपाय दूरीकरणाय आलपन्त्यः क्रोशन्त्यो नायिकाः पिकवन्निनदकारित्वात् पिक्य इमा इति ज्ञानेन काकलोकैस्ताडिताः। इत्थं भय हेतुत्वात् हे चोलेन्द्र सिंह ? त्वदरिमृगदृशां कृते अरण्यमपि शरण्यं नाभवत्।

### बालक्रीड़ा

मिश्रण के बिना दूध के नहीं मिलने से दूध का लक्षण जलांश की अतिव्याप्ति से युक्त ही करना चाहिए। ऐसा करना कभी युक्त नहीं है।

और भी जो उत्तरोत्तर भिन्न-भिन्न व्यक्तियों की भ्रान्ति का उपनिवन्धन जहाँ है ऐसा उदाहरण लिखा है कि। गुंजन करते हुए भौंरों ने जिनके स्तनकलशयुगल को मञ्जरी समझ कर चूम लिया। और भौंरों को डराने के लिए हिलाए हुए जिनके हाथों को शुकों ने किसलय समझकर दंश लिया काट लिया। और शुकों को भगाने के लिए चिल्लाती हुई जिनको

तत्र विचार्यते—स्तनकलशयुगे हि न तावन्मञ्जरीसादृश्यं कविसमयसिद्धम्, येन तन्मूला चञ्चरीकाणां भ्रान्तिरुपनिबध्येत। दोषान्तरमूला तु सा नालंकार इत्यनुपदमेव निरूपितम्। अपि च धर्मिणि कलशरूपकानुवादेन मञ्जरीभ्रान्तिरूपमलंकारान्तरमुपनिबध्यमानमुद्वेजकमेव सहृदयानाम्। नहि सादृश्यमूलैकालंकारावच्छिन्ने सादृश्यमूलमलंकारान्तरं शोभते। यथा

### मर्मप्रकाशः

प्तिस्तवाप्यस्ति। एवं तत्तदलंकारसंकीर्णे तत्तदलंकारलक्षणस्य सा दुर्वारेति चिन्त्यमित्यपरे। तावदादौ। उपेति। वर्ण्येतेत्यर्थः। ननु यथाकथंचित्सादृश्यमप्यस्तीत्यत आह—अपि चेति।

### मधुसूदनी

येनेति। कविसमयसिद्धसादृश्येन हेतुना। नहि सादृश्येति। परकृतिं समालोचयन्तो भवन्तः स्वकृतिमपि निभालयन्तु।

अंकायमानमलिके मृगनाभिपंकं
पकेरुहाक्षि ? वदनं तव वीक्ष्य बिभ्रत्।

### बालक्रीड़ा

पिकसदृश निनद क्रन्दन २ करने के कारण पिकी समझकर कौओं ने ताड़ना दी। इस तरह हे चौलेन्द्र सिंह तुम्हारे शत्रुओं की उन औरतों को जंगल में भी शरण रक्षक नहीं मिले। अथवा शरण याने रहने के लिए आवास नहीं मिले।

शरणं गृहरक्षित्रोः इस कोष के अनुसार शरण का अर्थ है घर और रक्षिता। उस पर विचार करते हैं कि स्तनकलशयुगल में मंजरी का सादृश्य कवि समय सिद्ध नहीं है। यदि सिद्ध होता तो उस सादृश्य के कारण चंचरीकों की भ्रान्ति का उपनिवन्धन किया जाता। और दोषान्तर प्रयोज्य भ्रान्ति अलंकार नहीं है इस बात को अनुपद में कह चुके हैं।

और भी धर्मी स्तन में कलशरूपक को उद्देश्य करके मंजरीभ्रान्ति रूप अन्य अलंकार का उपनिवन्धन भी सहृदयों को उद्विग्न कर देता है। क्योंकि सादृश्यमूलक एक अलंकार से युक्त धर्मी में दूसरा सादृश्यमूलक अलंकार सुशोभित नहीं होता है। जैसे तुम्हारे मुख कमल को चन्द्रमा की तरह समझ रहे हैं। यहां कमल के सदृश मुख को कह कर फिर चन्द्र की तरह कहना अच्छा नही लगता है। इस तत्त्व को पहिले ही कह चुके हैं। इसके विपरीत कलश के रूपक से मंजरी के सादृश्य का तिरस्कार भी हो गया है।

राजाओं के पण्डित अपनी कृतियों को भूल जाते हैं और दूसरों की कृतियों पर आक्षेप और वह भी निष्कारण करते हैं। जैसे—स्तन में सादृश्य मूलक कलश रूपक को करके फिर मंजरी की भ्रान्ति की है, वैसे ही

अंकायमानमलिके मृगनाभिपंकं
पंकेरुहाक्षि ? वदनं तव वीक्ष्य विभ्रत्।

यहाँ वदन में चन्द्र विषयक सादृश्यमूलक भ्रान्ति को पुष्ट करने के लिए कस्तूरी के

'मुखकमलं तव चन्द्रवत्प्रतीमः' इति प्रागेव निवेदनात्। प्रत्युत कलश-रूपकेण मञ्जरीसादृश्यतिरस्काराच्च। 'तत्त्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः' इत्यत्र विधेयाविमर्शाद् विधेयान्तरमाकाङ्क्षितम्। कीरैर्दष्टा इति तु भाव्यम्। जाता इत्यध्याहारेऽपि विवक्षितस्याविधेयत्वमविवक्षितस्य च विधेयत्वं प्रसज्येत। एवं 'तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः

### मर्मप्रकाशः

धर्मिणि स्तनरूपे। मुखकमलमिति रूपकम्। अभ्युपेत्याह—प्रत्युतेति। एवमाद्ये दोषमुक्त्वा द्वितीये दोषमाह—तत्त्रासोल्लेति। भ्रमरभयजननजातचेष्टा इत्यर्थः। विधेयाविमर्शा-दिति। विधेयस्याकथनादित्यर्थः। उद्देश्यकोटिप्रविष्टं सर्वमिति भावः। पाणीनुद्दिश्य विशिष्टस्य कीरकर्तृकदष्टत्वस्य विधेयत्वे को दोष इति चिन्त्यमिदम्। विवेति। दष्टत्वस्ये-त्यर्थः। तृतीये तमाह—एवमिति। तल्लोपाय कीरदूरीकरणाय। तावदादौ। दोषमूलः

### मधुसूदनी

उपमानवाचकांकशब्दात् "उपमानादाचारे क्यङिति" क्यङि लटि शानच् प्रत्यये अंकायमानमिति रूपं निष्पन्नम्।

अत्र वदने आरोप्यमाणचन्द्रको भ्रान्तिमानलंकारस्तस्योपपादकः सादृश्यमूलः अलिकस्थमृगनाभिपंकविषयकोऽकाभेदारोपः। तत्रैव अंकायमानमिति सादृश्यरूपो-पमेति सादृश्यमूलैऽकालंकारावच्छिन्ने सादृश्यरूपमलंकारान्तरं वर्त्तते।

विधेयेति। कीरकर्त्तृकदंशनं पाणीनुद्दिश्य विधेयत्वेन विवक्षितं किन्तु कीरदष्टा इति समस्तपदस्यार्थः पाणिपु विशेषणं वर्त्तते। तेन कीरदष्टाः पाणय इत्यन्वये उक्तस्य विक्षितस्य विधेस्य विमर्शो न कृतः। प्रत्युत विधेयान्तरस्यापेक्षा जागर्ति। महदे-वेदमन्याय्यं यद्विवक्षितस्य प्रतीतिर्न, अविवक्षितस्य सा स्यादिति।

मन्मतेतु पिकनिनदशब्दस्य वाच्यार्थः पिकस्य निनदः कुहूः। तेन

### बालक्रीड़ा

तिलक में अंकाभेद रूपक किया, फिर उसी तिलक में अंकसदृश कह कर उपमा करी है। जैसा कि आप का लेख है अत्र प्राधान्येन व्यंग्ये आरोप्यमाणचन्द्रके इत्यादि। यहाँ अंकायमान में उपमानवाचक अंक शब्द से क्यङ प्रत्यय और लट के स्थान में शानच् हुआ है।

तत्त्रासोल्लासे में कीरदष्टा यह समस्त पद पाणि का विशेषण बन गया है अतः कीरदष्टा पाणयः ऐसा अन्वय हुआ। इसके अनुसार विधेयाविमर्श दोष हो जाता है। क्योंकि पाणि को उद्देश्य करके कीरकर्त्तृकदंशन को विधेय करना विवक्षित है। किन्तु कीर पद का दष्ट पद के साथ समास कर देने से विशेषण बनकर उक्त दोष का हेतु हो गया। अतः यदि वहाँ जाता का आक्षेप करते हैं तब जो वस्तुतः विधेय होना चाहिए वह तो गायब हो गया और अनपेक्षित अविवक्षित विधेय हो जाता है यह तो अनर्थ ही होगा। इसलिए असमस्त कीरै-र्दष्टा ऐसा प्रयोग होना चाहिए। इसी प्रकार तल्लोपाय में पिकों के शब्द कौओं के द्वारा

काकलोकैः' इत्यत्र न तावत्पिकनिनदास्ताडनयोग्याः काकानाम्, येन तद्धिया आलपन्त्यस्तैस्ताडयेरन्। नापि पिकनिनदभ्रम आलपन्तीषु संभवति। संभवन् वा न सादृश्यमूलः। पिकनिकरधियेति तु भाव्यम्। अथ तदालापेषु पिकनिनदबुद्धेरपि तासु पिकबुद्ध्युत्पादनद्वारा संभवत्येव ताडनोपयोग इति प्रयोज्यत्वार्थकतृतीयया पिकनिनदधीप्रयोज्यकाककर्तृकताडनकर्मत्वमालपन्तीनां सुप्रतिपादमेवेति चेत्, नैवम्। तथाप्रतीतेरसिद्धेः। 'चोरबुद्ध्या हतः साधुः' इत्यादौ चोरबुद्धिहननयोः सामानाधिकरण्येन हेतुहेतुमद्भावगम-

मर्मप्रकाशः

संभवतीत्याह---संभवन्वेति।

मधुसूदनी

कुहूपिकनिनदयोः पर्यायत्वम्। यथा "मनुष्यवाचा सिंहो निजगाद" इति रघौ मनुष्यपदस्य मनुष्यव्यवहृतायां वाचि लक्षणा। एवं च मनुष्यव्यवहृतभाषया सिंहो निजगादेत्यर्थः। "ब्राह्मी तु भारती भाषा गीर्वाक् वाणी सरस्वती" इत्यमरः। तथैव प्रकृतेऽपि पिकनिनदपदस्य पिकनिनदकारिण्यां पिक्यां लक्षणा। एवं च आलपन्त्यस्ताः पिकीबुद्ध्या ताडिता इत्यर्थः संगतिश्च। सत्यवसरे लक्षणाद्याद्रियते। श्रीमतां पण्डितराजानामालोचन्तु सम्यगेव। पिकनिकरेति पाठस्तु साधीयानेव। इति।

अथ तदेति। अथेति पक्षान्तरे। तदालापाः तासां नायिकानामालास्तेषु

बालक्रीड़ा

ताडन के योग्य नहीं है। यदि वे ताडन के योग्य होते तो उनकी बुद्धि से आलाप करती हुई कौओं के द्वारा पीटी जाती। और आलाप करने वालियों में पिकी का भ्रम होना तो जायज है किन्तु पिक के शब्द का भ्रम अलिपन्ती में संभव नहीं है। अथवा तुष्यतु न्याय से संभव भी हो तो वह सादृश्यमूलक नहीं है। अतः पिकनिकरधिया पाठ होना चाहिए। यदि कहें कि आलापों में कोकिल के आलाप की वुद्धि हुई उससे फिर उनमें पिक वुद्धि उत्पन्न हो गई। उनके द्वारा उनमें ताडन का उपयोग हो सकता है। इस तरह पिकनिनदधिया पद में रहने वाली प्रयोज्यत्वार्थक तृतीया से पिकनिनद बुद्धि से प्रयोज्य काककर्तृक ताडन कर्मत्व आलाप करने वालियों में सिद्ध हो ही सकता है कहा ही जा सकता है। तो वह भी ठीक नहीं है। क्योंकि ऐसी प्रतीति होती नहीं है। जैसे चोर वुद्धि से साधु मारागया इसमें चोर बुद्धि और हनन में समान अधिकरण है। जिसमें चोर वुद्धि हुई उसी में हनन क्रिया हुई। बुद्धि कहीं अन्यत्र हुई और हनन क्रिया कहीं अन्यत्र ऐसा नहीं है। जैसी कि आप के उदाहरण में है बुद्धि हुई पिकनिनद में और पीटी गईं कोई और। इस प्रकार हाथी की बुद्धि से शूरों ने वन में रहने वाले वराह को मार डाला। यहाँ पर वराह में होने वाली दन्तिवुद्धि में वराह विशेष्य है।

कत्वव्युत्पत्तेः। एवं 'दन्तिबुद्ध्या हतः शूरैर्वराहो वनगोचरः' इत्यत्रापि विशेष्यतया वराहवृत्तेर्दन्तिबुद्धेर्वराहवृत्तिहननहेतुभावावगमः। त्वदुक्तरीत्या दन्तबुद्ध्येतिकृते बोधकदर्थनैव। किं च पिकानां हि कूजितादिशब्दैरेव शब्दो वर्ण्यते, न तु निनदादिशब्दैः सिंहदुन्दुभ्यादिशब्दप्रयोगयोग्यैः। तथा प्रथमद्वितीयचरणस्थयोः स्तनपाण्योर्यथाकथंचिद् व्यवहितमपि जातान्वयमपि त्वदरिमृगदृशामिति षष्ठ्यन्तमन्वेतुं शक्नुयात्, न तु तृतीयचरणस्थे

### मर्मप्रकाश

शब्दप्रयोगेति। शब्दे प्रयोगेत्यर्थः। आसत्त्याकाङ्क्षयोः स्वारसिकयोरभावादाह—यथाकथंचिदिति। जातान्वयेति। नाप्यरण्यं शरण्यमिति संनिहितेनेति भावः। न त्विति। विभिन्नविभक्तित्वात्स्वस्मिन्स्वभेदाभावाच्चेति भावः। ननु विभक्तिविपरिणामेनाभेदान्वयः

### मधुसूदनी

पिकनिनदबुद्धिरपि तासु आलपन्तीषु नायिकासु पिकीबुद्धिमुत्पादयितुं शक्नोति। तद्द्वारा तासु ताडनोपयोगः संभवत्येवेत्यन्वयः। धियेति प्रयोज्यार्थिका तृतीया। तया।

बोधकदर्थनेति। यत्र चोरबुद्धिः कारणं तत्रैव हननं कार्यम्। इति कार्यकारणयोर्भिन्नदेशत्वं नास्ति। दन्तिबुद्ध्येत्यस्य त्वदुक्तरीत्या अप्पय्यदीक्षितरीत्या सम्बन्धकरणे धीः कारणमन्यत्र पिकनिनदे, कार्यं ताडनं नायिकासु आलपन्तीषु इति कार्यकारणयोर्भिन्नदेशस्थत्वात् बोधकदर्थना बोधस्य कुत्सितीकरणमेवेति।

यथाकथंचिदिति। स्तनपाण्योस्त्वदरिमृगदृशामित्यनयोरासत्तिर्नास्ति व्यवधानात्। आकांक्षाऽपि नोदेति जातान्वयत्वात्। योग्यता तु अस्ति। तद्बलात्तयोरासत्याकांक्षयोः स्वारसिकयोरभावेऽपि आक्षिप्ते गृहीत्वाऽन्वयः करणीय एवेति भावः।

नत्विति। आलपन्त्य इति त्वदरिमृगदृशामित्यस्य विशेषणम्। त्वदरिमृगदृशामिति विशेष्यम्। तस्मिन् तद्भावेनान्वयाभावात्तासां ताटस्थ्यमेव। विभक्तिम्, आलपन्त्य इति ताडिता इति प्रथमां विपरिणमय्य आलपन्तीनां ताडितानामिति षष्ठीं कृत्वा त्वदरिमृगदृशामित्यस्यान्वयकरणे प्रक्रमस्य प्रक्रान्तस्य

### बालक्रीड़ा

अतः विशेष्यताख्यविषयता सम्बन्ध से वराह में होने वाली दन्तबुद्धि वराह कर्मक हनन में हेतु रूप से अवगत हो रही है। यदि तुम्हारी बतलाई हुई रीति से दन्तिबुद्धि का अन्वय करें तो बोध की कदर्थना ही है।

किंच पिक एवं भ्रमर आदि के शब्दों का वर्णन कूजित एव गुंजित आदि शब्दों से होता है। न कि सिंह और दुन्दुभि (नगारा) आदि के विषय में प्रयोग के योग्य निनदादि शब्दों से। तथा प्रथम और द्वितीय चरणों के स्तन और पाणि का यथा कथंचित् व्यवधान होने पर भी अन्वय हो जाने पर भी चतुर्थ चरणोपात्त त्वदरिमृगदृशां इस षष्ठयन्त पद के साथ अन्वय किया

आलपन्त्य इत्यस्मिन्विशेषणे विशेष्यभावेनेति तासां ताटस्थ्यमेव स्यात्। विभक्तिपरिणतावपि प्रक्रमभङ्गासंष्ठुलत्वाभ्यां स्थितमेवेति पद्यमव्युत्पन्ननिर्मितमेव। दीक्षितैस्तु भ्रान्त्यलंकारांशमात्रमादायोदाहृतमिति दिक्।

यत्त्वलंकारसर्वस्वकृता लक्षितम्, 'सादृश्याद्वस्त्वन्तरप्रतीतिर्भ्रान्तिमान्' इति, तन्न। प्रागुक्ते संशयालंकारे वक्ष्यमाणायामुत्प्रेक्षायां चातिप्रसङ्गात्। प्रतीतिपदस्य निश्चयपरत्वे रूपकवित्तावतिप्रसङ्गात्। विषयतावच्छेदकानवगाहित्वेन निश्चयो विशेषणीय इति चेत्, विशेष्यताम्। तथाप्यतिशयोक्तिवित्ताव-

### मर्मप्रकाशः

सुलभोऽत आह—विभक्तीति। प्रक्रमेति। नन्वेवं दीक्षितैः कथमुदाहृतमत आह—दीक्षितैरिति। निश्चयपरत्व इति। तथा च संशयसंभावनारूपयोस्तयोर्नातिप्रसङ्ग इति

### मधुसूदनी

अन्वयस्य त्वदरिमृगदृशां स्तनकलशयुगलमिति पाणय इति च रूपस्य भङ्गः; आलपन्तीनामिति करणे विच्छेदः स्यात्। प्रथमद्वितीयचरणस्थयोः पदयोरेवं तृतीयचरणस्थपदस्यानेवमिति विसंष्ठुलत्वं संष्ठुलत्वाभावः प्रसज्येत।

विषयतेति। विषयतावच्छेदकस्य मुखत्वादेरवगाही निश्चय इति रीत्या तदनवगाहित्वं निश्चये विशेषणम्। न पुनरनाहार्यत्वं तत्र विशेषणम्। एवं हि अस्मदुक्तलक्षणे समाप्तिः। मतुबर्थस्य भ्रान्तिमानित्यत्र भ्रान्त्युत्तरविहितमतुप्प्रत्ययार्थस्य असंगतिर्भ्रान्तिश्चेतनधर्मस्तेन भ्रान्तिमान् कश्चिच्चेतन एव स्यान्नालंकार इत्यसमन्वयः।

### बालक्रीड़ा

जा सकता है किन्तु तृतीय चरण के आलपन्त्यः इस विशेषण में त्वदरिमृगदशां का विशेष्य भाव से अन्वय नहीं हो सकता है अतः उनका ताटस्थ्य ही रहेगा। विभक्ति का विपरिणाम कर के अन्वय करने पर भी प्रक्रमभंग एवं असंतुलितता तो रहेगी ही। इस तरह यह पद्य किसी अव्युत्पन्न का ही बनाया हुआ है। दीक्षित जी ने तो केवल भ्रान्ति अलंकार के उदाहरण के रूप में विन्यास किया है। यह भी एक मार्ग है।

जो तो अलंकार सर्वस्वकार ने लक्षण बनाया कि सादृश्य से वस्त्वन्तर की प्रतीति भ्रान्तिमान् है। वह ठीक नहीं है। क्योंकि प्राक् उक्त संशय अलंकार और वक्ष्यमाण उत्प्रेक्षा में अतिप्रसक्ति हो जाती है। और यदि प्रतीति पद को निश्चय परक मानेंगे तो संशय और उत्प्रेक्षा में तो वरण हो जायगा किन्तु रूपक ज्ञान में अतिव्याप्ति हो जायगी। और यदि निश्चय में विषयतावच्छेदकानवगाहित्व को विशेषण बनायेंगे तो बनाइये तब भी अतिशयोक्ति ज्ञान में होने वाली अतिव्याप्ति का कौन वरण करेगा। यदि फिर तद्वारणार्थ निश्चय में अनाहार्यत्व विशेषण देंगे तब एक बार विषयतावच्छेदक मुखत्वादि का अवगाहन नहीं करने

तिप्रसक्तिरवारितैव। अनाहार्यत्वेन निश्चयविशेषणत्वे पुनरस्मदुक्त एव पर्यवसितिः। मतुबर्थासंगतिश्च। तत्र 'कनकद्रवकान्तिकान्तया' इत्यत्र सीतातडितोर्बिम्बप्रतिबिम्बभावः। युतत्वमिलितत्वयोश्च शुद्धसामान्यरूपता।

'रामं स्निग्धतरश्यामं विलोक्य वनमण्डले।
धाराधरधिया धीरं नृत्यन्ति स्म शिखावलाः॥'

अत्र स्निग्धत्वश्यामत्वयोरनुगामित्वम्।

इति रसगङ्गाधरे भ्रान्तिमत्प्रकरणम्।

## मर्मप्रकाशः

भावः। वित्तौ तज्ज्ञाने। अनाहार्यत्वेनेति। नन्वेमपि कथमतिशयोक्तावतिव्याप्तिवारणम्। तस्यामनाहार्याभेदज्ञानस्यैव सर्वसंमतत्वात्प्रागुक्तत्वाच्चेति चेत्, चिन्त्यमेतत्। मतुबिति। भ्रान्तिमानिति मतुबित्यर्थः। अत्र धर्ममेदमाह—तत्रेति। उक्तोदाहरणानां मध्य इत्यर्थः। धाराधरो मेघः। शिखावला मयूराः॥ इति रसगङ्गाधरमर्मप्रकाशे भ्रान्तिमत्प्रकरणम्॥

## मधुसूदनी

कनकेति। अत्र कान्तिकान्तत्वं मनोहरत्वमनुगामी धर्मः सीतातडितोः। तथापि उदाहरति राममिति। अत्र राममेघयोः स्निग्धत्वश्यामत्वे अनुगमिधर्मौ।

इति रसगंगाधरे मधुसूदन्यां भ्रान्तिमत्प्रकरणम्।

## बालक्रीड़ा

वाला विषयतावच्छेकानवगाही निश्चय अर्थ किया। दुबारा अनाहार्य निश्चय ऐसा कहा। तब दोनों को मिला कर अर्थ करना होगा। तब भी हमारे कथन में ही पर्यवसान होगा और भ्रान्तिमान् इसमें हुए मतुवर्थ मतुप्प्रत्ययार्थ की असंगति रह ही गई। कनकद्रवकान्ति पद्य में सीता और बिजली में विम्ब प्रतिविम्ब भाव है। युतत्व और मिलितत्व में शुद्ध सामान्यरूपता है।

अत्यन्त स्निग्ध और श्यामवर्ण वाले राम को वन में देखकर मेघ की बुद्धि से मयूर शनैः २ नाचने लगे।

यहाँ स्निग्धत्व और श्यामत्व धर्म अनुगामी हैं।

इस तरह रसगंगाधर की हिन्दी टीका वालक्रीड़ा में भ्रान्तिमान् प्रकरण समाप्त हुआ।

———

अथोल्लेखः—

एकस्य वस्तुनो निमित्तवशाद्यदनेकैर्ग्रहीतृभिरनेकप्रकारकं ग्रहणं तदुल्लेखः ॥'

'अधरं बिम्बमाज्ञाय मुखमब्जं च तन्वि ? ते ।
कीराश्च चञ्चरीकाश्च विन्दन्ति परमां मुदम् ॥'

अत्र कीरचञ्चरीकाभ्यामधरवदनयोर्बिम्बत्वेन पद्मत्वेन च ग्रहणे भ्रान्तिरूपेऽतिप्रसङ्गवारणायैकस्य वस्तुन इति । 'धर्मस्यात्मा भागधेयं क्षमायाः'

मर्मप्रकाशः

उल्लेखं लक्षयति—अथोल्लेख इति । ग्रहणं ज्ञानम् । कीराः शुकाः । चञ्चरीका

मधुसूदनी

अथ उल्लेखः ।

निमित्तवशादिति । निमित्तं रुचिभिरतिः कुत्रचित् । अर्थित्वं लालसा कुहचन । व्युत्पत्तिर्ज्ञानं क्वचन । भ्रान्तिरूपे इत्यस्य भ्रान्तिद्वयरूपे इत्यर्थः । द्वित्वादेव एकस्येत्यनेन वारणम् ।

धर्मस्यात्मेत्यत्र एक एव ग्रहीता । नानेके इति अनेकैर्ग्रहीतृभिरिति विशेषणेनातिप्रसक्तेर्वारणम् । बहुत्वे अविवक्षितत्वं नाम द्वौ अपि ग्रहीतारौ यत्र स्याताम्, तत्रापि समन्वयः स्यादिति । एकभिन्नत्वमनेकत्वं तु तत्र विवक्षितमेव ।

बालक्रीड़ा

अथ उल्लेखालंकार

एक ही वस्तु का निमित्त के वशसे अनेक ग्रहीताओं के द्वारा अनेक प्रकार से जो ग्रहण है वह उल्लेख है । वही जब कविप्रतिभोत्थापित अतएव चमत्कारी होता है तब अलंकार कहलाता है । यहाँ निमित्त रुचि, अर्थित्व व्युत्पत्ति एवं भय आदि अनेक हैं । स्वतन्त्र रूप से पदार्थों में विकल्प करना रुचि है । अर्थित्व लिप्सा है और व्युत्पत्ति ज्ञान है । जैसा कि उत्पलाचार्य प्रणीत ईश्वर प्रत्यभिज्ञा में कहा है ।

यथारुचि, यथार्थित्वं यथा व्युत्पत्ति भिद्यते
आभासोऽप्यर्थ एकस्मिन्ननुसंधान साधिते ।

अनुसंधान से जाने हुए एक ही पदार्थ में रुचि, लिप्सा एवं व्युत्पत्ति के अनुसार प्रतीतियाँ भिन्न हो जाती हैं ।

अब लक्षण के पदों का फल बतलाते हैं : हे तन्वि ? तुम्हारे अधर को बिम्ब एवं मुख को कमल समझकर कीर, शुक और चञ्चरीक भ्रमर परम आनन्द को प्राप्त करते हैं ।

यहाँ कीर का अधर को बिम्ब समझना और भ्रमर का मुख को कमल समझना दो

इत्यादि मालारूपकेऽपि प्रसङ्गवारणायानेकैर्ग्रहीतृभिरित्यविवक्षितबहुत्वकं ग्रहणविशेषणम् ।

'नृत्यत्त्वद्वाजिराजिप्रखरखुरपुटप्रोद्धतैर्धूलिजालै-
रा लोकालोकभूमीधरमतुलनिरालोकभवं प्रयाते ।
विश्रान्तिं कामयन्ते रजनिरिति धिया भूतले सर्वलोकाः
कोकाः क्रन्दन्ति शोकानलविकलतया किं च नन्दन्त्युलूकाः ॥'

अत्र धूलिजालरूपस्यैकस्य वस्तुनोऽनेकैर्लोककोकोलूकैर्ग्रहीतृभिरेकेनैव रजनीत्वरूपेण प्रकारेण ग्रहणमिति तत्रातिप्रसङ्गवारणायानेकप्रकार-

मर्मप्रकाशः

भ्रमराः । नन्वेवं बहुवचनात्त्रिप्रभृत्येव स्यात्, द्वयोर्न स्यादत आह--अविवक्षितेति । नृत्यदिति । राजानं प्रति कवेरुक्तिः । अतुलेति । आलोकालोकम् । लोकालोकस्य किंचिदंशे प्रकाशः किंचिदंशेऽप्रकाशः । धूल्याक्रान्तत्वे तु सर्वांशेनाप्रकाशत्वं गत इत्यर्थः । नन्वेवं बहुवचनौ-

मधुसूदनी

नृत्यदिति । नृत्यन्तो ये त्वद्वाजिनस्तेषां राजिः समूहः । तस्याः प्रखरैस्तीक्ष्णैः खुरपुटैः प्रोद्धूतानि धूलिजालानि तैः । लोकः प्रकाशः अलोकः प्रकाशाभावः । उभयविशिष्टो लोकालोकाचलः । धूलिजालैरावृतत्वे तु निःशेषेण गतालोकत्वं ततो लोकालोकभूमीधरादा इति आङ् अभिव्याप्तौ लोकालोकपर्वतपर्यन्तं भूतले अतुल-

बालक्रीड़ा

भ्रान्तियाँ हैं । इनमें लक्षण की अतिप्रसक्ति को वारण करने के लिए "एक ही वस्तु का" इस विशेषण का लक्षण में निवेश किया । "धर्म की आत्मा, पृथ्वी का भाग्य यह राजा है" यहां एक राजा को एक कवि ने अनेक प्रकार से ग्रहण किया है । यह रूपकालंकार का उदाहरण है । इसमें लक्षण की अतिव्याप्ति नही हो जाय इसलिए अनेक ग्रहीताओं के द्वारा इस पद का ग्रहण के विशेषण के रूप में निवेश किया । यहां "ग्रहीतृभिः" में बहुवचन अविवक्षित है ग्रहीता बहुत हों यह आवश्यक नहीं हैं किन्तु एक से भिन्न अनेक ग्रहीताओं का होना आवश्यक है ।

झुण्ड के झुण्ड नाचते हुए घोड़ों के तीखे २ खुरों से उठी हुई धूलियों से लोकालोक पर्वत पर्यन्त भूतल जब आलोक शून्य हो गया तब सभी जनता "रात्रि हो गई" ऐसा समझ कर विश्राम करने की इच्छा करने लगी । शोक अर्थात् विरह जनित शोक की अग्नि से विकल हो कर चकवा और चकवी क्रन्दन करने लगे और उल्लूगण खुश होंने लगे ।

यहाँ धूलियों के समूह रूप एक वस्तु का अनेक लोक, कोक एवं उलूक ग्रहीताओं ने रजनीरूप एक ही प्रकार से ग्रहण किया है किन्तु लक्षण के अनुसार अपेक्षित है अनेक प्रकार

कमिति । ग्रहणमिति ग्रहणसमुदायो विवक्षितः । एकत्वं जातौ । अनेक-ग्रहीतृकस्यैकस्य ग्रहणस्याप्रसिद्धेः । तेन द्वयोर्बहूनां वा ग्रहणं निमित्त-वशादिति तु वस्तुकथनमात्रम् ।

उदाहरणम्—

'नरैर्वरगतिप्रदेत्यथ सुरैः स्वकीयापगे-
त्युदारतरसिद्धिदेत्यखिलसिद्धसंघैरपि ।

### मर्मप्रकाशः

चित्येन कथमेकत्वमत आह—एकत्वमिति । अनेकेति । एकस्य वस्तुनोऽनेकप्रकारकस्ये-त्यादिः । बहुवचनमविवक्षितमित्युक्तत्वादाह—द्वयोरिति । नन्वेवमपि निमित्तवशादि-त्यधिकमत आह—निमित्तेति । न च 'कीर्तौ विस्फूर्तिमत्यां ते मृणालक्षीरशङ्किनः ।

### मधुसूदनी

निरालोकभावं प्रयाते गते सति । इत्यन्वयः । अनेक प्रकारकं ग्रहणमिति । इह एकवचनान्तग्रहणपदेन ग्रहणसमुदायो विवक्षितः । नन्वेवं ग्रहणानि इति बहुवचना-न्तेन तत्पदेन भाव्यमौचित्यात्तदाह—एकत्वं जातौ । जात्यभिप्रायेण एकवचनान्तं तत् । अप्रसिद्धेरिति । अनेकग्रहीतृकस्य एकस्य ग्रहणस्याप्रसिद्धेरिति यत्पण्डित-राजेनोक्तं तन्मन्दम् । इको यणचीत्यादिसूत्रेषु सन्धौ कर्त्तव्ये अजव्यहितपूर्वत्वविशिष्ट स्येकः स्थाने यण् स्यादित्येवमेकस्यैव ग्रहणस्य अनेकेषां सहस्रलक्ष कोटिग्रहीतॄणां प्रसिद्धेः । ननु नियत स्थलेषु एव एवं नत्वनियतस्थलेषु इति चेत्तर्हि निःसन्दिग्धमेव ग्रन्थकारेण लेखनीयं न सन्दिग्धम् । सामान्यत एवं लेखे सन्देहो जागर्त्येव ।

अविवक्षितं बहुत्वं यत्रेति कथनस्य फलमाह-द्वयोरिति । वशात् भेदात् । वस्तुकथनमात्रं वस्तुनो निरूपणमेव । "मात्रं कात्स्न्र्येऽवधारणे" इत्यमरः ।

### बालक्रीड़ा

से ग्रहण करना अतः इस लक्ष्य में लक्षण की अतिप्रसक्ति को वारण करने के लिए अनेक प्रकारक पदका निवेश किया । यहाँ "ग्रहणम्" इस पद से ग्रहण समुदाय अपेक्षित है । तब ग्रहणानि ऐसा बहुवचनान्त पद का प्रयोग करना चाहिए था" "ग्रहणम्" एकवचनान्त पदका प्रयोग क्यों किया इसका उत्तर देते हैं कि यहां एकत्व जाति के अभिप्राय से प्रयुक्त है । क्योंकि अनेक ग्रहीताओं का एक ग्रहण ज्ञान अप्रसिद्ध है अतः एक के अतिरिक्त दो या बहुतों का ग्रहण यहां वक्ता को इष्ट है । जब ग्रहीता अनेक हैं और उनका ग्रहण भी अनेक होगा तब उसका कोई निमित्त अवश्य ही होगा ऐसी अवस्थामें अर्थ से प्राप्त वस्तु का शब्द से कथन करना व्यर्थ है । इस पर उत्तर देते है कि निमित्तवशात् यह तो केवल वस्तु कथन है अर्थात् आवश्यक कथन नही है । अथवा मात्र पद का यहाँ कत्स्न्र्य पूर्णता अर्थ है फलतः पूर्णरूप से वस्तु के तत्व का कथन है ।

हरेस्तनुरिति श्रिता मुनिभिरस्तसङ्गैरियं
तनोतु मम शं तनोः सपदि शन्तनोरङ्गना ॥'

अत्र च लिप्सारुचिभ्यां निमित्ताभ्यामस्त्यनेकग्रहीतृकवरगतिप्रदात्वाद्यनेकप्रकारकग्रहणसमुदायो गङ्गाविषयकरतिभावोपस्कारकः। शुद्ध एवात्रायमुल्लेखालंकारः। रूपकाद्यमिश्रणात्।

संकीर्णोऽपि दृश्यते। यथा—

'आलोक्य सुन्दरि ! मुखं तव मन्दहासं
नन्दन्त्यमन्दमरविन्दधिया मिलिन्दाः।

### मर्मप्रकाशः

द्वयेऽपि नागास्तन्वन्ति जिह्वान्तोल्लोलनं मुहुः॥' इति भ्रान्तिमदुदाहरणे एकस्या एव कीर्तेरनेकेन कुञ्जरभुजंगरूपेण ग्रहीत्रा मृणालक्षीररूपत्वानेकप्रकारेणोल्लेखनमस्तीति तत्रातिव्याप्तिनिरासाय निमित्तभेदादित्यर्थकं निमित्तवशादित्यावश्यकम्। तत्र कीर्तिगतं धावल्यमेकमेवोल्लेखद्वयेऽपि निमित्तमिति वाच्यम्। स्वस्वप्रियाहारलिप्सारूपनिमित्तभेदस्यापि तत्र सत्त्वेन संग्राह्यत्वादिति भावः। वरेति। ब्रह्मसुखाप्तीत्यर्थः। स्वकीयेति। मन्दाकिनीत्यर्थः। उदारेति। उत्कृष्टतरेत्यर्थः। शन्तनो राज्ञः स्त्री गङ्गा मम तनोः शं कल्याणं सपदि तत्कालं तनोत्वित्यर्थः। लिप्सा लाभेच्छा। तस्यालंकारत्वायाह—गङ्गेति। कविनिष्ठेत्यादिः। अत्रेति। पद्य इत्यर्थः। उक्त इति शेषः। सुन्दरीति आलीति च संबोधने।

### मधुसूदनी

लिप्सा अर्थित्वम्। लिप उपदेहो वृद्धिः। लिपेः सनि अप्रत्यये च लिप्सा वृद्धीच्छा। लभेः सन्नन्तादादीत्वेऽप्रत्यये लिप्सा लाभेच्छा। रुचिरभिप्रीतिः। शन्तनोर्भीष्मपितामहपितुरंगना सहधर्मिणी गंगा मम तनोरंगस्य शं कल्याणं तनोतु विस्तारयतु चिरजीवित्वं ददातु।

### बालक्रीड़ा

उदाहरण देते हैं। मनुष्यों ने उत्तम गति देने वाली, देवताओं ने अपनी नदी, अखिल सिद्धों ने अत्यन्त उदार सिद्धियों को देने वाली और संग रहित मुनियों ने हरि की तनु समझकर जिसका सहारा लिया है वह शंतनु की अंगना गंगा मेरे शरीर का सपदि कल्याण करे उसको नीरोग करे।

यहां लिप्सा याने वृद्धि की इच्छा या लाभकी इच्छा एवं रुचि अभिरति रूप निमित्तों से अनेक ग्रहीताओं का वरगतिप्रदत्वादि अनेक प्रकार के ग्रहणों का समुदाय है जो गंगाविषयक रति भाव का उपस्कारक है अतः उल्लेखालंकार है। यह यहां शुद्ध है क्योंकि रूपकादि दूसरे अलंकारों से अमिश्रित है। असंकीर्ण है।

किं चालि ? पूर्णमृगलाञ्छनसंभ्रमेण
चञ्चूपुटं चटुलयन्ति चिरं चकोराः ॥'

अत्र एकैकग्रहणरूपया भ्रान्त्या समुदायात्मक उल्लेखः सकीर्णः ।

वनितेति वदन्त्येतां लोकाः सर्वे वदन्तु ते
यूनां परिणता सेयं तपस्येति मतं मम ।

अत्र विषयतावच्छेकस्य परसंमतत्वेन निषेध्यतयोपन्यासादपह्नुत्या-संकीर्णः ।

अप्पय्यदीक्षितास्तु—"एवमपि यदि—

"कान्त्या चन्द्रं विदुः केचित्सौरभेणाम्बुजं परे ।
वक्त्रं तव, वयं ब्रूमस्तपसैक्यं गतं द्वयम् ॥'

**मर्मप्रकाशः**

नायिकां प्रति सख्या नायकस्य वोक्तिः । चिरं चकोरा इति । स्वस्वप्रियाहारलिप्सा च निमित्तम् । एतां नायिकां नायकोक्तिरियम् । अवच्छेदकस्य वनितात्वस्य । निषेध्येति ।

**मधुसूदनी**

वनितेति । अत्र पद्ये विषयताया अवच्छेदकस्य वनितात्वस्य "लोका वदन्ति वदन्तु ते इत्येवं परसम्मतत्वेन उपन्याससामर्थ्यात् "नाहं तथा वदामि" इत्यनुक्तेर्गम्यमानेन निषेधेन अभिन्नया अपह्नुत्या संकीर्ण उल्लेखः । इति स्पष्टोर्थः । अक्षरार्थस्तु विषयताया अवच्छेदकं वनितात्वं परसम्मतमिति तस्य परसम्मतत्वेन हेतुना स्वमते निषेध्यतया उपन्यासात् अपह्नुत्या संकीर्णत्वमुल्लेखस्य ।

**बालक्रीड़ा**

संकीर्ण भी यह दिखाई पड़ता है । जैसे—हे सुन्दरि ? मन्द मुसकान से युक्त तुम्हारे मुख को देख कर ये भ्रमर अरविन्दबुद्धि से खूब मस्त हो रहे हैं और हे आलि ? चकोर पूर्ण चन्द्र समझकर अपनी चञ्चू को देरतक चञ्चल करते हैं ।

यहाँ एकैक माने हर एक का अपने २ अलग २ एक एक प्रकार से ग्रहण रूप भ्रान्ति से संकीर्ण समुदायात्मक उल्लेख है ।

सभी लोग इसको वनिता कहते हैं । कहा करें । मेरा तो अपना मत है कि यह युवती युवकों की तपस्या का परिणाम है ।

यहां विषयता के अवच्छेदक वनितात्व का पर सम्मत होने से निषेध्य रूप से उपन्यास किया है अतः अपह्नुति से संकीर्ण उल्लेख है ।

अप्पय्य दीक्षितजी तो इस प्रकार अगर हे सुन्दरि ? कोई लोग तुम्हारे मुख को

इत्यपह्नवोदाहरणविशेषेऽतिव्याप्तिः शङ्क्या। तदानीमनेकधोल्लेखनं निषेधास्पृष्टत्वेन विशेषणीयम्। तत्राद्योल्लेखनद्वयं परमतत्वोपन्याससामर्थ्याद् गम्यमाननिषेधमिति नातिव्याप्तिः'' इत्याहुः। तन्न। 'द्विविधश्चायमुल्लेखः, शुद्धोऽलंकारान्तरसंकीर्णश्च' इत्युक्त्वा ''श्रीकण्ठजनपदवर्णने, 'यस्तपोवनमिति मुनिभिरगृह्यत' इत्यादौ शुद्धः, 'यमनगरमिति शत्रुभिः, वज्रपञ्जरमिति शरणागतैः' इत्यादौ भ्रान्तिरूपकादिसंकीर्णः'' इति स्वयमेवोक्तत्वात्। इहाप्यपह्नुत्या संकीर्ण उल्लेख इत्यस्य सुवचत्वात्। यदि चैवंविधापह्नुतिवारणाय निषेधास्पृष्टत्वं विशेषणमुच्यते तदा

'कपाले मार्जारः पय इति करांल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति।

मर्मप्रकाशः

आर्थिकेत्यादिः। एवमपि उक्तविशेषणदानेऽपि। गम्येति। बहुव्रीहिः। श्रीकण्ठेति। शुद्धस्यैकमुदाहरणं सोपपादनमुक्त्वान्यदाह हर्षचरिते। इत्यादौ यस्तपोवनमित्यादिगद्ये। अगृह्यतेत्यस्य सर्वत्र संबन्धः। यच्छब्दार्थः श्रीकण्ठजनपदः। शुद्ध इति। तत्र तपोवनादिभूनिष्ठत्वादिति भावः। यमनगरत्वादीनां ताद्रूप्यानुभवगोचरतयान्वये आह—भ्रान्तीति। यदि तेषामुपरञ्जकतामात्रेणान्वयस्तदाह—रूपकेति। एवंविधेति। विलक्ष-

मधुसूदनी

कपाल इति। कपाले पतितान् शशिनः करान्। पय इति बुद्ध्या। तरोः

बालक्रीड़ा

कान्ति के वदौलत चन्द्र समझते हैं दूसरे सौरभ के कारण कमल समझते हैं। हमतो कहते हैं कि अपनी २ तपस्याओं के बलपर वे दोनों चन्द्र और कमल तुम्हारे मुख के रूप में एक हो गये। इस अपह्नुति के लक्ष्यविशेष में अतिव्याप्ति होने की शंका करते हैं तब अनेकधोल्लेखन में निषेधास्पृष्टत्व रूप विशेषण का योग कर दीजिए। वहाँ पहले दोनों उल्लेखों में परमत के उपन्यास के सामर्थ्य से निषेध गम्यमान है अतः अतिव्याप्ति नहीं है। ऐसा कहते हैं। वह ठीक नही है। क्योंकि यह उल्लेख दो प्रकार का है एक शुद्ध दूसरा अन्य २ अलंकारों से संकीर्ण। ऐसा कहकर श्रीकण्ठ जिले के वर्णन के प्रसंग में "जिसको यह तपोवन है ऐसा मुनियों ने समझा इत्यादि में शुद्ध है और यम का नगर है ऐसा शत्रुओं ने, वज्र से निर्मित सुरक्षा का स्थान है ऐसा शरणागतों ने समझा इत्यादि में क्रमशः भ्रान्ति और रूपक से संकीर्ण है ऐसा जब उन्होंने स्वयं ही कहा है तब यहाँ भी अपन्हुति से संकीर्ण उल्लेख है ऐसा कहना उचित ही है। फिर भी यदि इस प्रकार की अपन्हुति के वारण के लिए "निषेध का स्पर्श जहाँ नहीं रहे" इस विशेषण को कहते हैं तब—

विश्व में चारों ओर चाँदनी छिटकी हुई है जिसके फलस्वरूप कपाल में पड़ी हुई

रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति
प्रभामत्तश्चान्द्रो जगदिदमहो विभ्रमयति ॥'

इति त्वदुदाहृतभ्रान्तावतिप्रसङ्गः कथं नाम वार्येत । मार्जाराद्यनेकग्रहीतृकानेकधोल्लेखनस्य तत्रापि सत्त्वात् । स्वस्वप्रियाहारलिप्सारूपनिमित्तभेदाच्च । तस्मात्संकीर्णनिवारणाय यत्नोऽनर्थक एव ।

संशयसंकीर्णो यथा—

'भानुरग्निर्यमो वायं बलिः कर्णोऽथवा शिबिः ।
प्रत्यर्थिनश्चार्थिनश्च विकल्पन्त इति त्वयि ॥'

### मर्मप्रकाशः

णेत्यर्थः । त्वदुदेति । त्वया प्रथमं मुख्यत्वेनोदाहृतेत्यर्थः । तादृशभ्रान्तिविशेषस्यापि वारणावश्यकत्वात् । अन्यथा संकीर्णं तत्कथमादावुदाहृतम् । तद्विविक्तविषयस्यैवादावुदाहर्तुमौचित्यात् । अन्यथालंकारभेदो न स्यादिति भावः । अनेकधेति । पयस्त्वादी-

### मधुसूदनी

पत्रान्तर्गतछिद्रेषु प्रोतान् स्थितान् । रतान्ते वनितापि तल्पस्थान् तान् रतसमये नीवीबन्धोच्छ्वसनगलितमंशुकमिति धिया ।

### बालक्रीड़ा

चन्द्रमा की किरणों को विलाव दूध समझकर चाट रहा है । पेड़ों के पत्तों के बीच में फैली हुई उन किरणों को हाथी किसलय समझकर संकलन कर रहा है । और शय्या पर पड़ी हुई उन किरणों को वनिता भी रत के अवसर पर नीवी बन्धन के शिथिल होने से गिरे हुए कपड़े को जान कर उठा रही है । अहो आश्चर्य है यह कान्ति से मत्त हुआ चन्द्रमा जगत् को पागल वना रहा है ।

इस तुम्हारे ही दिये हुए उदाहरण में भ्रान्ति के अतिप्रसंग को कैसे वारण करोगे । क्योंकि मार्जारादि अनेक ग्रहीता और उनके द्वारा दूध, विस एवं अंशुक अनेक प्रकार से ग्रहण रूप उल्लेख यहाँ भी मौजूद है । और अपने-अपने प्रिय आहार की लिप्सा रूप निमित्त का भेद भी है । इसलिए अलंकारान्तर से संकीर्ण उल्लेख के वारण करने के लिए प्रयत्न करना निरर्थक है । संशय से संकीर्ण उल्लेख जैसे—

हे राजन् ! यह भानु है, अग्नि है, या यम है ऐसा शत्रु लोग, बलि है, कर्ण है अथवा शिव है ऐसा याचक लोग आपके विषय में नाना प्रकार के विकल्प करते हैं । यहाँ द्वित्व-संख्या विशिष्ट दो ग्रहण हैं । उनमें प्रत्येक के स्वरूप में संशयत्व है । समुदाय में तो उल्लेखत्व है ही । यहाँ स्वरूप मात्र का उल्लेख किया गया है अतः यह स्वरूपोल्लेख है जिसका उल्लेख पहिले ही कर दिया गया है ।

अत्र द्वयोर्ग्रहणयोः प्रत्येकं संशयत्वम्। समुदायस्य तूल्लेखता। अयं च स्वरूपमात्रोल्लेखे स्वरूपोल्लेखः प्रागेव निरूपितः।

फलानामुल्लेखे फलोल्लेखो यथा—

'अर्थिनो दातुमेवेति त्रातुमेवेति कातराः।
जातोऽयं हन्तुमेवेति वीरास्त्वां देव ? जानते॥'

हेतूनामुल्लेखे हेतूल्लेखः। यथा—

'हरिचचरणनखरसङ्गादेके हरमूर्धसंस्थितेरन्ये।
त्वां प्राहुः पुण्यतमामपरे सुरतटिनि ? वस्तुमाहात्म्यात्॥'

अथ प्रकारान्तरेणाप्युल्लेखो दृश्यते—यत्रासत्यपि ग्रहीत्रनेकत्वे विषया-

मर्मप्रकाशः

त्यर्थः। उपसंहरति—तस्मादिति। शिविस्तन्नामको राजा। अत्र द्वयोरिति। प्रथमपादद्वितीयपादप्रतिपाद्ययोरित्यर्थः। उक्तवद्भेदमाह—अयं चेति। उल्लेखश्चेत्यर्थः। उल्लेखे सतीति शेषः। एवमग्रेऽपि। अर्थिन इति। राजानं प्रति कव्युक्तिः। हरीति। गङ्गास्तुतिः। नखरेति। नखेत्यर्थः। वस्तुमाहात्म्यादिति। स्वस्वरूपस्यैव माहात्म्यादित्यर्थः। पूर्वोदाहरणे एकस्यैव राज्ञो दातृत्वत्रातृत्वहन्तृत्वप्रकारेणोल्लेखः। अत्र त्वेकस्य पुण्यतमात्वस्य हरिपदसङ्गादिहेतुकत्वेनोल्लेखः। प्रकारस्य फलत्वहेतुत्वाभ्यां

मधुसूदनी

जातोऽयमित्यत्र हन्तुमिति पाठे समाग्रहस्तर्हि शत्रवो हन्तुमेवेति जातं त्वां वीर ? जानते। इति पाठः साधीयान्। यदि वीरा इति पाठे समाग्रहस्तर्हि जातोऽयं योद्धुमेवेति पाठः करणीयः। यत्रानेके ग्रहीतारो न सन्ति। किन्तु ग्रहीतुः सम्बन्धी

बालक्रीड़ा

फलों के उल्लेख में फलोल्लेख जैसे—हे देव ! याचक लोग आप को दान करने के लिए पैदा हुए हैं, भयभीत लोग आपको रक्षा करने के लिए ही पैदा हुए हैं वीर लोग आप को हनन करने के लिए ही पैदा हुए हैं ऐसा जानते हैं।

यहाँ रचना ठीक नही हुई है। यदि वीराः पाठ रखना इष्ट है तब तो हन्तुं की जगह पर योद्धुं पाठ होना चाहिए। "जातोऽयं योद्धुमेवेति वीरास्त्वाम्"। और यदि हन्तुं पाठ रखना इष्ट है तब "शत्रवो हन्तुमेवेति जातं त्वाम्" यह पाठ होना चाहिए।

हेतुओं के उल्लेख में हेतूल्लेख जैसे—हे सुरतटिनि ? हे देवनदि ? आपको कुछ लोग हरि चरण के नखों से सम्बन्ध होने के कारण, अन्य लोग हर के मस्तक में निवास करने के हेतु और अपर लोग आपके वास्तविक माहात्म्य से पुण्यतमा कहते हैं।

अथ अब यहाँ उल्लेख के अन्य २ प्रकारों को दिखाते हैं—यहाँ अनेक ग्रहीताओं के

श्रयसमानाधिकरणादीनां संबन्धिनामन्यतमानेकत्वप्रयुक्तमेकस्य वस्तुनोऽनेक-प्रकारत्वम्। अयमपि द्विविधः, शुद्धोऽलंकारान्तरसंकीर्णश्च।

शुद्धो यथा—

'दीनव्राते दयार्द्रा, निखिलरिपुकुले निर्दया, किं च मृद्वी
काव्यालापेषु, तर्कप्रतिवचनविधौ कर्कशत्वं दधाना।
लुब्धा धर्मेष्वलुब्धा वसुनि, परविपद्दर्शने कांदिशीका
राजन्नाजन्मरम्या स्फुरति बहुविधा तावकी चित्तवृत्तिः॥'

अत्र दीनव्रातादीनां विषयाणामनेकत्वाच्चित्तवृत्तेरनेकविधत्वम्। राज-

### मर्मप्रकाशः

फलोल्लेखत्वादिव्यवहार इति बोध्यम्। संबन्धिनामिति। विषयरूपाश्रयरूपैकाधिकर-णवृत्तित्वेन प्रतीयमानरूपाश्च ये संबन्धिनः। विषयाश्रयसहचरादिरूपा ये संबन्धिन इति यावत्। तेषां मध्ये यस्य कस्यचिद्यदनेकत्वं तत्प्रसक्तमित्यर्थः। व्राते समूहे। मृद्वीति। काव्योक्तिषु कोमलेत्यर्थः। काव्यालापेषूक्तिमात्रेषु मृद्वीका द्राक्षारूपा। मधुरेति यावदिति कश्चित्। तर्केति। तर्कस्य प्रतीत्यर्थः। वसुनि द्रव्ये। परेति। परस्य परा वेत्यर्थः। कांदिशीति। कस्यां दिशि गन्तव्यमिति धीविशिष्टेत्यर्थः। राजानं प्रति कव्युक्तिः। अस्यालंकारत्वायाह—राजेति। कविनिष्ठेत्यादिः। नास्तीति। तथा चैकस्य वस्तुन

### मधुसूदनी

विषयः वर्णनीयः। आश्रयः आलम्बनम्। समान आधारः सहचरः। तेषामन्यतमस्य अनेकत्वम्। तत्प्रयुक्तमिति निगदार्थः। सम्बन्ध्यनेकत्वहेतुकम्। चित्तवृतेरिति।

### बालक्रीड़ा

न होने पर भी विषय, आश्रय एवं समानाधिकरण (साहचर्य) आदि सम्बन्धियों में से किसी एक की अनेकता के कारण एक वस्तु की अनेकप्रकारता ही उल्लेख है। यह भी शुद्ध एवं अलंकारान्तर से संकीर्ण है। उनमें शुद्ध जैसे—

हे राजन्! आजन्म रमणीय आपकी चित्तवृत्ति बहुत प्रकार से चमक रही है। चित्तवृत्ति का बहुविधत्व दिखाते हैं। दीनों पर दया से आर्द्र है। निखिल शत्रुओं के बारे में निर्दय है। काव्यों के आलाप करने के समय कोमल है। तर्कों के प्रत्युत्तर देने में कर्कश है। धर्म में लोभ करने वाली है। धन के लोभ से रहित है। दूसरों की घोर विपत्ति के देखने में कांदिशीक है अर्थात् किस दिशा में चली जाऊँ जिससे इन लोगों की विप्रत्तियाँ न दिखाई पड़ें।

यहाँ दीनव्रातादि विषयों की अनेकता से चित्तवृत्तियों में अनेकप्रकारता है। यह उल्लेख राजविषयक रतिभाव का उपस्कारक है अतः अलंकार है। प्रश्न—चित्तवृत्ति व्यक्ति

विषयकरतिभावोपस्कारकोऽयमुल्लेखः। यद्यपि चित्तवृत्तिव्यक्तीनामत्रैक्यं नास्ति, तथापि त्वदीयचित्तवृत्तित्वेन सामान्येन तासामेकत्वं विवक्षितम्।

यथा वा—

'कातराः परदुःखेषु, निजदुःखेष्वकातराः।
अर्थेष्वलोभा, यशसि सलोभाः सन्ति साधवः॥'

अत्रापि साधवः सन्तीत्यनेन मृता अपि न मृतास्ते; इतरे पुनरमृता अपि मृता एवेत्यर्थाभिव्यक्तिद्वारा व्यज्यमाने साधूत्कर्षविशेषे उपस्कारकोऽयम्।

### मर्मप्रकाशः

इत्यंशाभावान्नेदं लक्ष्यमिति भावः। तथा लक्षणे विवक्षाया अभावादाह—यथा वेति। अत्र परदुःखादीनां विषयाणामनेकत्वात्साधूनामनेकविधत्वं स्पष्टमुपेक्ष्यालंकारान्तरत्वमुपपादयति—अत्रापि साधव इति। एवं विषयानेकत्वप्रयुक्तमुदाहृत्याश्रयानेकत्वप्रयुक्तमुदा-

### मधुसूदनी

विषयानेकत्वाद्वृत्तेरप्यनेकत्वम्। यद्यपीति प्रश्नः। दयार्द्रा, निर्दया, मृद्वी, कर्कशा लुब्धेत्येवं कथनेन चित्तवृत्तिरनेकविधा किन्तु चित्तवृत्तित्वेन जात्या तासां चित्तवृत्तीनामेकत्वम्। एवं च सम्बन्ध्यनेकत्वहेतुकमेकस्य वस्तुनोऽनेकप्रकारत्वमित्यस्य संगतिः। एकत्वाभावे वस्तुनः संगतिर्न स्यादिति भावः।

कातरा इति। कातरा अकातरा इत्येवमेकस्य साधुरूपवस्तुनोऽनेकविधत्वम्। तत्रानेकत्वं स्वपरदुखेत्यादि विषयप्रयुक्तम्। एकस्यानेकप्रकारत्वमस्ति अनेकेषां विषयादीनां सम्बन्धिनामनेकत्वप्रयुक्तम्। किन्तु अस्योल्लेखस्यालंकारत्वं कथमित्याह—उपस्कारकोऽयमुल्लेखः। कुत्रेत्याह—पूर्वत्र दीनव्राते इति पद्ये राजोत्कर्षविशेषे। उत्तरत्र-कातरा इति पद्ये साधूत्कर्षविशेषे।

### बालक्रीड़ा

एक नहीं होती है वह तुम्हारी चित्तवृत्ति, मेरी चित्तवृत्ति एवं उसकी चित्तवृत्ति इस प्रकार चित्तवृत्तियाँ अनेक होती हैं अतः यहाँ लक्षण के मुख्य अंश "एक वस्तु की अनेक प्रकारता" रूप के अभाव में कैसे उल्लेख होगा। उत्तर। ठीक है किन्तु चित्तवृत्तित्वेन चित्तवृत्तियों में एकत्व विवक्षित है। अतः लक्षण की संगति होने पर उल्लेखालंकार स्पष्ट है।

और जगहों में चित्तवृत्तित्वरूप सामान्य के कारण चित्तवृत्तियों में एकत्व मान सकते हैं किन्तु लक्षण में तो ऐसा विवरण नहीं है तब दूसरा उदाहरण देते हैं यथा वा—

दूसरे के दुखों को देखने में कातर भीत, अपनें दुखों के सहने में निर्भय, अर्थ में लोभ नहीं करने वाले और यश के लिए लोभी साधु हैं।

यहाँ साधु हैं इससे मरे हुए भी वे मरे नहीं हैं किन्तु इनसे इतर लोग तो जीते हुए भी मरे हैं। इस प्रकार की अभिव्यक्ति के द्वारा व्यज्यमान साधुओं के उत्कर्ष विशेष का

यथा वा—

'तुषारास्तापसव्राते, तामसेषु च तापिनः ।
दृगन्तास्ताडकाशत्रोर्भूयासुर्मम भूतये ॥'

पूर्वपद्ययोर्विषयानेकत्वप्रयुक्तम्, इह त्वाश्रयानेकत्वप्रयुक्तमनेकविधत्वं दृगन्तानाम् ।

'विद्वत्सु विमलज्ञाना, विरक्ता यतिषु स्थिताः ।
स्वीयेषु तु गरोद्गारा नानाकाराः क्षितौ खलाः ॥'

अत्र विद्वदादिसहचरभेदप्रयुक्तं खलानामनेकविधत्वम् । एवमन्येषां संबन्धिनां भेदेऽप्यूह्यम् ।

### मर्मप्रकाश

हरति—यथा वेति । ताडकाशत्रोः श्रीरामस्य । समानाधिकरणानेकत्वं प्रत्युदाहरति—विद्वदिति । यथा वेत्यादि । यतिषु भिक्षुषु । गरोद्गारा विषोद्गाराः । आदिपदा-

### मधुसूदनी

तुषारा इति । व्रातः समूहः । तापसाः सन्तः । तामसा दुष्टा आश्रया अनेके । अत्र एतेषामाश्रयाणामनेकत्वादाश्रयिणां दृगन्तानां कटाक्षाणां वस्तूनामेकत्वेऽप्यनेकप्रकारकत्वम् । पूर्वपद्ययोः दीनेति कातरा इति श्लोकयोः विषयाणां दीनादीनां परदुःखादीनां चानेकत्वप्रयुक्तमेकस्याश्चित्तवृत्तेः । एकस्य साधोश्चानेक विधत्वम् ।

गरोद्गाराः विषवमनकारिणः । अत्र विद्वदादीनां समानाधिकरणानां सहचराणां भेदेनानेकत्वं, तत्प्रयुक्तम् ।

### बालक्रीड़ा

उपस्कारक यह उल्लेख है अतः अलंकार है । परदुःखादि विषयों की अनेकता से साधुओं में अनेक प्रकारता स्पष्ट ही है । यहाँ भी साधुत्वेन साधुओं को एक माना है ।

विषयों की अनेकता प्रयुक्त एक की अनेकता का उदाहरण दिखाकर अब आश्रयों की अनेकता प्रयुक्त एक की अनेकता का उदाहरण देते हैं । यथा वा-तपस्वी समुदाय के ऊपर शीतल और दुष्टों को तपादेने वाले ताडका शत्रु राम के कटाक्ष मेरे कल्याण के लिए होवें ।

यहां कटाक्षों में अनेक विधत्व है ।

विद्वानों में विमल ज्ञानी, यतियों में विरक्त और आत्मीयो में विषवमन करने वाले खल, पृथ्वी में नानारूप से मौजूद हैं ।

यहाँ विद्वान् आदि सहचरों के भेद से खलों में अनेकविधत्व है । इस प्रकार अन्य सम्बन्धियों के भेद में समझना चाहिए ।

संकीर्णो यथा—

'गगने चन्द्रिकायन्ते, हिमायन्ते हिमाचले ।
पृथिव्यां सागरायन्ते भूपाल तव कीर्तयः ॥'

अत्रोपमया आपाततः प्रतीयमानया पर्यवसितया चोत्प्रेक्षया ।

'उपरि करवालधाराकाराः क्रूरा भुजंगमपुंगवात् ।
अन्तः साक्षाद् द्राक्षागुरवो जयन्ति केऽपि जनाः ॥'

अत्रोपमाव्यतिरेकाभ्यां तयोः समुच्चयेनोत्प्रेक्षया च संकीर्णः ।

### मर्मप्रकाशः

र्थमाह—एवमिति । उपमानात्क्यङो विधानादाह—अत्रोपमेति । तत्रातात्पर्यादाह—पर्यवेति । उत्प्रेक्षयेति । संकीर्ण इति शेषः । भुजंगमेति । सर्वश्रेष्ठादित्यर्थः । सप्तमीसमासः कर्मधारयो वा । द्राक्षेति । द्राक्षाया या माधुर्यदीक्षा तस्या गुरव इत्यर्थः । करवालेत्यत्रोपमा । क्रूरा इत्यत्र व्यतिरेकः । तयोरुपमाव्यतिरेकयोः । मुख इत्यत्राह—उत्प्रेक्षया चेति । द्वयोरुल्लेखयोः संकरमादिपदग्राह्यसंबन्धिभेदप्रयुक्तत्वं च दर्शयितुमुदा-

### मधुसूदनी

उपमयेति । पूर्वमापाततः उपमानादाचारे क्यङः श्रुतेः चन्द्रिकायन्ते इत्यादिषु त्रिषु प्रतीयमानाभिरुपमाभिस्तिसृभिः । पर्यन्ते पर्यवसिताभिरुत्प्रेक्षाभिः संकीर्ण उल्लेख इत्यन्वयः । चन्द्रिकायन्ते इतिप्रतिपदनिष्ठया उपमया उत्प्रेक्षया चेत्येवमेकवचनान्तः प्रयोगः ।

भुजंगमपुंगवादिति । अत्र भुजंगमस्य खलस्यापि पुंगवत्वं श्रेष्ठत्वं प्रतिपादयितुः पण्डितराजस्य बुद्धेर्दौर्बल्याद् भुजंगमपुंगवादित्यत्र "भवति नेह विषमे जः" इति आर्यायां प्रथमेऽर्धे कृतस्य नियमस्य विषमे सप्तमे निषिद्धस्य जगणस्य करणेन भंजनपुरःसरं छन्दोभंगो वर्त्तते । इति । करवालधारा सदृशा इत्युपमा । भुजंगमपुंगवापेक्षया

### बालक्रीड़ा

यह भेद संकीर्ण भी होता है जैसे—हे भूपाल ? तुम्हारी कीर्तियां आकाश में मानों चन्द्रिका के सदृश हैं । हिमाचल में मानों वरफ की जैसी हैं और पृथ्वी पर मानों समुद्र की तरह हैं ।

यहां आपततः प्रतीत होने वाली उपमा और पर्यवसान में जानी गई उत्प्रेक्षा से संकीर्ण उल्लेख है ।

बाहरी भाव से जो तलवार की धारा के सदृश हैं तथा भुजंगमपुंगव से भी क्रूर हैं और अन्तर्भाव में साक्षात् द्राक्षा दीक्षा गुरु हैं । ऐसे कोई ही सज्जन होते हैं ।

यहाँ करवाल में उपमा है, क्रूराः में व्यतिरेक है, इन दोनों के मिलन में समुच्चय है

'यमः प्रतिमहीभृतां, हुतवहोऽसि तन्नीवृतां
सतां खलु युधिष्ठिरो, धनपतिर्धनाकाङ्क्षिणाम् ।
गृहं शरणमिच्छतां कुलिशकोटिभिर्निर्मितं
त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥'

अत्र कविना यमत्वादिना रूपेण राज्ञो रूपवतः करणापद्रूपकेण विपक्ष-भूपालादीनामेतस्मिन्नायाते यमत्वादिना भ्रान्तिरपि संभवतीति भ्रान्तिमता,

### मर्मप्रकाशः

हरति—यम इति । तन्नीवृतां प्रतिपक्षराजजनपदानाम् । कुलिशं वज्रम् । राजानं प्रति कव्युक्तिः । यमत्वादिना भ्रान्तिरपीति शरणेच्छूनां भ्रान्तिवर्णने राजोत्कर्षविरोधीति

### मधुसूदनी

क्रूरत्वे व्यतिरेकः । तयोरुपमाव्यतिरेकयोरेकस्मिन् वाक्यांशे पूर्वार्धे समुच्चयः । द्राक्षासंबन्धिन्यां माधुर्यदीक्षायां गुरव इत्युत्प्रेक्षा । तन्नीवृतामिति । "नीवृज्जनपदः" इत्यमरः । तेषां शत्रूणां ये नीवृतो जनपदाः । तेषां कृते हुतवहोग्निः । शरणं गृहम् । शरणं गृहरक्षित्रोरित्यमरः ।

रूपवतः करणादिति रूपकस्वरूपस्य, भ्रान्तिरपि संभवतीति भ्रान्तिमत्स्वरूपस्य तैः कर्तृभिः तैर्धर्मैरुल्लेखनादिति उल्लेखस्वरूपस्य निर्देशः कृतः । एवं द्विविधो-ल्लेखप्रकारयोर्मध्ये प्रागुक्तोल्लेखप्रकारेण, रूपकेण, भ्रान्तिमता च सह संकीर्णोऽयं

### बालक्रीड़ा

और गुरु में उत्प्रेक्षा है इस तरह उपमा, व्यतिरेक, समुच्चय एवं उत्प्रेक्षा से संकीर्ण यह उल्लेख है ।

"लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः ।"

इस आर्या के लक्षण के अनुसार आर्या के पूर्वार्ध में विषम स्थान में जगण नहीं होता है । किन्तु इस पद्य के सप्तम विषम स्थान "मपुंग" में जगण का विन्यास किया है अतः छन्द के नियम का भंग है जो दोष है । क्योंकि आचार्यों का आदेश है कि

अपि माषं मषं कुर्याच्छन्दोभंगं तु नाचरेत् ।

हे राजन् ? आप शत्रु राजाओं के लिए यम हैं । उनके जिलों को भस्म कर देने वाले अग्नि हैं । सत्पुरुषों के लिए युधिष्ठिर हैं । धन चाहने वालों के लिए धनपति कुवेर हैं । शरण की चाह करने वालों के लिए करोड़ों वज्रों से बने हुए घर हैं । इस तरह एक आप को विधाता ने इस भूतल पर बहुत प्रकार का बना दिया है ।

यहाँ कवि ने यमादि के रूप यमत्वादि से राजाओं को रूपवान् कर दिया है अतः रूपकालंकार, इस राजा के आने पर विपक्षी राजाओं को यमादि विषयक भ्रान्ति भी हो सकती है अतः भ्रान्तिमान् और विपक्षी राजादि अनेक ग्रहीताओं के द्वारा यमत्वादि अनेक

विपक्षभूपालादिभिरनेकैर्ग्रहीतृभिर्यमत्वादिभिरनेकैर्धर्मैरुल्लेखनात्प्रागुक्तोल्लेखप्रकारेण च सह संकीर्णोऽयं षष्ठ्यन्तसबन्धिभेदप्रयुक्तवर्ण्यानेकविधत्वक उल्लेखः।

अत्रेदं बोध्यम्—प्रथमनिरूपितोल्लेखप्रकारे 'यं महाविष्णुरिति वैष्णवाः, शिव इति शैवाः, यज्ञपुरुष इति याज्ञिकाः, स्वभाव इति लोकायतिकाः, ब्रह्मेत्यौपनिषदा वदन्ति सोऽयमादिपूरुषो हरिः' इत्यादौ तत्तद्ग्रहीतृकतत्तत्प्रकारकज्ञानसमुदायस्य चमत्कारजनकतयानुभवसिद्धत्वेनालंकारत्वम्। द्वितीये तु प्रकारे 'यः शिष्टेषु सदयो दुष्टेषु करालः' इत्यादौ तत्तद्विषयभेदभिन्नस्य

### मर्मप्रकाशः

चिन्त्यमिदम्। प्रागुक्तोल्लेखेति। इदमपि चिन्त्यम्। ज्ञानस्यानिबन्धने च ज्ञानपर्यन्तस्य पूर्वोल्लेखस्य कथमप्यत्रासत्त्वात्। नियतव्यञ्जकसामग्र्यभावेनार्थस्यापि तस्यासत्त्वाच्चेति दिक्। इतोऽपि भ्रान्तिरपि संभवतीति चिन्त्यमिति बोध्यम्। विषयाश्रयसहचराणां संबन्धिनामत्र सत्वादाह—सबन्धिषष्ठ्यन्तेति। षष्ठ्यन्तार्थसंबन्धीत्यर्थः। क्वचित्तथैव पाठः। यं प्रकृतं राजानम्। एवमग्रेऽपि। जनकतयेति। इदं ज्ञानं चमत्कारीत्यनुभवाकारः। 'भिन्नप्रकार' इति पाठः। भिन्नत्वं प्रकारविशेषणमात्रव्यवच्छेद्यमाह—

### मधुसूदनी

द्वितीयः उल्लेखः। द्वितीय उल्लेखः कीदृश इत्याह—सबन्धीति। सम्बन्धिनाम्। षष्ठीविभक्तिः "आम्" इति विभक्तिः। सा अन्ते परे येषां ते विषयाश्रयसमानाधिकरणादयस्तेषां भेदैः प्रकारैः प्रयुक्तं यद् वर्ण्यस्यानेकविधत्वं तद् यत्र स उल्लेखो द्वितीयः।

तत्तदिति। ते ते ग्रहीतारो यत्र, ते ते प्रकारा यत्र, तानि यानि ग्रहणानि तेषां समुदायस्य। एवमत्र प्रथमे उल्लेखप्रकारे ज्ञानस्यालंकारत्वमायातम्। तेषां तेषां विषयाश्रयसहचरादीनां भेदैर्भिन्नस्य। तथात्वमलंकारत्वम्। एवमत्र द्वितीये

### बालक्रीड़ा

धर्मों के रूप में राजा का उल्लेखन किया गया है अतः प्रागुक्त उल्लेख के भेद से भी संकीर्ण यह द्वितीय उल्लेख प्रकार है। यहाँ द्वितीय उल्लेख का स्वरूप है कि सम्बन्धी जिनके अन्त में षष्ठी विभक्ति आम् है उन विषय, आश्रय एवं समानाधिकरणादिकों के भेदों से प्रयुक्त जहाँ एक वर्ण्य का अनेकविधत्व है।

यहाँ यह समझिये। प्रथम कहे हुए उल्लेख के भेद "जिसको वैष्णव महाविष्णु, शैव शिव, याज्ञिक यज्ञपुरुप, लौकायतिक बौद्ध स्वभाव और वेदान्ती औपनिषद ब्रह्म कहते हैं वह यह आदि पुरुष हरि है" इत्यादि में तत्तद्ग्रहीतृक तत्तत्प्रकारक ज्ञानसमुदाय अलंकार है। क्योंकि इन स्थलों में ज्ञान की चमन्कारजनकता अनुभव से सिद्ध है। और द्वितीय प्रकार "जो शिष्टों पर दयालु है और दुष्टों पर कराल है" इत्यादि में उन उन विषय, आश्रय एवं सहचरादि

प्रकारसमुदायमात्रस्य तथात्वम्। न तु विद्यमानस्यापि ज्ञानांशस्य; चमत्कारित्वेनाननुभवात्। चमत्कारनिबन्धनो ह्यलंकारभाव उपमादीनाम्। अत एवास्माभिः 'विषयाद्यन्यतमानेकत्वप्रयुक्तमेकस्य वस्तुनोऽनेकप्रकारत्वम्' इति द्वितीय उल्लेखो लक्षितः।

एवं च 'लक्षणद्वयान्यतरत्वमुल्लेखसामान्यलक्षणतावच्छेदम्' इत्याहुः। परे तु 'प्रकारद्वयेऽपि वर्ण्यवृत्तित्वेन भासमानप्रकारसमुदाय एवोल्लेख' इत्यपि वदन्ति।

### मर्मप्रकाशः

न त्विति। अन्यतरत्वस्य गुरुत्वाद् दुर्ज्ञेयत्वाच्चाह—परे त्विति। अनल्पेति। बहुतापा

### मधुसूदनी

प्रकारस्यालंकारत्वम्। न तु ज्ञानांशस्य विद्यमानस्यापि अलंकारत्वम्। ननु ज्ञानांशेऽलंकारत्वं नास्ति तत्कुत इत्याह—चमदिति। चमत्कारित्वेन चमत्कारजनकत्वेन अननुभवात् अनुभवसिद्धेरभावात्। अत्र सिद्धान्तमाह—चमदिति। अलंकारभावोऽलंकारत्वं चमत्कारनिबन्धनः चमत्कारैकहेतुकम्। वर्ण्यवृत्तित्वेन वर्ण्यगतत्वेन भासमानो ज्ञायमानो यः प्रकाराणां समुदायः। महाविष्णुरिति इति ज्ञाने विषयो महाविष्णुत्वं प्रकारः। एवं सर्वत्र बोध्यम्।

उल्लेखस्य सामान्यं साधारणं यल्लक्षणं तद्गता या लक्षणता तदवच्छेदकं लक्षणद्वयान्यतरत्वम्।

अमी अनल्पतापवन्तः कोटिं पापानां कृतवन्तः। गदैन केवलं शीर्णाः संसारदुःखैर्जीर्णा जराव्याधिग्रस्ताः समस्ताः। तरंगैश्चंचलां गगाम्। सुखित्वं तापपापादीनां सद्भावेऽसम्भवम्। इमे च सुखिनः। अतः सुखित्वोक्त्या तापादिनाशकत्व-

### बालक्रीड़ा

भेदों से भिन्न प्रकारसमुदाय अलंकार है। यहाँ ज्ञानांश के रहने पर भी उसमें चत्कार का अनुभव नहीं है। क्योंकि उपमादि में अलंकारत्व चमत्कार के ही वदौलत होता है। इसीलिए विषयादिकों में किसी एक की अनेकता से एक वस्तुगत अनेक प्रकारता को द्वितीय उल्लेख का लक्षण कहा। इस प्रकार कोई लक्षणद्वयान्यतरत्व को उल्लेख के सामान्य लक्षण में रहने वाली लक्षगता का अवच्छेदक कहते हैं। दूसरे तो दोनों भेदों में वर्ण्य में भासमान प्रकारसमुदाय ही उल्लेख है ऐसा भी कहते हैं।

अब उल्लेख की ध्वनि को कहते हैं—अनल्प असंख्य तापों से सन्तप्त करोड़ों पापों को करने वाले अतएव रोगों से शीर्ण और संसार के दुःखों से जीर्ण हुए ये समस्त जीव चंचल तरंगों वाली गंगा को देखकर स्पर्श कर उसमें स्नान कर दुःखों से विमुक्त हो सुखी हो जाते हैं।

अथोल्लेखस्य ध्वनिः—

यथा—

'अनल्पतापाः कृतकोटिपापा गदैकशीर्णा भवदुःखजीर्णाः।
विलोक्य गङ्गां विचलत्तरङ्गाममी समस्ताः सुखिनो भवन्ति॥'

अत्र पूर्वार्धोदीरितानां चतुर्णां विलोकनकर्तॄणां सुखित्वोक्त्या क्रमेण तापपापरोगभवनाशकत्वप्रकारकाणि ग्रहणान्याक्षिप्यन्ते। अयं च शुद्धस्योल्लेखस्य ध्वनिः।

संकीर्णस्य यथा—

'स्मयमानाननां तत्र तां विलोक्य विलासिनीम्।
चकोराश्चञ्चरीकाश्च मुदं परतरां ययुः॥'

अत्र ध्वन्यमानया एकैकग्रहणरूपया भ्रान्त्या तदुभयसमुदायात्मा

**मर्मप्रकाशः**

इत्यर्थः। गदैकेति। रोगप्रधानेत्यर्थः समासः। प्राग्वत्। विचलदिति। 'विवलत्' इति पाठान्तरम्। अर्थस्तु तुल्यः। स्मयेति। सख्युक्तिर्नायकोक्तिर्वा। एकैकेति। चन्द्रत्वेन पद्म-

**मधुसूदनी**

प्रकारकाणि ग्रहणानि ज्ञानानि आक्षिप्तानि ध्वनितानि। चकोराः, चंचरीका अनेके ग्रहणकर्त्तारः। अनेकधा प्रथमेषां चन्द्रत्वेन ग्रहणं, द्वितीयेषां पद्मत्वेन। इति उल्लेखस्वरूपम्। पूर्वेषां स्मयमानमाननं पूर्णचन्द्र इति धीः। द्वितीयेषां तदाननं प्रफुल्लं पद्ममिति बुद्धिः। इत्येवमेकैकं ग्रहणं भ्रान्तिस्वरूपम्। एतेन

**बालक्रीड़ा**

यहाँ पूर्वार्ध में कहे हुए चारों विलोकन कर्त्ताओं को सुखी कहने से क्रमशः ताप, पाप, रोग एवं भव के नाशरूप प्रकारों वाले ग्रहणों का आक्षेप होता है अर्थात् अनल्पतापियों का तापनाशकत्व, पापियों का पापनाशकत्व, रोगियों का रोगनाशकत्व और संसारियों का संसार नाशकत्व प्रकारों में ग्रहण ध्वनित होता है। यह शुद्ध उल्लेख की ध्वनि है।

संकीर्ण उल्लेख की ध्वनि जैसे=स्मयमानानना उस विलासिनी को देखकर चकोर एवं चञ्चरीक अत्यन्त प्रसन्न हुए। चकोर समझता है यह पूर्ण चन्द्र है। भ्रमर समझता है कि यह खिला हुआ कमल है। यही भ्रान्ति का स्वरूप है।

यहाँ चकोर एवं चंचरीक ग्रहीताओं की एक-एक ग्रहण रूप भ्रान्ति ध्वनित होती है। उन दोनों ग्रहणों का समुदाय रूप उल्लेख ध्वन्यमान भ्रान्ति से संकीर्ण है। यहाँ भ्रान्ति का ही चमत्कार अनुभूयमान है अतः उल्लेख का अपह्नव नहीं किया जा सकता है। क्योंकि अन्य अलंकारों से विविक्त स्थान वाले अनेक कर्त्ताओं का अनेकधाग्रहण रूप उल्लेख का चमत्कार भी यहाँ अनुभूयमान है।

उल्लेखः संकीर्णः। न चात्र भ्रान्तेरेव चमत्कार इति शक्यापह्नव उल्लेखः। अनेककर्तृकानेकधाग्रहणस्यालंकारान्तरविविक्तविषयस्य चमत्कृते रिहापि सत्त्वात्।

द्वितीयस्योल्लेखस्य ध्वनिर्यथा—

'भासयति व्योमगता जगदखिलं कुमुदिनीर्विकासयति।
कीर्तिस्तव धरणिगता सगरसुतायासमफलतां नयते॥'

अत्राधिकरणभेदप्रयुक्तमेकस्यामेव कीर्तौ चन्द्रिकात्वसागरत्वरूपानेकविधत्वं रूपकसंकीर्णं ध्वन्यते।

इति रसगङ्गाधर उल्लेखप्रकरणम्।

## मर्मप्रकाशः

त्वेन च ग्रहणेत्यर्थः। शक्येति। नैवात्रोल्लेखोऽस्तीत्यर्थः। विषयस्य चमदिति। जन्यत्वे षष्ठ्यर्थश्चमत्कृतावन्वेति। व्योमेति गतिकर्म। कुमुदिनीरितिविकासकर्म। सगरेति। सगरसुतप्रयासमित्यर्थः। सागरकार्यस्य कीर्त्यैव संपादितत्वादिति भावः। रूपकेति। चन्द्रसागररूपकेत्यर्थः॥ इति रसगङ्गाधरमर्मप्रकाश उल्लेखप्रकरणम्॥

## मधुसूदनी

उल्लेखस्य अपह्नवः शक्यो नेति भावः। विषयस्य चमत्कृतिः विषयजन्या चमत्कृतिस्तेभ्यो विविक्तो विषयः चमत्कारीत्यर्थः।

भासेति। व्योमगता तव कीर्तिरित्यन्वयः। धरणिगता सा सगरसुतानामाया समसफलं करोति इति सम्बन्धः। अतएव सागरकार्यस्य कीर्त्यैव सम्पादनादिति नागेशमहाशयाः। अधिकरणं व्योम। तत्र कीर्तिश्चन्द्रिका। अधिकरणं धरणिः। तत्र कीर्तिः सागरः। इत्येवमधिकरणभेदप्रयुक्तमनेकविधत्वग्रहणमेकस्याः कीर्त्तेरिति उल्लेखस्वरूपम्। तत्प्रयुक्तं तस्यां सागरत्वस्य चन्द्रिकात्वस्य आरोप इति रूपकस्वरूपम्। एवं रूपकसंकीर्ण उल्लेखो ध्वन्यते।

इति रसगंगाधरे मधुसूदन्यामुल्लेखप्रकरणं समाप्तम्।

## बालक्रीड़ा

द्वितीय उल्लेख की ध्वनि जैसे—हे राजन्! आकाश में व्याप्त आपकी कीर्ति अखिल जगत् को प्रकाशित करती है और कुमुदिनी को विकासित करती है। धरणी पर फैली हुई वह सगरसुता गंगाजी के आयास को निष्फल कर देती है।

यहाँ अधिकरण के भेद से एक ही कीर्ति में चन्द्रिकात्व और सागरत्व रूप अनेक विधत्व प्रकारत्व, रूपक से संकीर्ण हुआ ध्वनित होता है।

इति रसगंगाधर में बालक्रीडा में उल्लेख प्रकरण समाप्त हुआ।

अथापह्नुतिः—

उपमेयतावच्छेदकनिषेधसामानाधिकरण्येनारोप्यमाणमुपमानतादात्म्यमपह्नुतिः ॥

रूपकवारणाय तृतीयान्तम् । अस्यां चोपमेयतावच्छेदकस्य निषेधादुपमेयतावच्छेदकोपमानतावच्छेदकयोर्विरोधो गम्यते । रूपके तु तयोः सामानाधिकरण्यप्रत्ययात्स निवर्तते ।

### मर्मप्रकाशः

अपह्नुतिं लक्षयति—अथेति । छेदकेति । तस्य निषेधेऽन्वयः । रूपकवारणायेति भ्रान्त्यादेरप्युपलक्षणम् । तदुपपादयति—अस्यां चेति । स विरोधः ।

### मधुसूदनी

अथ अपह्नुतिं लक्षयति ।

उपमेयतावच्छेदकस्य मुखत्वादेर्यो निषेधः । तत्सामानाधिकरण्येन तन्निषेधतादात्म्ययोरेकं यदधिकरणं तत्वेन आरोप्ययाणमुपमानतादात्म्यमपह्नुतिः ।

अस्यामपह्नुतौ । उपमेयतावच्छेदकस्य नायं सुधांशुरिति सुधांशुत्वस्य निषेधात् । किं तर्हि, अयं; व्योमगंगासरोरुहमिति स्थापनात् । उपमेयतावच्छेदकस्य (मुखत्वादेः) उपमानतावच्छेदकस्य (चन्द्रत्वादेः) विरोधो गम्यते । रूपके स विरोधो दूरीभवति सामानाधिकरण्यस्य प्रत्ययात् । निषेधस्याप्रत्ययाच्च ।

### बालक्रीड़ा

अब अपन्हुति के लक्षण का आरम्भ करते है । जहां उपमेयतावच्छेदक के निषेध के साथ साथ २ उपमानतादात्म्य आरोप्यमाण रहे वह अपन्हुति है ।

अपन्हुति के लक्षण का रूपक के लक्ष्य में प्रवेश के वारण करने के लिए उपमेयतावच्छेदकनिषेधसामानाधिकरण्येन इस तृतीयान्त पदका लक्षण में निवेश किया । इस अपन्हुति में उपमेयतावच्छेदक के निषेध से उपमेयतावच्छेदक और उपमानतावच्छेदक का विरोध मालूम पड़ता है । रूपक में तो उनका सामानाधिकरण्य प्रतीत होता है अतः वह विरोध नहीं मालूम पड़ता है । क्योंकि वह निवृत्त हो जाता है । जहाँ निषेध होता है, जैसे मुखं न चन्द्रः में चन्द्रत्व समानाधिकरण मुखत्व नहीं रहता है तो मुखत्व समानाधिकरण चन्द्रत्व भी नही रहता है अतः विरोध स्पष्ट है । मुखं चन्द्रः में आकांक्षादि रूप व्युत्पत्ति के अनुरोध से नामार्थ में अभेदान्वय होता है या लक्षणा के अनुरोध से चन्द्रत्वसमानाधिकरण गुणवान् मुख है यह प्रतीति होती है अतः विरोध नहीं होता है । इसी एक विशेषण से भ्रान्तिमान्, ससन्देह एवं उल्लेख का भी वारण हो गया ।

उदाहरणम्—

'स्मितं नैतत्किं तु प्रकृतिरमणीयं विकसितं
मुखं ब्रूते मूढः कुमुदमिदमुद्यत्परिमलम् ।
स्तनद्वन्द्वं मिथ्या कनकनिभमेतत्फलयुगं
लता रम्या सेयं भ्रमरकुलनम्या न रमणी ॥'

इयं चानुग्राह्यानुग्राहकभावापन्नावयवकसंघातात्मकतया सावयवा ।

निरवयवेयं यथा—

श्यामं सितं च सुदृशो न दृशोः स्वरूपं
किं तु स्फुटं गरलमेतदथामृतं च ।

### मर्मप्रकाशः

भ्रमरकुलनम्येत्येतदंशेऽतिशयोक्तिरिति प्रक्रमभङ्गोऽत्र काव्य इति बोध्यम् । अत्र स्पष्टत्वाल्लक्षणसमन्वयमुपेक्ष्य भेदमाह—इयं चेति । उदाहृता चेत्यर्थः । वयवकेति । बहुव्रीहिणा

### मधुसूदनी

प्रकृतीति । प्रकृत्या स्वभावतो रमणीयम् । उद्यन् परिमलो यत्रेति । इदम् एतत् पुरोदृश्यमानम् । इयं रमणी न किन्तु भ्रमरकुलनम्या रम्या सा लता । एतत् स्मितं न किन्तु विकसितमित्येवं पूर्वं निषेधस्य पश्चादारोप्यमाणस्य यः प्रक्रमः आसीत् स चतुर्थ पादे आरोप्यमाणस्य पूर्वं, निषेधस्य पश्चात् करणाद् भंगतां नीतः । अतः प्रक्रमभंमो दोषोऽत्र काव्ये बोध्यः । भ्रमरकुलनम्येत्येतदंशेऽतिशयोक्तिरिति नागेश कथितिर्न रम्या । न रमणीत्यनेन रमणीरूपस्य विषयस्य प्रतिपादनेन निगरणाभावात् । अनुग्राह्यानुग्राहकभावमापन्ना अवयवा यत्र एवम्भूतो यः संघातस्तदात्मकतया तत्स्वरूपतया सावयवाऽपह्नुतिरियम् ।

### बालक्रीड़ा

उदाहरण जैसे—यह स्मित ईषद् हास्य नही है किन्तु प्रकृति के सुन्दर कुसुमों का विकास है । यहाँ प्रकृति कुसुमानां विकसितम् । पाठ उचित था । अथवा कोई मूढ़ इसको मुख कहता है किन्तु यह सौरभ सम्पन्न कुमुद है रात्रिकमल है । कनक अस चमकने वाला यह कुचों का जोड़ा है कहना, झूठ है; यह तो फलों का जोडा है । यह रमणी नही है यह तो भ्रमर कुल के बैठने से झुक जाने वाली रमणीय लता है । यह अनुग्राह्य एवं अनुग्राहक भाव को प्राप्त होने वाले अवयवों का संघात स्वरूपा है अतः सावयवा अपन्हुति है । यहां स्मित नही है, मुख नहीं है, स्तन नही है इस तरह तीनों पादों में निषेध प्रकान्त रहा उसको चौथे पाद में भग्न कर दिया अतः भग्नप्रक्रम दोष हो गया । और रमणीपद से रमणीरूप विषय का उपादान है निगरण नही है अतः अतिशयोक्ति नहीं है ।

यह अपह्नुति निरवयवा जैसे—यह श्याम और सित (सफेद) नायिका के नयनों

नो चेत्कथं निपतनादनयोस्तदैव
मोहं मुदं च नितरां दधते युवानः ॥'

अत्र प्रतिज्ञातार्थवैपरीत्ये बाधकोपन्यासाद्धेत्वपह्नुतिः। अस्यां च नञा-दिभिः साक्षात्परमतसिद्धत्वाद्युपन्यासैश्च किंचिद्व्यवधानेन विषयस्य निषेधे बोध्यमाने प्रायशो वाक्यस्य भेदः। मिषच्छलच्छद्मकपटव्याजवपुरात्मादि-शब्दैस्तु तस्मिंस्तस्यैक्यम्। क्वचिदपह्नवपूर्वकत्वं क्वचिच्चारोपपूर्वकत्वं क्वचि-

### मर्मप्रकाशः

संघातविशेषणे। श्याममिति। अंशभेदेनेति भावः। कव्युक्तिरियम्। विपक्षे बाधकमाह—नो चेदिति। अनयोर्दृशोः। तदैव पतनकाल एव। 'सदैव' इति पाठान्तरम्। अत्र निरवयवत्वस्य सत्त्वात्प्राग्वदाह—अत्रेति। किञ्चिदिति। भ्रान्त्यादीत्यर्थः। तस्मिन् तन्निषेधे। तस्य

### मधुसूदनी

अनयोर्गरलामृतरूपयोर्दृशोः। तदैव पतनकाल एव। प्रतिज्ञातोऽर्थः दृशोः गरलत्वममृतत्वं च। तस्य विपरीतो विपक्षो गरलत्वाभावः अमृतत्वाभावः। तस्मिन् बाधकं नो चेत् कथं युवानो मोहं मुदं च दधते। इति तस्य उपन्यासात्। प्रतिज्ञातार्थ-साधकोपन्यासादिति तु परमार्थः।

परमतस्य वनितेति वदन्त्येनां लोकाः सर्वे वदन्तु ते इत्येवं सिद्धत्वेन उपन्यासैः। किंचिद् व्यवधानेन गम्यमानत्वं निषेधे। तस्मिन् मिषादिशब्दैर्बोध्यमाने निषेधे तस्यापह्नुतिबोधकवाक्यस्य ऐक्यम्। एवमसत्यत्वप्रतिपादकैर्मिषादिशब्दैः पश्यत इत्यादिभिश्च निषेधो व्यंग्यः। नञादिस्थले स वाच्यः।

अपह्नवपूर्वकत्वमारोपस्येति शेषः। आरोपपूर्वकत्वं निषेधस्येति शेषः। एकस्य

### बालक्रीड़ा

का स्वरूप नहीं है किन्तु साफ-साफ ये जहर और अमृत हैं। अगर ये जहर और अमृत नहीं होते तो इन नयनों के पतन होते ही गरल का कार्य मोह और अमृत का कार्य मोह युवकों में कैसे होता।

इस तरह प्रतिज्ञात अर्थ के विपरीत बाधक अर्थ के उपन्यास करने से यहाँ हेत्वपह्नुति है। इसमें नञ् आदि से साक्षात् विषय के निषेध का बोध होता है। दूसरे के मत का "वे ऐसा कहते हैं मैं नहीं कहता हूँ" इस तरह सिद्धत्वेन उपन्यास करने तथा मिष, छल, छद्म, कपट, व्याज, वपु एवं आत्मा आदि शब्दों के प्रयोग में कुछ व्यवधान से विषय के निषेध का आर्थ बोध होता है। किन्तु इतनी विशेषता है कि नञादि और परमतोपन्यास स्थल में वाक्य भेद होता है और असत्यत्वप्रतिपादक मिषादि शब्दों के तथा जिनका स्वरूप असत्य प्रति-पादन में पर्यवसित होता है उन नाम भंगी आदि शब्दों के प्रयोग में भी एक वाक्य होता है।

जहाँ वाक्यभेद होता है वहाँ कहीं पर अपह्नव पूर्वक आरोप होता है एवं आरोप

द्विषयिताद्रूप्यविषयनिषेधयोरेकस्य शाब्दत्वमेकस्यार्थत्वं क्वचिदुभयोः शाब्द-त्वमथोभयोरार्थत्वं विधेयत्वमनुवाद्यत्वं चेति। एवमनेके प्रकाराः संभवन्ति। परं तु न ते वैचित्र्यविशेषमावहन्तीत्यगणनीयाः। एवमपि दिङ्मात्रमुप-दर्श्यते—तत्र प्रागुक्तायां सावयवापह्नुतौ प्रथमावयवेऽपह्नवपूर्वकत्वमुभयोः शाब्दत्वं विधेयत्वं वाक्यभेदश्च। द्वितीयावयवे तु वक्तृगतमूढतोक्त्या तद्गत-भ्रान्तिप्रतिपत्तिव्यवहिता निषेधप्रतिपत्तिरिति निषेध आर्थः। ताद्रूप्यं

## मर्मप्रकाशः

वाक्यस्य। निषेधयोरिति। मध्य इति शेषः। अथेति। क्वचिदित्यर्थः। अनुवाद्यत्वं चेति। उभयोरप्यनुवाद्यत्वं विधेयत्वं चेत्यर्थः। क्वचिदित्यस्यानुषङ्गः। उदाहरणाभावनिरासायाह—एवमपीति। चमत्कारित्वाभावेऽपीत्यर्थः। दर्श्यत इति। उक्तप्रकारजातमिति शेषः। तत्र तेषां मध्ये।प्रथमेति। स्मितमिति पादप्रतिपाद्य इत्यर्थः। अपह्नवेति। निषेधस्य प्रागुल्लेखादिति भावः। उभयोस्ताद्रूप्यनिषेधयोः। अस्य त्रिष्वन्वयः। एतत्पदार्थस्योद्देश्यत्वादाह—विधेयेति। द्वितीयेति। मुखमिति पादप्रतिपाद्य इत्यर्थः। तुरुक्तवैलक्षण्ये। तदेवाह—वक्तृगतेति।

## मधुसूदनी

ताद्रूप्यस्य वा निषेधस्य वा। शाब्दत्वस्थलेऽपि विधेयत्वमनुवाद्यत्वमनुषक्तम्। आर्थत्वस्थलेऽपि तत्तथेति बोध्यम्। उभयोर्निषेधताद्रूप्ययोः क्वचिद् विधेयत्वं क्वचिदनुवाद्यत्वं च। एवमपि वैचित्र्यविशेषाभावादगणनीयत्वेऽपि। प्रकाराणां दिगेव उपदर्श्यते। तत्र तेषु प्राक् पूर्वं स्मितं नैतदित्येवमुक्तायाम्। प्रथमावयवे श्लोकप्रथमपादप्रतिपाद्यावयवगतापह्नुतौ। द्वितीयेति श्लोक द्वितीयपादेत्यर्थः। तृतीयावयवे यत्तु कश्चित् स्तनद्वन्द्वं ब्रूते तन्मिथ्येति दिशा द्वितीयावयववत्कथेति नोक्तं किंचित्।

## बालक्रीड़ा

पूर्वक अपह्नव होता है ऐसे दो भेद होते हैं। कहीं पर विषयिताद्रूप्य अर्थात् आरोप्यमाण उपमानतादात्म्य, विषयनिषेध उपमेयतावच्छेदक निषेध इन दोनों में से कोई एक शाब्द रहेगा या कोई एक आर्थ रहेगा। या दोनों शाब्द रहेंगे या दोनों आर्थ रहेंगे। और विधेयत्व भी अनुवाद्यत्व भी उनमें रहेगा। इस तरह अनेक प्रकार हो सकते हैं। किन्तु उनमें कोई खास वैचित्र्य नहीं है अतः वे गणना के योग्य नहीं है। गणना के योग्य न रहने पर थोड़े से भेदों को दिखाते हैं।

पहले कही हुई "स्मितं नैतत्" इस पद्य की सावयव अपह्नुति में प्रथम अवयव अर्थात् श्लोक के प्रथम चरण से प्रतिपाद्य स्मित जो अवयविनी रमणी के वर्णन में प्रथम अंश है उसका अपह्नव पूर्व में हैं पश्चात् विषयी का ताद्रूप्य है। निषेध और आरोप दोनों शाब्द हैं विधेय हैं और भिन्न-भिन्न वाक्यों में कहे गये हैं अतः वाक्यभेद भी यहाँ है। द्वितीय अवयव उक्त श्लोक के द्वितीय चरण से प्रतिपाद्य मुख जिसमें वक्ता की मूढता के कहने से

शाब्दम् । विधेयत्ववाक्यभेदापह्नवपूर्वकत्वानि पूर्ववत् । चतुर्थावयवे पुनरारोपपूर्वकोपह्नवः । उभयोः शाब्दत्वविधेयत्वे वाक्यभेदश्च प्रथमवदेव ।

'वदने विनिवेशिता भुजंगी पिशुनानां रसनामिषेण धात्रा ।
अनया कथमन्यथावलीढा नहि जीवन्ति जना मनागमन्त्राः ॥'

अत्रैकवाक्यत्वं निषेधताद्रूप्ययोरार्थत्वमनुवाद्यत्वं च । निवेशनस्य विधेयत्वात् । एवमन्यदप्यूह्यम् । अत्र च लक्षणे आरोप्यमाणमित्यस्याहार्यनिश्चयविषयीक्रियमाणमित्यर्थः । तेन

## मर्मप्रकाशः

स्तनद्वन्द्वमिति पादप्रतिपाद्यतृतीयावयवस्य द्वितीयेन तुल्यत्वात्तमुपेक्ष्याह—चतुर्थेति । लतेति पादप्रतिपाद्य इत्यर्थः । पुनः शब्दो वैलक्षण्ये । वाक्यैक्यस्योदाहरणं सप्रकारभेदमाह— वदन इति । अनया रसनया । अमन्त्रा जीवनोपायशून्याः । 'आर्थत्वमनुवाद्यत्वं च' इत्येव युक्तः पाठः । 'विधेयत्वं च' इत्यपपाठः । अत एवाह—निवेशनेति । आहार्यत्वनिवेशफलमाह—तेनेति ।

## मधुसूदनी

अनया रसनारूपया भुजंग्या । अन्यथा रसनारूपभुजंगीं विना । अमन्त्रा मन्त्राद्युपायरहिताः । मनागपि स्वल्पमपि । रसनामिषेणेति । इत्यत्र मिषपदोपन्यासात् रसना, रसना नेति निषेधस्यार्थत्वं भुजंगीत्यारोप्यमाणस्य शाब्दत्वम् । अनुवाद्यत्वं पुनरुभयोः । उभयोरनुवाद्यत्वे हेतुमाह-निवेशनक्रियाया विधेयत्वात् । तेन आहार्यनिश्चयविषयीक्रियमाणार्थत्वेन हेतुना । तत्र पूर्वं निश्चये आहार्यत्व

## बालक्रीड़ा

वक्ता की भ्रान्ति मालूम मुख्य रूप से पड़ती है उससे व्यवहित अर्थात् उसके बाद निषेध की प्रतिपत्ति होती है अतः निषेध आर्थ है । ताद्रूप्य शाब्द है । विधेयत्व, वाक्यभेद एवं अपह्नव पूर्वकत्व तीनों प्रथम अवयव की तरह है । तृतीय अवयव उक्त श्लोक के तृतीय चरण से प्रतिपाद्य स्तनद्वन्द्व जिसको असत्य बतला कर बहाने से निषेधकोटि में लिया है उसमें निषेध आर्थ है ताद्रूप्य, विधेयत्व, अपह्नवत्व और वाक्यभेद द्वितीय अवयव की तरह ही हैं अतः कहा नहीं । चतुर्थ अवयव में आरोप पूर्वक अपह्नव है यह विशेषता है । बाकी शाब्दत्व, विधेयत्व एवं वाक्यभेद, निषेध तथा ताद्रूप्य सब प्रथम अवयव की तरही है ।

ब्रह्माजी ने चुगुल खोरों के मुँह में जिह्वा के बहाने साँपिन को रख दिया है । यदि यह बात नहीं होती तो इस रसना से चाट लिए गये प्राणी निरुपाय होकर क्यों मर जाते ।

यहाँ एक वाक्य है और निषेध एवं ताद्रूप्य में विधेयत्व तथा अनुवाद्यत्व है । विधेयत्व नहीं है क्योंकि निवेशन को विधेय कहा है । इस तरह और भी समझें ।

यहाँ लक्षण में "आरोप्यमाणम्" पद का "आहार्य निश्चयविषयीक्रियमाणम्" यह अर्थ है । इस अर्थ के कारण—

'सङ्ग्रामाङ्गणसंमुखाहतकियद्विश्वंभराधीश्वर-
व्यादीर्णीकृतमध्यभागविवरोन्मीलन्नभोनीलिमा ।
अङ्गारप्रखरैः करैः कवलयन्सद्यो जगन्मण्डलं
मार्तण्डोऽयमुदेति केन पशुना लोके शशाङ्कीकृतः ॥'

अत्र विरहिजनवाक्ये नायं शशाङ्कः, अपि तु सच्छिद्रो मार्तण्ड इति तु

मर्मप्रकाशः

तैर्नाशितमध्यभागेन यद्विवरं तस्मादुन्मीलन्प्रकाशमान आकाशनैल्यगुणो यस्येत्यर्थः। अङ्गारतीक्ष्णकिरणैरित्यर्थः ।

मधुसूदनी

विशेषणनिवेशफलमाह-संग्रामेति । इदं पद्यं, नैषधीयचरितस्य द्वितीयसर्गस्य पंचविंशतिसंख्याकस्य

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा
कृतमध्यबिलं विलोक्यते धृतगम्भीरखनी खनीलिम ।

एतस्य छायामात्रम् । संग्राम एवाङ्गणं तत्र संमुखे आहता मृता ये कतिपये विश्वम्भराधीश्वरास्तैर्व्यादीर्णीकृतो भेदितो यः सूर्यस्य मण्डलस्य मध्यभागः तथा च श्रुतिः—"सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः पुरुषो ह्यव्ययात्मा" इति । उक्तं च=द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः । इति

तेन जातं यद् विवरं बिलं, (मध्यमपदलोपी समासः) तस्मादुन्मीलन् दृश्यमानो नभसो नीलिमा यत्र स मार्तण्डः । अंगारवत्प्रखरैस्तीक्ष्णैः करैः किरणैः । केन

बालक्रीड़ा

संग्राम रूपी आँगन में संमुख लड़ाई करके मरे हुए राजाओं के द्वारा फोड़ दिये गये मध्य भाग के छिद्र से आकाश की नीलिमा जिसमें दिखाई पड़ती है वह यह सूर्य, अंगारों की तरह तीक्ष्ण किरणों से जगन्मण्डल को सद्यः कवलित करता हुआ उदित हो रहा है । लोक में किस पशु ने इस को चन्द्रमा कहा । यहाँ का भाव है कि दाहकतत्व को आनन्दक किसने कहा अतः "चन्द्रोऽयमुक्तीकृतः" यह पाठ यहाँ फिट होता है ।

लोके पद से प्रकृत अर्थ की कोई भी पुष्टि नही हैं अतः अपुष्टार्थत्व दोष इसमें है । शशांकीकृतः इसका प्रकृत दाहक को आनन्दक कथन में अभिमत योग नहीं हो रहा है । जो खरहे को गोद में लिए हुए है उसका प्रखरकिरण वाले मार्त्तण्ड के प्रसंग में कहने की कौन तुक है अतः इससे कवि का रचनादारिद्रय ही प्रकट होता हे ।

यहाँ विरही जन के वाक्य में यह शशांक नही है अपितु सच्छिद्र मार्त्तण्ड है ऐसी अपह्नुति की छाया ही केवल प्रतीत होती है न कि अपह्नुति अलंकार प्रतीत होता है ।

च्छायामात्रमपह्नुतेः, न त्वपह्नुत्यलंकारः। तज्ज्ञानस्य दोषविशेषजन्यत्वेनानाहार्यत्वात्। किं तु भ्रान्त्यलंकार एव।

'अलिर्मृगो वा नेत्रं वा यत्र किंचिद्विभासते।
अरविन्दं मृगाङ्को वा मुखं वेदं मृगीदृशः॥'

इत्यत्र मुखमरविन्दं वेति कविनिष्ठाहार्यसंशये मुखनिषेधसामानाधिकरण्येन विषयीभवतोऽरविन्दतादात्म्यस्य निश्चयविषयत्वाभावान्न संग्रहः। न चात्र विषयनिषेधस्यापदार्थत्वं शङ्क्यम्। वाशब्दार्थत्वात्। यत्तु कुवलया-

### मर्मप्रकाशः

छायामात्रं सादृश्यमात्रम्। निश्चयत्वनिवेशफलमाह—अलिरिति। व्याख्यातमिदम्। अपदार्थत्वं कथमपि पादप्रतिपाद्यत्वम्। वाशब्देति। विकल्पद्वारा

### मधुसूदनी

पशुनेति मार्त्तण्डस्य शशाङ्कीकर्त्तारं प्रत्यसूया व्यज्यते। छायामात्रं केवलं सादृश्यम्। तज्ज्ञानस्य नायं शशाङ्कः, अपितु सच्छिद्रो मार्तण्ड इति विरहिणो बुद्धेः दोषविशेषेणोन्मादेन जन्यतयाऽनाहार्यत्वात् स्वाभाविकत्वात्। अपह्नुतौ तु आहार्यत्वम्। एवमाहार्यत्वनिवेशफलमुक्त्वा निश्चयत्वनिवेशस्य फलमाह-अलिरिति। अत्र मुखं वा अरविन्दं वेति कविनिष्ठ आहार्यः संशयः। तत्र संशये विषयीभवदरविन्दतादात्म्यं मुखं नेदं किन्तु अरविन्दमित्येवं मुखनिषेधसामानाधिकरण्येन निश्चयविषयीभवन्नास्ति इति न तादात्म्यस्यापह्नुतित्वेन संग्रहः स्वीकारः। न च शंक्यम्। किन्न

### बालक्रीड़ा

क्योंकि यह शशांक नहीं है अपि तु सच्छिद्र मार्तण्ड है ऐसा ज्ञान विरही को दोषविशेष उन्माद से हो रहा है अतः आहार्य नहीं है। अतः अपह्नुति भी नहीं है किन्तु भ्रान्तिमान् अलंकार है।

जहाँ भ्रमर है या मृग है अथवा मृगनयना का नेत्र है ऐसा कुछ मालूम पड़ता है। अरविन्द है, मृगांक है अथवा मृगनयना का मुख है ऐसा कुछ मालूम पड़ता है।

यहाँ अरविन्द तादात्म्य जो, मुख है अथवा अरविन्द इस रूप में कविनिष्ठ आहार्य संशय का विषय हो रहा है, वह अरविन्द तादात्म्य "मुखं नेदं किन्तु प्रकृतिरमणीयं सरसिजम् इस तरह मुखनिषेध के साथ-साथ निश्चय का विषय नहीं होता है अतः इसका अपह्नुति के रूप में संग्रह स्वीकार नहीं है। शंका=यहाँ विषय निषेध "मुखं नेदम्" इस प्रकार वर्ण्य का प्रतिषेध पद्यगत किसी भी पद का अर्थ नहीं है। ऐसी स्थिति में निषेध के साथ २ तादात्म्य का निश्चय कैसे होगा। उत्तर। ऐसी शंका नही करना चाहिए। क्योंकि विकल्पार्थक वा शब्द का व्यंग्य वह निषेध है।

जो तो कुवलयानन्द ग्रन्थ में अप्पय्य दीक्षितजी ने अपन्हुति के भेदों के कहने के प्रसंग

नन्दाख्ये संदर्भे अप्पय्यदीक्षितैरपह्नुतिप्रभेदकथनप्रस्तावे पर्यस्तापह्नुत्याख्यं भेदं निरूपयद्भिरभिहितम्—

'अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः ।
नायं सुधांशुः, किं तर्हि, सुधांशुः प्रेयसीमुखम् ॥' इति ।

अत्र चिन्त्यते—नायमपह्नुतेर्भेदो वक्तुं युक्तः । अपह्नुतिसामान्य-

मधुसूदनी

शंक्यमित्याह-विषयेति । विषयनिषेधः मुखं नेदमिति वर्ण्य प्रतिषेधः । अपदार्थः अलिर्भृंगो वेति पद्यगतस्य कस्याऽपि पदस्यार्थो नास्ति ततो निषेधसामानाधिकरण्येन तादात्म्यस्य निश्चयविषयता कथं स्यादिति न शंक्यम् । विकल्पार्थकेन वा शब्देन निषेधस्य व्यंग्यत्वात् ।

अन्यत्रेति । तत्र अन्यत्रेति पदमशुद्धम् । अलंकारशास्त्रे अप्रकृतादिपदेनान्यपदेन च उपमानस्यैव ग्रहणात् । प्रकृतादिपदेन उपमेयस्यैव । अतः अन्यत्रेति पदस्थाने "प्रकृते" इति पदं बोध्यम् । स अपह्नवो निषेधः ।

एतदनुसारेणैव व्याख्यान्ति च दीक्षिताः । तस्येति पदस्य धर्मस्येत्यर्थः । तथा च यत्र क्वचित् वस्तुनि तद्वस्तुसम्बन्धिधर्मनिषेधः प्रकृते वर्णनीये वस्तुनि तस्यान्यवस्तुनो धर्मस्य आरोपार्थः । उदाहरणम्=नायं सुधांशुः, किं तर्हि, सुधांशुः प्रेयसीमुखम् । अत्र क्वचिद् वस्तुनि चन्द्रे चन्द्रसम्बन्धिचन्द्रत्वधर्मस्य नायं सुधांशुरित्येवं निषेधः निह्नवः । वर्णनीये प्रेयसीमुखे तस्य चन्द्रवस्तुधर्मस्य चन्द्रत्वस्य आरोपार्थः । अतः पर्यस्तापह्नुतिः परिवर्तितापह्नुतिः ।

अत्र चिन्त्यते पण्डितराजस्य चिन्तने । किमर्थमियं चिन्ता सर्वतः पवित्रे पदार्थे महात्मनामिति न वयं विद्मः । भगवन्तः ? पण्डितराजाः ? इयं पर्यस्तापह्नुतिः ।

बालक्रीड़ा

में पर्यस्तापन्हुति का निरूपण करते हुए कहा कि "अन्य में अन्य के धर्म का निह्नव अन्य के धर्म के आरोप के लिए है" इस वाक्य की यह भाषा वे तुकी हो रही है । क्योंकि अलंकार शास्त्र में अन्य अप्रकृत अवर्ण्य पदों का उपमान के लिए व्यवहार होता है एवं उपमेय के लिए प्रकृत वर्ण्य पदों का प्रयोग होता है अन्य पद का प्रयोग नहीं होता है प्रत्युत अन्य पद का प्रयोग वर्ण्य अर्थ में अशुद्ध हो जाता है अतः यहाँ "प्रकृते" पद होना चाहिए । 'धर्मनिह्नवः" यह अंश पूर्व से चला आरहा है । यह अपन्हुति का सामान्य लक्षण है । उपमेय के धर्म का निन्हव यहां होता है । किन्तु यह पर्यस्तापन्हुति है यहाँ अपन्हव पर्यस्त माने परिर्वात्तत हो गया है अतः उपमान के धर्म का निन्हव यहां होता है । फलतः । उपमान के धर्म का निह्नव प्रकृत उपमेय में उस धर्म के आरोप के वास्ते जहां होता हो वह पर्यस्तापन्हुति है ।

इसके विषय में पण्डित राज चिन्तन करते हैं कि यह अपन्हुति का भेद कहने लायक

लक्षणानाक्रान्तत्वात् । तथा हि—'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः, उपमेयमसत्यं कृत्वा उपमानं सत्यतया यत्स्थाप्यते सापह्नुतिः' इति

### मर्मप्रकाश

वाशब्दव्यङ्ग्यत्वादित्यर्थः । एवं चार्थिको निषेध इति भावः । स कारिकाकारः स्वीयव्याख्यानमाह—उपमेयमसत्यमिति । अत्र ह्युपमेयपदे पदार्थोपलक्षणमावश्यकमित्येतद्विरोधश्चिन्त्य

### मधुसूदनी

या सर्वाभ्योऽपह्नुतिभ्यः परिवर्तिता विलोमभूता । तासु उपमेयधर्मस्य, अत्र तूपमानधर्मस्य निह्नवः । धर्मनिह्नव आरोपश्च इति अपह्नुतेः सामान्यं लक्षणम् । तदाक्रान्तत्वान्नात्र किञ्चिदपि दूषणम् । अत एव काव्यप्रकाशालंकारसर्वस्वचित्रमीमांसागतानां लक्षणानामसंगतिर्नास्ति । इत्थं "नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्" इत्यत्र अपह्नुतिरेव भवितुमर्हति न दृढारोपं रूपकम् । गगनस्थे उपमानभूते चन्द्रेऽपह्नुतस्य धर्मस्य चन्द्रत्वस्य उपमेये मुखे निवेशनात् । यश्चात्र दृढारोप रूपकस्य भवने अपह्नुतेरभवने हेतुरुपन्यस्तः उपमेयतोपमानतावच्छेदकयोः प्रेयसीमुखत्वसुधांशुत्वयोः सामानाधिकरण्यस्य अभेदान्वयानुकूलसमानविभक्तिकत्व रूपसाहचर्यस्यात्र निष्प्रत्यूहं भानादिति । स तु "नायं सुधांशुः किं तर्हि व्योमगंगासरोरुहम् ।" इति शुद्धापह्नुतौ । नेन्दुस्तीव्रो न निशयर्कः सिन्धोरौर्वोयमुत्थितः" इति हेत्वपह्नुतावपि

"प्रजल्पन् मत्पदे लग्नः कान्तः किं नहि नूपुरः" इति छेकापह्नुतावपि संगच्छते । अत आसामपि रूपकत्वमेवास्तु । उपमेयोपमानतावच्छेदकयोः सामानाधिकरण्यस्यास्वपि निष्प्रत्यूहं भानात् । अन्यच्च आहार्यताद्रूप्यनिश्चयस्य समानत्वात् किमिति अपह्नुतिभेदानेव गणयन्ति उल्लेखभेदानपि रूपकभेदेषु गणयन्तु । निरस्यन्तु च प्राचीनमुखदाक्षिण्यम् । प्राचीनानां मुखे सम्मुखे दाक्षिण्यं सारल्यं निरस्यन्तु । शीलं संकोचो वा त्यज्यताम् । दक्षिणः सरलावामपरच्छन्दानुवर्त्तिषु । इति विश्वः मेदिनी च । चित्रमीमांसीयाऽव्याप्तिः समाहितैव । अपि चास्यां क्वचिदपह्नवपूर्वक आरोप क्वचिदारोपपूर्वक अपह्नवः इति च भवद्भिरेव स्वीकरणात्तयोर्मध्ये=न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । इत्यत्र अपह्नवपूर्वक आरोपः । ततश्चापह्नुतिरेव । न रूपकम् । अन्यच्चात्र विमर्शिनीकारेण यदुदटंकि="अत्र विषस्य निषेधपूर्वं ब्रह्मस्वविषये आरोप्यमाणत्वाद् दृढारोपं रूपकमेव, नापह्नुतिः" इति तदविमर्शरमणीयम् । तत्र पूर्वं दृढारोपनामकं

### बालक्रीड़ा

नही है । क्योंकि यह अपन्हुति के साधारण धर्म रूप सामान्य लक्षण से आक्रान्त अर्थात् युक्त नही है । तथाहि—क्यों नहीं आक्रान्त है इस तथ्य को दिखाते हैं । प्रकृत का निषेध करके अन्य को जहां सिद्ध करते हैं वह अपन्हुति है । उपमेय को असत्य करके उपमान की सत्यत्वेन जो स्थापना वह अपन्हुति है इस काव्य प्रकाश में कहे हुए लक्षण से वहिर्भाव तो

काव्यप्रकाशोक्तलक्षणबहिर्भावस्तावत्स्फुट एव । एवं 'विषयापह्नवे वस्त्वन्तरप्रतीतावपह्नुतिः' इत्यलंकारसर्वस्वोक्तं लक्षणमपि नात्र प्रवर्तते ।

'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम् ।
साम्यादपह्नुतिर्वाक्यभेदाभेदवती द्विधा ॥'

इति चित्रमीमांसागतं तन्निर्मितमपि लक्षणमिह तथैव । तस्मात् 'नायं सुधांशुः, किं तर्हि, सुधांशुः प्रेयसीमुखम्' इत्यत्र दृढारोपं रूपकमेव भवितुमर्हति, नापह्नुतिः । उपमेयतोपमानतावच्छेदकयोः सामानाधिकरण्यस्य निष्प्रत्यूहं भानात् । तदुक्तं विमर्शिन्याम्—"न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते' अत्र विषस्य निषेधपूर्वं ब्रह्मस्वविषये आरोप्यमाणत्वाद्दृढारोपं

मर्मप्रकाशः

इत्यग्रेस्फुटं निरूपयिष्यते । प्रतीताविति । तत्रैव प्रत्यासत्तेरिति भावः । एवं पूर्वत्रापि बोध्यम् । साम्यात्सादृश्यमूलकम् । तथैव न प्रवर्तते । उपसंह-रति-तस्मादिति । दृढारोपमारोपदार्ढ्यसंपादकम् न विषमिति । अत्रेदं चिन्त्यम्—नेदं मुखं चन्द्र इति प्रसिद्धापह्नुत्युदाहरणेऽपि मुखनिषेधकस्य चन्द्रारोपदार्ढ्यसंपादकत्वस्य वक्तुं शक्यत्वेनानुभवसिद्धत्वेन चापह्नुतिमात्रस्योच्छेदापत्तेः । यदि तु निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वादलंकारान्तरत्वं तर्हि

मधुसूदनी

रूपकं नास्ति, केनापि आचार्येण कुत्रापि नोक्तत्वाम् । ननु मयैव विमर्शिनीकारेणोद्भाव्यते नवीनमिति चेद् वैलक्षण्यं वक्तव्यम् । चमत्कारनिबन्धनो हि अलंकारभाव उपमादीनाम् । न च आरोपस्य दार्ढ्यं यत्र भवेत्तत्र तादृशं रूपकमिति वाच्यम् । दृढत्वहेतोरभावात् ।

यथा न्यूनत्ववर्णनमपि अभेददार्ढ्यापादकत्वाच्चमत्कारि । अयमास्ते सदा शंभुस्तृतीयं लोचनं विनेत्यत्र तृतीयलोचनप्रहाणोक्त्या न्यूनत्वप्रदर्शनात् पूर्वावस्थातो

बालक्रीड़ा

पर्यस्तापन्हुति का स्फुट ही हैं । इसी तरह विषय का अपन्हव और वस्त्वन्तर की प्रतीति जहां हो वह अपन्हुति है यह अलंकार सर्वस्व में कहा हुआ लक्षण भी यहां फिट नहीं हो रहा है ।

प्रकृत का निषेध करके साम्य से जो अन्यत्व की कल्पना है वह अपन्हुति है । इसमें वाक्य का भेद एवं अभेद एकत्व होता है अतः वह दो प्रकार की है । यह चित्रमीमांसा में उसी का बनाया हुआ लक्षण भी यहां वैसा ही है । इसलिए 'नायं सुधांशुः किन्तर्हि सुधांशुः प्रेयसीमुखम्" इस में दृढ़ारोप रूपक ही हो सकता है अपन्हुति नहीं । क्योंकि उपमेयतावच्छेदक मुखत्व और उपमानतावच्छेदक चन्द्रत्व के समानाधिकरण्य का भान वे रोक टोक होता है । जैसा कि विमर्शिनीमें कहा है । "न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते" यहाँ विष का निषेधपुरः सर ब्रह्मस्वरूपी विषय में आरोप है अतः दृढ़ारोप रूपक ही है अपन्हुति नहीं है ।

रूपकमेव, नापह्नुतिः" इति। यदि च प्राचीनमतमुपेक्ष्यालंकाररत्नाकरेणेव मयाप्ययं प्रकारोऽपह्नुतिमध्ये गणित इत्युच्यते, तदा आहार्यताद्रूप्यनिश्चयस्य समानत्वाद्रूपकभेद एवापह्नुतिरित्यप्युच्यताम्। निरस्यतां च प्राचीनमुखदाक्षिण्यम्। एवमपि चित्रमीमांसागतत्वन्निर्मितापह्नुतिलक्षणस्यात्राव्याप्तिः स्थितैव। अपि च यदि 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यत्र पर्यस्तापह्नुतिरित्युच्यते, तदा तस्यामेव त्वत्कृतचित्रमीमांसागतस्य।

'बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते।
उपरञ्जकतामेति विषयी रूपकं तदा॥'

## मर्मप्रकाशः

प्रकृतेऽपि तुल्यमिति। प्राचीनेति। प्रकाशकारादीत्यर्थः। एवमग्रेऽपि। इति दृष्टान्तोल्लेखेन तदनुरोधेनायं गणित इति सूचितम्। अपह्नुतितत्त्वावच्छिन्नम्। ननु निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वेन कथमपलापः, अतो दोषान्तरमास—एवमपीति। उक्तरीत्या तथाङ्गीकारेऽपि। दोषान्तरमाह—अपि चेति। तस्यामेव पर्यस्तापह्नुतावेव। रत्नाकरा-

## मधुसूदनी

न्यूनाभेदरूपकमितीह न्यूनत्वप्रदर्शनादिति हेतुरुक्तः। भवदुक्त आरोप्यमाणत्वादिति हेतुस्तु सर्वत्र रूपकेषु समानम्। सर्वाणि तानि दृढारोपाणि स्युः। इदमेव तत् कुतः। यच्चोक्तं=विषयिणो निह्नवेऽपि विषयस्यानिह्नुतत्वादिति। तत्तु धूलिप्रक्षेपमात्रम्। यर्हि विषयी निह्नूयते तर्हि उपरंजकतां क एष्यति। उपरंजकत्वाभावे च अर्थात् आहार्यारोपनिश्चयगोचरत्वस्य स्वप्नायितत्वे किं लक्षणस्य स्वरूपं प्रस्फुरत् स्यात्।

## बालक्रीड़ा

इति। अगर वे प्राचीन मतकी उपेक्षा करके अलंकार रत्नाकर की तरह मैंने भी इस भेद की अपन्हुति के भेदों में गणना की है ऐसा कहते है तब तो यहाँ और वहाँ दोनों स्थानों में आहार्य ताद्रूप्य निश्चय समान है अतः अपन्हुति भी रूपक का ही भेद है ऐसा कह दीजिए। और पुराने लोगों के वडे बूढों के सामने सरलता से रहना चाहिए इस भावना को छोड़िये हटाइये। इस पर कहते है कि ठीक है किन्तु निषेधपूर्वक आरोप में चमत्कार विशेप का अनुभव होता है तव कैसे अपन्हुति का अपलाप करें। तव कहते हैं अच्छा इस तरह भी चित्र मीमांसा के तुम्हारे बनाये हुए लक्षण का समन्वय नहीं हो रहा है अतः यहाँ अव्याप्ति लक्षण की रह ही गई। और भी वात है कि यदि (नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसी मुखम्) "यह सुधांशु चन्द्र नहीं है, तब क्या है सुधांशु तो प्रेयसी का मुख है" यहाँ पर पर्यस्तापन्हुति कहते हैं तब इसी पर्यस्तापन्हुति में तुम्हारी बनाई हुई चित्रमीमांसा के 'विम्बाविशिष्टे' जिसमें विम्बप्रतिविम्ब नहीं हो जो अपने शब्द से कहा गया हो अतएव जिसमें वैधर्म्य का निन्हव नहीं हो ऐसे विषय में विषयी उपरज्जकता याने आहार्य तादात्म्य निश्चय

इति रूपकलक्षणस्यातिव्याप्तिर्वज्रलेपायिता स्यात्। विषयिणो निह्नवेऽपि विषयस्यानिह्नुतत्वात्। अथापि चित्रमीमांसायां प्राचीनमतानुसारेण रूपक-लक्षणम्, कुवलयानन्दे च रत्नाकराद्यनुसारेणापह्नुतित्वोक्तिरिति यथाकथं-चित्सामञ्जस्यं विधेयमिति दिक्।

## मर्मप्रकाशः

दीति। आदिना दण्डिग्रहणम्। इत्थं हि काव्यादर्शे (२।३०४) तेनोक्तम्—'अपह्नुतिर-पह्नुत्य किंचिदन्यार्थसूचनम्' इति। यथाकथंचित्सामञ्जस्यमिति। एतदनन्तरमत्र किंचि-त्पतितम्।तत्सर्वपुस्तके दुर्लभमेव। अनन्तरं 'विधेयमिति दिक्' इति ग्रन्थः। अवयवरूपक-

## मधुसूदनी

न स्यात्। तर्हि अतिव्याप्तिर्वज्र लेपायिता क स्यात्। तस्मात् सर्वमेतत् क्षोदनीयं नास्तीति। अत्राधिकं बालक्रीड़ायां द्रष्टव्यम्।

सामञ्जस्यमिति। एतदनन्तरं "विधीयते तर्हि" इति पदद्वयमिह पतितम्। तन्निक्षेपे सामञ्जस्यं विधीयते तर्हि विधेयमित्यन्वयः। मनुष्य इतीदं पद्यं रचना-दारिद्र्यग्रस्तं ततश्च "खलो मनुष्य इत्येवं केन मूढेन गद्यते।" इति साधीयान् पाठः।

## बालक्रीड़ा

का विषय बनता हो तब रूपक होता है। इस रूपक के लक्षण की अतिव्याप्ति वज्रलेपायित हो जायगी। क्योंकि विषयी के निह्नव होने पर भी विषयका निह्नव नहीं है। विषये यदि अनिन्हुते" इस लक्षण के अंश का समन्वय हो जाता है। इस पर भी कहें कि चित्रमीमांसा में प्राचीनों के मत के अनुसार रूपक का लक्षण है और कुवलयानन्द में रत्नाकर के अनुसार अपन्हुति कही हैं इस तरह किसी प्रकार सामञ्जस्य करते हैं तो करते रहिये दोष तो है ही। यह एक विचार का मार्ग है।

यहाँ पण्डितराज जी ने चिन्तन का मार्ग बना दिया है अतः हम भी चिन्तन करते हैं। अप्पय्य दीक्षित जी का लेख बहुत स्पष्ट है और पवित्र भी है फिर भी माननीय पण्डितराज को चिन्ता हो गई है। अस्तु। भगवन्? यह पर्यस्तापन्हुति है। जो पहले बतलाई हुई सम्पूर्ण अपन्हुतियों से विलक्षण है। क्योंकि पर्यस्त हैं इसमें विषय का परिवर्त्तन हो गया है। उनमें विषय उपमेय के धर्मका निन्हव है। इसमें उपमान के धर्म का निह्नव है। धर्म निह्नव और आरोप ये दो अंश अपन्हुति के सामान्य लक्षण के घटक हैं। ये दोनों अंश पर्यास्तिपन्हुति में भी हैं अतः कोई दोष नहीं है। और काव्य प्रकाश, अलंकारसर्वस्व एवं चित्रमीमांसा में कहे हुए लक्षणों की भी असंगति नहीं है। इस प्रकार "यह सुधांशु नहीं है। तब कौन सुधांशु हैं। सुधांशु तो प्रेयसी का मुख है"। इसमें अपन्हुति ही होनी उचित है दृढ़ारोप रूपक नहीं। क्योंकि गगनस्थ उपमानभूत चन्द्र के चन्द्रत्व धर्म का निह्नव है और उपमेय मुख में उस का आरोप है अतः अपन्हुति का सामान्यलक्षण संगत है। और जो यहाँ दृढारोप रूपक के होने तथा अपन्हुति के नहीं होने में जिस हेतु" उपमेयतावच्छेदक

(प्रेयसी मुखत्व) एवं उपमानतावच्छेदक (सुधांशुत्व) के सामानाधिकरण्य की निष्प्रत्यूह प्रतीति" का उपन्यास किया है। वह

"नायं सुधाशुः किन्तर्हि व्योमगंगासरोरुहम्।

इस शुद्धापन्हुति में सुधांशुत्व उपमेयतावच्छेदक और मन्दाकिनीकमलत्व उपमानतावच्छेदक

"नेन्दुस्तीव्रो न निश्यर्कः सिन्धोरौर्वोऽयमुत्थितः"

इस हेत्वपन्हुति में इन्दुत्व अर्कत्व उपमेयतावच्छेदक तथा वडवानलत्व उपमानतावच्छेदक,

"प्रजल्पन् मत्पदे लग्नः, कान्तः किं, नहि नूपुरः"

इस छेंकापन्हुति में भी कान्तत्व उपमेयतावच्छेदक और नूपुरत्व उपमानतावच्छेद के सामानाधिकरण्य की निषेध के साथ २ प्रतीति रूप हेतु तो संगत होता है। अतः इनको भी दृढारोप रूपक ही मानिये। पर्यस्तापन्हुति के ही पीछे क्यों पड़ गये है उसने क्या अपराध किया है।

और भी बात है—जैसे आहार्यताद्रूप्यनिश्चय अपन्हुति में है वैसे ही उल्लेख मे भी है दोनों में समान है तब क्या हेतु है कि उल्लेख की रूपक के भेदों में गणना नहीं करते हैं। हैं। अपन्हुति की गणना करने में प्रस्तुत हो रहे हैं। इसकी भी रूपक के भेदों में गणना करिये और प्राचीनों के समक्ष सरलता को या शील संकोच को हटाइये।

और भी बात है। इस अपह्नुति में कहीं आरोप पूर्वक अपह्नव है और कहीं पर अपह्नव पूर्वक आरोप है" इसको आपने भी माना है। उनमें से

"न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते"

यहाँ अपह्नव पूर्वक आरोप है। अतः अपह्नुति ही है। यहाँ जो आपने विमर्शिकार की दुहाई दई हैं कि यहाँ विष में विषत्व का निषेध करके ब्रह्मस्व रूप विषय में उसका आरोप है। इसलिए दृढारोप रूपक ही है अपह्नुति नहीं है। यह सब अविमर्श है अपदार्थ है कहना अतिशयोक्ति नहीं होगी। यहाँ ब्रह्मस्व रूप विषय उपमेय में विष का आरोप नहीं है किन्तु ब्रह्मस्वत्व विशिष्ट उपमान का आरोप है। यहाँ की कथा एसी है—आयुर्वेद के विषाधिकार में लिखा है कि

"स्थावरं जंगमं चैव द्विविधं विषमुच्यते
दशाधिष्ठानमाद्यन्तु द्वितीयं षोडशाश्रयम्"

विष दो प्रकार के कहे है एक स्थावर दूसरा जंगम। उसमें पहला स्थावर दश विध है दूसरा जंगम सोलह प्रकार का। इस प्रकार छब्बीस ही विष के भेद शास्त्रों में बतलाये हैं किन्तु ब्रह्मस्व नाम का तो कोई भी विष नहीं है। फलतः लोक एवं शास्त्र उभय सम्मत २६ प्रकार के विष उपमेय को असत्य करके कविकल्पित उपमान भूत ब्रह्मस्वत्व विशिष्ट का आरोप यहाँ किया गया है अतः आलंकारिक आचार्यों के अनुसार अपह्नुति ही यहाँ है। दृढ़ारोप रूपक नहीं है। यह भी तो बात है कि इस नाम के रूपक को किसी भी आचार्य ने किसी भी ग्रन्थ में नहीं लिखा है।

इति रूपकलक्षणस्यातिव्याप्तिर्वज्रलेपायिता स्यात्। विषयिणो निह्नवेऽपि विषयस्यानिह्नुतत्वात्। अथापि चित्रमीमांसायां प्राचीनमतानुसारेण रूपक-लक्षणम्, कुवलयानन्दे च रत्नाकराद्यनुसारेणापह्नुतित्वोक्तिरिति यथाकथं-चित्सामञ्जस्यं विधेयमिति दिक्।

## मर्मप्रकाशः

दीति। आदिना दण्डिग्रहणम्। इत्थं हि काव्यादर्शे (२।३०४) तेनोक्तम्—'अपह्नुतिर-पह्नुत्य किंचिदन्यार्थसूचनम्' इति। यथाकथंचित्सामञ्जस्यमिति। एतदनन्तरमत्र किंचि-त्पतितम्। तत्सर्वपुस्तके दुर्लभमेव। अनन्तरं 'विधेयमिति दिक्' इति ग्रन्थः। अवयवरूपक-

## मधुसूदनी

न स्यात्। तर्हि अतिव्याप्तिर्वज्र लेपायिता क स्यात्। तस्मात् सर्वमेतत् क्षोदनीयं नास्तीति। अत्राधिकं बालक्रीडायां द्रष्टव्यम्।

सामञ्जस्यमिति। एतदनन्तरं "विधीयते तर्हि" इति पदद्वयमिह पतितम्। तन्निक्षेपे सामञ्जस्यं विधीयते तर्हि विधेयमित्यन्वयः। मनुष्य इतीदं पद्यं रचना-दारिद्र्यग्रस्तं ततश्च "खलो मनुष्य इत्येवं केन मूढेन गद्यते।" इति साधीयान् पाठः।

## बालक्रीड़ा

का विषय बनता हो तब रूपक होता है। इस रूपक के लक्षण की अतिव्याप्ति वज्रलेपायित हो जायगी। क्योंकि विषयी के निह्नव होने पर भी विषयका निह्नव नहीं है। विषये यदि अनिन्हुते" इस लक्षण के अंश का समन्वय हो जाता है। इस पर भी कहें कि चित्रमीमांसा में प्राचीनों के मत के अनुसार रूपक का लक्षण है और कुवलयानन्द में रत्नाकर के अनुसार अपन्हुति कही हैं इस तरह किसी प्रकार सामञ्जस्य करते हैं तो करते रहिये दोष तो है ही। यह एक विचार का मार्ग है।

यहाँ पण्डितराज जी नें चिन्तन का मार्ग बना दिया है अतः हम भी चिन्तन करते हैं। अप्पय्य दीक्षित जी का लेख बहुत स्पष्ट है और पवित्र भी है फिर भी माननीय पण्डितराज को चिन्ता हो गई है। अस्तु। भगवन्? यह पर्यस्तापन्हुति है। जो पहले बतलाई हुई सम्पूर्ण अपन्हुतियों से विलक्षण है। क्योंकि पर्यस्त हैं इसमें विषय का परिवर्त्तन हो गया है। उनमें विषय उपमेय के धर्मका निन्हव है। इसमें उपमान के धर्म का निह्नव है। धर्म निह्नव और आरोप ये दो अंश अपन्हुति के सामान्य लक्षण के घटक हैं। ये दोनों अंश पर्यास्तपन्हुति में भी हैं अतः कोई दोष नहीं है। और काव्य प्रकाश, अलंकारसर्वस्व एवं चित्रमीमांसा में कहे हुए लक्षणों की भी असंगति नहीं है। इस प्रकार "यह सुधांशु नही है। तब कौन सुधांशु हैं। सुधांशु तो प्रेयसी का मुख है"। इसमें अपन्हुति ही होनी उचित है दृढ़ारोप रूपक नहीं। क्योंकि गगनस्थ उपमानभूत चन्द्र के चन्द्रत्व धर्म का निह्नव है और उपमेय मुख में उस का आरोप है अतः अपन्हुति का सामान्यलक्षण संगत है। और जो यहाँ दृढारोप रूपक के होने तथा अपन्हुति के नहीं होने में जिस हेतु" उपमेयतावच्छेदक

(प्रेयसी मुखत्व) एवं उपमानतावच्छेदक (सुधांशुत्व) के सामानाधिकरण्य की निष्प्रत्यूह प्रतीति" का उपन्यास किया है। वह

"नायं सुधांशु: किन्तर्हि व्योमगंगासरोरुहम्।

इस शुद्धापन्हुति में सुधांशुत्व उपमेयतावच्छेदक और मन्दाकिनीकमलत्व उपमानतावच्छेदक

"नेन्दुस्तीव्रो न निश्यर्क: सिन्धोरौर्वोऽयमुत्थित:"

इस हेत्वपन्हुति में इन्दुत्व अर्कत्व उपमेयतावच्छेदक तथा वडवानलत्व उपमानतावच्छेदक,

"प्रजल्पन् मत्पदे लग्न:, कान्त: किं, नहि नूपुर:"

इस छेकापन्हुति में भी कान्तत्व उपमेयतावच्छेदक और नूपुरत्व उपमानतावच्छेद के सामानाधिकरण्य की निषेध के साथ २ प्रतीति रूप हेतु तो संगत होता है। अत: इनको भी दृढारोप रूपक ही मानिये। पर्यस्तापन्हुति के ही पीछे क्यों पड़ गये है उसने क्या अपराध किया है।

और भी वात है—जैसे आहार्यताद्रूप्यनिश्चय अपन्हुति में है वैसे ही उल्लेख मे भी है दोनों में समान है तव क्या हेतु है कि उल्लेख की रूपक के भेदों में गणना नहीं करते हैं। हैं। अपन्हुति की गणना करने में प्रस्तुत हो रहे हैं। इसकी भी रूपक के भेदों में गणना करिये और प्राचीनों के समक्ष सरलता को या शील संकोच को हटाइये।

और भी वात है। इस अपह्नुति में कहीं आरोप पूर्वक अपह्नव है और कहीं पर अपह्नव पूर्वक आरोप है" इसको आपने भी माना है। उनमें से

"न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते"

यहाँ अपह्नव पूर्वक आरोप है। अत: अपह्नुति ही है। यहाँ जो आपने विमर्शिकार की दुहाई दई हैं कि यहाँ विष में विषत्व का निषेध करके ब्रह्मस्व रूप विषय में उसका आरोप है। इसलिए दृढारोप रूपक ही है अपह्नुति नहीं है। यह सब अविमर्श है अपदार्थ है कहना अतिशयोक्ति नहीं होगी। यहाँ ब्रह्मस्व रूप विषय उपमेय में विष का आरोप नहीं है किन्तु ब्रह्मस्वत्व विशिष्ट उपमान का आरोप है। यहाँ की कथा एसी है—आयुर्वेद के विषाधिकार में लिखा है कि

"स्थावरं जंगमं चैव द्विविधं विषमुच्यते<br>दशाधिष्ठानमाद्यन्तु द्वितीयं षोडशाश्रयम्"

विष दो प्रकार के कहे हैं एक स्थावर दूसरा जंगम। उसमें पहला स्थावर दश विध है दूसरा जंगम सोलह प्रकार का। इस प्रकार छब्बीस ही विष के भेद शास्त्रों में वतलाये हैं किन्तु ब्रह्मस्व नाम का तो कोई भी विष नहीं है। फलत: लोक एवं शास्त्र उभय सम्मत २६ प्रकार के विष उपमेय को असत्य करके कविकल्पित उपमान भूत ब्रह्मस्वत्व विशिष्ट का आरोप यहाँ किया गया है अत: आलंकारिक आचार्यों के अनुसार अपह्नुति ही यहाँ है। दृढ़ारोप रूपक नहीं है। यह भी तो बात है कि इस नाम के रूपक को किसी भी आचार्य ने किसी भी ग्रन्थ में नहीं लिखा है।

'अनल्पजाजाम्बूनददानवर्षं तथैव हर्षं जनयञ्जनेषु ।
दारिद्र्यघर्मक्षपणक्षमोऽयं धाराधरो नैव धराधिनाथः ॥'

सावयवारोपेयमपह्नुतिः ।

आरोपमात्रोपायत्वे परम्परिताप्येषा संभवति । यथा—

'मनुष्य इति मूढेन खलः केन निगद्यते ।
अयं तु सज्जनाम्भोजवनमत्तमतङ्गजः ॥'

### मर्मप्रकाशः

संकीर्णमुदाहरति—अनल्पेति । दानवर्षयो रूपकम् । दारिद्र्यरूपस्योष्मणो नाशने समर्थ

### बालक्रीड़ा

अगर कहें कि मैं विमर्शिनीकार ही नवीन रूप से उद्भावन करता हूँ तो आपके इस उद्भावन में कोई विलक्षणता नहीं है। क्योंकि उपमादि में अलंकारभाव चमत्कार हेतुक ही होता है। यह कह नहीं सकते हैं कि जहाँ आरोप में दाढर्य हो वहाँ दृढारोप रूपक है। क्योंकि दृढता का कोई हेतु नहीं बतलाया है। अयमास्ते सदाशम्भुस्तृतीयं लोचनं विना। इसमें जैसे न्यूनत्व वर्णन भी चमत्कारी है क्योंकि वह वर्णन अभेद में दृढता का आपादन करता है। तृतीय लोचन के अभाव के कथन से पूर्व अवस्था से न्यूनता दिखाई गई है। अतः न्यून्नाभेद रूपक है इस तरह न्यूनत्व प्रदर्शन रूप हेतु का यहाँ उपादान किया है। आपका कहा हुआ "आरोप्यमाणत्वात्" हेतु तो सभी रूपकों में समान है तब सभी दृढारोप रूपक हैं। यही दृढारोप क्यों। सभी हैं ऐसा आप कहेंगे नहीं। क्योंकि मुखं चन्द्रः में न विषम् वाली स्थिति नहीं है। अतः स्पष्ट है कि न विषम् में अपह्नुति है रूपक नहीं है। और रूपक कहना अपदार्थ है।

और जो आपने कहा कि "विषयी का निह्नव होने पर भी विषय"तो अनिन्हुत ही है" यह धूलि प्रक्षेप है। यदि विषयी का निह्नव कर दिया तब उपरंजकतामेति विषयी" का समन्वय कैसे होगा। कौन उपरंजकता को प्राप्त करेगा। उपरंजकता के अभाव में अर्थात् आहार्यारोपनिश्चय गोचरत्व के स्वप्नायित होने पर क्या लक्षण का स्वरूप प्रस्फुरित रहेगा। नहीं रहेगा। रूपक के लक्षण की तब अतिव्याप्ति कहाँ वज्रलेपायित होगी। तस्मात् यह सब क्षोदक्षम नहीं है।

प्रभूत मात्रा में सुवर्ण का दान रूप वर्षण करके जनता को प्रसन्न कर देने से दारिद्र्य रूपी घाम को नष्ट कर देता है अतः यह धाराधर मेघ है न कि धराधिनाथ राजा है।

यहाँ सुवर्ण के दान में वर्षण का, दारिद्य में घाम का, और धराधिनाथ में धाराधर का आरोप है अतः अवयवों में आरोप युक्ता यह अपह्नुति है। यह आरोपमात्र में उपाय होने से परम्परिता भी होती है जैसे—

खल भी मनुष्य है ऐसा किस मूढने कहा। अरे यह तो सज्जन रूपी कमलों के बगीचे को ध्वस्त कर देने वाला मत्त मातंग है।

अस्याश्च ध्वनिर्यथा—

'दयिते ? रदनत्विषां मिषादयि ? तेऽमी विलसन्ति केसराः ।
अपि चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः ॥'

अत्र 'नैता रदनत्विषः, किं तु किंजल्कपरम्पराः । न चैतेऽलकाः, अपि त्वलयः' इति पूर्वोत्तरार्धाभ्यां द्वे अपह्नुती तावत्प्राकट्येनैव निवेदिते । ताभ्यां च 'न त्वं नारी, किं तु कमलिनी' इति तृतीयापह्नुतिर्व्यञ्जनव्यापारेण प्राधान्येन निवेद्यते । तत्संबन्धिवस्तुनिषेधारोपयोस्तन्निषेधारोपनिवेवेदकत्वस्य न्याय्यत्वात्तुल्ययोगितानुगुणतया स्थिता ।

### मर्मप्रकाशः

इत्यर्थः । सावयवारोपेति । अवयवारोपसहितेत्यर्थः । तद्रूपकसहितेति यावत् । आरोपेति । आरोपस्येत्यादिः । दयित इति । व्याख्यातमिदं प्राक् । तावदादौ । अप्राधान्ये ध्वनित्वाभावादाह—प्राधान्येनेति । तदिति । अवयवीत्यर्थः । ननु विलासस्पृहयालुत्वरूपक्रियागुणरूपधर्मैक्यस्य प्रकृताप्रकृतयोः सत्वेन तुल्ययोगितैवेयमत आह—तुल्येति ।

### मधुसूदनी

तत्सम्बन्धीति । आरोपविषयनारीसम्बन्धिवस्तुनो रदनत्विषो निषेधः । आरोप्यमाणकमलिनीसम्बधिवस्तुनः केसरस्य आरोपः । इति पूर्वार्धीयः ।

### बालक्रीड़ा

यह पद्य रचयिता के दारिद्रय को सूचित करता है । अतः "खलो मनुष्य इत्येवं केन मूढेन गद्यते" यह पाठ यहाँ होना चाहिए ।

इस अपह्नुति की ध्वनि का उदाहरण जैसे=अयि दयिते ? तुम्हारे दाँतों की कान्ति के बहाने ये केसर चमक रहे हैं । और अलक का वेष बनाये हुए मकरन्द में स्पृह्या लुभी ये अलि हैं ।

यहाँ पूर्वार्ध में ये दाँतों की कान्तियाँ नहीं हैं किन्तु केसर हैं यह एक अपह्नुति, उत्तरार्ध में ये अलक नहीं हैं किन्तु अलि हैं यह दूसरी अपह्नुति हैं । ये दोनों अभिधा से स्पष्ट रूप में निवेदित हैं । इसके बाद इन दोनों से तुम नारी नहीं हो किन्तु कमलिनी हो यह तीसरी अपह्नुति व्यंजना के द्वारा प्रधान रूप से व्यक्त होती है । क्योंकि आरोप विषय नारी सम्बन्धी वस्तु रदनकान्तिका निषेध और आरोप्यमाण कमलिनी सम्बन्धी वस्तु केसर का आरोप पूर्वार्ध में हैं । तथा आरोप की विषय नारी सम्बन्धी वस्तु अलक का निषेध और आरोप्यमाण कमलिनी सम्बन्धी वस्तु अलि का आरोप उत्तरार्ध में हैं । इनका नारी के निषेध में कमलिनी के आरोप में उपाय होना न्याय्य ही उचित ही हैं । यहाँ अप्रकृत केसर और अलि में विलसन क्रिया रूप धर्म तथा प्रकृत दाँतों की कान्ति और अलकों में स्पृह्यालुत्व गुणरूप धर्मों की एकता से अनुभूयमान हुई भी तुल्ययोगिता अप्रधानरूप से ही स्थित है ।

यत्त्वप्पदीक्षितैरपह्नुतिध्वनावुक्तम्—

"त्वदालेख्ये कौतूहलतरलतन्वीविरचिते
विधायैका चक्रं रचयति सुपर्णीसुतमपि ।
अथ स्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥'

## मर्मप्रकाशः

त्वदालेख्य इति । त्वत्प्रतिकृतिभूतचित्र इत्यर्थः । नायकं प्रति स्वसख्युक्तिः । एका तन्वी सखी । चक्रं सुदर्शनम् । सुपर्णीसुतम् गरुडम् । अपि अथ । क्वचित्तथैव पाठः । अथ मार्जनयोग्यत्वाय हेतुगर्भं विशेषणम्—स्विद्यत्पाणिरिति । अपरा तत्सखी । तस्यापि पुण्डरीकाक्षस्यापि ।

## मधुसूदनी

आरोपविषयनारीसम्बन्धिवस्तुनोऽलकस्य निषेधः । आरोप्यमाणकमलिनीसम्बन्धिवस्तुनोऽलेरारोपः इत्युत्तरार्धीयः । तस्या नार्या निषेधेनिवेदकत्वमुपायत्वम् । तस्याः कमलिन्या आरोपनिवेदकत्वमुपायत्वं न्याय्यम् । प्रकृतयो रदनत्विडलकयोः । अप्रकृतयोः केसरालिनोश्च विलसनरूपक्रियायाः स्पृहयालुत्वरूपगुणस्य धर्मस्यैक्यादनुभूयमानाऽपि तुल्ययोगिता तु गुणतया अप्रधान्येन स्थिता ।

"त्वदालेख्ये" इति । कौतूहलेन औत्सुक्येन तरला तन्वी नायिका तया विरचिते तवालेख्ये चित्रे । आलेख्याश्चर्ययोश्चित्रमित्यमरः । एका सखी चक्रं सुदर्शनं विधाय सुपर्णीसुतमपि विनतासूनुं गरुडमपि रचयति । स्विद्यत्पाणिरपि स्पर्शेन स्वेदाख्यसात्विकभावस्योदयात् । स्विद्यत्पाणित्वे चित्रनिर्माणस्यासंभवत्वादपि तन्निर्मितिरिति व्यंग्यम् । अपरा एतद्रचनं त्वरितमपमृज्य कूर्चया करे पौष्पं चापं लिखति । उपरिष्टात् ध्वजास्थाने मकरम् । तस्य राज्ञः । एतादृशमपि सात्विकभावोदयकमाह्लादकम् । तदुभयं चक्रसुपर्णोभयम् । तत्सम्बन्धित्वात् पुण्डरीकाक्षसम्बन्धि-

## बालक्रीड़ा

जो तो अप्पयदीक्षितजी ने अपह्नुति ध्वनि के विषय में कहा कि—तुम्हारे चित्र में ।

यहाँ इस पद्य में एक चित्र निर्मात्री नायिका है और दो उसकी सखियाँ हैं । जिनमें एक कहती है कि यह विष्णु है और दूसरी का भाव है कि यह कामदेव है । चौथा चाटुकार इसी बात को लेकर राजा की चापलूसी करता है । हे राजन् ? कौतूहल से चंचल तन्वी नायिका ने आपका एक फोटो बनाया । एक सखी ने उसमें सुदर्शन चक्र और गरुडजी का निर्माण कर दिया । दूसरी सखी जिसको उस चित्र के देखने एवं स्पर्श से स्वेदाख्य सात्विक भाव का उदय हो गया है जिसके फलस्वरूप चित्र का निर्माण असंभव था तब भी उसने पसीने से चक्र और गरुड़ को मिटाकर उस चित्रस्थ व्यक्ति के हाथ में पुष्प का धनुष बना दिया और ध्वजा के स्थान में ऊपर की तरफ मकर को लिख दिया ।

इत्यादावपह्नुतिध्वनिरुदाहर्तव्यः। अत्र हि चक्रसुपर्णलेखनेन 'नायं साधारणः पुरुषः, किं तु पुण्डरीकाक्षः' इति कयाचिद्व्यञ्जितम्। अन्यथा तु तस्याप्येतादृशं रूपं न संभवतीत्याशयेन 'नायं पुण्डरीकाक्षोऽपि, किं तु मन्मथः' इति तदुभयमपमृज्य पुष्पसायकमकरध्वजलेखनेन व्यञ्जितम्" इति तदेतदापातरमणीयम्। यत्तावदुच्यते—'चक्रसुपर्णलेखनेन नायं साधारणः पुरुषः, किं तु पुण्डरीकाक्षः' इति कयाचिद्व्यञ्जितमिति। तत्रापह्नुतेर्द्वौ भागौ—उपमेयनिषेधः, उपमानारोपश्चेति। तयोस्तावदुपमानारोपभागः पुण्डरीकाक्षोऽयमित्याकारश्चक्रसुपर्णलेखनेनाभिव्यङ्क्तुं शक्यः। चक्रसुपर्णयोस्तत्संबन्धित्वात्। न तु नायं साधारणः पुरुष इत्युपमेयनिषेधभागोऽपि। व्यञ्जकस्यारोपमात्रव्यञ्जनसमर्थस्य तादृशनिषेधव्यञ्जने सामर्थ्याभावात्। नाप्य-

### मर्मप्रकाशः

तदुभयं चक्रसुपर्णद्वयम्। इत्याशयेन तथा लेखनेन। इति व्यञ्जितमित्यन्वयः। तत्रेति। उच्यत इति शेषः। एवमग्रेऽपि भागोऽभिव्यङ्क्तुं शक्य इत्यनुषज्यते। व्यञ्जकेति। चक्रसुपर्णलेखनस्येत्यर्थः। ननु कथं तदनुभवोऽत आह - नापीति। स तादृशनिषेधभागः। उक्तपद्य इति

### मधुसूदनी

त्वात्। आरोपमात्रस्य पुण्डरीकाक्षोऽयमित्याकारस्य व्यंजने समर्थस्य व्यंजकस्य चक्रसुपर्णलेखनस्य। तादृशनिषेधस्य नायं साधारणः पुरुष इत्याकारस्य व्यंजने सामर्थ्याभावात्। स तादृशनिषेधः येन अनुभवेन तस्य तादृशनिषेधस्य व्यंजने

### बालक्रीड़ा

इसमें जो तो अप्पय्य दीक्षितजी ने कहा कि इस पद्य को अपह्नुति ध्वनि का उदाहरण मानना चाहिए। क्योंकि यहाँ चक्र और सुपर्णीसुत गरुड के लिखने से किसी ने यह व्यक्त किया कि यह साधारण पुरुष नहीं है किन्तु पुण्डरीकाक्ष है। इस पर दूसरी ने इस राजा का ऐसा भी रूप नहीं होना चाहिए इस आशय से चक्र और गरुड को मिटा कर उसके हाथ में पुष्प के धनुष को और ऊपर मकरध्वज को बनाकर यह पुण्डरीकाक्ष भी नहीं है अपि तु मन्मथ है ऐसा व्यक्त कर दिया। अतः यह पद्य ध्वनि का उदाहरण है।

इस पर पण्डितराज कहते हैं कि यह सब लेख आपात रमणीय है। क्योंकि जो तो आप कहते हैं कि चक्र और सुपर्ण के लिखने से "यह साधारण पुरुष नहीं है किन्तु पुण्डरीकाक्ष है" ऐसा किसी महिला ने व्यक्त किया। उसमें विचार है कि अपह्नुति के दो भाग हैं—एक उपमेय निषेध। दूसरा उपमान का आरोप। उनमें पुण्डरीकाक्ष है इत्याकारक उपमान के आरोप भाग को चक्र एवं सुपर्ण के लेखन से व्यक्त किया जा सकता है। क्योंकि चक्र एवं सुपर्ण पुण्डरीकाक्ष के सम्बन्धी हैं। किन्तु उस लेखन से "यह साधारण पुरुष नही है" इस उपमेय निषेध भाग को व्यक्त नहीं किया जा सकता है। क्योंकि आरोप

नुभवसिद्धः सः । येन तद्व्यञ्जनायोपायो गवेष्येत । नापि गवेष्यमाणोऽपि तद्व्यञ्जनोपायः शब्दोऽर्थो वा उपलभ्यते । येनानुभवकलहोऽपि स्यात् । न च साधारणपुरुषनिषेधमन्तरेण पुण्डरीकाक्षतादात्म्यारोपो दुर्घट इति सोऽपि व्यज्यत इति वाच्यम् । रूपकोच्छेदापत्तेः । मुखं चन्द्र इत्यादौ मुखनिषेधमन्तरेण चन्द्रत्वं दुरारोपमित्यस्यापि सुवचत्वात् । तत्रापि मुखनिषेधावगमे जितमपह्नुत्या । अथ मुखं चन्द्र इति रूपके मुखत्वसामानाधिकरण्येन चन्द्रताद्रूप्यस्यारोप्यमाणतया न मुखनिषेधापेक्षेति चेत्, प्रकृतेऽपि तर्हि तादृश-

## मर्मप्रकाशः

शेषः । गवेष्येत अन्वेष्येत । ननु विनिगमनाविरहोऽत आह—नापीति । लभ्यत इति । दुर्घट इति । तज्ज्ञानस्य तत्र प्रतिबन्धकत्वादिति भावः । सोऽपि निषेधभागोऽपि । अन्यथानुपपत्त्येति भावः । ननु तत्रापि तत्स्वीकारोऽत आह—तत्रापीति । रूपकेऽपीत्यर्थः । एवं च तदुच्छेदापत्तिरिति भावः । बाधज्ञानसाहार्यज्ञाने न प्रतिबन्धकमित्नाशयेनाह—अथेति । सामेति । न त्ववच्छेदकावच्छेदेनेति भावः । आरोप्येति । आहार्यज्ञानविषयीक्रियमाणतये-

## मधुसूदनी

उपायः । येन तादृशनिषेधव्यंजनोपायभूतस्य शब्दस्य अर्थस्य वा उपलम्भेन । भवान्नानुभवति, अहमनुभवामीत्यनुभवकलहस्वरूपम् ।

## बालक्रीड़ा

मात्र के व्यंजन में समर्थ व्यञ्जक चक्रसुपर्णलेखन की उपमेय निषेध के व्यंजन में सामर्थ्य नहीं है । और यह पुण्डरीकाक्ष है ऐसा समझने से यह साधारण पुरुष नहीं है इस तरह उपमेय निषेध स्वतः अनुभव से भी तो प्राप्त नहीं है जिस अनुभव के बल से उपमेय निषेध के व्यंजन का उपाय खोजा जाय । इसके सिवाय खोजने पर भी तो निषेध के व्यंजन में उपाय अमुक शब्द है अथवा यह अर्थ है यह नहीं मिल रहा है तब कैसे कहा जाय कि आपको अनुभव नहीं हो रहा हैं हमको तो अनुभव हो रहा है । अगर निषेध व्यंजक शब्द अथवा अर्थ मिलता तो हमारा और आपका अनुभव कलह भी होता । यह तो आपका कहना ठीक है किन्तु साधारण पुरुष के निषेध के विना पुण्डरीकाक्ष के अभेद का आरोप भी तो करना कठिन है । अतः निषेध भी स्वतः व्यक्त हो जाता है । इस पर उत्तर देते हैं कि ऐसा नहीं कहना चाहिए । इस तरह तो रूपक का ही उच्छेद हो जायगा । तब तो यह भी कहा जा सकता है कि मुखं चन्द्रः इत्यादि रूपक में भी मुख निषेध के विना चन्द्रत्व का आरोप भी दुर्घट है । रूपक में भी मुख निषेध का ज्ञान होता है तब तो अपह्नुति जीत गई ।

अगर कहें कि रूपक में मुखत्व समानाधिकरण चन्द्र ताद्रूप्य आरोप्यमाण है अतः मुखनिषेध की अपेक्षा नहीं है । तब तो प्रकृत में भी साधारणपुरुषत्व समानाधिकरण

साधारणपुरुषत्वसामानाधिकरण्येन पुण्डरीकाक्षतादात्म्यारोपरूपमसौ राजा पुण्डरीकाक्ष इत्याकाररूपकमेव भवितुमीष्टे नापह्नुतिः। यदपि चोच्यते 'नायं पुण्डरीकाक्षः, अपि तु मन्मथः' इत्यादि, तत्र यद्यपि चक्रसुपर्णदूरीकरणेन नायं पुण्डरीकाक्ष इति निषेधः पुष्पचापध्वजगतमकरस्योल्लेखनेन च मन्मथोऽयमित्युपमानारोपश्च व्यङ्ग्यो भवितुमर्हति। तथापि नासावपह्नुतिः। 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्' इति त्वत्कृतलक्षणस्याप्यत्रासत्त्वात्। अत्र हि निषेध्यस्य भगवतः पुण्डरीकाक्षस्यावर्ण्यत्वेनाप्रकृततया प्रकृतनिषेधाभावात्। नहि पूर्वारोपिततामात्रेण प्रकृतत्वं वक्तुं शक्यम्। प्रकृतपदस्या-

मर्मप्रकाशः

त्यर्थः। तदाकारमाह—असाविति। चस्त्वर्थे। द्वितीयश्चो व्यङ्ग्यत्वसमुच्चये। ननु निषेध सामानाधिकरण्येनोपमानतादात्म्यारोपसत्त्वात्कथं तदभावोऽत आह—अत्र हीति। ननु पूर्वमारोपितत्वात्प्रकृत एव सोऽत आह—नहीति। निषिध्य विषयमित्यादिनेति। 'निषिध्य विषयं साम्यादन्यारोप' इति तु क्त्वाप्रत्ययेन लक्षणं नोक्तम्। वक्ष्यमाणोदाहरणे आरोपपूर्वकापह्नवेऽव्याप्तिप्रसङ्गादिति तैरुक्तम्। फलं क्वचिदव्याप्तिरूपसनिष्टं फलम्। तत्र चित्रमीमांसायाम्। अपिसूचितं दोषान्तरमाह—काव्येति। पुण्डरीकाक्षस्तूपमानमिति भावः।

मधुसूदनी

ननु पूर्वार्धे सा मास्तु परमुत्तरार्धे तु साऽस्तु इति चेदुत्तरार्धेऽपि सा नास्ति इत्याह—यदपीति।

पूर्वारोपिततेति। पूर्वस्मिन् "नायं साधारणः पुरुषः अपि तु पुण्डरीकाक्षः" इत्यस्मिन् प्रथमे कल्पे आरोपः संजातः अस्य पुण्डरीकाक्षस्य इति पुण्डरीकाक्षे संजातारोपत्वं पूर्वारोपितत्वं वर्तते तन्मात्रेण। अर्थात् पूर्वारोपसद्भावमात्रेण पुण्डरीकाक्षे

बालक्रीड़ा

पुण्डरीकाक्ष तादात्म्य के आरोप के फलस्वरूप यह राजा पुण्डरीकाक्ष है इस प्रकार का रूपक ही होना चाहिए न कि अपह्नुति। और भी जो कहते हैं कि पूर्वार्ध में न सही किन्तु यह पुण्डरीकाक्ष नहीं है अपितु मन्मथ है इत्यादि, रूप से उत्तरार्ध में तो अपह्नुति है जैसे= यद्यपि चक्र एवं सुपर्ण के दूरीकरण से "यह पुण्डरीकाक्ष नहीं है" यह निषेध और पुष्पचाप तथा ध्वजगतमकर के लेखन से यह मन्मथ है यह उपमानारोप भी व्यंग्य हो सकता है तद्यपि यह अपह्नुति नहीं हो सकती है है। क्योंकि तुम्हारे बनाए हुए "प्रकृत का निषेध करके जो अन्यत्व का आरोप" इस लक्षण का समन्वय नहीं है। यहाँ निषेध्य भगवान् पुण्डरीकाक्ष वर्ण्य नहीं हैं अतः प्रकृत नहीं है। और प्रकृत नहीं होने से प्रकृत का निषेध भी नहीं है।

यह कहना भी मुश्किल है कि यह साधारण पुरुष नही है अपितु पुण्डरीकाक्ष है इस पहली पारी में पुण्डरीकाक्ष का आरोप किया था अब दूसरी पारी में यह पुण्डरीकाक्ष नहीं

रोपविषयपरतया निषिध्य विषयमित्यादिना क्त्वाप्रत्ययफलं ब्रुवता भवतैव तत्र स्फुटीकरणात्। काव्यप्रकाशकृतापि 'प्रकृतं यन्निषिध्यान्यत्साध्यते सा

## मधुसूदनी

वर्ण्यत्वरूपं प्रकृतत्वं नहि वक्तुं शक्यम्। अयं भावः। यतोऽत्र तु वर्ण्यो राजा कश्चित्, स एव पुण्डरीकाक्षारोपस्य विषयतया प्रकृतः। यः पूर्वकल्पे आरोप्यमाणः स एव द्वितीये कल्पे निषेध्यः पुण्डरीकाक्षः। इति कृत्वा प्रकृतत्वं नापेक्ष्यते पुण्डरीकाक्षेऽपि तु वर्ण्यत्वप्रयुक्तम्। तत्र तन्नास्तीति। ननु आरोपविषयत्वं प्रकृतपदस्यार्थं इत्येव कथमित्याह-प्रकृतेति। इदमिह स्फुटीकरणम्। चित्रमीमांसायां प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्। इत्यपह्नुतिलक्षणोयस्य प्रकल्पनपदस्य कृत्यमुक्त्वा अर्थं बुबोधयिषुराह—न चैवमिति। एवं प्रकृतस्य निषेधेन यत् साम्यादन्यत्व-

## बालक्रीड़ा

है यह निषेध है इस तरह वही पूर्व का आरोप्यमाण पुण्डरीकाक्ष निषेध के लिए प्रकृत है। क्योंकि प्रकृत पद का आरोप विषय अर्थ है, आरोप्यमाण अर्थ नहीं है; यह तो "निषिध्य विषयम्" इत्यादि से क्त्वा प्रत्यय के फल को कहते हुए आपने स्पष्ट कर दिया है।

यहाँ स्पष्टीकरण यह है कि चित्रमीमांसा में "प्रकृत के निषेध के साथ-साथ जो अन्यत्व प्रकल्पन है" इस अपह्नुति के लक्षण के प्रकल्पन पद का कृत्य कह कर अर्थ समझाते हैं कि ऐसा ठीक नहीं है यदि प्रकृतस्य निषेधेन यत् साम्यात् अन्यत्व प्रकल्पनम्" ऐसा अपह्नुति का लक्षण कहते हैं तब "पद्म नहीं है यह तो मुख ही है।" इस तत्त्वाख्यानोपमा में पद्मत्व के निषेध एवं मुखत्व के प्रकल्पन के सद्भाव से लक्षण की अतिव्याप्ति हो गई। उसके वारण करने के लिए प्रकल्पन पद का अर्थ आरोप माना गया है अतः दोष नहीं है। वहाँ आकांक्षा होती है कि जब प्रकल्पन पद का आरोप अर्थ है और आरोप भी अन्यत्व का होता है तब उसकी संगति के लिए अपेक्षित आरोप का विषय कौन। वहाँ उत्तर अर्थात् आता है कि अन्यत्व प्रकृत की अपेक्षा से होता है और अन्यत्व का आरोप है अतः आरोप का विषय प्रकृत ही है। इस प्रकार प्रकृत पद का आरोपविषय रूप अर्थ स्वतः प्राप्त हो जाता है इस बात को आपने अपह्नुति के लक्षण कहने के अवसर में "निषिध्य विषयमित्यादि से क्त्वा प्रत्यय के फल को कहते हुए स्पष्ट किया है" (इसको पण्डितराज ने स्पष्टीकरण के स्थल का निर्देश करने के अभिप्राय से लिखा है न कि उस अर्थ के प्राप्त करने में सहायक का) यहाँ का रहस्य यह है। प्रश्न=प्रकल्पन पद का आरोप अर्थ है यह जो आप कहते हैं उसमें क्या प्रमाण है। उत्तर। निषिध्य विषयमित्यादि प्राचीनों का लक्षण प्रमाण है। तब प्राचीनों के अनुसार ही आपने लक्षण क्यों नहीं कहा तब कहते हैं कि क्त्वा प्रत्यय के द्वारा लक्षण नहीं कहा। क्योंकि क्त्वा प्रत्यय से कहने में दोष आता है। जैसे क्त्वा प्रत्यय का अर्थ है पूर्व काल अतः पहले निषेध करेंगे फिर आरोप करेंगे। ऐसा करने पर आगे जिन उदाहरणों को बतलायेंगे उनमें पहले आरोप है पीछे निषेध है उनमें लक्षण की अव्याप्ति हो जायगी। वे उदाहरण ये हैं।

मधुसूदनी

प्रकल्पनमित्युक्तौ "न पद्मं मुखमेवेदम्" इति तत्त्वाख्यानोपमायां विषये पद्मत्व-निषेधस्य मुखत्वप्रकल्पनस्य च सत्वादतिव्याप्तिः। तद्वारणायाह-प्रकल्पनपदस्य आरोपपरत्वात् नातिव्याप्तिरिति शेषः। तत्राकांक्षा जागर्ति यदा प्रकल्पनं पदार्थ आरोपः। आरोपोऽपि अन्यत्वस्य तदा तत्संगतयेऽपेक्षित आरोपविषयः कः इति। तत्रार्थादागच्छति यदा अन्यत्वं प्रकृतापेक्षया भवति अन्यत्वस्य चारोपः। तदा तदपेक्षित आरोपविषयः प्रकृतः। एवं प्रकृतपदस्यारोपविषयपरत्वं प्राप्तमिति भवतैव तत्र अपह्नुतिलक्षणकथनावसरे स्फुटीकृतम्। इति। एवं यत्र निषिध्य विषयमित्यादि क्त्वाप्रत्यय फलं ब्रुवतेति पण्डितराजलेखः स्फुटीकरणस्थलनिर्देशा-भिप्रायेण। तस्यायमाशयः। प्रकल्पनस्यारोपपरत्वं यदुच्यते तत्र किं मानमिति जिज्ञासायां प्राचीनसम्मतिमाह—निषिध्य विषयं साम्यादन्यारोप इति। ननु एवं प्राचीनानुसारमेव लक्षणं किमिति नोक्तमित्युत्तरति=क्त्वाप्रत्ययेन लक्षणं नोक्तम्। तत्कुत इत्याह—वक्ष्यमाणेति। तथा लक्षणकरणे क्त्वाप्रत्ययार्थः पूर्वकालः। ततश्च पूर्वं निषेधः पश्चादारोपः। एवं सति वक्ष्यमाणे उदाहरणे यत्र पूर्वमारोपः पश्चादपह्नवः तत्रातिव्याप्तेः प्रसंगः स्यात्। वक्ष्यमाणोहादरणे च।

विकसदमरनारीनेत्रनीलाब्जखण्डा
न्यधिवसति सदा यः संयमाधः कृतानि

बालक्रीड़ा

जो कुमार स्वामी कार्तिकेय, अपने संयम से ब्रह्मचर्य से अवः कृत अमरांगनाओं के खिले हुए नेत्र रूपी नीलकमलों के समूह न कि मयूरं के रुचिर कलाप पर बैठते हैं। वह कुमार तुमको ब्रह्मचर्य के तेज का प्रदान करे।

यहाँ पहले मयूरों के रुचिर कलाप पर नीलाब्ज खण्डत्व का आरोप किया है पीछे उसका निषेध अयं नीलाब्जखण्डः न तु मायूरो रुचिरकलापः यहाँ अपन्हव शाब्द है। अत एव वाक्य भेद है।

मन्दराचल की हजारहों शिलाओं के सघर्ष से जो घाव हो गया था वही सूखकर किण के रूप में चन्द्रमामें चमक रहा है। भूमि की छाया है, मृग है या शश है। यह तो लोक में पामरों का गतानुगतिक प्रवाह प्रसिद्ध हो गया है।

यहाँ भी आरोप पूर्वक अपन्हव है जो पामरवचनोपन्यास से आर्थ है अयं शुष्क व्रणस्य किणः न तु भूमेश्छाया मृगः शशः। इति। यहाँ अपन्हव साक्षात् नञादि से नहीं कहा है। किन्तु असत्यत्व प्रतिपादक पामर वाक्य के उपन्यास से अर्थात् प्राप्त है। अतएव एक वाक्य है।

काव्यप्रकाशकार ने भी प्रकृत का निषेध करके जो अन्य का साधन है वह अपह्नुति है" इस सूत्र की व्याख्या करते समय "उपमेय को असत्य करके" इत्यादि से प्रकृत पद का उपमेय परक ही व्याख्यान किया है। अगर कहें कि यह तो प्राचीन मत सिद्ध अपह्नुति है हमने इसमें कोई परिवर्त्तन या परिवर्धन नहीं किया है। हमने तो केवल यह अपह्नुति व्यंग्य भी है यही कहा है। यह तो आपका कुश काशाव लम्बन है। अर्थात् कुछ रास्ता नहीं मिला तो कुछ बोल देना चाहिए यही तो हुआ।

त्वपह्नुतिः' इति सूत्रं व्याचक्षाणेन 'उपमेयमसत्यं कृत्वा' इत्यादिना प्रकृतपदस्योपमेयपरतयैव व्याख्यानाच्च। प्राचीनमतसिद्धेयमपह्नुतिर्व्यङ्ग्यत्वेनास्माभिरिहोच्यत इत्यपि कुशकाशावलम्बनमात्रम्। 'प्रकृतस्य निषेधेन' इत्यादिलक्षणं कुर्वता भवतैव तस्या वहिः करणात्। एवमप्युक्तपद्ये

### मर्मप्रकाश

प्राचीनेति। प्रागुक्तदण्डिमतेत्यर्थः। इह चित्रमीमांसायाम्। कुशेति। ससारकाष्ठाद्यवलम्बनमेवोचितं न कुशादेरिति यथा तथा सर्वसिद्धससारमतावलम्बनमेवोचितं नैकदेशिमतस्येत्यर्थः। तदेवाह—प्रकृतेति। एवः प्रत्यासत्तिबोधकः। अन्यलक्षणबहिर्भावोऽपि बोध्यः। विच्छितिश्चमत्कृतिः। अतिरिक्तोऽपह्नुत्यन्यो रूपकाख्यः। अन्यथा तु विच्छित्तिविशेषाभावे। ननु प्रागुक्तसर्वमतसिद्धापह्नुतिसामान्यलक्षणानाक्रान्तत्वात्कथं तत्त्वमत आह—

### मधुसूदनी

न तु रुचिरकलापे वर्त्तते यो मयूरे
वितरतु स कुमारो ब्रह्मचर्यश्रियं वः।
अत्र पूर्वमारोपः पश्चादपह्नवः शाब्दः।
मन्थानभूमिधर मूलशिलासहस्र
संघट्टनव्रणकिणः स्फुरतीन्दुमध्ये।
छाया मृगः शशक इत्यपि पामराणां
लोके गतानुगतिकः प्रथितः प्रवादः।
अत्रापि आरोपपूर्वकोऽपह्नवः पामरवचनोपन्यासादार्थः। इति।

कुशकाशेति। यदा प्रकृतं विषयं परित्यज्य इतस्ततो यं कमपि विषयमवलम्ब्योद्धरणचेष्टा जनैः क्रियते तदा कुशकाशावलम्बनमिति पदं प्रयुज्यते पण्डितैः।

भवता एव न तु अन्येन केनापि। तस्याः प्राचीनमतसिद्धाया अपह्नुतेः। अन्यथा तु अपह्नुतिरेवास्तु। इति किं राजपण्डितस्य पण्डितानां राज्ञ उक्तिः। नहि। इवि तु पण्डितराजस्य राज्ञां पण्डितस्योक्तिः। यदा दीक्षितैरभ्यधायि "अत्रापह्नुतिध्वनिरुदाहर्तव्यः" तदा तु एतावता प्रघट्टकेन शास्त्रार्थः समुद्घोषितः। यदा तु स्वीयः प्रसंगः समायातस्तदा अपह्नुतिरेवास्तु। इति किम्। यद् दीक्षितै

### बालक्रीड़ा

जव प्रकृत विपय को छोड़कर इवर उधर जिस किसी विषय का अवलम्बन करके जो कोई भी उद्धरण की चेष्टा करता है उसको कुश काशावलम्वन कहते हैं इसी का पर्याय वाचक वाक्य हिन्दी में हैं डूवते हुए को तिनका ही सहारा।

"प्रकृत के निषेध से" इत्यादि लक्षण करते हुए आपने पहले ही इस प्राचीन मत सिद्ध अपह्नुति का वहिष्कार कर दिया था। प्रश्न—अच्छा तो वतलाइये आपही कि उक्त पद्य में कौन अलंकार व्यंग्य है। उत्तर। यदि अपह्नुति की अपेक्षा चमत्कार में कुछ विलक्षणता मालूम पड़ती है तव तो अतिरिक्त कोई अलंकार व्यंग्य होगा। यदि चमत्कार में कुछ वैलक्षण्य नहीं है तव अपह्नुति ही व्यंग्य होवे। हाँ लक्षण तो तत्र प्राप्त यत् किंचित्

कोऽलंकारो व्यङ्ग्य इति चेत्, विच्छित्तिवैलक्षण्येऽतिरिक्तः, अन्यथा त्वपह्नुतिरेवास्तु। लक्षणं तु तदा प्रसक्तयत्किंचिद्वस्तुनिषेधसामानाधिकरण्येन क्रियमाणवस्त्वन्तरारोपत्वमेव। तस्मात्सर्वमेवेदमहृदयंगमं सहृदयानाम्।

इति रसगङ्गाधरेऽपह्नुतिप्रकरणम्।

## मर्मप्रकाशः

लक्षणं त्विति। तदेति। तत्रापह्नुतित्वाङ्गीकर्तृदण्डयादिमत इत्यर्थः। प्रसक्तेति। प्रसक्तत्वं च यथाकथंचित्। न तु प्रकृतत्वापेक्षयेति भावः। अस्तुतदेत्याभ्यामस्यानभिमतत्वं सूचितम्, अतः स्वसिद्धान्तरीत्योपसंहरति—तस्मादिति। दीक्षितोक्ते यथाकथंचित्तत्समर्थनं चेत्यर्थः। अहृदयंगमति। अत्रेदं चिन्त्यम्—दीक्षितैर्हि "दण्डी त्वपह्नुतेः साधर्म्यमूलत्वनियममनादृत्य 'अपह्नुतिरपह्नुत्य किंचिदन्यार्थसूचनम्' इति लक्षयित्वा उदाजहार—'न पञ्चेषुः स्मरस्तस्य सहस्रं पत्त्रिणां यतः। चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिणः॥' इत्याद्युपक्रम्य 'त्वदालेख्ये' इत्याद्युक्तमिति। तदनुसारेणैव तत्रापह्नुतिध्वनिरुदाहृत इति न किंचिदहृदयंगमम्। प्रकाशविरोधोऽपि न। तत्रोपमेयपदस्य पदार्थोपलक्षणत्वात्। अन्यथा 'केसेसु बलामोडिअ' इत्यत्र 'स्वयं न प्रपलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं संभाव्य तान् कंदरा न त्यजन्तीत्यपह्नुतिर्व्यज्यते" इति प्रकाशग्रन्थासंगतिः स्यादिति बोध्यम्॥ इति रसगङ्गाधरमप्रकाशेऽपह्नुतिप्रकरणम्॥

## मधुसूदनी

रुच्यते तदेव भवतापि। तर्हि क इयान् व्यामोहः। आम्, तथैवास्तु। अथ लक्षणं निर्वचनीयम्। "लक्षणं तु तदेति तदारोपत्वमेवेति दीनं वचः किमर्थम्। एतत्तु विदुषां हृदयंगमं नास्ति।

इति रसगंगाधरे मधुसूदन्यामपह्नुतिप्रकरणं समाप्तम्।

## बालक्रीड़ा

वस्तु के निषेध के समानाधिकरण क्रियमाण वस्त्वन्तर का समारोप ही है। इसलिए यह सब कुछ आपका कथन सहृदयों के लिए हृदयंगम नहीं है।

अन्यथा अपह्नुति ही व्यंग्य होवे यह क्या पण्डितों के राजा की उक्ति है नहीं यह तो राजाओं के पण्डित की खुश करने वाली उक्ति है। जब दीक्षित जी ने कहा था कि यहाँ अपह्नुतिध्वनि उदाहरणीय है तब तो इतने लम्बे चौड़े व्याख्यान से शास्त्रार्थ की घोषणा की और जब अपना प्रसंग आया तब कहते हैं कि वही दीक्षित के द्वारा उदाहृत अपह्नुति ध्वनि ही होनी चाहिए। यह क्या। जो दीक्षितजी ने कहा वही कहना अन्त में है तब इतना व्यामोह किस बात का। अच्छा वही सही। अब ऐसी अपह्नुति का लक्षण तो बतलाये। हाँ लक्षण तो तब, प्रसक्त जिस किसी वस्तु के निषेध के साथ २ क्रियमाण वस्त्वन्तर का समारोप ही है। यह दीन वचन क्यों। यह आपका दीन वचन विद्वानों की गोष्ठी में शोभा नहीं पाता है।

रसगंगाधर में बालक्रीड़ा में अपह्नुति प्रकरण समाप्त हुआ।

## अथोत्प्रेक्षाप्रकरणम्—

**तद्भिन्नत्वेन तदभाववत्त्वेन वा प्रमितस्य पदार्थस्य रमणीयतद्वृत्तितत्स-**

### मर्मप्रकाशः

उत्प्रेक्षां लक्षयति—अथोत्प्रेक्षेति। विनिगमनाविरहादन्योन्याभावात्यन्ताभावघटितं लक्षणद्वयं युगपदाह—तद्भिन्नत्वेनेति।

### मधुसूदनी

### अथ उत्प्रेक्षालंकारः

तद्भिन्नत्वेनेति। अत्र उत्प्रेक्षालक्षणे तद्भिन्नत्वेनेति तद्वृत्तीति तत्वेनेति तदभाववत्वेनेति तत्समानाधिकरणेति तद्वत्वेनेति एवं षट् तत्पदानि। तत्र पूर्वेषां त्रयाणां तत्पदानामर्थो धर्मी उपमानम् विषयी, उत्तरेषां त्रयाणां तत्पदानामर्थो धर्म उपमानं विषयी। एवं च धर्म्युत्प्रेक्षार्थः पूर्वाणि त्रीणि। धर्मोत्प्रेक्षार्थमुत्तराणि त्रीणि तत्पदानि इत्यर्थः। उत्प्रेक्षा इत्यत्र उत्, प्र, ईक्षा इत्येवं त्रीणि पदानि। तत्र उत् पदस्यार्थ उत्कटा इति। ईक्षायां तस्या अन्वयात्। प्रपदार्थः प्रकृष्ट उपमानमधिकगुणविशिष्ट स्योपमानत्वात्। न्यूनगुणविशिष्टस्योपमेयत्वात्। एवं च उत्कटा प्रकृष्टस्य उपमानस्य ईक्षा ज्ञानम्। तच्च सम्भावनमेव। सम्भावनं च संशयविशेषः। वैशिष्ट्य-

### बालक्रीड़ा

### उत्प्रेक्षालंकार

यहां उत्प्रेक्षा इस शब्द में उत्, प्र, और ईक्षा ये तीन पद हैं। इनमें उत् का अर्थ है उत्कट और प्र का अर्थ है प्रकृष्ट। यहां प्रकृष्ट से धर्मी रूप और धर्मरूप विषयी उपमान का ग्रहण होता है। क्योंकि अधिक गुणवाला उपमान होता है और न्यून गुण वाला उपमेय होता है। इस तरह प्रकृष्ट की जो उत्कट ईक्षा माने ज्ञान वह उत्प्रेक्षा है। इस ज्ञान का कोई निमित्त जिसके जरिये यह ज्ञान होगा। कोई विषय जिसमें यह ज्ञान होगा। कोई विषयी जिसका ज्ञान होगा एवं कोई सम्बन्ध जो विषय और विषयी को मिलायेगा तब यह ज्ञान होगा। और ऐसी स्थिति में यह ज्ञान अन्य ज्ञानों की अपेक्षा उत्कट होगा। अतः इसका स्पष्टी करण करते हैं कि इस ज्ञान में साधारण धर्म निमित्त है वर्ण्य उपमेय विषय है। धर्मी या धर्म विषयी हैं और तादात्म्य एवं तदितर समवायादि सम्बन्ध हैं। ऐसा यह ज्ञान संभावना नामक है। अर्थात् निश्चय भिन्न एक प्रकार का संशय है। एक प्रकार का संशय कहने का मतलब है कि जैसे—संशय में अनेक कोटियाँ होती हैं वैसे ही यहाँ भी वे होती हैं। किन्तु संशय में क्या स्थाणु है अथवा पुरुष है ये दोनों कोटियाँ तुल्य होती हैं और यहाँ उत्प्रेक्षा में शायद यह स्थाणु होगा इस तरह एक कोटि उत्कट होती है। अतः यह उत्प्रेक्षा अनेक कोटियों के रहने के कारण संशय होकर भी एक कोटि के उत्कट होने से संशय से भिन्न हो गयी। इस प्रकार निष्कर्ष हुआ कि साधारण धर्म रूप निमित्त के द्वारा विषय में तादात्म्य या तादात्म्येतर समवायादि सम्बन्ध से जो विषयी का निश्चय भिन्न ज्ञान वह संभावना हैं यह संभावना उत्प्रेक्षा है। यही कविप्रतिभोत्थापित अतएव हृद्य हुई अलंकार होती हैं।

## मधुसूदनी

न्चोत्कटत्वं यतः स्थाणुरिति वा पुरुष इति वेति कोटिद्वयावगाहिज्ञानं संशयः। संभावनेऽपि तथैव कोटिद्वयं परमत्र कदाचिदनेन स्थाणुना भवितव्यमितिरूपा एका कोटिरुत्कटा। अत एवोच्यते उत्कटैककोटिका शंका सम्भावनेति। शंकासंशयौ पर्यायौ। एवं च संभावना संभावनं वा (केवलं स्त्रीपुंभिदा) उत्प्रेक्षा। तत्र जिज्ञासा भवति। तच्च संभावनं कस्य, कथं, किंनिमित्तकं, किंसम्बन्धकमिति। तत्र कस्येत्याकांक्षायामाह-तद्भिन्नत्वेन प्रमितस्य, तदभाववत्वेन प्रमितस्येति। प्रमा यथार्थ ज्ञानं तद्विषयः प्रमितः। प्रमितः पदार्थं उपमेयं विषयः। एवं च उपमानभिन्नत्वेन प्रमितस्य उपमेयस्य। यो हि धर्म उत्प्रेक्ष्यस्तस्य धर्मस्य अभाव उपमेये। तथा

## बालक्रीड़ा

इसी को पण्डितराज ने ऐसा लिखा है। तद्भिन्नत्वेन। यहाँ लक्षण घटक पदों में रमणीय पद स्थान भ्रष्ट हो गया है। इसका स्थान है संभावन अतः रमणीय हृद्य संभावना उत्प्रेक्षालंकार है। यह अन्वय है। क्योंकि अलंकारत्व का प्रयोजक स्वरूपगत हृद्यत्व ही है। जो कि अलंकार के सामान्य लक्षण होने के कारण स्वतः प्राप्त है उसके निवेश की लक्षण में कोई आवश्यकता नहीं है किन्तु स्थितस्य गतिश्चिन्तनीया के अनुसार अन्वय दिखा दिया है। तद्वृत्ति एवं तत्समानाधिकरण धर्म रमणीय रहे इसकी कोई आवश्यकता नहीं है। रहे तो कोई विरोध भी नहीं है। क्योकि तमो धूमचयं शंके कोकीविरह शुष्मणाम्" यहाँ तम में कोकीविरहाग्नि समुत्थधूमचय की संभावना की गई है। इसमें नीलत्व दृष्टिप्रतिरोधकत्वरूप धर्म निमित्त हैं इनमें कोई रमणीयता नहीं हैं। और धूमस्तोमं तमः शंके यह पाठ दुष्ट है। क्योंकि इस पाठ में "धूमस्तोम में तम की शंका करता हूँ इस रूप में विरुद्ध बुद्धि हो जाती है। अतः विधेयाविमर्श एवं तत्प्रयुक्त विरूद्धबुद्धिकारित्व दोष हैं। अतः तमो धूमचयं शंके यह पाठ ठीक है और तनय मैनाक गवेषण" इस गद्य में भागीरथी को हिमगिरि भुज बनाने की प्रक्रिया में संभावना की है। इसमें श्वेतत्व और शीतत्व धर्म कोई रमणीय नहीं है। अतः उक्त अन्वय उचित है। और तद्धर्मसम्बन्धनिमित्तकम् इस पद में तत् पद व्यर्थ है प्रत्युत अशुद्ध है। क्योंकि तद्वृत्ति जो धर्म या तत्समानाधिकरण जो धर्म वह है निमित्त जिसमें ऐसा सम्भावन यह अन्वय इष्ट है। इसलिए तद्वृत्ति या तत् समानाधिकरण और धर्म इसके बीच में तत् पद की कोई आवश्यकता नहीं है। बल्कि तत्पद खटकता है। और उक्त प्रकार के अन्वय की अपेक्षा है। यहाँ सम्बन्ध पद का भी स्थान गडबडा गया हैं। उसकी भी यहाँ कोई आवश्यकता नहीं है। बल्कि आवश्यकता है कि जो तत्त्वेन या तद्वत्वेन की सम्भावना करते हैं उसके लिए सम्बन्ध की अपेक्षा है। उस अपेक्षा की पूर्ति के लिए सम्बन्ध को बतलाना जरूरी है। फलतः तत्सम्बन्धकं पाठ होना चाहिए। इस तरह नितान्त शुद्ध लक्षण का स्वरूप यह हुआ कि तद्भिन्नत्वेन तदभाववत्वेन वा प्रमितस्य पदार्थस्य तद्वृत्ति तत्समानाधिकरणान्यतर धर्म निमित्तकं तत्सम्बन्धकं तत्त्वेन तद्वत्वेन वा रमणीयं संभावनमुत्प्रेक्षा।

क्योंकि धर्म्युत्प्रेक्षा में अभेदेन उत्प्रेक्षा करेंगे तब उसके लिए तादात्म्य सम्बन्ध की

**मानाधिकरणान्यतरधर्मनिमित्तकं तत्संबन्धकं तत्त्वेन तद्वत्त्वेन वा संभावन-मुत्प्रेक्षा ॥**

## मधुसूदनी

चोत्प्रेक्ष्यधर्माभाववत्वेन प्रमितस्य विषयस्य। कथमित्याकांक्षायामाह-तत्वेन उपमान-भूतधर्मित्वेन संभावनम्। तद्वत्वेन उत्प्रेक्ष्यधर्मवत्वेन वा संभावनम्। तद्यथा क्रमशः तमो धूमचयं शंके कोकीविरहशुष्मणाम्। इत्यत्र तमो धूमाद्भिन्नमिति प्रमा। तद्विष-यीभूतस्य तमसो धूमत्वेन संभावनमिति। अस्यां मुनिनामपि मोहमूहे। इत्यत्र उत्प्रेक्ष्यमोहधर्मस्वरूपाभाववत् कुचशैलपरिशीलनादि। इति प्रमा। तद्विषयीभूतस्य कुचशैलपरिशीलनादेः मोहस्वरूपत्वेन संभावनमिति। एवं च इदं तद्भिन्नमिति। इदं तदभाववदिति प्रमाया विषयीभूतस्यापि तत्वेन तद्वत्वेन संभावनमिति उत्प्रेक्षाया आहार्यत्वं गमयति। अत एव ज्ञातस्येति पदमपहाय प्रमितस्येति पदमुपात्तम्। ज्ञानं तु अथार्थात्मकमपि स्यात् प्रमा तु यथार्थमेव तत्। किंनिमित्तकमित्याकांक्षायामाह-रमणीयतद्वृत्तीति रमणीयतत्समानाधिकरणेति अन्यतरधर्मनिमित्तकम्। अत्रान्यतरधर्मे रमणीयेति विशेषणं न कमपि विशेषं बोधयति। यतस्तमसो धूमत्वसंभावने यन्निमित्तं नीलत्वं दृष्टिप्रतिरोधकत्वं प्रसरणस्वभावत्वं च तेषु नास्ति रमणीयत्वं किमपि। कुत्र-चित्तत् रमणीयत्वमपि स्यादिति चेत्तथास्तु।

तद्वृत्ति तत्समानाधिकरणान्यतर तद्धर्मसम्बन्धनिमित्तकमित्यत्र तद्धर्मेत्यत्रत्यं तत्पदं व्यर्थं तद्वृत्तिः तत्सनानाधिकरणो यो धर्मः स निमित्तं यत्र संभावने तत्ता-दृशनिमित्तकमिति सुस्पष्टं समन्वयात्। सम्बन्धनिमित्तकमिति सम्बन्धपदमपि अस्थाने पतितम्। प्रत्युत तत् पदस्य सम्बन्धपदस्य च सम्मेलनं शोभनं स्यात्। एवं तस्य धर्मिणो धर्मस्य च विषयिणः सम्बन्धः अभेदस्तदितरश्च समवायादिर्यत्र तत् तत्सम्बन्धकं सम्भावनमित्यन्वयः। एवं च किंसम्बन्धकमित्यपि समन्वितम्। तथा च रमणीयतद्वृत्तितत्समानाधिकरणधर्मनिमित्तकं तत्सम्बन्धकमिति पाठः साधीयान्। धर्म्युत्प्रेक्षायां धर्मो निमित्तम्। धर्मोत्प्रेक्षायां तत्सहचरितधर्मस्तथेति प्राप्तम्। नन्वेवं हि लसणस्याननुगमः स्यादिति। न च तद्वृत्तितत्सहचरितान्यतरत्वस्य धर्मे निवेश नान्न अननुगम इति कथनीयम्। उत्प्रेक्षायाः सादृश्यमूलकत्वात्, सादृश्यस्य च किंचिद्धर्मप्रयोज्यत्वात्, प्रयोजकश्च कश्चिद् धर्मः सहचरितो वा असहचरितो वा स्यात्।

## बालक्रीड़ा

जरूरत है। और धर्मोत्प्रेक्षा में भेदेन उत्प्रेक्षा के लिए समवायादि सम्बन्ध।

उत्प्रेक्षा दो तरह की है। एक धर्म्युत्प्रेक्षा इसी के वस्तूत्प्रेक्षा एवं स्वरूपोत्प्रेक्षा ये दो नाम और हैं। दूसरी धर्मोत्प्रेक्षा। इन दोनों प्रकार की उत्प्रेक्षाओं का एक लक्षण बना कर कहा है। तद्भिन्नत्वेन इस पद में "तत्" पद का अर्थ है धर्मी उपमान जैसे धूमचय से भिन्नत्वेन प्रमित उपमान तम है। तदभाववत्त्वेन इस पद में "तत्" पद का अर्थ है धर्म। प्रमित का अर्थ है प्रमा यथार्थ ज्ञान का जो विषय हो वह

'लोकोत्तरप्रभावं त्वां मन्ये नारायणं परम्' इत्यत्र तादृशप्रभावस्य नारायणत्वव्याप्यतासंभावनादशायां सामग्र्यभावेनानुमित्यनुदयाज्ञायमा-

### मर्मप्रकाशः

लोकोत्तरेति। राजानं प्रत्युक्तिः। तादृशेति। लौकोत्तरेत्यर्थः। सामग्री निश्चयरूपव्याप्तिज्ञानादिरूपानुमितिसामग्रीत्यर्थः। ननु कथमेतासां वारणमत आह—

### मधुसूदनी

तमन्तरा सादृश्यस्याप्रतिष्ठानात्। तस्य च स्वतः प्राप्तत्वादन्यतरनिवेशगौरवं निष्फल-मेव। फलमुखस्य तस्य सह्यत्वमपि स्यात्। अन्यच्च अन्योन्याभावात्यन्ताभावा वन्यतरत्वं च निवेश्य गुरुभूतस्य लक्षणस्य निर्माणेन किं फलमसाधीति पण्डितराजै-रेव ज्ञातं स्यात्। इत्थं च विषयिसम्बन्धिधर्मप्रयुक्तं तादात्म्यतदितरसंसर्गकं विषयोद्-देश्यकं विषयिविधेयकमाहार्यसम्भावनमुत्प्रेक्षा इति लक्षणं; रमणीयत्वं सामान्य लक्षणप्राप्तमेव।

नारायणत्वेति। नारायणत्वनिरूपिता या व्याप्यता व्याप्तिः यत्र यत्र लोकोत्तर प्रभावस्तत्र २ नारायणत्वमितिरूपा। तस्याः सम्भावना निश्चयरहितं ज्ञानम्। तस्यां दशायां सद्भावे। सामग्र्या निश्चयात्मकव्याप्तिज्ञानादेरनुमितिप्रयोजिकाया अभा-वेन। अनिश्चयदशया निश्चयाभावः सुतरां प्रसज्येतेति भावः।

### बालक्रीड़ा

इस तरह प्रमा के विषय पदार्थ दो होगये एक उपमेय धर्मी दूसरा उपमेय धर्म और प्रमितस्य पदार्थस्य की षष्ठी का अन्वय तत्वेन एवं तद्वत्वेन संभावन में है। इस संभावना में उत्प्रेक्षा का निमित्त है तद्वृत्ति अर्थात् धर्मी धूम में रहने वाला नीलत्वादि धर्म और तत्समाना-धिकरण "निधिं लावण्यानाम्" में ब्रह्मा जी में नही रहने वाले धर्म मोह के समानाधिकरण धर्म अविचार्यकारित्व है। धर्म्युत्प्रेक्षा में धर्म उत्प्रेक्षा का निमित्त है और धर्मोत्प्रेक्षा में तत्सह चरितधर्म उसका निमित्त है। उनके सम्बन्ध है तादात्म्य (पहले में) और समवायादि (दूसरे में)। अतः उपमान से भिन्न है इस रूप में अवगत पदार्थ उपमेय की, उपमान में रहने वाले धर्म को निमित्त बनाकर तादात्म्य सम्बन्ध से उपमानत्वेन संभावना उत्प्रेक्षा है। यह धर्म्यु-त्प्रेक्षा की संगति के लिए पहला लक्षण हुआ। जिस धर्म से विशिष्ट की संभावना करनी है उस धर्म से रहित है अर्थात् तदभाववान् है इस रूप में प्रमित पदार्थ की उसमें नही रहने वाले धर्म के समानाधिकरण सहचारी धर्म को निमित्त बनाकर समवायादि सम्बन्ध से उक्त धर्म वत्त्व की संभावना उत्प्रेक्षा है। यह धर्मोत्प्रेक्षा की संगति के लिए दूसरा लक्षण हुआ।

हे लोकोत्तर प्रभाव ? आपको मैं पर नारायण मानता हूँ। नारायण में भी परत्व एवं अपरत्व लगा हुआ है क्या ? जो यहां परत्व विशेषण दिया। नर एक है दूसरा नारायण है यही भाव प्रसिद्ध है। अथवा एवकारार्थक "परम्" यह मान्त अव्यय यहां है अतः नारायण ही नर नही आपको मैं समझता हूँ यह भाव हो सकता है। जहां जहां लोकोत्तर प्रभाव है

नायां नारायणेनानेन प्रायशो भवितव्यमिति संभावनायामतिप्रसङ्गवारणाय तद्भिन्नत्वेन प्रमितस्येति संभावनायामाहार्यतां गमयति । एतेन

'रामं स्निग्धतरश्यामं विलोक्य वनमण्डले ।
प्रायो धाराधरोऽयं स्यादिति नृत्यन्ति केकिनः ॥'

### मर्मप्रकाशः

संभावनेति । इदं चेत्यादि । संभावनायां लक्षणघटकीभूतायाम् । तथा चोक्तसंभावनाहार्येति नातिप्रसङ्ग इति भावः । अस्य फलान्तरमाह—एतेनेति । धाराधरो मेघः । भ्रान्तिरपीयमनाहार्या अन्यथा कार्याभावापत्तेः ।

### मधुसूदनी

प्रमितस्येति । तमो धूमभिन्नमिति प्रमा यथार्थज्ञानं वर्त्तते । तथापि तमो धूमं मन्ये इति ज्ञानं कस्यचित्स्यात्तत्तु सत्यपि बाधे ऐच्छिकमाहार्यमेव अत उक्तमाहार्यतां गमयति इति । एतेन उत्प्रेक्षाया आहार्यात्मकत्वेन । प्रायो धाराधरोऽयं स्यादिति संभावनायां, धाराधरधियेति भ्रान्तौ चानाहार्यायां नातिसङ्गः ।

### बालक्रीड़ा

वहां वहां नारायणत्व है । इस तरह यहां लोकोत्तर प्रभावशाली में नारायणत्व निरूपित व्याप्ति की संभावना निश्चयानात्मक ज्ञान ही है किन्तु निश्चय रूपा नही है । इसी लिए अनुमिति की सामग्री माने कारण सामग्री व्याप्ति के अभाव में कार्य अनुमिति नही हुई । यहाँ का भाव यह है कि व्याप्ति निश्चयात्मक ज्ञान है और संभावना निश्चयानात्मक ज्ञान है अतः दोनों में ३६ अंक की तरह परस्पर विरोधिता है । संभावनास्थल में अनुमिति नही होती है । अस्तु । किन्तु प्रायः यह लोकोत्तरप्रभाशाली पुरुष नारायण हो सकता है इस तरह बाध के अभाव में होने वाली संभावना में जो उत्प्रेक्षा की अतिप्रसक्ति हो रही है उसके वारण के लिए क्या उपाय है ।

उत्तर—इस संभावना में उत्प्रेक्षा लक्षण की अतिव्याप्ति न हो जाय इसलिए लक्षण में "तद्भिन्नत्वेन प्रमितस्य" विशेषण दिया । जो संभावना में आहार्यता का ज्ञान करा देता है । यहाँ का रहस्य यह है कि (तमो धूमचयं शंके) मैं तम में धूम की शंका करता हूँ । यहां वर्ण्य तम अवर्ण्य धूम से भिन्न है ऐसी प्रमा है यथार्थ ज्ञान है । तब भी तम में धूम की संभावना ज्ञान करते है अतः यह तम को धूम समझना बाध कालिक इच्छा जन्य ज्ञान ही तो हुआ जिसको आहार्य ज्ञान कहते है इस तरह संभावना में आहर्यता का बोध हुआ ।

इससे अर्थात् सम्भावना को आहार्य समझने से वन में मयूरों ने स्निग्धतर श्याम राम को देखकर "प्रायः शायद यह धराधर मेघ होगा" कि वे नाचने लगे । इस संभावना, और राम को धाराधार मेघ समझ कर मयूर नाचने लगे इस भ्रांति में भी अतिप्रसंग नही हुआ ।

यहाँ का सार यह है कि यहां संभावना एवं भ्रान्ति में यह धाराधर राम से भिन्न है यह प्रमा यथार्थ ज्ञान मेघों में मयूरों को नहीं हुआ । किन्तु यह धाराधर राम है यह ज्ञान

इत्यत्र संभावनायाम्, धाराधरधिया धीरं नृत्यन्ति स्म शिखावलाः' इत्यत्र भ्रान्तौ च नातिप्रसङ्गः।

'वदनकमलेन बाले ? स्मितसुषमालेशमावहसि यदा।
जगदिह तदैव जाने दशार्धबाणेन विजितमिति ॥'

### मर्मप्रकाशः

स्मितेति। हास्यशोभालेशमित्यर्थः। तदेति पूर्वान्वयि। दशेति। पञ्चबाणेन मदनेनेत्यर्थः।

### मधुसूदनी

वदनेति। यदा त्वया हसितं स्यात् तदैव पंचबाणेन जगत् विजितं स्यात्। इति वाच्योऽर्थः। हसन्तीं त्वां वीक्ष्य जगत् कामातुरं कामविह्वलं कामेन परास्तं संजातमित्यर्थः। अत्र जगज्जयस्य संभावना। तत्र नायिकाकर्तृकहास्यनिमित्तकत्वं जगन्निष्ठं न। यदि लक्षणे धर्मनिमित्तकमिति नोपादीयेत तर्हि अस्मिन् लक्ष्ये उत्प्रेक्षातिप्रसक्तिर्दोषः। कामातुरभवनं विषयः कामकर्त्तृकं जगत्कर्मकं जगज्जयनं विषयी। अत्र स्मितं तव स्यात् कामेन जगद्विजितं स्यादित्येवं स्मितस्य सम्भावनोत्थापकत्वेऽपि

### बालक्रीड़ा

हुआ। हाँ यही ज्ञान यदि धाराधर से भिन्न राम है। ऐसे पहले हुए यथार्थ ज्ञान के बाद होता तो बाधकालिक ऐच्छिक होता किन्तु ऐसा नहीं है। अतः इन दोनों में उत्प्रेक्षा की अतिप्रसक्ति नहीं हुई। उत्प्रेक्षा बाध होने पर भी इच्छा जन्य ज्ञान हैं और बाध के अभाव दशा में होने वाला ज्ञान संभावना है तथा भ्रांति भी है। समकाल एवं पूर्व काल में बाध इनमें नही है किन्तु उत्तर काल में तो बाध इनमें भी है ही।

इस निर्णय के अनुसार नागेश महाशय का यदि भ्रान्ति को अनाहार्या नहीं मानेंगे याने आहार्या मानेंगे तो कार्य के नहीं होने की आपत्ति लग जायगी। किन्तु "धाराधर धिया धीरं नृत्यन्ति स्म शिखावलाः" यहाँ भ्रान्ति में तो नृत्य रूपी कार्य हो रहा है" इत्यादि कथन चिन्तनीय है। क्योंकि रूपक जो आहार्य ज्ञान का मुख्य स्थल है उसमें नायिका के मुख को चन्द्र मानकर नायक लोग आनन्द का अनुभव करते हैं। इस तरह आहार्य एवं अनाहार्य दोनों स्थलों में कार्य होता है तब "भ्रान्ति को आहार्य मानेंगे तो कार्य के न होने की आपत्ति लग जायगी" यह सब व्यर्थ है। क्योंकि भिन्नत्वेन प्रमा सच्चा ज्ञान होने के बाद भी वस्तु को मनमाना समझना संभावना उत्प्रेक्षा है। तत् ज्ञान रहित संभावना एवं भ्रान्ति उत्प्रेक्षा के दायरे से बाहर है।

हे बाले ? जब तुमने वदन कमल में स्मित की सुषमा के लेश को भी धारण किया तभी मैं जान गया कि दशार्ध पंच बाण कामदेव ने जगत् को जीत लिया। अर्थात् तुम्हारा हँसना जगत् को कामातुर कर देता है। यह जगत् का कामातुर कामविह्वल होना विषयरूप उपात्त नहीं है अतः अनुपात्त विषया उत्प्रेक्षा है। यहां जगन्निष्ठ कामातुर भवन में कामकर्त्तृक जगत्कर्मक विजयन की संभावना है। इसमें अतिप्रसंग के वारण करने के लिए

अत्र जगज्जयसंभावनायामतिप्रसङ्गवारणाय रमणीयधर्मनिमित्तकमिति। स्मितस्य संभावनोत्थापकत्वेऽपि जगद्विजितत्वरूपविषयविषयिसाधारणत्वाभावान्न दोषः। एतेन

### मर्मप्रकाशः

जगञ्जयेति। जगति जयसंभावनायामित्यर्थः। तद्धर्मेति। तद्धर्मसंबन्धीत्यर्थः। ननु स्मितरूपधर्मनिमित्तकत्वमस्त्येवात आह—स्मितेति। हास्यस्य तत्सहकारित्वादिति भावः। जगदिति। जगद्विजितत्वरूपौ यौ विषयविषयिणौ तन्निष्ठत्वाभावादित्यर्थः। अस्य प्रत्युदाहरणान्तरमाह—एतेनेति। ग्लौश्चन्द्रः। गौः पृथ्वी। भूतत्वं केशग्रहणादिविशेषणम्। पापस्य द्यौः पतेदि-

### मधुसूदनी

स्मितं नायिका मुखस्य धर्मः न तु विषयस्य जगत्कामातुरभवनस्य न वा विषयिणो जगद्विजितत्वस्य अर्थात् जगञ्जयस्य। अत उत्प्रेक्षायाः प्रसक्तिरूपो दोषो नास्ति। अत्र जगत्कामातुरभवनं विषयो नोपात्त इति अनुपात्तविषया क्रियोत्प्रेक्षेयम्। जगत्कामातुरभवनजगद्विजितत्वरूपेति पाठः। यदि क्रियोत्प्रेक्षा नास्ति धर्मिणि धर्मोत्प्रेक्षा तदा जगद्विषयः कामसम्बन्धी जयः विजितत्वं विषयी। तदा जगद्विजितत्वरूपेति पाठः। एतेन उत्प्रेक्षानिमित्तभूतधर्मस्य विषयविषयिसाधारणत्वस्वीकारेण।

### बालक्रीड़ा

"धर्मनिमितकम"। विशेषण का उपादान किया है। इसका फल हुआ कि तुम हँसी कि काम ने जगत् को जीता इस तरह स्मित के संभावनोत्थापक होने पर भी जगत्कामातुर भवन रूप विषय और जगद्विजय रूप विषयी दोनों में समान भाव से नहीं रहने के कारण कोई दोष नहीं है। अर्थात् कामदेव के द्वारा जगत् के विजय करने की संभावना को स्मित जागरित कर सकता है किन्तु वह है नायिका के मुख का धर्म अतः न तो वह कामातुर जगत् (विषय) का धर्म है और न विजित जगत् (विषयी) का धर्म है अतः विषय विषयी साधारण यह स्मित नहीं है अतः दोष नहीं है।

यहां "जगद्विजित रूप यह मुद्रित पाठ गडबड है। लिपिकार का भ्रम प्रमाद ही इसका कारण है।

अतः जगत्कामातुरभवन जगद्विजितत्व रूप पाठ उचित है यह क्रियात्प्रेक्षा मानकर लिखा है। जगत् धर्मी में काम सम्बन्धी जय धर्म की उत्प्रेक्षा मानते हैं तब जगद्विजितत्व पाठ ही समुचित है। जगत् में कामकर्तृक जय विषयी की संभावना करते हैं तब विजितत्वरूप विषयी होगा न कि जगद्विजित। विजित ही जगत है अतः एक में धर्म धर्मिभाव नहीं हुआ। अतः जगद्विजितत्व पाठ ही है। जैसे तमो व्यापन विषय में तमोलेपन विषयी की संभावना है उसी तरह यहां जगत्कामातुर भवन विषय में जगद्विजयन विषयी की संभावना है।

उत्प्रेक्षा का निमित्त धर्म विषय विषयी में साधारण होना चाहिए। इससे "हाय हाय

'प्रायः पतेद्द्यौः, शकलीभवेद् ग्लौः, सहाचलैरम्बुधिभिः स्खलेद्भौः ।
नूनं ज्वलिष्यन्ति दिशः समस्ता, यद् द्रौपदी रोदिति हा हतेति ॥'

अत्रापि रोदनकारणीभूतकेशग्रहणादिजन्यपापनिमित्तोत्थापितायां स्वर्गपतनसंभावनायां नातिप्रसङ्गः । प्रायः स्थाणुनानेन भवितव्यम्, नूनं पुरुषेणानेन भाव्यम्, दूरस्थोऽयं देवदत्त इवाभाति, इत्यादौ निश्चलत्वचञ्चलत्वादिसाधारणधर्मनिमित्तायां संभावनायामतिप्रसङ्गः स्यात्, अतो रमणीयत्वं धर्मगतमुपात्तम् । रूपकवित्तावतिप्रसङ्गवारणाय संभावनमिति । अत्र च तादात्म्येन

### मर्मप्रकाशः

त्यादि विषयविषयिसाधारणत्वाभावादिति भावः । स्थाणुना वृक्षेण । यथाक्रमेण धर्मानाह—निश्चलेति । आदिना विलक्षणाकारत्वपरिग्रहः । रमणीयत्वमिति । तत्त्वं च कविप्रतिभानिर्वर्तितत्वमिति भावः । ननु ज्ञानमित्येवास्तु अतः आह—रूपकेति । नन्वेवमपि तदभावव-

### मधुसूदनी

प्रायः पतेदिति । अत्र रोदनं द्रौपद्यां, तत्कारणं केशग्रहणं तज्जन्यं पापं च दुःशासने तन्निमित्तोत्थाः पतनादिक्रियाश्च स्वर्गादौ । एवं तादृशपापपतनयोः साधारणत्वाभावात् तादृशपापनिमित्तोत्थापितायां स्वर्गपतनसंभावानायां नातिव्याप्तिः । यदा

### बालक्रीड़ा

मैं भारी गई" ऐसे जो द्रौपदी रोती है उससे प्रायः स्वर्ग गिर जायगा । चन्द्रमा टुकड़े टुकड़े हो जायगा । पर्वत एवं सागरों के साथ पृथिवी का स्खलन हो जायगा । और सभी दिशायें मानों जल जायगी एसा मालूम पड़ता है ।

यहां द्रौपदी के रोने का कारण है दुःशासन के द्वारा उसके केशों का पकड़ना, उसके चीर साड़ी का अपहरण करना एवं उसके अंगों का स्पर्श करना । इन पापों के निमित्त से उठी हुई संभावना में स्वर्ग के पतन का भी अतिप्रसंग नहीं हुआ । क्योंकि केशग्रहणादि कर्तृत्व एवं तज्जन्य पाप रूप धर्म दुःशासन में है और पतनादिक्रियायें स्वर्ग में । अतः व्यधिकरण होने से साधारणत्व का अभाव है फलतः दोष नहीं है ।

प्रायः यह स्थाणु हो सकता है । अवश्य यह पुरुष हो सकता है । यह बैठा हुआ पुरुष दूर से देवदत्त के जैसा मालूम पड़ता है इत्यादि निश्चलत्व चञ्चलत्व आदि साधारण धर्म निमित्तों से उठीं हुई संभावना में अतिप्रसंग हो सकता है वह नहीं होने पावे इसलिए धर्म में रमणीयत्व विशेषण का उपन्यास किया है । यह कथन अविचारित रमणीय है । पण्डितराज के दिये उत्प्रेक्षा के प्रायः सभी उदाहरणों में इसकी संगति नहीं हो रही है । शायद ही हेतूत्प्रेक्षा या फलोत्प्रेक्षा में कोई उदाहरण हो । जहां धर्म रमणीय मिल सके । इसका अनुभव भावुक लोग स्वयं करेंगे हम इसको लिख चुके हैं ।

रूपकज्ञान में अतिप्रसंग को वारण करने लिए संभावनम् पद का उपादान किया है ।

हिमगिरिसंबन्धी भुजत्वजात्यवच्छिन्नस्तादात्म्येनोत्प्रेक्ष्यते। तत्र च भागीरथीगतानां श्वैत्यशैत्यलम्बत्वजलधिजठरप्रविष्टत्वानां धर्माणां निमित्ततासिद्धये विषयिहिमगिरिभुजगतत्वमवश्यं संपादनीयम्। तेषां च मध्येऽनुपात्तयोः श्वैत्यशैत्ययोर्हिमगिरिसंबन्धित्वादेव भुजगतत्वं संपन्नम्। इतरयोरपि संपादनाय तनयमैनाकगवेषणं फलमुत्प्रेक्षितम्। तत्साधनताज्ञानस्य लम्बत्वजलधिजठरप्रवेशानुकूलयत्नजनकत्वात्। एवं च विषयिगततादृशगवेषण-

## मर्मप्रकाशः

तत्रेति। तासां स्वरूपोत्प्रेक्षाणां मध्य इत्यर्थः। हेतूत्प्रेक्षाफलोत्प्रेक्षे आह—उक्तेति। जात्यादिष्वित्यर्थः। एवमग्रेऽपि। अनल्पेति। बह्वित्यर्थः।

तनयेति। हिमगिरेरित्यादिः। लम्बत्वप्रविष्टत्वे भुजविशेषणे। द्रव्ये जातौ वेति। संज्ञाशब्दवाच्यायां जातिशब्दवाच्यायां वेत्यर्थः। तेषां च उक्तधर्माणाम्। इतरयोरपि उपात्तयोर्लम्बत्वतत्प्रविष्टत्वयोरपि। तत्साधनतेति। गवेषणसाधनतेत्यर्थः। यत्नेति। अन्यथा गवेषणासंभवादिति भावः। विषयिगतेति। विषयिहिमगिरिभुजगताभ्यामित्यर्थः। तादृशेति। तनयमैनाकेत्यर्थः विषयेति। भागीरथीत्यर्थः। विनिगमना-

## मधुसूदनी

भागीरथी इत्युत्प्रेक्ष्यते तादात्म्येन सम्बन्धेन। सम्पन्नमिति। हिमगिरेर्जलरूपत्वा तद्भुजस्यापि तथात्वात् श्वैत्यं शैत्यं च भुजे सम्पन्नमिति भावः। इतरयोरपि उपात्तयोर्लम्बत्वजलधिजठरप्रविष्टत्वयोरपि। फलरूपेष्टसाधनताज्ञानस्य प्रवृत्त्यनुकूलयत्नजनकत्वस्य प्रसिद्धेः। इदं मदिष्टसाधनमिति ज्ञाने सत्येव पुरुषः इष्टाय फलाय प्रवर्तते। फलं च हेतुमपेक्षते। हेतुश्च यत्नमपेक्षते। इति परम्परा। तत्साधनता ज्ञानस्य मैनाकगवेषणसाधनताज्ञानस्य।

## बालक्रीड़ा

में समान भाव से रहते हों: किन्तु वे धर्म लम्बे होकर समुद्र में जाने वाले श्वेत एवं शीतल भागीरथी नामक जल के ही धर्म हैं। भुज के नहीं है। अतः उन धर्मों को उत्प्रेक्षा के निमित्त बनाने के लिए विषयी हिमगिरि के भुज में अवश्य सम्पादन करना है। उनमें श्वैत्य एवं शैत्य धर्म अनुपात्त हैं किन्तु वे धर्म भुज में सम्पन्न हैं। क्योंकि वह भुज हिमगिरि का है और हिम का अर्थ है जमा हुआ जल। जब वे जल के स्वाभाविक धर्म हैं तब जल रूप हिमगिरि एवं उसके भुज में वे धर्म स्वतः सम्पन्न हैं। किन्तु दूसरे लम्बत्व और जलधिजठर प्रविष्टत्व धर्म भुज में नहीं है। अतः उनका उसमें सम्पादन करने के लिये पुत्र मैनाक को खोजने रूप फल की उत्प्रेक्षा की। क्योंकि समुद्र के भीतर हाथ को फैलाकर ही मैनाक की खोज हो सकती है। यह जानना समुद्र के भीतर हाथ को फैलाने के लिए किये जाने वाले यत्न का जनक है। क्योंकि इस कारण से यह हो सकता है ऐसा जानेंगे तभी उस कारण को करने का यत्न करेंगे अर्थात् इष्टसाधनताज्ञान यत्न का जनक है। इस प्रकार विषयी

फलकलम्बत्वजलधिजठरप्रविष्टत्वाभ्यां विषयगतयोः साहजिकलम्बत्वजलधिजठरप्रविष्टत्वयोरभेदाध्यवसानातिशयोक्त्या साधारण्यसंपत्तौ निमित्तता। न चात्र फलस्याप्युत्प्रेक्षणात्फलोत्प्रेक्षेति वक्तुं शक्यम्। उत्प्रेक्ष्यमाणफलनिष्पादितनिमित्तोत्थापितायां स्वरूपोत्प्रेक्षायामेव विधेयत्वाच्चमत्कृतेर्विश्रामादुत्प्रेक्षाप्रतिपादकस्य प्रत्ययस्य फलेनानन्वयाच्च; तयैवात्र व्यपदेशो युक्तः।

## मर्मप्रकाशः

विरहादाह—उत्प्रेक्षेति। प्रत्ययस्य क्यङः। उपसंहरति—तयैवेति। एवं चेत्यादि। स्वरूपोत्प्रेक्षयैवेत्यर्थः। क्वचित् 'तथैव' इति पाठः। सोऽप्युक्तार्थक एव। अत्र भेदानुपपादयति—

## मधुसूदनी

निमित्ततेति। निमित्तभूतधर्माणां विषयविषय्युभयसाधारण्यलाभाय अभेदाध्यवसानमास्थीयते। तेन च साधारणत्वं प्राप्तानां धर्माणां निमित्तता उत्प्रेक्षायां भवति। यथा लम्बत्वं जलधिजठरप्रविष्टत्वं विषये भागीरथ्यां स्वाभाविकं, विषयिणि भुजे अध्यस्तमिति तत्त्वम्। फलस्यापीति। ननु स्वरूपोत्प्रेक्षा तु अस्त्येव गवेषणफलोत्प्रेक्षापि वर्त्तते तयैव व्यवह्रियतामिति चेन्न। उत्प्रेक्ष्यमाणस्य फलस्य तनयमैनाकगवेषणस्य निष्पादनार्थमेव भुजे लम्बत्वं जलधिजठरे प्रविष्टत्वं समुद्भाविते। जलधिजठरे स्थितस्य वस्तुनः प्राप्तये तत्र प्रवेशो भुजस्य लम्बत्वं विधायैवेति फले निष्पादितत्वम्। ताभ्यामेव निमित्ताभ्यामुत्थापिता स्वरूपोत्प्रेक्षा विधेया चमत्कारिणी च। स्वरूपोत्प्रेक्षाप्रतिपादकस्य क्यङ्प्रत्ययस्य। भागीरथीरूपस्य विषयस्योपात्तत्वादनिगीर्णविषया। लम्बनप्रवेशनक्रिये उपात्ते श्वैत्यशैत्यगुणौ चानुपात्तौ। एषां निमित्तभूतत्वम्। तयैव स्वरुपोत्प्रेक्षयैव। अत्र तनयमैनाकेति गद्ये।

## बालक्रीड़ा

भुज में मैनाक को खोजने के लिए जो लम्बाई एवं समुद्र के भीतर घुसाना है उसके साथ विषय भागीरथी नामक जल में रहने वाले स्वाभाविक लम्बत्व एवं जलधिजठर प्रविष्टत्व धर्मों का अभेदाध्यवसान किया है। अतः इस अभेदाध्यवसान रूप अतिशयोक्ति के द्वारा उन धर्मों में साधारणता होने पर उत्प्रेक्षा के अनकूल निमित्तता बन जाती है। यह कहना मुश्किल है कि गवेषण रूप फल की भी उत्प्रेक्षा यहाँ की गई है अतः फलोत्प्रेक्षा ही मान ली जाय। क्योंकि उत्प्रेक्ष्यमाण गवेषण रूप उद्देश्य फल के लिये ही सम्पन्न किये गये निमित्त भूत लम्बत्व एवं जलधिजठर प्रवेश धर्मों से उत्थापित उत्प्रेक्षा में ही विधेयता है और चमत्कार की विश्रान्ति है। इसके सिवाय उत्प्रेक्षा के प्रतिपादक भुजायमान में विहित क्यङ प्रत्यय का गवेषण रूप फल के साथ कोई सम्बन्ध भी नहीं है। इस लिए स्वरूपोत्प्रेक्षा से ही यहां व्यवहार करना युक्ति संगत है। यहां विषय भागीरथी शब्दोपात्त है अतः अनिगीर्ण विषया और लम्बाई एवं प्रवेश क्रिया रूप निमित्त उपात्त हैं अतः उपात्तनिमित्तक सफेदी एवं ठंढक गुण रूप निमित्त अनुपात्त है अतः अनुपात्त निमित्तक तथा हिमगिरि भुज का निष्पादन

अनिगीर्णविषया चेयमुपात्तानुपात्तगुणक्रियात्मकनिमित्ता निष्पाद्यविशिष्ट-शरीरा जात्युत्प्रेक्षा। हिमगिरिभुजस्य कविनैव निष्पादितत्वात्।

तादात्म्येन गुणस्वरूपोत्प्रेक्षा यथा—

'अम्भोजिनीबान्धवनन्दनायां कूजन्बकानां समजो विरेजे।
रूपान्तराक्रान्तगृहः समन्तात्पुञ्जीभवञ्शुक्ल इवाश्रयार्थी॥'

अत्रैकाधिकरण्यापन्ने कूजनविशिष्टे बकत्वजात्यवच्छिन्ने विषये पुञ्जीभवन-विशिष्टः शुक्लगुणस्तादात्म्येनोत्प्रेक्ष्यते। तत्र बकगतानां कूजननैर्मल्यपुञ्जी-भवनानां शुक्लगुणगतत्वमन्तरेण बकशुक्लयोरभेदस्य दुरुपपादत्वात्तत्सिद्धये

## मर्मप्रकाशः

अनिगीर्णेति। भागीरथ्या उपादानात्। उपात्तेति। इदं च यथासंभवं बोध्यम्। न तु यथासंख्यम्। निष्पाद्यत्वे हेतुमाह—हिमेति। एवं चैकदेशस्य सिद्धत्वेऽपि विशिष्टस्य निष्पाद्यत्वं स्पष्टमेवेति भावः। अम्भोजिनीति। सूर्यकन्यायां यमुनायामित्यर्थः। समजः संघः। रूपान्तरेति। नीलादीत्यर्थः। ऐकाधिकरण्यापन्न इति। समुदायापन्न इत्यर्थः।

## मधुसूदनी

अम्भोजिनीति। अम्भोजिनी कमलिनी। तस्या बान्धवः सूर्यः तस्य नन्दिनी पुत्री यमुना। पशूनां समज इति, यूथं तिरश्चामिति च कोशयोरनुसारं बकानां समज इति पाठः चिन्त्यः। "यूथं बकानां विरराज कूजन्" इति पाठः साधुः।

अत्र पद्ये बकानां यूथं विरेजे इति रीत्या एकस्मिन्नधिकरणे बकाः सम्भूयागताः। तत्सिद्धये अभेदस्य सम्पत्त्यै तेषां कूजनादीनां विषयिणि शुक्ले गुणे गतत्वं निष्ठत्वम्। सिद्धत्वादिति। नैर्मल्यं स्वच्छत्वं शुक्ले स्वभावसिद्धम्। निष्पादनायेति। अन्यैराक्रान्तः सर्वोऽपि स्वरक्षायै सस्वरमाक्रन्दति स्वसहायभूतानाचित्य संघं तनुते इति लोक

## बालक्रीड़ा

कवि ने ही किया है अतः निष्पाद्यत्व विशिष्ट शरीर वाली यह जात्युत्प्रेक्षा है।

यमुना के तीर पर कूजन करता हुआ बगुलों का समूह ऐसा मालूम पड़ता है जैसे नील, पीत हरित आदि दूसरे २ रूपों के द्वारा घर के दबा लेने छीन लेने से आश्रय की खोज में चारों तरफ से इकट्ठा हुआ मानों शुक्ल गुण है। "पशूनां समजः" यूथं तिरश्चाम् इन कोशों के अनुसार पशुओं के अतिरिक्त बकादि पक्षियों का समूह यूथ होना चाहिये। अतः समज चिन्त्य है। तथा "यूथं बकानां विरराज कूजन् यह पाठ ठीक है।" यहां एक जगह में पहुँच कर कूजन करने वाले बकत्व जाति से अवच्छिन्न बकरूपी विषय में आश्रयार्थी पुञ्जी भूत अतएव शुक्ल गुण की अभेदेन उत्प्रेक्षा करते हैं। वहां बगुलों में रहने वाले कूजन, नैर्मल्य एवं इकट्ठा होने रूपधर्मों की स्थिति शुक्ल गुण में माने विना बक और शुक्ल में तादात्म्य की उपपत्ति होनी कठिन है अतः अभेद की सिद्धि के लिए उन धर्मों की शुक्ल गुण में सत्ता साध्य है। उनमें अनुपात्त

तेषां विषयिगतत्वं साध्यम्। तत्र नैर्मल्यस्यानुपात्तस्य यथाकथंचिदुत्प्रेक्ष्यमाणे विषयिणि सिद्धत्वात्कूजनपुञ्जीभवनयोर्निष्पादनाय रूपान्तराक्रान्तगृहत्वमाश्रयार्थित्वं च हेतुत्वेनोत्प्रेक्षितम्। इहापि प्राग्वत्साहजिकयोः कल्पिताभ्यामभेदाध्यवसानात्साधारण्यम्। एवमन्यत्राप्यूह्यम्। पूर्वं हि यथा फलस्योत्प्रेक्षणेऽपि न फलोत्प्रेक्षा तथेहापि हेतोरिति।

क्रियास्वरूपोत्प्रेक्षा यथा—

### मर्मप्रकाशः

तत्र तयोर्मध्ये। तत्सिद्धये शुक्लगुणगतत्वसिद्धये। तेषामुक्तधर्माणाम्। विषयीति। शुक्लगुणेत्यर्थः। यथाकथंचिदिति। नन्वेवं हेतूत्प्रेक्षैवेयं कुतो नात आह—पूर्वं हीति। कृत-

### मधुसूदनी

स्वभाव इति, कुतः कूजति कुतः पुञ्जीभवतीत्यस्योत्तरम्। अत अनयोर्हेतुहेतुमद्भावः। साहजिकयोर्नैसार्गिकयोर्बकनिष्ठयोः कूजनपुञ्जीभवनयोः शुक्ले गुणे कल्पिताभ्या माहार्यबोधविषयाभ्यां ताभ्यां साधारण्याय अभेदाध्यवसानम्।

पूर्वमिति। पूर्वं तनयमैनाकेति गद्ये फलस्य गवेषणस्य उत्प्रेक्षणेऽपि। तथा पूर्ववत् इहापि अंभोजिनीपद्येऽपि हेतुनानन्वयाच्च न हेतूत्प्रेक्षेति।

### बालक्रीड़ा

निर्मलता धर्म उत्प्रेक्ष्यमाण विषयी शुक्ल में स्वरूपतः सिद्ध है। किन्तु कूजन एवं पुञ्जीभवन धर्मों के निष्पादन के लिए रूपान्तराक्रान्तगृहत्व और आश्रयार्थित्व की हेतुरूप से उत्प्रेक्षा की है। ऐसी स्थिति में अर्थात् जिनके घरों को दूसरे लोग छीन लेते हैं या दवा लेते हैं वे चिल्लाते है और उनके विरोध में अपने साथियों को जुटाते है इसी तरह आश्रय की खोज करने वाले भी इधर उधर कहते सुनते हैं कि हमें घर चाहिए और अपने संगी साथियों का गोल बनाते हैं। इसलिए यहां भी प्रथम गद्य की तरह स्वाभाविक धर्मों में कल्पित धर्मों के अभेद का अध्यवसान किया है। जिससे उनमें साधारण्य हुआ। और तब अभेद से उत्प्रेक्षा हुई। इसी प्रकार को और २ जगहों में समझना चाहिए। प्रश्न=इस प्रकार तो यहां हेतूत्प्रेक्षा को मानना चाहिए। उत्तर। पहले जैसे फल की उत्प्रेक्षा रहने पर भी वह नहीं मानी गई है वही परिस्थिति हेतु की भी है। याने उत्प्रेक्ष्यभाण रूपान्तराक्रान्त गृहत्व एवं आश्रयार्थित्व हेतुओं से निष्पादित कूजन और पुञ्जीभवन निमित्तों से उत्थापित गुण स्वरूपोत्प्रेक्षा ही विधेय है उसी में चमत्कार की विश्रान्ति भी है। इसके सिवाय उत्प्रेक्षा प्रतिपादक इव शब्द के साथ हेतुओं का कोई अन्वय भी नहीं है। इसलिए गुण स्वरूपोत्प्रेक्षा से ही व्यवहार करना युक्त है।

क्रिया स्वरूपोत्प्रेक्षा जैसे=कालिन्दी यमुना के प्रवाह में अर्धमग्न हुए एवं खूब कूजन करते हुए बक ऐसे प्रतीत हो रहे है मानों वैर के कारण अन्धकार से निगले जा रहे शशी-

'कलिन्दजा नीरभरेऽर्धमग्ना बकाः प्रकामं कृतभूरिशब्दाः ।
ध्वान्तेन वैराद्विनिगीर्यमाणाः क्रोशन्ति मन्ये शशिनः किशोराः ॥'

अत्र प्रथमान्तविशेष्यकबोधवादिनामभेदसंसर्गेण कलिन्दजानीरार्धमग्नकृतभूरिशब्दोभयविशिष्टेषु बकेषु विषयेषु ध्वान्तकर्तृकवरहेतुकनिगरणकर्मा-

### मर्मप्रकाश

भूरीति । यो निमज्जति स शब्दं करोतीति लौकिकम् । वादिनामित्यस्य धर्म उत्प्रेक्ष्यत इत्यत्रान्वयः । शानजर्थमाह—कर्मेति । तदभिन्नत्वेनोत्प्रेक्षितेत्यर्थः । अत्रोत्प्रेक्षितेत्यधिकम् ।

### मधुसूदनी

कलिन्दजेति । अत्र पण्डितराजस्य रचनादारिद्र्यं प्रतीयते यत एकेनैव भूरिपदेनेष्टार्थप्रतिपत्तौ प्रकाममित्यस्य पुनरुक्ततया विसंष्ठुलत्वम् । पूर्वत्र नीरेण अर्धमज्जनीयत्वमुत्तरत्र ध्वान्तेन निगीर्यमाणत्वं तोलकमस्ति किन्तु वैरादित्यस्यानुगमकं तोलकं पूर्वत्र नास्ति इति परं विसंष्ठुलत्वम् । न च मन्दं मन्दं यथात्र अतिमन्द मित्यर्थः । तथा प्रकामं भूरि इत्यत्रापि अतिभूरि इति स्यादिति वाच्यम् । तथात्वे हि शब्दाधिक्यात्कर्णकटुत्वं तेनाहृद्यत्वादलंकारत्वविनाश एव स्यात् । अन्यच्चात्र तमोव्यापने तमोलेपनमिव बककर्तृकशब्दने शशिकिशोरकर्तृकं क्रोशनमुत्प्रेक्ष्यं तदर्थं बकेषु धर्मिषु शशिकिशोरधर्म्युत्प्रेक्षा । तदेतदुच्यतेऽत्र तादृशेषु बकेषु विषयेषु ( धर्मिषु) तादृशशशिकिशोरस्य विषयिणो धर्मिणस्तादात्म्योत्प्रेक्षणपूर्वकं क्रोशनकर्तृत्वं धर्म उत्प्रेक्ष्यते । इत्येवं बकेष्वेव धर्मिषु क्रोशनकर्तृत्वं धर्म इति तृतीयं विसंष्ठलुत्वं ततोऽत्र सर्वेषां दोषाणां परिहाराय आनुगुण्यलाभाय च ।

### बालक्रीड़ा

किशोर अत्यन्त रो रहे हैं। और रक्षा करो २ कह कर बुला रहे हैं । क्रुश रोदने आह्वाने च इस धातु से क्रोशन्ति बना है । अतः इसका उक्त अर्थ किया गया है । बक लोग जल में डुबकी लगा कर मछलियों को पकडते हैं और इधर उधर उढ़ते हुए खूब शब्द करते रहते हैं । यह बक जाति का स्वभाव है । इसीके आधार पर तथा बक भी श्वेत हैं और शशि किशोर अर्थात् चन्द्र किरणें भी श्वेत हैं बस इस श्वेत गुण रूप निमित्त से बकों को चन्द्र किरण बनाकर उन बकों में क्रोशन रोने एवं आह्वान की उत्प्रेक्षा की । इसका उपपादन नैयायिक और वैयाकरणों के मत के अनुसार करते हैं । उनमें प्रथम प्रथमान्तार्थ विशेष्यक शाब्द बोध वादी नैयायिक का मत कहते हैं बाद में क्रिया विशेष्यक बोध वादी वैयाकरण के मत को कहेगें ।

इन आचार्यों ने बोलने का एक नियम बना रक्खा है कि समवाय सम्बन्ध के किसी वाक्यार्थ को कहेगें तब उसमें त्व लगा कर बोलेंगे जैसे वीर पुरुष है इसको समवाय से वीरत्व विशिष्ट=पुरुष कहेंगे । और अभेद सम्बन्ध से कहने में त्व को हटा देगे । जैसे उक्तवाक्यार्थ को अभेद से वीर विशिष्ट पुरुष (अर्थात् वीराभिन्न पुरुष) कहेंगे । तदनुसार

भिन्नशशिकिशोरतादात्म्योत्प्रेक्षणपूर्वकं क्रोशनकर्तृत्वं धर्म उत्प्रेक्ष्यते। तत्र तादात्म्योत्प्रेक्षणे धर्म्युत्प्रेक्षायां तद्वृत्तिर्धर्मः, संबन्धान्तरेणोत्प्रेक्षणे धर्मोत्प्रेक्षायां तत्समानाधिकरणो धर्मश्च विषयविषयिगतो निमित्तमिति स्थिते प्रकृते क्रोशनकर्तृत्वरूपधर्मोत्प्रेक्षायां तत्समानाधिकरणनिगरणकर्मत्वरूपधर्मस्य विषयगतत्वसिद्धयेऽनुवाद्यतया शशिकिशोरतादात्म्यमनुपात्तश्चैत्यनिमित्तक-

## मर्मप्रकाशः

तयोरभेदस्य स्वारसिकत्वात् । तत्र उत्प्रेक्षयोर्मध्ये । पूर्वामाह—तादेति । द्वितीयामाह—संबेति । विषयेति । बकेत्यर्थः । तत्कृतचमत्काराभावादाह—अनुवाद्येति । उत्प्रेक्ष्यते ।

## मधुसूदनी

"शब्दन्ति यत्ते बहुलं बकास्तत्" इत्येवं द्वितीयं चरणं निर्माणीयम् ।

ननु भवता उच्यते बककर्तृक शब्दने किशोरकर्तृकं क्रोशनं क्रियोत्प्रेक्ष्यते इति। किन्तु ग्रन्थकारेण बकेषु विषयेषु क्रोशनकर्तृत्वं धर्म उत्प्रेक्ष्यते इति, शशिकिशोराभिन्ना बकाः क्रोशनक्रियानुकूलकृतिमन्त इवेति, नैयायिकबोधाकारे, बकेषु अभेदेन क्रोशनक्रियोत्प्रेक्षेति वैयाकरणमते चेत्येवं सर्वत्र बकेषु धर्मिषु क्रोशनधर्मोत्प्रेक्षोच्यते तत्किम् । इति चेच्छ्रूयताम् । इदं रहस्यम् । मंचस्थबालकेषु क्रोशत्सु मंचाः क्रोशन्तीति दिशा मंचस्थबालका एव मंचत्वेन अध्यवसीयन्ते एवमेव प्रकृतेऽपि शब्दनस्य शब्दनकर्तृबकत्वेनमध्यवसानम् । वस्तुतस्तु शब्दने विषये क्रोशनं विषयी उत्प्रेक्ष्यते । तदेतदुच्यते—तत्र शादे वृत्ते इत्यादि अध्यवसानमित्यन्तम् । बकाः प्रकामं कृतभूरिशब्दा इति वाक्ये शाब्दे वृत्ते शब्दादागते विवरणे कृतभूरिशब्दा बका इत्येवं बकविशेषणतया प्रतीयमानं ज्ञायमानं शब्दनं विषयतया संभावनाविषयतया अवतिष्ठते । कस्मादेतत् । इत्यत्राह–अध्यवसानेति । साध्यवसानाया लक्षणाया बलात् ।

"विषयगतत्व सिद्धये" इति । धर्म्युत्प्रेक्षायां तद्वृत्तिर्धर्मः, धर्मोत्प्रेक्षायां तत्समानाधिकरणो धर्मश्च विषयविषयिगतत्वेन साधारणः सन् निमित्तमिति स्थितिः । प्रकृते

## बालक्रीड़ा

अभेद सम्बन्ध से कालिन्दी नीरार्धमग्न और कृतभूरि शब्द इन दोनों से विशिष्ट याने तदभिन्न बक विषय में पहले ध्वान्त कर्त्तृक वैरहेतुक निगरण कर्म विशिष्ट शशिकिशोर का तादात्म्य माने अभेद से उत्प्रेक्षण करके बाद में क्रोशनकर्तृत्व अर्थात् रक्षणानुकूल क्रोशनक्रियारूपधर्म का उत्प्रेक्षण करते हैं। इन दोनों उत्प्रेक्षाओं में अभेद तादात्म्य से उत्प्रेक्षा करने पर धर्म्युत्प्रेक्षा कहते हैं तब तद्वृत्ति धर्म और सम्बन्धान्तर से उत्प्रेक्षा के प्रसंग में धर्मोत्प्रेक्षा करते हैं तब उत्प्रेक्ष्यमाणधर्मसमानाधिकरण धर्म विषय एवं विषयी उभय गत हुआ निमित्त है। ऐसी स्थिति में प्रकृत में समवाय सम्बन्ध से क्रोशनकर्त्तृत्वरूपधर्मोत्प्रेक्षा में जो क्रोशन कर रहा है वह निगला जा रहा है इस तरह क्रोशन के साथ रहने वाले निगले जाने रूप धर्म की विषय

मुत्प्रेक्ष्यते। तत्र यथा विशिष्टोपमायामुपमानोपमेयविशेषणतद्विशेषणानामार्थमौपम्यम्, एवमत्रापि विषयबकविशेषणतद्विशेषणयोरर्धमज्जनयमुनाजलयोर्मूलोत्प्रेक्षाया विषयिशशिकिशोरविशेषणतद्विशेषणाभ्यां निगरणध्वान्ताभ्याम-भेद आर्थः। ततश्च ध्वान्तकर्तृकनिगरणे सिद्धे मुख्योत्प्रेक्षानिर्वाहः। क्रोश-

## मर्मप्रकाशः

बकेष्विति शेषः। नन्वेवमपि साधारणधर्माभावात्कथं प्रधानोत्प्रेक्षानिर्वाहोऽत आह—तत्रेति। तस्मिन्सतीत्यर्थः। मूलोत्प्रेक्षेति। मूलोत्प्रेक्षाया विषयी यः शशिकिशोर इत्याद्यर्थः। क्रियोत्प्रेक्षोपपादकत्वात्तस्या मूलोत्प्रेक्षात्वम्। सिद्ध इति। बकानामित्यादिः। मुख्यो-

## मधुसूदनी

क्रोशनक्रियोत्प्रेक्षायां क्रोशनक्रिया यत्र शशिकिशोरेषु तत्रैव ध्वान्तकर्तृकं निगरणमिति क्रोशनक्रियासमानाधिकरणो धर्मः निगरणकर्मत्वरूपः स यदा विषयस्य बककर्तृक शब्दनस्य समानाधिकरणो भवेत्तदोत्प्रेक्षा स्यात्। समानाधिकरणत्वसिद्धये वकेषु शशिकिशोरतादात्म्यमुत्प्रेक्ष्यते। उत्प्रेक्षायां निमित्तभूतो धर्मः श्वैत्यम्। स च धर्म अनुपात्तः। इदं तु समीचीनम्। परं मुख्यक्रियोत्प्रेक्षापेक्षितधर्मसाधारण्यविरहे पुनस्तत्रैवावलम्बितो वेताल इत्याह—तत्र यथेति। एवं तथा अत्रापि प्रकृतेऽपि। मूलभूता क्रियोत्प्रेक्षासाधकीभूता उत्प्रेक्षा शशिकिशोरतादात्म्योत्प्रेक्षा। ततश्च अर्थाभेदाच्च। ध्वन्तकर्तृकनिगरणरूपे धर्मे शब्दनरूपविषयगतत्वेन सिद्धे प्राप्ते मुख्या क्रियोत्प्रेक्षा तस्या निर्वाहः सम्पादनम्।

क्रोशनशब्दयोरित्यत्रेदमालोचनम्। अत्र शब्दाशुद्धिः। कृतभूरिशब्दा इति पूर्वार्द्धोपात्तस्य पदस्य अंशभूतः क्रोशनशब्दयोरित्यत्रत्यः शब्दः। अतः पूर्वार्ध-

## बालक्रीड़ा

शब्दन में सिद्धि के लिए अनुवाद्य याने प्रधानरूप से बकों में शशिकिशोर तादात्म्य की उत्प्रेक्षा करते हैं। इसमें निमित्त है श्वेतिमा गुण जिसका प्रकृत में उपादान नहीं किया है। किन्तु जो वक एवं शशिकिशोर अर्थात् चन्द्रकिरण में वस्तुतः रहता है। प्रश्न = यह सब तो ठीक है वक को शशिकिशोर बना लिया। किन्तु अपेक्षित धर्मों की साधारणता नहीं हुई और साधारणता के विना कैसे मुख्य क्रियोत्प्रेक्षा का निर्वाह होगा। उत्तर। जैसे विशिष्ट उपमा में उपमान एवं उपमेय के विशेषणों तथा उन विशेषणों के विशेषणों में आर्थ-औपम्य रहता है इसी प्रकार यहां इस पद्य में भी क्रियोत्प्रेक्षा की साधकीभूतोत्प्रेक्षा मूलोत्प्रेक्षा के विषय वक के विशेषण अर्धमज्जनका मूलोत्प्रेक्षा के विषयी निगरण के साथ और अर्धमज्जन के विशेषण यमुनाजल का निगरण के विशेषण ध्वान्त के साथ आर्थ अभेद है। जिसके फल-स्वरूप ध्वान्तकर्तृक निगरण शब्दों में सिद्ध हो गया। जिससे मुख्य क्रियास्वरूपोत्प्रेक्षा का निर्वाह हो गया। और शब्द और क्रोशन में भी बिम्बप्रतिविम्बभाव से अभेद है।

यहाँ आलोचन है। "क्रोशनशब्दयोरपि" यह पद अशुद्ध है। क्योंकि कृतभूरिशब्दाः

नशब्दयोरपि वस्तुप्रतिवस्तु (बिम्बप्रतिबिम्ब(?)भावेनाभेदः)। तेन कलिन्द-

मधुसूदनी

गतत्वेन प्रथमोपात्तत्वरूपमभ्यर्हितत्वं शब्दे। क्रोशनापेक्षया शब्दे अक्षराणि लघूनि। अचश्च अल्पतरा इति लघ्वक्षरं पूर्वम्, अभ्यर्हितं च अल्पाच्तरम् इति त्रिभिर्हेतुभिः शब्दस्य पूर्वं निपातः।

अस्मिन् प्रासंगिकी कापि चर्चा। पूर्वनिपात प्रकरणे "अल्पाच्तरम्" इति सूत्रनिर्माणमस्तव्यस्तम्। एवं कथनस्य चत्वारि कारणानि। अचामल्पत्वेऽतिशयः न अक्षु। गुणवाचकेभ्य एव तरप् न तु गुणिवाचकेभ्यः। अतः अल्पपदादेव तरप् प्रत्ययेन अल्पतराच् इति साधु। अचः तरप् विधाने कुत्वे अक्तरम् चुत्वे अच्चरम् इति स्यात्। तन्निवारणार्थमुपायो निपातनमिति च करणीयः स्यादिति।

बिम्बप्रतिबिम्बभावेनाभेद इत्यपि नितान्तमशुद्धम्। तयोरेव पदार्थयोः बिम्ब-

बालक्रीड़ा

यह अंश पूर्वार्ध का है और क्रोशन्ति उत्तरार्ध का है अतः शब्दरूप अंश पूर्वार्द्ध में उपात्त है अतः प्रथमोपात्तत्व रूप अभ्यर्हितत्व शब्द में है। और क्रोशन की अपेक्षा शब्द में अक्षर लघु और अच अल्पतर हैं। इसलिये अभ्यर्हित और लघु अक्षरों तथा अल्पतर अच् वाला होने के कारण तीन हेतुओं से शब्द का पूर्व निपात होगा। क्रोशन का पूर्व निपात नहीं होगा। यह शब्दाशुद्धि है।

प्रासंगिक चर्चा है कि "अल्पाच्तरम्" इस सूत्रका निर्माण कुछ गड़बड़ जैसा मालूम पड़ता है।

इसका एक कारण तो यह है कि अनेक शब्दों वाले पदों में जिस पद के अच् अधिक अल्प होंगे उसका पूर्व निपात हो यह इस सूत्र का अर्थ है। यहां अचों की अल्पता में अति-शय विवक्षित है अचों में नहीं अतः तरप् प्रत्यय अल्पपद से होना चाहिए। दूसरा कारण है कि गुणवाचक शब्द से तरप् प्रत्यय होता है गुणी शब्द से नहीं इसलिए अल्प पद से ही तरप् होना चाहिए। तीसरा कारण है कि अच् से तरप् प्रत्यय होगा तो कुत्व होकर अक् तरम् या चुत्व होकर अच्चरम् बनेगा। चौथा कारण है कि अक्तरम् या अच्चरम् न बने इसके लिए निपातन रूपी शस्त्र का प्रयोग करना पड़ेगा। इसलिए "अल्पतराच्" इस रूप में सूत्र का निर्माण होना चाहिए।

यहाँ शब्दन में क्रोशन की उत्प्रेक्षा है अतः विषय एवं विषयी के अभेद के लिए प्रयत्न करने का कुछ भी फल नहीं है। विषय उपात्त रहेगा अभेदारोप होता है अनुपात्त विषय में अभेदाध्यवसाय होता है जो कि उत्प्रेक्षा के स्वरूपगत है। इसी तरह बिम्ब प्रतिबिम्बभावेनाभेदः" यह पाठ भी अशुद्ध है। क्योंकि बिम्बप्रतिबिम्बभाव उन्हीं दो पदार्थों में होता है जो वस्तुतः भिन्न हो। प्रकृत में शब्द तो शब्द है ही क्रोशन भी शब्द ही है अतः भिन्न नहीं है। हाँ वस्तु प्रतिवस्तुभाव है इनमें। ये दोनों विषयाशुद्धि हैं।

इससे कलिन्दजानीरार्धमग्नकृतभूरिशब्दोभयस्वरूप बक, वैरहेतुकध्वान्तकर्तृकनिगीर्यमाण

जानीरार्धमग्नकृतभूरिशब्दोभयाभिन्ना बका ध्वान्तनिगीर्यमाणशशिकिशोरा-(रोभया)भिन्नाः क्रोशनक्रियानुकूलकृतिमन्त इवेति बोधाकारः। आख्याते भावप्राधान्ये त्वभेदेन क्रोशनक्रियोत्प्रेक्षा। तत्र शाब्दे वृत्ते बकविशेषणतया

## मर्मप्रकाश

त्प्रेक्षेति। क्रियोत्प्रेक्षेत्यर्थः। प्रकारान्तरेणापि साधारण्यं धर्मस्याह—क्रोशनेति। शशिकिशोरोभयानुकूलक्रोशेति। 'निगीर्यमाणशशिकिशोराभिन्नाः क्रोशनक्रियानुकूल—' इति युक्तः पाठः। एव नैयायिकमतेन बोधमुक्त्वा वैयाकरणमतेनाह —आख्यात इति। नन्वभेदेन बके तदुत्प्रेक्षा बाधिता अत आह—तत्रेति। उत्प्रेक्ष्यमाणक्रोशनक्रियायामित्यर्थः। शाब्दे बोधे

## मधुसूदनी

प्रतिबिम्बभावो यौ वस्तुतो भिन्नौ स्याताम्। इह तु क्रोशनं शब्द एव शब्दस्तु शब्द एव तयोर्नास्ति भेदः। अतोऽत्र वस्तुप्रतिवस्तुभावः। अर्थैक्ये शब्दभेदे अयं भवति। अन्यच्च शब्दने क्रोशनोत्प्रेक्षा। एवं हि विषयविषयिणोरभेदार्थं प्रयत्नानुष्ठानं फल-सामान्यशून्यम्। निमित्ते अनिगीर्णे अभेदारोपः निगीर्णे तस्मिन् अभेदाध्यवसायः। स्वरूपगतावेतावुत्प्रेक्षायाः दोषौ। अत इयं विषयाशुद्धिः।

शशिकिशोरोभयेति। अत्र उभयपदमशुद्धम्। नीरार्धमज्जनप्रतिद्वंद्वितया ध्वान्त निगीर्यमाणेति पदमुपात्तमेकमेव तत्। तस्यार्थः शशिकिशोरः एक एव। कौ तौ द्वौ अर्थौ ययोः कृते उभयपदमत्रापेक्षितं स्यात्। बकास्तु कृतभूरिशब्दा अपि इति बकेषु नीरार्धमज्जनकृतभूरिशब्दोभयाभिन्नत्वं साधु।

क्रोशनक्रियानुकूलकृतिमन्त इवेति पाठः साधुः। क्रोशनमपि क्रिया व्यापारः। एवं च व्यापारानुकूलव्यारवन्तः इत्येवार्थः क्रोशनाक्रियानुकूलव्यापारवन्त इति पाठे

## बालक्रीड़ा

शशिकिशोर से अभिन्न हुए क्रोशन (रोदन) क्रिया के अनुकूल कृतिमान् हैं। यहाँ किशोरोभय में किशोर शब्द के बाद उभयपद अशुद्ध है। क्योंकि ध्वान्तकर्तृकनिगीर्यमाण किशोर के साथ नीरार्धमग्न बक का अभेद है। बक में जैसे नीरार्धमग्न और कृतभूरिशब्द दो विशेषण हैं वैसे किशोर में दो विशेषण नहीं हैं और किशोर के अतिरिक्त कोई पदार्थ नहीं है अतः दो के बिना उभय पद असंगत है। यह बोध का आकार है।

अब आख्यात तिङन्त स्थल में भाव क्रिया प्रधान होती है ऐसा माननेवाले वैयाकरणों के अनुसार बोध को लिखते हैं। क्रियाप्रधान आख्यात में तो बकों में अभद सम्बन्ध से क्रोशनक्रिया की उत्प्रेक्षा है। प्रश्न = नामार्थों में अभेद सम्बन्ध से अन्वय होता है। अतः बकों में अभेद सम्बन्ध से क्रोशनक्रिया की उत्प्रेक्षा अन्वय के अभाव में कैसे होगी। उत्तर। शाब्द माने शब्द से आया हुआ। वृत्त माने विवरण। अतः कृतभूरिशब्दा बकाः इस शब्द से प्राप्त हुए विवरण में शब्दन क्रिया बक के विशेषण के रूप में प्रतीत होती है। उस रूप में प्रतीत हुई भी वह शब्दन क्रिया सम्भावना की विषय है। अर्थात् क्रोशनक्रिया

प्रतीयमानमपि शब्दनं विषयतयावतिष्ठते। अध्यवसानवशात्। क्रोशनक्रियायां च तादृशबका विशेषणम्, तादृशबकेषु चाभेदेन तादृशशशिकिशोराः, न तु शशिकिशोरा एव साक्षात्क्रियायाम्। एवं च बकानामनन्वयापत्तेः। विषयविषयिविशेषणानां प्राग्वदेव बिम्बप्रतिबिम्बभावेनाभेदप्रतिपत्तिः।

### मर्मप्रकाशः

वृत्ते निष्पन्ने। अध्यवसानेति। अध्यवसानं च मञ्चाः क्रोशन्तीत्यादिवद्विषयिवाचकशब्देनेति बोध्यम्। तादृशेति। विशेषणद्वयविशिष्टेत्यर्थः। एवमग्रेऽपि। तादृशेति। एकविशेषणविशिष्टेत्यर्थः। क्रियायां क्रोशनेत्यादिः। एवं च एवं सति। एवं च तादृशशशिकिशोरा-

### मधुसूदनी

स्यात्। अन्यच्च नैयायिकान्नां मते अयं बोधाकारः। अतस्तन्मते कृतिरेव तिङर्थः। तस्मादुक्तः पाठ एव ज्यायान्। अग्रे सहृदयाः प्रमिण्वन्तु।

ननु विषयतयावस्थानं बकानामेवोचितमुद्देश्यत्वात्। विशेष्यस्यैव उद्देश्यत्वेन प्रतीयमानत्वात्। बकविशेषणतया प्रतीयमानस्य शब्दनस्य तत्कथमित्याह— अध्यवसानवशात् तात्पर्यवशात्। सति तात्पर्ये विशेषणस्यापि विशेष्यतयावस्थानं, यथा लोहितोष्णीषाः ऋत्विजः प्रचरन्ति इत्यत्र लोहित्यादाविति भावः। एवं च

### बालक्रीड़ा

की उत्प्रेक्षा संभावना शब्दन में करते हैं। प्रश्न—अभी-अभी आप ने कहा है कि बकों में अभेद सम्बन्ध से क्रोशनक्रिया की उत्प्रेक्षा करते हैं और अब कहते हैं कि शब्दन में क्रोशन की उत्प्रेक्षा करते हैं। उत्तर। बकों में क्रोशन की उत्प्रेक्षा के कहने का आशय है कि शब्दन में क्रोशन की उत्प्रेक्षा। प्रश्न यह कैसे ? उत्तर। यह अध्यवसान के वश से होता है। यहाँ का रहस्य यह है कि जैसे मंचस्थ बालक को मंच कह देते हैं दही बेचने वाली या वाले को ओ दही ओ दही पुकारते हैं उसी तरह शब्दन क्रिया में शब्दन क्रियाकर्त्ता बकों के अभेद का अध्यवसान (लक्षणा के द्वारा ज्ञान) कर लिया है। वस्तुतः शब्दन क्रिया में ही क्रोशन क्रिया की उत्प्रेक्षा है। जैसे लिम्पतीव तमोऽङ्गानि में तमोव्यापन में तमोलेपन की उत्प्रेक्षा होती है वैसी ही प्रक्रिया प्रकृत में भी हैं। यहाँ भी बकों को शब्दन मानकर कहा है। इस तरह क्रोशन क्रिया में कृतभूरिशब्द बक विशेषण है और उन बकों में अभेद सम्बन्ध से ध्वान्तनिगीर्यमाण शशिकिशोर विशेषण है। प्रश्न—इस विशेषण परम्परा का फल हुआ कि (शशिकिशोराभिन्न) बकों का ही क्रोशन क्रिया में साक्षात् अन्वय हुआ किन्तु शशि किशोरों का बकों में अभेद से विशेषण होने के कारण क्रिया में साक्षात् अन्वय नहीं हुआ। किन्तु होना चाहिए था शशि किशोरों का। उत्तर—यदि सशि किशोरों का क्रोशन क्रिया में साक्षात् अन्वय करेगें तो बकों का अन्वय नहीं हो सकेगा। अतः शशि किशोराभिन्न बक कर्तृक क्रोशन यही शाब्द बोध वैयाकरणों के मत में ठीक है। विषय के विशेषण मज्जनादि की विषयी के विशेषण निगरणादि के साथ पहले के अनुसार बिम्ब प्रतिबिम्ब भाव से अभेद प्रतिपत्ति हो जायगी।

तथा—

## मधुसूदनी

शशिकिशोराणां साक्षात्क्रियायामन्वये क्रियायाः कर्त्राकांक्षानिवृतेः बकानामनन्वयापत्तिः स्यात् ।

## बालक्रीड़ा

यहाँ यह आलोचन है कि (मुखचन्द्रेण विरही प्रसन्नः) यहाँ चन्द्रसदृश मुख से विरही प्रसन्न है इस उपमा में चन्द्र का सादृश्य में अन्वय है और सादृश्य का मुख में है। इस तरह मुख प्रधान हुआ फलतः विरहिप्रसादकत्व मुख में सम्पन्न हो जाता है जो संगत है। और मुखचन्द्रो विरहिप्रसादकः" इस वाक्य से चन्द्र मुख बनकर उपस्थित होता हैं तब तो विरहिप्रसादकत्व चन्द्र में आ सकता है क्योंकि चन्द्र के मुख बनकर उपस्थित होने पर मुखवृत्ति धर्मवान् चन्द्र है ऐसी प्रतीति होगी ऐसी स्थिति में परिणाम अलंकार होता है। किन्तु मुखाभिन्नश्चन्द्रः ऐसा वाक्यार्थ मुखचन्द्रः से संस्कृत भाषा में उपस्थित होता है। और यदि मुखचन्द्रो विरहिप्रसादकः इस वाक्य से मुख चन्द्र बनकर उपस्थित होता है तब मुख में विरहिदुःखजनकत्व प्राप्त होगा विरहिप्रसादकत्व नहीं। क्योंकि मुख के चन्द्र बनकर उपस्थित होने पर चन्द्रवृत्ति धर्मवान् मुख है ऐसी प्रतीति होगीं। ऐसी स्थिति में रूपक होता है। और चन्द्राभिन्नं मुखम् ऐसा वाक्यार्थ मुखचन्द्रः से उपस्थित होता है। किन्तु संस्कृत भाषा की ऐसी रूप रेखा से मुखाभिन्नश्चन्द्रः में मुख का अभेद सम्बन्ध से चन्द्र में अन्वय हुआ और चन्द्र का विरहिप्रसादक में हुआ। इस तरह विरहिप्रसादक में मुख का परम्परया अन्वय हुआ और चन्द्र का साक्षात् अन्वय हुआ। तथा चन्द्राभिन्नं मुखम् में चन्द्र का मुख में मुख का विरहिप्रसादक में इस तरह चन्द्र का परम्परया और मुख का साक्षात् विरहिप्रसादक में अन्वय हुआ। इसी तरह शशिकिशोराभिन्नवकों का ही क्रोशन में साक्षात् अन्वय होगा। तब बकानामनन्वयापत्तेः कहना कैसे होगा। यहाँ दो उत्प्रेक्षायें हैं। एक बकों में शशिकिशोरोत्प्रेक्षा अर्थात् धर्मी में धर्मीकी। दूसरी वक कर्त्तृक शब्दन में शशिकिशोरकर्त्तृक क्रोशन की उत्प्रेक्षा अर्थात् धर्म में धर्म की। तमोव्यापन में तमोलेपन की तरह क्रियोपात्प्रेक्षा का ही यह उदाहरण पण्डितराज ने लिखा है। इसी क्रियोत्प्रेक्षा को बनाने के लिए ही धर्म्युत्प्रेक्षा भी की है। तब बकों का क्रोशन में साक्षात् अन्वय कैसे होगा। किन्तु किशोरों का ही होगा। यदि बकों का भी अन्वय साक्षात् चाहते हैं तो ऐसा

"शब्दन्ति यत्ते बहुलं बकास्तत्" पाठ बनाइये। तब किशोराभिन्न बकों का शब्दनाभिन्नक्रोशन में साक्षात् अन्वय होगा। इस पाठ में एक आनुगुण्य और होगा कि प्रकामं और भूरि की विसंष्ठुलता हट गई। मन्दं मन्दं अर्थात् अतिमन्द की तरह प्रकामं भूरि के अर्थात् अतिभूरि मानने पर वह घनघोर शब्द कर्ण कटु हो जायगा उससे अहृद्य होकर अलंकारत्व नष्ट हो जायेगा।

तथा=शम्बरासुर के वैरी कामदेव के राज्याभिषेक का समय है ऐसा जानकर चन्द्रमा सुधा से जगत् में लेप करता हैं।

'राज्याभिषेकमाज्ञाय शम्बरासुरवैरिणः ।
सुधाभिर्जगतीमध्यं लिम्पतीव सुधाकरः ॥'

अत्रापि चन्द्रे विषये तादृशलेपनकर्तृत्वरूपधर्मोत्प्रेक्षेत्येकं दर्शनम् । किरणव्यापने विषये चन्द्रकर्तृकसुधाकरणकलेपनस्य तादात्म्येनोत्प्रेक्षणमिति द्वितीयम् । तत्र प्रथमे मते धवलीकारकत्वरूपनिमित्तानुपादानादनुपात्तनिमित्ता, विषयस्योपादानादुपात्तविषया । द्वितीयेऽपि तस्यैव निमित्तस्यानुपादानादनुपात्तनिमित्ता, विषयस्य निगीर्णतयानुपात्तविषयेति विशेषः ।

तादात्म्येन द्रव्यस्वरूपोत्प्रेक्षा यथा—

### मर्मप्रकाशः

भिन्नकर्तृत्वं क्रोशनमिति बोध्यम् । अस्या उदाहरणान्तरमाह—तथेति । शम्बरस्येति । मदनस्येत्यर्थः । प्राग्वदत्रापि मतभेदमाह—अत्रापीति । तादृशेति । सुधाकरणकजगन्मध्यकर्मकेत्यर्थः । चन्द्रेति । तदभिन्नेत्यर्थः । करणकेति । जगन्मध्यकर्मकेत्यपि बोध्यम् । विषयस्य चन्द्रस्य । तस्यैव धवलीकारकत्वस्यैव । विषयस्य किरणव्यापनस्य । निगीर्णेति ।

### मधुसूदनी

राज्येति । शम्बरनामकासुरस्य वैरी कामस्तस्य राज्याभिषेकसमयम् । अत्रापि पूर्वोदाहरणवत् कर्तृत्वं क्रिया तद्रूपधर्मोत्प्रेक्षा । दर्शनं सिद्धान्तः मतं वा । तमोव्यापने तमोलेपनवदाह किरणव्यापने इति । लेपनस्य जगतीमध्यकर्मकस्येति शेषः । प्रथममते चन्द्रे विषये सुधाकरणकजगतीमध्यकर्मकलेपनक्रियोत्प्रेक्षेति रूपे विषयस्य चन्द्रस्य । द्वितीयमतेऽपि तस्यैव धवलीकारकत्वस्यैव । विषयस्य किरणव्यापनस्य ।

### बालक्रीड़ा

यहां चन्द्र विषय में सुधाकरणक जगत्कर्मक लेपन कर्तृत्व की समवायेन उत्प्रेक्षा है। ऐसा एक दर्शन मत हैं । किरण व्यापन विषय में चन्द्रकर्तृक जगतीमध्यकर्मक सुधाकरणक लेपन की तादात्म्य से उत्प्रेक्षा है ऐसा द्वितीय दर्शन है। इनमें प्रथम मत में धवलीकारकत्वरूप निमित्त के अनुपादान से अनुपात्त निमित्ता और विषय चन्द्र के उपादान से उपात्त विषया उत्प्रेक्षा है और द्वितीय मत में भी उसी धवलीकारकत्व रूप निमित्त के अनुपादान से अनुपात्तनिमित्ता और विषय किरणव्यापन के निगीर्ण होने से अनुपात्त विषया है। यही इन दोनों में विलक्षणता है ।

तादात्म्य सम्बन्ध से द्रव्य स्वरूप की उत्प्रेक्षा जैसे—कलिन्द शैल से प्रयाग पर्यन्त यह लम्बी परिखा खाईं किसी ने खोद दी । इस परिखा रूप यमुना में तलस्पर्श रहित अगाध (अगाधमतलस्पर्शि यह अमर हैं) नील जल मानों आकाश हैं ।

'कलिन्दशैलादियमा प्रयागं केनापि दीर्घा परिखा निखाता ।
मन्ये तलस्पर्शविहीनमस्यामाकाशमानीलमिदं विभाति ॥'

अत्र यमुनायां नीलत्वदीर्घत्वनिमित्तकमाकाशतादात्म्योत्प्रेक्षणम् । आकाशत्वस्य स्वरूपात्मकत्वाद् द्रव्योत्प्रेक्षेयम् । अत एवाकाशपदाच्छब्दाश्रयत्वाद्यनुपस्थितिदशायामप्याकाशधीः । नीलत्वरूपनिमित्तस्य विषयिणि सिद्ध्यर्थे तृतीयचरणोपादानम् । दीर्घत्वरूपनिमित्तसिद्ध्यर्थे च पूर्वार्धम् ।

### बालक्रीड़ा

सुधाभिर्लिम्पतीत्यनेनेति भावः । कलिन्देति । तदाख्यपर्वतादित्यर्थः । इयं दृश्या गर्तरूपा । आ प्रयागं प्रयागमभिव्याप्य । अस्यां परिखायाम् । इदं दृश्यं यमुनारूपम् । ननु प्राग्वज्जात्युत्प्रेक्षेयं कुतो न अत आह—आकाशेति । इदं च मञ्जूषायां मतं स्पष्टम् । नन्वाकाशत्वं शब्दाश्रयत्वादिरूपमिति कुतः स्वरूपात्मकमत आह—अत एवेति । तस्य स्वरूपात्मकत्वादेवेत्यर्थः । आदिना शब्दसमवायिकारणत्वपरिग्रहः । विषयिणि आकाशे । तृतीयेति । तलस्पर्शे सति प्रतिबिम्बासंभव इति भावः । सिद्ध्यर्थे चेति । आकाश एवेति शेषः । गर्तोपरितनाकाशस्य तद्दीर्घत्वारोपादिति भावः । बाहुजानां क्षत्रियायाणाम् । जामदग्न्यः

### मधुसूदनी

कलिन्देति । कलिन्दनामकशैलमारभ्य आ प्रयागं प्रयागपर्यन्तम् । इयं पुरतो दृश्यमाना परिखा । अगाधमतलस्पर्शीति अमरः । इदं पुरतो दृश्यमानं तलस्पर्शविहीनमगाधं जलम् । अस्यां परिखाभूतायां यमुनायाम् । विभातीति मन्ये वाक्यार्थः । अत्राकाशरूपद्रव्याभेदोत्प्रेणक्षणम् । आकाशत्वं न जातिः । जातेरनेकसमवेतत्वात् । यो धर्म एकस्यामेव व्यक्तौ वर्त्तते स न जातिरिति सिद्धान्तः । जात्यभावादेव आकाशत्वस्याकाशस्वरूपात्मकत्वम् । आकाशत्वस्य स्वस्वरूपात्मकत्वादेव आकाशपदात्समवायेन शब्दाश्रयत्वं शब्दगुणकत्वं शब्दसमवायिकरणत्वमित्यस्यानुपस्थितिदशायामपि आकाशपदार्थज्ञानम् । विषयिणि आकाशे । जलस्यागाधत्वादेव प्रतिबिम्बितमाकाशं विभाति ।

### बालक्रीड़ा

यहाँ यमुना के नीलत्व एवं दीर्घत्व रूप निमित्त से जल में आकाश का तादात्म्येन उत्प्रेक्षण है । यहाँ आकाशत्व जाति नहीं है । किन्तु आकाश स्वरूप है । आकाशत्व के आकाश स्वरूप होने से आकाश रूप द्रव्य स्वरूपोत्प्रेक्षा है । अतएव जो नियम कि यत्किंचिद् धर्म-पुरस्कारेण धर्मी की उपस्थिति होती है वह लागू नहीं हुआ अतः आकाशत्व के आकाश स्वरूप होने से आकाश पद से शब्दाश्रयत्वेन आकाश की उपस्थिति नही हुई । तब भी आकाश का ज्ञान हो जाता है । विषयी आकाश में नीलत्वस्वरूप मिमित्त की सिद्धि के लिए "तलस्पर्शविहीनमस्याम्" इस तृतीय चरण का उपादान किया । क्योंकि तल के दिखाई पड़ने पर जलगत नीलिमा की

जात्यादीनामभावोत्प्रेक्षा यथा—

'बाहुजानां समस्तानामभाव इव मूर्तिमान् ।
जयत्यतिबलो लोके जामदग्न्यः प्रतापवान् ॥'

अत्र जात्यवच्छिन्नाभावो विरोधित्वनिमित्तेन तादात्म्येनोत्प्रेक्ष्यते । विनाश इवेत्युक्तौ तु ध्वंसः । 'समस्तलोकदुःखानाम्' इति प्रथमचरणे कृते गुणाभावः ।

क्रियाभावोत्प्रेक्षा यथा—

'द्यौरञ्जनकालीभिर्जलदालीभिस्तथा वव्रे ।
जगदखिलमपि यथासीन्निर्लोचनवर्गसर्गमिव ॥'

अत्रापि चाक्षुषज्ञानसामान्यशून्यत्वेन निमित्तेन पार्यन्तिकः क्रियाभावो धर्मः । एवं द्रव्याभावोत्प्रेक्षापि स्वयमूह्या ।

मर्मप्रकाशः

परशुरामः । जातीति । क्षत्रियत्वेत्यर्थः । विरोधित्वेति । जात्यवच्छिन्नेत्यादि । अभावोऽत्यन्ताभावः । अभावपदत्यागेनाह—विनेति । क्रियाभावोत्प्रेक्षोदाहरणमाह—द्यौरिति । कज्जलवच्छ्यामेमेघपङ्क्तिभिस्तथाच्छादितेत्यर्थः । नेत्रशून्यजनसमूहवृष्टिरिवेत्यर्थः । निमित्तेनेति । अनुपात्तेनेति भावः । पार्यन्तिक इति । यद्यपि सर्गमिति नपुंसकोक्त्या तत्किं

मधुसूदनी

पार्यन्तिक इति । पर्यन्ते विमर्शनाद् दर्शनक्रियाभावो धर्म उत्प्रेक्षित इति शेषः । कालीजलदालीमिलितं विष्णुपदमिति । जगदान्ध्यप्रसञ्जनाच्चक्षुषोरुपयोगाभावा-

बालक्रीड़ा

प्रतीति नहीं होती । वह तो अगाध जल में ही होती है । दीर्घत्वरूप निमित्त की सिद्धि के लिए पूर्वार्ध का का उपदान किया है ।

जात्यादि के अभाव की उत्प्रेक्षा जैसे—लोक में अति प्रबल एवं प्रतापशाली जामदग्न्य जो मानों समस्त क्षत्रियों का मूर्तिमान् अभाव है उसकी जय हो ।

यहाँ विरोध रूप निमित्त से क्षत्रियत्व जाति से अवच्छिन्न यावत् क्षत्रिय के अभाव की उत्प्रेक्षा की गई है । अभाव इव के स्थान पर विनाश इव कह देते हैं तो ध्वंस की उत्प्रेक्षा होगी और यदि "समस्त लोक दुःखानाम्" ऐसा प्रथम चरण कर देते हैं तो गुणाणाव की उत्प्रेक्षा होगी ।

क्रिया के अभाव फी उत्प्रेक्षा जैसे—काजल के सदृश काली २ बादलों की घटाओं से आकाश ऐसा घिर गया मानों समस्त विश्व में लोचन की सृष्टि ही नहीं हुई । यहाँ भी चक्षुओं से होने वाले सामान्य ज्ञान की शून्यता रूप निमित्त से पार्यन्तिक क्रिया

मालारूपाप्येषा संभवति यथा—

'द्विनेत्र इव वासवः, करयुगो विवस्वानिव,
द्वितीय इव चन्द्रमाः, श्रितवपुर्मनोभूरिव।
नराकृतिरिवाम्बुधिर्गुरुरिव क्षमामागतो,
नुतो निखिलभूसुरैर्जयति कोऽपि भूमीपतिः ॥'

### मर्मप्रकाशः

जगदन्तरमिवैतज्जगदिति पूर्वं बोधः, तथापि तादृशजगदन्तराप्रसिद्धया अभावोत्प्रेक्षाबाधापत्त्या चात्रैव धर्मिणि जगति लोचनवर्गस्य सर्गो दानं संसर्गः प्रसरणं वा यत्र दर्शने तदभावो निरा बोध्यते इति दर्शनकियाभावरूपो धर्म उत्प्रेक्ष्यते। पश्चादित्यर्थः। तदाह—क्रियाभावो धर्म इति। एषा उत्प्रेक्षा। करयुगो भुजद्वयः। क्षमां भमिम्। 'अध्यारोपेण' इति पाठः।

### मधुसूदनी

चचाक्षुषज्ञानसामान्यशून्यता सर्वतः प्रसृतेति पूर्वं चक्षूरूपद्रव्याभावोत्प्रेक्षा प्रतीयते। किन्तु पर्यन्ते समालोचनात्। आलोकसहकृतं चक्षुः सक्षमं भवति वस्तु सन्दर्शनेऽतः चक्षुषी स्तः परं तयोः कार्यं दर्शनक्रिया नास्ति। इति क्रियाभावो धर्म उत्प्रेक्षित इति समन्वयः।

एषा उत्प्रेक्षा मालारूपापि संभवति यथा द्विनेत्र इति। वासव इन्द्रः सहस्रनेत्रः अयं राजा तु द्विनेत्रः कथं समन्वयः। ततो मन्येऽयं द्विनेत्रो वासवः। एवमेव सर्वत्र योजनीयम्। युगं तु युगलं युग्ममित्यमरकोषात् युगं क्लीबे। ततोऽत्र करयोर्युगं द्वयमस्यास्तीति विवस्वतो विशेषणं करयुग इति। अर्श आद्यचि रूपम्। विवस्वान् सहस्रकरोऽयन्तु युगकरः ततो मन्येऽयं करयुगो विवस्वान्। सर्वतः

### बालक्रीड़ा

भावरूप धर्म उत्प्रेक्षित है। पर्यन्त में विमर्श करने पर जाना गया दर्शनक्रियाभाव पार्यन्तिक है। यहाँ का भाव यह है कि आकाश में काली घटाओं के छा जाने से चारों ओर प्रकाश के अभाव में कुछ नहीं मालूम पड़ता है अतः पहले ऐसा मालूम पड़ने लगा कि मानी आँखें है ही नहीं इस तरह यहाँ लोचनरूप द्रव्याभाव की उत्प्रेक्षा है। किन्तु फिर विचार करने पर प्रतीत हुआ कि आलोक सहकृत ही चक्षु, वस्तु दर्शन में सक्षम होता है अन्यथा नहीं अतः चक्षु हैं किन्तु इनका कोई उपयोग नही है अन्धकार के कारण देख नहीं पा रहे हैं। इस तरह पार्यन्तिक दर्शनक्रियाभाव रूप धर्म की उत्प्रेक्षा है। इसी तरह द्रव्याभाव की उत्प्रेक्षा को स्वयं समझे।

यह उत्प्रेक्षा मालारूपा भी होती है। जैसे—निखिल भूमिदेवता ब्राह्मणों से स्तुत्य कोई महान् भूमीपति राजा जय शाली हो। जो मानों दो नेत्रों वाला इन्द्र सहस्राक्ष है। दो करों वाला सहस्रकर (किरण) सूर्य है। दूसरा चन्द्रमा है। शरीर धारी कामदेव है। मानव रूप में समुद्र है। पृथिवी पर आया हुआ गुरु है वृहस्पति है।

अत्र राजगतानां द्विनेत्रत्वादीनां वासवादितादात्म्यविरोधिनां विरोधनिवर्तनाय विषयिषु वासवादिष्वारोपेण साधारणीकरणम्। न चात्रोपमा शक्ययनिरूपणा। द्विनेत्रत्वादीनामुक्तेर्निष्प्रयोजनत्वापत्तेः। न चोपमाया निष्पादकं तेषां साधारण्यम्। तदभावेऽपि परमैश्वर्यादिभिः प्रतीयमानैस्तस्या निष्पत्तेः। असुन्दरत्वादुपमानिष्पादकत्वेन कवेरनभिप्रेतत्वाच्च। नह्यत्र द्विनेत्रत्वादिभिर्धर्मैर्वासवादिसादृश्यं राज्ञः कवेरभिप्रायविषयः। एवं द्वितीयं

### मर्मप्रकाश

आरोपेणेति तदर्थः। 'अतियुक्त' पाठे तु स एवार्थः। आरोपेणेत्यग्रे योज्यः। ननूपमैवात्रास्तु इत्याशङ्कते—न चेति। साधेति। उक्तरीत्येति भावः। तस्या उपमायाः। ननूपात्तधर्माभावे प्रतीयमानादरोऽत आह—असुन्दरेति। विच्छित्त्यजनकत्वादित्यर्थः। उक्तधर्मस्येति।

### मधुसूदनी

प्रकाशस्य सद्भावेऽपि कौमुदीमिव धवलिमानं प्रसारयति इति मन्येऽयं द्वितीयः चन्द्रमाः। मनोभूरनङ्गः। अयं तर्हि कथं प्रत्यक्षदृश्यः सांगः जगति लोकातिसौन्दर्यशाली क इति मन्येऽयं श्रितवपुर्मनोभूरिति। अम्बुधिर्जलाकृतिः डलयोरैक्याज्जडाकृतिः तर्हि, अयमतिविशालो गभीरवेदी क इति मन्येऽयं नराकृतिरम्बुधिः संजातः। इत्येवं निखिलभूसुरैः नुतः स्तुतः णुस्तुतौ। कोऽपि अनिर्वचनीयमहिमा भूमीपतिर्जयति सर्वोत्कर्षेण वर्त्तते।

आरोपेणेति। ननु विषयिषु वासवादिषु सहस्रनेत्रत्वसहस्रकरत्वादेः सत्तया अभेदविरोधात् द्विनेत्रत्वादिविशिष्टराज्ञः साधारणत्वं कथमित्याह तेषु द्विनेत्रतया सत्यपि बाधे आरोपेण ऐच्छिक ज्ञानेन साधारणीकरणात् विरोधनिवर्त्तनात्। उक्तेः कथनस्य उपादानस्येति यावत्। तेषां द्विनेत्रत्वादीनामाहार्यारोपेण साधारण्यं

### बालक्रीड़ा

यहाँ राजा में रहने वाले द्विनेत्रत्वादि धर्म वासव के साथ किये जाने वाले तादात्म्य के विरोधी हैं। अतः विरोध को हटाने के लिए विषयी वासवादि में द्विनेत्रत्वादि का आरोप करके उनका साधारणी करण किया गया है। यह कहना जरा कठिन है कि यहाँ उपमा का निरूपण किया गया है। क्योंकि यहाँ यदि उपमा ही मानी जाती तो "वासव इव" इतना कहना ही पर्याप्त था फिर द्विनेत्रत्वादि विशेषणों के उपादान की क्या आवश्यकता थी। यह भी नहीं कह सकते कि उन द्विनेत्रत्वादि धर्मों का वासवादि में आरोप करके किया गया साधारणी करण उपमा का निष्पादक है। क्यों कि उसके विना भी प्रतीयमान परमैश्वर्यादि धर्मों से उपमा की निष्पत्ति की जा सकती है। किन्तु वे धर्म असुन्दर हैं और उपमानिष्पादक के रूप में कवि को इष्ट भी नहीं हैं। इसी बात को दोहराते हैं कि यहाँ द्विनेत्रत्वादिधर्मों से राजा में वासवादि का सादृश्य कवि के अभिप्राय का विषय नहीं है।

यत्वादीनां चन्द्रादिष्वारोपोऽप्युपमायां सत्यामनर्थक एव स्यात्। अभेदप्रतिपत्तौ तु सहस्रनेत्रेण, सहस्रकरेण, विधिसृष्टावेकेन, वपुर्विहीनेन, जलाकारेण स्वर्गगतेन च तेन तेन कथमस्याभेदः स्यादिति प्रतिकूलधियमपसारयतां विषयिगतानां द्विनेत्रत्वाद्यारोपाणामस्त्येवोपयोगः। अत्रैवेवशब्दस्याभावे दृढारोपं रूपकम्। विषयिगतविशेषणानामभावे उपमा। उभयेषामेकतरस्याप्यभावे शुद्धरूपकमिति विवेकः। एवं स्वरूपोत्प्रेक्षा दिगुपदर्शिता।

अथ हेतूत्प्रेक्षा। यथा—

'त्वत्प्रतापमहादीपशिखाविपुलकज्जलैः।
नूनं नभस्तले नित्यं नीलिमा नूतनायते॥'

### मर्मप्रकाशः

उक्तमेव विशदयति—एवमिति। राजसदृशस्य द्वितीयस्य सत्त्वाद्राज्ञि स्वारसिकं द्वितीयत्वमित्याशयेनाह—चन्द्रादीति। ननूत्प्रेक्षापक्षेऽपि तदुक्तिवैयर्थ्यमत आह—अभेदेति। वासवादीत्यादिः। करेण किरणेन। तेन तेन वासवादिना। अस्य राज्ञः। उभयाभावस्यैकस्मिन्नपि सत्त्वादाह—एकतरेति। उपसंहरति—एवमिति। त्वदिति। राजानं प्रति

### मधुसूदनी

साधारणीकरणमेव उपमाया निष्पादकं साधकम्। तदभावेऽपि तस्य द्विनेत्रत्वाद्यारोपप्रयुक्तसाधारणधर्मस्याभावेऽपि। तस्या उपमायाः। उपात्तारोप्यमाणद्विनेत्रत्वादिरूपसाधारणधर्माणाञ्चासुन्दरत्वादित्यन्वयः। परमैश्वर्यादेरनुपात्तत्वात्। एकतरस्यापि किमुत द्वयोरिति शेषः। विषयिषु वासवादिषु गतानां विशेषणानां द्विनेत्रत्वादीनामभावे।

त्वत्प्रतापेति। प्रदीपान्निःसृतं कज्जलमुड्डीय नभस्तले व्याप्तं नीलिमा च तत्रास्त्येव। ततो नीलिम्न आकाशरूपैकाधिकरण्येन उत्प्रेक्षितस्य उत्प्रेक्षाविषयीकृतस्य कज्जलस्य नूतनीकरणे नीलिम्नो वर्द्धने हेतुत्वेन उत्प्रेक्षा।

### बालक्रीड़ा

इस तरह उपमा के मानने पर यहाँ चन्द्रादि में द्वितीयत्व का आरोप अनर्थक ही हो जायगा। और अभेद की प्रतिपत्ति को मान लेने पर तो सहस्त्रनेत्र, सहस्त्रकर, विधि की सृष्टि में एक, शरीर से रहित, जल के आकार वाला और स्वर्गत इन्द्रादि से उस राजा का अभेद कैसे हो इसके लिए प्रतिकूल बुद्धि को हटाने वाले विषयी में किए गए द्विनेत्रत्वादि के आरोपों का उपयोग है ही। हाँ यहाँ पर यह हो सकता है कि इव को यदि हटा दिया जाय तो दृढ़ारोप रूपक हो सकेगा। और विषयी के धर्मों द्विनेत्रत्वादि को हटाने पर उपमा तथा दोनों में से किसी एक के भी किमुत दोनों के अभाव में शुद्ध रूपक यह निश्चय है। इस प्रकार यह स्वरूपोत्प्रेक्षा की दिशा दिखा दी है।

अत्र नीलिमसामानाधिकरण्येनोत्प्रेक्षितस्य हेतुत्वेनोत्प्रेक्षणम्। 'कज्ज-ललेपनैः' इति कृते इयमेव क्रियाहेतूत्प्रेक्षा।

गुणहेतूत्प्रेक्षा यथा—

'परस्परासङ्गसुखान्नतभ्रुवः पयोधरौ पीनतरौ बभूवतुः।
तयोरमृष्यन्नयमुन्नतिं परामवैमि मध्यस्तनिमानमञ्चति॥'

अत्र पूर्वार्धे सुखस्य गुणस्य हेतुत्वं तावत्पञ्चम्यैव निर्दिष्टम्। अपरार्धे धर्मिविशेषणतया अनूद्यमानस्य गुणाभावस्य त्वार्थम्। यथा 'भोक्ता भुञ्जानो वा तृप्यति' इत्यादौ भोजनादेः।

## मर्मप्रकाशः

कव्युक्तिः। उत्प्रेक्षितस्य कज्जलस्य। हेतुत्वेनेति। नूतनीकरण इति भावः। हेतूत्प्रेक्षेति। नीलिम्नः प्रतिदिनोपचीयमानत्वं निमित्तम्। अञ्चति गच्छति। अपरार्ध इति। उत्तरार्ध इत्यर्थः। क्वचित्तथैव पाठः। आर्थत्वे हेतुगर्भं विशेषणमाह—धर्मीति। मध्येत्यर्थः। गुणाभावस्य मर्षणाभावस्य। भोक्तेत्यत्र कालसामान्यप्रतीतेर्विशेषोदाहरणमाह—भुञ्जानो वेति।

## मधुसूदनी

परस्परेति। अयं मध्यः कटिभागः। ईर्ष्यावशात् पीनत्वरूपामुन्नतिममृष्यन् असहमानः। अञ्चति प्राप्नोति। क्षीणो भवतीत्यर्थः। मर्षणरूपगुणाभावस्य विरहेऽपि। भोक्ता तृप्यति इत्यादौ यथा भोजनादेः तृप्तिं प्रति हेतुत्वमार्थम्।

## बालक्रीड़ा

अब हेतूत्प्रेक्षा को दिखाते हैं—जैसे=हे राजन् ? तुम्हारे प्रताप रूपी महादीपक की शिखाओं से उद्भूत विपुल काजल के द्वारा आकाश में निश्चय ही नित्य नूतन चारों ओर नीलिमा हो रही है। यहाँ नीलिमा के साथ आकाश रूप एक अधिकरण में रहने के कारण उत्प्रेक्षित काजल की नीलिमा के नवीन करने में हेतु के रूप में उत्प्रेक्षा की है। यहाँ पहले कज्जल रूप जाति पदार्थ की धर्म स्वरूपोत्प्रेक्षा है उसके वाद उस काजल की हेतुत्वेन उत्प्रेक्षा है। और यदि यहाँ "विपुल कज्जलैः" के स्थान पर "कज्जल लेपनैः" पाठ कर दें तो यही क्रिया हेतूत्प्रेक्षा हो जायेगी।

गुण हेतूत्प्रेक्षा जैसे=ये नायिका के पयोधर परस्पर के आलिंगन जनित सुख से अत्यन्त पीन हो गये। किन्तु मालूम पड़ रहा है कि इनके इस उत्कर्ष को सहन नहीं करने वाला मध्य प्रदेश कटिभाग तनिमा को प्राप्त करता है अर्थात् सूखा जा रहा है।

यहाँ पूर्वार्ध में सुख रूप गुण हेतु है इस वात का निर्देश सुखात् इस पंचमी विभक्ति न कर दिया है। अपरार्ध में धर्मी मध्य के विशेषण के रूप में अनूद्यमान (उन्नति को नहीं सह सकने रूप) मर्षणगुणाभाव में हेतुत्व आर्थ है। जैसे भोक्ता खाने वाला तृप्त होता है

यथा वा—

'व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतामाकर्ण्य स्तुतिमुदयत्त्रपातिरेकात् ।
आभूमीतलनतकंधराणि मन्येऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि ॥'

अत्र लज्जाया गुणस्य हेतुत्वं त्रपातिरेकादिति पंचम्यैव निर्दिष्टम् ।

क्रियाहेतूत्प्रेक्षा यथा—'महागुरुकलिन्दमहीधरोदरविदारणाविर्भवन्महापातकावलिवेल्लनादिव श्यामलिता' इति ।

द्रव्यहेतूत्प्रेक्षा यथा—

### मर्मप्रकाशः

नैयायिकोक्तगुणस्यैव ग्रहणमिति भ्रमनिरासयोदाहरणान्तरमाह—यथा वेति । उदयदिति उदयन्ती आविर्भवन्ती या लज्जा तस्याः संबन्धात्, आधिक्याद्वेत्यर्थः । भूमिमभिव्याप्य नम्राः कंधराः शाखा येषां तानि । वृक्षाणां समूहरूपाणमित्यग्रिमार्थः । अत्रापि लज्जारूपगुणस्य हेतुत्वं स्पष्टमेव । वेल्लनात्तत्संबन्धात् । अत्र वेल्लनं क्रियेति स्पष्टमेव । श्यामलिता

### मधुसूदनी

व्यागुञ्जन्निति । व्यागुञ्जता मधुकरपुञ्जेन मञ्जु यथा स्यात्तथा गीतां स्तुतिमाकर्ण्य । उदयन्त्यास्त्रपाया अतिरेकादाधिक्यात् । भूमीतलमभिव्याप्य नताः कन्धरा ग्रीवाः शाखारूपा येषां तानि ।

अत्र त्रपातिरेकादिति पञ्चम्या त्रयाया हेतुत्वं शाब्दम् । महेति । अत्र विदारणं जन्यपातकसंयोगो वेल्लनं क्रिया । तस्याः श्यामत्वं प्रति हेतुत्वं पंचमीविभक्त्या निर्दिष्टम् ।

### बालक्रीड़ा

अथवा जो खा रहा है वह तृप्त हो रहा है इन वाक्यों में भोजन का तृप्ति के प्रति हेतुत्व आर्थ है । और भी जैसे—गुञ्जन करते हुए मधुकरों के द्वारा मधुरता से गाई हुई स्तुति को सुनकर आविर्भूत हुई लज्जा के अतिरेक से मानों वृक्ष समूह भूमि तक झुक गये । ऐसा मैं मानता हूँ ।

यहाँ लज्जारूप गुण को हेतु बनाया है यह बात "त्रपातिरेकात्" इस पंचमी विभक्ति से स्पष्ट है ।

क्रिया हेतूत्प्रेक्षा जैसे—महागुरु पिता कलिन्द पर्वत के उदर का विदारण करने से प्रकट हुए पातकों के सम्पर्क से श्यामलता यमुना में है। यहाँ वेल्लनात् इस पंचमी विभक्ति से वेल्लन क्रिया में हेतुत्व स्पष्ट है ।

द्रव्यहेतुत्प्रेक्षा जैसे–जिस चन्द्रमा को ये विचारे गरीब सहसा विना समझे बुझे राकारमण निशापति कहते हैं। किन्तु मैं समझता हूँ कि यह अमृत से भरा हुआ देवताओं का स्वच्छ सरोवर

'वराका यं राकारमण इति वल्गन्ति सहसा
सरः स्वच्छं मन्ये मिलदमृतमेतन्मखभुजाम् ।
अमुष्मिन्या कापि द्युतिरतिघना भाति मिषता-
मियं नीलच्छायादुपरि निरपायाद्गगनतः ॥'

अत्रामृतसरोरूपत्वेनोत्प्रेक्षिते चन्द्रमसि नीलत्वेनाध्यवसिते कलङ्के उपरिवर्तिनभोहेतुकत्वमुत्प्रेक्ष्यते । एतेन द्रव्यस्य हेतुत्वेनोत्प्रेक्षणं नास्तीति प्राचां प्रवादो निरस्तः ।

एषामेवाभावानां हेतुत्वोत्प्रेक्षा यथा—

### मर्मप्रकाशः

संजातश्यामा । वराकाः कृपणाः । यं चन्द्रम् । मिलदमृतमिति । 'लसदमृतम्' इति पाठान्तरम् । मखभुजां देवानाम् । अमुष्मिन्सरसि । इयं द्युतिर्नैल्यरूपा । मिषतां पश्यताम् । उपरि । वर्तमानादिति शेषः । निरपायादनश्वरात् । नीलत्वेनोनेति । द्युतिरित्यनेनेति भावः ।

### मधुसूदनी

वराका इति । यं चन्द्रं राकारमणो निशापतिः । एतच्चन्द्र रूपं सुधासंभूतं देवानां सर इति मन्ये । अमुष्मिन् सरसि मिषतां द्रष्टॄणां या कापि महनीया कान्तिर्भाति । इयं कलंकरूपा कान्तिः । उपरिस्थितनीलच्छायात् । विभाषा सेनेत्यादि सूत्रेण वा नपुंसकत्वम् । नीलवर्णात् गगनतो निरपायात् नितरामागच्छत् । अत्र निर् अप आ उपसर्गाः । अयात् इति आख्यातम् ।

अत्र चन्द्रः सर इत्युत्प्रेक्षितम् । तत्र चन्द्ररूपे सरसि कलंकं नीलिम्ना अध्यवसितम् । तच्च उपरिवर्त्तिनो नभसः सकाशादागतमित्येवं रूपेण नभः कलंकं प्रति हेतुरुत्प्रेक्ष्यते ।

### बालक्रीड़ा

हैं । और इसमें जो अतिसघन कान्ति देखने वालों को मालूम पड़ती है । यह ऊपर में स्थित नीले आकाश से निकलकर इसमें आई है । (निर् अप आ अयात् नितराम् आगच्छत् यह अर्थ है ।)

यहाँ अमृत के सरोवर के रूप में चन्द्रमा की उत्प्रेक्षा है । उस सर में निलिमा के रूप में अध्यवसित ज्ञात कलंक में उपरिवर्ती आकाश की हेतुत्वेन उत्प्रेक्षा है । इससे यह प्राचीनों का प्रवाद कि उत्प्रेक्षा में द्रव्य हेतु नहीं हो सकता है । वह निरस्त हो गया ।

इन क्रिया, गुण, एवं द्रव्यों के अभावों की हेतुत्वेन उत्प्रेक्षा जैसे—यह निर्दय काल नितान्त रमणीय वस्तुओं का नित्य संहार करता है इससे मालूम पड़ता है कि इसको आंखे नहीं है अन्धा है । यहाँ संहार करना काल का स्वभाव है इसके लिए काल के आखों के नहीं

'नितान्तरमणीयानि वस्तूनि करुणोज्झितः ।
कालः संहरते निन्यमभावादिव चक्षुषः ॥'

अत्र कालस्य साहजिके संहारकत्वे चक्षुरभावस्य हेतुत्वेनोत्प्रेक्षा ।

'निःसीमशोभासौभाग्यं नताङ्ग्या नयनद्वयम् ॥'
अन्योन्यालोकनानन्दविरहादिव चञ्चलम् ।

अत्र गुणाभावस्य ।

'जनमोहकरं तवालि ? मन्ये चिकुराकारमिदं घनान्धकारम् ।
वदनेन्दुरुचामिहाप्रचारादिव तन्वङ्गि ? नितान्तकान्तिकान्तम् ॥'

### मर्मप्रकाशः

एषामेव जात्यादीनामेव। करुणोज्झित इति। त्यक्तकरुणः। आहिताग्न्यादित्वान्निष्ठान्तस्य वा परनिपातः। इदं जात्यवच्छिन्नाभावहेतुत्वोत्प्रेक्षोदाहरणमाह—निःसीमेति। गुणेति। आनन्द-रूपेत्यर्थः। हेतुत्वेनोत्प्रेक्षेति शेषः। एवमग्रेऽपि। क्रियाभावहेतुत्वोत्प्रेक्षोदाहरणमाह—जनेति। हे कृशाङ्गि ? आलि ? इह चिकुरे तव मुखचन्द्रकान्तीनामसंबन्धादिव इदं दृश्यं केशसमूहरूपं चिकुरवदाकारो यस्य तादृशं जनमोहकरं निबिडान्धकारमहं मन्य इत्यर्थः। यदाशयेनोदाहृतं

### मधुसूदनी

जनेति। अत्र द्वितीयार्धे अप्रचारादिति प्रचाररूपक्रियाया अभाव उत्प्रेक्ष्यते। अन्धकारोऽतिरिक्तः पदार्थ इति मीमांसकानां मते अन्धकारत्वजात्यवच्छिन्नोत्प्रेक्षा। तेजोऽभावोऽन्धकार इति नैयायिकानां मते तेजस्त्वजात्यवच्छिन्नाभावस्य स्वरूपोत्प्रेक्षा। अत्र प्रथमतृतीययोः पादयोरेकादशाक्षरं छन्दः। द्वितीयचतुर्थयोः द्वादशाक्षरम्। "ससजा गुरुयुक् समोरु षट्पम्" एतत् समोरु छन्दः। "सभरा यो विषमोरु सूर्यकान्त ?" हे सूर्यकान्त ? विषमोरु एतत् छन्दः।

### बालक्रीड़ा

होने की हेतुत्वेन संभावना की गई है। यहाँ चक्षुष्ट्व जाति से अवच्छिन्न के अभाव की हेतुत्वेन उत्प्रेक्षा है।

गुणाभाव की हेतुत्वेन उत्प्रेक्षा जैसे—नतांगी के निःसीम शोभा सौभाग्यशाली दोनों नयन एक दूसरे को देखने से उत्पन्न होने वाले आनन्द के विरह से मानों चञ्चल हैं। यहाँ आनन्द रूप गुण के अभाव की हेतुत्वेन उत्प्रेक्षा है।

हे आलि ? हे तन्वङ्गि ? नितान्त कान्ति से कान्त अतएव जनता को मुग्ध कर देने वाला यह तुम्हारा चिकुर जिस पर तुम्हारे मुख चन्द्र की किरणों का प्रसार नहीं होता है शुद्ध घन अन्धकार है ऐसा मैं मानता हूँ।

इह द्वितीयार्धे क्रियाभावस्य। प्रथमार्धे तु जात्यवच्छिन्नस्य जात्यवच्छिन्नाभावस्य वा स्वरूपोत्प्रेक्षैव।

'न नगाः काननगा यद्रुदतीषु त्वदरिभूपसुदतीषु।
शकलीभवन्ति शतधा शङ्के श्रवणेन्द्रियाभावात्॥'

इह श्रोत्रत्वस्य जातिगुणक्रियाभ्योऽतिरिक्तस्य विवेके क्रियमाणे आ-

### मर्मप्रकाशः

तमाह—इहेति। प्रचारस्य क्रियात्वादिति भावः। तुरुक्तवैलक्षण्ये। एतेन प्रासङ्गिकत्वमस्य सूचितम्। अतएव व्युत्क्रमेणोक्तिः। अन्धकरोऽतिरिक्तः पदार्थ इति मतेनाह—जात्यवच्छिन्नेति। तेजोभाव एव स इति मतेनाह—जात्यवच्छिन्नाभावेति। क्कचिद्वैपरीत्येन पाठः। द्रव्याभावहेतुत्वोत्प्रेक्षोदाहरणमाह—न नगा इति। शष्कुल्यवच्छिन्ननभसः श्रोत्रत्वादह—विवेक इति।

### मधुसूदनी

न नगा इति। अत्र शकलीभवन्ति शतशः शंके श्रवणेन्द्रियाक्रमशः। अयं पाठश्चेदन्त्यानुप्रासच्छेकानुप्रासवृत्यनुप्रासानां समवायः स्यादिति मन्ये। श्रोत्रत्वं न जातिर्न गुणो न क्रिया। तदतिरिक्तं द्रव्यं कर्णशाष्कुल्यवच्छिन्नमाकाशस्वरूपम्। तदवच्छिन्नाभावस्य श्रोत्रत्वावच्छिन्नाभावस्य। अत्रोत्प्रेक्षणे निमित्तं शतशः शकलीभवनरूपक्रियाया अभावः।

### बालक्रीड़ा

यहाँ नितान्त कान्ति कान्तत्व और जन मोह करत्व ये दो विशेषण चिकुर के है किन्तु चिकुर पद का आकार के साथ समास हो गया है अतः (वृत्तस्य विशेषण योगो न) समस्त पद का विशेषणों के साथ योग नहीं होता है के अनुसार उनसे उसका अन्वय नहीं हो रहा है किन्तु चिकुराकार के विशेष्य असमस्त घनान्धकार से उनका योग हो रहा है जो कि अनुचित है अतः यहाँ रचना एसी होनी चाहिए। चिकुरं शुद्धमिदं घनान्धकारम्। और इस श्लोक के प्रथम एवं तृतीय पाद में ११ अक्षर है और द्वितीय एवं चतुर्थ में १२ अक्षर हैं। जिनमें सौज गौ ये गण प्रथम एवं तृतीय पाद में और सभरा यः ये गण द्वितीय एवं चतुर्थ पाद में है। चिकुर घनान्धकार है इस रूप में अन्धकारत्वजात्यवछिन्न की मीमांसकों के मत में अथवा तेजोऽभाव स्वरूप अन्धकार को मानने वाले नैयायियों के मत में तेजस्त्वजात्यवछिन्न के अभाव की स्वरूपोत्प्रेक्षा है।

द्रव्याभाव की हेतुत्वेन उत्प्रेक्षा जैसे—तुम्हारे दुश्मन राजाओं की औरतों के रोने पर भी जो जंगल के पहाड़ों या वृक्षों के सौ सौ टुकड़े नहीं हो रहे हैं अतः शंका करता हूँ कि उनको कान नहीं है। यदि कान होते तो अवश्य वे टूट टूट कर गिर जाते।

यहाँ जाति, गुण एवं क्रिया से अतिरिक्त श्रोत्रत्व का विवेक करते हैं तब वह कर्ण शष्कुल्यवछिन्न आकाश है। अतः श्रोत्रत्वावच्छिन्नाभाव याने आकाश रूप द्रव्याभाव की

काशस्वरूपतया तदवच्छिन्नाभावस्य द्रव्याभावस्य हेतुत्वेनोत्प्रेक्षा। निमित्तं क्रियाभावः। एवं हेतूत्प्रेक्षादिक्।

अथ फलोत्प्रेक्षा—

'दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती।
वक्षोजतायै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा॥'

अत्र वक्षोजत्वमवयववृत्ति। जातिस्तल्प्रत्ययार्थः। त्वतलोः प्रकृतिप्रवृत्तिनिमित्ते भावे विधानात्। स एव चात्र तपश्चरणक्रियायाः साहजिकजलावस्थानाभिन्नतयाध्यवसितायाः फलत्वेनोत्प्रेक्ष्यते। न चात्र

मर्मप्रकाशः

भावस्येत्यस्य व्याख्या द्रव्याभावस्येति। तस्य तत्त्वेनोत्प्रेक्षणे निमित्तमिति। क्रियेति। शकलीभवनरूपेत्यर्थः। उपसंहरति—एवमिति। उक्तप्रकारेणेत्यर्थः। दिगिति। उपदर्शितेति शेषः। अथ क्रमप्राप्तां फलोत्प्रेक्षामाह—अथेति। तत्रादौ जातिफलोत्प्रेक्षामाह—दिवेति।

मधुसूदनी

दिवेति। कण्ठदघ्ने कण्ठप्रमाणे जले। प्रमाणार्थोऽयं दघ्नच् प्रत्ययः। प्रकृतिः वक्षोजस्तस्य प्रवृत्तिनिमित्तं वक्षोजत्वं तस्मिन्। भावे त्वतलोर्विधानात् वक्षोजत्वं स्तनरूपानेकावयववृत्तिर्जातिः। एकभिन्नमनेकमित्यर्थे इदमप्यनेकम्।

बालक्रीड़ा

हेतुत्वेन उत्प्रेक्षा की है। उसमें निमित्त है शतधाशकलीभवन रूप क्रिया का अभाव। इस तरह हेतूत्प्रेक्षाओं के समझने का यह मार्ग है।

अब फलोत्प्रेक्षाओं को कहते हैं जैसे—रात और दिन भर कण्ठदघ्न जल में मग्न होकर ये कमल, सूर्य का जो आराधन कर रहे हैं वह क्या नायिका के कुचस्वरूपता को प्राप्त करने के लिए।

यहाँ दो स्तन रूपी अवयवों मे रहने वाली वक्षोजत्व जाति तल प्रत्यय का अर्थ है। क्योंकि त्व और तल् का प्रकृति (वक्षोज) के प्रवृत्ति निमित्त रूप भाव में विधान किया जाता है। अतः यहाँ जातिरूप तल्प्रत्ययार्थ की ही सहज सिद्ध जलावस्थान से अभिन्न रूप में अध्यवसित तपश्चरण क्रिया के फल के रूप में उत्प्रेक्षा की है। यह नहीं कहना चाहिए कि प्राप्ति क्रिया के विना शुद्ध वक्षोजत्व जाति फल नहीं हो सकती है क्यों कि फल जन्य है अतः अनित्य है जाति नित्य है अतः जन्य नही है अतः प्राप्ति क्रिया की फलत्वेन उत्प्रेक्षा की है। क्यों कि प्राप्ति संसर्ग है अतः प्राप्ति के द्वारा ही वक्षोजत्व जाति आदि में फलत्व की उपपत्ति होती है। यदि जाति को फल नहीं मानेंगे तो फलत्वबोधक चतुर्थी की अनुपपत्ति हो जायगी। जाति आदि फल होते हैं इस विषय में प्रमाण देते हैं कि

प्राप्तिक्रियामन्तरेण जातेः शुद्धाया अफलत्वात्क्रियायाः एव फलत्वमिति वाच्यम्। प्राप्तेः संसर्गतया तद्द्वारैव जात्यादेः फलत्वोपपत्तेः। अन्यथा फलत्वबोधकचतुर्थ्या अनुपपत्तेः। अत एव–'ब्राह्मण्याय तपस्तेपे विश्वामित्रः सुदारुणम्' इत्यादयः प्रयोगाः।

गुणफलोत्प्रेक्षा यथा—

वियोगवह्निकुण्डेऽस्मिन् हृदये ते वियोगिनि ?
प्रियसंगसुखायैव मुक्ताहारस्तपस्यति।

क्रियाफलोत्प्रेक्षा यथा—

'हालाहलकालानलकाकोदरसंगतिं करोति विधुः।
अभ्यसितुमिव तदीयां विद्यामद्यापि हरशिरसि॥'

### मर्मप्रकाशः

कण्ठदघ्ने कण्ठप्रमाणे। अवयवेति। स्तनेत्यर्थः। स एवेति। जातिरूपतलर्थः। अफलत्वादिति। तस्यानित्यत्वादिति भावः। क्रियायाः प्राप्तेः। संसर्गतयेति। तथा च लक्षणा नेति भावः। अन्यथा यथाकथंचित्फलत्वानङ्गीकारे। उक्तार्थं द्रढयति–अत एवेति। वियोगेति। अत्र सुखरूपगुणस्य फलत्वेनोत्प्रेक्षणं स्पष्टमेव। हालेति। विषभालनेत्रसर्पाणां संगतिमित्यर्थः। तदीयां विषादीयाम्। प्राचामलंकारसर्वस्वकारादीनाम्। एवेत्यस्य बोध्यमिति शेषः। एवं

### मधुसूदनी

अम्बुनि जले उत्पन्नानां कमलानां जलावस्थानं साहजिकम्, तथा च स एव जातिरूप तल् प्रत्ययार्थ एव। वक्षोजत्वप्राप्तिः फलम्। ननु शुद्धा वक्षोजत्वं जातिः फलम्। अतः जातिरूपस्य फलस्योत्प्रेक्षा नास्ति अपि तु प्राप्तिरूपास्याः क्रियाया फलभूतायाः। तद्द्वारैव संसर्गभूतप्राप्तिद्वारैव। अन्यथा जातेः फलत्वानंगीकारे फलत्वबोधिकाया वक्षोजतायै इति रूपायाश्चतुर्थ्या अनुपपत्तेः। अत एव फलत्वबोधकचतुर्थ्या उपपत्तेः सद्भावादेव ब्राह्मणयाय इत्यादयः प्रयोगाः संगच्छन्ते इति शेषः।

### बालक्रीड़ा

विश्वामित्र ने ब्राह्मणत्व के लिए सुदारुण तप किया यहाँ ब्राह्मण्याय चतुर्थी ब्राह्मणत्व जाति रूप फल को बतलाती हैं। गुण फलोत्प्रेक्षा जैसे—हे वियोगिनि ? यह मुक्ताहार मोतियों की माला तुम्हारे वियोग रूपी अग्नि के कुण्ड हृदय में तपस्या कर रहा है कि हमें प्रिय के आलिंगन का सुख मिल जाय।

यहाँ सुखरूपी गुण की फलत्वेन उत्प्रेक्षा की है। क्रिया फलोत्प्रेक्षा जैसे—हर के शिर में बैठा हुआ विधु आज भी विष, प्रलय की अग्नि एवं सापों की विद्या का अभ्यास करने के लिए मानों गलस्थ हालाहल, नेत्रस्थ कालानल एवं भूषण भूत सर्पों की संगति करता है।

अत्र विरहिवाक्येऽभ्यसनक्रियायास्तुमुना फलत्वं लभ्यते । एवं लक्ष्यानुसारेण यथासंभवमन्यदप्युदाहार्यम् ।

इह जात्यादयो हि भेदाः प्राचामनुरोधादुदाहृताः । वस्तुतस्तु नैषां चमत्कारे वैलक्षण्यमस्तीत्यनुदाहार्यतैव । चमत्कारवैलक्षण्यं पुनर्हेतुफल-स्वरूपात्मकानां त्रयाणां प्रकाराणामेवेति । प्रागुदाहृतेष्वेव पद्येषु वाचका-नामिवादीनां त्यागे प्रतीयमाना । अर्थसामर्थ्यावसेयत्वात् । न तु व्यङ्ग्येति भ्रमितव्यम् । तस्याः प्रकृते प्रसङ्गाभावात् ।

धर्मस्वरूपोत्प्रेक्षा यथा—

'निधिं लावण्यानां तव खलु मुखं निर्मितवतो
महामोहं मन्ये सरसिरुहसूनोरुपचितम् ।

### मर्मप्रकाशः

वाच्याप्रपञ्चमुक्त्वा प्रतीयमानामाह—प्रागिति । एवं धर्मिस्वरूपोत्प्रेक्षामुक्त्वा धर्मस्वरूपो-त्प्रेक्षामाह—धर्मेति । सरसिरुहसूनोर्ब्रह्मणः । इह जगति । कलाहीनं क्षीणकलम् ।

### मधुसूदनी

निधिं लावण्यानामिति । अत्र कश्चिच्चाटुकारः राजानं स्तौति । तव मुखं निर्माय यद् विधुं निरमात् तदिदं सरसिरुहसूनोरविचार्यकारित्वम् । तेन निमित्तेन तस्य महामोहं मुखसद्भावे विधुनिर्माणविषयकं मन्ये । ततस्तत्र ब्रह्मणि विषये महामोहा-

### बालक्रीड़ा

यहाँ विरही के वाक्य में तुमुन् प्रत्यय के द्वारा अभ्यसन किया में फलत्व मिल जाता है । यहां चतुर्थ पाद में स्थितः क्रिया का अध्याहार करना चाहिए । और इस पाद में १४ मात्रा होनी चाहिए थी अतः उनको पूर्ति पादान्तस्थ को गुरु मानकर करनी चाहिए । इस तरह लक्ष्यों के अनुसार यथा संभव और २ भेदों के भी उदाहरण देख लेवें ।

यहाँ प्राचीन अलंकारसर्वस्वकार वगैरह के अनुरोध से जात्यादि भेदों के उदाहरण दिये है । वस्तुतस्तु इनमें चमत्कार की विलक्षणता कुछ भी नही है । अतः इनके उदा-हरण नहीं देने चाहिए । अगर चमत्कार में वैलक्षण्य है तो हेतु, फल एवं स्वरूप इन तीनों प्रकारों में ही है । पहले उदाहरण रूप में उपन्यस्त पद्यों में वाचक इवादि के त्याग कर देने पर प्रतीयमाना उत्प्रेक्षा है । क्यों कि अर्थ के सामर्थ्य से उसका ज्ञान होता है । किन्तु वह व्यंग्य है यह प्रमाद नहीं करना चाहिए । व्यंग्य उत्प्रेक्षा का इस समय प्रसंग नहीं है ।

इस प्रकार धर्मिस्वरूपोत्प्रेक्षा को बतला कर धर्म स्वरूपोत्प्रेक्षा को कहते हैं । जैसे लावण्य के निधि तुम्हारे मुख का निर्माण करने वाले सरसिरुहसूनु का बड़ा भारी अज्ञान बढ़

उपेक्ष्य त्वां यस्माद्विधुमयमकस्मादिह कृती
कलाहीनं दीनं विकल इव राजानमतनोत् ॥'

पूर्वार्धोत्प्रेक्षितमोहरूपधर्मसिद्धये द्वितीयार्धेऽविचार्यकारित्वं तत्सामानाधिकरण्येनोपात्तम्। अस्यां च स्वरूपस्य विषयित्वे निमित्तभूतो धर्म

**मर्मप्रकाशः**

विकल इवेत्यंशे उपमा। पूर्वार्धोत्प्रेक्षितेति। ब्रह्मरूपे धर्मिणीति भावः। उपात्तमिति। अकस्मादित्यनेनेति भावः। निमित्तांशे प्रागनुक्तं विशेषमाह—अस्यां-चेति। उत्प्रेक्षात्वाव-

**मधुसूदनी**

भाववत्वेन प्रमिते महामोहसमानाधिकरणाविचारकारित्वधर्मनिमित्तकं समवाय सम्बन्धेन महामोहवत्वमुत्प्रेक्ष्यते। इह हे राजन्? पूर्वं तव मुखं निर्माति पश्चात्त्वन्मुखं उपेक्ष्य विधुं निर्माति इति वक्तव्यम्। तत्र कथयति "त्वां राजानमुपेक्ष्य विधुं निर्माति" सोऽपि कृती तत्तु बुद्धि दौर्बल्यं, तस्मात् "उपेक्ष्येदम्" नहि कृतीति च इति पाठः साधीयान्। सामानाधिकरण्येन यत्र ब्रह्मणि अधिकरणे मोहस्तत्रैव अविचार्यकारित्वमिति। अकस्मादितिशब्दादुपात्तम्। अस्यामुत्प्रेक्षायां स्वरूपस्य धर्मिणो धर्मस्य वा निमित्तभूतो धर्मः उपात्तो वा अनुपात्तो वा स्यात्। हेतुफलयोरुत्प्रेक्षायां तु

**बालक्रीड़ा**

गया है ऐसा मैं जानता हूँ। क्यों कि तुम्हारी उपेक्षा करके इस कृती ने विकल की तरह विना समझे बूझे कलाहीन अतएव जड एवं दीन विधु राजा का निर्माण किया।

यहाँ पूर्वार्ध में ब्रह्मा में मोह की उत्प्रेक्षा की है। उसकी सिद्धि संगति के लिए उत्तरार्ध में अकस्मात् पद से मोह के समानाधिकरण में रहने वाले अविचार्यकारित्व रूप धर्म का उपादान किया।

यहाँ इस पद्य में यह आलोचना है कि मोह का अर्थ अज्ञान है। अतः वह सविषय है। प्रकृत में किस विषय का मोह है यह अंश स्पष्ट नहीं लिखा है। जैसा कि "अस्यां मुनीनामपि" में मुनियों को दमयन्ती के विषय में मोह हुआ। यहाँ मुनि धर्मी उत्प्रेक्षा के विषय हैं और दमयन्ती सम्बन्धी मोह धर्म उत्प्रेक्षा का विषयी है। उसी तरह प्रकृत में ब्रह्मा धर्मी उत्प्रेक्षा का विषय है और उसमें मोह धर्म विषयी है। वह मोह किस वस्तु का है उसका उल्लेख नहीं है। एक बात हुई।

दूसरी बात है कि तुम्हारे सुन्दर मुख का निर्माण करने वाले ब्रह्माजी ने तुम्हारी पर्वाह नहीं करके हे राजन्? विधु को बना दिया इस पर भी वह कृती ऐसा कहने में कौन तुक है। क्योंकि राजा एवं विधु का तो सादृश्य वर्णनीय नहीं है। वह तो वर्णनीय है मुख का और विधु का। अतः मुख को बनाकर चन्द्र को बनाना अविचार्यकारिता है। यहाँ जैसे ब्रह्मा का महामोह है उसी तरह पण्डितराज का भी महामोह है "जो मुख को बनाकर उसकी पर्वाह

उपमायामिव विम्बप्रतिबिम्बभावादिभिर्भिन्न उपात्तोऽनुपात्तश्च । हेतुफलयोर्विषयित्वे तु यं प्रति हेतुफले निरूपिते स धर्मः कल्प्यमानोऽपि विषयगतसाहजिकधर्माभिन्नतयाध्यवसीयमानो निमित्तं संपद्यते । स चोपात्त एव भवति । अन्यथा कं प्रति हेतुफलयोरन्वयः स्यादिति संक्षेपः ।

अत्र च प्राचामर्वाचां चानेकधा दर्शनं व्यवस्थितम् । तत्र प्राचामित्थम्—सर्वत्राभेदेनैव विषयिणो विषये उत्प्रेक्षणं न संबन्धान्तरेण । तथा

## मर्मप्रकाशः

च्छिन्नायामित्यर्थः । स्वरूपस्य धर्मिस्वरूपस्य धर्मस्वरूपस्य वा । भावादिभिरिति । आदिना अनुगामित्वादिपरिग्रहः । एवं च चतुर्विध इत्यर्थः । तदाह—भिन्न इति । अपिः स्वाभाविकसमुच्चायकः । अत्र उत्प्रेक्षाविषये । अर्वाचामाधुनिकानाम् । दर्शनं मतम् । तत्र तयोर्मध्ये ।

## बालक्रीड़ा

नहीं करके विधु को बना दिया" इस तरह नहीं लिखकर (त्वामुपेक्ष्य) "हे राजन् तुम्हारी पर्वाह नहीं करके" यह लिख दिया । अतः "उपेक्ष्य त्वाम्" के स्थान पर "उपेक्ष्येदम्" और "नहि कृती" पाठ ही साधीयान् है । इदं का अर्थ मुख प्रकृत में ग्राह्य है ।

इसमें स्वरूप को जब विषयी बनाते हैं तब निमित्तभूतधर्म उपमा में जैसे बिम्व-प्रतिविम्बभावादि प्रकारों से भिन्न-भिन्न है उसी तरह यहाँ भी वे प्रकार रहेंगे और अलग-अलग । कभी वह धर्म उपात्त रहेगा या कभी अनुपात्त रहेगा । और जव हेतु एवं फल को विषयी बनायेंगे तव तो जिसके प्रति हेतु और फल का निरूपण करेंगे । वह धर्म कल्पना प्रसूत हुआ भी विषय में रहने वाले स्वाभाविक धर्म के साथ अभिन्न रूप में ज्ञान का विषय वनकर निमित्त बन जाता है । और वह सर्वदा उपात्त ही रहता है । यदि वह उपात्त नहीं रहेगा तो किसके साथ हेतु और फल का अन्वय होगा । जैसे "त्वत्प्रताप महादीप" इस हेतूत्प्रेक्षा में नभस्तलगत जिस नीलत्व धर्म के प्रति प्रतापरूप दीप से उत्पन्न कज्जल को हेतु बनाया हैं वह नीलत्व धर्म कज्जल से उत्पन्न हुआ है । इस रूप में कल्पना प्रसूत हुआ भी आकाश के स्वाभाविक नीलत्वगुण से अभिन्न ही समझा गया है । और जो नीलत्व धर्म कज्जल की हेतुत्वेन उत्प्रेक्षा करने में निमित्त भी है वह सर्वदा उपात्त ही रहता है । क्योंकि यदि वह नीलत्वधर्म उपात्त नहीं रहेगा तो हेतु का कज्जल रूप से अन्वय किससे होगा' वही स्थिति फलोत्प्रेक्षा की भी है । जैसे "दिवानिशं वारिणि" इस फलोत्प्रेक्षा में कमलों को जिस जलावस्थान रूप तपश्चरण क्रिया के फल के रूप में वक्षोजत्व (प्राप्ति) की उत्प्रेक्षा करते हैं ? उस कल्पित तपश्चरण क्रिया रूप धर्म को स्वाभाविक जलावस्थान ही समझ लिया । इस तरह एक समझा गया वह जलावस्थान रूप तपश्चरण क्रिया धर्म उत्प्रेक्ष्यमाण वक्षोजत्व (प्राप्ति) के प्रति निमित्त है । यह निमित्तभूत धर्म यदि अनुपात्त रहे तो इस निमित्त का वक्षोजत्व (प्राप्ति) रूप फल के साथ अन्वय कैसे होगा । यह संक्षेप है ।

हि धर्मिस्वरूपोत्प्रेक्षायाम् 'मुखं चन्द्रं मन्ये' इत्यादौ तावद्विषयिणश्चन्द्रस्याभेदो विषये मुखे स्फुट एव। नामार्थयोर्भेदेन साक्षादन्वयस्याव्युत्पत्तेः। उपात्तविषया चेयम्। एवम् 'अस्यां मुनीनामपि मोहमूहे' इत्यत्र नैषधपद्ये (७। ९६) धर्मस्वरूपोत्प्रेक्षायामपि मुनिसंबन्धिनि धर्मान्तरे

## मधुसूदनी

स धर्म उपात्त एव भवति इति। धर्मान्तरे इति। मोहापेक्षया भिन्ने धर्मे कुचशैलपरिशीलने आह्लादे ऊरुश्रयणे च विषये। शीलनाह्लादश्रयणानां धर्माणां विषयस्वरूपाणां सद्भावे विषयस्यानुपादानं संगच्छते इति पण्डितराजस्य कोक्तिः।

## बालक्रीड़ा

इस उत्प्रेक्षा के विषय में प्राचीन एवं अर्वाचीन आचार्यों के सिद्धान्त दर्शन की अनेक प्रकार से व्यवस्था है। उनमें प्राचीनों की व्यवस्था इस प्रकार है कि सभी जगह जाति, गुण, द्रव्य एवं क्रिया में विषयी की विषय में उत्प्रेक्षा अभेद ही सम्वन्व से होगी अन्य सम्बन्धों से नहीं। धर्मी की उत्प्रेक्षा में विषयी और विषय दोनों वर्मी होंगे धर्म की उत्प्रेक्षा में दोनों वे धर्म होंगे। जैसे "मुखं चन्द्रं मन्ये" इत्यादि धर्मी स्वरूपोत्प्रेक्षा में विषयी चन्द्र का विषय मुख में अभेद स्पष्ट है। क्यों कि नामार्थों में भेद सम्बन्ध से साक्षात् अन्वय व्युत्पत्ति से विरुद्ध है। यह उत्प्रेक्षा उपात्त विषया है। एवं याने जैसे वर्मिस्वरूपोत्प्रेक्षा में अभेद सम्वन्ध से उत्प्रेक्षा होती है वैसे ही धर्मस्वरूपोत्प्रेक्षा में भी। जैसे :—

अस्यां मुनीनामपि मोहमूहे
भृगुर्महान् यत्कुचशैलशीली।
नानारदाह्लादि मुखं श्रितोरु
र्व्यासो महाभारतसर्गयोग्यः।

यह नैषध के सातवें सर्ग का ९६ वाँ पद्य है। इसमें दमयन्ती का वर्णन है। दययन्ती के कुच पर्वत हैं (रूपक) या पर्वत के सदृश हैं (उपमा)। और पर्वत में भृगु नामक स्थान स्वभावतः होता ही है। भृगु उसको कहते हैं जो पर्वत से प्रपतन के लिए अर्थात् कूदने के लिए अतट अकृत्रिम उन्नत प्रदेश है। लड़के या युवक कुछ निश्चित दूरी से दौड़ कर आते हैं और किसी कृत्रिम उन्नत प्रदेश पर पैर का टेक लगाकर उछलते हैं एवं कूदते हैं। इस कुदान के लिए एक ऊँचा ठीहा बनाते हैं उसका नाम तट है। किन्तु जो किसी का वनाया नहीं है अर्थात् स्वभाव सिद्ध है ऐसे अतट प्रपात को भृगु कहते हैं (प्रपातस्त्वतटो भृगुः अमर कोष)

दमयन्ती का मुख नाना रद दान्तों से आह्लादी है और उसके ऊरु जाँघों में व्यास है विस्तार है अतएव वह आकर्षक रति (मैथुन) के योग्य है यह वस्तु स्थिति है। यहाँ भृगु माने ऋषि और नीचे गिरने के लिए विना तट का स्थलविशेष। निः संदिग्ध नारद ऋषि और नाना अनेक रद दाँत। व्यास ऋषि जो महाभारत ग्रंथ के निर्माता हैं और जांघों का

विषये दमयन्तीविषयकमोहस्य विषयिणोऽभेदेनैवोत्प्रेक्षा। उत्प्रेक्षायाश्च साध्यवसानत्वाद्विषयस्यानुपादानं संगच्छते। निमित्तधर्मश्च तत्तदङ्गासक्तचित्तवृत्तित्वम्।

## मर्मप्रकाशः

विषय इति। एतौ च धर्मस्वरूपौ धर्मिस्वरूपौ वेति भावः। तावदादौ। अस्यां दमयन्त्याम्। धर्मस्वरूपोत्प्रेक्षायामपि धर्मान्तरे दर्शनादिरूपे। नन्वेवं कथं विषयस्यानुपादानमत आह—उत्प्रेक्षेति।

## बालक्रीड़ा

विस्तार जो महाभा आकर्षक रत मैथुन के योग्य है। इस तरह कवि ने इसमें दो अर्थ वाले शब्दों का उपन्यास किया है। जिसके फलस्वरूप इस पद्य में उत्प्रेक्षालंकार बन जाता है। जैसे जितेन्द्रिय अत एव कामपराङमुख भृगु, नारद एवं व्यास ऐसे मुनियों की भी दमयन्ती में आसक्ति (मोह) हो गया है ऐसी मैं सम्भावना करता हूँ। क्योंकि भृगु कुच (रूपी शैल) का शीलन करते हैं। नारद मुख को देखकर आल्हाद युक्त होते हैं। महा भारत के निर्माता व्यास ऊरुओं का आश्रयण करते हैं। यहां धर्मस्वरूपोत्प्रेक्षा में भृगु का कुच (शैल) शीलन, नारद का मुख से आल्हाद और व्यास का ऊरुश्रयण उनका मोह ही है अतः मुनियों के शीलन आल्हाद एवं श्रयण रूप धर्मों विषयों में दमयन्ती विषयक मोह रूप धर्म विषयी की अभेद सम्बन्ध से ही उत्प्रेक्षा है।

उत्प्रेक्षा साध्यवसाना निगीर्ण विषया होती है अतः उसमें विषय का अनुपादादान संगत है यह पण्डित राज का लेख प्रकृत स्थल में अज्ञान का सूचक है। क्योंकि शीलन विशिष्ट अर्थ वाले शीली से शीलन, आल्हाद युक्त अर्थ वाले आल्हादि से आल्हाद और श्रयण कर्ता अर्थ काले श्रितोरु से श्रयण का ग्रहण होता ही है। ऐसी अवस्था में विषयों का अनुपादान कैसे कहा जा सकता है। शीलन प्रभृति विषय उपात्त ही हैं। यदि शीलनादि विषयों का अनुपादान हो तब उत्प्रेक्षा के साध्यवसाना होने पर उनके अनुपादान को संगत भी कहा जा सकता। उत्प्रेक्षा का निमित्त भूतधर्म है मुनियों के चित्तवृत्ति की भिन्न २ अंगों में आसक्ति है।

अप्पय्य दीक्षित जी द्रविड़ थे अतः उन्होंने यहाँ प्रकृत पद्य में उत्प्रेक्षा अलंकारका समन्वय द्रविडप्राणायाम करके किया है। वे कहते हैं कि जहाँ तो किसी धर्म का निमित्त रूप से उपादान करने पर भी उत्प्रेक्षा के विषय का उस धर्म के साथ सम्बन्ध साफ २ नहीं मालूम पड़ता है वहाँ निमित्त भूत धर्म का निमित्त भूत धर्म से भिन्न धर्म के साथ ताद्रूप्यसम्पादन करके उसके सम्वन्ध का समर्थन करना चाहिए। वहाँ ताद्रूप्य याने अभेद कहीं पर श्लेष से या कहीं पर अपन्हुति वगैरह से किया जाता है। जिसमें अस्यां मुनीनाम् पद्य में भृगु आदि पदों में उपरि निर्दिष्ट प्रकार से श्लेष के द्वारा उत्प्रेक्षा के विषय के साथ सम्वन्ध दिखाया गया है अतः धर्मों में पहिले ताद्रूप्य कर लेवे तब वाद में धर्मों के साथ उस धर्म का समन्वय करें। जैसे

मुनियों को उत्प्रेक्षा के विषय बनाया और दमयन्ती विषयक मोह धर्म को उत्प्रेक्ष्यमाण विषयी। इसमें जो कुच शैल परिशीलनादि निमित्त है वे भृग्वादि मुनियों में नहीं हैं। किन्तु

एवम् 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः' इत्यादौ कस्यापि पद्ये न प्रथमान्तार्थे कर्तरि लेपनकर्तृत्वादेरुत्प्रेक्षणम्, तस्याख्यातार्थविशेषणत्वेनै-

## मर्मप्रकाशः

एवं धर्मिस्वरूपोत्प्रेक्षायां तत्त्वमुक्त्वा धर्मस्वरूपोत्प्रेक्षायामप्युपपादयति—एवमिति। कस्यापि पद्ये इत्यनेन स्वीयत्वं निरस्तम्। वैयाकरणरीत्या आह—तस्येति। प्रथमान्तार्थकर्तुरित्यर्थः। तथा च पदार्थः पदार्थेनेति न्यायप्रसरः। कर्तृत्वादि तु क्रियारूपतया प्रधानमेवेति भावः। एव मग्रेऽपि। अभेदेनेति। प्रथमान्तार्थे उत्प्रेक्षणमित्यस्यानुषङ्गः। तस्येति। लेपनादिकर्तुरित्यर्थः।

## मधुसूदनी

कर्त्तरीति। कर्त्तरि लेपनकर्त्तरि तमसि लेपनकर्त्तृत्वस्य लेपनक्रियायाः। तस्य-प्रथमान्तार्थकर्त्तुस्तमसः। आख्यातार्थे भावप्रधानमाख्यातमिति यास्कोक्तेर्भावे क्रियायाम्। विशेषणत्वेन तिङर्थस्तु विशेषणमित्युक्तेः। आश्रये तु तिङः स्मृता इत्युक्तेश्च। एकदेशत्वात् अवयवत्वात्। एवं हि पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति न्यायात्तमसः एकदेशभूतस्य इवपदार्थे संभावनायां नान्वयः।

## बालक्रीड़ा

अतटादिरूपभृग्वादि में है। अतः भृग्वादि शब्दश्लेष से मुनियों में उस निमित्त भूत धर्म का सम्बन्ध किया है। उसका मार्ग है पहले कुच शैल परिशीलनादि का और मोह का अभेद सम्पादन किया। उसके बाद मोहाभिन्न कुच शैल परिशीलनादि का श्लिष्ट भृग्वादि पदार्थों में सम्बन्ध किया है। इसलिये कहा कि द्रविड याणायाम किया है। इसमें विचारणीय है कि जो कुच शैल परिशीलननादि निमित्त थे वे तो अब अभेदाध्यवसान से उत्प्रेक्ष्यमाण मोहरूप बनगये तब निमित्त कौन होगा। यदि इसको दीक्षित जी ने नहीं बतलाया अथवा बतला नहीं सके तो संगति नहीं हुई दोष रह गया।

इसी तरह अन्धकार अंगों में लेपकर रहा है। आकाश काजल की वर्षा कर रहा है इत्यादि में भी समझना चाहिए। यह पद्य शूद्रक कवि के बनाये हुए मृच्छकटिक प्रकरण के प्रथम अंक का है। इसका उत्तरार्ध "असत्पुरुषसेवेव दृष्टिर्विफलतां गता" है। यहाँ लेपन कर्ता अन्धकार अंगों का किस वस्तु से लेप कर रहा है। और नभ के द्वारा काजल की वर्षा में काजल किसको बनाया यह नहीं बतलाया है। किन्तु पहले में तम अपने ही से अंगों का लेप करता है और दूसरे में तम को काजल बनाया है ऐसा मालूम पड़ता है।

यहाँ की उत्प्रेक्षा के विषय में विद्वानों ने बड़े बड़े बुद्धि के व्यायाम किये हैं उनको संक्षेप में हम दिखाने का प्रयत्न करते हैं। यहाँ पण्डित राज ने तीन मत दिखाये हैं। उनमें पहला मत अलंकार सर्वस्वकार का है। वे कहते हैं कि प्रथमान्तार्थ कर्त्ता तम में लेपन क्रिया कर्त्तृत्व याने लेपन की उत्प्रेक्षा करते हैं। इस उत्प्रेक्षा में निमित्त भूत धर्म व्यापन है जो अनुपात्त है। अतः यह अनुपात्त निमित्ता क्रियोत्प्रेक्षा है। लेपन कर्त्ता में लेपन कर्तृत्व धर्म लेपन क्रिया ही है अतः लेपन कर्त्तृत्व का अर्थ लेपनकृति नहीं लेना। इसका समर्थन नागेश

बालक्रीड़ा

महाराज जी ने भी किया है यदि कर्त्तृव का अर्थ कृनि ही लेना होता तो स्पष्ट (कृतीत्येव ब्रूयात्) कृति पद से कृति को ही ग्रन्थकार कहते। अतः कृति नही लेना। क्यों कि यहाँ अंगानि का कर्मत्वेन उपन्यास किया है। अतः यदि कर्त्तृत्व का अर्थ कृति यत्न लेंगे तो लिम्पति क्रिया अकर्मक हो जायगी तब अंगानि कर्म नहीं बन सकेगा। जैसा कि वै० भू० सार की उक्ति है

फल व्यापारयोर्धातुः।इति।

व्यापारो भावना सैवोत्पादना सैव च क्रिया।

कृञोऽकर्मकतापत्तेर्नहि यत्नोऽर्थं इष्यते। इति।

इसके वाद आप कहते हैं कि जो तो यहाँ व्यापन उत्प्रेक्षा का विषय बनायेंगे अर्थात् व्यापन में लेपन की उत्प्रेक्षा करेंगे तो उनको व्यापन के विषय होने से तदतिरिक्त किसी तिरोधायकत्व को निमित्त भूत धर्म के रूप में खोजना पड़ेगा। अतः व्यापन को विषय बनाना अनुचित होगा। जिसको उत्प्रेक्षा का विषय बनाया जाय उसका गम्यमानत्व अनुपादान युक्त नहीं है। वही तो उत्प्रेक्षा का आधार है भित्ति है अतः प्रस्तुत है उसको शब्द से कहना ही उचित है। इसी लिए किसी आचार्य ने कहा है कि (व्यापनादि निगीर्य, तमसि लेपनादि संभावितम्) व्यापनादि धर्म के निगरण अनुपादान में तम धर्मी से लेपन क्रिया कर्त्तृत्व रूप लेपन क्रिया उत्प्रेक्षित है। इसका खण्डन पण्डित राज करते हैं कि प्रथमान्तार्थ कर्त्ता तम में लेपन क्रिया कर्त्तृत्व लेपन की जो उत्प्रेक्षा करते हैं। वह ठीक नहीं है।

क्योंकि लिम्पति इस आख्यात तिङन्त पद में दो अंश है एक लिप् धातु दूसरा तिङ। उसमें "फलव्यापारयोर्वातुराश्रये तु तिङः स्मृताः" इस वै० भू० सार की उक्ति के अनुसार धातु लिप् का अर्थ है व्यापार और तिङ का अर्थ है कर्त्ता। किन्तु (भावप्रधानमाख्यातम्) इस नियम के अनुसार आख्यात में व्यापार प्रधान होता है और कर्त्ता अप्रधान। तदनुसार वह प्रथमान्तार्थ कर्त्ता तम आख्यात लिम्पति के अर्थ व्यापार में विशेषण है। क्यों कि "तिङर्थस्तु विशेषणम्" यह सिद्धान्त है। अतः एक देश है ! और नियम है कि पदार्थ का पदार्थ में अन्वय होता है न कि पदार्थ के एक देश में उसका अन्वय होता है तदनुसार एक देश कर्त्ता तम का इव पदार्थ सम्भावना में अन्वय नहीं हो सकता है। फलतः उक्त उत्प्रेक्षा नहीं हो सकती है।

दूसरे मत का उद्धरण पण्डित राज ने जो किया है उसका उल्लेख साहित्यदर्पणकार ने साहित्यदर्पण में यों किया है। जो तम जड होने से लेपन क्रिया का कर्त्ता नहीं बन सकता है अतः वह तम अभेद सम्वन्घ से लेपन कर्त्ता के रूप में उत्प्रेक्षित है। इस उत्प्रेक्षा में व्यापन निमित्त है। इसी तरह जो आकाश जड होने से वर्षण क्रिया का कर्ता नहीं बन सकता है वह आकाश अभेद सम्वन्घ से वर्षण कर्त्ता के रूप में उत्प्रेक्षित है। इसमें तमः संपात निमित्त है। इन दोनों में विषय तम और नभ (आकाश) उपात्त हैं। और निमित्त अनुपात्त है अतः उपात्त विषया अनुपात्त निमित्ता ये उत्प्रेक्षायें हैं। यह लेख साहित्यदर्पणकार का है। इसका खण्डन पण्डित राज की अपेक्षा दीक्षित जी ने अधिक स्पष्ट यों किया है कि ये उत्प्रेक्षायें ठीक नहीं हैं। यद्यपि लिम्पति और वर्षति ये दोनों

कदेशत्वात्। नापि लेपनादिकर्तुरभेदेन, तस्य क्रियाविशेषणत्वेनाप्राधान्यात्। किं तु तमःकर्तृकमञ्जकर्मकं लेपनमुत्प्रेक्ष्यते। तमःतृकमञ्जनकर्मकं वर्षणं च। उत्प्रेक्ष्यमाणाभ्यां च ताभ्यां विषययोः तमः कर्तृकव्यापनसम्पातयोः

## मधुसूदनी

नापीति। अलेपनकर्त्तरि जड़े तमसि विशेषे लेपनकर्तुः सामान्यस्य आश्रये तु तिङः स्मृता इत्युक्तेर्लेपनाश्रयस्य अभेदेन उत्प्रेक्षणमपि नास्ति। तस्य कर्त्तुः क्रियायां विशेषणत्वेन अप्राधान्यात् प्रधानानुपातिनो गुणा इत्युक्तेर्न तथोत्प्रेक्षणम्। अप्रधाने कर्त्तरि इवार्थस्यानुपातित्वाभावात्। ताभ्यां लेपनवर्षणाभ्यां विषययोस्तमःकर्त्तृक-व्यापनतमः कर्त्तृकसम्पातयोः। विषययोस्तमः कर्त्तृक व्यापनसम्पातयोरिति पाठः। अत एव क्रियायां क्रियायाः संभावनादेव मम्मटभट्टैरुक्तमित्यन्वयः। श्यामीकार-कत्वादीत्यत्रादिपदार्थः धारारूपेण तमसोऽधः संयोगः।

## बालक्रीड़ा

आख्यात, कर्त्ता के भी वाचक हैं तद्यपि "आख्यात में भाव व्यापार रूप अर्थ प्रधान होता है" इस निरुक्तकार के सिद्धान्त के अनुसार प्रकृत में व्यापार ही प्रधान है और कर्त्ता उसमें विशेषण है। गुण प्रधानानुपाती ही होते हैं। अननुपाती नहीं होते हैं। इस तरह विशेषण के रूप में अन्वित कर्त्ता को यदि उत्प्रेक्षा का विषय वनायेंगे तो उस कर्त्ता का संभावना इवार्थ में अन्वय नहो सकेगा। क्यों कि एक वार अन्वित होने से वह निराकांक्ष हो गया है अत एव आख्यातार्थ कर्त्ता का क्रिया में विशेषण होने से दूसरी जगह विशेषण के रूप में अन्वय करना असंभव है। इसीलिए दण्डी ने उपमा में उपमानतया इसके अन्वय का निराकरण कर दिया। जैसी कि कारिका है।

कर्त्ता यद्युपमानं स्यात् न्यग्भूतोऽसौ क्रिया पदे।
स्वक्रिया साधनव्यग्रो नालमन्यद् व्यपेक्षितुम्।

यहाँ कहते हैं कि तम लेपन कर्त्ता है अतः अभेदेन उत्प्रेक्षा नहीं हो सकती है। क्योंकि तम लेपन क्रिया में विशेषण है अतः अप्रधान है। ऐसी स्थिति में अप्रधानीभूत तम का इवार्थ संभावना में अन्वय नहीं होगा अतः उत्प्रेक्षा नही होगी। किन्तु तमः कर्त्तृक अञ्जकर्मक लेपन एवं नभः कर्तृक अञ्जन कर्मक वर्षण यहाँ उत्प्रेक्षित है।

उत्प्रेक्ष्यमाण याने उत्प्रेक्षा के विषयी लेपन एवं वर्षण से क्रमशः तमो व्यापन एवं तमः संपात विषयों का निगरण कर दिया गया है अतः उनका अनुपादान है। इसीलिए इस तरह की उत्प्रेक्षाओं को अनुपात्त विषया कहते हैं। और उत्प्रेक्षा के निमित्तभूत धर्म श्यामीकारकत्व एवं धारा रूप से अधः संयोग भी क्रमशः अनुपात्त है। इसी लिए मम्मट भट्ट जी ने प्रकृत की अप्रकृत के साथ जो संभावना है वह उत्प्रेक्षा है। ऐसा लक्षण बनाकर कहा कि व्यापनादि लेपनादि रूप से संभावित है। वस्तुतस्तु नभ से भपर्यन्त जो तमः संपात हो रहा है वही मानों नभ अंजन को वर्षा रहा है। यहाँ अपादान नभ में कर्ता की

निगीर्णत्वादनुपादानम्। अत एव एवमादावियमनुपात्तविषयोच्यते। निमित्त-धर्मश्च श्यामीकारकत्वादिरनुपात्त एव। अतएव 'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति लक्षणं विधायोक्तम् 'व्यापानादि लेपनादिरूपतया संभावितम्' इति मम्मटभट्टैः। एवम्

'उन्मेषं यो मम न सहते जातिवैरो निशाया-
मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
ल्लग्ना मन्ये ललिततनु ! ते पादयोः पद्मलक्ष्मीः॥'

इत्यादौ प्राचीनपद्ये हेतूत्प्रेक्षायामपि न हर्षरूपं हेतुमात्रमुत्प्रेक्ष्यते लक्ष्मीरूपे विषये। किं तु तद्धेतुकं कार्यं लगनादिरूपं विषयितादात्म्येन साहजिकलगनादौ

### मर्मप्रकाश

वर्षणं चेत्यस्य उत्प्रेक्ष्यत इति शेषः। ननु कुत्र सा अत आह—उत्प्रेक्ष्येति। अत एव निगीर्ण-त्वादनुपादानादेव। एदमादौ इत्याद्युदाहरणे। अत्र संमतिं प्रकाशकृत आह—अत एवेति। एवमिति। उन्मेषमिति। विकसनमित्यर्थः। नायिकां प्रति नायकोक्तिः। यश्चन्द्रः। मम

### मधुसूदनी

उन्मेषमिति। मम पद्मस्य निशायामुन्मेषं विकासं य इन्दुर्न सहते न समर्थयते तस्य इन्दोः। हर्षरूपमिति। लक्ष्मीः हर्षाल्लग्नेति लक्ष्म्यां समवायेन हर्षो धर्म उत्प्रेक्ष्यते इत्येकं दर्शनम्। पादयोर्या स्वाभाविकी शोभा पद्मसदृशी वर्तते। सा पादयोः पद्मगतहर्षजन्या शोभेति तादात्म्येन उत्प्रेक्ष्यते। कार्यं पादलगनं निमित्त-मिति वादिनापि विषयो लक्ष्मीस्तद्गतं यत् हर्षहेतुकं पादलगनं तस्य समानजातीयं सदृशं पादयोः स्वाभाविकं लक्ष्मीलगनं तेन सह अभेदाध्यवसानमवश्यं वाच्यम्।

### बालक्रीड़ा

तम में अंजन की और सम्पात में वर्षण की संभावना की गई है। नीलत्व, दृष्टि प्रति-रोधकत्व, अधः संयोग निमित्त हैं।

इस उदाहरण की तरह—जो मेरा जाति वैरी सहज शत्रु है। अत एव रात्रि में मुझ पद्मलक्ष्मी का उन्मेष विकास नही सहन कर सकता है उस इन्दु के सौन्दर्य दर्प को इस नायिका ने जिसकी आँखे मेरे दल के सदृश हैं अपने मुख की कान्ति से जबरन् शान्त कर दिया। इसी हर्ष से मालूम पड़ता है कि हे ललित तनु ? यह पादलक्ष्मी तुम्हारे चरणों में लग गई है।

इस प्राचीन पद्य में पादलक्ष्मी विषय में हर्षरूप हेतु की उत्प्रेक्षा नही हैं किन्तु नायिका के चरणों में जो शोभा का स्वाभाविक सम्बन्ध है उस साहजिक लगन में हर्ष हेतुक लगन

विषये। कार्यस्य निमित्ततावादिनापि विषयगततत्समानजातीयेनाभेदाध्यवसानस्यावश्यवाच्यत्वात्। अन्यथा हेतुरूपविषयिधर्मसमानाधिकरणधर्मस्य कार्यरूपस्य विषयावृत्तित्वादुत्प्रेक्षैव न स्यात्। एवम्

## मर्मप्रकाशः

पद्मस्य। हेतूत्प्रेक्षायामपि तत्त्वेनाभिमतायामपि। इदं च तादात्म्यं परमतेऽप्यावश्यकमित्याह—कार्यस्येति। लक्ष्मीरूपविषये हर्षरूपहेतुमात्रोत्प्रेक्षायां कार्यमेव निमित्तं वाच्यम्। तस्य तत्त्वसिद्धिरुभयसाधारण्यं विनानुपपन्नेत्यभेदाध्यवसानमावश्यकमिति भावः। समानजातीयेन साहजिकलगनेन। तदेव व्यतिरेकमुखेनोपपादयति—अन्यथेति। हेतुरूपेति। हर्षरूपेत्यादिः। धर्मस्य कार्यरूपस्येति। वास्तवहर्षाधिकरणचेतनवृत्तितत्कार्यस्य लगनादेः पद्मलक्ष्म्यामवृत्तेरिति

## मधुसूदनी

अन्यथा लगनयोस्तयोरभेदाध्यवसायं विना हेतुरूपो विषयी यो धर्मो हर्षः तत्समानाधिकरणो धर्मः कार्यरूपः पादलगनाख्यः। तस्य विषये लक्ष्म्यां जड़त्वेनावृत्तित्वादुत्प्रेक्षा एव न स्यात्।

एवमुन्मेषमिति पद्यवत्। चोलस्येति। कण्टकिनो वनान्ताः वृक्षाः भीत्या पलायितस्य द्रुतेन गतस्य चोलस्य चोलदेशीयराज्ञः। यद्भालत्वचं ललाटचर्म व्यपाटयन् तत् अयं चोलराजोऽद्यापि अतः परमपि किं, कियत्, कीदृशं फलमनुभविष्यतीति ललाटलिपिं द्रष्टुमिव।

## बालक्रीड़ा

की अभेदेन उत्प्रेक्षा है। अर्थात् चरणों में पद्मसदृश शोभा का जो स्वाभाविक लगन सम्बन्ध हैं वह निजवैरिपराभवजनित हर्ष हेतुक लगन है अतः यहाँ भी अभेदसम्बन्ध से उत्प्रेक्षा है। यहाँ प्राचीन के मत में उत्प्रेक्षा का निमित्त भूत धर्म पादलगन है। अर्वाचीन के मत में वह धर्म हर्ष है। इस पर एक विचार उठता है कि उत्प्रेक्षा के निमित्तभतधर्म को विषय एवं विषयी दोनों में रहना चाहिए। क्योंकि दोनों में नहीं रहने पर उत्प्रेक्षा नहीं होगी। फलतः कारण को निमित्त मानने वालों के मत में तो स्वाभाविक एवं काल्पनिक दोनों निमित्तभूत धर्मों में अभेदाध्यवसान होता ही है। किन्तु कार्य को निमित्त मानने वालों के मत सें भी विजय लक्ष्मी में रहने वाले हर्ष हेतुक पादलगनरूप कार्य का अपने समान जातीय याने सदृश स्वाभाविक लगन के साथ अभेदाध्यवसान करना आवश्यक है।

वरना यदि इन हर्ष हेतुक और स्वाभाविक लगनों में एकता नहीं करेगें तो उत्प्रेक्षा नहीं होगी। क्योंकि जो हेतु रूप है और विषयी उत्प्रेक्ष्यमाण भी है वह हर्ष और उस हर्ष के समान एक अधिकरण जगह में रहने के लिए आवश्यक धर्म हर्ष हेतुक कार्य रूप लगन की विषय पद्मलक्ष्मी में अवृत्ति है स्थिति नहीं है। किन्तु नियम है कि हेतु एवं कार्य का अधिकरण समान होना चाहिए अतः उस समानता के लिए अभेदाध्यवसान ही मार्ग है।

'चोलस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः ।
अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि ॥'

इत्यादि परपद्ये फलोत्प्रेक्षायां कण्टकिषु वनान्तेषु विषयेषु न केवलं भालत्वग्विपाटननिमित्तकं ललाटाक्षरदर्शनं फलमुत्प्रेक्ष्यते । किं तु तत्फलकं भालत्वग्विपाटनादिरूपं विषयिकण्टकजविपाटनादौ विषये तादात्म्येनेति सर्वत्राभेदेनैव विषये विषयिण उत्प्रेक्षणमिति दर्शनात् ।

तत्र विचार्यते—न सर्वत्राभेदेनैवोत्प्रेक्षणमिति नियमे किंचिदस्ति प्रमाणम् । लक्ष्येषु भेदेनाप्युत्प्रेक्षणस्य दर्शनात् ।

## मर्मप्रकाश

भावः । फलोत्प्रेक्षायां तत्त्वमाह—एवमिति । चोलस्येति । चोलनृपस्येत्यर्थः । वनान्ता वनप्रदेशाः । अनुभविष्यतीति पलायितश्चेत्स इति भावः । अक्षराणि भालस्थानि । फलोत्प्रेक्षायां तत्त्वेनाभिमतायाम् । विपाटनेति । तस्य तत्कर्तृकत्वादिति भावः । दर्शनात्स्वरसतया प्रतीतेः ।

## मधुसूदनी

अत्र वृक्षेषु (विषयेषु) ललाटाक्षरदर्शनं फलमुत्प्रेक्ष्यते । तत्रोत्प्रेक्षायां ललाटत्वग्विपाटनं निमित्तम् । इत्येकं मतमर्वाचीनम् । प्राचीनास्तन्न मन्वते । ते आहुः—कण्टकजन्यभालत्वग्विपाटने भालाक्षरदर्शनाय भालत्वग्विपाटनं संभाव्यते तादात्म्येनेति ।

## बालक्रीड़ा

भगवन् ? पण्डित राज ? हर्ष के कार्य लगन का स्वाभाविक लगन के साथ एकता क्यों की । अगर कहें कि लक्ष्मी जड है अचेतन है उसका पैरों में लगना संभव नही है । अतः अभेदाध्यवसान करना आवश्यक हैं । तव प्रश्न होता है कि उस लड़ लक्ष्मी में लगन के कारण हर्ष का रहना भी तो असंमव है वह भी तो उस जड़ में नहीं रहता है तब उस हर्ष का भी तज्जातीय हर्ष के साथ और उस हर्ष के कारण निज वैरिपरिभव ज्ञान का भी तज्जातीय ज्ञान के साथ अभेदाध्यवसान वतलाना चाहिए था । क्यों नहीं वतलाया । अतः भगवन् ? ये सव प्रातिभ पदार्थ हैं । इनमें यह सव बातें नहीं देखी जाती । हाँ यदि कहीं इन वातों के समझने-समझाने में बुद्धि कौशल जार्गारत होता हो तो करना चाहिए । जहाँ वह आवश्यक भी हो व्यर्थ में नहीं ।

भीति से पलायित चोलराज के भाल की त्वचा को कांटे वाले पेड़ों ने "अभी यह चोलराज कितने कष्ट और भोगेगा" इस विधि कर लिखे अक्षरों को देखने के लिए ही मानों फाड़ दिया ।

यहाँ जह्लण के पद्य में काँटे वाले पेड़ विषयों में भाल की त्वचा का विपाटन करके ललाट के अक्षरों के दर्शन रूप फल की उत्प्रेक्षा केवल नहीं है किन्तु ललाटाक्षर दर्शन रूप फल के लिए भालत्वग्विपाटन रूप विषयी की कण्टक-जनितविपाटन रूप विषय में अभेद

'अस्यां मुनीनामपि मोहमूहे' इत्यादौ । न च मुनिसंबन्धिनि धर्मविशेषे मोहस्याभेदेनोत्प्रेक्षणमिति वाच्यम् । भेदेनोत्प्रेक्षणे बाधकाभावेनेदृशकल्पनाया निरर्थकत्वात् । नह्यभेदेनैवोत्प्रेक्षणमिति वेदेन बोधितम् । यदर्थमयमाग्रहः स्यात् । लक्षणनिर्माणस्य पुरुषाधीनत्वात् । 'लिम्पतीव तमोऽङ्गा-

### मर्मप्रकाशः

प्रागुक्तं तदीयप्रकारं खण्डयति—न चेति । ननु लक्षणानुरोधेन तथोच्यतेऽत आह—लक्षेणेति । नन्वेवमपि लिम्पतीवेत्यादौ नान्यथा निर्वाह इति प्रागुक्तमत आह—लिम्पतीवेति ।

### मधुसूदनी

लक्ष्येषु "अस्यां मुनीनामपि मोहमूहे" इत्यादिषु । धर्मविशेषे शीलनादौ प्रागुक्ते । बाधकस्य प्रमाणस्य अभावेन । ईदृशयाः धर्मविशेषे धर्मविशेषस्याभेदेनोत्प्रेक्षणरूपायाः कल्पनायाः । यदर्थं वेदविहितविधेरनुपालनार्थम् । अयमीदृशकल्पनारूप आग्रहः स्यात् । ननु लक्षणप्रमाणाभ्यां वस्तुसिद्धिरित्युत्प्रेक्षालक्षणस्यानुरोधेन ईदृक् कल्प्यते आगृह्यते चेत्यत आह—लक्षणनिर्माणस्येति ।

### बालक्रीड़ा

सम्वन्ध से उत्प्रेक्षा है । अर्थात् काँटे वाले पेड़ों के द्वारा जो ललाट के चमड़े का स्वभावतः उचड जाना है (जो काटे में फँसेगा वह स्वतः फट जायगा) वह ललाट में विधिकर लिखे को देखने के लिए उचेडना है । इस तरह सभी जगह विपय में विषयी की अभेद सम्वन्ध से उत्प्रेक्षा होती है । यह यह दर्शन है सिद्धान्त है ।

इस दर्शन के विषय में विचार करते हैं कि सभी स्थलों में उदाहरणों में अभेद सम्वन्ध से ही उत्प्रेक्षा होती है इस नियम में कोई प्रमाण नहीं है अतः अप्पय्य दीक्षितजी ने जो लिखा है कि "सर्वत्र तादात्म्योत्प्रेक्षणपक्ष एवाश्रितः" सभी स्थलों में तादात्म्योत्प्रेण पक्ष का ही आश्रयण किया है । वह ठीक नहीं है क्योंकि लक्ष्यों उदाहरणों "अस्यां मुनीनाम्" इत्यादि में भेद सम्वन्ध से भी उत्प्रेक्षा देखी गई है । यह आप कह नहीं सकते कि "अस्यां मुनीनाम्" इत्यादि में मुनियों के शीलन, आह्लाद एव आश्रयण रूप धर्म विशेष में मोह धर्म की अभेद सम्वन्ध से उत्प्रेक्षा है (यहाँ यह वतलाना अप्रासंगिक नहीं होगा कि जव शीलन आदि संभावना के विषय शब्दोपात्त है तब "उत्प्रेक्षा साध्यवसाना है अतः संभावना के विषय धर्मविशेष का अनुपादान संगत है" यह पण्डितराज का तदनुयायी विश्वेश्वरजी का लेख अज्ञान विजृम्भित है) भेद से उत्प्रेक्षा करने में कोई वाधक हो तभी आप अभेद से उत्प्रेक्षा करने के लिए कह सकते हैं । जब भेद से उत्प्रेक्षा करने में कोई बाधक नहीं है तव ऐसी कल्पना निरर्थक है । और अभेद से ही उत्प्रेक्षा होती है यह वेद से विहित भी तो नहीं है । यदि अभेद से उत्प्रेक्षा करना वेद बोधित होता तो प्रत्यवायपरिहार के लिये अभेद के विषय में आग्रह भी किया जाता । इसके सिवाय अगर आप कहें कि हम क्या करें उत्प्रेक्षा का लक्षण ही अभेद से उत्प्रेक्षा करने का संकेत करता है तव भी ठीक नहीं है ।

नि' इत्यत्रापि लेपनादिकर्तृत्वं तम आदिषु विषयेषूत्प्रेक्ष्यत इत्येव युक्तम्। अनुकूलव्यापारात्मकस्य कर्तृत्वस्यैवाख्यातार्थत्वात्। तस्य च प्रथमान्ते विशेष्ये आश्रयतासंसर्गेणान्वयान्न दोषः। 'भावप्रधानमाख्यातम्' इत्यस्य 'भावो व्यापारस्तदर्थकमाख्यातं तिङ्' इत्यर्थकरणान्न विरोधः। 'सत्त्वप्रधाना-

## मर्मप्रकाशः

फलमात्रस्य धात्वर्थत्वादाह—अनुकूलव्यापारेति। यत इत्यादिः। अन्यथा कृतीत्येवोक्तं स्यात्। एवेन धर्मिव्यवच्छेदः। आख्यातेति। तिङित्यर्थः। प्रथमान्ते तदर्थे। नन्वेवं यास्कोक्तिविरोधोऽत आह–भावेति। नाम्नः प्रातिपदिकस्य द्रव्यमात्रार्थत्वेन तत्प्राधान्यमुक्तम्। अर्थद्वयसत्त्व एव तथोक्तेरौचित्यादतस्तत्रार्थान्तरमवश्यकमित्याशयेनाह—सत्त्वेति। ननु धातो-

## मधुसूदनी

अनुकूलेति। फलानुकूलव्यापारात्मकस्यैव कर्त्तृत्वस्य न तु कृतेः। कर्तृत्वं कृतिरिति नैयायिकाः प्राहुस्तन्नेति भावः। आख्यातार्थत्वात् तिङ्वाच्यत्वात्। तस्य आख्यातार्थस्य कर्त्तृत्वस्य। प्रथमान्तार्थे विशेष्ये कर्त्तरि। ननु फलव्यापारयोर्धातु-रित्युक्तेः फलव्यापारौ धात्वर्थः। तत्र भावः प्रधानम् विशेष्यम्। भावप्रधानमाख्यात-मित्युक्तेः। किन्तु भवता विरुद्धमुच्यते प्रथमान्तार्थो विशेष्यम्। तत्र भावो विशेषण-माश्रयतासंसर्गेण अन्वयस्य प्रतिपादनात्। इति चेदाह—भावप्रधानमिति। अत्र प्रधानशब्दोऽर्थवाचकः। एवं च भावार्थकं तिङित्यर्थकरणान्न विरोधः। ननु

## बालक्रीड़ा

क्योंकि लक्षण का निर्माण तो पुरुष के ग्रन्थकार के अधीन है। इसलिए "लिम्पतीव तमोऽङ्गानि" यहाँ पर तम आदि विषयों में लेपनादि क्रिया कर्त्तृत्व की उत्प्रेक्षा है। यही ठीक है। भित्तिप्रभृतिषु मालिन्यापाकरण सौन्दर्याधानानुकूल लेपनरूपव्यापारात्मकस्यैव कर्त्तृत्वस्य न तु कर्तुः कृतेर्वाख्यातस्य लिम्पतीत्यादेरर्थत्वात्। दिवाल वगैरह के मालिन्य को दूर करने और उसमें सौन्दर्य के आधान करने के अनूकूल लेपन व्यापार रूप कर्त्तृत्व ही न कि कृति या कर्ता आख्यात लिम्पति वगैरह का अर्थ है। उस कर्त्तृत्व का प्रथमान्तार्थ विशेष्य में आश्रयत्व सम्बन्ध से लेपनाश्रय तम है ऐसा अन्वय करने पर कोई दोष नहीं है।

प्रश्न—पहले आपने कहा था कि आख्यात में भाव व्यापार प्रधान होता है और कर्त्ता उसमें विशेषण होता है। अब कहते हैं कि प्रथमान्तार्थं कर्त्ता विशेष्य है प्रधान है उसमें व्यापार विशेषण है। उत्तर। भावप्रधानमाख्यातम्" का अर्थ "भाव माने व्यापार, वह व्यापार है प्रधान माने अर्थ जिसका ऐसा आख्यात तिङ है" ऐसा अर्थं कर देने से कोई विरोध नहीं है। प्रश्न—ऐसा अर्थं करने में प्रमाण क्या है। उत्तर। "सत्वप्रधानानि नामानि" इस उत्तर वाक्यगत प्रधानशब्द का अभिधेय परत्व अर्थवाचकत्व होना ही प्रमाण है। यहाँ का आशय यह है कि नाम यह प्रातिपदिक की संज्ञा है। और प्रातिपदिक के जाति, द्रव्य (व्यक्ति) लिङ्ग, संख्या एवं कारक ये पाँच अर्थं हैं। उनमें सत्व माने द्रव्य (व्यक्ति) ही

नि नामानि' इत्युत्तरवाक्यगतस्य प्रधानशब्दस्याभिधेयपरत्वात्। फलमात्रार्थस्यापि धातोराख्यातार्थव्यापारव्यधिकरणत्वसमानाधिकरणत्वाभ्यामर्थग-

### मर्मप्रकाशः

व्यापारावाचकत्वे सकर्मकत्वविभागोच्छेदापत्तिरत आह फलेति। व्यापारस्योभयत्रान्वयः। अर्थेति। चस्त्वर्थे। अन्वय इति। आश्रयतासंसर्गेति भावः। 'कर्तरि कृत्' इत्यतः कर्तरीति 'लः कर्मणि–' इत्यत्रानुवर्तते तत्र तस्यानुकूलव्यापारार्थत्वे कृद्विधायकेऽपि तथैव स्यात्। पाचको

### मधुसूदनी

प्रधानशब्दोऽर्थवाचक इत्यत्र किं साधकमित्याह—सत्वेत्युत्तरवाक्येति च। अयं भावः

एकं द्विकं त्रिकं चाथ चतुष्कं पंचकं तथा
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः। इति।

नामेति प्रातिपादिकस्य संज्ञा प्राचाम्। सीदतो लिंगसंख्ये यत्र तत्सत्वं द्रव्यम्। तथा द्रव्यं प्रातिपदिकार्थ इति मते सत्वप्रधानानि नामानीत्यस्य विवरणं सत्वार्थकानि नामानि इति प्रधानपदस्य अभिधेयपरत्वं साधकम्।

ननु फलव्यापारयोर्धातुरिति मतं, परं "भावार्थकमाख्यात"मिति भवदुक्तेः व्यापारस्तिङोऽर्थः। फलमात्रं धातोरर्थः इति स्थिते धात्वर्थ फलसमानाधिकरणव्यापारवाचकत्वं धातोरकर्मकत्वम्। तथा धात्वर्थफलव्यधिकरणवाचकत्वं धातोः सकर्मकत्वमिति व्यवस्था न स्यात्। तत्राह फलमात्रार्थस्यापीति। धातोरर्थे फले आख्यातार्थव्यापारव्यधिकरणत्वं सकर्मकत्वम्। तथा आख्यातार्थव्यापारसमानाधिकरणत्वमकर्मकत्वम्।

यथोक्तम्—फलव्यापारयोरेकनिष्ठतायामकर्मकः।
धातुस्तयोर्धर्म्मिभेदे सकर्मक उदाहृतः। वै० भू० धा० नि० १३।

### बालक्रीड़ा

प्रातिपादिक में प्रधान होता है। अवशिष्ट चारों उसमें विशेषण होते हैं। इसी तरह आख्यात के भी क्रियात्व, क्रिया, काल, कारक एवं संख्या ये पाँच अर्थ हैं। उनमें भाव माने क्रिया ही आख्यात में प्रधान होती है। बाकी चारों उसमें विशेषण होते हैं यह निरुक्तकार एवं तदनुयायी वैयाकरणों का सिद्धान्त है। शास्त्र में उक्त पाँच पक्षों का निरूपण किया है। जिनके मत में सत्व माने द्रव्य ही प्रातिपादिकार्थ है। उस मत में सत्वार्थक नाम है ऐसा अर्थ करना सिद्धान्ततः प्राप्त है। इसी तरह जिनके मत में क्रिया ही आख्यात है उनके मत में भावार्थक आख्यात है। इसी बात को पण्डितराज कहते हैं कि इन वाक्यों के प्रधान शब्द का वाच्य है अर्थ। अतः भावार्थक आख्यात है और सत्त्वार्थक नाम है। ऐसा इन वाक्यों का अर्थ होने से कोई दोष नहीं है।

प्रश्न=भावार्थक आख्यात है ऐसा अर्थ मानने में एक दोष की प्रसक्ति हो सकती है। फल और व्यापार धातु के अर्थ माने जाते हैं किन्तु आपकी व्याख्या के अनुसार व्यापार तिङ

ताभ्यां सकर्मकाकर्मकत्वव्यवहारः । नामार्थयोर्भेदेनान्वयाभावाच्च भावकृदर्थ-

## मधुसूदनी

ननु "भावे" इति सूत्रविहितस्य घञोऽर्थः व्यापारः। लिम्पतीत्याख्याताऽर्थोऽपि भावः। एवं च यथा लिम्पतीत्याख्यातार्थस्य व्यापारस्य प्रथमान्तार्थे तमसि आश्रयतासंसर्गेण अन्वयो भवति तथैव तमःकर्तृको लेप इत्यत्रत्यघञर्थव्यापारस्यापि तमसि उक्तेन संसर्गेण अन्वयो भवतु व्यापारार्थकत्वस्य समानत्वात्। तत्राह= नामार्थयोरिति। भावकृद्घञर्थव्यापारस्य कृदभिहितो भावो द्रव्यवत् प्रकाशते इति न्यायादातिदेशिकद्रव्यतया नामार्थत्वं, तमसश्च नामार्थत्वं स्वभावतः। ततश्च नामार्थयोस्तमःकर्तृकलेपपदार्थयोर्भेदेन अन्वयस्य व्युत्पत्तिविरुद्धत्वेन अभावान्न भावकृदर्थव्यापारस्य नामार्थे आश्रयता संसर्गेण अन्वयः।

## बालक्रीड़ा

का अर्थ हो गया अब धातु का अर्थ केवल फल रह गया। किन्तु ऐसी दशा में धातु के सकर्मकत्व और अकर्मकत्व की व्यवस्था यथावस्थ नहीं रहेगी। क्योंकि फलव्यापारयोर्धातुः के अनुसार उभयाधीन ही यह व्यवस्था है। जैसे धात्वर्थ फल समानाधिकरण व्यापार वाचकत्व ही धातु का अकर्मकत्व है एवं धात्वर्थ फल व्यधिकरण व्यापार वाचकत्व ही सकर्मकत्व है। उत्तर। धातु के केवल फलार्थक मानने पर भी उक्त व्यवस्था ही वनी रहेगी कोई गड़बड़ी नहीं होगी। जहाँ धातु के अर्थ फल में और आख्यातार्थ व्यापार में व्यधिकरणत्व रहेगा वहाँ धातु सकर्मक कहलायेगा और जहाँ धातु के अर्थ फल में और आख्यातार्थ व्यापार में समानाधिकरणत्व रहेगा वहाँ धातु अकर्मक कहलायेगा। अर्थात् धातु का सकर्मकत्व और अकर्मकत्व व्यवहार उक्तरीति से ही होगा। जैसा कि कहा है

फलव्यापारयोरेकनिष्ठतायामकर्मकः।
धातुस्तयोर्धर्म्मिभेदे सकर्मक उदाहृतः।
वै० भू० सार धात्वर्थ निर्णय।१२

प्रश्न=जैसे "तमो लिम्पति" इस आख्यात स्थल में आख्यातर्थफलानुकूल व्यापारात्मक कर्त्तृत्व का प्रथमान्तर्थ विशेष्यभूत तम में आश्रयता संसर्ग से अन्वय होता है अर्थात् भेद सम्बन्ध से अन्वय करने में कोई दोष नहीं है। उसी प्रकार "भाव में विहित कृत् के अर्थ व्यापार का विशेष्यभूत तम नामार्थ में आश्रयता संसर्ग अर्थात् भेद सम्बन्ध से अन्वय होने लगेगा कौन निवारक होगा। क्योंकि आख्यातार्थ एवं भावकृदर्थ दोनों व्यापार स्वरूप है। उत्तर। तमः स्वभावतः नामार्थ है। और कृदभिहितो भावो द्रव्यवत् प्रकाशते के अतिदेश से भावविहितकृत् लिंग एवं संख्या से समन्वित होकर सत्व हुआ है।

अतः ऐसी स्थिति में भाव कृत् का अर्थ व्यापार पिहित हो गया। और वे दोनों नामार्थ रह गये। किन्तु नामार्थों का भेदेन अन्वय अव्युत्पन्न है आकांक्षादि रूप व्युत्पत्ति के विरुद्ध है। अतः भावकृदर्थ व्यपार का आश्रयता संसर्ग से नामार्थ में अन्वय नहीं हुआ। इस अन्वय नहीं होने के कारण ही कर्तृत्व विशिष्ट कर्त्ता में शक्ति के बोधक कर्तरि कृत्

व्यापारस्य न नामार्थेऽन्वयः। अत एव च 'कर्तरि कृत्' इत्यनेन विशिष्टश-

## मर्मप्रकाशः

देवदत्त इत्यादौ सामानाधिकरण्यनिर्वाहस्तु लक्षणयेत्याशङ्कापनोदायाह—अत एवेति। तथा सति भावे इति पदं घञादि विधायकस्थं व्यर्थं स्यात्। अधिकारसूत्रस्थकर्तरीत्यनेनैव सिद्धेरिति भावः।

## मधुसूदनी

अतएव तमःकर्तृको लेप इत्यत्रत्य भावकृद्घञर्थव्यापारस्य नामार्थतया तमसि नामार्थे भेदेन आश्रयताख्यसंसर्गेण अन्वयाभावादेव। "व्यापारविशिष्टः कर्त्ता" इत्यस्मिन्नर्थे शक्तिबोधकेन "कर्त्तरि कृदिति" सूत्रेण घञादिषु विशेषणे व्यापारे शक्तिबोधकस्य "भावे" इति सूत्रस्य गतार्थत्वं न। इहेदं रहस्यम्। पाणिन्युपज्ञाष्टाध्यीयतृतीयाध्यायीयं चतुर्थपादीयं "कर्त्तरि कृत्" इति सूत्रं सप्तषष्टितमं, "लः कर्मणि च" इत्यपि तत्रत्यमेकोनसप्ततितमं सूत्रम्। तत्रार्थानुवृत्ति पक्षे "लः कर्मणि च" इत्यत्र चकारेण "कर्त्तरि कृत्" इत्यतः "कर्त्तरि" इत्यस्याकर्षणं कृतम्। तत्र प्रश्नो जागर्त्ति। "लः कर्मणि च" इत्यत्रत्यः चानुकृष्टः कर्त्तरि पदार्थः "कर्त्तरि कृत्" इत्यत्रत्य आकर्षणीयः कर्त्तरिपदार्थश्चोभौ समानौ वा विभिन्नौ वेति एकः। समानावपि कौ काभ्यामिति द्वितीयः। तदपि कस्य हेतोः; विभिन्नौ वा कुतो नेति तृतीयः प्रश्नः। यदि आकर्षणीयकर्त्तरिपदार्थसमानः आकृष्टकर्त्तरिपदार्थः। तर्हि "ल कर्मणि च" इत्यत्र चानुकृष्टकर्त्तरि पदार्थः कर्तृत्वरूप व्यापार विशिष्टकर्तृरूपः। यतो हि "वोढारमश्वमानय" "पचन्तं देवदत्तं पश्य" इत्यादिकृत्प्रत्ययस्थलेषु नामार्थयोरभेद संसर्गरूपव्युत्पत्तेरनुरोधेन कृत्प्रत्ययानां कर्त्तरि शक्तिः स्वीकृता। अस्यां स्थितौ

## बालक्रीड़ा

इस सूत्र से घञादि की विशेषण में शक्ति का बोधक भाव ग्रहण माने भावे सूत्र गतार्थ नहीं हुआ। यहाँ का भाव यह है कि "कर्त्तरि कृत्" यह तृतीय अध्याय के चतुर्थ पाद का ६७वाँ सूत्र है और "लः कर्मणि च" यह भी वहीं का ६९वां सूत्र है। यहाँ पर लः कर्मणि च के चकार के द्वारा कर्तरि कृत् से कर्त्ता का आकर्षण किया गया है। अब प्रश्न यहाँ यह उठता है कि "लः कर्मणि च" का चानुकृष्ट कर्त्तरि पदार्थ और "कर्त्तरि कृत्" का आकर्षणीय कर्त्तरि पदार्थ समान है। या विभिन्न है। यदि समान माने तो किसके समान किसको मानें। यदि आकर्षणीय कर्त्तरि पदार्थ के समान आकृष्ट कर्त्तरि पदार्थ को माने तो लः कर्मणि च में भी आकृष्ट कर्त्तरि पदार्थ कर्त्तृत्व रूप व्यापार विशिष्ट कर्त्ता रूप मानना पड़ेगा। क्योंकि वोढारमश्वमानय पचन्तं देवदत्तं पश्य इत्यादि कृत्प्रत्यय स्थल में नामार्थो में अभेद संसर्ग रूप व्युत्पत्ति के अनुरोध से कृत्प्रत्ययों की कर्त्ता में शक्ति मानी गई है। ऐसी अवस्था में "अनुकूल व्यापारात्मक कर्तृत्व ही लः कर्मणि च से विहित ल स्थानीय आदेश आख्यात का अर्थ है" यह कथन गड़बड़ाता है। और यदि आकृष्ट कर्त्तरि पदार्थ के समान आकर्षणीय कर्त्तरि पदार्थ को मानेंगे तो कर्त्तरि कृत् के कर्त्तरि पद की कर्त्ता के विशेषण व्यापार में शक्ति

क्तिबोधकेन घञादिषु भावग्रहणस्य विशेषणशक्तिबोधकस्य न गतार्थत्वम्।

## मधुसूदनी

अनुकूलव्यापारात्मककर्तृत्वं लः कर्मणि चेतिविहितलस्थानीयादेशस्याख्यातस्यार्थ इति कथितिरस्ता भवति। अथ यदि आकृष्टकर्त्तरि पदार्थसमानः आकर्षणीयकर्त्तरिपदार्थः तर्हि कर्त्तरि कृत् इत्यत्र कर्त्तरि पदार्थः कर्तृविशेषण व्यापाररूपः स्वीकरणीयः स्यात्। अस्यामवस्थायां घञादि कृत्प्रत्ययानां भावे विधानं यदा स्वत एव प्राप्तं तदा तेषां भावे व्यापारे विधानार्थं "भावे" इति सूत्रस्य निर्माणं किमर्थं व्यर्थमेव स्यादित्यर्थः। तत्रोत्तरति। नामार्थयोरभेदातिरिक्तसम्बन्धेनान्वयस्य व्युत्पत्तिविरुद्धत्वादभेदेनैवान्वयो व्युत्पत्तिसिद्ध इति नियमस्य सुरक्षा परमावश्यकी। अन्यथा कर्त्तरि कृदित्यत्र कर्त्तरि पदार्थो व्यापारश्चेत् तर्हि "पचन्तं देवदत्तं, पचमानो देवदत्त इति नामार्थेऽपि देवदत्तः पचति तमो लिम्पति इत्याख्यातस्थलवत् कर्त्ता विशेष्यं व्यापारो विशेषणं तथा आश्रयः संसर्ग इत्यस्य स्वीकारापत्तेः। यश्च स्वसिद्धान्तपरसिद्धान्ताभ्यां विरुद्धः। अतः द्वयोः कर्त्तरिपदार्थयोर्विभिन्नत्वमादरणीयम्। ततश्च कर्त्तरि कृदित्यत्र कर्तृपदार्थः व्यापारविशिष्टः कर्त्ता इत्येव। येन घञादिषु भाव ग्रहणार्थं भावे इति सूत्रनिर्माणस्य वैयर्थ्याभावः प्रत्युत साफल्यं नियमस्य रक्षा च।

## बालक्रीड़ा

माननी पड़ेगी। ऐसी अवस्था में कृत् प्रत्ययों का भाव में विधान स्वतः प्राप्त था तब घञादि प्रत्ययों का भाव व्यापार में विधान करने के लिए "भावे इस सूत्र का निर्माण क्यों किया।

उत्तर=नामार्थों का अभेद सम्बन्ध से ही अन्वय होता है भेद सम्बन्ध से नहीं होता है" इस नियम की सुरक्षा परमावश्यक है। अन्यथा कर्त्तरि कृत् में कर्त्तरि पद का व्यापार अर्थं मानेगें तो "पचन्तं देवदत्तं पश्य" यहाँ नामार्थं में और देवदत्तः पचति तमो लिम्पति इत्यादि आख्यात स्थलों के अनुसार कर्त्ता विशेष्य व्यापार विशेषण, तथा आश्रयता संसर्ग मानना होगा जो कि स्वसिद्धान्त एवं पर सिद्धान्त सभी सिद्धान्तों से विरुद्ध है। अतः दोनों में विभिन्नता माननी ही सिद्धान्ततः प्राप्त है। जिसके फलस्वरूप घञादि में भावग्रहण जो गतार्थं होकर व्यर्थं हो रहा था वह भी नहीं हुआ। अर्थात् सफल हो गया और नियम की सुरक्षा भी हो गई। अतः कर्त्तरि कृत् इसमें आकर्षणीय कर्तरिपदार्थ; व्यापार विशिष्ट कर्त्ता ही है। इस पर प्रश्न उठता है कि यदि आर्षणीय कर्तरिपदार्थ व्यापार विशिष्ट कर्त्ता रूप है तब लः कर्मणि में भी चानुकृष्ट कर्त्तरि पदार्थ भी व्यापार विशिष्ट कर्त्ता ही हो। इस पर पक्षान्तर का उन्यास करते हुए कहते हैं कि अर्थानुवृत्ति पक्ष में उक्त विप्रतिपत्ति या विचिकित्सा होती है अतः शब्दानुवृत्ति पक्ष का आश्रय करना उचित होगा। ऐसी अवस्था में कर्त्तरि कृत् सूत्र से केवल कर्त्तरि पद का ही आकर्षण "लः कर्मणि च" के चकार से हुआ किन्तु अर्थ उस आकृष्ट कर्त्तरि पद का स्वतन्त्र होगा। फलतः कर्त्तरि कृत् में कर्तरि ग्रहण को धर्मिबोधक मानने पर और लः कर्मणि च में धर्मबोधक मानने में कोई दोष नहीं है। कहीं धर्मिपरक और कहीं धर्मपरक मानने के झगड़ों से बचने के लिए तीसरा पक्ष

शब्दानुवृत्तिपक्षस्वीकाराच्च 'कर्तरि कृत्' इत्यत्र धर्मिपरस्यापि कर्तृग्रहणस्य 'लः कर्मणि—' इत्यत्र धर्मपरतायामपि न दोषः। यद्वा आस्तां फलव्यापारौ धातोराश्रयश्च तिङोऽर्थः। परं तु देवदत्तः पचमान इत्यादाविव देवदत्तः पचतीत्यादिष्वपि प्रथमान्तार्थ एव तिङर्थस्याभेदेन विशेषणत्वं युक्तम्,

### मर्मप्रकाशः

नन्वेवं लकारविधायकेऽपि तदर्थकत्वापत्तिरत आह——शब्दानुवृत्तीति। चस्त्वर्थे। शब्दाधिकारस्वीकारजगौरवादाह—यद्वेति। तिङर्थस्य कर्तुः। अभेदेनेति।

### मधुसूदनी

नन्वेवं "लः कर्मणि च" इत्यत्रापि कर्त्तरिपदार्थोऽपि कर्त्तैव नतु कर्तृत्व मित्याह—शब्दानुवृत्तीति। अर्थो नानुवर्त्यते केवलः शब्द एव तथेति न दोषः। ननु कुत्रचिद् धर्मपरत्वं क्वचिद् धर्मिपरत्वमिति वैविध्यपरिहाराय तृतीयं पक्षमुपन्यस्यति=यद्वेति। तिङर्थस्य कर्त्तुः। अभेदेनेति। तिबर्थः सामान्यकर्त्ता, यज्ञदत्तो-देवदत्त इति विशेषकर्त्ता तयोश्च सामान्यविशेषयोरभेदान्वयस्वीकारात्तिङर्थस्य प्रथमान्तार्थेऽभेदेन विशेषणत्वमुक्तम्। ननु धात्वर्थभावनायां भेदेनान्वये का

### बालक्रीड़ा

उठाते हैं कि आख्यात का अर्थ व्यापार है और धातु का अर्थ केवल फल है इसके बजाय फल और व्यापार दोनों धातु के अर्थ हैं तथा आश्रय कर्त्ता तिङ का अर्थ है। जैसा कि कहा है "फल व्यापारयोर्धातुराश्रये तु तिङःस्मृताः"। देवदत्तः पचमानः," वोढा वायुः। इत्यादि की तरह "देवदत्तः पचति" तमो लिम्पतिः" इत्यादि में भी तिङर्थ सामान्य कर्त्ता का प्रथमान्तार्थ विशेष कर्त्ता तम मे सामान्य विशेष्ययोरभेदान्वयः के अनुसार अभेदेन विशेषण होना युक्त है। किन्तु भावना रूप धात्वर्थ में तिङ प्रत्ययार्थ कर्त्ता की भेदेन विशेषणता उचित नहीं है। प्रत्ययार्थ प्रकृत्यर्थ की अपेक्षा प्रधान ही होता है किन्तु यदि धातु रूप प्रकृत्यर्थ भावना में तिङप्रत्ययार्थ कर्त्ता को भेदेन विशेषण बनायेंगे; तब सभी जनों के अनुभव से सिद्ध उद्देश्य विधेय भाव की संगति कैसे होगी प्रत्युत उस भाव के भंग की आपत्ति लग जायगी। क्योंकि (सामान्यानि अन्यथासिद्धेः विशेषं गमयन्ति हि) सामान्य विशेष के बिना प्रकृतोपयोगी नहीं होने से अन्यथा सिद्ध होता है अतः सामान्य विशेष का उपस्थापक हो जाता है इस न्याय के अनुसार तिङर्थ सामान्य कर्त्ता को धातुरूप प्रकृत्यर्थ भावना में विशेषण बनाने का मतलब हुआ कि प्रथमान्तार्थ विशेष कर्त्ता भी उसमें विशेषण हो गया। क्योंकि वह तिङर्थ विशेष कर्त्ता के रूप में उपस्थित हो गया है ऐसी स्थिति में तमो लिम्पति में तम की देवदत्तो गच्छति में देवदत्त की उद्देश्यता ही गायब हो गई है। क्योंकि एक जगह अन्वित होने से निराकांक्ष हुआ प्रथमान्तार्थ पुनः उद्देश्य तत्स्वरूप प्रथम नहीं बन सकेगा। फलतः उक्त स्थलों में उद्देश्य विधेय भाव भग्न ही हो जायगा। किन्तु यदि तिङप्रत्ययार्थ कर्ता को प्रधान मानने से धातु रूप प्रकृत्यर्थ भावना में भेदेन विशेषण न होने की गति याने

न तु भेदेन धात्वर्थभावनायां, सर्वजनसिद्धस्योद्देश्यविधेयभावस्य भङ्गापत्तेः। सत्यां हि गतौ 'प्रत्ययार्थे प्रकृत्यर्थो विशेषणम्' इत्यस्योत्सर्गस्याप्यनुग्रह एव न्याय्यः। 'भावप्रधानमाख्यातम्' इत्यस्य 'भावनार्थको धातुः' इत्यर्थकरणान्न विरोधः। न च वैयाकरणमतविरोधो दूषणमिति वाच्यम्। स्वतन्त्रत्वेनालंकारिकतन्त्रस्य तद्विरोधस्यादूषणत्वात्। प्रपञ्चयिष्यते चैतदधिकमुपरिष्टादिति प्रकृतमनुसरामः।

## मर्मप्रकाशः

सामान्यविशेषयोरभेदान्वयादिति भावः, भङ्गापत्तेरिति। एकपदोपस्थाप्ययोस्तत्त्वे एकप्रसरताभङ्गापत्तेरिति भावः। युक्त्यन्तरमाह—सत्यां हीति। विशेषणमिति। प्रकृतिप्रत्ययौ सहार्थं ब्रूतः। तयोः प्रत्ययार्थस्य प्राधान्यमिति व्युत्पत्तेरिति भावः। प्राग्वदत्रापि मते निरुक्तविरोधं प्रकारान्तरेण परिहरति—भावेति। पूर्वमाख्यातपदेन तिङ् गृहीतः, इदानीं धातुरिति विशेषः। ननु वैयाकरणमतरीत्या तथा प्रागुक्तमिति तद्विरोधोऽत आह—न चेति। पूर्वमते-

## मधुसूदनी

हानिरित्याह=सर्वजनेति। उद्देश्यविधेयभावो हि द्वाभ्यां पदाभ्यामुपस्थितयोरर्थयोर्भवति यथा देवदत्तः पचतीत्यादौ देवदत्तं कर्त्तारमुद्दिश्य विक्लित्यनुकूलव्यापाराश्रयत्वं व्यापारो विधेयम्। एवं च कर्त्तुरेवोद्देश्यतया प्राधान्यं न व्यापारस्य, तस्य विधेयत्वात्। धात्वर्थ भावनायां तिङर्थस्य कर्त्तुरन्वये तु लिम्पति इति एकेनैव पदेन न तु द्वाभ्यां पदाभ्यां तिवर्थस्य कर्त्तुः लिपिधात्वर्थभावनायाश्चोपस्थितौ कथमुद्देश्यविधेयभावसंगतिः। अर्थात् भंग एव तस्य।

## बालक्रीड़ा

समन्वय (सत्यां) होने पर तो (प्रकृति प्रत्ययौ सह अर्थं ब्रूतः। तत्र प्रत्ययार्थः प्रधानम् प्रत्ययार्थे प्रकृत्यर्थो विशेषणम्) प्रकृति और प्रत्यय साथ-साथ अर्थ को कहते हैं उनमें प्रत्यय का अर्थ विशेष्य होता है और प्रकृति का अर्थ प्रत्यय के अर्थ में विशेषण है इस उत्सर्ग याने स्वभाव के ऊपर भी न्याय्य उचित अनुग्रह होगा। आख्यात में भाव प्रधान होता है इस वाक्य का भी भावनार्थक धातु है ऐसा अर्थ कर देने पर कोई विरोध नहीं होगा।

आख्यातमाख्यातेन क्रियासातत्ये इत्यादि सूत्र के उदाहरणों अश्नीतपिबता उद्धरीत्सृजा में आख्यात पद का अर्थ है तिङन्त किन्तु पण्डितराजने "भावो व्यापारस्तदर्थकमाख्यातं तिङ" इसमें इसका अर्थ तिङ लिखा है। और "भावप्रधानमाख्यातम्" इत्यस्य भावनार्थ को धातुरित्यर्थकरणान्न विरोधः में इसका अर्थ धातु लिखा है इस तरह जहां जैसा चाहा वहां वैसा लिखा है।

यह भी कहना ठीक नहीं है कि वैयाकरण के मत का विरोध ही दोष है। क्योंकि आलंकारिक तंत्र स्वतन्त्र है अतः उनका विरोध दोष नहीं है। इन सब से भी अधिक इसका प्रपञ्च आगे करेंगे। अतः अब प्रकृत का अनुसरण करते हैं।

## एवं च 'लिम्पतीव—' इत्यादौ भेदेनाभेदेन वा तिङर्थस्यैव प्रथमा-

### बालक्रीड़ा

एवं उक्त व्याख्यान के अनुसार "लिम्पतीव" इत्यादि स्थलों में प्रथमान्तार्थ कर्त्ता धर्मी तम में आश्रयत्व सम्बन्ध से अनुकूलव्यापारात्मक कर्त्तृत्व रूप तिङर्थ अर्थात् लेपन क्रिया कर्त्तृत्व का उत्प्रेक्षण है ।" इस प्रकार तम में लेपन की (धर्मी में धर्म की) भेदेन उत्प्रेक्षा है। इस मत का आधार है "भावप्रधानमाख्यातम्" की "भाव माने व्यापार। वह व्यापार अर्थ जिसका ऐसा आख्यात तिङ है', यह व्याख्या। यह भेदेन उत्प्रेक्षा के विषय में एक ही मत है। यह मत अलंकार सर्वस्वकार का है। इन्होंने तमोव्यापन को ऊपर दिखलाई हुई उत्प्रेक्षा में निमित्त भूत धर्म को माना है। और लिखा है कि यहां यह भी आवश्यक है कि व्यापनरूप धर्म विषय तम एवं विषयी लेपन में समानभाव से रहना चाहिए किन्तु वह है नहीं। क्योंकि तमोगत व्यापन का अर्थ है ऊँचे नीचे, आगे पीछे अगल बगल एवं काले, पीले, नीले रूप से प्रतीत होनेवाले पदार्थों की विषमता को दृष्टि प्रतिरोध के द्वारा समान भाव में परिवर्तित करते हुए फैलना। और लेपन गत व्यापन का अर्थ है नभः प्रभृतिभूपर्यन्त सकल पदार्थों को कालिमा से सान्द्रमलिनीकरण। इस तरह आश्रय भेद से ये भिन्न २ धर्म है इसके लिए इन पृथक् भूत धर्मों में अध्यवसाय के द्वारा एकता करना। इसीलिए उत्प्रेक्षा का लक्षण है कि अध्यवसाये सति व्यापारप्राधान्ये। निमितभूत धर्म में अध्यवसाय के होने पर व्यापार की प्रधानता में उत्प्रेक्षा होती है। यह एक मत है।

दूसरा मत है प्रथमान्तार्थ तम जड़ में तिङर्थ कर्त्ता की उत्प्रेक्षा है। जो तम जड़ होने से लेपन का कर्त्ता नहीं हो सकता है वह तम मानों लेपन कर रहा है। यहां अभेदेन धर्मी में धर्मी की उत्प्रेक्षा है अर्थात् विशेष कर्त्ता प्रथमान्तार्थ तम में सामान्य कर्त्ता तिङर्थ लेपन कर्त्ता की सामान्य और विशेष का अभेद सम्बन्ध से अन्वय होता है इस नियम के अनुसार अभेदेन उत्प्रेक्षा है। इस मत का आधार है "आश्रये तु तिङ : स्मृताः" तिङ का अर्थ है व्यापार का आश्रय कर्त्ता। यह किस आचार्य का मत है कहा नहीं जा सकता है। क्योंकि साहित्यदर्पणकार प्रभृति ने किसी आचार्य का नाम निर्देश किये विना "केचित्तु" से इस मत का उल्लेख मात्र किया है।

कुवलयानन्द में दीक्षित जी ने दण्डी की दुहाई देते हुए इस मत का खण्डन किया है।

तृतीय मत है व्यापन क्रिया में लेपन क्रिया की अर्थात् धर्म में धर्म की अभेदेन उत्प्रेक्षा। इस मत का आधार है "भावप्रधानमाख्यातम्" भावनार्थक अर्थात् व्यापार अर्थवाला आख्यात माने धातु है, यह व्याख्या। इस मत को मम्मटादि सभी आचार्यों ने सिद्धान्तभूत माना है। पण्डितराजने उक्त दोनों मतों का समर्थन करके इस तृतीय मत में उद्देश्य के उपादान के अभाव में विधेयता के विषय में अलंकारसर्वस्वकार के अनुसार अनुपपत्ति दिखलाई है। इसमें अनुपपत्ति के तीन आकार है। एक है अलंकारसर्वस्वकार के अनुसार उत्प्रेक्षा के विषय का अनुपादान उचित नहीं है क्योंकि उत्प्रेक्ष्य पदार्थ का आधार भित्ति प्रस्तुत वर्ण्य पदार्थ होता है अतः उसको अभिधा से कहना चाहिए। दूसरा है लिम्पति आख्यात का

न्तार्थ एवोत्प्रेक्षणम्। न तु धात्वर्थस्य स्वनिगीर्णे व्यापनादौ। सर्वजन-सिद्धाया इवार्थस्य विधेयताया अनुपपत्तेः। तमःकर्तृकं लेपनमिवेत्यस्मादपि उद्देश्यबोधकशून्यवाक्यादुत्प्रेक्षाप्रतीत्यापत्तेश्च। यदि च विषयिणा लेपना-

## मर्मप्रकाशः

नाह भेदेनेति। द्वितीयमतेनाह— न त्विति। इवार्थस्य विधेयताया इति। विषयनिष्ठोद्देश्यतानिरूपितमिवार्थसंभावनाविषयिणो लेपनादेः प्रतीयमानं यद्विधेयत्वं तस्य भङ्गापत्तेरित्यर्थः। विषयस्य विषयिवाचकेन तव मते निगीर्णत्वादिति भावः। ननु निगीर्णमेव गृहीत्वा तदभङ्गोऽत आह—तम इति। अनुवादपुरःसरं दोषान्तरमाह-- यदि चेति। विषयीति।

## मधुसूदनी

"स्वनिर्गीर्णे" इति। स्वेन विषयिणा लेपनेन निर्गीर्णे विषये व्यापने। इवार्थस्य लक्षणया इवार्थसंभावनाविषयिणो लेपनस्य। प्राप्ताया विधेयताया पूर्वमुद्देश्यवचनाभावे किमुद्दिश्य विधेयत्वं स्यादित्यनुपपत्तिः। उद्देश्य बोधक पदेन व्यापनपदेन शून्याद् तमः कर्तृको लेप इति वाक्यात्। अत्रायं पाठः यदि च विषयिलेपनादिना विषयव्यापनादेर्निगीर्णत्वादनुपात्तविषयत्वम्। व्यापनविषयसम्बन्धिनो धर्मस्य निमित्ततासम्पत्तये लेपनविषयिसम्बन्धिधर्माभिन्नात्वेन स्वताद्रूप्यसम्पादनादध्यवसानमूलत्वमुत्प्रेक्षायामुच्यते तदा रूपकेऽपितदुच्यताम्। अन्यथापाठस्वीकारे विषयि लेपनं विषयो व्यापनमित्यतः विषयिसम्बन्धिना लेपनादिनेति विषयसम्बन्धिनो व्यापनादेरिति

## बालक्रीड़ा

अभिधया लेपन व्यापार अर्थ और साध्यवसाना लक्षणा से व्यापन व्यापार अर्थ करना। क्योंकि युगपत् वृत्तिद्वय की कार्यकारिता विरुद्ध है। और व्यापन के लिम्पति पद के प्रतिपाद्य नहीं होने से अनेकार्थकत्व के अभाव में शाब्दी व्यंजना का अवसर नहीं है। प्रकरणादिसापेक्ष आर्थी व्यंजना का भी प्रकरणाद्यभाव में असामर्थ्य ही है। तीसरा है "उद्देश्यमनुक्त्वैव न विधेयमुदीरयेत्" "उद्देश्यवचनं पूर्वं विधेयवचनं परम्" इत्यादि न्यायों का विरोध। क्योंकि उद्देश्य व्यापन को यहां कहा नहीं है। उद्देश्य को पहिले कहकर फिर विधेय को कहना चाहिए अन्यथा नहीं कहेंगे तो किमुद्देश्यक विधेय होगा। अर्थात् विधेयता की संगति नहीं होती है। अतः तिङर्थ अनुकूल व्यापारात्मक कर्तृत्व की भेदसम्बन्ध से और तिङर्थ कर्ता सामान्य की ही प्रथमान्तार्थ विशेष कर्ता में ही अभेद सम्बन्ध से उत्प्रेक्षा है। न कि धात्वर्थ लेपन की स्वनिगीर्ण व्यापन में। प्रश्न यदि अनुपात्त निगीर्ण विषय को लेकर ही इवार्थ के विधेयता की उपपत्ति की जाय तो क्या हर्ज है। उत्तर। तब तो तमः कर्तृक लेपन है इस उद्देश्य बोधक पद से शून्य वाक्य से भी उक्त उत्प्रेक्षा की प्रतीति हो जाय। क्यों नहीं होती है।

अन्तः कृत निगीर्ण व्यापन में धात्वर्थ लेपन की उत्प्रेक्षा करने में उद्देश्य के अभाव में इवार्थ के विधेयता की अनुपपत्ति को दिखाकर दूसरे दोष को दिखाते हैं कि अगर विषयि-सम्बन्धि लेपनादि से विषयसम्बन्धि व्यापनादि की निमितत्ता सम्पत्ति के लिए स्वताद्रूप्य

दिना विषयस्य व्यापनादेर्निगीर्णत्वादनुपात्तविषयत्वम्। व्यापनविषयसम्बन्धिनो धर्मस्य निमित्ततासंपत्तये लेपन विषयिसम्बन्धिधर्माभिन्नत्वेन स्व-

## मधुसूदनी

का संगतिः। तथा रूपकेऽपि अनुपात्तविषयत्वमिति पाठेऽपि। अतोऽत्रापि "रूपकेऽपि अध्यवसानमूलत्वमुच्यताम्। इतिपाठः साधीयान्। विषसम्बन्धिना हननेनाध्यवनादित्युक्तेः। निमित्तेति। नभः प्रभृति भूपर्यन्तस्य सकलवस्तुनः सान्द्रं यथा स्यात्तथा कालिम्ना मलिनीकरणत्वं निमित्तत्वं तत्सम्पत्तये अर्थात् सायंसमयोत्तर मन्धकारो व्याप्नोति तद् व्याप्तौ तर्क्यते यत् अन्धकारो विश्वस्योर्ध्वाधस्तिर्यग्भावं साम्यवैषम्यं तिरोदधत् प्रसरति। प्रकृतसम्बन्धी धर्मो हि अध्यवसायवशादप्रकृतधर्माभिन्नः सन्नुत्प्रेक्षानिमित्तं तत एतादृशप्रसरणस्य उक्तनभः प्रभृतीत्यादिधर्माभिन्नत्वेनाध्यवसानादध्यवसानमूलत्वमुच्यते इति। साहजिके शोभायाः सम्बन्धे लगने।

## बालक्रीड़ा

सम्पादन से निगीर्णता है अतः अनुपात्तविषयत्व और अध्यवसान मूलत्व कहते हैं तब रूपक में भी अनुपात्त विषयत्व और अध्यवसान मूलत्व कहिये। क्योंकि खलरूपी विष लोगों को मारता है इत्यादि में खल सम्बन्धी दुःख दानादिका विष सम्बन्धी हनन से अध्यवसान है अतः निमित्तांश में अतिशयोक्ति ही है।

यह अक्षरों का अर्थ केवल हुआ। किन्तु पदार्थों की संगति नहीं हुई। क्योंकि लेपन की व्यापन में उत्प्रेक्षा है तब लेपन विषयी है और व्यापन विषय है। ऐसी स्थिति में विषयि सम्बन्धी लेपन और विषय सम्बन्धी व्यापन यह कौन लेख है। विषयी लेपन का सम्बन्धी खुद लेपन और विषय व्यापन का सम्बन्धी खुद व्यापन कैसे हो सकता है। इनका सम्बन्धी तो कोई दूसरा ही होगा। यदि "उत्प्रेक्षा में ऐसा कहते हैं तब रूपक में भी ऐसा ही कहिये" के समर्थक वाक्य "खल विष लोगों को मारता है" इस में खल सम्बन्धी दुःखदान का विष सम्बन्धी हनन से अध्यवसान है" और समर्थ्य वाक्य लेपन धात्वर्थ का स्वनिगीर्ण व्यापन में उत्प्रेक्षण नही है के देखने से प्रतीत होता है कि लेपन विषयी से व्यापन विषय का निगरण है अतः अनुपात्तविषया और अगर व्यापन रूप विषय के सम्बन्धी जागतिक सकल पदार्थों के ऊर्ध्वाधोभाव तथा साम्यवैषम्य की प्रतीति में अवरोध करते हुए तमः के प्रसरण रूप धर्म की निमित्तता की सम्पत्ति के लिए लेपनरूप विषयी के सम्बन्धी नभः प्रभृति भूपर्यन्त सकलवस्तु सान्द्रमलनीकरण रूपधर्म के द्वारा अध्यवसाय सम्पादन से अध्यवसानमूल उत्प्रेक्षा को कहते हैं तब रूपक में भी कहिये। ऐसा पण्डितराज का लेख है किन्तु लिपिकार की असावधानी या मुद्रण दोष से गड़बड़ सड़बड़ पाठ हो गया है। अतः पाठ ऐसा है यदि च "विषयिलेपनादिना विषय व्यापनादेर्निगीर्णत्वादनुपात्तविषयत्वम्, विषयसम्बन्धिनो धर्मस्य निमित्ततासम्पत्तये विषयिसम्बन्धि धर्माभिन्नत्वेन स्वताद्रूप्य सम्पादननादध्यवसायमूलत्वं चोत्प्रेक्षाया मुच्यते"।

ताद्रूप्यसंपादनादध्यवसानमूलत्वमुत्प्रेक्षायामुच्यते तदा रूपकेऽपि तदुच्यताम् । 'लोकान्हन्ति खलो विषम्' इत्यादौ खलसंबन्धिनो दुःखदानादेर्विषसंबन्धिहननात्मनाध्यवसानात् । तस्मान्निमित्तांशेऽतिशयोक्तिरेव । एवम् 'उन्मेषं यो मम न सहते' इत्यत्र लक्ष्मीरूपे विषये लगनहेतुत्वेन हर्ष उत्प्रेक्ष्यते । तत्र साहजिकसंबन्धे तादात्म्येनाध्यवसितं लगनमेव निमित्तम् । तथा—

## मर्मप्रकाशः

विषयिणा तमःसंबन्धिनेत्यर्थः एवं विषयसंबन्धिन इत्यपि व्याख्येयम् । स्वेति । लेपनेत्यर्थः । रूपकेऽपीति । प्रसिद्धरूपके मुखचन्द्र इत्यादावपीत्यर्थः। विषयानुपादानेनेति भावः । मूलत्वं च । लोकानिति । इत्यादौ तन्मूलत्वं चोच्यतामित्यर्थः । अत्र हेतुमाह—खलेति । उपसंहरति—तस्मादिति । हेतूत्प्रेक्षायाह—एवमिति । तत्र तस्यामुत्प्रेक्षायाम् । संबन्धे शोभासंबन्धे ।

## बालक्रीड़ा

इस के वाद "रूपक में भी अनुपात्त विषयत्व कहिए" यह अंश विचारणीय है क्योंकि उपमेयत्वेन उपस्थित उपमेय में उपमान का तदात्म्य रूपक है । तदनुसार जब यहाँ खलत्वेन उपस्थित खल में विषत्व का आरोप है अध्यवसान का स्वप्न भी नहीं हो सकता है और निगरण का गन्ध भी और घौरे नहीं आ सक्ता है । तव ऐसी हालत में रूपक में भी अनुपात्त विषयत्व और अध्यवसान मूलत्व कहिए" यह कैसे वन सकता है । निमित्तांश में अतिशयोक्ति है तो रहे । प्रकृत उत्प्रेक्षा के निरूपण में अतिशयोक्ति के विधि एवं निषेध का प्रसंग भी तो नहीं है । इसके सिवाय अतिशयोक्त्यनुप्राणित तो सभी अलंकार है । जैसा कि आचार्य भामह का डिण्डिमनाद है कि (कोऽलंकारोऽनया विना) इस अतिशयोक्ति के विना कोई अलंकार ही नहीं है । उत्प्रेक्षा के निमित्तांश प्रयोजकांश में अतिशयोक्ति है इससे और रूपक से क्या सम्बन्ध है । रूपक में तो सारोपा लक्षणा है वहाँ विषय अनिन्हुत है । निर्दिष्ट है । दूसरी वात है कि निमितांश में अतिशयोक्ति कां अध्यवसाय का अंगीकार करके निमित्ती को साध्यवसान कहेंगे तो उपमादि का लक्षण भी अध्यवसान गर्भ होगा । क्योंकि "चन्द्र इव मुखं शोभते" "वागर्थाविव संपृक्तौ पार्वतीपरमेश्वरौ" "हंसीव कीर्तिः शुक्ला" इन उपमाओं के प्रयोजकाँश शोभा, संपर्क एवं शुक्लत्व मे अध्यवसान विना किये साधारणत्व नहीं होगा । क्योंकि चन्द्र शोभा और मुख शोभा और पार्वती परमेश्वर दंपती का सम्पर्क सौहार्द, वागर्थ का सम्पर्क प्रतिपाद्य प्रतिपादक भाव सम्बन्ध तथा हंसी एवं कीर्ति का शुक्लत्व भिन्न है ।

और यहाँ अगर यदि से उपक्रम करते हैं तव तदि से उपसंहार करना चाहिए तदा से नहीं । यदि का प्रतिद्वन्दी तदि है या तर्हि है तदा नहीं । एक बात है । इस प्रकार "उन्मेषं यो मम न सहते" यहाँ पर लक्ष्मीरूप विषय में हर्ष की उत्प्रेक्षा है मानों हर्ष से पद्म-लक्ष्मी नायिका के पैरों में लग गयी । लक्ष्मी पैरों में क्यों लगी इसका हेतु अपने वैरी चन्द्र के पराजय से उत्पन्न लक्ष्मी का हर्ष है । यहाँ नायिका के पैरों की शोभा पद्म के

'सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥'

अत्रापि मौनहेतुत्वेन नूपुरे विश्लेषदुःखमुत्प्रेक्ष्यते । तत्र निश्चलत्व-निमित्तकनिःशब्दत्वाध्यवसितं मौनं निमित्तम् । विश्लेषदुःखसमानाधिकर-

### मर्मप्रकाशः

लगनमेव । हर्षहेतुकं लगनमित्यर्थः । उदाहरणान्तरमाह—तथेति । सैषेति । लङ्कात अयोध्यागमनावसरे सीतां प्रतिश्रीरामचन्द्रोक्तिः । भ्रष्टमिति । पतितमित्यर्थः । तवेति शेषः । मौनं द्विविधम् निश्चलत्वहेतुकं दुःखहेतुकं च तयोरभेदमाह—तत्रेति । निःशब्दत्वाध्यव-सितमिति । निःशब्दत्वे तादात्म्येनाध्यवसिततित्यर्थः । तस्योभयनिष्ठत्वमाह—विश्लेषेति । नन्वाकाङ्क्षादिना तत्रैवान्वयोऽस्तु, अत आह—विषयेति । ननु निगीर्णमादायैव तदत आह—

### मधुसूदनी

सैषेति । एषा पुरतो दृश्यमाना सा स्थली अकृत्रिमा भूमिः यत्र स्थल्यां त्वां विचिन्वता मया उर्व्यां भ्रष्टं पतितमेकं नूपुरं त्वच्चरणाविन्दस्य विश्लेषेण जनिताद् दुःखादिव बद्धमौनमदृश्यत ।

मौनाभिन्नत्वेनाध्यवसितं निश्चलत्वनिमित्तकं निःशब्दत्वं निमित्तम् । मौनं चेतनधर्मः । जड़े नूपुरे तदभावात् मौनाभेदेनाध्यवसायो निःशब्दत्वेऽगीकृतः । अतः निश्चलत्वनिमित्तकनिःशब्दत्वाध्यवसितं मौनमिति पाठोऽसमञ्जसः । यतो हि कमल-मनम्भसि, कमले च कुवलये, तानि च कनकलतिकायामित्यत्र; वापी कापि स्फुरति गगने इत्यादौ गौरयमित्यत्र च सर्वत्र उपात्तेनैव अप्रकृतेनैव अनुपात्तस्य प्रकृतस्य

### बालक्रीड़ा

जैसी स्वाभाविक है। उसमें यह तर्क करना "अपने वैरी के पराजय से उत्पन्न हर्ष से पैरों में लग गयी" यही उत्प्रेक्षा का स्वरूप है। इसमें निमित्त है स्वाभाविक लगन से अभिन्न समझा गया हर्ष हेतुक लगन यहाँ साहजिक लगन में हर्ष हेतुक लगन का अभेदेन अध्य-वसान है।

यह वही स्थली है जहाँ तुमको खोजते हुए मैंने जमीन पर पड़ा हुआ एक नूपुर देखा जो तुम्हारे चरण कमल के वियोग से उत्पन्न दुःख से मानों मौन साधे हुए है। यहाँ मौन के हेतु विश्लेष जनित दुःख की उत्प्रेक्षा है। उस उत्प्रेक्षा में निश्चलता से प्रतीत जो निःशब्दत्व है वही मौन से अभिन्न समझा गया निमित्त है। क्योंकि मौन और विश्लेष दुःख दोनों नुपुर में वृत्ति हैं। यहाँ नूपुर में विश्लेष दुःख की उत्प्रेक्षा है न कि निश्चलत्व निमित्तक निःशब्दत्व विषय में विश्लेष दुःख हेतुक मौन की अभेदेन उत्प्रेक्षा है।

यहाँ निःशब्दत्वाभिन्नत्वेन अध्यवसित मौन यह लेख गडवड है। उपात्तमौन से अभिन्नत्वेन अध्यवसित अनुपात्त निःशब्दत्व हो सकता है। क्योंकि नियम है कि उपात्त

णत्वे सति नूपुरवृत्तित्वात्। न तु निश्चलत्वनिमित्तके निःशब्दत्वे विषये विश्लेषदुःखहेतुकमौनमभेदेन। उत्प्रेक्षायामिवशब्दान्वितस्योत्प्रेक्ष्यताया उत्सर्गसिद्धत्वात्। विषयस्य निगीर्णतया विषयिणो विधेयत्वानुपपत्तेश्च। निमित्तान्तरगवेषणापत्तेश्च। यद्यप्येककालप्रभवत्वादिरस्ति साधारणो धर्मो निमित्तम्। तथापि तस्याचमत्कारित्वादुपमायामिवोत्प्रेक्षायामप्यप्रयोजकत्वात्। एवं फलोत्प्रेक्षायामपि बोध्यम्। एतेन 'यद्वा हेतुफलधर्मस्वरूपोत्प्रेक्षोदाहरणेष्वपि तादात्म्येनैवोत्प्रेक्षा' इति प्राचां मतमनुसरता द्रविडपुंगवेन यदुक्तं तदपि परास्तम्।

## मर्मप्रकाशः

निमित्तान्तरेति। उत्प्रेक्षेतीत्यस्य यदुक्तमित्यत्रान्वयः। द्रविडश्रेष्ठेनाप्पदीक्षितेनेत्यर्थः।

## मधुसूदनी

अध्यसायवशादभिन्नत्वमाश्रीयते। प्रकृते च मौनमप्रकृतस्य चेतनस्य धर्म उपात्तः। प्रकृतस्य नूपुरस्य धर्मः निःशब्दत्वं छिम् धिमित्यस्योभावोऽनुपात्तः। अतो मौनाभिन्नत्वेनाध्यवसितनिः शब्दत्वं निमित्तमिति पाठः साधीयान्।

यत्र नूपुरे विश्लेषदुःखं तत्रैव मौनमित्यत उक्तं विश्लेषदुःखसमानाधिकरणं मौनं नूपुरवृत्तीति। नूपुरे विश्लेषदुखमुत्प्रेक्ष्यते न तु निः शब्दत्वे विषये विश्लेषदुःखहेतुकं मौनमभेदेन उत्प्रेक्ष्यत इत्यन्वयः। ननु कुतो नैवमुत्प्रेक्ष्यते इत्याह—उत्प्रेक्षायामिति। इवशब्दान्वितमेवोत्प्रेक्ष्यं भवतीति स्वभावनियतमिति भावः। प्रकृते दुःखादिवेत्यत्र इवान्वितं दुःखमेव न तु निःशब्दत्वमतो नैवमुत्प्रेक्ष्यते। अन्यच्च विषये निःशब्दत्वे विश्लेषदुःखहेतुकमौनस्याभेदेन उत्प्रेक्षणे हि विषयस्य निगीर्णतया विषयिणो विधेयत्वानुपपत्तिः स्यात्। उद्देश्यमनुक्त्वैव न विधेयमुदीरयेत्। उद्देश्यवचनं पूर्वं विधेयवचनं परमिति सिद्धान्तात् पूर्वमुद्देश्यस्य शब्देनानुपादानात् किमुद्दिश्य विधेयत्वमित्यसंगतेश्च। निमित्तं निःशब्दत्वमेव विषयः स्यात्तदा निमित्तान्तरस्य गवेषणायां आपत्तिः स्यात।

## बालक्रीड़ा

अप्रकृतपदार्थ से अनुपात्त प्रकृत पदार्थ का अध्यवसान अधिक ज्ञान होता है। अनुपात्त से उपात्त का नहीं। जैसे (गौरयम्) यहां उपात्त गौ से अनुपात्त वाहीक का, "वापी कापि स्फुरति गगने" में उपात्त अप्रकृत वापी पदार्थ से अनुपात्त प्रकृत नाभी का और उपात्त अप्रकृत गगन से अनुपात्त प्रकृत कटिका अध्यवसान होता है। इसी तरह कमलमनंभसि, कमले च कुवलये, तानि च कनकलतिकायाम्, इत्यादि में भी है। यही सिद्धान्त है।

उत्प्रेक्षा में यह उत्सर्ग स्वभाव सिद्ध है कि जिसका इव शब्द से अन्वय होता है वही उत्प्रेक्ष्य होता है। प्रकृत में यहां दुःखादिव में इव से अन्वित दुःख है अतः दुःख

अलंकारसर्वस्वकृता तावदुत्प्रेक्षाया लक्षणमित्थं निगदितम्— 'विषय-

## मर्मप्रकाशः

अर्वाचां मतमाह—अलंकारेति। तत्र तयोर्मध्ये। एवमग्रेऽपि। तत्र दुःखरूपगुणोत्प्रेक्षायाम्।

## मधुसूदनी

विषयेति। विषयस्य निगरणेन अर्थात् विषय वाचक शब्द द्वारा विषयस्याकथनेन विषयिणा एव विषयस्य बोधनात् विषये विषयिणोऽभेद प्रतिपत्तिरध्यवसायः।

## बालक्रीड़ा

उत्प्रेक्ष्य है। और यदि विषयी के द्वारा निगीर्ण किया हुआ याने अनुक्त विषय उत्प्रेक्षा का आधार होगा तो विषयी की विधेयता किमूलक होगी अर्थात् अनुपपन्न हो जाएगी। जैसा कि नियम है (उद्देश्यमनुक्त्वैव न विधेयमुदीरयत्) उद्देश्य को विना कहे विधेय को नहीं कहे अतः (उद्देश्यवचनं पूर्वं विधेयवचनं परम्) उद्देश्य को पहले कहे और बाद में विधेय को कहे। किन्तु प्रकृत में यहाँ विषय निःशब्दत्व अनुक्त है पूर्व में कहा नहीं गया है तब पर में विषयी विधेय कैसे बन सकता है। यह एक बात हुई। दूसरी बात यह है कि जो निःशब्दत्व निमित्त है उसको यदि विषय बनायेंगे तो दूसरे किसी निमित्त को खोजने की आवश्यकता होगी। यद्यपि एककालप्रभत्वादि साधारणधर्म निमित्त हैं तद्यपि वह धर्म अचमत्कारी होने से उपमा की तरह उत्प्रेक्षा में भी अप्रयोजक ही है। इसी कथा को फलोत्प्रेक्षा में भी समझिये। इससे अथवा हेतु एवं फल स्वरूप की उत्प्रेक्षाओं के उदाहरणों में भी तादात्म्य से ही उत्प्रेक्षा है इस तरह प्राचीनों के मत का अनुसरण करते हुए द्रविड़ पुंगव ने जो कहा वह दूर पर ही अस्त हो गया।

अलंकार सर्वस्वकार ने उत्प्रेक्षा का लक्षण इस प्रकार कहा है। आकाश में कोई वापी चमक रही है, यहाँ कटि का निर्देश नहीं किया किन्तु कटि को समझा अवश्य। यह समझना कैसे हुआ। और तो कोई द्वार कटि को समझने का है नहीं। यहां तो आकाश शब्द ही का उपादान है। तब अर्थात् सिद्ध हुआ कि यह समझना आकाश से ही हुआ। फिर विचार हुआ कि आकाश पदार्थ भिन्न है और कटि पदार्थ भिन्न है तब भेद रहते कटि को आकाश से कैसे समझा जाय। हां अभेद रहने पर तो आकाश से कटि को समझा जा सकता है। फलतः कटि को आकाश से अभिन्न समझा अर्थात् कटि में आकाश का अभेद ज्ञान किया। यही अध्यवसाय पदार्थ है। इसी को लिखा कि विषय को निगरण करके अर्थात् विषय वाचक शब्द से विषय को नहीं कहकर विषयी से विषय को समझना। याने विषय का विषयी के द्वारा अधिक ज्ञान अध्यवसाय है। अतएव यहाँ भेदासहिष्णु अभेद है। इसी तरह विषय का निगरण किये बिना अर्थात् विषय को विषय वाचक शब्द से कहकर भी विषयी से समझना याने विषय में विषयी का अभेद ज्ञान वह आरोप है। यहाँ विषय एवं विषयी का भेद वैधर्म्य स्पष्ट रहता है। क्योंकि दोनों का अपने २ शब्दों से पृथक् कथन है अत एव भेद सहिष्णु अभेद तादात्म्य रूपक में होता है। इसी रूपक के विषय में विषयी

निगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः। स च द्विविधः—सिद्धः साध्यश्च। तत्र साध्यत्वप्रतीतौ व्यापारप्राधान्ये उत्प्रेक्षा इति, अस्यार्थः—सिद्धत्वं निगीर्णविषयत्वम्। साध्यत्वं च निगीर्यमाणविषयत्वम्। यत्र हि सिद्धत्वं तत्राध्यत्वसितप्राधान्यम्। यथातिशयोक्त्यादौ। यत्र साध्यत्वं तत्र व्यापारस्याध्यवसानक्रियायाः प्राधान्ये उत्प्रेक्षा इति। एवमभेदगर्भमुत्प्रेक्षालक्षणं विधाय 'सैषा स्थली यत्र' इत्यत्र नूपुरगतस्य मौनित्वस्य हेतुत्वेन दुःखं गुण उत्प्रेक्ष्यते। तत्र मौनित्वमेव नूपुरगतनिःशब्दत्वाभेदेनाध्यवसितं निमित्तम्।" इत्युक्तम्। एवं 'यत्र धर्म एव धर्मिगतत्वेन' इत्यादिना धर्मोत्प्रेक्षाप्रसङ्गे "लिम्पतीव तमोऽङ्गानि' इत्यत्र लेपनक्रियाकर्तृत्वोत्प्रेक्षणे व्यापना

## मधुसूदनी

अध्यवसितस्य संजाताध्यवसायस्य विषयिण प्राधान्यम्। हेतुत्वेनेति। कुतो मौनी तत्र हेतुर्दुखम्। तत्रोत्प्रेक्षायाम्। अभेदप्रतिपत्तिरित्युक्त्या प्रतिपत्तिरूपेऽध्यवसाये अभेद एव गर्भे वर्त्तते। न तु अध्यवसायो गर्भे। अध्यवसायो व्यापार एव नान्यस्तर्हि अभेदप्राधान्ये अध्यवसायगर्भांल्लक्षयतीति प्रतिज्ञाय अध्यवसाये व्यापार

## बालक्रीड़ा

के अभेद स्वरूप को किसी कार्य के लिये विषयी में विषय के अभेद के रूप में परिणत कर दिया वदल दिया जाय वह परिणाम है। यह परिणत करना वदलना सार्थक है तभी परिणाम अलंकार है। निरर्थक वदलना अलंकार नहीं है। इतना वैलक्षण्य ध्यान देने योग्य है। अस्तु।

वह अध्यवसाय दो प्रकार का है एक सिद्ध दूसरा साध्य। उनमें से साध्यत्व प्रतीति स्थल में व्यापार की प्रधानता होने पर उत्प्रेक्षा होती है। इसका अर्थ है कि सिद्ध वहां है जहां विषय निगीर्ण हो। साध्यत्व वहाँ हैं जहाँ विषय निगीर्यमाण हो। जहाँ सिद्धत्व है वहाँ अध्यवसित अधिकरूप में समझा गया पदार्थ विषयी प्रधान होता है जैसे अतिशयोक्ति वगैरह में। जहाँ साध्य है वहाँ व्यापार अध्यवसान क्रिया प्रधान होती है। इस अध्यवसान क्रिया रूप साध्यत्व के प्राधान्य में उत्प्रेक्षा है। इस प्रकार अभेद गर्भ उत्प्रेक्षा का लक्षण वनाकर "सैषा स्थली" इसमें नूपुरगत मौनित्व के हेतु दुःखगुण की उत्प्रेक्षा की है। अर्थात् विश्लेष जनित दुःख ही नूपुर के चुप होने का हेतु है ऐसी हेतूत्प्रेक्षा की गई है। उसमें नूपुरगत शब्दाभाव के रूप में समझा गया मौनित्व ही निमित्त है। अर्थात् इस उत्प्रेक्षा में मौन निमित्त है। प्रश्न—मौन मुनि का नहीं वोलना है अतः वह चेतन का धर्म है। तव नूपुर में मौन कैसे संभव है। उत्तर। नूपुर में जो छिम २ शब्द का अभाव है वही मौन है। इस तरह दोनों में अभेद का अध्यवसान किया है। ऐसा कहा है। इसके बाद जहाँ धर्म ही धर्मी में उत्प्रेक्षित है इस तरह से धर्मोत्प्रेक्षा के प्रसंग में "लिम्पतीव तमोंऽगानि"

दिर्निमित्तम् ।" इत्युक्तम् । तदेतत्सर्वं परस्परविरुद्धम् । नहि दुःखगुणोत्प्रेक्षायामभेदगर्भोऽध्यवसायोऽस्ति । मौनांशे सन्नप्यध्यवसायः सिद्धत्वादतिशयोक्तेरेव विषयो भवितुमर्हति, नोत्प्रेक्षायाः । त्वन्मते मौनस्य निमित्तत्वेनानुत्प्रेक्ष्यत्वाच्च । एवं 'लिम्पतीव' इत्यत्र लेपनांशाध्यवसायोऽपि । तस्यापि व्यापनरूपतया स्थितस्य त्वया कर्तृत्वोत्प्रेक्षानिमित्तत्वेनोक्तत्वाच्च । 'व्यापनादौ तूत्प्रेक्षाविषये निमित्तमन्यदन्वेष्यं स्यात्' इति त्वयैव बाधकोप-

## मर्मप्रकाश

अध्यवसाय इति । निःशब्दत्वाभेदेत्यादिः । अध्यवसायोऽपीति । सिद्धत्वादित्याद्यर्हतीत्यन्तानुषङ्गः । प्रागवदाह—तस्यापीति । ननु मया तथोक्तमपि नेदं खण्डितमित्युपलक्षत्वेनोह्यमत

## मधुसूदनी

प्राधान्ये उत्प्रेक्षेति किम्वुक्तम् विरुद्धमेवोक्तमित्यर्थः । अतः एवोच्यते=तदेतत्सर्वं परस्परविरुद्धमिति ।

अनुत्प्रेक्ष्यत्वादिति मौनं दुःखगुणोत्प्रेक्षायां निमित्तम् । अतो मौनमुत्प्रेक्ष्यं नास्ति इत्यर्थः । तस्यापि व्यापनस्यापि । त्वया दीक्षितेन । उपमादावपि शोभते मुखं चन्द्रः इवेत्यादावपि मुखचन्द्रनिष्ठशोभयोर्भिन्नत्वादध्यवसानमावश्यकम् । विषयस्य जागरूकतायामध्यवसायो नहि भवति अपितु आरोपो भवतीति कुत्राध्यवसायः । इति । ननु आरोपे विषयस्य जागरूकत्वं सत्यं किन्तु साध्येऽध्यवसाये

## बालक्रीड़ा

यहाँ लेपन क्रिया कर्त्तृत्व के उत्प्रेक्षण में व्यापन निमित्त है ऐसा कहा है । यह सब परस्पर विरुद्ध है । क्योंकि दुःखगुण की उत्प्रेक्षा में अभेद गर्भ अध्यवसाय नहीं है । हां मौनांश में अध्यवसाय है वह भी सिद्ध होने से अतिशयोक्ति का ही विषय होना चाहिए उत्प्रेक्षा का नहीं । तुम्हारे मत में मौन निमित्त है अतः उत्प्रेक्षा का विषय नहीं है ।

इसी तरह "लिम्पतीव" इसमें भी लेपनांश का अध्यवसाय भी सिद्ध होने से अतिशयोक्ति का ही विषय है उत्प्रेक्षा का नहीं । क्योंकि लेपन रूपतया स्थित व्यापन को भी लेपन कर्त्तृत्वोत्प्रेक्षा के निमित्त के रूप में तुमने कहा है । इसके प्रसंग में तुमने ही स्वयं बाधक का उपन्यास किया है कि यदि निमित्त भूत व्यापन को उत्प्रेक्षा का विषय बनायेंगे तो दूसरे निमित्त (तिरोधायकत्व आदि) को खोजना पड़ेगा । निमितांश में अध्यवसाय तो उपमा वगैरह में भी है । मुख और चन्द्र की शोभाएँ भिन्न २ हैं अतः अध्यवसाय करना आवश्यक है और भी बात है कि "नूनं मुखं चन्द्रः" इत्यादि स्थलों में कहाँ अध्यवसाय है यहाँ तो आरोप है । आरोप स्थल में अध्यवसाय नहीं होता है । विषय मुख यहाँ जागरुक है अपने शब्द से उपात्त है । अगर कहें जहाँ अध्यवसाय सिद्ध है वहाँ विषय विषयी के जठरवर्ती है विषयी के द्वारा अन्तः कृत है । किन्तु जहाँ अध्यवसाय साध्य है वहाँ वह विषय निगीर्य-

न्यासात्। निमित्तांशाध्यवसानं तूपमादावपि स्थितम्। किं च, 'नूनं मुखं चन्द्रः' इत्यादौ कुत्राध्यवसायः। विषयस्य जागरूकत्वात्। न च सिद्धेऽध्यवसाये विषयस्य जठरवर्तित्वम्, साध्ये तु निगीर्यमाणत्वात्पृथगुपलब्धिरिति वाच्यम्। साध्याध्यवसाने मानाभावात्। अन्यथा रूपकादेरप्यध्यवसानगर्भत्वापत्तेः। किं च, अध्यवसानं लक्षणाभेदः। न चात्र विधेयांशे लक्षणास्ति। अभेदादिसंसर्गैराहार्यबोधस्यैव स्वीकारात्। तस्मात्प्राचीनानामाधुनिकानां चोक्तयो न क्षोदक्षमाः।

## मर्मप्रकाशः

आह—व्यापनादाविति। इदमन्यत्रापि दृष्टमित्याह—निमित्तांशेति। लक्षणाभेद इति। साध्यवसाना सारोपा चेति भेदकरणादिति भावः। अत्र उत्प्रेक्षायाम्। परीक्षेति।

## मधुसूदनी

विषयस्य पृथगुपलब्धिर्ज्ञानमेव तत्र तस्य, न तु जागरूकत्वमत आह—मानाभावादिति। मानाधीना मेयसिद्धिरिति स्थितिः। अन्यथा प्रमाणमन्तरा उच्यते चेतर्हि रूपकेऽपि अध्यवसानगर्भत्वमस्तीत्युच्यताम्। विधेयांशे लक्षणा नास्ति न विधौ परः शब्दार्थः इति सिद्धान्तात्। निष्कर्ष इति। स्वरूपोत्प्रेक्षायां प्राचीनमते अभेद एव संसर्गः। अर्वाचीन मते भेदः समवायादिरपि क्वचित्। अभेदोऽपि क्वचित् संसर्ग। पञ्चम्यर्थ इति। हर्षोल्लग्नेत्यत्र हर्षादिति दुःखादिव बद्धमौनमिति अत्र दुःखादिति पञ्चम्यन्तार्थो हेतुः। तस्य च पञ्चम्यन्तार्थस्य हेतोश्च। तथा च मन्ये विश्लेषदुःखाभिन्नहेतुप्रयोज्यं बद्धमौनं नूपुरं मयाद्दश्यत उत्प्रेक्षाकारः।

## बालक्रीड़ा

माण है अतः उसकी पृथक् उपलब्धि है ज्ञान ही है। वह जागरुक नहीं है तो यह भी ठीक नहीं है क्योंकि अध्यवसाय साध्य है इसमें कोई प्रमाण नहीं है। प्रमाण के अभाव में भी अध्यवसाय को मानेंगे तो रूपकादि को भी अध्यवसान गर्भ मानिये। क्योंकि मन माना ही कहना है। प्रमाण है ही नहीं। तब और क्या कहें। अध्यवसान लक्षणा का भेद है। और लक्षणा विधेयांश में होती नहीं है "न विधेये परः शब्दः" ऐसा सिद्धान्त है। और यहाँ अभेद सम्बन्ध होता है और अभेद का आहार्य ही बोध माना है। अतः प्राचीन अलंकार सर्वस्वकारादि और अर्वाचीन द्रविड़ पुंगवादि की उक्तियाँ क्षोदक्षम नहीं है।

यहां अलंकार सर्वस्वकार के मत का उल्लेख कुछ विलक्षण ढंग से हो गया है। उनका उल्लेख है कि अभेद की प्रधानता में आरोप गर्भ अलंकारों (रूपक परिणाम आदि) को दिखलाकर अब अभेद की प्रधानता में अध्यवसाय गर्भ अलंकारो का लक्षण दिखाते हैं। अध्यवसाये व्यापार प्राधान्ये उत्प्रेक्षा। यह मूल लक्षण है। इसकी वृत्ति में अध्यवसाय के स्वरूप को बतलाते हैं कि विषय के निगरण से विषयी की अभेद प्रतिपत्ति अध्यवसाय है।

## मधुसूदनी

मन्ये विश्लेषदुःखनिरूपितप्रयोज्यत्वाश्रयो बद्धमौनं नूपुरमित्ति उत्प्रेक्षण मिवादिना बोध्यते इति शेषः। तेनैव उत्प्रेक्ष्यपंचम्यन्तार्थेनैव उत्प्रेक्ष्यतावच्छेदक सम्बन्धेन एकत्र प्रयोज्यत्वेन अपरत्र आश्रयत्वेन इवार्थस्य संभावनाया अन्वयात्।

## बालक्रीड़ा

वह दो प्रकार का है सिद्ध और साध्य। उसके बाद साध्यत्व और सिद्धत्व की विवेचना की, और लिखा कि साध्यत्व की प्रतीति होने पर व्यापार प्रधान अध्यवसाय में संभावन जो अभिमान, तर्क, ऊह एवं उत्प्रेक्षा आदि शब्दों से कहा जाता है। तत्र साध्यत्व प्रतीतौ व्यापार प्राधान्ये अध्यवसाये संभावन अभिमान तर्क ऊह उत्प्रेक्षेत्यादि शब्दैरुच्यते। यह वहाँ का लेख है फिर इसके बाद पण्डित राज ने अस्यार्थः यहाँ से उत्प्रेक्षा इति यहाँ तक जो लिखा है वह वहाँ मूल में कुछ नही है। किन्तु उसकी टीका विमर्शिनी में है। वह भी इस प्रकार है अलंकार रत्नाकर कार ने उसका विचार उठाया कि विषयी के रूप में विषय की संभावना उत्प्रेक्षा है। वह संभावना "यह स्थाणु हो सकता है" इस तरह अनिश्चयात्मक होने से सन्देह मूलक ही है अध्यवसाय गर्भ नहीं है। क्योंकि अध्ययसाय का स्वरूप है विषय का निगरण और विषयी का निश्चय। उत्प्रेक्षा में इन दोनों में से एक भी नहीं है। क्योंकि उत्प्रेक्षा में विषय का उपादान रहता है और निश्चय का अभाव है फलतः "अध्यवसाये व्यापार प्राधान्ये" यह लक्षण विना विचार किये ही कहा गया है। इसके उत्तर में विमर्शिनी कार ने लिखा कि "अत्रोच्यते" यहाँ कहते हैं। अलंकार शास्त्र में अध्यवसाय दो प्रकार का है।

एक स्वारसिक दूसरा उत्पादित। तत्राद्यो भ्रान्तिमदादि विषयः। इतरस्तूत्प्रेक्षा विषयः। उनमें पहले के विषय भ्रान्तिमान् वगैरह हैं। दूसरे का विषय उत्प्रेक्षा है। स च द्विविधः सिद्धः साध्यश्च। सिद्धो यत्र विषयस्यानुपात्ततया निगीर्णत्वादध्यवसितप्राधान्यम्। साध्यो यत्र इवाद्युपादानात् संभावनाप्रत्ययात्मकत्वात् विषयस्य निगीर्यमाणत्वादध्यवसाय क्रियाया एव प्राधान्यम्। उन सिद्ध और साध्य अध्यवसायों में सिद्ध वह है जहाँ अध्यवसित जिसका अध्यवसाय अभेद ज्ञान किया जाय वह विषयी अध्यवसित प्रधान हो। क्योंकि यहाँ विषय का निगरण है। साध्य वह है जहाँ अध्यवसाय क्रिया अभेद प्रतिपत्तिरूपा प्रधान हो क्योंकि यहां विषय निर्गीणमाण है अतः उसका निगरण नहीं हुआ है। इस तरह मूल एवं टीका विमर्शिनी को देखते हुए सिद्ध हो रहा है कि पण्डित राज ने उनके लेखों का उद्धरण किया किन्तु विलक्षण ढंग से किया है। जिसके आधार पर हम भी कहते हैं कि यह सब परस्पर विरुद्ध है। (किन्तु पण्डितराज के लेखानुसार परस्पर विरुद्ध नहीं है) वह परस्पर विरोध यों हैं। "अभेद प्राधान्ये अध्यवसाय गर्भांल्लक्षयति ऐसी प्रतिज्ञा करके अध्यवसाये व्यापार प्राधान्ये ऐसा लिखना सब ऊँट पे (पर) टाँग (पैर) है अतः ऊँट पटाँग है हाथी पर टाँग पैर नहीं है। अत्रि ऋषिने अत्रिस्मृति में ऊँट पर टाँग करने की अपराधो में गणना की है। यह सर्वसम्मत है कि अध्यव्यवसाय का अर्थ है विषयी की अभेदप्रतिपत्ति इस तरह अभेद प्रतिपत्ति रूप अध्यवसाय में अभेद ही गर्भ में है न कि अध्यवसाय-गर्भ में है। और अध्यवसाय

एवं प्राप्ते ब्रूमः—तत्र तावद्धर्म्युत्प्रेक्षानिष्कर्षः प्राचीनमतपरीक्षावसरे कृत एव। हेतूत्प्रेक्षायां पञ्चम्यर्थो हेतुः। अभेदश्च प्रकृतिप्रत्ययार्थयोः संसर्ग इति पक्षे 'विश्लेषदुःखाभिन्नहेतुः पञ्चम्यन्तार्थः। तस्य च प्रयोज्यतासंसर्गेणोत्प्रेक्षणमिवादिना बोध्यते। प्रयोज्यत्वं पञ्चम्यर्थ इति दर्शने निरूपितत्वं प्रकृतिप्रत्ययार्थयोः संसर्गः। आश्रयतासंसर्गेण चोत्प्रेक्षणम्। उभयथापि पञ्चम्यर्थ एवोत्प्रेक्ष्यः। उत्प्रेक्ष्यतावच्छेदकसंबन्धेन तेनैवेवाद्यर्थन्वयात्। उत्प्रेक्ष्यसमानाधिकरणश्च धर्मोऽतिशयोक्त्या मौनाभिन्नत्वेनाध्यवसितनिश्चलत्वा-

मर्मप्रकाशः

विचारेत्यर्थः। उत्प्रेक्ष्यतावच्छेदकसंबन्धेनेति। स च प्रयोज्यत्वादिः। आदिना

मधुसूदनी

समानाधिकरणश्चेति। यत्र नूपुरे उत्प्रेक्ष्यं दुःखं तत्रैव मौनाभिन्नत्वेन अध्यवसितं निःशब्दत्वं मौनं च। एवञ्च उत्प्रेक्ष्य दुःखाधिकरण नूपुर गतं

बालक्रीड़ा

और अभेद ज्ञान घट कलश की तरह पर्याय शब्द हुए। अतः जैसे घट की प्रधानता में कलशगर्भ यह वाक्य नहीं बन सकता है वैसे ही उक्त वाक्य भी। इसके सिवाय अभेद ज्ञान और अध्यवसाय दोनों व्यापार रूप है क्रिया रूप है। द्रव्य या गुण या जाति रूप नही है तब अध्यवसाये व्यापार प्राधान्ये यह कैसा लिखना है। इसीलिए कहा कि तदेतत् सर्वं परस्पर विरुद्धम्।

इस तरह प्राचीन एवं अर्वाचीन दोनों (चीनों) की उक्तियाँ क्षोदक्षम नही है ऐसी अवस्था में कहते हैं। उनमें पहले धर्मी की उत्प्रेक्षा का निष्कर्ष प्राचीन मत की परीक्षा के अवसर पर कर ही दिया गया है। अर्थात् धर्म्युत्प्रेक्षा या स्वरूपोत्प्रेक्षा प्राचीन के मत में भेद से भी होती है। अब बची हेतूत्प्रेक्षा और फलोत्प्रेक्षा। अतः उनके विषय में निर्णय लिखते हैं। हेतूत्प्रेक्षा में पंचमी विभक्ति का अर्थ है हेतु। जहाँ प्रकृति और प्रत्यय का संसर्ग अभेद है यह मत है वहाँ उस मत में विश्लेषदुःखाभिन्न हेतु ऐसा पञ्चम्यन्त का अर्थ है और उस पंचम्यन्तार्थ का प्रयोज्यत्व सम्बन्ध से उत्प्रेक्षण होता है। इस बात को इवादि बतलाते हैं। और जो मत है कि प्रयोज्यत्व ही पंचम्यर्थं है उस दर्शन में प्रकृति और प्रत्यय का संसर्ग निरूपितत्व है। और आश्रयता सम्बन्ध से उत्प्रेक्षण है. इस बात को इवादि बतलाते हैं। दोनों प्रकारों में पंचम्यर्थ ही उत्प्रेक्ष्य है क्योंकि उसी के साथ प्रयोज्यत्व या आश्रयत्व रूप उत्प्रेक्ष्यतावच्छेदक सम्बन्ध से अन्वय होता है।

उत्प्रेक्ष्य याने विषयी जिसकी संभावना करते हैं और उत्प्रेक्षा का आधार विषय हैं उत्प्रेक्ष्य के साथ रहने वाला धर्म निमित्त है। जो अतिशयोक्ति के द्वारा एकत्वेन अध्यवसित है। जैसे उत्प्रेक्ष्य दुःख है उसका अधिकरण नूपुर है।

वहीं नूपुर में मौनाभिन्नत्वेन ज्ञात निःशब्दत्व है अतः उत्प्रेक्ष्य दुःख समानाधिकरण धर्म निःशब्दत्व उत्प्रेक्षा का निमित्त है। इसमें अतिशयोक्ति का स्वरूप यह है कि मौन तो

दिर्निमित्तम् । बद्धमौनं च विषयः । मौनद्वारकं च बद्धमौनस्य प्रयोज्यत्वं संभाव्यते । एवं प्रयोज्यधर्मके धर्मिणि सर्वत्रापि धर्मद्वारक एव पञ्चम्यर्थान्वयः । यत्र तु धर्म एव किंचिद्धर्माभिन्नत्वेनाध्यवसितः साक्षाद्विषयस्तत्र विषयतावच्छेदकधर्मो निमित्तम् । यथा तत्रैव 'विश्लेषदुःखादिव बद्धमौनमस्य' इति निर्माणे मौनत्वम् । एवं तृतीयार्थेऽपि बोध्यम् ।

### मर्मप्रकाशः

निःशब्दत्वपरिग्रहः । तृतीयार्थेऽपीति ! हेताविति शेषः ।

### मधुसूदनी

मौनम् । समानाधिकरणो धर्मः अतिशयोक्त्या निमित्तमित्यन्वयः । बद्धं मौनं येन तद् बद्धमौनं नूपुरं विषयः । तत्र मौनं दुखात् । एवं च दुःखप्रयोज्यं मौनमेव न तु नूपुरं, मौन द्वारा तु नूपुरेऽपि प्रयोज्यत्वं भवितुं शक्नोति तदेतदुक्तं बद्धमौनस्य नूपुरस्य मौन द्वारा प्रयोज्यत्वं सभाव्यते इति । प्रयोज्यत्वं संसर्गः । पंचम्यर्थो हेतुरुत्प्रेक्ष्यः । इत्युक्तेः । विश्लेषदुःखाभिन्नहेतुप्रयोज्यमिव मौनं तद्वन्नूपुरमिति उत्प्रेक्षाकारः । एवं दुःखाभिन्न हेतु प्रयोज्यमौनधर्मके धर्मिणि नूपुरे इति स्पष्टीकरणेन सर्वत्रापि हेतूत्प्रेक्षायां धर्म द्वारी कृत्यैव पंचम्यर्थस्य हेतो रन्वयः । किंचिद्धर्मेण अभिन्नतया एकरूपतया अध्यवसितो ज्ञातो धर्म एव न तु धर्मी साक्षात् विषयः । यथा मौनधर्मेण अभिन्नतया अध्यवसितो धर्मः निःशब्दत्वं विषयस्तत्र विषये मौनाभिन्ननिःशब्दत्वधर्मे विषयता तस्या अवच्छेदकः परिचायकः मौनस्य धर्मो मौनत्वं निमित्तम् ।

### बालक्रीड़ा

मुनि चेतन का धर्म है उसका नूपुर में रहना असंभव है । इसलिए नूपर में जो छिम् २ शब्द का अभाव है उसीको मौन मान लिया । इसीको कहते कि मौनाभिन्नत्वेन अध्यवसित निःशब्दत्व अर्थात् मौन और निःशब्दत्व अभिन्न एक समझे गये हैं । बद्धमौन जिसने मौन कर लिया वह नूपुर विषय है । दुःखाभिन्न हेतु प्रयोज्यत्व मौन का धर्म है और मौन नूपुर का धर्म है अतः मौन के द्वारा नूपुर में प्रयोज्यत्व की संभावना है अर्थात् दुःखनिरूपित प्रयोज्यत्व रूप मौनाश्रय मानों नूपुर है अथवा दुःखाभिन्न हेतु प्रयोज्य मौन करने वाला नूपुर है । इस प्रकार दुःखाभिन्न हेतु प्रयोज्य मौनधर्म वाले धर्मी में सभी जगह मौनधर्म के द्वारा ही पञ्चमी के अर्थ का अन्वय है । जहाँ तो यत्किञ्चिद् धर्मान्तर से अध्यवसित धर्म ही साक्षात् विषय है वहाँ विषयतावच्छेदक विषयता का परिचायक धर्म निमित्त है जैसे उसी पद्य का विश्लेषदुःखादिव मौनमस्य ऐसा निर्माण कर दें तो मौनत्व निमित्त है । इस पञ्चम्यर्थ की तरह तृतीयार्थ के विषय में भी समझना । जैसे नूपुर में रहने वाला धर्म निःशब्दत्व है जो मौनाभिन्नत्वेन अध्यवसित है । उस निः शब्दत्व में रही विषयता उसका अवच्छेदक परिचायक धर्म मौनत्व निमित्त है ।

फलोत्प्रेक्षायां तुमुन्नादेरर्थः फलम् । प्राग्वत्प्रकृत्यर्थप्रत्ययार्थयोरभेदः संसर्गः । तच्च साधनतासंसर्गेणन्वेतीति तेनैव संसर्गेणोत्प्रेक्ष्यते । यत्र चोत्प्रेक्ष्यते तदंशे विशेषणतया भासमानो धर्मो निमित्तम् । स च धर्मिणि विषये अभिन्नत्वेनाध्यवसितो धर्मस्तथाभूते च धर्मे विषये तद्विशेषणीभूतोऽन्य इति विवेकः । एवं च यत्र समासप्रत्ययगुणीभूते विषये हेतुफलान्वयो न साक्षात्सं-

मर्मप्रकाशः

प्राग्वत् प्रागुक्तप्रथमपक्षवत् । तच्च फलं च । तथाभूते च विषयतावच्छेदकधर्माभिन्नत्वेनाध्यव-

मधुसूदनी

तुमुन्नादेरिति । आदिपदार्थः चतुर्थी विभक्तिः । तदर्थवाचकोऽर्थशब्दश्च प्राग्वत् हेतूत्प्रेक्षावत् । तच्च फलं च साधनता संसर्गेण कंटकिद्रुमेऽन्वेति इति हेतोः तेनैव साधनतारूपेण एव । प्रयोजकतासंसर्गेण उत्प्रेक्ष्यते । एवं मन्ये ललाटलिपि-दर्शनाभिन्नफलप्रयोजकं ललाटत्वग्विपाटनं कण्टकिद्रुमः करोति इत्युत्प्रेक्षाकारः । यत्र च कण्टकि द्रुमे च । तदंशे कण्टकिद्रुमांशे । भालत्वचं व्यपाटयन् इत्येवंरूपेण विशेषणतया भासमानो धर्मो भालत्वग्विपाटनं निमित्तम् ।

समासेति । यत्र स्थले समासेन प्रत्ययेन वा गुणीभूते विषये हेतोः फलस्य वा अन्वयः साक्षान्न हि भवति । यथा परस्परासंगसुखात् पीनपयोधरा वनितेत्यत्र तादृशसुखात् पीनौ पयोधरौ यस्या वनिताया इति समासेन अन्य पदार्थे वनितायां गुणीभूते विषये पयोधररूपे हेतोः सुखस्य साक्षादन्वयो नहि भवति । यतः सुख हेतुकं यत्पीनत्वं तद्वन्तौ पयोधराविति दिशा सुखस्य साक्षादन्वयः पीनत्वे, तद्द्वारा

बालक्रीड़ा

फलोत्प्रेक्षा में तुमुन्, । आदिपद का अर्थ चतुर्थी विभक्ति और तदर्थवाचक अर्थशब्द । इनका अर्थ फल है । पहले हेतूत्प्रेक्षा की तरह प्रकृति एवं प्रत्यय के अर्थों में अभेद संसर्ग है वह फल साधनता सम्बन्ध से उत्प्रेक्षा में अन्वित होता है । इसलिए उसी सम्बन्ध से वह उत्प्रेक्षित भी होता है । ललाट लिपि दर्शनाभिन्न फल साधनार्थं मानों ललाट के चमड़े को वनान्त उचेडते हैं । यह उत्प्रेक्षा का आकार है । इसको सिद्ध करने के लिए जहाँ उत्प्रेक्षा वनान्त में होती है । उस वनान्त अंश में विशेषण रूप से भासमान अर्थात् विषयतावच्छेदक धर्म ललाट के चमड़े को उचेड़ना निमित्त है । वह धर्म भी धर्मी विषय में अभिन्नत्वेन अध्य-वसित होता है । धर्मी वनान्त रूप विषय में उत्प्रेक्षा का निमित्त है अध्यवसित धर्म जैसे काँटे में फंसी हुई वस्तु कांटे से स्वतः उचड़ जाती है फट जाती है यह स्वाभाविक फटन है । इस स्वाभाविक फटन का ललाट में लिखी हुई लिपि के देखने के उद्देश्य से मानों कटीले पेड़ों ने ललाट के चमड़े को उचेड लिया है । इस तरह दोनों स्वाभाविक एवं संभावित को एक मान लिया है । यही अध्यवसाय है । उस अध्यवसित धर्म रूप विषय में उसका विशेषणी भूत दूसरा धर्म निमित्त है । यही विचार धर्मी और धर्म में है । इस प्रकार जहाँ विषय समास और प्रत्यय में गुणीभूत रहेगा वहाँ हेतु और फल का साक्षात् अन्वय नहीं होगा अतः

भवति तत्र प्रधान एव विषये तादृशविशेषणद्वारकप्रयोज्यत्वप्रयोजकत्वाभ्यां संसर्गाभ्यां हेतुफलयोरुत्प्रेक्षा बोध्या। यद्यपि विशेषणेऽपि यथाकथंचिद्धेतुफलयोरन्वयाद्विशेषणस्यापि विषयत्वमुचितम्। तथापि विषयविषयिणोरुद्देश्य-

### मर्मप्रकाशः

सिते च। तद्विशेषेति। विषयतावच्छेदकधर्म इत्यर्थः। समासेति। समासप्रत्ययाभ्यां गुणीभूते इत्यर्थः। यथाकथंचिद्धेतुफलयोरिति। 'स्वर्गो ध्वस्तः' इत्यादाविव, 'नीलरूपवान् जातः'

### मधुसूदनी

पयोधरयोः। अत्र हेतुः सुखमुत्प्रेक्ष्यं तच्च यत्र उत्प्रेक्ष्यं स आधारो भित्तिर्विषयः पयोधरौ। अतस्तत्र प्रथमे उद्देश्ये पयोधररूपे विषये हेतोः सुखस्य पीनत्वरूपं विशेषणं द्वारीकृत्य प्रयोज्यत्वसंसर्गेण उत्प्रेक्षा। तथा च मन्ये सुखाभिन्न हेतुप्रयोज्य पीनत्वविशिष्टौ पयोधरौ। इति बोधाकारः। तनयमैनाकेति तनय मैनाकस्य गवेषणाय लम्बीकृता जलधि जठरे प्रविष्टा हिमगिरेर्भुजेति समासेन भुजायां गुणीभूते विषये हिमगिरौ फलस्य गवेषणस्य साक्षादन्वयो नहि भवति। यतो गवेषणफलकं भुजस्य लम्बीकरणेन जलधौ प्रवेशनं तदाश्रयो हिमगिरिरिति दिशा गवेषणस्य साक्षादन्वयः तादृश प्रवेशने तद्द्वारा हिमगिरौ। इति परम्परया एवान्वयः। अत्र गवेषणं फलमुत्प्रेक्ष्यं, तच्च, यत्र उत्प्रेक्ष्यं स आधारो भित्तिर्विषयो हिमगिरिः। अतः तत्र प्रथमे उद्देश्ये हिमगिरौ विषये फलस्य गवेषणस्य योऽन्वयः स भुजस्य लम्बीकरणेन जलध्यन्तः प्रवेशनरूपं विशेषणं द्वारीकृत्य प्रयोजकत्वसंसर्गेण। हिमगिरिः तनयमैनाकान्वेषणाय स्वभुजां लम्बीकृत्य जलधेरन्तः प्रवेशयतीति तात्पर्यात्। तथा च मन्ये गवेषणाभिन्नफलप्रयोजकं यद् भुजस्य लम्बीकरणेन जलध्यन्तः प्रवेशनं तद्वान् हिमगिरिः। इति बोधाकारः।

ननु प्रधाने विषये हेतुफलयोः साक्षादन्वयो न; साक्षादन्वयाभावे विशेषणद्वारा एवान्वयस्तर्हि विशेषणमेव विषयोऽस्तु इति मनसि निधायाह—यद्यपीति। प्रश्नः। ननु यथा स्वर्गो ध्वस्त इत्यत्र क्षीणे पुण्ये मर्त्यलोके विशन्ति इति सिद्धान्तात् स्वर्गवासी ध्वस्त इत्येवं ध्वंसन क्रियायां स्वर्गवासिन एव यद्यपि साक्षादन्वयः। तद्यपि आश्रयिद्वारा विशेषणीभूते आश्रये स्वर्गेऽपि तत्क्रियायाः कथंचिद् अन्वयात् स्वर्गो ध्वस्त इत्यपि व्यवहारः। तथा परस्परासंगसुखिनौ पयोधरौ इत्येव यद्यपि प्रतीतिः। तद्यपि सुखात् पीनाविति रीत्या हेतोः सुखस्य पयोधर

### बालक्रीड़ा

जो विषय प्रधान होगा उस विषय में विशेषणों के द्वारा प्रयोज्यत्व और प्रयोजकत्व सम्बन्धों से हेतु और फ़ल की उत्प्रेक्षा समझना। यद्यपि विशेषण में भी किसी प्रकार हेतु और फल का अन्वय हो जाता है अतः विशेषण का भी विषय होना उचित है तद्यपि विषय एवं विषयी में उद्देश्य विधेय भाव के प्रत्यय के अनुरोध से इस सरणि को अपनाया है। यदि उस उद्देश्य विधेय के प्रत्यय का अनुरोध नहीं मानना है तब प्राचीनों का मत ही रमणीय है।

विधेयभावप्रत्ययस्यानुरोधादियं सरणिराश्रिता । यदि च तस्य नास्त्येवानुरोधस्तदा प्राचां दर्शनमेव रमणीयं स्यात् ।

किं च प्राचां मते हेतुफलोत्प्रेक्षास्थले तद्धेतुकतत्फलकयोः कार्यकारण-

मर्मप्रकाशः

इत्यादाविव चेति भावः । तस्य तयोरुद्देश्यविधेयभावप्रत्ययस्य ।

मधुसूदनी

विशेषणे पीनत्वेऽपि यथा कथंचिद् अन्वयः । यथा च नीलरूपवान् घटो जात इत्यत्र पूर्वतो जाते घटे एव यद्यपि जनन क्रियायाः साक्षादन्वयः । तद्यपि घट विशेषणे नीलरूपेऽपि जनन क्रियायाः कथंचिद् अन्वयः । तथा हिमगिरि विशेषणीभूते भुजस्य लम्बीकरणेन जलधिमध्यप्रवेशनेऽपि गवेषणरूप फलस्य यथा कथंचिदन्वयः । एवं च यद्यपि विशेषणस्यापि पीनत्वस्यापि तादृशप्रवेशनस्यापि विषयत्वमुचितं तद्यपि एवमन्वयकरणे विषयः उद्देश्यम् विषयी विधेयम् भवति इति प्रत्ययस्य विसंष्ठुलता स्यात् । यतः विधेयं तु विशेषणमिति नयेन विशेषणस्य विधेयस्य विषयित्वमेव प्राप्नोति न तु विषयत्वम् । एवमपि यदि विशेषणस्य तादृशस्य विषयत्वं स्वीक्रियते तर्हि तादृश विषयस्य उद्देश्यता न स्यात् । उद्देश्यत्वं नाम प्रथमत्वम् । विधेयरूपस्य तस्याऽप्रथमत्वमेव । अतः विषयविषयिणो रुद्देश्यविधेयभावप्रत्ययानुरोधात् पयोधररूपे विषये सुखोत्प्रेक्षेति, हिमगिरि रूपे विषये गवेषणाभिन्नफलोत्प्रेक्षेति सरणिर्मार्ग आदृतः । यदा तस्य उद्देश्यविधेयभाव प्रत्ययस्यानुरोधो नास्ति तदा अनुरोधाभावे ।

इन्दन्दु बोध्यम् । प्रत्ययेन गुणीभूते विषये हेतु फलान्वयो नेति ग्रन्थोऽसंलग्न एव । यतः प्रत्ययार्थः प्रधानं प्रकृत्यर्थो विशेषणमिति नयेन परम्परासंगसुखादित्यत्र सुखेति रूपा, विश्लेषदुःखादित्यत्र दुःखेति रूपा ङसि प्रत्ययस्य प्रकृतिः । उभयत्र ङसिप्रत्यये गुणीभूतं सुखं दुःखं च उत्प्रेक्ष्यं विषयि एव न तु विषयः । विषयस्तु सुखस्य पयोधरौ दुःखस्य नूपुरम् । एवमेव द्रष्टुमित्यत्र तुमुन् प्रत्ययस्य प्रकृतिः दृशिरूपा । तत्रापि तुमुन् प्रत्यये गुणीभूतं दर्शनमुत्प्रेक्ष्यं विषयि एव न तु विषयः । विषयस्तु दर्शनस्य कण्टकिद्रुमः । यतः उत्प्रेक्षायामिव शब्दान्वितस्योत्प्रेक्ष्यत्वं स्वभावसिद्धम् । एवं च प्रत्ययगुणी भूते विषयिणि हेतौ फले च विषयस्य साक्षादन्वयो नेति सुवचं स्यात् । उक्त ग्रन्थस्तु असंलग्न एव ।

यत्कार्यमुद्दिश्य यो हेतुराश्रीयते तत्कार्यं तद्धेतुकं, यत्कारणमाश्रित्य यत् फलं

बालक्रीड़ा

और भी एक बात है कि प्राचीनों के मत में जहाँ हेतूत्प्रेक्षा होती है एवं फलोत्प्रेक्षा होती है उस स्थल में तद्धेतुक कार्य की तत्फलक कारण की अनुक्त याने निगीर्ण विषय में

योरेव निगीर्णे विषये उत्प्रेक्षणात्स्वरूपस्योत्प्रेक्षायामेव पर्यवसानम्। न हेतुफलयोः। एवं च विभागश्चिरंतनानामुच्छिन्नः स्यात्। अथ स्वरूपतादात्म्याविशेषेऽपि हेतुफलाविशेषणकशुद्धस्वरूपोत्प्रेक्षाया हेतुफलविशेषणकस्वरूपोत्प्रेक्षायामस्ति हेतुफलकृत एव भेद इति चेत् 'तनयमैनाकगवेषणलम्बीकृतजलधिजठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी' इति प्रागुदाहृतायां स्वरूपोत्प्रेक्षायां तनयमैनाकगवेषणरूपस्य फल-

## मधुसूदनी

निरूप्यते तत्कारणं तत्फलकम्। प्राचीनैः लक्ष्मीरूपे विषये हर्षरूपो हेतुर्नोत्प्रेक्ष्यते किन्तु साहजिक लगने विषये निगीर्णे तादात्म्येन हर्ष हेतुकं लगनं विषयि उत्प्रेक्ष्यते। अत्र पादयोः पद्म लक्ष्म्या लगने हर्षो हेतुराश्रीयते ऽतः तल्लगनं हर्षहेतुकम्। वनान्ते कण्टकि द्रुमे दर्शनं नोत्प्रेक्ष्यते अपितु साहजिक भालत्वग्विपाटने निगीर्णे विषये तादात्म्येन दर्शनमुद्दिश्य त्वग्विपाटनं विषयि उत्प्रेक्ष्यते। अत्र कण्टकि द्रुम कर्तृक भालत्वग्विपाटनमाश्रित्य भालाक्षर दर्शनं फलं निरूप्यतेऽतो भालत्वग्विपाटनं भालाक्षरदर्शनफलकम्। एवं च चिरन्तन चिन्तितः स्वरूपोत्प्रेक्षा हेतुत्प्रेक्षा फलोत्प्रेक्षेति विभागः। तादृश विभागस्य उच्छिन्नत्वं समाधातुमाशंकते-अथेति। तादात्म्येन स्वरूपस्यैवोत्प्रेक्षायां न तु हेतुफलयोरुत्प्रेक्षायां पर्यवसानम्। स्वरूपतादात्म्याविशेष हेतुफलोत्प्रेक्षास्थलेऽपि। एका शुद्ध स्वरूपोत्प्रेक्षा यत्र हेतुर्वा फलं वा विशेषणं न स्तः। एवं हेत्वविशेषणिका फलाविशेषणिका सा। अन्ये द्वे हेतुविशेषणक स्वरूपोत्प्रेक्षेति फल विशेषणक स्वरूपोत्प्रेक्षेति हेतुफलकृत भेदस्य सद्भावे चिरन्तनचिन्तितो विभागो नोच्छिन्नः। एनां समाधान रूपामाशंकामुन्मूलयन्नाह—इति चेदिति। अत्र स्वरूपेत्यादिभेद इत्यन्तमुच्यते ततः फलविशेषणिका स्वरूपोत्प्रेक्षा फलोत्प्रेक्षेति चेत्तर्हि एतदनुसारं तनयेत्यत्र स्वरूपोत्प्रेक्षाऽपि फलोत्प्रेक्षया एव व्यवहार्या स्यात् उत्प्रेक्ष्यस्य भुजस्य विशेषणकोटौ गवेषणफलस्य प्रविष्टत्वात्।

## बालक्रीड़ा

उत्प्रेक्षा होती है अतः उन हेतूत्प्रेक्षा एवं फलोत्प्रेक्षा का स्वरूपोत्प्रेक्षा में ही पर्यवसान होता है। न कि हेतूत्प्रक्षा एवं फ़लोत्प्रेक्षा में। किन्तु एसी स्थिति में चिरन्तनों के माने हुए तीन विभाग उच्छिन्न हो जायेंगे। इस पर कहते हैं कि प्राचीनों के माने हुए विभाग उच्छिन्न नहीं होंगे उसके विषय में ऐसी व्यवस्था करेंगे कि जैसे स्वरूप तादात्म्य अर्थात् अभेद तीनों प्रकार की उत्प्रेक्षाओं में यद्यपि समान है तद्यपि जिस स्वरूपोत्प्रेक्षा में हेतु या फल विशेषण नहीं होते हैं वह शुद्ध स्वरूपोत्प्रेक्षा कहलायेगी। इस स्वरूपोत्प्रक्षा से हेतु विशेषणक स्वरूपोत्प्रेक्षा में हेतुकृत ही एवं फलविशेषणक स्वरूपोत्प्रेक्षा में फलकृत ही भेद है। खण्डन यदि ऐसी व्यवस्था मानेंगे तो "तनय मैनाक गवेषण" इस पहले उदाहृत स्वरूपोत्प्रेक्षा में तनय मैनाक गवेषण रूप फल उत्प्रेक्षा भुज के विशेषण की कोटि में प्रविष्ट हो गया है अतः

स्योत्प्रेक्ष्यविशेषणकोटिप्रविष्टत्वात्फलोत्प्रेक्षात्वापत्तेः, उत्प्रेक्ष्ये साक्षाद्विशेषणताया अप्रयोजकत्वात्। इत्यलं स्वगोत्रकलहेन।

उत्प्रेक्ष्यमाणेष्वपि यस्य विषयिण उत्प्रेक्षा विधेयतया भासते तदीयोत्प्रेक्षयैव व्यपदेशः। प्राधान्यात्। तेन 'विश्लेषदुःखादिव बद्धमौनम्' इत्यत्र नूपुरगतत्वेन दुःखस्योत्प्रेक्षणेऽपि न तदुत्प्रेक्षया व्यपदेशो न्याय्यः। तस्या अङ्गत्वेनानुवाद्यत्वात्। किं तु पञ्चम्यर्थोत्प्रेक्षया। तस्या एव इवशब्दवेद्यत्वेन विधेयत्वात्। तथा 'चोलस्य' इति यद्यपि वनान्तगतत्वेन न ललाटाक्षरदर्शनोत्प्रेक्षयापि, अपि तु तुमुन्नर्थोत्प्रेक्षयापि। एवं 'तनयमैनाक–' इत्या-

### मर्मप्रकाशः

ननु तत्कोटिप्रविष्टत्वेऽपि तस्य न तत्र साक्षाद्विशेषणत्वमत आह—उत्प्रेक्ष्य इति। 'यस्य विषयिणः' इति पाठः। तस्या नूपुरगतदुःखोत्प्रेक्षायाः। पञ्चम्यर्थोत्प्रेक्षयेति। व्यपदेश

### मधुसूदनी

अत्र भागीरथ्यां भुजत्वोत्प्रेक्षा स्वरूपोत्प्रेक्षा। द्वितीया तनयमैनाकस्य गवेषण रूपा फलोत्प्रेक्षा। स्यादेतत् यदि गवेषणं भुजायां साक्षाद् विशेषणं भवेत्, अत्र तु भुज विशेषणं लम्बी करणेन जलध्यन्तः प्रवेशनं, तत्र विशेषणं गवेषणमिति परम्परया तत्तस्यां विशेषणमिति। तन्नेत्याह–उत्प्रेक्ष्य इति। अप्रयोजकत्वात् अर्थात् हेतुफलयोः साक्षाद् विशेषणता एव तादृशव्यवहारस्य साधिकेति तर्कोऽनुकूलो नास्ति। तदर्थं केवलं विशेषणता एवापेक्षिता।

यस्येति। यस्य कस्यापि। तदीयेति विषयि सम्बन्धिन्या उत्प्रेक्षयैव। प्राधान्यात् साध्यत्वादित्यर्थः। यतः वर्णनीयमेव प्रधानं भवति। तदेव उद्देश्यं च।

### बालक्रीड़ा

फलोत्प्रेक्षात्व की आपत्ति लग जायगी। यदि कहें कि तनयमैनाक गवेषण रूप फल उत्प्रेक्षा भुज के विशेषण का विशेषण है साक्षात् विशेषण नहीं है अतः फलोत्प्रेक्षा नहीं होगी। यह कहना ठीक नहीं है क्योंकि उत्प्रेक्षा में फल एवं हेतु का साक्षात् विशेषण होना प्रयोजक नहीं है। बस स्वगोत्र कलह से बाज आइये।

इन उत्प्रेक्ष्यमाणों में भी जिस विषयी की उत्प्रेक्षा, विधेय रूप से प्रतीत होती है उसकी उत्प्रेक्षा के नाम से उसका व्यवहार होगा। क्योंकि उसी विषयी की प्रधानता है। इसलिए "विश्लेषदुःखादिव बद्धमौनम्" यहाँ नूपुर में दुःख की उत्प्रेक्षा होने पर भी उस उत्प्रेक्षा से व्यवहार करना न्याय्य नहीं है। क्योंकि वह नूपुरगतदुःखात्प्रेक्षा सिद्ध होने से अनुवाद्य है। तब किससे व्यपदेश करना चाहिए इस पर कहते हैं पंचम्यन्त पद के अर्थ की उत्प्रेक्षा से व्यवहार करना चाहिए। क्योंकि पंचम्यर्थ की उत्प्रेक्षा ही इव शब्द के द्वारा वेद्य होने से विधेय है। तथा "चोलस्य" पद्य में भी वृक्षों में ललाट के अक्षरों की देखने की उत्प्रेक्षा से व्यपदेश नहीं

दिगद्ये न फलोत्प्रेक्षया व्यपदेशः। नापि 'कलिन्दजानीरभरेऽर्धमग्ना' इत्यत्र शशिकिशोरतादात्म्योत्प्रेक्षया, तदुत्थापितया ध्वान्तकर्तृकवैरहेतुकनिगरणकर्मतादात्म्योत्प्रेक्षया वा प्रागुक्तादेव हेतोरिति दिक्।

द्विविधो हि तावद्धर्मोऽपि—स्वत एव साधारणः, साधारणीकरणोपायेनासाधारणोऽपि साधारणीकृतश्च। स चोपायः क्वचिद्रूपकं, क्वचिच्छ्लेषः, क्वचिदपह्नुतिः, क्वचिद्बिम्बप्रतिबिम्बभावः, क्वचिदुपचारः, क्वचिदभेदाध्यवसायरूपोऽतिशयः।

यथा—

### मर्मप्रकाशः

इत्यस्यानुषङ्गः। एवमग्रेऽपि। प्रागुक्तादेवेति। अङ्गत्वेनानुवाद्यत्वादित्यस्मादेवेत्यर्थः। द्विविधो हीति। हि यतः।। स्वत एवेत्यादि द्वैविध्यं प्राप्तोऽतस्तावद्धर्मोऽपि द्विविध

### मधुसूदनी

विधेयं तु विशेषणमिति अप्रथममेवातः साध्यत्वप्रयुक्तं तु व्यवहार्यत्वम्। तेन हेतुना तदुत्प्रेक्षया नूपुरगत दुःखोत्प्रेक्षया। तथा व्यवहारे कदाचित्कश्चित् स्वरूपोत्प्रेक्षां मा मन्वीतेति भावः। तस्या तादृश दुखोत्प्रेक्षायाः।

अंगत्वेनेति अत्र। सिद्धत्वेनेति वक्तव्यम्। पंचम्यर्थस्य हेतोरुत्प्रेक्षया। तस्या हेतूत्प्रेक्षाया एव। तुमुन्नर्थोत्प्रेक्षया तुमुन् प्रत्ययार्थोत्प्रेक्षया न तु दृशिरूप प्रकृत्यर्थोत्प्रेक्षया। न फलोत्प्रेक्षयेति गवेषणरूपफलस्य भुज विशेषणतया साध्यत्वाभावादित्याशयः। अपितु स्वरूपोत्प्रेक्षया एव व्यवहारोऽत्र। तादात्म्योत्प्रेक्षया अथवा तदुत्थापित तादृश तादात्म्योत्प्रेक्षया वा व्यवहारो ना अऽपि तु क्रोशन क्रियया क्रोशनकर्तृ निष्ठया व्यवहारः। प्रागुक्तादेव सिद्धत्वेनानुवाद्यत्वादेव हेतोः।

### बालक्रीड़ा

नहीं होगा अपितु तुमन् प्रत्यय के अर्थ की उत्प्रेक्षा से व्यपदेश होगा। इसी तरह सिद्धत्वेन अनुवाद्य होने के कारण तनयमैनाक इत्यादि गद्य में फलोत्प्रेक्षा से और "कलिन्दजानीरभरेऽर्धमग्ना" में शशि किशोरतादात्म्योत्प्रेक्षा अथवा शशिकिशोरतादात्म्योत्प्रेक्षा से उत्थापित ध्वान्त कर्तृक वैरहेतुक निगरण कर्मक तादात्म्योत्प्रेक्षा से भी व्यपदेश नहीं होगा। यह समझने का मार्ग है।

उत्प्रेक्षा में निमित्तभूतधर्म दो प्रकार का होता है एक स्वतः एव साधारण दूसरा साधारणीकरणोपाय के द्वारा असाधारण भी साधारण बनाया गया। वह उपाय कहीं पर रूपक, कहीं पर श्लेष, कहीं पर अपह्नुति, कहीं पर बिम्बप्रतिबिम्बभाव, कहीं पर उपचार या कहीं पर अभेदाध्यवसायरूप अतिशय है। जैसे—

'नयनेन्दिन्दिरानन्दमन्दिरं मिलदिन्दिरम् ।
इदमिन्दीवरं मन्ये सुन्दराङ्गि ? तवाननम् ॥'

अत्र प्रथमार्धगतः प्रथमो धर्मो रूपकेण विषयविषयिसाधारणीकृतः । द्वितीयश्च विलक्षणशोभयोरभेदाध्यवसायेन ।

केवलशब्दात्मकोऽप्ययं संभवति ।

'अङ्कितान्यक्षसंघातैः सरोगाणि सदैव हि ।
शङ्के पङ्केरुहाणीति शरीराणि शरीरिणाम् ॥'

### मर्मप्रकाशः

इत्यर्थः । इन्दिन्दिरा भ्रमराः । इन्दिरा शोभा । प्रथम इति । नयनेन्दिन्दिरानन्दमन्दिरत्वरूप इत्यर्थः । द्वितीयश्चेति । मिलदिन्दि रत्वरूप इत्यर्थः । सायेनेति । विषयेत्याद्यनुषज्यते । अयं केवलशब्दात्मा ।

### मधुसूदनी

नयनेति । नयने इन्दिन्दिरौ (भ्रमरौ) तयोरानन्दस्य मन्दिरम् । यत्र मन्दिरे मिलन्ती इन्दिरा लक्ष्मीः (शोभा) वर्त्तते । अतः हे सुन्दराङ्गि ? इदं तवानन-मिन्दीवरं कमलं मन्ये ।

अत्र प्रथमार्धगतो भ्रमरानन्दमन्दिरत्वरूपः प्रथमो धर्मः नयनयोर्भ्रमरत्वरूपकेण विषये मुखे विषयिणि कमले साधारणीकृतः । तत्रैव गतो द्वितीयो धर्मो मिलदिन्दिरत्व-रूपो विषयविषयिसाधारणीकृतः । तत्र हेतुमाह—विलेति । आननेन्दीवरयोः शोभे विलक्षणे भिन्ने अतस्तयोः शोभयोरभेदाध्यवसायेन साधारणीकरणम् ।

अंकितानीति । अयं शब्दात्मको धर्म उपात्त एव । अर्थात्मकस्तु अनुपात्तो-ऽपि भवति । अक्षांकितत्वं सरोगत्वं धर्मः शब्दात्मकः कमलशरीरयोः साधारणः । ननु सहस्रनेत्रत्वसहस्रकरत्वविशिष्टेषु इन्द्रसूर्यादिषु द्विनेत्रत्वकरयुगत्वादयो धर्मा-स्तादात्म्योत्प्रेक्षाया विरोधिनः । अतस्तादात्म्यप्राण साधारण्यार्थापेक्षित विरोध-

### बालक्रीड़ा

हे सुन्दराङ्गि ? इस तुम्हारे आनन को मैं इन्दीवर कमल समझता हूँ । जो नयन रूपी भ्रमरों के आनन्द का मन्दिर है और जिसमें इन्दिरा लक्ष्मी का मिलन है ।

यहाँ पूर्वार्ध में प्रथम स्वतः साधारण भ्रमरानन्दमन्दिरत्वरूप धर्म नयनों में भ्रमरत्व रूपक के द्वारा विषय नयन और विषयी असाधारण भी इन्दीवर में साधारणी कृत है । द्वितीय मिलदिन्दिरत्व रूप धर्म वास्तव में विलक्षण भिन्न है अत एव आनन शोभा एवं इन्दीवर शोभाओं को अभेदाध्यवसान के द्वारा मुख और कमल में साधारण किया गया ।

केवल शब्दात्मक भी यह धर्म हो सकता है जैसे अंकितानि पद्य में कमल एवं शरीर में अक्षांकितत्व एवं सरोगत्वरूप धर्म शब्दात्मक है । यह सर्वदा उपात्त ही होता है । अर्थ-

अयमुपात्त एव भवति। अर्थमयोऽनुपात्तश्चापि भवति। यथा 'द्विनेत्र इव वासवः' इत्यादौ जगदीश्वरत्वादिः। न चात्र द्विनेत्रत्वादिरूप उपात्त एव साधारणो धर्मः। साधारण्यार्थमेव तस्य विषयिण्यारोपादिति वाच्यम्। तस्यारोपेण साधारणत्वे कृतेऽपि असुन्दरत्वेनोत्प्रेक्षोत्थापकत्वविरहात्। साधारणीकरणं तु प्रतिबन्धकनिरासार्थमित्युक्तमेव।

'दृष्टिः संभृतमङ्गला बुधमयी देव ! त्वदीया सभा
काव्यस्याश्रयभूतमास्यमरुणाधारोऽधरः सुन्दरः।

### मर्मप्रकाशः

अयमिति। प्रागुक्तोऽर्थमय इत्यर्थः। नन्वेवं तस्य साधारणत्वकरणं व्यर्थमत आह—साधारणीति। निरासार्थमिति। इवशब्दस्य संभावनार्थकत्वाय चेत्यपि बोध्यम्। श्लेषोदाहरणमाह—दृष्टिरिति। राजानं प्रति कव्युक्तिः मङ्गलपदेन भूमिजः शुभं च। बुधः पण्डितः सौम्यश्च। काव्यं पद्यं शुक्रश्च। अरुणः सूर्य आरुण्यं च। शनिरशनिश्च। धिषणो गुर्धिषणा बुद्धिश्च।

### मधुसूदनी

निवर्त्तनाय तेषां धर्माणामिन्द्रादिषु आरोपादुपात्ता एव ते साधारणधर्मा इति चेन्न तस्येति। निगदव्याख्यातम्।

दृष्टिरिति। संभृतमंगला कल्याणपूर्णा मंगलग्रहरूपा दृष्टिः। बुधमयी विद्वद्वृन्दपूर्णा बुधग्रहस्वरूपा सभा। काव्यस्य कवितायाः शुक्राचार्यस्य च अर्थात् शुक्राचार्यप्रणीत नीतिशास्त्रस्य च प्रणायकप्रणीतयोरभेदोपचारात्। मुखे कविता नीतिश्च वर्त्तेते इत्यर्थः। सुन्दरोऽधरोऽरुणस्य आधारः। धर्मिविधया धर्मबोधादारुण्यस्य रक्तिम्नः। सूर्यस्य च। सूर्य उदयेऽस्तमने च रक्तो भवति इत्यनुसंधायेयमुक्तिः।

### बालक्रीड़ा

मय धर्म अनुपात्त भी हो सकता है जैसे—"द्विनेत्र इव वासवः" यहां पर जगदीश्वरत्व आदि धर्म हैं। अगर कहें कि यहां पर द्विनेत्रत्वादि उपात्त ही साधारण धर्म है। क्योंकि इन्द्र और राजा की साधारणता समानता करने के लिए ही उस द्विनेत्रत्व धर्म का विषयी इन्द्र में आरोप किया है। तो यह कहना ठीक नहीं है। क्योंकि आरोप के द्वारा उसमें साधारणता लाने पर भी वह असुन्दर है अतः उत्प्रेक्षा का उत्थापक नहीं हो सकता है। प्रश्न=जब वह उत्प्रेक्षा का उत्थापक नहीं हो सकता है तब उसका साधारणी करण ही व्यर्थ है। उत्तर। सांधारणी करण तो प्रतिबन्धक के निरास के लिये है। यहां का आशय यह है कि द्विनेत्रत्व धर्म इन्द्र में नहीं है। इसलिए राजा में इन्द्रतादात्म्य नहीं हो सकता है। फलतः इस नहीं हो सकने रूप प्रतिबन्धक को हटाने के लिए इस साधारणत्व का सम्पादन किया है। इसको पहले भी कहा है।

क्रोधस्तेशनिभूरनल्पधिषण ! स्वान्तं तु सोमास्पदं
राजन्नूनमनूनविक्रम ! भवान् सर्वग्रहालम्बनम् ॥'

अत्रोत्प्रेक्ष्यमाणस्य सर्वग्रहालम्बनस्य धर्मेषु तत्तद्ग्रहाश्रित(तत्तद)ङ्गक-त्वेषु विशेषणीभूतैस्तत्तद्ग्रहैर्विषयस्य राज्ञो धर्मेषु कल्याणाश्रयत्वादिषु विशेष-णानां कल्याणादीनां श्लेषेण तादात्म्यसंपादनद्वारा तादृशधर्माणां साधारण-तासंपत्तिः ।

## मर्मप्रकाशः

सोमास्पदमिति । उमया सहितः सोमश्चन्द्रश्च । यद्वा 'चन्द्रमा मनसो जातः'इति श्रुतेर्जनकता-संबन्धेन मनसि सोमास्पदत्वमुत्प्रेक्ष्यते । तेन चेश्वरत्वमिति व्यङ्ग्यमित्याहुः । पूर्वमुपात्तोदाहरणं पश्चादनुपात्तोदाहरणमित्यत्र विशेषः । उत्प्रेक्षेति । विषयिण इति शेषः । कल्याणेति ।

## मधुसूदनी

शनिः अकारप्रश्लेषादशनिश्च । धिषणा बुद्धिः । धिषणो गुरुः । स्वान्तं मनः सोमस्य उमासहितस्य शिवस्य चन्द्रस्य चास्पदम् । चन्द्रमा मनसो जात इति श्रुतेर्जन्यश्चन्द्रो जनके मनसि कारणरूपेणावतिष्ठते एवेति भावः । अत्रोत्प्रेक्षायां रूपकाणि उपायाः दृष्टिप्रभृतिषु संभृतमंगलत्वादीनामारोपात् तत्तद्ग्रहेति । तेन तेन ग्रहेणाश्रितं तत्तदगं यस्य स तत्तद्ग्रहाश्रिततत्तदंगकः । तस्य भावास्तत्तद्ग्रहाश्रित-तत्तदंगकत्वानि मंगलसंभृतदृष्टिकत्वबुधमयसभाकत्वकाव्याश्रयीभूतास्यकत्वारुणा-धाराधरत्वधिषणागतानल्पकत्वसोमास्पदस्वान्तकताशनिभूक्रोधकतारूपाणि । तेषु धर्मेषु विशेषणीभूतास्तेते मंगलादयोग्रहास्तैः सह राजगतधर्मकल्याणाश्रयत्वादिविशेषण कल्याणादीनां श्लेषेण श्लेषोत्थापितमालारूपकेण तादात्म्यसम्पादनं कृत्वा उक्तानां धर्माणां साधारण्यमित्यर्थः ।

## बालक्रीड़ा

हे देव ? आप की दृष्टि मंगल ग्रह एवं कल्याण से संभृत है पूर्ण है । आपकी सभा बुध ग्रह एवं विद्वानों से युक्त है । आपका मुख काव्य माने पद्य एवं शुक्र अर्थात् शुक्र की नीतियों का आश्रय है । आपका अधर अरुण लाल है एवं सूर्य का आधार है । हे अनल्पधिषण ? महाबुद्धिमन् एवं महावृहस्पते ? आपका क्रोध अशनि रूपी शनि की जन्म भूमि है तथा आपका मन तो सोम चन्द्र एवं उमासहित शिव का आस्पद है । इस तरह हे अनूनविक्रम राजन् ? आप सभी सूर्यादि ग्रहों के आलम्वन हैं ।

राजा के प्रति कवि की उक्ति में यहां राजा में सर्वग्रहालम्वनत्व की उत्प्रेक्षा है । उस उत्प्रेक्षा में निमित्त भूत धर्म है तत्तद्ग्रहाश्रिततत्तदङ्गकत्व उस-उस ग्रह के द्वारा राजा के भिन्न २ अंगों का आश्रयण । उस कल्याणाश्रयत्वादि धर्म में विशेषण कल्याणादि का श्लेष के द्वारा तादात्म्य सम्पादन करके उन संभृतमंगलत्व बुधमयत्वादि धर्मों में साधारणी करण किया गया है ।

यथा वा—

'विभाति यस्यां ललितालकायां मनोहरा वैश्रवणस्य लक्ष्मीः ।
कपोलपालिं तव तन्वि ? मन्ये नरेन्द्रकन्ये ? दिशमुत्तराख्याम् ॥'

इहापि विषयविषयिधर्मविशेषयोरलकालकयोः श्रवणवैश्रवणयोश्च श्लेषेणाभेदे धर्मस्य साधारण्यम् ।

यथा वा—

'नासत्ययोगो वचनेषु, कीर्तौ तथार्जुनः, कर्मणि चापि धर्मः ।
चित्ते जगत्प्राणभवो यदास्ते वशंवदास्ते किमु पाण्डुपुत्राः ॥'

### मर्मप्रकाशः

कल्याणाश्रिताङ्कत्वादिष्वित्यर्थः । श्लेषस्यैवोदाहरणान्तरमाह—यथा वेति । अलकः अलका च । श्रवणः कर्णः वैश्रवणः कुबेरश्च । राजकन्यां प्रति कव्युक्तिरियम् । प्राग्वदाह—यथा वेति । राजानं प्रत्युक्तिरियम् । नासत्यौ नकुलसहदेवौ असत्याभावश्च । अर्जुनः किरीटी श्वैत्यं च । धर्मो युधिष्ठिरो विध्यर्थश्च । जगदिति । वायुपुत्रो भीमो हनूमांश्च । यद्वा पञ्चम्यर्थबहुव्री-

### मधुसूदनी

विभातीति । ललिता अलकाश्चूर्णकुन्तला यस्यां तस्यां कपोलपालिकायां वै इति निश्चयेन श्रवणस्य लक्ष्मीः शोभा । ललिता चासौ अलका पुरी तस्यां वैश्रणस्य कुबेरस्येति द्वितीयोऽर्थः । तयोस्तादाम्यसम्पादनद्वारा साधारण्यम् ।

नासत्येति । हे राजन् ! यदा एवमास्ते तदा पाण्डोः पुत्रास्ते वंशवदाः किमु । एवं किमास्ते इत्याह—ते वचनेषु असत्यस्य योगो नास्ति स एव नासत्ययोरश्विनीकुमारयोरर्थात् नकुलसहदेवयोर्योगः । नासत्यावश्विनीसुतावित्यमरः । कार्य-

### बालक्रीड़ा

और भी जैसे । कोई कविराज कन्या को कह रहा है कि हे नरेन्द्र कन्ये ? हे तन्वि ? तुम्हारी कपोलपालि को मैं उत्तर दिशा मानता हूँ : जिस कपोलपालि में ललित सुन्दर अलक है । बिखरे हुए केश हैं । अलकाश्चूर्ण कुन्तला: यह अमर है । और उत्तर दिशा में सुन्दर अलकापुरी है । जिस कपोल पाली में वै इति निश्चय ही श्रवण की मनोहर लक्ष्मी है और उत्तर दिशा में वश्रवण कुबेर की राज्यलक्ष्मी है ।

यहाँ भी विषय कपोल विषयी उत्तर दिशा के धर्म ललितालकत्व वैश्रवणत्व में विशेषण अलक एवं अलका तथा निश्चित श्रवण और वैश्रवण कुवेर का एक पदोपात्तत्व रूप श्लेष द्वारा अभेद करने पर धर्म की साधारणता है ।

और भी जैसे कोई चाटुकार राजा को कह रहा है कि जब आपके वचन में असत्य झूठ का सम्बन्ध नहीं है और आपकी कीर्ति अर्जुन शुक्ल है । कर्म आचरण में आपके धर्म

अत्र पाण्डुपुत्रेषु विषयेषु राजवशंवदतादात्म्योत्प्रेक्षायां राजाश्रितत्वरूपो विषयिधर्मः श्लेषेण विषयाणां नकुलसहदेवादिपाण्डुपुत्राणां राजाश्रितानां चासत्याभावशुक्लगुणपुण्यपरमेश्वराणामभेदसंपादनद्वारा विषयसाधारणीकृतः।

## मर्मप्रकाशः

हिणा वायुजनकः परमेश्वरः। राजवशंवदेति। विषयिणो वर्णनीयराजवशंवदा ये राजानस्तत्तादात्म्येत्यर्थः। विषयाणां पाण्डुपुत्राणाम्। तदाश्रितानां चेति। राजाश्रितानां चेत्यर्थः।

## मधुसूदनी

कारणयोरभेदोपचारात् पाण्डोः पत्न्यां माद्रयामश्विनीकुमाराभ्यां जातत्वात् क्षेत्रज पुत्रौ नकुलसहदेवौ। ते कीर्तौ अर्जुनः शुक्लो गुणः, मध्यमपाण्डवश्च। ते कर्मणि वेदविहितानुष्ठाने धर्मः पुण्यं धर्मपुत्रो युधिष्ठिरश्च। ते चित्ते जगति प्राणसंचारको भवः शिवः जगतः प्राणाद्वायोर्भव उत्पत्तिर्यस्य स भीमश्च। अत्र तत्पुरुषबहुव्रीहिसमासाभ्यां तथा बोधः।

अत्रेति। ये राजाश्रितास्ते राजवशं वदा भवन्ति। एवं किमु द्रुपदराजाश्रितत्वात् पाण्डुपुत्रा राजवशंवदा इत्येवं पाण्डुपुत्रेषु विषयेषु राजवशंवदस्य विषयिणस्तादात्म्येनोत्प्रेक्षा। तत्र उत्प्रेक्षानिमित्तभूतो धर्मः स राजाश्रितत्वरूपो विषयिणि गतः। यतो हि असत्याभावशुक्लगुणपुण्यपरमेश्वराणां राजसम्बन्धि वचनकीर्त्याद्याश्रितत्वात् राजाश्रितत्वमेव। न तु विषयगतः। असाधारण्यात्। अतः स श्लेषेण हेतुना अभेदसम्पादन द्वारा विषयसाधारणीकृतः। श्लेषश्च विषयरूपनासत्यजन्य नकुलसहदेवसम्बन्धार्जुनधर्मपुत्रयुधिष्ठिरवायुपुत्रभीमैः सह असत्याभावयोग शुक्लगुणपुण्यपरमेश्वराणाम्। विषयाणां नासत्ययोगार्जुनधर्मपुत्रजगत्प्राण भवानाम्। राजाश्रितानामसत्याभावादीनाम्।

## बालक्रीड़ा

है वेद बोधित विधि से उत्पन्न पुण्य है और चित्त में आपके जगत् के प्राण जीवनाधार भव शिव हैं तब सभी पाण्डु के लड़के आपके वशंवद हैं यह क्या कहना है। यहाँ नासत्य योग में "नासत्यावश्विनीसुतौ" इस अमर कोष के अनुसार नासत्य शब्द आश्विनी कुमारों का पर्याय है। और नकुल और सहदेव पाण्डु की स्त्री माद्री में अश्विनी कुमारों के क्षेत्रज पुत्र हैं अतः जन्य जनक में अभेद मानकर नकुल सहदेव का नासत्य शब्द से बोधन किया है। इसी तरह धर्म के पुत्र युधिष्ठिर को भी धर्म कहा है।

यहां पाण्डु के लड़के नकुल सहदेव, अर्जुन, धर्मपुत्र, युधिष्ठिर एवं भीम विषयों में राज वशंवद की अभेदेन उत्प्रेक्षा है। इसमें राजाश्रितत्व विषयी का धर्म है। उसको श्लेष के द्वारा विषय पाण्डुपुत्रों का राजा में रहने वाले असत्याभाव, शुक्ल गुण, पुण्य एवं परमेश्वर के साथ अभेद सम्पादन करके साधारणी करण किया है।

'स्तनान्तर्गतमाणिक्यवपुर्बहिरुपागतम् ।
मनोऽनुरागि ते तन्वि ? मन्ये वल्लभमीक्षते ॥'

अत्र वल्लभेक्षणस्य मनस्युत्प्रेक्षायां तन्निमित्तमन्तःप्रदेशाद्बहिरागमनमपेक्ष्यम् । तच्च बहिःप्रदेशसंबन्धरूपं माणिक्यमात्रवृत्ति मनसो न संभवतीति माणिक्यापह्नुत्या मनोगतं क्रियते । बिम्बप्रतिबिम्बभावस्तु 'कलिन्दजानीरभरेऽर्धमग्ना' इत्यत्रैव निरूपितः ।

### मर्मप्रकाशः

विषयेति । पाण्डुपुत्रेत्यर्थः । अपह्नवोदाहरणमाह—स्तनेति । स्तनमध्यगतमाणिक्यस्वरूपेण बहिरागतमित्यर्थः । नायिकां प्रति सख्युक्तिः । बिम्बप्रतिबिम्बोदाहरणमाह—बिम्बेति ।

### मधुसूदनी

स्तनेति । हे तन्वि ! अनुरागि ते मनः, मन्ये, वल्लभमीक्षते । कथमेतज् ज्ञायते यत एतत् स्तनहारावलयन्तर्गतमाणिक्यवपुर्भूत्वा वहिः प्रदेशे उपागतम् । अर्थान्नेदं माणिक्यं किन्तु वल्लभवीक्षणार्थं देहाद् वहिरुपागतं मन एवेत्यपह्नुतिरलंकारः ।

तन्निमित्तमुत्प्रेक्षानिमित्तभूतो धर्मः अन्तःप्रदेशाद् बहिः प्रदेशागमनरूपोऽपेक्ष्यः । तच्च निमित्तं च । माणिक्यापह्नुत्या नेदं माणिक्यं किन्तु मन इदम् । अतः वहिः प्रदेशागमनं मनोगतमेवेति स्थितम् । कलिन्देत्यत्र क्रोशनशब्दयोरपि विम्बपतिबिम्बभावेनाभेद इत्युक्त्या बिम्बप्रतिबिम्बभावस्तु निरूपितः । अत्रेदन्तु बोध्यम् । शब्दनक्रोशनयोर्बिम्बप्रतिबिम्बभाव इति अज्ञानं, नात्र सः । किन्तु वस्तुप्रतिवस्तुभावः इति । अन्यच्चात्र असाधारणधर्मस्य साधारणीकरणार्थमुपायेषु बिम्बप्रतिबिम्बभावोऽपि अन्यतम इति निरूपणप्रसंगे विम्बेत्यादिनिरूपित इत्युक्तिः सर्वथा अज्ञानम् । यतस्तत्र तु तमोव्यापनलेपनयोरिव शब्दनक्रोशनयोर्विषयविषयिणोरभेदो नतु धर्मयोः । इति च ।

### बालक्रीड़ा

कोई सखी नायिका से कह रही है कि हे तन्वि ? तुम्हारा यह अनुरागी प्रेमी एवं लाल मन स्तनों के ऊपर पहिने हुए हार में गूंथे माणिक्य के रूप में अन्तःकरण से बाहर आगया है और वल्लभ को देख रहा है ।

यहाँ मन में वल्लभेक्षण की उत्प्रेक्षा है । उसमें अन्तः प्रदेश से मन का वहिरागमन रूप निमित्तभूतधर्म की अपेक्षा है । वह वहिप्रदेश सम्बन्धरूप वहिरागमन केवल माणिक्य मे रहता है मन में नहीं रहता है । उस धर्मको माणिक्य में निषेध करके मनमें लाया गया है । माणिक्य वपु है जिसका इस रूपमें यह अपन्हुति है ।

विम्बप्रतिबिम्बभावापन्न धर्म को "कलिन्दजानीरभरेऽर्धमग्नाः" में पहले कह ही दिया है ।

'माधुर्यपरमसीमा सारस्वतजलधिमथनसंभूता ।
पिबतामनल्पसुखदा वसुधायां ननु सुधा कविता ।।'

अत्र कवितायां माधुर्यपानयोर्मुख्ययोरसंभवादास्वादश्रवणयोरमुख्ययोरुपचारेण मुख्याभ्यां साधारणीकरणम् । लक्षणया शक्याभेदेन लक्ष्यबोधनात् ।

अभेदाध्यवसायमात्रं यथा प्रागुदाहृतायां हेतूत्प्रेक्षायाम् 'न्यागुञ्जन्मधुकरपुञ्जमञ्जुगीताम्' इत्यत्र शाखानीचत्वकंधरानमनयोरभेदाध्यवसाय एव

## मर्मप्रकाश

उपचारोदाहरणमाह—माधुर्येति । राजानं प्रत्युक्तिः । या माधुर्यस्य परमसीमाधारभूता सारस्वतरूपसमुद्रमथनजा भुवि तां बहुसुखदां सुधारूपकवितां ननु निश्चयेन पिबेत्यर्थः । उपचारेण लक्षणया । मुख्याभ्यामिति । सहाभेदसंपादनद्वारा तयोर्धर्मयोरिति शेषः । ननूपचारेणाऽमुख्यस्यैव प्रतीत्या दोषस्तदवस्थ एवात आह—लक्षणयेति । मात्रपदेन पौनरुक्त्यं परिहृतम् ।

## मधुसूदनी

अत्र कवितायामिति । अत्र कवितायां माधुर्यस्य मुख्यस्यासंभवादित्युक्तिः प्रथमानने शब्दार्थयोरपि माधुर्यादेरीदृशस्य सत्त्वादुपचारो नैव कल्प्य इति तु मादृशा इति प्रथममुक्तवतः पण्डित नरेन्द्रस्य प्रमत्तता एव । कथां प्रमत्तः प्रथमं कृतामिवेति कालिदासोक्तिरत्र सार्थिका ।

## बालक्रीड़ा

कोई भावुक सहृदय कविता का वर्णन करता है कि जो माधुर्य की परमसीमा याने जहाँ माधुर्य समाप्त हो जाता है और जो पीने वाले को महान् सुख देती है वह कविता वसुधा में सारस्वतसमुद्र के मन्थन से सम्भूत सुधा है ।

यहां कविता में मुख्य माधुर्य (मिठास) एवं पान क्रिया का होना असंभव है अतः लक्षणा के द्वारा अमुख्य आस्वाद एवं श्रवण का बोध हुआ । फिर उन अमुख्यों का मुख्यों के साथ साधारणी करण हुआ । प्रश्न-अन्योऽर्थो लक्ष्यते यत् सा लक्षणा इसके अनुसार लक्षणा से अमुख्य अर्थ की ही उपस्थिति हुई मुख्य की उपस्थिति नही हुई तब मुख्य के अभाव में उसके साथ अमुख्यार्थ का साधारणी करण कैसा । उत्तर । लक्षणा से शक्याभेदेन लक्ष्य का बोध होता है अर्थात् प्रवाहत्वेन तीर की प्रतीति होती है अतः मुख्यार्थ एवं अमुख्यार्थ दोनों उपस्थित है तब दोनों का साधारणीकरण होना उचित ही है ।

जैसे पहले बतलाई हुई हेतूत्प्रेक्षा में केवल अभेदाध्यवसाय ही होता है वैसे ही "न्यागुन्मधुकर पुञ्जमञ्जुगीताम्" में त्रपा हेतुक उत्प्रेक्षा के निमित्त रूप से उपात्त कन्धरानमन के नीचशाखनतकन्धररूपतरुमानवोभयसाधारण्य में शाखानीचत्व और कन्धरा नमन का अध्यवसाय ही बीज है कारण है ।

त्रपाहेतूत्प्रेक्षानिमित्ततयोपात्तस्य कंधरानमनस्य नीचशाखनतकंधरोभयसाधारण्ये बीजम् ।

एवं सर्वत्र हेतुफलयोरुत्प्रेक्षणे यस्य हेतुः फलं वोत्प्रेक्ष्यते सोऽनेन प्रकारेण साधारणीकृतो निमित्तमित्यसकृदावेदितम् ।

एवं क्वचिदुपात्तो धर्मो विषयविषयिसाधारण्याभावादसुन्दरत्वाद्वा स्वयमुत्प्रेक्षणं साक्षादुत्थापयितुमसमर्थोऽपि तदुत्थापनक्षमधर्मान्तरोत्थापनेनानुकूल्यविधानादुपयुज्यते । यथा 'द्यौरञ्जनकालीभिः' इति प्रागुदाहृते पद्ये दिवो जलदालीसमावृत्तत्वरूपो धर्म उपात्तो जगतो निर्लोचनवर्गसर्गत्वोत्प्रेक्षायां वैयधिकरण्यादप्रयोजकोऽपि स्वप्रयोज्यनिबिडान्धकारप्रयुक्तचाक्षुषज्ञानसामान्यशून्यत्वस्य तथाविधोत्प्रेक्षानिमित्तस्योत्थापनेन । विषयोऽप्युपात्तो निरूपित एव ।

### मर्मप्रकाशः

पूर्वं रूपकमिश्र उक्त इति भावः । साधारण्यसत्त्वेऽप्याह –असुन्दरेति । उपयुज्यत इति । एवं च तदानर्थक्यं नेति भावः । तत्राद्योदाहरणमाह—यथेति । तथाविधोत्प्रेक्षेति ।

### मधुसूदनी

द्यौरंजनेति । अत्र जलदालीसमावृतत्वं निमित्तभूतो धर्मो दिवि, निर्लोचनवर्गसर्गत्वमुत्प्रेक्ष्यते जगति एवं द्यावापृथिव्योर्वैयधिकरणत्वात् जलदेत्युपात्तोऽपि धर्मः निर्लोचनेत्युत्प्रेक्षायामप्रयोजकोऽपि निमित्तत्त्वमभजन्नपि स्वप्रयोज्येत्यादिरूपस्य निर्लोचनवर्गसर्गोत्प्रेक्षानिमित्तस्य उत्थापनेन आनुकूल्यविधानादुपयुज्यते इत्यन्वयः । जलदाली दिवि व्याप्ता, तत्प्रयोज्योऽन्धकारो सर्वस्मिन् जगति व्याप्तः, तत्प्रयुक्तं चाक्षुष ज्ञानसामान्यशून्यत्वं प्राणिषु व्याप्तम् । इति संगतिः ।

### बालक्रीड़ा

इस तरह सभी हेतु एवं फलकी उत्प्रेक्षाओं में जिसके हेतु अथवा फल की उत्प्रेक्षा करते हैं वही इस प्रकार से साधारण हुआ निमित्त होता है इसको कई वार कहा है ।

इस प्रकार कहीं पर उपात्तधर्म विषय और विषयी में साधारण नहीं होता है अथवा वह असुन्दर हैं अतः स्वयं साक्षात् उत्प्रेक्षा के उठाने में असमर्थ हैं तब भी उत्प्रेक्षा के उत्थापन में सक्षम धर्मान्तर के उत्थापत्न के द्वारा आनुकूल्य के विधान से उपयुक्त हो जाता है । जैसे द्यौरञ्जन कालीभिः इस प्रागुदाहृत पद्य में आकाशगत जल,ाली समावृतत्व रूप उपात्त धर्म लोचन की सृष्टि के अभाव की उत्प्रेक्षा में व्यधिकरण होने से प्रयोजक नहीं है तद्यपि जलदालीप्रयोज्य जो निविड अन्धकार तत्प्रयुक्त चाक्षुषज्ञानसामान्य शून्यत्व रूप लोचनसर्गभावोत्प्रेक्षा के निमित्तभूतधर्म का उत्थापन करके उक्त उत्प्रेक्षा में प्रयोजक बन गया ।

क्वचिदयमपह्नुतोऽपि भवति । यथा—

'जगदन्तरममृतमयैरंशुभिरापूरयन्नयं नितराम् ।
उदयति वदनव्याजात्किमु राजा हरिणशावनयनायाः ॥'

इति रसगङ्गाधर उत्प्रेक्षाप्रकरणम् ।

## मर्मप्रकाशः

जगतो निर्लोचनवर्गसर्गत्वोत्प्रेक्षेत्यर्थः । अयं विषयः । जगदन्तरं जगन्मध्यम् । राजा चन्द्रः । विषयापह्नवश्चात्र राजतादात्म्यसंभावनादाढर्चायेति बोध्यम् ।

इति रसगङ्गाधरमर्मप्रकाश उत्प्रेक्षाप्रकरणम् ॥

## मधुसूदनी

जगदन्तरिति । अमृतमयैरंशुभिः जगदन्तरं जगन्मध्यं नितरामापूरयन्नयं राजा चन्द्रः किमु वदनस्य व्याजात् मिषात् । उदयति उदयं प्राप्नोति । नेदं वदनं किन्तु अयं चन्द्रः इत्यपन्हुतिः । अत्र विषयस्य वदनस्यापन्हवः उदीयमानराजतादात्म्य संभावनासाधकः ।

इति मधुसूदन्यामुत्प्रेक्षाप्रकरणम् ।

## बालक्रीड़ा

विषय उपात्त भी होता है इसका निरूपण कर दिया है । कहीं पर वह विषय अपन्हुत भी होता है । जैसे

हरिणशावक लोचना नायिका के वदन के व्याज से क्या यह राजा चन्द्र विश्व को अमृतमय किरणों से निर्भर परिपूर्ण करता हुआ उदित हो रहा है ।

यहाँ वदन रूपी विषय का अपन्हव उदीयमान राजा चन्द्र के साथ की गई तादात्म्य संभावना का साधक है ।

इस तरह रसगंगाधर में बालक्रीड़ा में उत्प्रेक्षा प्रकरण समाप्त हुआ ।

द्वितीय भाग समाप्त हुआ ।

---

# रसगंगाधर उदाहृतश्लोकानां सूची

## द्वितीय आनन

---

# रसगंगाधरे प्रमापकाः



---

